रूपान्तरेण [1]ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

केषां शब्दानाम् इति । कथं पुनरनुशासने गुणीभूतानां शब्दानां [2]परामर्शो [3]गृह्यते ? स्यादयं दोषः यदि केषाम् इति एतावदुच्येत, तदा हि शब्दानामित्यनुषङ्ग आश्रयणीयः, तच्च गुणीभूतस्य अनुपपन्नम् । इह तु शब्दानामिति स्वशब्देनोपादीयते, तत् तु प्रकृतगुणभूतशब्दपरम् इत्येतावत् । तच्च नानुपपन्नम्, बुद्धौ संनिहितत्वात्,[4] राजपुरुषोऽयं, कस्य राज्ञ इतिवत् । पृच्छतश्चायमभिप्रायः, शब्दानुशासनम् इत्यत्र शब्दशब्दः सामान्यवचनः, सन्ति च समुद्रघोषादयः शब्दाः येषु वर्णाभिव्यक्तिरपि नास्ति, सन्ति च गाव्यादयोऽपभ्रंशाः, सन्ति च गवादयोऽनादयः साधवः, तत्राविशेषात् सर्वेषामनुशासनं प्राप्नोति [5]इति । इतरोऽपि [6]शब्दानुशासनशब्दस्य व्याकरणे योगरूढत्वात्, तस्य च वेदाङ्गत्वात्, समुद्रघोषगाव्यादिव्युत्पादनस्य च [7]वेदानुपयोगित्वादाह—लौकिकानां वैदिकानां च इति । लोके विदिताः लौकिकाः, 'लोकसर्वलोकाट् ठञ्' (५.१.४४) । यद्यपि गाव्यादयो[8]ऽपि लोके विदिताः, तथापि [9]ते न [10]सर्वलोके विदिताः, प्रतिदेशं भिन्नत्वादपशब्दानाम् । लोकशब्दश्चायं सर्वस्मिन् लोके वर्तते, [11]सङ्कोचकाभावात्, अतः सर्वलोकप्रसिद्धानां गवादीनाम् इत्यर्थः । साधूनाम् इति यावत् । वेदे भवाः वैदिकाः, अध्यात्मादित्वात् ठञ् (वा. ४५६) । वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनार्थं पृथग् ग्रहणम्, यथा ब्राह्मणा [12]आगताः, वसिष्ठोऽप्या[13]गतः इति ।

ननु अन्वाख्याने प्रतिपदपाठो[14]ऽभ्युपायः । [15]तत्र [16]अन्वाख्याने त्रयः प्रकाराः शब्दापशब्दोभयोपदेशभेदेन । शब्देषु हि उपदिष्टेषु गम्यत एतत्, अतोऽन्येऽपशब्दाः इति, यथा 'पञ्च पञ्चनखाः भक्ष्याः' (वा. रा. कि. १७. ३७) इति भक्ष्यनियमादन्येऽभक्ष्या इति गम्यते । तथा अपशब्दोपदेशेऽप्यन्ये सुशब्दा इति गम्यते, यथा 'अभक्ष्यो ग्रामकुक्कुटः' इत्युक्ते '[17]आरण्यो भक्ष्यः' इति गम्यते । हेयोपादेयोपदेशेऽपि[18] स्पष्टा प्रतिपत्तिर्भवति, यथा 'अपथमिदम्, एष पन्थाः' इति । आनन्त्याच्छब्दानां सर्वथाप्यसम्भव एव । एवं हि श्रूयते, 'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम' इति । बृहस्पतिः [19]प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं च वर्षसहस्रमध्ययनकालः, न चान्तगमनमासीद्यस्य तस्य कुतोऽद्यत्वे स्वल्पायुषि प्रजायाम् ? यः सर्वथा चिरं जीवति, स वर्षशतं जीवति । न चान्योऽभ्युपायोऽस्ति इति मन्यमान आह—कथम् इति । कथं व्याकरणेन शब्दानुशासनम्, कथं वा व्याकरणं शब्दानामनुशासनम् ? न कथञ्चिद् इत्यर्थः । येनाल्पेनैव [20]यत्नेन महतो महतः शब्दौघान् प्रतिपद्यन्ते तदुपायान्तरं दर्शयति, प्रकृत्यादिविभागकल्पनया इति । तत्र [21]प्रतिपन्नशब्दोपदेश एव तावदाश्रितः [22]नियतत्वात् । अपशब्दा हि प्रतिदेशं प्रतिगृहं प्रतिपुरुषं प्रत्यवस्थं [23]भिन्नाश्चानवस्थिताः, [24]न ते लक्षणेना[25]नुशास्तुं शक्यन्ते । उपेयस्य चार्थस्य साक्षात् [26]प्रतिपत्तिर्युक्ता । प्रत्ययात्पूर्वं क्रियते इति प्रकृतिः । आदिशब्देन प्रत्ययविकारागमानां ग्रहणम् । तेषां विभागः असंकीर्णरूपता, तस्य कल्पना [27]अवयव[28]कल्पिका बुद्धिः, तया हेतुभूतया शब्दानामनुशासनं व्याकरणेन, व्याकरणं वा कल्पनाग्रहणेन, [29]कल्पनामात्रं प्रकृत्यादिविभागो न पारमार्थिकः इति वैयाकरणसिद्धान्तं दर्शयति । अत एव व्युत्पत्तेरनियमो दृश्यते, 'वसेस्तव्यत् कर्तरि णिच्च' (वा. २११), वसति इति वास्तव्यः, [30]तद्धितान्तो वा [31]वास्तुनि भवः वास्तव्यः इति । तथा, 'गिरौ डश्छन्दसि' (वा. २४१), गिरौ शेते गिरिशः, तद्धितो वा गिरिरस्यास्ति इति लोमादित्वाच्छः (५. २. १००) गिरिश इति । ननु एवं प्रतिशब्दं प्रकृतिप्रत्ययविभागे उच्यमाने गुरुतरमाद्यते, तद्यथा, पचति इत्यत्र[32]शब्दे पचिप्रकृतिः, तिप्प्रत्ययः,

1. देवास्ते 2. किंशब्देन इत्यधिकम् 3. युज्यते 4. तद्यथा इत्यधिकम् 5. इति नास्ति 6. शब्दानुशासनस्य व्याकरणे 7. वेदानुपयोगादाह 8. अपि नास्ति 9. ते 10. सर्वत्र 11. सङ्कोचकारणाभावात् 12. आयाताः 13. आयातः 14. अभ्युपेयः 15. तत्रापि 16. अन्वाख्याने नास्ति 17. आरण्यको 18. स्पष्टा 19. इत्यधिकम् 20 प्रयत्नेन 21. प्रतिपन्न नास्ति 22. प्रकृतत्वात् 23. भिन्नाः नास्ति 24. ते न 25. अनुगृहीतुं 26. प्रतीतिर्युक्ता 27. अवयव नास्ति 28. विकल्पिका 29. कल्पनामात्रेण 30. तद्धितो 31. वस्तुनि 32. अत्र नास्ति

शब्विकरणः इत्यादि । तत् कोऽयमभ्युपायो दर्शितः ? अत आह—सामान्यविशेषवता लक्षणेन इति । करणे एषा तृतीया, कल्पनायां च करणता । वृत्तौ चशब्दो न पठितव्यः, एकस्मिन् हि साध्ये हेतुद्वयसमावेशे समुच्चयो भवति, इह तु कल्पनायां लक्षणं करगम्, कल्पना तु अनुशासने हेतुः । तदयमर्थः—सामान्यविशेषवता लक्षणेन करणभूतेन या प्रकृत्यादिविभाग-कल्पना, तया हेतुभूतया शब्दानामनुशासनं व्याकरणम्, व्याकरणेन वा शब्दानामनुशिष्टिः इति । तत्र उत्सर्गलक्षणं सामान्यवत्, तद्यथा 'कर्मण्यण्' (३. २. १) इति । तत्र धातोः इत्येतत्, कर्मणि इत्येतच्च सामान्यम् । अनेन च कुम्भकारो नगरकार इत्यादिकं महान्तं शब्दौघं [1]प्रतिपद्यते । विशेषलक्षणं विशेषवत्, तद्यथा 'आतोऽनुपसर्गे कः (३. २. ३) इति । अत्र आत इति, अनुपसर्गे इति च विशेषः । अनेन गोदः कम्बलद इत्यादिकं महान्तं शब्दौघं [2]प्रतिपद्यते । एवमन्यत्रापि द्रष्टव्यम् । क्वचित् पठ्यते लाघवं भवति इति । [3]अपाठ एव [4]ज्यायान् ।

अथ किमर्थो वर्णानामुपदेशः इति । न तावद् [5]अविकृतवर्णस्वरूपज्ञापनार्थः । तस्य कलाध्मातादिदोषरहितस्य लोकत एव सिद्धत्वात् । अन्यथा दीर्घप्लुतादेरप्युपदेशः कर्तव्यः स्यात् । न च ग्रहणकशास्त्रेण तेषां सिद्धिः, तस्य स्वरूपस्योच्चारणे[6]कसमधिगम्यत्वात् । अथ तेषां [7]लोकतो गर्गादिबिदादिपाठस्य तन्त्रेणोभयार्थत्वाद् वा परिज्ञानम् ? ह्रस्वादिष्वप्ये-[8]वमस्तु । न च 'वृद्धिरादैच्' (१.१.१) इत्यादिवत् सञ्ज्ञापरिभाषादिरूपता, येन पारम्पर्येणापि तावदुपयुज्येत, तस्मान् नार्थ उपदेशेन इति प्रश्नः । प्रत्याहारार्थः इति । प्रत्याह्रियन्ते संक्षिप्यन्तेऽस्मिन् वर्णाः इति प्रत्याहारः । विशिष्टानुपूर्वीको विशिष्टानुबन्धयुक्तश्चाक्षरसमाम्नायः । स यथा स्यादित्येवमर्थ इत्यर्थः । सङ्क्षेपो राशीकरणम् । प्रत्याहारो वा किमर्थं इत्याह—प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः इति । सति हि [9]प्रत्याहारे 'आदिरन्त्येन सहेता' (१.१.७१) इत्येतत् प्रवर्तते, तत्प्रवृत्तौ च अकारादीनां वर्णानाम् अण् इत्यादिकाः संज्ञाः सम्पद्यन्ते, ताभिश्च व्यवहारे लाघवं भवति । असति तु [10]प्रत्याहारे सन्निवेशविशेषापेक्षयोः आद्यन्तयोरभावात्, 'आदिरन्त्येन' (१.१.७१) [11]इत्यस्याप्रवृत्तौ अणादिसञ्ज्ञाऽभावात्, अकारादीनां यावतां कार्यमिष्यते तावन्तः स्वरूपेणैव[12] ग्राह्याः स्युः, ततश्च गौरवप्रसङ्ग इत्यर्थः । अथ वा प्रत्याह्रियन्ते संक्षिप्यन्त इति संक्षेपः सङ्कोचः प्रत्याहारोऽणादिसञ्ज्ञा । सति हि वर्णोपदेशे पूर्वोक्ताक्षरसमाम्नायः तावत् संपद्यते, [13]तेन अणादयः सञ्ज्ञाः, ततो लाघवेन शास्त्रप्रवृत्तिः इत्यर्थः ।

## १. अ इ उ ण् ।

अ इ उ ण् । कोऽस्य सूत्रस्यार्थः ? किमभिधेयं पृच्छ्यते, किं वा प्रयोजनम् ? तत्राभिधेयं नास्त्येव । अभिधेयशून्यस्यापि प्रयोग उपपद्यते । प्रयोजनार्थो हि शब्दानां प्रयोगः । विद्यते चात्र प्रयोजनम् अणादिसञ्ज्ञानिष्पत्तिः । अथेह कस्माद् आद्गुणादिकमच्कार्यं न भवति ? उच्यते । [14]अत्र च [15]सत्यस्मिन् सन्निवेशे 'हलन्त्यम्' (१.३.३) इत्यस्मिन् प्रवृत्ते, 'आदिरन्त्येन' (१.१.७१) [16]इत्यनेन अच्सञ्ज्ञा निर्वर्त्यते, अतोऽस्मात् सन्निवेशात् प्राग् अकारादीनामच्त्वाभावात् [17]तत्कार्याभावः । अथ वा चादिषु पाठान्निपातत्वम्, निपातत्वात् प्रगृह्यसञ्ज्ञा, प्रगृह्यत्वात् प्रकृतिभावः । किं निपातव्यतिरेकैवात्र निर्दिश्यते, ननु सर्वा एव व्यक्तयो निर्देष्टुमिष्टाः ? सत्यम्, तथापि सर्वासां युगपदुच्चारयितुमशक्यत्वादेकैव निर्देश्या, सा च निपातव्यक्तिरेकैव युक्ता, तन्निर्देशे संहिताकार्याभावात्, [18]इष्टस्य रूपस्य स्फुटमवगमात् । अनेन क्रमेण इति । अनेन क्रमस्य विवक्षितत्वं दर्शयति । एवं ह्यण्ग्रहणेष्वकारादीनां त्रयाणां ग्रहणम्, इण्ग्रहणेष्वकारस्याग्रहणम्, उग्ग्रहणेष्वकारेकारयोर्द्वयोरप्यग्रहणमुपपद्यते इति भावः । वर्णान् इति । यद्यसी वर्णाः, कारप्रत्ययः कस्मान् न भवति ? उच्यते । 'वर्णात् कारः' (वा. ३२०) इत्यस्य नायमर्थो वर्णादुच्चार्यमाणात् कारः प्रत्ययो भवति इति । एवं हि विज्ञायमाने ककार इत्यादौ उच्चार्यमाणस्य अज्झल्समुदायस्य अवर्णत्वात् कारप्रत्ययो न स्यात् । किं तर्हि ? निर्देश इति अनुवृत्तेः यस्योच्चा-

---

1–2. प्रतिपद्यन्ते　3. अपपाठ　4. नु　5. अविलुप्त　6. एक नास्ति　7. लोकतो नास्ति
8. एवमेवास्तु　9–10. उपदेशे　11. इत्यस्यावृत्तौ　12. एव नास्ति　13. ततो　14. अत्र च नास्ति
15. सति सन्निवेशे　16. इत्यच्सञ्ज्ञा　17. तत्कार्याणामभावः　18. इष्टरूपस्य

र्यमाणस्य प्रयोगस्थो वर्णो निर्देश्यः प्रतिपाद्यः, तस्माद् वर्णाद् वर्णस्य प्रतिपादकात् कारप्रत्ययः इत्यर्थः। अत्र चानुपूर्वीसम्पादन एव तात्पर्यम्, न तु कविपुत्रः इत्यादिषु दृष्टानामकारादीनां [1]प्रतिपादने इति कारप्रत्ययाभावः। अन्ते इति। यद्यपि णकारस्य पूर्वोत्तरवर्णापेक्षया मध्यभावः, तथापि पूर्वापेक्षमन्यत्वमस्त्येव। 'हलन्त्यम्' (१.३.३) इत्यत्र ह्यन्त्यत्वमाश्रितं, न मध्यत्वं प्रतिषिद्धम्। तच्चान्त्यत्वमस्त्येव, मध्यत्वं तु सदप्यनाश्रितत्वादकिञ्चित्करम् इति भावः। ननु एवमप्यप्रधानत्वात् यथाचकार्यं न भवति तथा इत्सञ्ज्ञापि न स्यात् इत्याशङ्क्याह—इतम् इति। अप्राधान्यमणादिसञ्ज्ञास्वनन्तर्भावात् स्यात्। स च 'सहेता' (१.१.७१) इति वचनात् इत्सञ्ज्ञापूर्वकः इति भावः। तस्य इत्यादि। तस्य इति कर्मणि षष्ठी। ग्रहणमुपादानम्। तच्च शब्दविषयं सत् उच्चारणं सम्पद्यते। उच्चारणवचन एव वा ग्रहिः, ग्रहणवता प्रातिपदिकेन (व्या. प. ३२) इति यथा। एकेन इति। सहार्थयोगे तृतीया। तस्य णकारस्यैकेनादिनाऽकारेण सह प्रदेशेषु सञ्ज्ञात्वेनोच्चारणं भवति, न केवलस्य, 'आदिरन्त्येन' (१.१.७१) इति वचनात्, नापि वर्णान्तरसहितस्य इत्यर्थः। अथ वा तस्य इति कर्तरि षष्ठी। ग्रहणमुपादानमेव। स णकार एकेनैवादिना सहितो ग्राहको भवति, न त्वनेकेन, नापि वर्णान्तरेण, न च केवलः इत्यर्थः। 'उरण् रपरः' (१.१.५१) इत्यकारेण इति। अत्राकारेण इत्येतावद् विवक्षितम्, उरण् रपरः इत्युपलक्षणम्, 'उरण् रपरः' (१.१.५१) इत्यादौ अकारेण इत्यर्थः। अत एव अकारेण इत्युक्तम्, 'उरण् रपरः' (१.१.५१) इत्यस्य तु विवक्षितत्वे तन्न वक्तव्यम्। अथ 'इणः षीध्वम्' (८.३.७८) इत्यादाविकारेण ग्रहणं कस्मान् न भवति ? 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६.४.७७) इत्यत्रेकारोकारयोः द्वयोः स्वरूपेण निर्देशात्, अन्यथा हि इणः इति ब्रूयात्। न च पूर्वेण परेण वा इति सन्देहः, पूर्वेण इति व्याख्यानात्। य्वोः इत्यपि हि निर्देशे किं ह्रस्वयोर्ग्रहणम्, उत दीर्घयोः, अथ यकारवकारयोः इति सन्देहाद् व्याख्यानत एव निर्णयः।

ह्रस्वमवर्णम् इत्यादि। प्रयुज्यते इति प्रयोगो धात्वादिः, तत्र ह्रस्वमवर्णं संवृतम्। संवृतादयः शब्दा उभयवचनाः, द्रव्यमाहुर्गुणं च, यथा शुक्लादयः। संवृतगुणयुक्तम् इत्यर्थः। विवृतत्वम् इति। गुणवचनात् त्वप्रत्ययः। विवृतगुणत्वम् इत्यर्थः। तथा च शिक्षा—'विवृतकरणाः स्वराः, तेभ्यः ए ओ विवृततरौ, ताभ्याम् ऐ औ, ताभ्यामप्याकारः, संवृतोऽकारः' (आ. शि. ३.७) इति। तेषां सावर्ण्यप्रसिद्ध्यर्थम् इति। अन्यथा भिन्नत्वात् प्रयत्नस्य, असति सावर्ण्ये, दण्डाढकम् इत्यादौ दीर्घप्लुतयोः परतः 'अकः सवर्णे दीर्घः' (६.१.१०१) इति दीर्घत्वं न स्यात्। ननु च सत्यपि विवृतत्वे नैव प्लुतस्य दीर्घत्वं प्राप्नोति, तस्मिन् कर्तव्ये प्लुतस्यासिद्धत्वात् ? स्वरसन्धिषु प्लुतस्य सिद्धत्वज्ञापनाददोषः। विवृत इति। विवृततरः इत्यर्थः। न हि विवृतस्य विवृततरेण सावर्ण्यमुपपद्यते, प्रयत्नभेदात्। विवृतोऽपि हि प्रतिज्ञायमानो यद्याक्षरसमाम्नायिक एव [2]प्रतिज्ञायेत, ततो धातुप्रातिपदिकप्रत्ययनिपातस्थस्याकारस्य संवृतत्वादच्त्वं न स्यात्। ततश्च 'शमामष्टानां दीर्घः' (७.३.७४) अकारस्य न स्यात्, अन्त्यस्यैव तु स्यात्। वृषदित्यन्तोदात्तो न स्यात्। नायक इति प्रत्ययाकारस्यानच्त्वादायादेशो न स्यात्। प्रपचतीति प्रशब्दाकारस्य 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्याद्युदात्तो न स्यात्। 'अस्य च्वौ' (७.४.३२) इत्यादावुपात्तस्य संवृतत्वादनण्त्वादसति ग्राहकत्वे[3]ऽकारस्यैव ग्रहणाच्छुक्लीभवतीत्यादावेव स्यात्, मालीभवतीत्यादौ तु न स्यात्। अथाक्षरसमाम्नायिकस्यैव [4]विवृतत्वप्रतिज्ञाने किं प्रयोजनम्, न ह्ययं क्वचिदपि पुनः प्रयुज्यते ? उच्यते। यत्र 'अकः सवर्णे दीर्घः' (६.१.१०१) इत्यादौ प्रत्याहारग्रहणं तत्र 'आदिरन्त्येन' (१.१.७१) इति वचनादनयोरेवाकारककारयोरनुकरणमिति, तेन प्रत्याहारगतेनाकारेण विवृतेन प्रयोगस्थयोर्दीर्घप्लुतयोः [5]सावर्ण्यग्रहणे सति खट्वाढकमित्यादौ दीर्घत्वादि कार्यं यथा स्यात्। असति हि विवृतत्वे 'अस्य च्वौ' (७.४.३२) इत्यादिवत्प्रत्याहारेष्वपि संवृतस्य प्रयोगस्थस्य ह्रस्वस्यैव हि कार्यं स्यात्। सति तु विवृतत्वे दीर्घप्लुतयोरपीत्यस्यैवाक्षरसमाम्नायिकमात्रस्यापि विवृतत्व[6]प्रतिज्ञाने फलम्। अतः पूर्वोक्तदोषप्रसङ्गादेव यो नाम कश्चिदकारः स [7]सर्वो विवृतः प्रतिज्ञायते। तदाह—इह शास्त्र इति। इहेत्येतावत्युक्ते सति सन्निधानादक्षरसमाम्नाय इत्यर्थस्स्यादिति शास्त्रग्रहणम्। ननु च 'अस्य

---

1. प्रतिपादनं 2. प्रतिज्ञायते 3. अकारस्यैव ग्रहणात् नास्ति 4. विवृतत्वे प्रतिज्ञायमाने 5. सावर्ण्यादग्रहणे 6. ज्ञापने 7. सर्वोऽपि

च्वौ' (७.४.३३) इत्यादौ सत्यपि विवृतत्वे नैव सवर्णानां ग्रहणं सिद्धचति, अनण्त्वात्? प्रत्युच्चारणं ह्यन्ये चान्ये चाकारादयः, [1]तदिह सर्वेषां [2]विवृतत्वेऽपि सावर्ण्यमात्रं सिद्धचति, न [3]त्वण्त्वमपि। [4]येऽक्षरसमाम्नाय उपदिष्टाः त एवाणः, 'आदिरन्त्येन' (१.१.७१) इति वचनात्। ततश्च 'अकः सवर्णे' (६.७.१०१) इत्यादौ प्रत्याहार एव सवर्णग्रहणं स्यात्, न 'अस्य च्वौ' (७.४.३२) इत्यादौ। एतच्चोद्यमिकारादिष्वपि समानम्। तेऽपि 'इको यणचि' (६.१.७७) इत्यादावेव ग्राहकास्स्युः, न 'यस्येति च' (६.४.१४८) इत्यादौ। ननु प्रत्यभिज्ञानादुच्चारणस्य चाभिव्यञ्जकत्वात्सर्वेषूच्चारणेषु एक एवाकारः, तत्कस्यानण्त्वमाशङ्क्यते? यद्येवम्, अनुबन्धकार्याणि सङ्कीर्येरन्। 'कर्मण्यण्' (३.२.१), 'आतोऽनुपसर्गे कः' (३.२.३) इत्यादिषु पुनः पुनरेक एवाकार उच्चार्यते, स च नानानुबन्धयुक्त इति सर्वत्र सर्वानुबन्धकार्यप्रसङ्गः, 'असाम्प्रतिके' (४.३.९) इत्यस्य चानुबन्धकार्यप्रसङ्गः? लोकवद्व्यवस्था भविष्यति। तद्यथा लोके इह मुण्डो भव, इह जटिलो भव, इह शिखी भव, इह तूष्णीको भवेत्येकस्यापि धर्मिणो देशभेदेन धर्मभेद उक्ते, यो यत्र धर्म उक्तः स तत्रैव व्यवतिष्ठते, न पुनर्धर्मिण एकत्वादन्यत्रापि भवति, तद्वदिहापि 'गोद्व्यचः' (५.१.३९) इत्यत्र [5]चाश्वादिप्रतिषेधो लिङ्गमावृत्तिकृतमपि द्व्यच्त्वमाश्रीयत इति। तेन घटेन तरति घटिकः, धनस्य निमित्तं धन्यमित्यादौ द्व्यज्लक्षणौ ठन्यतौ भविष्यतः। आवृत्तिकृतादेव द्व्यज्व्यपदेशात् स्वाश्रयस्यैकाज्व्यपदेशस्य निवृत्तत्वात् किरिणेत्यादौ 'सावेकाचः' (६.१.१६८) इति विभक्तेरुदात्तत्वं न भविष्यति।

स्यादेतत्—एकश्चेदकारस्तमेकदैक एवोच्चारयेत्, न बहवः सहेति। न, दर्शनस्पर्शनादिवदुपपत्तेः। [6]यथैकमेव [7]पटमेकदैव कश्चित्स्पृशति कश्चित्पश्यति, तादृगेतदुच्चारणं [8]नामेति। सत्यम्, एकत्वेऽप्यकारस्य न कश्चिद्दोषः, युक्तिवशात्तु प्रत्युच्चारणं [9]भिन्नोऽकार आश्रितः। तथा हि दण्ड+अग्रम् इत्यकारयोः कालव्यवायो दृश्यते, दण्डेति शब्दव्यवायश्च। न चैकस्य कालशब्दव्यवाय उपपद्यते, [10]नानात्वे तूपपद्यते, यथा 'अ इ उ ण्' (मा. सू. १) इत्यत्राकारेकारयोः, [11]यथा वा अहिरिति। ननु यथा एकस्यापि [12]घटादेस्स्वव्यञ्जकप्रदीपसंनिधानासंनिधानाभ्यामुपलब्ध्यनुपलब्धी, तथैकस्या[13]प्यकारस्य व्यञ्जकध्वनिसन्निधानात्प्रथममुपलब्धस्य, मध्ये च तदसन्निधानादनुपलब्धस्य, पश्चात्तत्सन्निधानादुपलब्धिरिति उपलब्ध्योरेव कालव्यवायः, नाकारस्य? नैतत्प्रतीतिसाक्षिकमुच्यते। लौकिकाः ह्यकारयोरेव व्यवायं [14]प्रतिपद्यन्ते येऽस्मिन् दुस्तर्के शिक्षिता न भवन्ति। किञ्च [15]अनुनासिकत्वादीनां विरुद्धानां धर्माणामेक एवाश्रयोऽकार उपलभ्यते, अतो विरुद्धधर्माध्यासात् गवाश्वादिवद्भेदोऽनुमातव्यः। प्रत्यभिज्ञा च [16]जातिनिबन्धना, जालादिवत्। व्यक्तिप्रत्यभिज्ञा त्वसिद्धा, भेदस्यैव प्रतिपुरुषं सिद्धेः। तथा च कुडयान्तर्हितेषु वक्तृषु शब्दविशेषाद्वक्तृविशेषं निश्चिन्वन्ति, न [17]चैतदस्यैव प्रतिभासे सत्युपपद्यते। एवं तर्हि सैव जातिरत्र निर्दिश्यते, ततश्च सर्वेषामण्त्वं भविष्यति? यद्येवं 'अणुदित्सवर्णस्य' च (१.१.६९) इत्यण्ग्रहणमनर्थकम्। एवं ह्यक्षरसमाम्नायवत् 'अस्य च्वौ' (७.४.३२) इत्यादावपि जातिनिर्देश एवास्तु, किमण्ग्रहणेन? एवं तर्हि नैवात्र जातिर्निर्दिश्यते, नाप्येकैव ह्रस्वव्यक्तिः, षडपि ह्रस्वव्यक्तयो निर्दिश्यन्ते। तदैतदेवं कथं भवति? सादृश्यप्रधानो निर्देशः। सादृश्यं च षण्णामपि ह्रस्वव्यक्तीनामस्तीत्येकव्यक्तिनिर्देशेऽपि तद्रूपस्याविवक्षितत्वात् षण्णामप्ययं निर्देशः सम्पद्यत इति सर्वासामण्त्वसिद्धिः। एवं च कृत्वा यदत्र विवृतोच्चारणं तदेव धात्वादिगतस्याप्यकारस्य विवृतोच्चारणं सम्पन्नमिति न तेषां पृथग्विवृतत्वं [18]प्रतिज्ञातमिति सर्वमवदातम्।

कथं पुनर्ज्ञायते विवृतः प्रतिज्ञायते इत्याह—तस्य इत्यादि। यदि [19]पूर्वमकारो विवृतो न प्रतिज्ञातः स्यात्, [20]ततस्तस्य विवृतस्य प्रयोगार्थम्, अर्थशब्दो निवृत्तिवचनः, प्रयोगनिवृत्त्यर्थं प्रत्यापत्तिं न कुर्यात्। अथ वा तस्येति संवृतः

---

1. यदिह 2. विवृतत्वे सत्यपि 3. त्वण्त्वमिति 4. ये हि 5. च नास्ति 6. तद्यथैकमेव 7. घटम् 8. नाम 9. भिन्नोऽकारो भवतीत्याश्रितम् 10. भिन्नत्वे 11. तथा च हरिरिति 12. घटस्य 13. अपि नास्ति 14. प्रतीयन्ति 15. अनुनासिकादीनां 16. जातिसन्निधानात् 17. चैतदभेदस्यैव 18. प्रतिज्ञातव्यमिति 19. पूर्वमवर्णो 20. ततः नास्ति

परामृश्यते, तस्य संवृतस्य प्रयोगो यथा [1]स्यादित्येवमर्थमित्यर्थः। स्वरूपाद्धि प्रच्युतस्य पुनस्तत्प्राप्तये यत्नोऽर्थवान् भवति। ननु चातिखट्व इत्यादावाकारस्य विवृतस्य ह्रस्वो विधीयमान आन्तरतम्याद्विवृतो भवेत्, तस्य प्रयोगो मा भूदिति प्रत्यापत्तिवचनमर्थवत्? नैतदेवम्, [2]ह्रस्वादेशेषु 'अचश्च' (१.२.२८) इत्युपस्थानादचो ह्रस्वेन भाव्यम्, असति च विवृतत्वेऽकार आकारं न गृह्णाति इति आकारस्य ह्रस्वो [3]नैव स्यादिति कस्य प्रत्यापत्तिः स्यात्? यस्तर्हि 'आपोऽन्यतरस्याम्' (७.४.१५) इत्याकारस्यैव ह्रस्वः, तस्य प्रत्यापत्तिः स्यात्? एवं मन्यते—नैव लोके न च वेदे [4]विवृताकारोऽस्ति। कस्तर्हि? संवृतः योऽस्ति स भविष्यति। अथ वा यदि विवृतः प्रतिज्ञायते, प्रयोगोऽपि तस्य तथाभूतस्य प्राप्नोतीत्याशङ्क्याह—तस्य इत्यादि। अस्मिन्पक्षे ज्ञापकस्यानुपन्यस्तत्वान्न काचिदनुपपत्तिः, विवृतत्वप्रतिज्ञानं तु व्याख्यानादवसेयम्। यदि प्रत्यापत्तिः क्रियते, तयैव प्रत्यापत्त्या सर्वोऽकारः संवृतः सम्पन्न इति पुनरपि सावर्ण्यं न स्यादित्यत आह—शास्त्रान्ते इति। शास्त्रान्ते क्रियमाणा प्रत्यापत्तिः सर्वेष्वेव शास्त्रकार्येष्वभियातीति भावः॥

## २. ऋ लृ क्।

ऋ लृ क्। इह प्रयोजनार्थो वर्णानामुपदेशः, न स्वरूपज्ञापनार्थः। लृकारोपदेशस्य च न किंचित्प्रयोजनं दृश्यत इति तदुपदेशमाक्षेप्तुकामः किं पुनः कारणम् लृकारोपदेशस्यैव प्रयोजनं पृच्छति, न पुनर्वर्णान्तरोपदेशस्य इत्याशङ्कां निराकुर्वन्नाह—अकारादयो वर्णा इति। वर्णशब्द उभयलिङ्गः, तथा च पूर्वत्र ह्रस्वमवर्णम् इत्युक्तम्, इह [5]च वर्णा इति। प्रचुरप्रयोगविषया इति। [6]प्रयुज्यते इति प्रयोगः धात्वादिः, प्रचुरः प्रभूतः प्रयोगो विषयो येषामिति त्रिपदो बहुव्रीहिः। अथ वा प्रयुक्तिः [7]प्रयोगः, तस्य विषयः प्रयोगविषयः, ततः प्रचुरशब्देन बहुव्रीहिः। सुज्ञानम् [उपदेशे] प्रयोजनम् इति। तद्यथा दण्डाग्रम्, दध्यत्र, देवच्छत्रमित्यादौ [8]स्थानित्वं निमित्तत्वमित्यादि। लृकारस्तु इति। तुशब्दोऽकारादिभ्यो विशेषं दर्शयति। क्लृपिस्थ एव इति। स्यादेतत्, क्लृपिस्थस्य तस्याच्कार्यार्थं उपदेश इति? तत्राह—क्लृपेश्च इति। न हि तस्याप्ययमौपदेशिकः, किं तर्हि, 'कृपो रो लः' (८.२.१८) इति विधानेन सम्पादितः, स चासिद्ध इत्यर्थः। ततः किमित्याह—तस्यासिद्धत्वात् इति। अच्कार्याणि भविष्यन्ति इति। कल्पत इति धातोरन्त इत्युदात्तत्वम्, क्लृप्तमिति हि शेषनिघातः, कल्पनमिति इको गुणवृद्धी इत्यादीनि। किमर्थं लृकार उपदिश्यते इति। न हि तस्य 'इको यणचि' (६.१.७७) इत्यादौ स्थानित्वं निमित्तत्वं वा सम्भवतीति भावः। लत्वविधानात् इति। लत्वं विधीयते येन[9] लत्वविधानं सूत्रम् 'कृपो रो लः' (८.२.१८) इत्येतत्, तस्मात्पराणीत्यर्थः। एतेन तेषु लत्वस्य सिद्धत्वं दर्शयति—क्लृ३प्तशिख इति। अत्र 'गुरोरनृतः' (८.२.८६) इति प्लुते कर्तव्ये लृकारस्य सिद्धत्वात् तस्य चानच्त्वादचो विधीयमानः प्लुतो नस्यात्। प्रक्लृप्त इति। अन्तर्भावितण्यर्थात्कर्मणि क्तः, 'गतिरनन्तरः' (६.२.४९) इति शेषनिघातः। अत्र 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६) इत्यस्मिन्कर्तव्ये लृकारस्य सिद्धत्वात्तस्य चानच्त्वात्[10]अचो विधीयमानस्स्वरितो न स्यात्। ननु च नाचः स्वरितो विधीयते? सत्यम्, अनुदात्तसञ्ज्ञा त्वचो विधीयते, एवं स्वरितसञ्ज्ञाऽपि, ततश्च स्थान्यादेशयोरुभयोरपि [11]लृकारयोरनच्त्वात् स्वरितो न स्यादेव। क्लृप्तवान् इति। अत्र 'अनचि च' (८.४.४७) इति पकारस्य द्विर्वचनं न स्यात्। यद्यपि पूर्वमपि द्विर्वचनस्योदाहरणं सम्भवति, तथापि [12]स्पष्टार्थमिदमुदाहरणमुपन्यस्तम्। ननु च 'कृपो रो लः' (८.२.१८) इत्येतत्सूत्रं स्वरितविधानात्परम्, 'अ अ' (८.४.६८) इत्येतस्मात्पूर्वमस्तु, एवं हि लत्वास्यासिद्धत्वात् प्लुतस्वरितद्विर्वचनानि[13]अपि लृकारस्यैव सिद्ध्यन्ति? नैतदस्ति, 'कृपो रो लः' (८.२.१८) इत्येतस्मिन्नुत्कृष्यमाणे,[14] 'म्रो यङि' (८.२.१०) इत्येतदपि उत्क्रष्टव्यम्, ततश्च निजेगिल्यते इति, 'हलि च' (८.३.७७) इति दीर्घत्वं स्यात्, तस्मिन् कर्तव्ये [15]लत्वासिद्धत्वादिति यथान्यासमेव साधीयः। क्लृपिस्थ एव प्रयुज्यत इत्येतदपि

1. ज्ञातव्यः 2. ह्रस्वप्रदेशेषु 3. न 4. अपि विवृतः अकारोऽस्ति 5. च नास्ति 6. प्रयुज्यते इति नास्ति 7. प्रयोगस्तस्य विषयः नास्ति 8. स्थानिनिमित्तत्वमित्यादि 9. तत् इत्यधिकम् 10. अचो विधीयमानः नास्ति 11. लृकारलृकारयोः 12. विस्पष्टमिदम् 13. च 14. कृष्यमाणे 15. लत्वस्यासिद्धत्वादिति

शिथिलयन्नाह—यच्चाशक्तिजम् इति । साधुशब्दोच्चारणशक्तेरन्या शक्तिरेवात्राशक्तिः, न [1]ह्यशक्तेर्जन्म । नन्वसाध्वनुकरणमप्यसाध्वेव, यथा ब्रह्महत्यानुकरणम् । यो हि 'एवमसौ ब्राह्मणं हन्ति' इति ब्राह्मणं हन्ति, सोऽपि प्रत्यवैति । [2]विषमोऽयमुपन्यासः । न तत्रानुकरणात्प्रत्यवायः, किं तर्हि, अविकलं तत्क्रियानुष्ठानादेव । [3]एवं यदि पुनरनुकरणा[4]त्प्रत्यवायः स्यात्, 'एवमसौ ब्राह्मणं हन्ति' इति कदलीस्तम्भं छिन्दन्नपि प्रत्यवेयात् । तद्वदिहापि [5]य एवं कुमार्या लृतकशब्दः प्रयुक्तः, [6]तमेव यद्यनुकुर्वन्प्रयुञ्जीत ततः स्यादसाधुः । अयं तु शब्दान्तरं प्रयुङ्क्ते । कथम् ? अर्थभेदात् । कुमार्या प्रयुक्तस्य पुरुषविशेषोऽर्थः, अनुकरणस्य तु कुमार्या प्रयुक्तमनुकार्यशब्दरूपम् । अत एवाह—असाधुशब्दरूपं तदनुकरणस्यापि इति । न चापशब्दपदार्थकत्वादपशब्दत्वम्, अन्यथा [7]ह्यपशब्द इत्येवायमपशब्दस्स्यात् । नापि 'प्रकृतिवदनुकरणं भवति' इत्यपशब्दत्वम्, शास्त्रीया हि तत्र प्रकृतिर्गृह्यते, शास्त्रीयं च कार्यमतिदिश्यते । न चापशब्दश्शास्त्रीया प्रकृतिः, न चाप्यपशब्दत्वं शास्त्रीयं कार्यम् । अतोऽशक्तिजानुकरणमपि साध्वेव । इष्यते इत्यनेनैतद्दर्शयति, न्यायसिद्धमप्येतच्छिष्टानामिच्छया नियम्यत इति । तेन किं सिद्धं भवति ? लृवर्णस्य दीर्घा न [8]सन्तीत्येतत्सिद्धं भवति । अन्यथा 'ॠत इद्धातो.' (७.१.१००) इत्येतच्छक्तिवैकल्यात् 'लृत' इति पठन्तीं कुमारीं यदा शिष्टोऽनुकुर्यात् कुमार्य्लृतक इत्याहेति, तदा लृवर्णस्य दीर्घप्रयोगः साधुरेव स्यात् । 'इको यणचि' (६.१.७७) इत्यत्रासत्यपि लृकारोपदेशे वैषम्यात् सङ्ख्यातानुदेशाभावेऽपि आन्तरतम्यात्सिद्धमिष्टम् । गमिप्रभृतीनाम्लृकारस्येत्सञ्ज्ञापि 'पुषादिद्युताद्य्लृदितः' (३.१.५५) इति ज्ञापकात्सिद्धा । अतः पूर्वोक्तान्येव प्रयोजनानि । ननु च तान्यपि 'ऋकारलृकारयोः सवर्णसञ्ज्ञा वक्तव्या' (वा. ३) इति सवर्णसञ्ज्ञया सिद्ध्यन्ति, सा चावश्यं [9]वक्तव्या, पितृ+लृकार इत्यत्र सवर्णदीर्घत्वं यथा स्यात् ? सत्यम् । सवर्णसञ्ज्ञाश्रयणे सा तावद्वक्तव्या, क्लृ३प्तशिख इत्यत्र प्लुतसिद्धये यत्नः कर्तव्यः, 'अनृत' (८.२.८६) इति प्रतिषेधप्रसङ्गात् । लृकारोपदेशे तु स तावदुपदेश्यः, स्वरसन्धिप्रकरणे च लृकारस्य ऋकारवद्भावो वाच्यः इत्यविशेषात् सूत्रकारः लृकारमुपदिदेश ॥

## ३. ए ओ ङ् ।

ए ओ ङ् । अत्र पूर्वांश्च इति नोक्तम्, पूर्वैः सहास्य ग्रहणासम्भवात् । अथ 'षिद्भिदादिभ्योऽङ्' (३.४.१०४), 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३.१.५२) इत्यकारेण ग्रहणं कस्मान्न भवति ? 'आदिरन्त्येन' (१.१.१०१) इत्यत्र 'अणुदित्सवर्णस्य च' (१.१.६९) इत्यतः अप्रत्ययः इत्यनुवृत्तेः । एवञ्च 'रोः सुपि' (८.३.१६) इत्यत्राप्रत्यय इति निषेधात् स्वरूपग्रहणम् । 'सुपि च' (७.३.१०३) इत्यत्र तु प्रतिषेधो न भवति, यञादौ सुपीति विशेषणात्, उत्तरत्र च 'बहुवचने झलि' (७.३.१०३) इति । 'सुप्तिङन्तं पदम्' (१.४.१४) इत्यत्रापि तिङ्साहचर्यात् सुबिति प्रत्याहारः । 'शास इदङ्हलोः' (६.४.३४) इत्यत्र प्रत्याहारे सति अङादौ हलादौ चेत्वं विधीयेत, ततश्चाङ्हलोरित्यनर्थकम् । एतावन्तो हि प्रत्ययाः अङादयो हलादयश्च । व्यतिशासे इत्यत्र [10]तु ङितीत्यनुवृत्तेरेवाप्रसङ्गः, अतोऽङ्ग्रहणसामर्थ्यात् स्वरूपग्रहणम् । 'ऋदृशोऽङि' (७.४.१६) इति न प्रत्याहारः, 'ऋच्छत्यृताम्' (७.४.११) इति ऋतां लिटि [11]पुनर्गुणविधानात् । 'सनि च' (२.४.४७), 'इङश्च' (२.४.४८) इति न प्रत्याहारः, 'इको झल्' (१.२.९) इति कित्त्वविधानात्, 'अज्झनगमां सनि' (६.४.१६) इति [12]दीर्घविधानाच्च । न ह्यङन्तानां सनि गम्यादेशे इगन्ता अजन्ता वा धातवः [13]सनि संभवेयुः । 'परिमाणाख्यायां सर्वेभ्यः' (३.३.२०), 'इङश्च' (३.३.२१) इति न प्रत्याहारः । यदि स्यात् ऋकारान्तानामेङन्तानां च सामान्यलक्षणेनैव घञः सिद्धत्वादिवर्णोवर्णान्तेष्वजपोर्बाधाय घञ्विधिः स्यात् । [14]न च तयोरपि वचनसामर्थ्यान्नित्यो बाध इति विकल्पस्स्यात् । ततश्च तद्विधावेव वा ग्रहणं कुर्यात् । 'क्रीङ्जीनां णौ'

---

1. ह्यशक्त्या जन्म 2. अयं नास्ति 3. एवं नास्ति 4. प्रत्यवायः नास्ति 5. य एवं नास्ति 6. तमेवमनुकुर्वन्प्रयुञ्जीत तदसाधुः 7. हि नास्ति 8. संभवतीत्येतत्सिद्धं 9. कर्तव्या 10. तु नास्ति 11. पुनः नास्ति 12. दीर्घत्वविधानाच्च 13. सनि नास्ति 14. नाजपोरपि

(६.१.४७) इति न प्रत्याहारः, क्रीज्योः पृथगुपादानाद्धातुसाहचर्य्याच्च । 'इङ्धार्योः' (३.२.१३०) इति न प्रत्याहारः, धारिसाहचर्यात् ॥

## ४. ऐ औ च् ।

ऐ औ च् । इह 'आदिरन्त्येन सहेता' (१.१.१०१) इति [1]मध्यवर्तिनामजित्येषा सञ्ज्ञा [2]भवन्ती इकारादीनामिव णकारादीनामपि प्राप्नोति, ततश्च दधि णकारः, दधि [3]करोति, दधि ङकारः इति यणादेशः प्राप्नोति, एवमग्ग्रहणे णकारस्यापि [4]ग्रहणे सुगण् णकारः इति 'अकः सवर्णे दीर्घः' (६.१.१०१) [5]प्राप्नोति, तथा अङ्ग्रहणे चकारस्यापि ग्रहणात् रुचीनामि[6]त्यादौ 'अड्व्यवाये' (८.४.२) इति[j] णत्वं स्यात् । एवं [7]सर्वेष्वेव प्रत्याहारेषु [8]मध्यवर्तिनामनुबन्धानां तत्तत्प्रत्याहारनिबन्धनं कार्यं [9]प्राप्नोतीत्यभिप्रायेणाह—प्रत्याहारेऽनुबन्धानाम् इति । प्रत्याहारे अक्षरसमाम्नाये येऽनुबन्धास्तेषाम् । अज्ग्रहणेषु उपलक्षणमेतत् । अजादिप्रत्याहारग्रहणेषु कथं ग्रहणं न भवति ? [10]प्राप्नोत्येवेत्यर्थः । आचारात् इति । आचरणमाचारः, आचार्यस्य प्रवृत्तिः, 'उणादयो बहुलम्' (३.३.१), 'तृषिमृषिकृशेः काश्यपस्य' (१.२.२५), 'अचि ङ्मुट्' (८.३.३२) इति, ततो ज्ञापकान्न भवति । सामान्यापेक्षं च ज्ञापकमिति कार्यान्तरमपि तत्र तत्र न भवति । अप्रधानत्वात् इति । अणादिसञ्ज्ञाप्रणयनार्थमनुबन्धोच्चारणम् । तत्राकारादारभ्य आ चकारान्मध्यवर्तिनामच्सञ्ज्ञा भवन्ती स्वप्रवृत्तेः प्राग्येषां स्वार्थमुपादानं निश्चितं न परार्थमेव तेषां प्रधानानां भवति । तत्र च येषामृकारादीनां न क्वचिदपि सञ्ज्ञास्वरूपान्तर्भावस्तेषां तावत्स्वार्थमेवोपादानम्, इकारादीनामप्यणादिसञ्ज्ञासु न कथञ्चिदपि प्राधान्यम् । इगादिसञ्ज्ञासु सञ्ज्ञास्वरूपान्तर्भावेऽपि स्वरूपमित्यनुवृत्तेः स्वार्थमप्युपादानं न परार्थमेव । णकारादीनां तु परार्थमेवेत्यप्राधान्यम् । किं च णकारादीनामच्सञ्ज्ञा प्राप्नोति लोपश्च, तत्र परत्वान्नित्यत्वाच्च लोपे कृते सञ्ज्ञाप्रवृत्तिकालेऽसत्त्वादपि तेषामजादिसञ्ज्ञाऽभाव इत्याह—लोपश्च इति । स्वार्थ एव तरप्, अल्पाच्तरम् इति यथा । यस्मिंस्तु प्रत्याहारे योऽनुबन्धोऽपेक्षितः, तस्य वचनसामर्थ्यात्तत्प्रवृत्तेः प्राग्लोपाभावः ।

इहाकारादयो वर्णाः सभागा इष्यन्ते, यदाह 'तस्यादित उदात्तमर्धह्रस्वम्' (१.२.२३), पूर्वस्यार्धस्यादुत्तरस्येदुताविति । सन्ति च केषांचिद्भागा वर्णान्तरबुद्धिबोध्याः, आकारादिष्वकारादयः, एकारैकारयोरकारेकारौ, ओकारौकारयोरकारोकारौ, ऋकारे रेफः, ऌकारे लकारः । ते[11]तत्तदकारादिग्रहणेन गृह्येरन्नवेति सन्देहः । तदर्थं च किमकारादिसङ्घातमात्रमाकारादयः वनादिवत् शरीरादिवद्वा, किं वा वर्णान्तरमेतत् सदृशावयवं नृसिंहादिवदिति संदेहः । [12]किं तावत्प्राप्तम् ? सङ्घातमात्रमिति । कुतः ? अकारादिरूपप्रत्यभिज्ञानात्, क्रमेणोपलब्धेश्च । ए ओ इति ह्यु्क्ते पूर्वमकारः, पश्चादिदुतौ इति प्रतिपत्तिः, स्थानक्रमाभिधानाच्च ए ऐ [13]कण्ठयतालव्यौ, ओ औ कण्ठोष्ठ्याविति । न ह्येकस्य वर्णस्य स्थानद्वयेन क्रमेण निष्पत्तिः । सूत्रकारोऽप्याह-[14]एचोः प्लुतिप्रसङ्गे तदवयवाविदुतौ प्लवेते इति । आश्वलायनोऽप्याह—'विविच्य सन्ध्यक्षराणामकारम्' इति । अतः सङ्घातमात्रत्वात्तद्ग्रहणेन ग्रहणे सति, [15]अग्ने इन्द्रः, वायो उदकमित्यत्र सवर्णदीर्घत्वं प्राप्नोति । 'विप्रतिषेधे परं कार्यम्' (१.४.२) इति परत्वादन्तरङ्गत्वाच्चावयवप्रतिपत्तिपूर्वकत्वात्समुदायप्रतिपत्तेः, अग्ने एतीति 'एङः पदान्तात्' (६.१.१०९) इति स्यात्, आलूय [16]प्रलूयेति तुक्, खट्वाभिरित्यत्रैस्,[17] [18]यातेत्यतो लोपः, वाचा तरति वाचो निमित्तमिति द्व्यच्लक्षणौ ठन्यतौ [19]स्याताम् । एवमाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—वर्णेषु इत्यादि । वर्णैकदेशा इति । पुनर्वर्णग्रहणं वर्णानां सतामेकदेशा एते, न पुनर्वर्णसमूहानामिति ज्ञापनार्थम्, तेन [20]वर्णैकत्वव्यवस्थापक एकत्वप्रतिभासो निर्णीतः । न ह्याकारादेः पदस्येव वर्णसमूहत्वेन प्रतिभासः, किन्त्वेकवर्णतया । अकारादिभागसंवेदनं त्वेकवर्णत्वेऽपि तस्य सभागत्वात्, भागानां चाकारादिसादृश्याद्युपपन्नम् । तदाह—वर्णान्तरसमाना-

1. मध्यपठितानां 2. भवतीति 3. ककारो 4. ग्रहणात् 5. स्यात् 6. इत्यत्र 7. सर्वेष्वपि 8. मध्यपतितानां 9. भवति 10. प्राप्नोत्यर्थः 11. तत्तत् नास्ति 12. उक्ते 13. कण्ठतालव्यौ 14. एचः प्लुतप्रसङ्गे 15. अग्ने इदं 16. प्रमायेति 17. अत्र नास्ति 18. यातेत्यत्रातो 19. स्यातामिति 20. वर्णैक्यस्य व्यवस्थापकः

कृतय इति। भागानामेव च क्रमोपलब्धिः, स्थानभेदोऽप्येकवर्णत्वेऽपि वकारवदुपपन्नः, सूत्रकारवचनमपि सदृशभागनिबन्धनमेवास्तु, अतोऽकारप्रत्यभिज्ञानादेरन्यथाऽपि सिद्धत्वादबाधितान्यथानुपपन्ना चैकत्वबुद्धिरेकवर्णत्वे प्रमाणम्। तेषु इति। एकदेशेषु। तत्कार्यम् इति। वर्णान्तरकार्यं सवर्णदीर्घत्वादि न भवति। [1]किं कारणमित्याह—तच्छायानुकारिणो हि इति। तच्छाया तदाकारः। एवं प्रत्यक्षेणैक्यं साधयित्वा तत्र विप्रतिपन्नं प्रत्यनुमानमाह—पृथक् इत्यादि। इच्छायोनिरात्मगुणोऽत्र प्रयत्नः, न पुनः स्पष्टतादिर्वर्णगुणः। इहैकप्रयत्ननिर्वर्त्य एको वर्ण एकेच्छापूर्वक[2]श्चैकप्रयत्नः। तत्र यथा एकवर्णोच्चारणेच्छापूर्वकैकप्रयत्ननिर्वर्त्यत्वादकारादीनां सभागत्वे[3]ऽप्येकत्वम्, तथा एकारादेरपि। न हि कश्चिदेकाराद्युच्चारयन् प्रयत्नस्य तत्कारण[4]भूताया इच्छाया वा भिन्नत्वमुपैति। अतो नरसिंहवज्जात्यन्तरत्वादकारादीनामभावादेव तत्कार्याणामभावः। यद्येवम्, 'तस्मान्नुड् द्विहलः' (७.४.७१) इति नुट् आनर्धेत्यादावेव स्यात्, आनृधतुरित्यादौ[5] न स्यात्, ऋकारस्थस्य रेफस्याहल्त्वात्। तथा 'कृपो रो लः' (८.२.१८) इति लत्वम् [6]कल्प्ता, चलीक्लृप्यते, [7]कल्पयिष्यते इत्यादौ शुद्धस्यैव रेफस्य स्यात् शुद्धो लकारः, न तु क्लृप्त इत्यादावृकारस्य लृकारः। 'रषाभ्याम्' (८.४.१) इति णत्वमा[8]तीर्णमित्यादावेव स्यात्, तिसृणां मातृणामित्यादौ तु न [9]स्यादित्यत आह—नुड्विधि इत्यादि। सकारनकारस्थानिकस्य मूर्धन्यस्य विनाम इति पूर्वाचार्याणां [10]सञ्ज्ञा। इह तु णकारस्य ग्रहणम्। नुड्विधौ तावत् द्विहल्ग्रहणं न करिष्यते। न चैवमाटतुरित्यादावपि प्रसङ्गः, 'अश्नोतेश्च' (७.४.७२) इत्यस्य नियमार्थत्वात्, अकारोपधस्य यदि भवति अश्नोतेरेवेति, अश्नातिनिवृत्त्यर्थं हि 'नाश्न' इत्येव ब्रूयात्। लत्वे च 'रो लः' इति सामान्यनिर्देशादृकार[11]लृकारयोश्च रेफलकारयोर्निष्कृष्य स्थान्यादेशभावायोगादेकदेशविकारद्वारेण ऋकारस्यैव लृकारः। अत्र च प्रमाणम्—'लुटि च क्लृपः' (१.३.९३) इति निर्देशः। णत्वेऽपि 'र' इति सामान्यनिर्देशादृकारस्थोऽपि [12]तावद्रेफो गृह्यते। न च परयाऽज्भक्त्या व्यवधानम्, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (८.४.२) इत्यत्र व्यवायेऽपीति विभज्य सामान्येन व्यवायेऽपि णत्वविधानात्। न चैवं वर्णान्तरव्यवायेऽपि प्रसङ्गः, अट्कुप्वाङ्नुम्भिरिति नियमार्थत्वात्, आक्षरसमाम्नायिकैस्तत्प्रत्यायितैर्वा[13] व्यवाये यदि भवति, एभिरेवेति। क्षुभ्नादिषु [14]वा नृनमनतृप्नोतिग्रहणं ज्ञापकमिति प्रतिविधानम्॥

## ५. हयवरट्।

हयवरट्। 'अड्डुदात्तः' (६.४.७१) इति न प्रत्याहारः 'प्राक्सितादड्व्यवायेऽपि' (८.३.६३) इति वचनात्। प्रत्याहारे[15] तस्मिन् प्रत्येकमट्त्वे 'अलोन्त्यस्य' (१.१.५२) इत्यन्त्यस्य स्यात्, समुदायस्य त्वट्त्वे[16] सर्वादेश इति कुतो व्यवायः? ननु च अड्डुदात्तः इत्यत्र यदा प्रत्याहारस्तदा अड्व्यवाये इत्यत्रापि प्रत्याहार एव, णत्वविधिवत्, ततश्चाभ्यवसुनोतीत्यादौ षत्वविधानार्थमेतत्स्यात्। एवं तर्हि आदिरन्त्येनेत्यत्राप्रत्यय इत्यनुवर्तते, स चान्वर्थः, प्रतीयते विधीयते इति, तेन भाव्यमानेन सर्वत्र प्रत्याहारग्रहणं न भविष्यति। न चैवम् 'इको यणचि' (६.१.७७) इत्यादौ दोषः, आदिरन्त्येनेत्येतद्धि अइउणित्यादिभिः प्रत्येकमभिसम्बध्यते। तत्र क्वचिदन्वर्थग्रहणम्, क्वचिन्न। 'इड्वलादेः' (७.२.३५) इति न प्रत्याहारः, 'विभाषेटः' (८.३.७९) इति वचनात्। इड्विधौ अङ्गस्येत्यनु[17]वृत्तं [18]पञ्चम्यन्तं चेद्विपरिणम्यते, इकारादीनां च प्रत्येकमिट्त्वम्, [19]तत्र 'आदेः परस्य' (१.१.५४) इत्यार्धधातुकादेरिकारादिरादेशः स्यात्, अविपरिणामे तु 'अलोन्त्यस्य' (१.१.५२) [20]स्यात्, समुदायस्य त्विट्त्वे सर्वादेशः। न च त्रिष्वपि पक्षेषु इणन्ताङ्गादुत्तरो य इट् तत उत्तरेषां षीध्वंलुङ्लिटां धकारस्य सम्भवः। 'दीधीवेवीटाम्' (१.१.६) इति न [21]प्रत्याहारः, इग्व्यतिरिक्तानामिटां गुणप्राप्त्यभावात्,

---

1. तर्कि 2. चेकः प्रयत्नः 3. अप्यैक्यम 4. भूतया इच्छया 5. तु इत्यधिकम् 6. कल्प्यते 7. कल्पयिष्यते नास्ति 8. आस्तीर्णं 9. स्यादित्याह 10. पूर्वाचार्यसंज्ञा 11. लृकारस्थयोश्च 12. तावत् नास्ति 13, 14. वा नास्ति 15. हि इत्यधिकम् 16. सति इत्यधिकम् 17. अनुवर्तमाने 18. पञ्चम्या 19. ततः 20. स्यात् नास्ति 21. प्रत्याहारग्रहणम्

सर्वेषामिकां गुणनिषेधे निर्विषयत्वप्रसङ्गाच्च। 'इट ईटि' (७.२.२७) इति न प्रत्याहारः, ईटा साहचर्यात्। विधौ च स्वरूप[1]ग्रहणमुक्तम्, अनुवादोऽपि तस्यैव न्याय्यः।

[2]अयं रेफो यकारात्पूर्वं उपदिश्येत हयवरट् इति, परतो वा यथान्यासम्? तत्र पूर्वोपदेशे यण्ग्रहणानि सर्वाणि रेफेण ग्राह्याणि 'इको यणचि', 'उदात्तयणो हल्पूर्वात्', 'उदात्तस्वरितयो यणः स्वरितोऽनुदात्तस्य', 'संयोगादेरातो धातो यण्वतः' इति। तत्र इको यणचीति संख्यातानुदेशादिकारस्य रेफः प्राप्नोति, तथा देवित्वा, दिदेविषति, रलो व्युपधादिति कित्त्वविकल्पः स्यात्, वकारस्य रलन्तर्भावात्। रेफस्य च वल्यनन्तर्भावात् गोधेरः, पचेरन्, 'जीवेरदानुक्' (द. उ. १.१६३) जीरदानुरिति 'लोपो व्योर्वलि' (६.१.६६) इति[3]न स्यात्। अतः पर एवोपदेश्यः। अत्र पक्षे [4]दोषमुद्भावयितुमाह— अयम् इत्यादि। व्यवहितेऽपि परशब्दो वर्तते यथा बाल्यात्परं वृद्धत्वमिति। यकारात्परस्य रेफस्योपदेशादयं दोषः, न तु वकारादिति वकारात्पर इति नोक्तम्। यदि पर उपदिश्यते [5]ततः किमित्याह—तस्य इत्यादि। अनुनासिकः प्राप्नोति इति। णकारस्तुल्यस्थानत्वात्।[6]ननु चैवं सत्यन्तरतमपरिभाषा बाध्येत, न हि णकारो रेफस्यान्तरतमः, प्रयत्नभेदात्, तन्नयनमित्यादौ तु सावकाशं वचनम्। नैतदस्ति, 'व्यक्तिः पदार्थः' [7]इत्यस्मिन्पक्षे एतच्चोद्यते। [8]तस्मिन्पक्षे सर्वासां व्यक्तीनां तात्पर्येण निर्देशाद्यदेतद्विषयं लक्षणं तत्प्रयत्नभेदादनन्तरतममपि[9] णकारं न प्रवर्तयेत्, व्यर्थमेव स्यात्। द्विर्वचनं प्राप्नोति इति। ततश्च द्वयो रेफयोः श्रवणं स्यात्, 'रो रि' (८.३.१४) लोपे द्विर्वचनस्यासिद्धत्वात्। हलो यमाम् (८.४.६४) इत्यत्र च 'झयो होऽन्यतरस्याम्' (८.४.६२) इत्यतोऽन्यतरस्यांग्रहणमनुवर्तते। अतः स्यादेव पक्षे द्वयो रेफयोः श्रवणम्। परसवर्णः प्राप्नोति इति। कः पुनरसौ? ननु रेफोष्मणां सवर्णा न सन्ति, वर्णान्तरापेक्षयैतदुच्यते, रेफस्तु रेफस्य सवर्ण एव। एवं व्यक्तिपदार्थमाश्रित्य चोदिते [10]जातिपदार्थमाश्रित्य परिहारमाह—नैष दोष इति। जातावेकवचनम्, नैते दोषा [11]इति यावत्। आकृताविति जातावित्यर्थः। इह केषाञ्चित् जातिः पदार्थः, गृहीततत्सम्बन्धो हि शब्दोऽयं बोधयति, न चक्षुरादिवत्त[12]न्निरपेक्षम्। सम्बन्धग्रहणं च व्यक्तिषु न सम्भवति, तासामानन्त्यात्। केषाञ्चिद्व्यक्तिः पदार्थः, तत्रैव वाहदोहादिकार्यसम्भवात्। जातौ हि पदार्थे व्यक्तिषु क्रियमाणं वाहदोहादिकमचोदितार्थोऽनुष्ठितः स्यात्, जातेश्चोपलक्षणमात्रेणाश्रयणात्। सम्बन्धग्रहणं यथा यत्रासौ काकोऽदो देवदत्तगृहमिति। पाणिनेस्तूभयम्। केवलव्यक्तिपक्षे हि सम्बन्धग्रहणासम्भवः। जातिरुपलक्षणमिति चेत्, न, तटस्थत्वाभावात्। यत्र हि सम्बन्ध[13]ग्रहणोत्तरकालं [14]शब्दार्थः प्रतीयमानः प्रातिस्विकेनाकारेण प्रतीयते, न तदाकारेणैव[15], तत्रोपलक्षणत्वम्, यथा गृहे। न हि गृहं प्रतीयमानं काकाधारमेव प्रतीयते, किं तर्हि, प्रातिस्विकेनाकारेण। इह तु गौरित्युक्ते गवाकारेण व्यक्तयः प्रतीयन्ते न खण्डादिरूपेणेति तटस्थत्वाभावान्नोपलक्षणत्वं जातेः। अस्तु तर्हि सैव वाच्या, न, व्यक्तेरपि प्रतीतेः। न खलु गौरित्युक्ते गोत्वमितिवन्निष्कृष्टा जातिः प्रतीयते, किन्त्वनियता व्यक्तिरपि, अन्यथासिद्धेरशब्दार्थत्वमिति चेत्, न, तदभावात्। स्यादेतत्, सत्यमनियता व्यक्तिः प्रतीयते, सा त्वपर्यवसानेन, न तु शब्दमहिम्ना। जातिप्रतीतिर्हि न जातिमात्रे पर्यवस्यति, किन्तु व्यक्तिमपि कवलीकरोति। यथा पञ्जरस्थं सिंहमनुभवतः सिंहप्रतीतिः पञ्जरे, तत्र ह्यन्तर्वर्त्येव सिंहः सिंहशब्दवाच्य इति जानतो बलात्पञ्जरमपि प्रतीयते, तद्वदिहापि व्यक्तिगतामेव जातिमनुभवतो जातिप्रतीतिरुत्पद्यमाना बलाद्व्यक्तिमपि गोचरयति। अतोऽन्यथासिद्धप्रतीतित्वान्न व्यक्तिः शब्दार्थ इति, तच्च नैवम्, अन्यथासिद्धेरभावात्। यदि हि जातिप्रतीतेरयं स्वभावो व्यक्तिमपि गोचरयतीति ततो गोत्वमित्यादावपि प्रसङ्गः, न हि तत्र जातिर्न प्रतीयते। स्यादेतत्, गोत्वादिशब्दैर्जातिः स्वरूपेणाभिधीयते, गवादिभिस्तु व्यक्तिपरतन्त्रा, अतः प्रतीतिवैषम्यमिति? नैवम्। व्यक्तिपरतन्त्रेत्यपि जातिरेव चेदुच्यते, ततो गोत्वगोशब्दयोरविशेषापत्तिः, तत्त्वान्तरं चेज्जातिरेव वाच्येति क्षतम्, पारतन्त्र्यस्यापि वाच्यत्वात्। न चानभिधाय व्यक्तिं तत्पारतन्त्र्यमभिधातुं शक्यमिति व्यक्तेरपि वाच्यत्वप्रसङ्गः। न च वाच्यम् गङ्गायां घोषः इति-

1. ग्रहणमित्युक्तम् 2. अयं च 3. लोपो इत्यधिकम् 4. दोषं समुद्भावयितुकाम आह 5. अतः 6. न 7. इत्येतस्मिन् 8. तस्मिंश्च 9. अपि नास्ति 10. जातिपदार्थाश्रयणेन 11. इत्यर्थः 12. निरपेक्षः 13. लक्षणोत्तरकालं 14. शब्दादाकारार्थः 15. एव नास्ति।

वल्लक्षणया व्यक्तिः प्रतीयते इति, शब्दान्तरसन्निधानमन्तरेणापि नियमेन प्रतीयमानत्वात्, तर्हि लाक्षणिकोऽर्थ एवं प्रतीयते। अतश्शब्दमहिम्नैव जातिर्व्यक्तिश्च प्रतीयत इत्युभयं शब्दार्थः। तत्र क्वचित्किञ्चित्तात्पर्येणोच्यते, किञ्चिन्नान्तरीयकतया। दृष्टं चैकशब्दवाच्येष्वपि कुत्रचित्तात्पर्यम्, कस्यचिन्नान्तरीयकत्वम्, यथा ग्रहं संमार्ष्टीति कर्मत्वं विवक्षितम्, एकत्वमविवक्षितम्, तद्वदिह 'यरोऽनुनासिकेऽनुनासिको वा' (८.४.४५) इत्यत्र लक्षणानुरोधादाकृतिः प्राधान्येनाश्रीयते, तस्या एकत्वाच्छास्त्रमपि सकृदेव प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या। यद्येवम्, कथं समुदाये प्रवर्तते? उच्यते। जातेः स्थानित्वमादेशत्वं निमित्तत्वमित्यादयो धर्मा व्यक्तिद्वारकाः, तेन जातौ प्रवर्तमानास्तद्वतीषु व्यक्तिषु प्रवर्तन्ते। न च व्यक्तयस्तेन तेन प्रातिस्विकेनाकारेण प्रतीयन्ते, किन्त्वेकजातिरूषिता इति। एष समुदायार्थः। समुदाये प्रवर्तमानं कथं प्रवर्तते, किमविशेषेण? न, इत्याह—यरोऽनुनासिक इत्यादि। येयमस्य सकृत्प्रवृत्तिस्तत्रान्तरतमपरिभाषापि एकवाक्यतामापद्यत इत्यर्थः। ततः किमित्यत आह—तदनेन इति। गकारादीनामिति वर्गतृतीयानाम्। ङकारादय इति वर्गपञ्चमाः। यथास्वमिति यो यस्य वर्ग्यः स तस्येत्यर्थः। स्थानतो गुणतश्चेति तृतीयान्तात्तसिः। स्थानानि गुणाश्च 'तुल्यास्यप्रयत्नम्' (१.१.९) इत्यत्र वक्ष्यामः। ये तु न स्थानतो नापि गुणत इति अन्तरतमा इत्यपेक्ष्यते। ते सर्वे निर्वर्तिता इति वक्ष्यमाणेन सम्बन्धः। के पुनस्ते? गजडानां सानुनासिका यवलाः। स्थानमात्रेण गुणमात्रेण वेत्यत्राप्यन्तरतमा इत्यपेक्ष्यते, पूर्ववच्च सम्बन्धः। तत्र स्थानमात्रेणान्तरतमा जदवानां यलवाः सानुनासिकाः, गुणमात्रेण त्वन्तरतमास्तृतीयानामन्यवर्गीयाः पञ्चमाः। इतिकरणो हेतौ। यस्मादेव स्थानगुणाभ्यामन्तरतमा एव विहिताः, अन्ये सर्वे निर्वर्तितास्तस्मात्स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति। द्विर्वचनेऽपि इति। एवं परिहार इति शेषः। रेफस्येत्यादिना यर्कार्यस्य द्विर्वचनस्य सहेतुकां प्राप्तिमनूद्य परिहरति—नत् इत्यादि। रेफस्य द्विर्वचनं प्रति निमित्तभावः। साक्षाच्छिष्टः प्रत्यक्षशिष्टः। 'रहाभ्याम्' इति द्विर्वचनं तु यरन्तर्भावादनुमितम्, प्रत्यक्षानुमितयोश्च प्रत्यक्षं बलीयः, तद्यथा ब्राह्मणा भोज्यन्ताम् माठरकौण्डिन्यौ परिवेविषातामिति परिवेषणसाधनत्वेन भुजिसाधनत्वं बाध्यते। यद्येवम्, 'इको यणचि' (६.१.७७) इत्यस्मिन्निर्देशेऽजिति निमित्तभावं प्रत्यनुमीयमाना इकः कार्ययोगं प्रति साक्षाच्छिष्टा इति दध्युदकादिषु बाधितव्यो निमित्तभावः? न। तत्र व्यक्तेः प्राधान्येनाश्रयणात्। व्यक्तिप्राधान्ये हि प्रतिलक्ष्यमसकृल्लक्षणं प्रवर्तते, प्रतिलक्ष्यं वा भिन्नानि लक्षणानि, तेषां सर्वेषां तन्त्रोच्चारणम् 'इको यणचि' (६.१.७७) इति। ततश्चेकामपि निमित्तभावं प्रत्यपि तात्पर्येण निर्देशात्तत्रापि यण् भविष्यति, इतरथा तद्विषयं लक्षणं व्यर्थं स्यात्। जातिनिर्देशेषु क्वचिदपि व्यक्तौ प्रवृत्ते जातौ प्रवृत्तमेवेति विशेषः। अनुस्वारस्य इत्यादि। न केवलं 'यरोऽनुनासिकेऽनुनासिको वा' (८.४.४५) इत्येतदेवान्तरतमे सकृदेव प्रवर्तमानं विदधाति, अपि तु 'अनुस्वारस्य ययि परसवर्णः' (८.४.५८) इत्येतदपीत्यपिशब्दार्थः। ततः किमित्यत आह—न च इत्यादि। रेफस्य सवर्णोऽस्तीति सम्बन्धः। किंविशिष्टो नास्तीत्याह—अनुस्वारान्तरतम इति। रेफस्य हि रेफ एव तुल्यस्थानप्रयत्नः, स चानुस्वारान्तरतमो न भवति। यत्र वा अनुस्वारान्तरतमाः परसवर्णास्सन्ति अङ्कितः कुण्डित इत्यादौ, तत्र चरितार्थं वचनम्। अटां मध्ये इति। नन्वनुस्वारस्याप्युपदेशः कर्तव्यः, प्रेङ्खणमित्यादौ णत्वं यथा स्यात्। न च परसवर्णे कृते 'कवर्गव्यवाये' इति णत्वसिद्धिः, तस्यासिद्धत्वात्। एवं तर्हि 'नुम्व्यवाये' इति णत्वं भविष्यति। यदि 'नुम्व्यवाये' इत्युच्यते, प्रेन्वनमित्यत्रापि प्राप्नोति, इह च न स्यात् प्रोम्भणमिति, अनुस्थानिकत्वात्। नैष दोषः। नुम्ग्रहणमनुस्वारोपलक्षणार्थं तत्र। यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदिति कालोपलक्षणे दिवा नक्षत्रदर्शनेऽपि न भवति, रात्रावदर्शनेऽपि भवति, एवमिहापि सत्यपि नुम्यनुस्वाराभावे न भवति, असत्यपि नुम्यनुस्वारे सति भविष्यति।

इह केचिदुब्जिमुपध्मानीयोपधं पठन्ति, तेषामुब्जितेत्यादौ जश्त्वं यथा स्यादिति झल्ष्वप्युपदेशः कर्तव्यः। वृत्तिकारस्तु दकारोपधं मन्यते, अभ्युद्गः समुद्ग इति यथा स्यात्। 'भुजन्युब्जौ पाण्युपतापयोः' (७.३.६१) इति च कुत्वाभावे निपात्यमाने बकारोच्चारणं लिङ्गम्, उब्जेरकुत्वविषये दकारस्य बकारविधायि वचनमस्तीति। तच्च 'स्तोः श्चुना श्चुः' (८.४.४०) इत्यस्यानन्तरं कल्प्यते, 'उद्जेर्दस्य बः' इति, उद्जेर्दकारस्य श्चुना योगे बकारो भवतीत्यर्थः। 'स्तोः श्चुना' इत्युपजीवनार्थं चात्रैवास्य कल्पनं युक्तम्, अन्यथा बहुतरं कल्प्यं स्यात्। बत्वस्यासिद्धत्वादुब्जिजीषतीत्यत्र 'न न्द्राः' (६.१.३) इति प्रतिषेधसिद्धिरिति। नन्वनुस्वारविसर्जनीययोः शर्युपदेशः कर्तव्यः, सर्पींषि, सर्पिष्षु अत्र

'शर्व्यवाये' इति षत्वं यथा स्यात्। मा भूदेवम्, 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति भविष्यति। तत्र चावश्यं नुम्ग्रहणमेव कर्तव्यम्, नुम्स्थानिकेनैवानुस्वारेण व्यवाये यथा स्यात्, पुंस्वित्यादौ मा भूदिति। तस्मात्सुष्ठूक्तमटां मध्य इति। उरःकेण इति। नायमज्ञातादौ कप्रत्ययः, 'सोऽपदादौ' (८.३.३८) इति सत्वप्रसङ्गात्, किं तर्हि, उरः कायतीति 'आतोऽनुसर्गे कः'। (३.२.३)। उरःपेण इति। 'पा रक्षणे' (धा. पा. १०५७)। उभयत्र 'कुप्वोः ≍क ≍पौ च (८.३.३७) इति यथायथं विसर्जनीयजिह्वामूलीयोपध्मानीयेषु कृत्येषु तद्व्यवाये णत्वं भवति।

## ६. ल ण्

लण्। अयं णकारो द्विरनुबध्यते पूर्वश्च परश्च। तत्रेण्ग्रहणान्यण्ग्रहणानि च प्रत्यासत्तेः पूर्वेणैव वा स्युः, भूयसामनुग्रहाय परेणैव वा इति संशये निर्णयमाह—इण्ग्रहणानि इत्यादि। तत्र न यथा सर्वाणीण्ग्रहणानि पूर्वेण तथा पूर्वमेव प्रतिपादितम्। अण्ग्रहणानि च पञ्च—'उरण् रपरः' (१.१.४१), 'अणुदित्सवर्णस्य चाप्रत्ययः' (१.१.६९), 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६.३.१११), 'केऽणः' (७.४.१३), 'अणोऽप्रगृह्यस्य' (८.४.५७) इति। तत्र 'उरण् रपरः' (१.१.५१) इति यदि परेण स्यात् कृतम्, प्रकृतम्, नॄः पाहि, मातृणामित्यादावाद्युदात्तानुदात्तस्वरितानुनासिक-दीर्घा रपराः स्युः, कर्ता, कारक इत्यादौ च गुणवृद्ध्योः प्राप्तयोरेचोरवर्णस्य च रपरत्वादान्तर्यविशेषात्सर्व एव स्युः 'इको यणचि' (६.१.७७)—कर्त्रर्थम्, रपरत्वे द्वयो रेफयोः श्रवणं स्यात्। नैष दोषः। 'ऋत इद्धातोः' (७.१.१००) इति धातुग्रहणं ज्ञापकं पूर्वेणेति। तद्धि मातॄणामित्यादौ मा भूदिति परेण च ग्रहणे 'नामि' (६.४.३) इति दीर्घे रपरे कृतेऽनृकारान्तत्वादेव न भविष्यतीति तद्व्यर्थं स्यात्। न च वाच्यं चिकीर्षतीत्यत्र 'अज्झनगमां सनि' (६.४.१६) इति दीर्घे रपरे सति 'उपधायाश्च' (७.१.१०१) इतीत्वमेषितव्यं तद्वन्मातॄणामित्यादावपि स्यादित्युत्तरार्थं धातुग्रहणमिति, तथा हि सति तत्रैव कर्तव्यं स्यात्। ढ्रलोपे (६.३.१११) इत्यत्रापि हलामणामसम्भवादचां तु विशेषाभावादगर्थमेवाण्-ग्रहणं स्यात्। ततश्च 'अचश्च' (१.२.२८) इत्येव सिद्धमित्यण्सामर्थ्यात् पूर्वेण। ननु 'वृह उद्यमने' (धा. पा. १३७३) इत्यस्मात्तृच्युदित्वादिडभावे, गुणे, ढत्वधत्वष्टुत्वढलोपेषु कृतेषु, रेफस्य दीर्घे ऋकारे, ढ्रलोपस्यासिद्धत्वात् 'उपधायाश्च' (७.१.१०१) इतीत्वे, पूर्वेण च गुणे, वेढेति यथा स्यादित्येवमर्थमण्ग्रहणं स्यात्। यत्तर्हि तृतीये निर्दिशति, तज्ज्ञापयति पूर्वेणेति। अन्यथा 'हलः' (६.४.२) इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्तेस्त्रेः संप्रसारणे दीर्घः स्यात्। 'केऽणः' (७.४.१३) इत्यत्र परेणाण्ग्रहणे गोका, नौका, उपानत्का, गीष्का, धूष्का, चतुष्कमिति घत्वविसर्जनीययोरसिद्धत्वात् [1]ह्रस्वप्रसङ्गः। एवं तर्हि ह्रस्वश्रुत्या 'अचश्च' (१.२.२८) इत्युपस्थापितस्याबाधाय पूर्वेण भविष्यति। अबाधेनापि [2]ह्युपपत्तौ सत्यां बाधो न न्याय्यः। 'अणोऽप्रगृह्यस्य' (८.४.५७) इत्यत्र परेण सति कर्तृ, अग्ने, वायो, पचै, पपौ, मालामाचक्षाणो माल्, [3]वृक्षवयतेरप्रत्ययः वृक्षव्, [4]अत्रापि प्राप्नोति। एवं तर्हि 'अप्रगृह्यस्य' इति पर्युदासेनाच एवानुनासिको युक्तः। न चाण्ग्रहणसामर्थ्यान्निवियुक्तन्यायस्य बाधः, तस्य पूर्वेणाप्युपपन्नत्वात्। अतः सुष्ठूक्तम् अण्ग्रहणानि सर्वाणि पूर्वेण इति। अस्यापवादः 'अणुदित्सवर्णस्य चाप्रत्ययः' (१.१.६९) [5]इत्येतदेवैकम्परेण इति। यद्यत्र पूर्वेण स्यात् 'उरण् रपरः' (१.१.५१) इत्यत्र उरित्यनेन ऋकारस्याग्रहणात् 'ऋत इद्धातोः' (७.१.१००) रपरो न स्यात्, ऊकालोऽज्झ् (१.२.२७) इत्यत्रैज्भिस्त्रिमात्राणामग्रहणात् प्लुतसञ्ज्ञापि[6] न स्यात्, अत एतदेकं परेण। अत्र च ज्ञापकम् 'उरृत्' (७.४.७) इति तपरकरणम्। तद्धि 'कृत संशब्दने' (धा. पा. १६५४) इत्येतस्माच्चुरादिणिजन्ताल्लुङि चङि अचीकृतदित्यत्र ऋकारस्य स्थानिन ऋकार एव यथा स्यादित्येवमर्थम्। न च पूर्वेण ग्रहणे ऋकारस्य स्थानित्वमादेशत्वं वा प्रसक्तमित्यनर्थकं तत्स्यात्। ननु [7]परेणापि ग्रहणे उर् इत्यनेन स्थानिना दीर्घस्य ग्रहणे सत्यपि ऋदित्यनेन भाव्यमानत्वादृकारस्य[8] [9]स्थानित्वमादेशत्वं वाऽप्रसक्तमित्यनर्थकम्? उच्यते। असति तपरकरणे [10]भाव्यमानत्वस्यैवासिद्धिः, तथा हि अपूर्व-

1. ह्रस्वत्वप्रसङ्गः 2. हि नास्ति 3. वृक्षयवते 4. इति इत्यधिकम् 5. इत्येतदेकमनेनेति 6. अपि नास्ति 7. च इत्यधिकम 8. ग्रहणादनर्थकमेव तपरकरणम् इत्यधिकम् 9. स्थानित्व-मत्यनर्थकम् नास्ति 10. भाव्यमानस्यैव

निष्पत्तेः प्राप्तस्यान्येन बाधितस्य प्रतिप्रसवे च तस्य लाघवं भवतीति अचीकृतत्, अवीवृतत्, अमीमृजदित्यत्र इररार्भिन्नं वर्णस्य विनाशे प्राप्ते स्वरूपमेवावस्थितमभ्यनुज्ञायते । सम्भवति च [1]स्वरूपाभ्यनुज्ञानं सवर्णग्रहणे सतीति स्वरूपाभ्यनुज्ञानार्थमेव सवर्णग्रहणं स्यात् । सति तु तपरकरणे सवर्णग्रहणाभावात् स्वरूपाभ्यनुज्ञानासम्भवादपूर्वविधिरेव सम्पद्यत इति भाव्यमानत्वसिद्धये कर्तव्यं तपरकरणमिति ज्ञापकमेव ।

अथ किमर्थम् इति । एवं हि सन्देह एव न भवतीति भावः । अन्तःस्थानामपि हि [2]सवर्णानां ग्रहणमिष्यत इति । अन्तस्थाः द्विप्रभेदाः रेफवर्जिता यवलाः सानुनासिकाः निरनुनासिकाश्च । तत्राक्षरसमाम्नाये निरनुनासिकाः पठ्यन्ते, ततश्च सय्यँन्ता इत्यदावान्तरतम्यात्सानुनासिकेषु यकारादिषु परसवर्णेष्वनुस्वारस्य कृतेषु तेषां प्रत्याहारेऽनुपदेशाद्यत्वं नास्तीति 'अनचि च' (८.४.४७) इति द्विर्वचनं न स्यात् । अण्ग्रहणे तु सति सवर्णग्रहणेन तेषामपि यत्वात् सिद्ध्यति । अथ सानुनासिका उपदिश्येरन्, ततो निरनुनासिकेषु तेषु परसवर्ण एव न स्यात्, ययां मध्ये तेषामसंनिवेशात् ।

हकारादिषु इत्यादि । ऋकारऌकारयोः सवर्णसञ्ज्ञाया उपसङ्ख्यानात् ऋकारः ऌकारमपि गृह्णाति, [3]ततश्च 'उरण् रपरः' (१.१.५१) इति ऌकारस्याप्यण् रपरः स्यात्, लपरश्चेष्यते, तस्मादनुनासिकः प्रतिज्ञायते । तेन ऋकारस्याण् रपरः, ऌकारस्य तु लपर इति तवल्कार इति सिद्धं भवतीति । किं पुनरिमे वर्णा उत्सन्ना यदनुवद्धोऽपि पुनर्णकार एवानुबध्यते, यत एवमण्ग्रहणेषु इण्ग्रहणेषु सन्देहो भवति ? सत्यमेतत् । ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' (व्या. प. ७५) इति ।

## ७. ञ म ङ ण न म् ।

ञ म ङ ण न म् । 'सृजिदृशोर्झल्यमकिति' (६.१.५८) इति न प्रत्याहारः, 'साक्षाद्द्रष्टरि' (५.२.९१) इति निर्देशात्, भाव्यमानत्वाच्च । एवमेव 'स्वौजसमौट्', (४.१.२), 'तस्थस्थमिपां तान्तामः' (३.४.१०१), 'इच एकाचोऽम्' (६.३.६८), इत्यत्रापि 'अम्शसोः' (६.४.८०) इति शस्साहचर्यात् 'अमि पूर्वः' (६.१.१०७) इति सुबधिकारात् । 'तृणह इम्' (७.३.९२) इति न प्रत्याहारः, 'ब्रुव ईट्' (७.३.९३), 'अड् गार्ग्यगालवयोः' (७.३.९९) इत्यागमसाहचर्यात्, भाव्यमानत्वाच्च । अत एव 'वच उम्' (७.४.२०) इति न प्रत्याहारः 'भ्रस्जोरोपधयोः' (६.४.४७) इत्यपि न प्रत्याहारः, व्याख्यानाद् भाव्यमानत्वाच्च । ञकारेणापि ग्रहणमस्य दृश्यत इति । यद्येवम्, कथं त्रिभिः इति पूर्वमुक्तम् ? अष्टाध्यायीगतग्रहणाभिप्रायं तत् । अत एव 'यमिर्ञमन्तेषु' (का. ८००) इत्यत्रापि दृश्यते ।

केचित् [4]तु इत्यादि । यान्येतान्यनन्तरोक्तानि प्रत्याहारग्रहणानि तानि 'पुमः खय्यम्परे', (८.३.६), 'हलो यमां यमि लोपः' (८.४.६४), 'ङमो ह्रस्वादचि ङमुण्नित्यम्' (८.३.३२) इत्येवं ञकारेणैव भवत्विति निश्चित्य केचिदाचार्या मकारानुवर्त्यं प्रत्याचक्षते । तत्र दोषमाह—तथा च इति । 'पुमः खय्यम्परे' (८.३.६) इत्यत्र तु झकारभकारपरस्य [5]च खयोऽसम्भवाददोषः । 'हलो यमां यमि लोपः' (८.४.६४) इत्यत्रापि झकारभकारयोः परतो हल उत्तरयोर्झकारभकारयोरसम्भवः । सम्भवेऽपि वा 'झरो झरि' (८.४.६५) इति लोपः । आगमिनोर्झभोरभावात् इति लभेरुज्झेश्च क्विपि सम्भव इति चेत्, न । उज्झेः संयोगान्तलोपाल्लभेर्जश्त्वविधानात् । प्रतिपत्तिगौरवम् इति । यद्यागमिनोरभावस्तर्हि त्रय आगमिनः पञ्चागमाः, वैषम्यात्सङ्ख्यातानुदेशो न स्यात् ? नैष दोषः । यथासङ्ख्यम् (१.३.१०) इत्यत्र प्रमितिदशायां निर्देशगतसङ्ख्यासाम्यमाश्रीयते, न त्वनुष्ठानसमये प्रयोगगतमिति चोद्यपरिहारयोः क्रियमाणयोः प्रतिपत्तिगौरवं भवतीत्यर्थः ।

---

1. स्वरूपस्याभ्यनुज्ञानं 2. वर्णानां 3. इत्यतः 4. तु नास्ति 5. च नास्ति

## ८. झ भ ञ् ।

झ भ ञ् । 'उत्सादिभ्योऽञ्' (४.१.८६), 'अत इञ्' (४.१.९५) 'गर्गादिभ्यो यञ्' (४.१.१०५) [1]इत्येवमादौ न प्रत्याहारः, भाव्यमानत्वात्, अनभिधानाच्च । 'उञि च पदे' (८.३.२१) इत्यत्र न प्रत्याहारः, पदेन विशेषणात् ।

## ९. घ ढ ध ष् ।

घ ढ ध ष् । 'लषपतपद' (३.२.१५४) इति न प्रत्याहारः, अकारोच्चारणाद्धातुसाहचर्याद्वा ।

## १०. ज ब ग ड द श् ।

ज ब ग ड द श् । 'एतदोऽश्', 'इदम इश्' (५.३.३), 'एशिरेच्' इति न प्रत्याहारः, भाव्यमानत्वात्, "मस्जिनशोः' (७.१.६०) इति[2] मस्जिसाहचर्यात् ।

## ११. ख फ छ ठ थ च ट त व् ।

ख फ छ ठ थ च ट त व् । 'एचोऽयवायावः' (६.१.७८) इत्यत्राकारस्यासंनिवेशादाविति न प्रत्याहारः, तत्साहचर्यादवित्यपि । ननु छकारेणैवास्य ग्रहणम्, न च खफौ तत्रान्तर्भूतौ, तत्किमर्थं तयोर्ग्रहणमित्याह—खफग्रहणम् इति । उत्तरैरनुबन्धैः 'अनुस्वारस्य ययि परसवर्णः' (८.४.५८), 'पुमः खय्यम्परे' (८.३.६) इत्यादौ प्रत्याहारे तयोर्ग्रहणं यथा स्यादित्येवमर्थमित्यर्थः ।

## १२. क प य् ।

क प य् । 'एचोऽयवायावः (६.१.७८) इत्यत्राकारस्यासन्निवेशादायिति न प्रत्याहारः, तत्साहचर्यादयित्यपि ।

## १३. श ष स र् ।

श ष स र् । इरितां धातूनामुपदेशसामर्थ्यात् 'इरितो वा' (३.१.५७) इति न प्रत्याहारः । प्रियस्थिरादि-सूत्रे (६.४.१५७) वरिति न प्रत्याहारः, भाव्यमानत्वात्, प्रादिसाहचर्याद्वा ।

## १४. ह ल् ।

ह ल् । इहान्येषां वर्णानां सकृदुपदेशः, हकारस्तु द्विरुपदिश्यते, तत्र द्वितीयोपदेशस्य प्रयोजनं पृच्छति—अथ इति । स्निहित्वा इति । 'ष्णिह प्रीतौ' (धा. पा. १२०१) । अलिक्षदिति । 'लिह आस्वादने' (धा. पा. १०१७), लुङ्, क्सः, 'हो ढः' (८.२.३१), 'षढोः कः सि' (८.२.४१) । रुदिहि स्वपिहि इति । 'रुदिर् अश्रुविमोचने' (धा. पा. १०६८), 'ञिष्वप् शये' (धा. पा. १०६९) [3]अदादी, लोट्, सिप्, सेर्हिः । अदाग्धाम् इति । लुङि तसस्ताम्, 'च्लेः सिच्' (३.१.४४), वदव्रज (७.२.३) इति वृद्धिः, 'दादेर्धातोर्घः' (८.२.३२), तस्यासिद्धत्वाद्धकाराश्रयः सिचो लोपः, 'झषस्तथोर्धोऽधः' (८.४.२०) ।

एवं परोपदेशस्य [4]प्रयोजनानि [5]दर्शयित्वा पूर्वोपदेशस्य प्रयोजनं दर्शयितुं पृच्छति—हयवरट् इत्यत्र इति । महाँ हि स इति । महान् हि स इति स्थिते 'दीर्घादटि समानपदे' (८.३.९) इति रुः, 'आतोऽटि नित्यम्' (८.३.३) इत्यनुनासिकः, 'भोभगोअघोअपूर्वस्य' (८.३.१७) इति यत्वम्, 'हलि सर्वेषाम्' (८.३.२२) इति यलोपः । अत्राशी-

1. इति न 2. न प्रत्याहारः इत्यधिकम् 3. अदादी नास्ति 4. प्रयोजनं 5. निदर्शयित्वा

त्यनुवर्तते। ब्राह्मणो हसति। ब्राह्मणशब्दात्सो रुः, 'हशि च' (६.१.११४) इत्युत्वम्, गुणः। उपलक्षणं चैतत् प्रयोजनानाम्। तेन 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' (८.३.७८), 'विभाषेटः' (८.३.७९) इति मूर्धन्यविकल्पोऽपि प्रयोजनम्। लिलिहिढ्वे, लिलिहिध्वे।

णकारादीनामनुबन्धानां यावद्भिर्ग्रहणमिष्यते, [1]तानार्यया दर्शयति—एकस्मात् इत्यादि। परे ग्राह्या इति शेषः। स्युरिति वक्ष्यमाणेन सम्बन्धः। एङ्, यञ्, अण्, छव, अडिति। एकस्मादेकारादेः परे ङकारादयो ग्राह्याः स्युः। एवमुत्तरत्राप्यर्थो वेदितव्यः। द्वाभ्यां षः। झष्, भष्। त्रिभ्य एव कणमाः। अक्, इक्, उक्। अण्, इण्, यण्। अम्, यम्, ङम्। ञेयौ चयौ चतुर्भ्यः। अच, इच्, एच्, ऐच्। यय्, मय्, झय्, खय्। रः पञ्चभ्यः। यर्, झर्, खर्, चर्, शर्। शलौ षड्भ्यः। अश्, हश्, वश्, झश्, जश्, बश्। अल्, हल्, वल्, रल्, झल्, शल् इति।

इति प्रत्याहारप्रकरणम्

## १. वृद्धिरादैच्।

वृद्धिरादैच्। त्रिपदमिदं सूत्रम्, वृद्धिः, आत्, ऐच् इति। अत्र चाकारः प्रयोगस्थैराकारैरर्थवान्, जात्यभिप्रायं चैकवचनम्। ऐच्छब्दस्तु ऐकारौकाराभ्याम्, संज्ञिनोर्द्वित्वेऽपि द्विवचनं न भवति, द्वयोरप्येकशब्दरूपरूषितत्वेनैक्यमापन्नयोरिवाभिधानात्। एवं सर्वेषु [2]एव प्रत्याहारेष्वेकवचनं द्रष्टव्यम्। समाहारद्वन्द्वो वा आदैजिति। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' (५.४.१०६) इति समासान्तस्तु न भवति, समासान्तविधेरनित्यत्वात्। अनित्यत्वं च 'द्वित्रिभ्यां ष मूर्ध्नः' (५.४.११५) इति षप्रत्ययान्तत्वान्मूर्धेष्विति निर्देश्यं स्यात्। आदैच्छब्दात्समासत्वादर्थवत्त्वाद्वा विभक्त्युत्पत्तौ 'चोः कुः' (८.२.३०) पदस्येति कुत्वं प्राप्तम्, अयस्मयादित्वेन (१.४.२०) भत्वान्न [3]हि [4]भविष्यति, छन्दोवत्सूत्राणि भवन्ति[5]। वृद्धिशब्दस्य त्रयी शब्दानां प्रवृत्तिरिति पक्षे 'वृधु वृद्धौ' (धा. पा. ७५९) इत्यस्माद्भावे क्तिनि व्युत्पत्तिः, अभेदोपचाराच्च[6] वृद्धियुक्तेष्वादैक्षु वृत्तिः। न चैवं लक्षणयैवादैक्षु वृद्धिशब्दस्य [7]वृत्तिसिद्धेः सूत्रस्यानर्थक्यम्, [8]नियमार्थत्वात्। अन्यथा वर्धनक्रियायोगिष्विकारादिषु प्लुतेषु च [9]वर्तेत। मा तत्र वर्तिष्ट, आदैक्ष्वेव वर्ततामिति नियमः। चतुष्टयीपक्षे तु कथम्, [10]यावतश्च सञ्ज्ञात्वेन [11]विनियुक्ते सति 'सिचि वृद्धिः' (७.२.१) इत्यादौ प्रदेशान्तर एव वृद्धिशब्दस्यादैक्षु प्रवृत्तिर्युक्ता, न त्वत्रैव सञ्ज्ञा[12]विनियुक्तिकाले ? उच्यते। नित्यः शब्दार्थसम्बन्धः इति दर्शनेन क्वचिदपि पुरुषव्यापारात्प्राक् अवाचकः सन् पुरुषव्यापारेण वाचकः क्रियते। अतः सर्वे शब्दाः सञ्ज्ञारूपेण सर्वानर्थान् प्रतिपादयितुं समर्थाः। तत्रानियतार्थेन व्यवहारासिद्धेर्नियमार्थं एव पुरुषव्यापारः, मया प्रयुक्तस्य वृद्धिशब्दस्यादैजर्थं इति। एवं तावत्पदार्थो व्याख्यातः।

वाक्यविषयाः पुनरष्टौ विकल्पाः, अनर्थकम्, साध्वनुशासनम्, प्रयोगनियमार्थम्, आदेशार्थम्, आगमार्थम्, विशेषणार्थम्, तद्गुणाध्यारोपार्थम्, [13]सञ्ज्ञार्थमिति। [14]तत्रानर्थकाभिधानं प्रमादाश्रयदोषादनवधानावशक्तेर्वा भवति। न चैतच्चतुष्टयं भगवतः सम्भवति, आचार्यो हि [15]दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख आसीनो मङ्गलपूर्वकं महता प्रणिधानेन सूत्राणि प्रणीतवान्। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण। साध्वनुशासनमपि न भवति, सिद्धत्वाद्वृद्धिशब्दस्य क्तिन्नन्तत्वात्, आदैच्छब्दस्य चार्थवत्त्वात्। ननु छन्दोवद्भावेन सूत्र एव प्रयोगः सिध्यति, सूत्राद्बहिरपि कुत्वाभावार्थं निपातनमेतत् स्यात् ? उच्यते। वृद्धिशब्दस्यैवमनन्वयप्रसङ्गः, सम्भूयकारित्वं च पदानां व्युत्पत्तिसिद्धम्, अतो नायं पक्षः। नापि प्रयोगनियमार्थम्, यत्र हि सहप्रयोगप्रसङ्गस्तत्र नियमः कर्तव्यः, न च वृद्ध्यादैच्छब्दयोः सहप्रयोग-

---

1. तानाचार्यो 2. अपि 3. हि नास्ति 4. भवति 5. इति इत्यधिकम् 6. च नास्ति 7. प्रवृत्ति 8. नियमात् 9. प्रवर्तेत 10. यावतात्र 11. विनियोगे 12. विनियोग 13. सञ्ज्ञासञ्ज्ञिसम्बन्धार्थमिति 14. तत्र नास्ति 15. शुचिर् इत्यधिकम्।

प्रसङ्गः, विनियोगात्प्रागसम्बन्धात्, उत्तरकालं वृद्धिशब्देनैव गतत्वात्। किं च नेह प्रयोगनियम आरभ्यते। नन्वारभ्यते, 'परश्च' (३.१,२) इति? पदस्य नारभ्यते। पदस्याप्यारभ्यते 'उपसर्जनं पूर्वम्' (२.२.३०) इति? ययोरेकपद्यं नास्ति तयोर्नारभ्यते। तयोरप्यारभ्यते 'ते प्राग्धातोः' (१.४.८०), 'कृञ्चानुप्रयुज्यते लिटि' (३.३.४०) इति? नैवंविधेनोच्चारणेनारभ्यते। एवमप्यारभ्यते 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' (३.१.४१) इति? नात्र केवलः प्रयोग एव नियम्यते, किन्तु आमादिकमपि विधीयते, अतः केवलस्य प्रयोगनियमस्य साक्षादुच्चारणेन क्वचिदप्यभावान्नायं प्रयोगनियमः। आदेशार्थमपि न भवति, स्थान्यर्थाभिधानसमर्थस्यैव ह्यादेशत्वम्। न च वृद्धिशब्द आदैचाम्, ते वा तस्यार्थमभिधातुं समर्थाः। निर्देशाच्च, यदयं सिचि वृद्धिः (७.२.१) यातिवातिद्राति, रायः, नावः, इत्याह, ततो ज्ञायते, न वृद्धिशब्द आदैचाम्, ते वा तस्यादेशाः इति। अथादैच्शब्दस्य वृद्धिशब्द आदेशः कस्मान्न भवति, न ह्यत्र किञ्चिल्लिङ्गमस्ति? सत्यम्। अयं तु पक्षो न सम्भवत्येव, ऐच्छब्दो हि 'आदिरन्त्येन' (१.१.७१) इति सञ्ज्ञात्वेन विनियुक्तः, कथमस्य स्वरूपस्य ग्रहणम्, 'अशब्दसञ्ज्ञा' (१.१.६८) इति निषेधात्। एतैरेव लिङ्गैरागमार्थत्वं न भवति। षष्ठ्यभावाच्च, पूर्वौ तु ताभ्याम् इति पञ्चम्याः षष्ठ्यर्थोऽवगम्यते। टित्वादिलिङ्गाभावाच्च, न हि तद्रहितः कश्चिदागमो [1]दृष्टः। [2]विशेषणत्वमपि न भवति, असम्भवाद[3]प्रयोजनत्वाच्च। न ह्यस्ति सम्भवो वृद्धिशब्दश्चासावादैच्छब्दश्चेति[4], नापि वर्धनक्रियाऽऽदैजिति। एवं [5]विशेषणे [6]च प्रयोजनमपि[7] [8]नास्ति[9]। एतेन तद्गुणाध्यारोपोऽपि निरस्तः। यथा[10]हि सिंहो माणवक इति सिंहगुणा माणवके आरोप्यन्ते, नैवमत्र सम्भवः प्रयोजनं [11]वास्ति। अतः पारिशेष्यात्सञ्ज्ञासञ्ज्ञिसम्बन्ध एवेत्यालोच्याह—वृद्धिशब्द [12]इत्यादि। विपर्ययस्तु न भवति, वृद्धिशब्दः सञ्ज्ञी, आदैचः संज्ञेति। स [13]हि त्रिधा स्यात्, आदैजित्ययं शब्दः, आ ऐ औ इत्ययं समुदायः, ते वा प्रत्येकमिति। तत्रादैच्छब्दस्तावन्न सम्भवति, ऐजित्यस्य, सञ्ज्ञाशब्दत्वात्, स्वरूपग्रहणासम्भवात्, गौरवात्, अनावृत्तेश्च। [14]आवर्तिन्यो हि सञ्ज्ञा भवन्ति, वृद्धिःशब्दश्चावर्तते नादैच्छब्द नापि समुदायः, गौरवादनावृत्तेश्च। अस्तु तर्हि प्रत्येकम्, लाघवादावृत्तेश्च, 'अष्टन आ विभक्तौ' (७.२.८४), 'पूतक्रतोरै च' (४.१.३६), 'मनोरौ वा' (४.१.३८) इति? न। प्रयोजनमन्तरेणैकस्यानेकसञ्ज्ञाकरणस्यायुक्तत्वात्, न ह्ययं वृद्धिशब्दः [15]सहस्रेण नामभिः स्तोतव्यः। शब्देनार्थस्य सञ्ज्ञात्वं मा विज्ञायीति शब्दग्रहणम्, एतच्चार्थे[16] व्यवहारासम्भवाल्लभ्यते। तदिह वृद्धिशब्दः सञ्ज्ञात्वेन विधीयत इति समुदायेनानर्थकादिपक्षनिरासः। वृद्धिशब्द इत्यनेन विपर्ययनिरासः। वृद्धिशब्दः सञ्ज्ञा, न पुनरादैच्छब्द इति वचनव्यक्त्या शब्दग्रहणेनार्थनिरासः, वृद्धिशब्दः सञ्ज्ञा न पुनरर्थ इति। यत्र समुदायस्य कार्यमिच्छति, करोति तत्र [17]प्रयत्नम्, 'उभे अभ्यस्तम्' (६.१.५) इति। [18]तत्र [19]ह्युभेग्रहणम् समुदितप्रतिपत्त्यर्थम्। अन्वर्थां वा महतीं सञ्ज्ञां करोति, 'हलोऽनन्तराः संयोगः' (१.१.७) इति। इह तु महासञ्ज्ञाकरणं मङ्गलार्थम्। अत एव प्रथममुच्चारणम्, अन्यथा [20]हि सतः कार्यिणः कार्येण भवितव्यमिति 'अदेङ् गुणः' (१.१.२) इत्यादिवन्निर्दिश्येत। अतो यत्नाभावात्प्रत्येकमेव सञ्ज्ञा। किञ्च लौकिकप्रयोगे व्यवस्थितानामादैचां सञ्ज्ञया भवितव्यम्, न च समुदायस्य क्वचित्प्रयोगः, अतोऽसम्भवादपि प्रत्येकमेव सञ्ज्ञा। लिङ्गाच्च। किं लिङ्गम्? 'प्रस्थे वृद्धमकर्क्यादीनाम्' (६.२.८७), 'मालादीनां च' (६.२.७) इति। इदं हि मालाप्रस्थः इत्यादा[21]ववृद्धमिति पर्युदासे[22] वचनम्, अतः प्रत्येकमेव सञ्ज्ञा, तदाह—प्रत्येकम् इति।

तत्रापि त्रयः प्रकाराः, लुगादिसंज्ञावत्तद्भावितानामेव, टिसञ्ज्ञावद्धातद्भावितानामेव, अनुनासिकादिसञ्ज्ञावदुभयेषां [23]वेति। तत्र यदि तद्भावितानामेव, ये वृद्धिसञ्ज्ञया भाव्यन्ते तेषामेव स्यात्, शालीयो मालीय इति छो न स्यात्। आम्रमयम्, रैकुलमयम्, वृद्धलक्षणो मयट् न स्यात्। आम्रगुप्तायनिः, उदीचां वृद्धात् (४१.१.५७) इति फिञ्

---

1. दृश्यते 2. विशेषणार्थम् 3. अप्रयोजनात् 4. च नास्ति 5. विशेषणेन 6. च नास्ति 7. अपि नास्ति 8. न नास्ति 9. इति इत्यधिकम् 10. हि नास्ति 11. समस्ति 12. आदि नास्ति 13. हि नास्ति। 14. आवर्तियो.. गौरवादनावृत्तेश्च नास्ति 15. सहस्रैर् 16. अर्थेन 17. यत्नम् 18. अत्र 19. हि नास्ति 20. हि नास्ति 21. अवृद्धमिति नास्ति 22. प्राप्ते इत्यधिकम 23. चेति

न स्यात् । अथातद्भावितानामेव, गार्गीयः 'ऐतिकायनीयः' औपगवीयः छो न स्यात् । अतो दोषदर्शनादगृह्यमाणविशेषत्वाच्चोभयेषां सञ्ज्ञेत्याह—सामान्येन इति । आकारोऽनण्त्वादेव न भिन्नकालानां ग्राहक इति न तन्निवृत्त्यर्थं [1]तपरत्वम्, नापि गुणान्तरयुक्तानां ग्रहणार्थम्, अभेदकत्वाच्च[2] गुणानाम् । लोके हि मुण्डेनापि चौर्ये कृते[3] सञ्जातकेशोऽपि प्रत्यभिज्ञाय निगृह्यते । [4]तथा 'अडुदात्तः' इत्युदात्तवचनं लिङ्गम्, अन्यथा ह्युदात्तगुणमेवाटमुच्चारयेत् । अतोऽनर्थकं तपरकरणमि[5]त्यत आह—[6]तपकरणम् इति । तश्चासौ परश्च तपरः, [7]तस्य करणमुच्चारणम्, आकारात्परस्य तकारस्योच्चारणमित्यर्थः । अथ वा तः परो यस्मादिति तद्गुणसंविज्ञानो बहुव्रीहिः, तकारसहितस्याकारस्योच्चारणमित्यर्थः । ऐजर्थम् इति । ऐचोरर्थः प्रयोजनं यस्य तत्तथोक्तम् । 'तपरस्तत्कालस्य' (१.१.७०) इत्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः, तत्कथं तपकरणमैजर्थमित्याशङ्क्य पञ्चमीसमासोऽपि तत्राश्रित इति दर्शयति—तादपि पर [8]इति । इतिकरणो हेतौ, यस्मात् तादपि [9]परस्तस्मादैजर्थ इति । ऐजर्थत्वमेव प्रकटयति । खट्वैलका दिषु इति । असति तपरकरणे त्रिमात्रचतुर्मात्रयोरप्यैचोः सवर्णग्रहणेन ग्रहणात् वृद्धिसञ्ज्ञा स्यात्, ततश्च वृक्षैलका, वृक्षौदनः खट्वैलका, [10]खट्वौदन इति त्रिमात्रचतुर्मात्रस्थानिनोस्त्रिमात्रचतुर्मात्रावेवैकारौकारौ स्यातामिति तन्निवृत्त्यर्थं तपरकरणम् । आश्वलायन इत्यादीनि तद्भावितानामाकारादीनां क्रमेण रूपोदाहरणानि । [11]अश्वलैतिकशब्दौ नडादौ (४.१.९९) । उपमन्युशब्दो बिदादिः (४.१.१०४) । लक्षणस्य बहुविषयत्वसूचनार्थं चतुर्थस्यो[12]दाहरणस्योपन्यासः । आकारस्यातद्भावितस्य कार्योदाहरणमाह—शालीयः, मालीयः इति । ऐकारौकारयो[13]स्त्वतद्भावितयोरु[14]दाहरणं रैकुलमयम्, नौकुलमयमिति[15], वृद्धलक्षणो मयड् भवति ॥

## २. अदेङ् गुणः ।

अदेङ् गुणः । पूर्वेण तुल्यमेतत् । तपरकरण त्विह सर्वार्थम् इति । न तु पूर्ववदन्यतरार्थमिति तुशब्दस्यार्थः । असति हि तस्मिन् दीर्घप्लुतयोरपि गुणसञ्ज्ञा स्यात्, ततश्च तरतीति कदाचिदकारः स्यात् कदाचिदाकारः, रपरत्वे कृते एकस्याध्यर्धमात्रत्वादपरस्यार्धतृतीयमात्रत्वात् । न चाकारस्य वृद्धिसञ्ज्ञा बाधिका, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञासमावेशात् । एङश्च त्रिमात्रचतुर्मात्रस्य गुणसञ्ज्ञायाम्, [16]रथेषा, खट्वेषा, अश्वोढः, वडवोढ इति त्रिमात्रचतुर्मात्रौ स्याताम् । तरितेत्यादीनि तद्भावितानामदेङां क्रमेण रूपोदाहरणानि । पचन्ति, [17]जयन्तीत्यकारस्य कार्योदाहरणे । अत्रान्त्याकारे परतः शबकारस्य 'अतो गुणे' (६.१.९७) इति पररूपं भवति । एकारस्यातद्भावितस्योदाहरणम् अहं पचे इति । ओकारस्य तु न सम्भवति ॥

## ३. इको गुणवृद्धी ।

इको गुणवृद्धी । परिभाषेयम् इति । नाधिकारः, अस्वरितत्वात् असंयुज्यनिर्देशाच्च । अधिकारे हि, 'इको गुणवृद्धी न धातुलोपः'[18] इति संयुज्यैव निर्दिशेत् । नापि विधिः, 'इकः स्थाने गुणवृद्धी भवतः' इति लक्षणान्तरेण विधास्यमानत्वात् । ननु यदायं स्वतन्त्रो विधिस्तदा तेष्विक इत्यस्योपस्थापकाभावात् यातेत्यादावनिकोऽपि विधिः स्यात्, इह तु [19]सार्वधातुकाद्यभावेऽपि दधि मध्वित्यादौ विधिरस्तु ? एवं तर्हि गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणान्न विधिः । यद्यपि प्रकृतं गुणवृद्धिग्रहणं सञ्ज्ञापरम्, इह त्वनुवृत्तिसामर्थ्यात्सञ्ज्ञिपरं भविष्यति । 'अदेङ् गुणः' (१.१.२) इत्यत्र चानुवर्तमानमपि[20] वृद्धिग्रहणं न सम्बध्यते, अन्यवचनाच्चकाराकरणाच्च । अन्या हि [21]तत्र [22]गुणसञ्ज्ञा उच्यते, चकारश्च न

---

1. तपरकरणम् 2. च नास्ति 3. संजातकेशोऽपि......निगृह्यते । इत्यस्य स्थाने कुन्तलित्वावस्थायां निगृह्य ताडयते चोरोऽयमिति 4. तत्र 5. अत आह नास्ति 6. तपकरणमैजर्थमिति 7. तपरस्य 8. तपरः इत्यधिकम् 9. परस्तपर इति तस्मादैजर्थमिति 10. खट्वौदनं 11. अश्वलैतिकशब्दौ 12. उदाहरणस्य नास्ति 13. तु नास्ति 14. उदाहरणम् इत्यस्य स्थाने ग्रहणं इति पाठः 15. इति नास्ति 16. रथोढा 17. यजन्ति 18. आर्धधातुके इत्यधिकम् 19. आदि इत्यस्य स्थाने आर्धधातुक इति पाठः 20. अपि नास्ति 21. तत्र नास्ति 22. गुण नास्ति

क्रियते, अतो विधिपक्षे पुनर्गुणवृद्धिग्रहणं न कर्तव्यम् । अत एवाधिकारोऽपि न भवति । [1]परिभाषायां तु [2]तस्यां विशिष्ट-विषयत्वसिद्धये कर्तव्यं तदिति वक्ष्यामः । अतः परिभाषेयम् ।

योगो वायं [3]व्यपदिश्येत, सूत्रं वा, तत्कथम् 'इयम्' इति स्त्रीलिङ्गनिर्देशः ? उच्यते । यथायं योगः, यथा वा सूत्रमिदम्, एवं परिभाषापि । तत्सामानाधिकरण्यादियमिति निर्देशः । ननु परिभाषात्वं विधित्सितम्, इदंशब्दस्तु उद्देशकः, सिद्धरूपस्य चोद्देशः सूत्ररूपता योगरूपता वा सिद्धेति[4] पुनर[5]प्युद्देशकस्य स्त्रीलिङ्गा[6]नुपपत्तिः ? [7]कश्चिदत्र परिभाषेयमित्यनूद्य स्थानिनियमार्थता विधीयते, 'येयं परिभाषा सा स्थानिनियमार्थेति, न तु परिभाषारूपता विधीयते' [8]इत्याह । स वाच्यः असिद्धं परिभाषात्वं कथमनूद्यते इति । अव्यापकश्चायं परिहारः 'समर्थः पदविधिः' (२.१.१) इत्यादौ । तत्र[9] परिभाषेयमित्येतावत्रच्छ्रूयते[10], न पुनरेतदर्थेति । वयं तु ब्रूमः, निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ति । तत्र यथा '[11]अणौ यत्कर्म णौ चेत्स कर्ता' (१.३.६७) इति [12]कर्माकारपरामर्शिनोऽपि तच्छब्दस्य, विधीयमानस्य कर्त्राकारस्य लिङ्गं भवति, तद्वदिहापि सूत्रमेवोद्दिश्यत इदंशब्दस्य विधीयमानपरिभाषाकारस्य लिङ्गं भविष्यति । स्थानिनियमार्था इति । इगाख्ये स्थानिनि गुणवृद्ध्योर्नियमोऽर्थः प्रयोजनं यस्याः सा तथोक्ता । 'द्वन्द्वे घि' (२.२.३२) इति वृद्धिशब्दस्य पूर्वनिपातः प्राप्तः सूत्रनिर्देशेन न नित्यं बाध्यते, 'धर्मादिषु उभयम्' (का. १२८) इति वचनादिति सूचयन्नाह—वृद्धिगुणो इत्यादि ।

किं पुनरनेन ग्रन्थेनोच्यते ? ननु नियमरूपेणास्य सूत्रस्य प्रवृत्तिरिति, यथा 'एच इग्घ्रस्वादेशे' (१.१.४८), ह्रस्व आदिश्यमान एच इगेवेति । यद्येवम्, अनियमप्रसङ्गे नियम इति 'सार्वधातुकार्धधातुकयोः' (७.३.८४), 'सिचि वृद्धिः' (७.२.१) इत्यत्रैव स्यात् । अत्र ह्यसत्यस्मिन्योगेऽलोन्त्यस्य भवन्तौ वृद्धिगुणावन[13]न्त्यस्याविशेषितत्वादिकश्चानिकश्च प्राप्नुतः, न तु मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वपि । अत्रालोऽन्त्यस्येत्यनिक एव प्रसङ्गः । अथ सर्ववाक्यानां सावधारणत्वात्, प्राप्तमेवावधारणमिक एवेत्येवशब्देनाभिधीयते, न पुनर्नियमोऽनेन प्रदर्श्यते, यथा तपस्तपःकर्मकस्यैव (३.१.८८) इति । अतो विधिरूपेणैवास्य व्यापारो विवक्षितः, परिभाषात्वाच्च गुणवृद्धिविधेः संस्कारकं विध्यन्तरमिदम्, यथा 'इद्गोण्याः' (१.२.५०) इत्यादेः 'अलोन्त्यस्य' (१.१.५२) इत्ययमिति पक्षः । ततो नाप्राप्तायामलोन्त्यपरिभाषायामियमारभ्यमाणा तस्या बाधिका स्यात् । ततश्च यत्रैषा, न तत्र सा प्रवर्तेतेति जुसि गुणो (७.३.८३) यथेह भवति अबिभयुः, अबिभरुरिति, एवमनेनिजुः, पर्यवेविषुरत्रापि प्राप्नोति । सार्वधातुकार्धधातुकयोः यथेह भवति चेता स्तोतेति, एवमीहिता, ऊहिता उम्भिता, अत्रापि प्राप्नोति ।

अथ तु सामान्यविशेषयोरसम्भवे बाध्यबाधकभावः । अस्ति चात्र सम्भवो यत् अलोन्त्यस्य गुणवृद्धी स्याताम् इकश्च, ततः 'जुसि च' (७.३.८३) इत्यादौ गुणवृद्धिलिङ्गात् इक्परिभाषाप्युपतिष्ठेत, अङ्गस्येति स्थानषष्ठीनिर्देशात् 'अलोन्त्यस्य' (१.१.५२) इत्येषापि । तत्र च न समुच्चयोऽङ्गान्त्यस्यानिकोऽपि गुणो भवति, तदवयवस्य चेकोऽनन्त्यस्यापीति । नापि विकल्पः, कदाचिदङ्गान्त्यस्यानिकोऽपि, कदाचित्तदवयवस्येकोऽनन्त्यस्यापीति । एकत्वात् षष्ठ्यर्थस्यैक एव हि सकृच्छ्रुतायाः अङ्गस्येति षष्ठ्या अर्थः, स्थानेयोगो वा अवयवयोगो वा, न द्वौ समुच्चितौ, नापि विकल्पितौ । तत्र यद्यङ्गस्येत्येतत्पूर्वमिक इत्यनेन वैयधिकरण्येन सम्बध्येत, अङ्गस्य य इक्, तस्य गुणः इति, ततोऽलोन्त्यस्येत्येतदनन्वितं स्यात् । अतः पूर्वमलोन्त्यस्येत्यनेन सम्बध्यते, स चान्त्येका विशेष्यते, अङ्गान्त्यस्येको गुणः इति । यद्वा इकाङ्गं विशिष्यते, विशेषणेन च तदन्तविधिः, इगन्तस्याङ्गस्येति । एवमपि [14]हि स्थानषष्ठीत्वानपायादलोन्त्यस्येत्यव्याहतप्रसरं[15] सर्वथाङ्गान्त्यस्येको गुण इति जुसि सार्वधातुकार्धधातुक[16]गुणे न कश्चिद्दोषः । मिदादिषु पूर्वोक्तेन प्रकारेण द्वयोरन्वयासम्भवा-

---

1. परिभाषात्वे 2. तस्या 3. व्यपदिश्यतां 4. न इत्यधिकम् 5. उद्देशकालेऽस्य 6. उपपत्तिः 7. अत्र इत्यस्य स्थाने आह इति पाठः 8. आह नास्ति 9. हि इत्यधिकम् 10. श्रूयते इत्यस्य स्थाने ब्रूते इति पाठः 11. णेरणौ 12. कर्मकारक 13. अन्त्यस्य 14. हि नास्ति 15. सत् इत्यधिकम् 16. गुणे इत्यस्य स्थाने ग्रहणे इति पाठः

दन्यतरद्वातव्यम् । तत्राविशेषादुभयमपि त्यज्येत, [1]उच्येते च वृद्धिगुणौ 'मृजेर्वृद्धिः' (७.२.११४), 'मिदेर्गुणः' (७.३.८२) [2]इति, तौ सर्वादेशौ स्याताम् । अतो विधिरूपेण नियमरूपेण वास्य सूत्रस्य व्यापारो नाभ्युपगन्तव्यः। किं तर्हि ? अनेन क्रियते यदोपस्थापनम्, यत्र ब्रूयाद्गुणो भवतीति, वृद्धिर्भवतीति, तत्रेक इत्येतत् षष्ठ्यन्तं पदमुपतिष्ठतामिति । 'अलोन्त्यस्य' (१.१.५२) इत्यस्य तु वाक्यभावः । एवं हि विज्ञायमाने 'सिचि वृद्धिः' (७.२.१) इत्यादौ यत्रान्त्य इक् सम्भवति, तत्रेक इत्येतेनोपस्थितेनाङ्गे विशेषिते, तदन्तविधौ [3]सति, इगन्ताङ्गस्य गुण इति वाक्यव्यापारे परिनिष्ठिते, पश्चादलोऽन्त्यस्येत्येतत् इगन्तस्य प्राप्तं गुणं ततोऽपकृष्याङ्गान्त्यस्य विधत्ते, न त्विक इत्यस्योपस्थानवेलायामुपतिष्ठते । 'मिदेर्गुणः' (७.३.८२) इत्यादौ तु यत्रान्त्य इङ् न सम्भवति, तत्राङ्गेनेकि विशेषिते, अङ्गस्येको गुण इति वाक्यव्यापारे परिसमाप्ते, स्थानषष्ठ्यभावात्स्वयं न प्रवर्तते, न त्विक इत्यनेन सहोपतिष्ठते, येनाविशेषादुभयोर्निवृत्तिः स्यादिति सिद्धमि[4]ष्टम् ।

वृत्तिकारेण त्वस्य सूत्रस्य प्रयोजनं पिण्डीकृत्य प्रदर्शितम्, सर्वथाऽन्त्यस्य वाऽनन्त्यस्य वेक एव गुणवृद्धी भवतः, न त्वक्षरव्यापारः, अत एव वेदितव्यौ इत्याह । अक्षरव्यापारप्रदर्शने तु, इक एव स्थाने भवत इत्येतावद्वक्तव्यं स्यात्। स्वसञ्ज्ञया शिष्यमाणो इति वृद्धिर्भवति गुणो भवतीत्येवं विधीयमानावित्यर्थः ।

इक इति किम् इति । प्रधानावयवाक्षेपेण समुदायस्यैवाक्षेपः, सूत्रं किमर्थमित्य[5]र्थः । आत्सन्ध्यक्षर इत्यादि। ननु 'गापोष्टक्' (३.२.८) इति टकः कित्करणं सामग इत्यादावाल्लोपार्थं ज्ञापकम्, [6]आकारस्य गुणो न भवति इति। यदि [7]हि स्यात्, गुणे कृते अल्लोपे च [8]सिद्धं स्यात् सामग इति । तथा ग्लायतीत्यादौ सन्ध्यक्षराणामप्युपदेशसामर्थ्यात् [9]गुणो न भविष्यति, इतरथा प्रक्रियालाघवार्थमेकारमेवोपदिशेत् । 'जनेर्डः' (३.२.४८) इति डित्करणाद्व्यञ्जनानामपि गुणो न भविष्यति । यदि [10]हि [11]तस्य स्यात्[12], अर्धमात्रस्य मात्रिकेऽकारे गुणे कृते सिद्धं स्यादुपसरज इति । यद्येवम् मिदेर्गुणोऽन्त्याद्व्यावर्तितः सर्वादेशः स्यात् । किं च गमेरप्ययं डो (उ. २३५) भवति, तस्य च स्थानत आन्तर्यादोकारो गुणः स्यात् । [13]रैनौग्लौशब्देभ्यश्चाचारक्विबन्तेभ्यस्तृजादौ गुणप्रसङ्गो यद्यभिधानमस्ति, तथा चितः, चिनुतः, भिन्नः, बेभिद्यते इत्यादौ 'क्ङिति च' (१.१.५) इति प्रतिषेधार्थमपि गुणस्येग्लक्षणत्वमेषितव्यम् ।

अथ वृद्धिग्रहणं किमर्थम् ? 'मृजेर्वृद्धिः' (७.२.११४) इको यथा स्यात्, अलोऽन्त्यस्य मा भूत् । योगविभागात्सिद्धम् । 'मृजेर्वृद्धिरचः', मृजेरचो वृद्धिर्भवति, अङ्गाक्षिप्तेन प्रत्ययेनाचो विशेषणात् 'न्यमार्ट्' अटो न भविष्यति, सिचि वृद्धिस्तर्ह्यकारस्य मा भूत्, अचिकीर्षीत् । अतो लोपो भविष्यति, [14]'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्' (का. वा. ३०८९) इति वचनात्, यथा चिकीर्षक इति । आकारस्य नास्ति विशेषः, सन्निधानादसम्भवश्च। एजन्तमपि न सम्भवति, आत्वविधानात् । रैनौग्लौशब्दानामाचारक्विबन्तानामविशेषः, गोशब्दस्य 'ऋत इद्धातोः' (७.१.१००) इत्यतः धातोः इत्यनुवृत्तेः, धातुरेव यो धातुरिति विज्ञानात् सिचि वृद्ध्यभावः । अभैत्सीदित्यादौ 'सिचि वृद्धिः' (७.२.१) इत्यनेन व्यञ्जनस्य नाप्राप्तायां वृद्धौ विधीयमाना हलन्तलक्षणा वृद्धिर्बाधिका, 'नेटि' (७.२.४) इत्ययं च निषेधो यावती [15]हलन्तस्य वृद्धिः, सिचि वृद्धिरिति वा, हलन्तस्याच इति वा, सा सर्वा न भवतीति विज्ञायते। तेन अनर्दीदित्यादौ अन्त्यस्य[16] वृद्धिर्न भविष्यति । तदेवम् इको वृद्धिर्यथा स्यात्, अदेङ्व्यञ्जनानां मा भूत्, इत्येवमर्थं तावद्वृद्धिग्रहणं न कर्तव्यम् । एवं तर्हि मृज्यते, मृष्टः इत्यादौ 'क्ङिति च' (१.१.५) इति प्रतिषेधार्थं मृजेर्वृद्धेरिग्लक्षणत्वम् । इदमपि योगविभागात्सिद्धम् । मृजेर्वृद्धिरित्यस्यानन्तरमजादौ क्ङिति वेति वक्तव्यम्, परिमृजन्ति, परिमार्जन्ति,

1. उच्यते 2. इति नास्ति 3. सति च 4. इष्टम् नास्ति 5. अर्थः नास्ति 6. अकारस्य 7. हि नास्ति 8. कृते इत्यधिकम् 9. गुणो नास्ति 10. हि नास्ति 11. तस्य नास्ति 12. नकारस्य इत्यधिकम् 13. स इत्यधिकम् 14. ण्यलोपावियङचङगुणवृद्धिदीर्घेभ्य पूर्वविप्रतिषेधात्सिद्धम् 15. हलन्तस्य नास्ति 16. अचश्च इत्यधिकम्

[1]परिममृजतुः, [2]परिममार्जतुरित्येवमर्थम् । तत्र योगविभागः, अजादौ क्ङिति मृजेरचो वृद्धिर्भवति । किमर्थमिदम् ? नियमार्थम्, क्ङिति यदि भवति अजादावेवेति । तेन मृज्यते, मृष्टः इत्यादौ न भविष्यति, ततो वा, अजादावपि विकल्पेनेति । सिचि वृद्धेस्तर्हि प्रतिषेधार्थमिग्लक्षणत्वम् । 'णु स्तुतौ' (धा. पा. १०३६), 'धू विधूनने' (धा. पा. १३९९) कुटादी, न्यनुवीत् न्यधुवीत् । अत्राप्यन्तर्भूतसिज्मात्रापेक्षत्वादन्तरङ्ग उवङि सति, हलन्तत्वात् 'नेटि' (७.२.४) इति [3]निषेधः । सिच्यन्तरङ्गं भवति, अचैषीत्, अह्रौषीद्, गुणः स्यात् । अस्तु । तस्यैव वृद्धिः करिष्यते । अकार्षीदित्यादौ हलन्तलक्षणा वृद्धिः, अतारीदित्यादौ हलन्तलक्षणायाः 'नेटि' (७.२.४) इति प्रतिषेधे 'अतो हलादेः' (७.२.७) इति विकल्पं बाधित्वा 'अतो ल्रान्तस्य' (७.२.२) इति नित्या वृद्धिः । अलावीदित्यादावुवर्णान्तेषु सेटि सिच्यन्तरङ्गत्वात् गुणावादेशयोः कृतयोरपि 'अतो ल्रान्तस्य' (७.२.२) इत्यत्र वकारस्यापि लुप्तनिर्दिष्टत्वान्नित्या वृद्धिः । यद्येवम्, मा भवानवीत्, अमवीदित्यत्रापि तर्हि वकारप्रश्लेषान्नित्या वृद्धिः स्यात् । सिच्यन्तरङ्गं [4]भवतीत्युक्ते 'ह्म्यन्तक्षण' (७.२.५) इत्यत्र णिश्विग्रहणं न कर्तव्यम्, औनयीत्, अश्वयीदित्यत्रान्तरङ्गत्वात् गुणायादेशयोः कृतयोर्यन्तानां नेत्येव सिद्धत्वात् । तत्स्थाने अविमवी निवेशयिष्यामः, 'अतो ल्रान्तस्य' (७.२.२) इत्यत्र वकारप्रश्लेषेण प्राप्ता[5] वृद्धिरविमव्योर्नेति । तदेवमनर्थकं वृद्धिग्रहणम् ? नानर्थकम्, सिच्यन्तरङ्गस्य प्रवृत्तिमाश्रित्य हि वृद्धिग्रहणं प्रत्याख्यायते, यदि च सिच्यन्तरङ्गं स्यात् चिनीप्रभृतिभ्यो यङ्लुगन्तेभ्यश्चिरिणोतिजिरिणोतिभ्यां च लुङि सिचि अचेचायीत्, अनेनायीत्, अचिरायीत्, अजिरायीदिति न स्यात् गुणायादेशयोः कृतयोः यान्तानां नेति प्रतिषेधप्रसङ्गात् । इग्लक्षणायां तु सिचि वृद्धौ तयैवान्तरङ्गं बाध्यते, यदि स्यात्, न क्वापि सिचीगन्तमङ्गं[6] [7]भवेत्, ततश्चाचिरायीदित्यादि सिद्धम् । यथा च तया गुणायादेशौ बाध्येते, एवं न्युनवीदित्युवङपि [8]बाध्येत, अतः प्रतिषेधार्थमपि वृद्धेरिग्लक्षणत्वमेषितव्यमिति सर्वमवदातम् । एवं बहु वक्तव्यत्वात् वृत्तिकारेण वृद्धिग्रहणस्य प्रयोजनं न [9]दर्शितम् ।

अथ कथं स्वसञ्ज्ञया शिष्यमाणावित्येष विशेषो लभ्यते [10]इत्याह—[11]गुणवृद्धिग्रहणम् इत्यादि । इह पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्तते । तेनैवादेङामादैचां च ग्रहणे सिद्धे यत्पुनर्गुणवृद्धिग्रहणं [12]तत्स्वसञ्ज्ञया विधाननियमार्थम्, अन्यथा प्रकृतं गुणवृद्धिग्रहणं तटस्थमुपलक्षणं स्यात्, वस्तुतो ये गुणवृद्धी तद्विधौ इति । स [13]तु विधिर्गुणवृद्धिशब्दाभ्यां प्रकारान्तरेण वेत्येव विशेषो नाश्रितः स्यात्, पुनर्गुणवृद्धिग्रहणसामर्थ्यात्तु[14] शब्दव्यापारोऽप्याश्रीयते, [15]गुणवृद्धी ये गुणवृद्धी, एवं शब्दिते ये गुणवृद्धी इत्यन्यतरस्य गुणवृद्धिग्रहणस्य स्वरूपप्रधानत्वं [16]सम्पद्यते, तेनायं विशेषो लभ्यत इत्यर्थः । अन्यथा 'अचश्च' (१.२.२८) इत्यस्य स्वसञ्ज्ञया विधाने [17]नियमस्य 'दिव उत्' (६.१.१३१) इत्यादिष्वगुणवृद्धिसञ्ज्ञकेषु [18]तत्सञ्ज्ञेषु च यत्रेङ् न सम्भवति 'अष्टन आ विभक्तौ' (७.२.८४) इत्यादौ, तत्र चरितार्थत्वात् 'दिव औत्' (७.१.८४) इत्यादिषु गुणवृद्धिसञ्ज्ञकेषु यत्रेक् सम्भवति, तत्रायं नियमः स्यात्[19] । द्यौः, पन्थाः, सः, इमम् इति । स [20]इत्येतदनुदाहरणम्, न ह्यत्रेगस्ति ।

एवं प्रकटितोऽस्माभिर्भाष्ये परिचयः परः ।
तस्य निःशेषतो मन्ये प्रतिपत्तापि दुर्लभः ॥

## ४. न धातुलोप आर्धधातुके ।

न धातुलोप आर्धधातुके । 'दुरीणो लोपश्च' (उ. १८७) । दुःशब्द उपपदे इणो धातोरप्रत्ययो भवति, धातोश्च लोपः । दुःखेन ईयते प्राप्यते दूरमित्यत्र यद्यपि कृत्स्नस्य धातोर्लोपः सम्भवति, तथाप्येवंविषये गुणवृद्ध्योः प्राप्त्यभावा-

1. परिमृजन्तु 2. परिमार्जन्तु 3. प्रतिषेधः 4. उक्ते इत्यस्य स्थाने आश्रीयेत इति पाठः 5. या इत्यधिकम् 6. अङ्गं नास्ति 7. संभवेत् 8. बाधेत 9. प्रदर्शितम् 10. तत्राह 11. पुनर् इत्यधिकम् 12. स्व नास्ति 13. तु नास्ति 14. तु नास्ति 15. गुणवृद्धी ये नास्ति 16. च इत्यधिकम् 17. नियमार्थस्य 18. तत्सञ्ज्ञकेष 19. एव इत्यधिकम् 20. इत्येतत्त्वनुदाहरणम् ।

देकदेशे धातुशब्दो वर्तत [1]इत्याह—धात्वेकदेशो इति। धातुलोप इति तत्पुरुषे सति, आर्धधातुकग्रहणं लोपविशेषणम्, गुणवृद्धिविशेषणम्, उभयविशेषणं वा इति त्रयः [2]कल्पाः। तत्र यदि लोपविशेषणम्, आर्धधातुकनिमित्ते धातुलोपे सति यत्किञ्चिन्निमित्ते गुणवृद्धी न भवत इत्यर्थः स्यात्। ततश्च प्रेद्धम् इत्यत्र प्रपूर्वादिन्धेः क्तप्रत्यये, तन्निमित्ते नलोपे सति प्राप्नुवत आद्गुणस्यापि निषेधः स्यात्। यद्यपीक इत्यनुवर्तते, तथापि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवन्नन्यतरव्यपदेशं लभत इति स्यादेव। न चेह सूत्रे इक इत्यस्य [3]रूपपरत्वे प्रमाणमस्ति। उत्तरसूत्रे तु प्रमाणं वक्ष्यामः। ननु 'पूर्वं धातुः साधनेन युज्यते' (सी. प. १२८) [4]इत्यस्मिन् दर्शने, प्रथमोपनतक्तप्रत्ययापेक्षत्वादुपधालोपोऽन्तरङ्ग इति तदपेक्षः [5]प्रतिषेधोऽप्यन्तरङ्गः, 'पूर्वं धातुरुपसर्गेण युज्यते' (सी. प. १२९) इति[6] तु [7]दर्शने प्रथमोपनतोपसर्गापेक्षत्वात् गुणो[8]ऽन्तरङ्गः, ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) इति प्रतिषेधो न भविष्यति? नैतदस्ति, 'नाजानन्तर्ये' (व्या. प. ४४) इति [9]निषेधात्। अथ गुणवृद्धिविशेषणमार्धधातुकग्रहणम्, ततोऽयमर्थः [10]स्यात्, यत्किञ्चननिमित्ते धातुलोपे सत्यार्धधातुकनिमित्ते गुणवृद्धी न भवत इति, तदा प्रेद्धमित्यत्र दोषो न, गुणस्यातन्निमित्तत्वात्, किन्तु क्नोपयतीत्यत्र 'क्नुयी शब्दे' (धा. पा. ४८५) इत्यस्माण्णिचि पुकि च यलोपे पुगन्त[11]लक्षणस्य गुणस्य निषेधः स्यात्। अत उभयविशेषणम्, आर्धधातुकनिमित्ते धातुलोपे सत्यार्धधातुकनिमित्ते गुणवृद्धी न भवत इति।

तत्र सकृत् श्रुतस्योभयविशेषणत्वमेव [12]तावत् दुर्लभम्। अथापि स्यात्, एवमपि लोपगुणवृद्धीनामेकार्धधातुकनिमित्तत्वं न लभ्यते। ततश्च विभज्यान्वाख्यानपक्षे भेद्यत इत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिद इ य इति स्थिते, नित्यत्वात्पूर्वं णिलोपे [13]कृते यकमपेक्ष्य प्रवृत्ते प्रत्ययलक्षणेन णिचमपेक्ष्य प्राप्नुवतो गुणस्य [14]निषेधः स्यात्, द्वयोरप्यार्धधातुकनिमित्तत्वात् इति तत्पुरुषे सति सर्वथा दोषं दृष्ट्वाह—तस्य लोपो यस्मिन् इति। अस्मिन्पक्षे धातोर्लोपो यस्मिन्निति अन्यपदार्थभूतेनार्धधातुकेन लोपो विशेष्यते, साक्षाच्च गुणवृद्धी, धातोर्लोपो यस्मिन् [15]तस्मिन्, इति एकार्धधातुकनिमित्तत्वं च लोपगुणवृद्धीनां लभ्यत इति न कश्चिद्दोषः। ते न भवतः इति। अनेन गुणवृद्ध्योरयं निषेधः, न पूर्वसूत्रव्यापारस्येति दर्शयति। [16]पदोपस्थापनं हि पूर्वसूत्रव्यापारः। न चैवम्भूत आर्धधातुके तस्य प्रसङ्गः, 'दीधीवेवीटाम्' (१.१.६) इति चासम्बद्धं [17]स्यादुपस्थाननिषेधे। लोलुवः इत्यादि। लूपूभ्यां यङ्, द्विर्वचनम्, 'गुणो यङ्लुकोः' (७.४.८२), गुणे [18]निषिद्धे उवङ्। मरीमृजः इति। 'रीगृदुपधस्य च' (७.४.९०)। लोलूयादिभ्य इत्यादिना सूत्रार्थमुदाहरणेषु दर्शयति। ननु च यङ्कारस्यातो लोपे कृते तस्य स्थानिवत्वादेव गुणवृद्धी न भविष्यतः, यथा पापचक इति 'अत उपधायाः' (७.२.११६) इति वृद्धिः। न ह्यत्रानेन निषेधः सिद्ध्यति। किं कारणम्? अनिग्लक्षणत्वात्। [19]नालोपो लभ्यते, 'यङोऽचि च' (२.४.७४) इति समुदायलुका प्रतिपदविहितेन बाधितत्वात्। योगविभागात्सिद्धम्। अतो लोपो भवत्यार्धधातुके, ततो 'यस्य' (६.४.४९), य इत्यस्य समुदायस्य योऽकारस्तस्यापि लोपो भवति। किमर्थमिदम्? विशेषविहितेन समुदायलुकाऽतो लोपो मा बाधीति। तेन स्थानिवत्त्वादेव गुणवृद्धी न भविष्यतः। यथैव तर्हि गुणवृद्धी न भवतः, एवं क्षेत्रियः, चेक्रियः, लोलुवः, तोष्टुवः, [20]सुश्रुव इतीयङुवङावप्य[21]च्प्रत्ययमपेक्ष्य[22] न स्याताम्। मा भूतामचि, य एव त्वसौ स्थान्यकारस्तदाश्रयौ भविष्यतः। स [23]हि यकारे लुप्ते प्रत्ययसञ्ज्ञकः। ननु क्षेत्रियः, तोष्टुवः इत्यत्रान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति अकृतसार्वधातुकयोर्दीर्घात् प्रागेव यङो लुकि कृते, स्थानिवद्भावे सत्यपि चेक्षि अ अ, तोष्टु अ अ इति स्थिते, स्थान्यकारेण सह लघूपधमङ्गं सञ्जातमिति अच्प्रत्यये गुणः स्यादेव? न, अन्तरङ्गावियङुवङौ भविष्यतः, अशिश्रियत्, अदुद्रुवदिति यथा। अतः स्थानिवत्त्वादेव सिद्धम्, नार्थोऽनेन? उच्यते। सर्वत्र दीर्घान्तेषु ह्रस्वान्तेषु चेयङुवङोः

---

1. इत्यत आह 2. विकल्पाः 3. स्व इत्यधिकम् 4. अस्मिन् नास्ति 5. निषेधः 6. अत्र इत्यधिकम् 7. दर्शने नास्ति 8. अपि इत्यधिकम् 9. प्रतिषेधात् 10. स्यात नास्ति 11. लक्षणस्य नास्ति 12. तावत् नास्ति 13. कृते नास्ति 14. प्रतिषेधः 15. तस्मिन् नास्ति, 16. पदोपस्थानं 17. स्यात्पदोपस्थाननिषेधपक्षे 18. प्रतिषिद्धे 19. नात्रातो लोपो 20. सुश्रुव नास्ति 21. प्रत्यये 22. अपेक्ष्य, नास्ति 23. हि नास्ति

कृतयोः पुनर्लघूपधलक्षणो गुणः प्राप्नोति, न च पुनरपि [1]स्थानिवद्भावः, आदिष्टादचः पूर्वत्वात्। किञ्च यद्यतो लोपः क्रियेत, जङ्गमः इत्यत्र 'गमहन' (६.४.९८) इत्युपधालोपः स्यात्। अथात्रानङीति प्रतिषेधः, तर्हि दरीदृश इत्यत्र 'ऋदृशोः' (७.४.१६) [2]इति [3]गुणः स्यात्, देद्य [4]इत्यत्र 'दीङो युडचि' (६.४.६३) इति युट् स्यात्, सनीस्रंसः, दनीध्वंसः [5]इत्यत्र 'अनिदिताम्' (६.४.२४) इत्युपधालोपः स्यात्, यायावर इत्यादिष्वाकारलोपः स्यात्। यदा पुनर्योगविभागमकृत्वा विशेषविहितः समुदायलुक् क्रियते, तदा हलचोरादेशस्य स्थानिवत्त्वाभावादुपधालोपादयो न भवन्तीत्यवश्यं समुदायस्य लुगेषितव्यः। एवं च लोलुव इत्यादावपि गुणवृद्धी स्यातामिति सूत्रमपि कर्तव्यम्। लून्-लविता इति। प्रागेव धातुसञ्ज्ञाया भवन्ननुबन्धलोपो धातुलोपो न भवति। रेडसि इति। 'रुष रिष हिंसायाम्' (धा. पा. ६९३, ६९४), 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति विच्, वेरपृक्तस्य[6] लोपः (६.१.६७) न धातुलोपो भवति।

नन्वसत्यपि धातुग्रहणे लुप्यतेऽस्मिन्नित्यधिकरणसाधनलोपशब्दस्याश्रयणादनैमित्तिकेऽनुबन्धप्रत्ययलोपे न भविष्यति? तन्न, लोपशब्दो हि सञ्ज्ञाशब्दः, कथमस्याधिकरणसाधनता लभ्यते? रोरवीति इति। 'रु शब्दे' (धा. पा. १०३५) यङ्लुकि तिपि रूपम्। नन्वसत्यप्यार्धधातुकग्रहणे, धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विज्ञास्यते, रोरवीतीत्यत्र च यङ्लुगनैमित्तिकः। न ह्यार्धधातुकग्रहणं बहुव्रीहित्वे प्रमाणम्, सत्यपि तस्मिंस्तत्पुरुषसम्भवात्। इदं तर्हि प्रयोजनम्, 'तुर्वी (धा. पा. ५७०) थुर्वी (धा. पा. ५७१), धुर्वी (धा. पा. ५७३) हिंसार्थाः', 'मुर्च्छा मोहसमुच्छ्राययोः' (धा. पा. २१२), तेभ्यो यङ्लुगन्तेभ्यस्तिबादौ सार्वधातुके परतो राल्लोपे, तोतोर्ति, मोमोर्तीत्यादौ छ्वोर्लोपस्य गुणस्य चैकनिमित्तत्वान्निषेधः स्यादेव। इक इत्येव इति। इक इत्यस्यानुवृत्तिं प्रति न शङ्का कार्येत्येवशब्दस्यार्थः। अतः अभाजि, रागः इति 'भञ्जेश्च चिणि' (६.४.३३), 'घञि च भावकरणयोः' (६.४.२७) इत्युपधालोपः।

प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः।
हरदत्तहरिः स्वैरं विहरन् केन वार्यते॥

## ५. क्ङिति च।

क्ङिति च। क्ङिद्ग्रहणम् यदि विधीयमानस्य प्रतिषेधस्य विशेषणं स्यात्, गुणवृद्धी क्ङिति न [7]भवत इति, ततो विधिसंस्पर्शात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१.२.६६) इत्यस्योपस्थानात् क्ङित्यनन्तर एव प्रतिषेधः स्यात्। यद्यपि प्रतिषेधस्य विधानदशायां पौर्वापर्यं न सम्भवति, तथा निषेध्यमानयोर्गुणवृद्ध्योरपि, तथापि स्थानिन इकोऽनन्तरे क्ङिति प्रतिषेधः स्यात्। एवं हि विधानोत्तरकालमपि तावत् गुणवृद्ध्यभावरूपस्य प्रतिषेधस्य क्ङिदनन्तरः सम्भवति, 'इको यणचि (६.१.७७) इत्यादावप्येतावदेव पौर्वापर्यं यद्विधानदशायां तु स्थानिनः, उत्तरकालं तु विधेयस्य। यदा त्वनूद्यमानयोर्गुणवृद्ध्योर्विशेषणम्, क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति, तदा[8]ऽनुवादकत्वात्तस्मिन्नित्यादिकायाः परिभाषाया अनुपस्थानम्। न हि 'क्ङिति सति ये गुणवृद्धी' इत्युक्ते विधिव्यापारेण क्ङितः कश्चित् [9]संस्पर्शः। विध्यङ्गभूताश्च परिभाषास्तत्रैवोपतिष्ठन्ते, नानुवादे, तस्यापि परार्थत्वात्, द्वयोश्च परार्थयोः परस्परं सम्बन्धाभावात्, अन्यथा 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (१.१.७३) इत्यत्रेक्परिभाषोपस्थाने शालीय इति वृद्धसञ्ज्ञाया अभावात्तल्लक्षणश्छो न स्यात्। तथा च 'उदीचामातः स्थाने' (७.३.४६) इति स्थानेग्रहणं कृतम्, आतः स्थाने योऽकार [10]इत्युनुवादकत्वात्, 'षष्ठी स्थानेयोगा' (१.१.४९) इति स्थानेयोगो न [11]लभ्येतेति। अतोऽस्मिन्पक्षे क्ङितीति सति सप्तमी 'यस्य च भावेन (२.३.३७) इति। क्ङितोर्हि सत्तालक्षणेन भावेन गुणवृद्ध्योः [12]प्राप्तिलक्षणो भावो लक्ष्यते, निमित्तस्य च सत्तया निमित्तिनः प्राप्तिर्लक्ष्यत इति 'क्ङिति सति ये गुणवृद्धी प्राप्नुतः' इत्यस्य, 'क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुत[13]स्ते न

1. स्थानिवत्त्वं 2. इति नास्ति 3. अङि इत्यधिकम् 4., 5. इत्यत्र नास्ति 6. इति इत्यधिकम्। 7. भवतः नास्ति 8. अनुवादत्वात् 9. विसंस्पर्शः 10. अनुवादत्वात् 11. लभ्यते इति 12. अप्राप्तिलक्षणो 13. ते न भवतः नास्ति।

भवत' इत्यर्थो भवति। भिन्नः, मृष्ट इत्यादौ चोपधाया अपि प्राप्नुवन्त्यौ गुणवृद्धी क्ङितं निमित्तमाश्रित्य प्राप्नुत इत्येतत्सर्वमा[1]लोच्याह—निमित्तसप्तम्येषा इति। निमित्तात्सप्तमी [2]निमित्तसप्तमी, पञ्चम्यर्थे शेषत्वेन विवक्षिते षष्ठीसमासः। क्ङिन्निमित्ते इति। एतेन गुणवृद्धिविशेषणं क्ङिद्ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैव[3]तद्विशेषणं युक्तम्? नैतदस्ति। यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते, यथा पानीयमेलादिसंस्कृतं पुरुषेण। उक्तं च—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥

इति। इह च गुणवृद्धयोः क्ङिद्ग्रहणेन विशेषितयोर्महान् प्रधानप्रतिषेधस्योपकारो [4]भवति, व्यवहितस्यापि तत्सिद्धेः। भिन्न इति। 'रदाभ्याम्' (८.२.४१) इति नत्वम्। मृष्ट इति। व्रश्चादिना (८.७.३६) षत्वम्। चिन्वन्ति इति। 'सार्वधातुकमपित्' (१.२.४), 'हुश्नुवोः सार्वधातुके' (६.४.१०१)। यद्येषा निमित्तसप्तमी, शचङन्ते दोषः, 'धि धारणे' (धा. पा. १४०७), 'रि गतौ' (धा. पा. १४०५) तुदादौ, ताभ्यां तिपि 'तुदादिभ्यः शः' (३.१.७७), 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' (३.१.४८), धि अ ति, रि अ ति, श्रि अ त्, [5]द्रु अ त् इति स्थिते, शचङन्तस्याङ्गस्य तिपि लघूपध[6]लक्षणश्च गुणः[7] प्राप्नोति, शचङोः परतः पूर्वस्य सार्वधातुकलक्षणश्च, तत्र शचङ्निमित्तस्यैव प्रतिषेधः स्यात्, न तिङ्निमित्तस्य। पक्षान्तरे तु तिङ्निमित्तस्यापि गुणस्य शचङोः परतः प्रतिषेधो लभ्यते। न वा बहिरङ्गलक्षणत्वाद्बहिर्भूततिबाश्रयो गुणो बहिरङ्गो[8]ऽन्तर्भूतशचङ्निमित्ताभ्यामियङुवङ्भ्यां बाधिष्यते। 'ग्लाजिस्थश्च क्स्नुः' (३.२.१२९) इत्यत्र वक्ष्यति, गिच्चायं प्रत्ययो न कित् तेन स्थ ईकारो न भवति [9]इति, क्स्नोर्गित्वान्न स्थ ईकारः इति [10]च। ततश्च भूष्णुरित्यत्र प्रतिषेधो न स्यादित्यत आह—गकारोऽप्यत्र इत्यादि। चर्त्वं भूतः चर्त्वं प्राप्तः। अत एव गकारप्रश्लेषात् सङ्ख्यातानुदेशो न भवति, अन्यथा क्ङितौ द्वौ, गुणवृद्धी अपि द्वे इति सङ्ख्यातानुदेशः प्राप्नोति, किति गुणस्य, ङिति वृद्धेरिति। ज्ञापकाद्वा, यदयं 'मिदेर्गुणः' (७.३.८२) इति श्यनि ङिति गुणं शास्ति, तज्ज्ञापयत्याचार्यः 'नात्र सङ्ख्यातानुदेशो भवति' इति। यदि तर्हि क्स्नुप्रत्ययो गित्, भूष्णुरितीट् प्राप्नोति? नैष दोषः। 'श्र्युकः किति' (७.२.११) इत्यत्रापि गकारश्चर्त्वभूतो निर्दिश्यते, सौत्रत्वाच्च निर्देशस्य चर्त्वस्यासिद्धत्वात्प्राप्तमपि 'हशि च' (६.१.११४) इत्युत्वं न भवति, 'कुप्वोः' (८.३.३७) इति विसर्जनीयश्च[11] भवति। कामयते इति। कमेर्णिङ् (३.१.३०)। लैगवायन इति। लिगुशब्दात् 'नडादिभ्यः फक्' (४.१.९९) इति फक्। 'ओर्गुणः' (६.४.१४६) इति गुणस्य प्रतिषेधः [12]कथं न भवति, यावतोकार इगेव? नैतदस्ति। अत्र हि चकारः क्रियते, स इत्यर्थो विज्ञायते, तेनेक इतीमं शब्दमुच्चार्य विधीयमानयोर्गुणवृद्धयोः प्रतिषेधः, न चैवमोर्गुणः। मृजेः इत्यादि। इह त्रिमुनि व्याकरणम्, यथोत्तरं च मुनीनां प्रामाण्यमिति दर्शनस्थितिः, तेन सूत्रकारेणानुक्तं वार्तिककार आह, [13]तदुक्तं च दूषयति, एवं भाष्यकारो वार्तिककारेण। व्याख्यातृत्वमपि द्वयोश्चा[14]स्तीत्येतावत्, 'यस्मिन्विधिस्तदादावल्ग्रहणे' (व्या. प. १२७) इत्यनेन तदादिविधौ सिद्धे[15]ऽज्यादिग्रहणम् मुख्येऽजादौ यथा स्यात्, व्यपदेशिवद्भावेनाजादौ मा भूत्। तुन्दपरिमृजः, पूर्यं ममृज, त्वया ममृजे। सङ्क्रमो नाम इत्यादि। सङ्क्रामतोऽपक्रामतो गुणवृद्धी अस्मादिति कृत्वा। लघूपधगुणस्याप्यत्र प्रतिषेध इति। अत्र सूत्रे लघूपधगुणस्यापि प्रतिषेधः, न [16]तु 'सार्वधातुकार्धधातुकयोः' (७.३.८४) इत्येतस्यैवेत्यर्थः। अनेन निमित्तसप्तम्याः फलं दर्शितम्। अत्र इत्यनेन सूत्रं निर्दिश्यते। इह अचिनोदिति ङितो लङस्तिबादेशः[17], स्थानिवद्भावात् ङिदिति गुणप्रतिषेधः प्राप्नोति, इह[18] अचिनवम् इति [19]ङितो लङो मिपि तस्यापि [20]स्थानिवद्भाव-

1. आलोक्य　2. निमित्तसप्तमी नास्ति　3. तद् नास्ति　4. सम्भवति　5. अ त् इति स्थिते नास्ति　6. लक्षणश्च नास्ति　7. च इत्यधिकम्　8. सन् इत्यधिकम्　9. इति इत्यस्य स्थाने तथा च इति पाठः　10. च नास्ति　11. तु　12. न भवति इत्यधिकम्　13. दुरुक्तं　14. च नास्ति　15. अपि नास्ति　16. तु नास्ति　17. इति इत्यधिकम्　18. चासुनवम्　19. ङितो नास्ति　20. स्थानिवत्त्वपरम्परया

परम्परया ङित्त्वात् गुणप्रतिषेधः स्यादित्यत आह—अचिनवम् इत्यादि । यदि ङिति यत्कार्यं तत् ङितो लकारस्यादेशे स्थानिवद्भावात्स्यात्, यासुटो ङिद्वचनमनर्थकं स्यात्, लिङो ङित्त्वादेव तदादेशेषु ङित्कार्यस्य सिद्धत्वात् ॥

## ६. दीधीवेवीटाम् ।

दीधीवेवीटाम् । दीधीवेव्योः इति । 'दीधीङ् दीप्तिदेवनयोः' (धा. पा. १०७७) 'वेवीङ् वेतिना तुल्ये' (धा. पा. १०७८) इत्येतयोः । अथ 'दीङ् क्षये' (धा. पा. ११३५), 'धीङ् आधारे' (धा. पा. ११३७), 'वेञ् तन्तुसन्ताने (धा. पा. १००७) 'वी गत्यादिषु' (धा. पा. १०४९) एतेषां ग्रहणं कस्मान्न भवति ? दीङस्तावन्न भवति, 'मीनातिमिनोतिदीङां ल्यपि च' (६.१.५०) इति चकारेणङ्विषय आत्वविधानात् । वेञोऽपि न भवति, गुणप्राप्त्यभावात् । नैतदस्ति । चकारस्तावन्मीनातिमिनोत्यर्थः स्यात्, दीङोऽपि ग्रहणं ल्यबर्थं स्यात्, वेञोऽपि प्रवेयमित्यत्र 'ईद्यति' (६.४.६५) इति ईत्वे कृते गुणः प्राप्नोति । एवं तर्हि चतुर्णां ग्रहणेऽभिप्रेते, असन्देहार्थं 'दीवेधीवीटाम्' इति ब्रूयात् । किञ्च 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' (व्या. प. १०८) । इटश्च इति । आर्धधातुकस्येडित्यागमस्य । ननु धातुसाहचर्यात् 'इट किट गतौ' (धा. पा. ३१८–३१९) इत्यस्य धातो[1]र्ग्रहणं युक्तम् ? सत्यम् । प्रसिद्धचतिशयादागमस्य ग्रहणम्, आगमो हि प्रसिद्धतरः[2] । [3]शास्त्रेऽल्पाच्तरत्वेन पूर्वनिपाताभावाच्च धातुरिट्, दीधीवेव्योस्तु धातुत्वात्प्रकृतित्वात् 'अभ्यर्हितं च' (वा. १०९) इति पूर्वनिपातः । अथ दीधीवेव्योः किमर्थं ग्रहणम्, यावता छान्दसावेतौ,[4] छन्दसि च दृष्टानुविधिः, दृश्यते च गुणः 'होत्रायं वृतः कृपयन्नदीधेत्', '[5]अधीधयुर्दाशराज्ञे' (ऋ ७.३३.५) इति, [6]अतस्तयोरनर्थकः प्रतिषेधः । केचिदाहुः, आदीध्यनमावेव्यनम् इत्युदाहरतो वृत्तिकारस्य नानयोश्छान्दसत्वमभिप्रेतम्, अन्यथा छन्दस्येव किञ्चिदुदाहार्यम् इति । इदं तु वार्तिकविरुद्धम् । यदाह—'दीधीवेव्योश्छन्दोविषयत्वात् दृष्टानुविधानाच्च छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः' इति । आदीध्यनम् इति । ल्युटि 'एरनेकाचः' (६.४.८२) इति यणादेशः । कणिता इति । 'कणिरणी शब्दार्थौ' (धा. पा. ४४९–४४५), लुटि तिपो डादेश[7]स्तासि टिलोपः, कणित् आ इति स्थिते तकारान्तं लघूपधमङ्गमिति प्राप्तस्य गुणस्य प्रतिषेधः । ननु च 'नेड्वशि कृति' (७.२.८) इत्यत इडित्यनुवर्तमाने 'आर्धधातुकस्येट्' (७.२.३५) इति पुनरिड्ग्रहणम् 'इडेव यथा स्यात्, विकारो मा भूत्' इत्येवमर्थं भविष्यति ? यद्येवम्, अलावीत्, [8]पिपठिषतेः क्विपि पिपठीरित्यत्र[9] 'अकः सवर्णे दीर्घः' (६.१.१०१), 'र्वोरुपधायाः' (८.२.७६) [10]इति [11]च दीर्घो न स्यात् । अङ्गप्रकरणे [12]नियमादाङ्ग एव विकारो निवर्त्यते, इह च पिपठिषतेर[13]प्रत्यये नपुंसके 'जसः शी' (७.१.१७), अतो लोपस्य स्थानिवत्वान्नुम्न भवतीति 'सान्तमहतः' (६.४.१०) इति दीर्घत्वं न भवतीति पिपठिषि ब्राह्मणकुलानीति भवति ॥

## ७. हलोऽनन्तराः संयोगः ।

हलोऽनन्तराः संयोगः ।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।

छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ (अमर. ३.३.१८०)

इत्यन्तरशब्दोऽनेकार्थः । इह[14] छिद्रवाचिनो ग्रहणम्, इतरेषामसम्भवात् । न विद्यतेऽन्तरं येषां तेऽनन्तराः निश्छिद्राः । एतमेवार्थं व्यक्तेन शब्दान्तरेण दर्शयति—भिन्नजातीयैरजिभरव्यवहिताः श्लिष्टोच्चारिता[15] इति । एवम्भूता

---

1. ग्रहणं युक्तम्—आगमस्य नास्ति 2. शास्त्रे इत्यधिकम् 3. वाक्यमिदं नास्ति 4. धातू इत्यधिकम् 5. अदीधयुर्दाशराज्ञे सुदासः 6. तयोः इत्यस्य स्थाने दीधीवेव्योः इति पाठः 7. तासः 8. पिपठिषेरप्रत्ययः 9. अत्र नास्ति 10. दीर्घ इकः इत्यधिकम् 11. च नास्ति 12. नियमः 13. अप्रत्यये इत्यस्य स्थाने क्विप्प्रत्यये इति पाठः 14. च इत्यधिकम् 15. हल इत्यधिकम्

हि हलो निश्छिद्रा भवन्ति। भिन्नजातीयैरिति वचनं तत्रैव व्यवधानप्रसिद्धेः। श्लिष्टोच्चारिता इति वचनादवग्रहेऽपि सञ्ज्ञा न भवति, अप्स्वित्यप्सु, विद्यते [1]ह्यत्रान्तरमर्धमात्राकालः। संयोग इति। यद्येकैकस्य हलः श्लिष्टोच्चारितस्यैषा सञ्ज्ञा स्यात्, इह [2]च निर्यायादित्यत्र[3] प्रत्येकं सञ्ज्ञित्वे सति, रेफे यकारः संयोग इति 'वान्यस्य संयोगादेः' (६.४.६८) इत्येत्वं स्यात्। समुदायस्य सञ्ज्ञित्वे 'अचो रहाभ्याम्' (८.४.४६) इति यकारस्य सत्यपि द्विर्वचने तस्यासिद्धत्वादेत्वाभावः, इह च संस्कृषीष्ट[4] 'ऋतश्च संयोगादेः' (७.२.४३) इतीट्, संस्क्रियत इति 'गुणोऽर्तिसंयोगाद्योः' (७.४.२९) इति गुणः, दृषत्करोतीति ककारसंनिधौ [5]दकारस्य संयोगत्वात् संयोगान्तलोपः स्यात्, शक्ता, वस्तेति झलि तकारे परतः 'स्कोः संयोगाद्योः' (८.२.२९) इति लोपः स्यात्, निर्यात इति 'संयोगादेरातः' (८.२.४३) इति निष्ठानत्वं स्यात्। समुदाये तु सञ्ज्ञिनि नैते दोषा इत्यालोच्याह—समुदायः सञ्ज्ञी इति। महासञ्ज्ञाकरणमन्वर्थसञ्ज्ञाविज्ञानार्थम्, संयुज्यन्तेऽस्मिन्मिथो हलः इति। नैरन्तर्यं च श्रुतं सञ्ज्ञिरूपेऽनुप्रविशतीति युक्तम्। प्रत्येकपक्षे तु तदुपलक्षणं स्यात्। अतः समुदाय एव सञ्ज्ञी युक्त इति भावः। हलः इति बहुवचननिर्देशात् द्वयोः सञ्ज्ञा न स्यादित्यशङ्क्याह—जातौ च इति। चशब्दो यस्मादर्थे, यस्माज्जातौ बहुवचनम् तेन द्वयोर्बहूनां चेति।

अथ यत्र बहवो हलः संश्लिष्टास्तत्र किं द्वयोर्बहूनां चाविशेषेण सञ्ज्ञा, आहोस्विद्बहूनामेव? यदि बहूनामेव, इह 'मस्जिनशोर्झलि' (७.१.६०) इत्यन्त्यादचः परे नुमि मन्स्ज् इति स्थिते नसजानामेका सञ्ज्ञा, न तु [6]सजयोरिति 'स्कोः संयोगाद्योः' (८.२.२९) इति सलोपो न स्यात्। नैष दोषः। मस्जेरन्त्यात् पूर्वं नुमेषितव्यः (वा. ७), मग्न इत्युपधालोपो यथा स्यात्। अन्यथा द्वयोस्सञ्ज्ञाश्रयेण सत्यपि [7]संयोगादिलोपे तस्यासिद्धत्वान्नलोपो न स्यात्। इह तर्हि निर्ग्लेयात्, संस्वरिषीष्ट, संस्वर्यते, निर्ग्लान इति एत्वेड्गुणनिष्ठानत्वानि न स्युः? अस्तु तर्ह्यविशेषेण। कुतः? निश्छिद्रत्वस्याविशेषात्। न च द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यम्। यथा द्विर्वचनं समुदायावयवैकाचोर्युगपत् कर्तुमशक्यम्, नैवमत्राशक्तिः। यथा च समुदाये द्विरुक्तेऽवयवा अपि द्विरुक्ता भवन्ति, वृक्षः प्रचलन् सहावयवैः प्रचलतीति न्यायेन, न च तथेह समुदाये प्रवृत्तया सञ्ज्ञयाऽवयवानां तत्कार्यसिद्धिः। अतो नायं द्विर्वचनन्यायस्य विषयः। अतोऽविशेषेण द्वयोर्बहूनां चेति स्थितम्। यद्येवम्, इन्द्रमिच्छति इन्द्रीयति, ततः सन् इन्दिद्रीयिषतीत्यत्र द्वौ संयोगौ, नदौ दरौ च, तत्र 'नन्द्राः' (६.१.३) इति [8]प्रतिषेधो नकारवद्दकारस्यापि स्यात्। न वाज्विधेः, अजादेरिति वर्तते, तत्र कर्मधारयात् पञ्चमी, आदेरचः परे नदरा न द्विरुच्यन्त इत्यर्थः। अग्निरित्यादीनि रूपोदाहरणानि। तिलान्स्त्यावपति इति। 'हे मपरे वा' (८.३.२६) इति वर्तमाने 'ङः सि धुट्' (८.३.२९) इति च 'नश्च' (८.३.३०) इति धुट् चर्त्वम्[9]। [10]तत्र यदा न धुट्, तदा नसतरयाः, यदा धुट् तदा नतसतरयाः। तितउच्छत्रम् इति। 'तनोतेर्डउः सन्वच्च' (उ. सू. ७४०) इति डउप्रत्ययः, व्यस्तोच्चारणसामर्थ्यात् गुणाभावः, सन्वद्भावात् द्विर्वचनमित्वं च, टिलोपः। संयोगान्तलोपः स्यात् इति। यद्यचोरप्यनन्तरयोः संयोगसञ्ज्ञा स्यादिति भावः। ननु च 'छे च' (६.१.७३) इति तुकि कृते तकारः पदान्तो न संयोगः? नैतदस्ति। 'छे च' (६.१.७३) इत्ययं तुग् ह्रस्वमात्रभक्तो न तदन्तग्रहणेन गृह्यत इति पदं संयोगान्तमेव। पचतीति रूपप्रत्युदाहरणम्, पनसमिति कार्यप्रत्युदाहरणम्। स्कोःसंयोगाद्योरिति लोपः स्यात् इति। यदि सकारमकारयोः सान्तरयोरपि [11]संयोगसञ्ज्ञा स्यादिति भावः॥

## ८. मुखनासिकावचनोऽनुनासिकः।

मुखनासिकावचनोऽनुनासिकः। यद्यत्र 'मुखं च नासिका च' इति द्वन्द्वः स्यात्, 'द्वन्द्वश्च प्राणितूर्याङ्गाणाम्' सूत्रेण (२.४.२) एकवद्भावः स्यात्, ततश्च 'स नपुंसकम्' (२.४.१७) इति नपुंसकत्वे, 'ह्रस्वो नपुंसके' (१.२.४७) इति ह्रस्वत्वे

1. हि इत्यस्य स्थाने एव इति पाठः 2. हि 3. अत्र प्रत्येकं संज्ञित्वे 4. इति इत्यधिकम् 5. तकारस्य 6. सजोरिति 7. संयोगादित्वेन सलोपे 8. निषेधो 9. च इत्यधिकम् 10. तत्र नास्ति 11. संयोग नास्ति

[1]च 'मुख[2]नासिक[3]वचनः' इति प्राप्नोतीत्युत्तरपदलोपिनं तत्पुरुषं दर्शयति—मुखसहिता नासिका इति। तयोच्चार्यत इति। एतेन 'कृत्यल्युटो बहुलम्' (३.३.११३) इति[4] [5]कर्मणि ल्युटं दर्शयति। तया इति करणे[6] कर्तरि वा [7]तृतीया, करणस्यैव कर्तृत्वेन [8]विवक्षणात्। सूत्रेऽपि मुखनासिकावचनः इति 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति तृतीयासमासः षष्ठीसमासो वा। अनुस्वारस्यैव हि स्यात् इति। [9]तस्मिन्नुच्चार्यमाणे नासिकाया एव व्यापारो न मुखस्य, तेन तस्यैव स्यात्, न तु ञमङणनानाम्, नाप्यत्र आँ अय इत्यस्य, तदुच्चारणे मुखस्यापि व्यापारादित्येवकारेण दर्शयति। ननु यथा 'प्रासादवासिन आनीयन्ताम्' इत्युक्ते ये प्रासाद एव [10]निवसन्ति, ये च प्रासादभूमौ च, ते द्वयेऽप्यानीयन्ते, प्रासादवासान्वय[11] उभयेषामस्तीति, तथेहापि[12] 'नासिकावचनः' इत्युक्ते यः [13]केवलनासिकावचनः, यश्च मुखनासिकावचनः, उभयोरपि ग्रहणं भविष्यति, नासिकान्वयस्य[14] विवक्षितत्वात्। तत्किमुच्यतेऽनुस्वारस्यैव हि स्यादिति, अनुस्वारस्यापि हि स्यादिति तु[15] वक्तव्यम्? उच्यते। इह त्रीणि दर्शनानि, कृत्स्न एवानुनासिको मुखेन नासिकया चोच्चार्यते, पूर्वो भागो मुखेन परो नासिकया, विपरीतं वा। नासिक्यभागानु[16]रागाच्चेतरोऽपि[17] भागस्तद्वदेव भासते इति। तत्रोत्तरस्मिन्दर्शनद्वये नासिकान्वयस्य भागविषयत्वान्नासिकावचनग्रहणेनोभयवचनो न गृह्यते इति सुष्ठूक्तम्—अनुस्वारस्यैव हि स्यात् इति। कचटतपानां मा भूत् इति। ते हि मुखेनैवोच्चार्यन्ते इत्यसति नासिकाग्रहणे तेषामेव स्यात्, ततश्च [18]तप्तुमिति 'अनुदात्तोपदेश' (६.४.३७) इत्यनुनासिकलोपः स्यात्, ओदनपक् इति 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५) इति दीर्घः स्यादिति महासञ्ज्ञाकरणमन्वर्थसञ्ज्ञाविज्ञानार्थम्, अनु पश्चान्मुखस्य नासिका व्याप्रियते यस्मिन्, नासिकायाः वा पश्चान्मुखं व्याप्रियते यस्मिन् इति। तेन भागविषयो नासिकाव्यापार इति सूचनात् प्रासादवासिन्यायस्यायमविषय इत्युक्तं भवति॥

## ९. तुल्यास्यप्रयत्नं सवर्णम्।

तुल्यास्यप्रयत्नं सवर्णम्। तुल्यशब्दोऽयं यद्यपि तुलया संमितं तुल्यमिति 'नौवयोधर्म'(४.४.९१) इति यतमुत्पाद्य व्युत्पाद्यते, तथापि व्युत्पत्त्यर्थमेव तुलोपादीयते, रूढशब्दः[19]तु अयं प्रवीणः, प्रतिलोमादिवदित्याह—तुल्यशब्दः सदृशपर्याय इति। ननु 'नौवयोधर्म' (४.४.९१) इत्यत्र वक्ष्यति, 'यथा तुला द्रव्यान्तरं परिच्छिनत्ति, तथा तुल्यमपि सादृश्येन परिच्छिनत्तीत्येतत्तुलया तुल्यस्य साधर्म्यम्' इति। सत्यम्, न ह्येवं लौकिकाः प्रतियन्ति। तथा हि तुल्य इत्युक्ते सदृश इति प्रत्ययो भवति, न [20]तु कश्चिदवयवार्थः प्रतीयते। आस्ये भवमास्यम् इति। लोकसिद्धं तावदास्यमोष्ठात्प्रभृति प्राक्काकलकात्, अस्यन्ते क्षिप्यन्तेऽनेन वर्णा इति कृत्वा। [21]काकलकं नाम ग्रीवाया उन्नतप्रदेशः। इह तु तस्मिन्नास्ये भवमास्यमित्यर्थः। 'दिगादिभ्यो यत्' (४.३.५४), 'शरीरावयवाच्च' (४.३.५५) इति यत्प्रत्ययः। किं पुनस्तदित्याह—ताल्वादिस्थानम् इति। यस्मिन्वर्णा निष्पद्यन्ते तत्स्थानम्। आदिशब्देन नासिकादीनां ग्रहणम्। नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तम्, किं तर्हि, अन्तरास्ये चर्मविततमस्ति [22]पणवचर्मवत्, तत्सम्बद्धा रेखा नासिका, तस्यां वायुनाभिहतायां वर्णोत्पत्तिः। यदि पुनर्लौकिकमास्यं [23]गृह्येत, तदा तुल्यास्यप्रयत्नमिति द्वन्द्वगर्भो बहुव्रीहिः स्यात्, आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तौ तुल्यौ यस्येति, त्रिपदो वा बहुव्रीहिः, तुल्य आस्ये प्रयत्नो यस्येति। तत्र द्वन्द्वगर्भे[24] आस्यग्रहणं व्यर्थं स्यात्, सर्वेषां हि तत्तुल्यम्। विसर्जनीयस्यैकीयमतेनोरस्यत्वात् सावर्ण्याभावे[25]ऽपि न दोषः। त्रिपदे तु बहुव्रीहावास्येन प्रयत्नस्य विशेषितत्वाद्बा[26]ह्याः प्रयत्ना हापिता भवन्ति, किन्तु ताल्वादिस्थानं तुल्यत्वेनाविशेषितं स्यात्। ततश्च

1. च नास्ति 2. नासिकम् 3. वचनः नास्ति 4. करणसाधने वचनशब्दे टित्वात् ङीपा भवितव्यमिति दोषात् कर्मसाधन आश्रित इति भावः इत्यधिकम्। 5. कर्मणि ल्युटं दर्शयति नास्ति 6. तृतीया इत्यधिकम् 7. तृतीया नास्ति 8. विवक्षितत्वात् 9. तस्मिन्नह्युच्चारणे 10. सन्ति 11. तु इत्यधिकम् 12. अपि नास्ति 13. केवलो 14. उभयत्र इत्यधिकम् 15. तु नास्ति। 16. अनुरागाद् इत्यस्य स्थाने अनुरोधाद् इति पाठः 17. अपि नास्ति 18. तप्तमिति। 19. च 20. तु नास्ति 21. काकल 22. पणवचर्मवत् नास्ति 23. गृह्यते 24. बहुव्रीहौ इत्यधिकम् 25. अपि नास्ति 26. आस्यात् नास्ति

भिन्नस्थानानामपि जबगडदानां सवर्णसञ्ज्ञा प्राप्नोति । तत[1] ऊर्ग्ज इति 'झरो झरि' (८.४.६५) इति गकारस्य जकारे लोपः स्यात् । अतस्तद्धितान्तस्यैव ग्रहणम् । तत्रापि यदि द्वन्द्वगर्भो बहुव्रीहिः स्यात्, स्थानेन प्रयत्नो न[2] विशेषितः स्यात्। ततश्च ककारङकारयोर्मिथः सवर्णसञ्ज्ञा न स्यात्, बाह्यप्रयत्नस्य भिन्नत्वात् । ततश्च शङ्कितेति 'अनुस्वारस्य ययि परसवर्णः' (८.४.५८) इति ङकारो न स्यात् । अथ सत्यपि बाह्यप्रयत्नभेदे आभ्यन्तरस्य प्रयत्नस्याभेदमाश्रित्य [3]सञ्ज्ञा स्यात्, [4]चकारशकारयोरपि सत्याभ्यन्तरभेदे बाह्याभेदमाश्रित्य [5]सवर्णसञ्ज्ञा प्राप्नोति । ततश्च अरुश्च्योततीति [6]वक्ष्यमाणप्रत्युदाहरणं नोपपद्यते इतीमं दोषं दृष्ट्वा त्रिपदोऽयं बहुव्रीहिरिति दर्शयति— तुल्य आस्ये प्रयत्नो यस्य इति। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेति 'अमूर्धमस्तकात्' (६.३.१२) इत्यलुङ् न भवति। नन्वस्मिन्नपि पक्षे भिन्नविभक्तिकत्वात् [7]प्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं स्यात्, नैवात्रास्यं तुल्यतया विशेष्यते, भेदनिबन्धना हि तुल्यता । न च [8]कखगघङां भिन्नं स्थानम्, एकत्वात्कण्ठस्य । किन्तु तद्धितान्तस्यास्यशब्दस्याश्रयणसामर्थ्यादास्य इत्येकत्वं विवक्षितम्। तेनैकस्मिन्नेव ताल्वादिके स्थाने यः प्रयत्नः, स तुल्यो ययोरित्याश्रयणान्न कश्चिद्दोषः । समानजातीयं प्रति इति । एतच्च सञ्ज्ञाविधानसामर्थ्याल्लभ्यते, अन्यथा यत्किञ्चनवर्णापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं स्यात्, सवर्णसञ्ज्ञाविधानमनर्थकं स्यात् । न च [9]रेफोष्मनिवृत्त्यर्थं वचनम्, रेफस्यापि रेफः सवर्ण [10]एव, एवमूष्मस्वपि द्रष्टव्यम् । सम्बन्धिशब्दत्वाद्वा, सबन्धिशब्दो हि तुल्यास्यप्रयत्नशब्दः, ततश्च यथा तुल्याय कन्या दातव्येत्युक्ते दात्रा तुल्यायेति गम्यते, तथेहापि । अथ वा महती सञ्ज्ञा क्रियते अन्वर्था यथा विज्ञायेत समानोऽस्य वर्णः सवर्ण इति । यदि च समानजातीयमेव प्रति सवर्ण[11]सञ्ज्ञा भवति, एवं समानोऽस्य वर्णो भवति ।

चत्वार इत्यादि । द्विविधाः प्रयत्नाः, बाह्याः आभ्यन्तराश्च । तत्राभ्यन्तराश्चत्वारो [12]वृत्तौ दर्शिताः । आभ्यन्तरत्वं पुनरेषाम् स्थानकरणव्यापारेण, उत्पत्तिकाल एव भावात् । स्थानं ताल्वादि, करणं जिह्वाया अग्रोपाग्रमध्यमूलानि। बाह्याः पुनरेकादश—विवारः, संवार, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्चेति। बाह्यत्वं पुनरेतेषाम्[13]वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पत्तेः । तत्र स्पृष्टकरणाः स्पर्शाः, कादयो मावसानाः स्पर्शाः । स्पृष्टं स्पृष्टतागुणः, करणं कृतिरुच्चारणप्रकारः, स्पृष्टतानुगतं करणं येषां ते तथोक्ताः । एव[14]मन्यत्रापि । ईषत्स्पृष्टकरणाः अन्तस्थाः, यरलवा अन्तस्थाः । विवृतकरणाः ऊष्माणः स्वराश्च, शषसहा ऊष्माणः, स्वराः सर्व एवाचः । वर्गाणां प्रथमद्वितीयाः, शषसविसर्जनीयजिह्वामूलीयोपध्मानीयाः, यमौ च प्रथमद्वितीयौ, विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्गयमानां प्रथमेऽल्पप्राणाः, इतरे महाप्राणाः । वर्गाणां तृतीयचतुर्थाः, अन्तस्थाः, हकारानुस्वारौ, यमौ[15]तृतीयचतुर्थौ, संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च । वर्गयमानां तृतीयाः, अन्तःस्था अल्पप्राणाः, इतरे महाप्राणाः । यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः । तत्र यमा नाम वर्गेष्वादितश्चतुर्णाम्, पञ्चमेषु परतः [16]त एव नासिक्या भवन्ति । तद्यथा, [17]पलिक्क्नीरित्, चख्ख्नतुः, आग्म्नायः, जघ्घ्नतुः, अप्नस्वतीमित्यादि । [18]य एते [19]द्विविधाः [20]प्रयत्नाः तेषामिह सवर्णसञ्ज्ञायामाभ्यन्तराः स्पृष्टतादयश्चत्वार एवाश्रीयन्ते, न विवारादयो बाह्याः, आस्यग्रहणेन तेषां निर्वर्तितत्वात् । अ अ अ इत्यादि । अत्र सवर्णसञ्ज्ञो भवतीति, प्रकृतं बहुवचनान्तं विपरिणतमनुषज्यते, त्रयोऽकारा मिथः सवर्णसञ्ज्ञा भवन्तीत्यर्थः । कथं त्रयोऽकाराः, यावता प्रत्युच्चारणं भेदेऽनन्ताः, अभेदे त्वेक एव ? तत्राह—उदात्त इति । अनेन प्रकारेण त्रय इत्यर्थः । एवं च त्रयः इत्यस्य त्रिविधा इत्यर्थो भवति । तत्राकुहविसर्जनीयाः कण्ठ्याः, इचुयशास्तालव्याः, [21]उपूपध्मानीया ओष्ठ्याः ऋटुरषा मूर्धन्याः, लृतुलसा दन्त्याः, ए ऐ कण्ठतालव्यौ, ओ औ कण्ठोष्ठ्यौ, वकारो दन्तोष्ठ्यः, इत्येवं तुल्यस्थानप्रयत्नाः सर्वेऽकारादयो मिथः सवर्णसञ्ज्ञा भवन्तीति । अन्तःस्था द्विप्रभेदा इति । अत्रापि पूर्ववदनुषङ्गः । अन्तःस्था इत्युक्तेऽपि रेफनिवृत्त्यर्थं स्वरूपेण पठति । यवला इति । रेफोष्मणां सवर्णा न सन्ति इति । विजातीयाभिप्रायमेतत् । सजातीयास्तु रेफोष्माणस्तुल्यस्थानप्रयत्नास्सवर्णा

1. च इत्यधिकम् 2. न नास्ति 3. सवर्ण इत्यधिकम् 4. एवमपि इत्यधिकम् 5. सवर्ण नास्ति 6. वक्ष्यमाणं 7. अप्राधान्यात् 8. कखगघङानां 9. रेफोष्मणां निवृत्त्यर्थं 10. एव नास्ति 11. संज्ञो 12. वृत्तौ नास्ति 13. एषाम् 14. अन्येऽपि 15. च इत्यधिकम् 16. तस्य स एव नासिक्यो भवति 17. पलिक्नीचित् 18. य नास्ति 19. द्विप्रकाराः 20. प्रयत्नाः नास्ति 21. उपूपध्मानीया ओष्ठ्याः नास्ति

भवन्त्येव। तत्र रेफस्य तावद्यवला भिन्नस्थानाः, ऋटुरषा भिन्नप्रयत्नाः, अन्ये भिन्नस्थानप्रयत्नाः। एवमूष्मणामपि सवर्णाभावो वेदितव्यः।

वर्ग्यं इत्यादि। वर्गे भवो वर्ग्यः, दिगादित्वाद्यत् (४.३.५४)। वर्ग्येण [1]स्ववर्गान्तःपातिना, तद्यथा ककारः खकारेण। तर्प्ता इति। 'तृप् प्रीणने' (धा. पा. ११९६)। इचुयशानाम् इति। एषां मध्ये येषां प्रसङ्गः, तेषां मा भूदित्यर्थः। अरुश् श्च्योतति इति। 'श्चुतिर् क्षरणे' (धा. पा. ४१) अरुःशब्दस्य रुत्वविसर्जनीययोः 'वा शरि' (८.३.३६) इति सकारः, तस्यापि [2]श्चुत्वे शकारः।

ऋकारऌकारयोः इति। स्थानभेदान्न प्राप्नोतीत्यारम्भः। श्रुतत्वाच्चानयोरेव मिथः [3]सवर्णसञ्ज्ञा विधीयते, न त्वेतयोरन्येन सह। होतृकार इति। कथं पुनरत्र[4] [5]समुदायिनोऽन्तरतमो भवति न समुदायस्य, तत्रापि ऋकारस्यैव न न ऌकारस्येत्यत आह—उभयोः इत्यादि। उभयोरन्तरतमो दीर्घो न सम्भवति, ऌकारस्यापि दीर्घो न सम्भवतीत्यत ऋकार एव भवत्युभयोरित्यर्थः। ननु च नैतत्सवर्णसञ्ज्ञायाः प्रयोजनम्? कथम्? 'अकः सवर्णे' (६.१.१०१) इत्यत्र [6]तु वक्ष्यति 'ऋति ऋ वावचनम्' (वा. ६९०), 'ऌति ऌ वावचनम्' (वा. ६९१) इति। तत्र चायमर्थः: [7]अकां [8]सवर्णे ऋति [9]परतो वा ऋ भवति। द्विमात्रोऽयम्, मध्ये द्वौ रेफौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरा, ईषत्स्पृष्टश्चायम्। तत्र प्रयत्नभेदादृकारेणाग्रहणात् अनण्त्वाद्दीर्घसञ्ज्ञायाः अभावादप्राप्तोऽयं विधीयते। ऌति ऌ वावचनमित्ययमपि द्विमात्र ईषत्स्पृष्टश्च, मध्ये द्वौ लकारौ, तयोरेका मात्राभितोऽज्भक्तेरपरा। पूर्ववदप्राप्तो विधीयते। तत्र [10]ऋति ऋ[11] वावचनमित्यत्र वाशब्दो दीर्घस्य समुच्चयार्थः, तेनाप्राप्त एव दीर्घो भविष्यति। ननु यद्यविधायैव सवर्णसञ्ज्ञां तदुच्यते, ततोऽक इति सम्बन्धादङ्मात्रस्य ऌति तत्कार्यं स्यात्, दध्यॢकारः, मध्वॢकार इति, सञ्ज्ञाविधाने तु [12]ऋकार ऋकारस्यैव सवर्ण इति तत्रैव व्यवस्थितं भवति। तस्माद्विधेया सवर्णसञ्ज्ञा। न विधेया। यदेतत् ऋतीति [13]एतद्वृत इति वक्तव्यम्, सवर्ण इत्येव, ऋकारस्य ऋकार एव सवर्णः इति ऋत्येव भविष्यति। तत ऌति, ऋत इत्येव। इदं चासवर्णार्थम्, तेन ऌति रूपद्वयं सिद्धम्, होतृकारः होत्ॢकार इति। तन्न वक्तव्यं भवति। कथम्? ऋ वावचनम्, ऌ वावचनमिति [14]ब्रुवतापि तयोरत्त्वं वक्तव्यम्, अन्यथा विधानमात्रमनयोः स्यात्, न [15]त्वच्कार्यः प्लुतः। सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्यात् ग्रहणे सति प्लुतसञ्ज्ञा भवतीति प्लुतसिद्धिः। एवं च होतृ ऋकार इति ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ऋ भविष्यति, कदाचिद्विवृत शुद्धो दीर्घः। ऌकारेऽपि कदाचिदृकारान्तरतम ऋकारः, कदाचित् ऌकारान्तरतम ऌकार इति। सत्यम्। सवर्णसञ्ज्ञायां तन्न वक्तव्यं भवति, तद्वोच्येत, इदं वा, को [16]न्वत्र विशेषः। इदं [17]वाऽवश्यं वक्तव्यम्, [18]इदमपि सिद्धं भवति, 'ऋत्यकः' (६.१.१२८) खट्वॢकारः, मातॢकारः, 'वा सुप्यापिशलेः' (६.१.९२) उपॢकारीयति, उपाल्कारीयतीति। ऋदितामॢदितां च धातूनां पृथगुपदेशसामर्थ्यादनुबन्धकार्याणामसङ्करः॥

## १०. नाज्झलौ।

नाज्झलौ। अत्राज्झलौ न केनापि सवर्णसञ्ज्ञौ भवत इति तावदर्थो न भवति सञ्ज्ञाया निर्विषयत्वात्। एतावन्तो वर्णा अचश्च हलश्च। नाप्यचामज्भिर्हलां हल्भिः सवर्णत्वनिषेधः, अत एव निर्देशात्। अन्यथाऽकारस्याकारे दीर्घो न स्यान्नाजिति, नाप्यज्झलाविति पूर्वसवर्णः। तस्मादचां हलां च मिथः सवर्णसञ्ज्ञा निषिध्यते। तत्र च यद्यपि 'नाज्झलौ' इति सामान्येनोक्तम्, तथाप्यकारहकारयोरिकारशकारयोश्च प्राप्तिरिति तत्रैव निषेधः। यद्येवम्, नाण्शलाविति वक्तव्यम्, न तावदेवं लाघवे विशेषः। किं च प्रागुक्तं पक्षद्वयं सम्भाव्येत। अच्च हल् च इति। अनेन नात्राज्झलोर्निर्देश इति दर्शयति। तत्रापि न दोषः कश्चित्, किन्तु पक्षान्तरसम्भावनैव। तुल्यास्यप्रयत्नाविति प्रसङ्गे हेतुमाह—सवर्णदीर्घत्वं न भवतीति।

---

1. स्व नास्ति 2. श्चुत्वं 3 सवर्ण नास्ति 4. अत्र नास्ति 5. सुमुदायिनोऽन्तरतमो 6. तु नास्ति 7. अकः 8. सवर्णे नास्ति 9. सवर्णे इत्यधिकम् 10. ऋति नास्ति 11. ऌ 12. ऌकार 13. तद्वृत 14. वदता 15. त्वच्कार्यं 16. चात्र 17. वा नास्ति 18. इत्येतदपि

प्रतिषेधस्य फलं दर्शयति । ननु दीर्घविधावचीत्यनुवर्तते, तच्चावश्यमनुवर्त्यम् । कुमारी शेते इत्यत्र मा भूदिति, न ह्यत्रानेन निषेधः सिद्धयति । किं कारणम् ? वाक्यापरिसमाप्तेः । इह हि वर्णानामुपदेशः पूर्वम्, तत इत्सञ्ज्ञा, ततः 'आदिरन्त्येन सहेता' (१.१.७१) इति प्रत्याहारः, ततः 'नाज्झलौ' (१.१.१०) इत्यस्य निष्पत्तिः, [1]तस्मिंश्च निष्पन्ने सत्यपवादविषयपरिहारेणेष्टविषये सवर्णसञ्ज्ञा प्रवर्तते, न त्वेतत्सूत्रनिष्पत्तिसमये । ततश्च 'अणुदित्सवर्णस्य च' (१.१.६९) इत्येतत्स्वाङ्गभूतेषु उपदेशेत्सञ्ज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेषु 'अस्य च्वौ' (७.४.३२) इत्यादिषु [2]वर्तते, न त्वङ्गेषूपदेशादिष्विति 'नाज्झलौ' इत्यगृहीतसवर्णानामचां ग्रहणमिति सिद्धम् । अवश्यं चागृहीत[3]सवर्णानामेवाचां ग्रहणमेष्टव्यम्, अन्यथा [4]ह्यजि गृह्यमाण इकारः शकारस्य ग्राहकः स्यात् । न चास्मिन्नपि सूत्रेऽयमेव निषेधः, स्वात्मनि क्रियाविरोधात् । अतोण्ग्रहणेनापि शकारस्य[5] ग्रहणम्, हल्षु चोपदेशाद्धल्ग्रहणेनापीति शकारद्वयस्य मिथः सवर्णसञ्ज्ञा न स्यात् । ततश्च 'परःशतानि कार्याणि' इत्यत्र शतात्पराणि शतादधिकानीति[6] विगृह्य 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति बहुलवचनात्समासे पारस्करादित्वात्सुटि (६.१.१५७) कृते, 'अनचि च' (८.४.४७) इति शकारस्य [7]द्विर्वचने, परश्शतानीति स्थिते मध्यमस्य शकारस्य 'झरो झरि सवर्णे' (८.४.६५) इति लोपो न स्यादिति सर्वदा शकारत्रयश्रवणप्रसङ्गः । अतो गृहीतसवर्णानामचां[8] ग्रहणादीकारशकारयोरप्रतिषिद्धं सवर्णत्वमिति 'कुमारी शेते' इत्यत्र मा भूदिति दीर्घविधौ 'अचि' [9]इत्यनुवर्त्य तदनुवृत्तिसामर्थ्याच्चाजेव योऽज् न कथञ्चन हल्, तत्रैव दीर्घत्व[10]विज्ञानाद्धकारशकारयोरकारेकाराभ्यां सावर्ण्येन ग्रहणादच्त्वे सत्यपि हल्त्वस्यापि भावाद्दीर्घाभावः सिद्धः । सत्यम् । अज्ग्रहणमप्यन्यार्थमनुवर्त्यम्, इदमपि वैपाशो मत्स्यः, आनडुहं चर्मेत्यत्र [11] 'यस्येति' (६.४.१४८) लोपाभावार्थं कर्तव्यम् । दण्डहस्तो दधि शीतमित्येतदुभयथापि सिद्धयतीति प्रदर्शनार्थमुदाहरणद्व[20]यमुपन्यस्तम् । वैपाश इति भवार्थेऽण् (४.३.५३) । आनडुहमिति विकारे 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४) ॥

## ११. ईदूदेद्द्विवचनं प्रगृह्यम् ।

ईदूदेद्द्विवचनं प्रगृह्यम् । अत्र चत्वारः पक्षाः सम्भवन्ति । ईदादि विशेष्यम्, द्विवचनं विशेषणम्, तत्र द्विवचनान्तत्वमीदादेर्न सम्भवतीति द्विवचनसञ्ज्ञकमीदादि प्रगृह्यमिति प्रथमः पक्षः । ईदादि विशेषणम्, द्विवचनं विशेष्यम्, विशेषणेन तदन्तविधावीदाद्यन्तं द्विवचनमिति द्वितीयः पक्षः । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति पश्चात् द्विवचनान्तस्येदादिभिर्विशेषणादीदाद्यन्तं द्विवचनान्तमिति तृतीयः[13] । ईदादिविशिष्टेन द्विवचनेन तदन्तविधावीदाद्यन्तं यत् द्विवचनम् तदन्तं प्रगृह्यमिति चतुर्थः । तत्राद्ये पक्षे अग्नी, वायू, खट्वे इत्यादावेव स्यात्, एकादेशस्य परं प्रत्यादिवद्भावेन द्विवचनमीदादीति, पचेते, पचेथे, पचावहे इत्यादावेकारमात्रस्याद्विवचनत्वान्न स्यात् । तृतीये तु, कुमार्योरगारं कुमार्यगारम्, वध्वोरगारं वध्वगारम्, इत्यत्रापि स्यात्, एतद्धि प्रत्ययलक्षणेन द्विवचनान्तमीदाद्यन्तं[14]च श्रूयते । यथा हि तावकीन इत्यादावादेशेन सङ्ख्याविशेषो व्यज्यते, तथेहापि सत्यां प्रगृह्यसञ्ज्ञायां प्रकृतिभावेन द्वित्वमभिव्यज्येतेति स्यात् द्विवचनान्तस्यापि समासः । चतुर्थे कुमार्यगारमित्यादावप्रसङ्गः, द्विवचनस्यानीदाद्यन्तत्वात्, किन्त्वशुक्ले[15] शुक्ले सम्पद्येते शुक्ल्यास्तां वस्त्रे, अत्रापि प्राप्नोति । कथम् ? शुक्लशब्दाद्वस्त्रवृत्तेर्द्विवचनमौ, 'नपुंसकाच्च' (७.१.१९) इति शीभावः ततश्च्विः, शीशब्दस्य 'सुपो धातु' (२.४.७१) इति[16] लुक्, 'अस्य च्वौ' (७.४.३२) तद्धितान्तत्वात्सुः, अव्ययत्वाल्लुक्, अत्र शीशब्द ईकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसञ्ज्ञा प्राप्नोति । अयं च तृतीये[17]ऽपि पक्षे समानो दोषः । [18]किं च सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् तदन्तपक्षोत्थानमेव नास्ति, अतो द्वितीयं पक्षमाश्रित्याह—ईत्, ऊत्, एत् इत्येवमन्तं द्विवचनम् इति । नन्वस्मिन्नपि पक्षे ईदूतोः केवलयोरेव सम्भव इत्यग्नी इत्यादि

---

1. अस्मिन् 2. प्रवर्तते 3. विशेषाणां 4. हि नास्ति 5. अपि इत्यधिकम् 6. वा इत्यधिकम् 7. द्वित्वे कृते 8. इह इत्यधिकम् 9. इत्यनुवर्तनीयम् 10. विधानात् 11. च इत्यधिकम् 12. द्वय नास्ति 13. पक्षः इत्यधिकम् 14. च नास्ति 15. वस्त्रे इत्यधिकम् 16. सुपो इत्यधिकम् 17. अपि नास्ति 18. किं च... ...तदन्तपक्षोत्थानमेव नास्ति

यद्यपि सिध्यति, [1]तथाप्येकारान्तस्य तु द्विवचनस्य पचेते इत्यादौ सम्भवात्तत्रैव स्यात्, न खट्वे इत्यादौ ? व्यपदेशिवद्भावेनात्रापि भविष्यति । किं पुनरत्र प्रमाणमयमेव पक्ष आश्रीयत [2]इति ? तृतीयचतुर्थयोस्तावदसम्भव एव, सञ्ज्ञाविधौ प्रत्यय[3]ग्रहणे तदन्त[4]विधिप्रतिषेधात् । सञ्ज्ञायाश्च सञ्ज्ञ्यपेक्षायामनन्तरश्रुतं द्विवचनमेव [5]सञ्ज्ञीत्युक्तमिति प्रथमस्या-[6]प्यसम्भवः । अत्र चतुर्थः पक्षोऽसम्भवादेव निरस्तः, न दोषवत्त्वात् । शुक्ल्यास्तां वस्त्र इत्यत्र हि 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या. प. १२८) इति अन्तरङ्गमपि शीभावं बाधित्वा 'सुपो धातु' (२.४.७१) इति लुकि कृतेऽनीकारान्तं द्विवचनं भवति । अग्नी इत्यादौ प्रगृह्यत्वात् 'प्लुतप्रगृह्या अचि' (६.१.१२५) इति प्रकृतिभावः । प्रत्युदाहरणेषु तदभावात् स्वरसन्धिः । तपरकरणं गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत्, [7]न, अभेदकत्वात् गुणानाम् । भिन्नकालानाम् निवृत्त्यर्थमिति चेत्, [8]न, ईदूतोरनण्त्वात् । स्यादेतत्, जातिपक्षे यद्यपि दीर्घोच्चारणसामर्थ्यात् प्रयत्नाधिक्यात् अकुर्वह्यत्रेत्यादौ ह्रस्वानां न स्यात्, प्लुतानां तु स्यादेव, एकारस्य त्वण्त्वादपि प्लुतस्य प्रसङ्गः, [9]अतः [10]प्लुतनिवृत्त्यर्थं तपरकरणमिति । तन्न, इष्टत्वात् ।

किमर्थं पुनः प्लुतानां प्रगृह्यसञ्ज्ञेष्यते ? प्रगृह्याः प्रकृत्येति प्रकृतिभावो यथा स्यात् । मा भूदेवम्, प्लुतः प्रकृत्येत्येव[11] भविष्यति ? यत्र तर्हि प्लुताश्रयः प्रकृतिभावः प्रतिषिध्यते, 'अप्लुतवदुपस्थिते' (६.१.१२९) इति, तत्र प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात्, अग्नी३ इतीति[12] । इह च अग्नी३ [13]अप्रगृह्यस्येत्यनुनासिकपर्युदासो यथा स्यात् । अतः प्लुतानामपि प्रगृह्यसञ्ज्ञाया इष्टत्वान्न तन्निवृत्त्यर्थमपि तपरकरणमित्यत आह—तपरकरणमसन्देहार्थम् इति । असति हि तस्मिन् समाहारद्वन्द्वे नपुंसकह्रस्वत्वे च कृते ब्वोति निर्देशे सन्देहः स्यात्, इतरेतर[14]योगद्वन्द्वेऽपि सन्देह एव । तस्मादसन्देहार्थं तपरकरणम् । यद्यसन्देहार्थमपि तपरत्वं क्रियते, तदेव प्लुतस्येष्टां सञ्ज्ञां [15]व्यावर्तयति तत् प्लुतस्य कथं सञ्ज्ञा ? मा भूत् प्लुतस्य, [16]तस्य [17]त्वसिद्धत्वात् स्थानिनि प्रवृत्ता सञ्ज्ञा स्वरसन्धिमनुनासिकं च प्रतिभन्त्स्यति, सिद्धः प्लुतः स्वरसन्धिषु, प्लुतः प्रकृत्येति लिङ्गात् । अन्यथा कार्यिणोऽसत्त्वात्कस्य प्रकृतिभावो [18]विधीयेत ? यस्य च विकारप्रसङ्गः, प्लुतप्रकरणे तस्य प्रकृतिभावो विधेयः, प्लुतस्यासिद्धत्वेन तस्य विकाराप्रसङ्ग इति प्लुतस्यासतः प्रकृतिभावविधानमनु[19]पपन्नम् । अस्तु स्वरसन्धिप्रकरणे प्लुतः सिद्धः, सञ्ज्ञाविधावसिद्धः । सञ्ज्ञाविधौ च सिद्धः । कथम् ? 'कार्यकालं सञ्ज्ञापरिभाषम्' (व्या. प. ५८) । ततश्च प्रगृह्यः प्रकृत्येत्यत्रा[20]स्योपस्थानात्सञ्ज्ञापि स्वरसन्धिप्रकरणान्तर्गता । एवं तर्हि सिद्धः प्लुतः स्वरसन्धिष्विति नाश्रीयते, प्लुतभावी प्रकृत्येति स्थानिन एव प्रकृतिभावो विधास्यते । एवमप्यनुनासिकपर्युदासो न सिध्यति, कार्यकालपक्षे सञ्ज्ञायामपि प्लुतस्य सिद्धत्वात् । [21]एवं तर्हि 'यथोद्देशं सञ्ज्ञापरिभाषम्' (व्या. प. ५९)। ततश्चास्मिन् प्रदेशे सञ्ज्ञायां क्रियमाणायां प्लुतस्यासिद्धत्वात्, स्थानिनि प्रवृत्ता सञ्ज्ञा स्वरसन्धिमनुनासिकं च प्रतिभन्त्स्यति । ननु यद्यपि सञ्ज्ञायामसिद्धः प्लुतः, अनुनासिकपर्युदासे तु सिद्धः, ततश्च यस्यानेन सञ्ज्ञा कृता द्विमात्रस्य, न सोऽनुनासिकविधिं प्रति [22]स्थानी, किन्तु त्रिमात्र एव । न च स्थानिवद्भावात्तस्यापि प्रगृह्यत्वम्, अल्विधित्वात् । अवश्यं च 'सिद्धः प्लुतः स्वरसन्धिषु' इत्याश्रयणीयम्, दण्ड आ३ढकमिति प्लुतस्य [23]सवर्णदीर्घेण निवृत्तिर्यथा स्यात् । तथा [24]च 'अ इ उ ण्' (मा. सू. १) इत्यत्र सर्वैरेव ग्रन्थकारैरुक्तम् । तथा सुश्लोका३ इति सुश्लोकेति, अत्रापि 'अप्लुतवदुपस्थिते' (६.१.१२९) इति प्लुताश्रये प्रकृतिभावे प्रतिषेद्धे गुणो भवन् प्लुतमेव निवर्तयति, न तु स्थानिनम्, अन्यथा [25]ह्यादेशरूपे प्लुतः श्रूयेत । तदिह यथोद्देशेऽपि सञ्ज्ञापरिभाषे कथमि[26]वेष्टसिद्धिः, कथं वा ग्रन्थेषु [27]पूर्वापरविरोधपरिहारः, इति विपश्चितः प्रष्टव्याः ।

---

1. तथापि नास्ति 2. इति नास्ति 3. ग्रहणेन 4. विधिरिति 5. सञ्ज्ञियुक्तम् 6. अपि नास्ति 7. तत् इत्यधिकम् 8. तत् इत्यधिकम् 9. ततः 10. तन्निवृत्त्यर्थम् 11. एवम् 12. इति नास्ति 13. अत्र इत्यधिकम् 14. योग नास्ति 15. निवर्तयति 16. प्लुतस्य 17. तु नास्ति 18. विधीयते 19. अनर्थकम 20. अस्य नास्ति 21. एवं तर्हि......प्लुतस्यासिद्धत्वात् नास्ति 22. स्थानी नास्ति 23. सवर्ण नास्ति 24. च नास्ति 25. तु 26. इव नास्ति 27. पूर्वाविरोधः -

मणीवादीनाम् इति। सिद्धये इति शेषः। न पुनर्मणीवादीनामपरः प्रतिषेधो विधेयः। न चेदं वचनम्, भाष्यवार्तिककाराभ्यामपठितत्वात्, किन्तु मणीवादीनां निर्वाहः कर्तव्य इत्यर्थः। तत्र 'मणीवोष्ट्रस्य लम्बेते' इत्यत्र वाशब्दस्य [1]उपमानार्थस्य प्रयोगः। रोदसीवेत्यादौ छान्दसत्वादिति निर्वाहः[2]॥

## १२. अदसो मात्।

अदसो मात्। 'स्वरितेनाधिकारः (१.३.११) इत्यत्र द्वौ पक्षौ, अर्थाधिकारः शब्दाधिकारश्चेति। तत्रार्थाधिकारो नाम यस्य[3] यस्मिन्सूत्रे स्वरितत्वं प्रतिज्ञातं तत्र तस्य योऽर्थः स उत्तरत्राधिक्रियत इति। शब्दाधिकारस्तु स एव शब्दो विवक्षितार्थोऽधिकृत[4]स्तत्तत्सूत्रानुगुणमर्थं प्रतिपादयतीति। तत्रार्थाधिकारे पूर्वत्रेदादिभिस्तदन्तं प्रत्यायितम्, इहानुवृत्तम् 'मात्' इत्यनेन विशेष्येतेति 'अमुकेऽत्र' इत्यत्रापि प्रसङ्गः, शब्दाधिकारे त्वीदादिमात्रस्येहानुवृत्तस्यापि विशेष्याभावादसति तदन्तविधौ 'मात्' [5]इत्यनेन विशेषणाददोष इति तमाश्रित्याह—तस्मात्परे ईदूदेदन्ता इति। प्रगृह्यसञ्ज्ञा इति। प्रगृह्यशब्दः सञ्ज्ञा येषां ते तथोक्ताः। यद्यपि पूर्वसूत्र एव प्रगृह्यशब्दः [6]सञ्ज्ञात्वेन विनियुक्तः, तथापीह सञ्ज्ञिनो न प्रत्याययति, स्वरूपपदार्थकस्यैव तस्येहानुवृत्तेः। किमर्थमिदमुच्यते, [7]यावता स्त्रीनपुंसकयोर्द्विवचने मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वात् पूर्वेणैव सिद्धा सञ्ज्ञा, स्वरसन्धिप्रकरणे च मुत्वस्यासिद्धत्वादेकारस्यैव विकारप्रसङ्गे प्रकृतिभावोऽपि सिद्धः, अनुनासिकपर्युदासः[8] च कार्यकालपक्षे लिङ्गत्रयेऽपि द्विवचने सिद्धः ? 'अणोऽप्रगृह्यस्य'(८.४.५७) इत्यत्रोपस्थितेन पूर्वसूत्रेण सञ्ज्ञायां क्रियमाणायां मुत्वस्य [9]सिद्धत्वात्। [10]अतोऽनुनासिकपर्युदासेऽद्विवचनार्थो[11]ऽयमारम्भः, प्रकृतिभावे [12]तु पुंसि द्विवचनार्थश्च। नन्वारब्धेऽप्यस्मिन्यथोद्देशपक्षे सञ्ज्ञायां कर्तव्यायां मुत्वमीत्वयोराश्रयात्सिद्धत्वेऽपि स्वरसन्धिप्रकरणे तयोरसिद्धत्वादयावेकदेशप्रसङ्गः, अमी आसते [13]इत्ययादेशः, अमू आसाते इति पुंस्यावादेशः, अमी अत्र इति 'एङः पदान्तादति' (६.१.१०९) [14]इति इत्येकादेशः। न च सञ्ज्ञाया वैयर्थ्यम्, अनुनासिकपर्युदासेनार्थवत्त्वात्। तत्र हि कर्तव्ये मुत्वमीत्वयोरसिद्धत्वाभावाद्ययोरनेन सञ्ज्ञा कृता तावेव, [15]न तं प्रति। कार्यकालपक्षे तु सञ्ज्ञायामपि कर्तव्यायामाश्रयात् सिद्धत्वं नाश्रयणीयम्, 'अणोऽप्रगृह्यस्य' (८.४.५७) इत्यत्रोपस्थिते[16]ऽस्मिन् कर्तव्ये मुत्वमीत्वयोः सिद्धत्वात्, तावता चास्य चरितार्थत्वात्। तदेवमुभयोरपि पक्षयोः स्वरसन्धिः स्यादेव। उच्यते। यद्यनुनासिकपर्युदास [17]एव प्रयोजनमभविष्यत्, 'अणोऽप्रगृह्यस्यानुनासिकोऽदसो न' इत्येवावक्ष्यत्। अमुके, अमुयेत्यादावनण्त्वादनवसानत्वाच्चाप्रसङ्गः। अतः सञ्ज्ञा[18]रम्भसामर्थ्यात् प्रकृतिभावार्थत्वमप्यस्य विज्ञायते, तच्च स्वरसन्धिप्रकरणे[19] मुत्वमीत्वयोः सिद्धत्वमन्तरेणानुपपन्नमित्युभयोरपि पक्षयोः सामर्थ्यादसिद्धत्वबाधः।

मादिति किम् इति। अदस इति षष्ठी, [20]अमी अमू इत्यत्र च मुत्वमीत्वयोः स्थानिनावेकादेशावन्तवद्भावाददस्[21]शब्दग्रहणेन गृह्येते इति तदादेशयोरपि तद्ग्रहणेन ग्रहणाद[22]स्ति तावदिष्टसिद्धिः। एदिति [23]च निर्वर्तिष्यते, न च मात्परावीदूतौ सम्भवत इत्यतिप्रसङ्गोऽपि नास्तीति प्रश्नः। अमुकेऽत्र इति। एकयोगनिर्दिष्टानामेकदेशानुवृत्तिर्दुर्ज्ञानेति[24] भावः। न [25]मादित्यस्मिन् सत्यपि [26]एतद्ग्रहणसामर्थ्यादत्र प्रसङ्गः, मादित्यस्य वैयर्थ्यप्रसङ्गात्। न च विकल्पः, अतुल्यबलत्वात्। तद्धि पूर्वत्र चरितार्थम्, मादिति [27]त्वकृतार्थम्। न [28]च [29]अनुवृत्तिसामर्थ्यम्, अन्यानुरोधेनाप्यनुवृत्तिसम्भवात्॥

---

1. उपमार्थस्य 2. कर्तव्यः इत्यधिकम् 3. शब्दस्य इत्यधिकम् 4. तत् नास्ति 5. अनेन नास्ति 6. सञ्ज्ञात्वे 7. यावता नास्ति 8. तु 9. प्रसिद्धत्वाभावात् 10. अतः नास्ति 11. अयम् नास्ति 12. अपि 13. अयादेशप्रसङ्गः 14. इति नास्ति 15. न नास्ति 16. तस्मिन् 17. एव नास्ति 18. आरम्भ 19. अपि इत्यधिकम् 20. अमू अमी 21. शब्देन 22. अस्तु 23. च नास्ति 24. इति भावः नास्ति 25. च इत्यधिकम् 26. एद्ग्रहण 27. तु नास्ति 28. च नास्ति 29. अनुवृत्तेः

## १३. शे ।

शे । 'शे' इति श्रुतेरविशेषात् 'काशे' 'कुशे' इत्यत्रापि प्रसङ्ग इति मत्वा पृच्छति—किमिदम् इति । सुपामादेश इति । काशे[1] इत्यत्र तु लाक्षणिकत्वादग्रहणमिति भावः । युष्म इति । षष्ठीबहुवचनस्य 'सुपां सुलुक्' (७.१.३९) इत्यादिना शे आदेशः, '[2]शेषे लोपः' (७.२.९०) । अस्मे इति । चतुर्थीबहुवचनस्य शे । त्वे मे इति । सप्तम्येकवचनस्य त्वमावेकवचने । अस्मे इन्द्राबृहस्पतो (ऋ. ४.४९.४) इति । छान्दसमुदाहरणमि[3]त्युक्त्वा, इतरत्तु लौकिकमनुकरणमित्युक्ते न युष्मे वाजबन्धवः, त्वे रायः, मे रायः इत्येषामप्य[4]नुकरणत्वमुक्तं स्यात् । अतो यदत्रेतरदिति विवक्षितं तत्स्वरूपेण पठति—युष्मे इति इत्यादि । लौकिकमनुकरण[5]मित्यनेन च सूत्रस्यावश्यारम्भ्यत्वं दर्शयति । 'अस्मे इन्द्राबृहस्पती' (ऋ. ४.४९.४) इत्यादि छान्दसत्वादपि सिध्येत् । इदं तु पदकारैरिति [6]परं प्रयुज्यमानं लौकिकम्, अतो न छान्दसत्वा[7]त्सिद्धिरिति ॥

## १४. निपात एकाजनाङ् ।

निपात एकाजनाङ् । 'व्याहरति मृगः', व्यवहृपणोः समर्थयोः (२.३.५७) इति निर्देशादेकाजिति कर्मधारयः, न बहुव्रीहिरित्याह—एकश्चासौ इति । यद्येवम्, एकग्रहणमनर्थकम्, निपातोऽजित्येवास्तु, तत्र निपातेनाज् विशिष्यते । [8]निपातसञ्ज्ञकोऽजिति विपर्ययस्तु न भवति, अजन्तो निपातः इति व्यावर्त्याभावात्, हलन्तानां सत्यसति वा प्रगृह्यत्वे विशेषाभावात् । ननु पुरोऽस्तीति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् । नैतदस्ति, प्रगृह्यसञ्ज्ञायां रुत्वस्यासिद्धत्वात्, सकारस्य च कार्यान्तराप्रसङ्गात् । ननु चेदमस्ति प्रयोजनमचा निपातस्य विशेषणे । [9]किम् ? अजन्तस्य यथा स्यात्, अज्मात्रस्य मा भूदिति, एवं सत्यनाङित्यनर्थकं स्यात्, अतो निपातेनाज्विशेष्यते, नार्थ एकग्रहणेन । न । अचसमुदायनिवृत्त्यर्थं तर्ह्येकग्रहणम् । अइउ, अपेहीति समुदायस्यैव स्यात्, नावयवानाम्, एकाच्द्विर्वचनवदजन्तस्यैव प्रकृतिभावः स्यात्, पूर्वयोस्तु स्वरसन्धिः स्यात् । ननु [10]च निपातोऽजिति चैकत्वस्य विवक्षितत्वात् समुदायस्य न भविष्यति ? एवं तर्ह्यच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति, '[11]वर्णनिर्देशेषु व्यक्तिसङ्ख्या न विवक्ष्यते, जातिरेव निर्दिश्यते' इति । तेन दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमित्युपपन्नं भवति ।

निपात इति किम् इति । निपातस्यै[12]वैकाचोऽर्थवत्त्वसम्भव इति प्रश्नः । चकारात्र इति । कृञो लिटि तिपो णल् । अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्व[13]मिति भावः । आकारोऽत्र ङिद्विशिष्ट उपात्तः, प्रयोगे च न क्वचित् ङकारः श्रूयते, अतोऽर्थवशेन ङित्त्वाङित्त्वे व्यवस्थापयति—ईषदर्थ इत्यादि । ईषदर्थे—आ + उष्णः = ओष्णः । आङीषदर्थ इति चोक्तम् । क्रियायोगे—आ + इतः = एतः । प्रादिषु [14]पठितः । मर्यादाभिविधौ च इति । समाहारद्वन्द्व [15]आगमस्यानित्यत्वान्नुमभावः । [16]मर्यादासहितो वाऽभिविधिः । मर्यादायाम्—आ + उदकान्तात् = ओदकान्तात् । अभिविधौ—आ + अहिच्छत्रात् = आहिच्छत्रात् । [17]आह च—'विना तेन मर्यादा, सह तेन इत्यभिविधिः' । 'आङ् मर्यादाभिविध्योः' (२.१.१३) इति च ङिन्निर्दिष्टः । पूर्वप्रक्रान्तस्य वाक्यस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते, आ एवं [18]नु मन्यसे । नैवं पूर्वममंस्थाः, सम्प्रति त्वेवं मन्यसे इति । तथा स्मृतेः सूचकः आकारः प्रयुज्यते, ततः [19]स्मृतोऽर्थो निर्दिश्यते, आ एवं किल तदिति ॥

---

1. कुशे इत्यधिकम् 2. शेषे लोपः नास्ति 3. उक्तत्वात् 4. अनुकरणम् 5. इति नास्ति 6. पदपरं 7. सिद्धम् 8. निपातसञ्ज्ञो 9. किम् नास्ति 10. च नास्ति 11. वर्णनिर्देशे 12. एव नास्ति 13. दृष्टमिति 14. पठितः नास्ति 15. आगमशासनस्य 16. मर्यादासहितो वाऽभिविधिः नास्ति 17. आह च नास्ति 18. न नास्ति 19. स्मृतः नास्ति ।

## १५. ओत् ।

ओत् । ननु [1]चाहोप्रभृतयो निपातसमाहारा:, [2]अह+उ=[3]अहो, [4]उत । आहो=उताहो, अथ+उ=अथो, या+उ=यो, न+उ=नो, मा+उ=मो, च+उ=चो । यद्यप्यर्थभेदो[5] न प्रतीयते, तथाप्यनर्थकानामपि निपातानां दर्शनात् समाहारत्वं नानुपपन्नम्, ततश्चादिवद्भावात् पूर्वेणैव सिद्धा प्रगृह्यसञ्ज्ञा, यथा 'एषो उषा अपूर्व्या:' (ऋ १.४६.१) इति । एषा+उ=एषो इत्याशङ्क्य, एकनिपाता इति दर्शयति—ओदन्तो यो निपात इति । चादिषु [6]तया पाठादिति भावः । समाहारपक्षे च आहो [7]इतीत्यादौ 'उञः' (१.१.१७) 'ऊँ' (१.१.१८) इत्ययं विधिः प्राप्नोति । अथापि समाहार:, एवमपि सूत्रं कर्तव्यम् 'ओ चित्सखायम्' (ऋ. १०.१०.१), [8] 'ओ षु वर्तमरुत:'(ऋ. १.१६५.१४) इत्याद्यर्थम् । आ+उ=ओ इत्यत्रान्तवद्भावादनाङिति प्रतिषेधः प्राप्नोति, [9]अत्रापि पर्युदासे सिद्धम्, आङनाङोरेकादेश आदिवद्भावादनाङ्ग्रहणेन गृह्यत इति। इहानदोऽदो[10] भवदिति[11] च्व्यन्तत्वान्निपातत्वेऽपि प्रतिपदोक्तस्यौकारस्य ग्रहणान्न भवति । एवमप्यगौर्गौः समपद्यत गोभवदि[12]त्यत्र प्राप्नोति ? गौणमुख्ययोर्मुख्ये [13]कार्यसम्प्रत्ययान्न भविष्यति । अत्र हि जाड्यादिधर्मगारोपितगोत्वे वाहीके गोशब्दो वर्तते इति [14]गौणार्थत्वमस्य । कथं तर्हि गौर्वाहीकस्तिष्ठति, गां वाहीकमानयेति वृद्धयात्वे भवतः? उच्यते। स्वार्थे [15]प्रवृत्तात्प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानादत्र गौणत्वं प्रतीयते । कारकाणामपि[16] हि क्रियया सम्बन्धः न परस्परेण, गामानय, वाहीकमानय, गौस्तिष्ठति, वाहीकस्तिष्ठतीति । पश्चात्तु वाक्योपन्यासात् सामानाधिकरण्याद् गौणार्थे[17]प्रादुर्भावो भवति । इह तु गौणार्थप्रादुर्भावादुत्तरकालं च्व्यन्तत्वे सति प्रगृह्यसञ्ज्ञाप्राप्तिरिति विशेषः । अतः पदकार्येष्वेवायं न्यायः, न [18]प्रातिपदिककार्येष्विति सिद्धम् ॥

## १६. सम्बुद्धौ शाकल्यस्येतावनार्षे ।

सम्बुद्धौ शाकल्यस्येतावनार्षे । सम्बुद्धौ इत्यनेनानूद्यमान ओकारो विशेष्यते, अतः ङिङ्तीतिवन्निमित्तसप्तमी[19]यमित्याह—सम्बुद्धिनिमित्त इति । परसप्तम्यां तु त्रपो इतीत्यादौ नपुंसके न स्यादिति भावः । अवैदिक इति अनार्ष इत्यस्यार्थमाह, ऋषिर्वेदः तदुक्तमृषिणेत्यादौ दर्शनात् । ननु च गवित्ययमाहेत्यत्रानुकार्येणार्थवत्त्वात्प्रातिदिकत्वे सति विभक्त्या भाव्यमित्यत आह—अत्र इत्यादि । अत एव हि विभक्त्यभावादपदान्तत्वाच्छाकल्यस्यापि प्रत्युदाहरणे 'लोपः शाकल्यस्य' (८.३.१९) इति लोपो न भवति[20] । भेदस्याविवक्षितत्वात् इति । भेदनिबन्धनो हि प्रतिपाद्यप्रतिपादकभावः स तस्मिन्नविवक्षिते न भवति । असत्यर्थवत्त्व इति । [21]यद्यनर्थकः कथं तर्हि प्रयुज्यते ? प्रयोजनवत्त्वात् । प्रयोजनमनुकार्यप्रतीतिः । यद्यप्य[22]भिधानव्यापारो नास्ति, तथापि तदानीमुच्चारितं रूपं सादृश्यादनुकार्यप्रतिपत्तिपरम्, भेदश्च सन्नेव न विवक्षित इति अनुकार्यस्यापशब्दत्वेऽपि नास्यापशब्दत्वम् । शाकल्यग्रहणं विभाषार्थम् इति । तत्र बह्वृचाः प्रगृह्यमेवाधीयते, तैत्तिरीयास्त्वप्रगृह्यम् ॥

## १७. उञः ।

उञः । यद्ययमेको योगः स्यात् 'उञ ऊँ' इति यथा पठितं सूत्रकारेण, ततः उञः इत्यस्य श्रुतेनादेशेन सम्बन्धः स्यात्, न प्रगृह्यसञ्ज्ञया । सा तु, 'निपात एकाजनाङ्' (१.१.१४) इति नित्यैव स्यात्, शाकल्यश्रुत्यनुश्रुत्या [23]चादेशे विकल्पिते रूपद्वयमेव स्यात्, उ इति, ऊँ इतीति, न तु वितीति तृतीयम् । अतो विभज्य व्याचष्टे । तत्र यद्यपि पूर्वसूत्रेषु सामानाधिकरण्येन निर्देशात्प्रदेशेष्विव प्रगृह्यशब्दो द्विवचना[24]द्यभिधेयः, तथापीह षष्ठीनिर्देशात्स्वरूपपदार्थकः सम्पद्यते । अत एवाह—उञः प्रगृह्यसञ्ज्ञा भवति इति । प्रगृह्यमित्येषा सञ्ज्ञा भवतीत्यर्थः । पूर्वत्र तु द्विवचनं प्रगृह्यसञ्ज्ञं भवतीत्युक्तम्, अनेन च प्रगृह्य[25]सञ्ज्ञाया एव विकल्पनात् उ इति, वितीति साधितं रूपद्वयम् ॥

---

1. उताहो 2. आह 3. आहो 4. आह+उ=आहो 5. अत्र इत्यधिकम् 6. तथा नास्ति 7. इति नास्ति 8. ओ षु यात मारुतः 9. तत्रापि 10. भवति 11. इति नास्ति 12. इत्यस्यापि 13. कार्य 14. गौणत्वमर्थस्य 15. प्र नास्ति 16. अपि नास्ति 17. अर्थः 18. प्रातिपदिकेषु इति 19. इयम् नास्ति 20. इति इत्यधिकम् 21. यद्यनर्थकं 22. अभिधाव्यापारो 23. च नास्ति 24. आदि नास्ति 25. सञ्ज्ञाविकल्पनात् ।

## १८. ऊँ।

ऊँ। शाकल्यस्य मतेन प्रगृह्यसञ्ज्ञकश्च इति। अनेनास्मिन्नपि योगे द्वयमप्येतदनुवर्त्यमिति दर्शयति। यदि शाकल्यस्य इति नापेक्ष्येत तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्, अनुवृत्तस्य प्रगृह्यशब्दस्य [1]षष्ठ्यन्ततया विपरिणामात्, ततश्च ऊँ इति, वितीति द्वे एव रूपे स्याताम्, उ इतीति न स्यात्। शाकल्यग्रहणेन तु विकल्पे सति तदपि भवति। तथा प्रगृह्यग्रहणाननुवृत्तौ प्रगृह्याप्रगृह्ययोरप्यादेशे विकल्पः स्यात्। तत्र प्रगृह्यस्यादेशो[2]ऽपि सिद्धमिष्टम्, अप्रगृह्यस्य तु यण् सानुनासिको वकारः स्यात्। अतः प्रगृह्यग्रहणमप्यनुवर्त्यम्। त्रीणि रूपाणि इति। त्रीण्येव [3]रूपाणि भवन्ति, त्रीणि च भवन्तीत्यर्थः। इह यदेतनूँ पदकारैरुच्यत इत्यनुकरणे 'यरोऽनुनासिकेऽनुनासिको वा' (८.४.४५) इत्येष विधिर्भवति॥

## १९. ईदूतौ च सप्तम्यर्थे।

ईदूतौ च सप्तम्यर्थे। शाकल्यस्येताविति निवृत्तम् इति। अस्वरितत्वात्। इह चशब्देन [4]प्रयत्नेन प्रकृतमनुकृष्यते, तत्र सञ्ज्ञाया अननुवृत्तौ विधेयं नास्तीति सैवानुकृष्यते। मामक्यां तन्वामिति प्राप्त इति। सप्तम्यर्थं दर्शयति। मामकीतनू शब्दौ 'सुपां सुलुक्' (७.१.३९) इति लुप्तसप्तमीकौ। मामकी इति, तनू इति कार्योदाहरणे। गौरी अधिश्रित (ऋ. ९.१२.३) इति तु संहितापाठेऽपि कार्योदाहरणमिति स एव तत्र दर्शितः।

अग्ना भवातीति रूपप्रत्युदाहरणम्, कार्यं तु पदकाले। धीती इत्यादि। [5]धीतिमतिसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्णं ईकारः तद्दर्शयति—धीत्या मत्या इत्यादिना। वाप्यश्वः, नद्यातिरिति 'संज्ञायाम्' (२.१.४४) इति सप्तमीसमासः। अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति, अस्ति ह्यत्रापि सप्तम्यर्थः? उच्यते। जहत्स्वार्था वृत्तिरिति पक्षे समासस्यै[6]वार्थवत्त्वात्पूर्वोत्तरपदयोर्वर्णवदानर्थक्यमिति सप्तम्यर्थो नास्ति। अजहत्स्वार्थायामपि वृत्तावुपसर्जन-पदं न स्वार्थमात्रे पर्यवस्यति, किंतु तत्संसृष्टे प्रधानार्थे। तत्रार्थग्रहणसामर्थ्याद्यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽ[7]संसृष्ट[8]रूपस्तस्यैव ग्रहणमिति संसृष्टे न भविष्यति। तपरकरणं गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत्[9], न, अभेदकत्वाद्गुणानाम्। भिन्नकालानां [10]प्लुतानां निवृत्त्यर्थमिति चेत्, [11]न अनण्त्वादसम्भवाच्च। न हि सप्तम्यर्थवृत्ति [12]प्लुतान्तं सम्भवतीत्यत आह—तपरकरणम् इत्यादि।

[13]ईदूतौ इत्यादि। 'ईदूतौ सप्तमी' इत्येवास्तु, नार्थोऽर्थग्रहणेन। लुप्तेऽर्थग्रहणाद्भवेत् इति। असत्यर्थग्रहणे सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् सप्तम्या एव सञ्ज्ञा स्यात्, ततश्च 'सोमो गौरी अधिश्रितः' (ऋ. ९.१२.३) इत्यत्र न स्याल्लुप्तत्वात्। अर्थग्रहणे त्वर्थनिमित्तेयं सञ्ज्ञा[14] न [15]तु प्रत्ययश्रवणनिमित्ता। अतः लुप्तेऽर्थग्रहणाद्भवेत्। नात्र सप्तमी लुप्यते, पूर्वसवर्णोऽत्र भवति 'सुपां सुलुक्' (७.१.३९) इति। ततोऽकः सवर्णे [16]दीर्घत्वेन (६.१.१०१) तस्यादिवत्त्वात् सप्तमीग्रहणेन ग्रहणात् अस्त्येव सप्तमीति शङ्कते—पूर्वस्य चेत् इति। दूषयति—आडाम्भाव इति। यदि ह्यत्र पूर्वसवर्णः स्यात्, [17]दीर्घादेशं बाधित्वाडामौ स्याताम्, अतो लुगेव युक्तः। तस्मादर्थग्रहणं कर्तव्यम्। न कर्तव्यम्, यस्मात्सर्वत्रैव लुका भाव्यमिति न क्वचित्सप्तम्यस्ति। उच्यते चेदम्—तत्र वचनसामर्थ्यात्सञ्ज्ञाविधावपि तदन्तविधिर्भवि-ष्यति। नेदं वचनाल्लभ्यम्, यतो वचनाद्यत्र दीर्घत्वं तत्रैव स्यात्, 'दृतिं न शुष्कं सरसी शयानम्' (ऋ. ७.१०३.२) इति। अत्र हि सरःशब्दात्परस्य ङिशब्दस्य 'इयाडियाजीकाराणामुपसङ्ख्यानम्' (वा. ८२०) इतीकारे कृते सप्तम्येव श्रूयते इति तत्रैव स्वात्, न गौरी इत्यादौ। तत्रापि सरसी यदि। तत्रापि सिद्धम्। कथम्? यदि सरसीशब्दो विद्यते।

---

1. षष्ठ्या 2. अपि नास्ति 3. रूपाणि नास्ति 4. यत्नेन 5. धीतीमतीसुष्टुतीशब्देभ्यः
6. अर्थवत्त्वम् 7. असंसृष्टः 8. रूपः नास्ति 9. तत् इत्यधिकम् 10. प्लुतादीनाम् 11. न नास्ति
12. प्लुतान्ते 13. ईदूतावित्यादि नास्ति 14. स्यात् इत्यधिकम् 15. तु नास्ति 16. दीर्घत्वे 17. एकादेशम

असन्दिग्धे [1]सन्दिग्धाभिधानमेतत्, शास्त्राणि चेत्प्रमाणं स्युरिति यथा । अस्ति च सरसीशब्दः, दक्षिणापथे महान्ति सरांसि सरस्यः [2]उच्यन्ते । ततश्च सरसीशब्दोऽपि लुप्तसप्तमीक एवेति वचनात्तदन्तविधिरित्येतदेव स्थितम् । एवं तर्हि, ज्ञापकं स्यात्तदन्तत्वे । 'ईदूदेत्' इत्यत्र चत्वारः पक्षा उपन्यस्ताः, तत्र [3]तदन्तत्वे इत्यनेन तृतीयचतुर्थपक्षावुपलक्षयति । तत्र ज्ञापकं स्यात्, इह प्रगृह्यप्रकरणे प्रत्ययलक्षणं न भवतीति, यदि स्यात्, [4]पूर्वोक्तन्यायेन सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेराश्रयणात् लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन सप्तम्यन्तमिति सञ्ज्ञा भविष्यति, किमर्थग्रहणेन । तेन तदन्तत्वे यो दोष उक्तः प्रत्ययलक्षणेन सञ्ज्ञा प्राप्नोतीति, स न भवतीति सञ्ज्ञाविधौ [5]प्रत्ययग्रहणे तदन्तविधेरभावादेव तदन्तपक्षस्तत्र नैव स्थित इत्याह—मा वा इति ॥

## २०. दाधा घ्वदाप् ।

दाधा घ्वदाप् । किमिदं प्रयोगस्थानामनुकरणम्, प्रयोगे ये दाधारूपाः श्रूयन्ते ते घुसञ्ज्ञा भवन्तीति, आहोस्वित् उपदेशे धातुपाठेऽवस्थितानां यावतामनुकरणं [6]दाधारूपं सम्भवति तेषामिति ? किं चातः ? यदि [7]प्रयोगस्थानामनुकरणम्, शिति न प्राप्नोति । दो–प्रणिद्यति । देङ्–प्रणिदयते । दाण्–प्रणियच्छति । धेट्–प्रणिधयति । किं कारणम् ? अदाधारूपत्वात् । प्रणिदाता, प्रणिधाता इत्यादावेव तु स्यात् । किमुच्यते शिति न प्राप्नोतीति, यावता दोदेङ्धेटाम[8]शित्यप्यात्वे कृते[9]ऽपि लाक्षणिकत्वान्न प्राप्नोति ? नैष दोषः । 'गामादाग्रहणेष्वविशेषः' (व्या. प. १२४) इति दोदेङौ तावद्गृह्येते । अस्याश्च परिभाषाया दैपः पित्वं लिङ्गम्, अन्यथा हि लाक्षणिकत्वादेवास्य ग्रहणं न भविष्यति । 'दो दद् घोः' (७.४.४६) इत्यत्र च दः इत्येतत् धेण्निवृत्त्यर्थं सत्तस्य घुसञ्ज्ञां ज्ञापयति, दधातेस्तु 'दधातेर्हिः' (७.४.४२) इति ह्यादेशविधानादेव दद्भावाप्रसङ्गः । यदि 'गामादाग्रहणेष्वविशेषः' (व्या. प. १२४), तर्हि अर्थवत्परिभाषाऽपि [10]निवर्तेत ? तत्र को दोषः ? प्रनिदारयति, अत्रापि प्राप्नोति । अस्तु, णत्वं कस्मान्न भवति ? 'उपसर्गात्' (८.४.१७) इत्यनुवर्तते, सम्बन्धिशब्दश्चायमुपसर्ग इति, तस्मादेवं विज्ञास्यामः, गदादीनां य उपसर्गस्तत्रस्थान्निमित्तादुत्तरस्य तानेव गदादीन्प्रत्युपसर्गस्य नेरिति । प्रनिदारयतीत्यत्र [11]च यं प्रत्युपसर्गो नासौ दारूपः, यश्च दारूपः न तं प्रत्युपसर्गः, तस्यानर्थकत्वात् । अतः [12]शित्येव दोषः । उपदेशस्थानां त्वनुकरणे दोदेङ्धेङनुकरणानामपि[13] 'आदेच उपदेशेऽशिति' (६.१.४५) इत्यात्वसद्भावात्तेषां दाण्दाञ्धानां च सर्वेषां सिध्यति । [14]आत्वविषयेऽप्येकदेशविकृतस्यानन्यत्वात् सिद्धम् । सर्वेषां च स्वरूपेणानुक्रियमाणत्वात् लक्षणप्रतिपदोक्तयोः (व्या. प. ३), निरनुबन्धक (व्या. प. ५३) इति च परिभाषयोरनुपस्थानम्, नापि प्रनिदारयतीत्यत्र प्रसङ्गः, न हि 'दीङ्' इत्येदनुकरणस्यात्वमस्ति । कृतात्वमपि किञ्चिन्मात्रसाधर्म्यादनुकरणं न विरुध्यते, यथा गवित्ययमाहेति कृतावादेशमपि गोशब्दस्येति निर्दोषं द्वितीयं पक्षमाश्रित्याह—दारूपाश्चत्वार इत्यादि । एवं च दीङोऽनुकरणस्यात्वाभावात् तृणादिषु 'मीनातिमिनोतिदीङाम्' (६.१.५०) इत्यात्वे दारूपस्यापि घुसञ्ज्ञा[15] भवति, प्रनिदाता—णत्वं न भवति । उपादास्ता[16]स्य स्वरः शिक्षकस्य[17] 'स्थाघ्वोरिच्च' (१.२.२७) इतीत्वं न भवति ।

केचित्तु सञ्ज्ञामिच्छन्ति । तेषामप्युपादास्तेत्यत्र न भवति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति । प्रणिददातीत्यादौ नेर्गदेति (८.४.१७) णत्वम्, प्रणिद्यतीति 'ओतः श्यनि' (७.३.७१) ।

दातं बर्हिरिति लूनमित्यर्थः । घुसञ्ज्ञाया अभावात् 'दो दद् घोः' (७.४.४६) इति न भवति । अवदातमित्यत्र[18] च 'अच उपसर्गात्तः' (७.४.४७) इति न भवति । ननु दाब्दैपोरननुकरणादेव न भविष्यति, अस्मदायत्तं खल्वनुकरणं दाप्दैपोर्न [19]करिष्यामः ? तन्न । असति तस्मिन्प्रतिपदोक्तमेव दाधारूपमनुकरणं गृह्येत । सति तु तस्मिन् यावतामनुकरणं

1. सन्दिग्धवचनमेतत् 2. इति इत्यधिकम् 3. तदन्ते 4. पूर्वोक्तेन 5. प्रत्ययलक्षणे 6. दाधा इतिरूपं 7. प्रयोगस्थितानाम् 8. अशितीत्यात्वे 9. अपि नास्ति 10. न प्रवर्तेत 11. च नास्ति 12. शितीत्येव 13. अपि नास्ति 14. अनात्वविषये 15. न इत्यधिकम् 16. अस्य नास्ति 17. इतं इत्यधिकम् 18. अपि इत्यधिकम्, च नास्ति 19. अनुकरिष्यामः

दाधारूपं सम्भवति लाक्षणिकं प्रतिपदोक्तं वा, तावतां सर्वेषामनुकरणं भवति। 'उदीचां माङो व्यतीहारे' (३.४.१९) इति च मेङः कृतात्वस्य निर्देशो ज्ञापयति, नानुबन्धकृतमनेजन्तत्वम् इति। न हि 'माङ् माने' (धा. पा. १०८९) इत्यस्य व्यतीहारे वृत्तिः सम्भवति, तेन दैपः पकारे श्रूयमाण एवात्वं भवतीति अदाबिति प्रतिषेधो भवति। सञ्ज्ञाप्रवृत्तिसमये च यद्दाब्रूपम्, तस्य प्रतिषेध इति प्रणिदापयतीत्यत्र प्रागेव पुकः प्रवृत्तां घुसञ्ज्ञामाश्रित्य णत्वं भवति। 'दाधा घ्वपित्' इति वा वक्तव्यम्, पित् घुसञ्ज्ञो न भवतीति। बकारो वा [1]द्वयोरनुबन्धः, सूत्रमपि बकारान्तमेव पठितव्यम्। भाष्यवार्तिकविरोधस्तु महापदमञ्जर्यामस्माभिः प्रपञ्चितः॥

## २१. आद्यन्तवदेकस्मिन्।

आद्यन्तवदेकस्मिन्। 'द्वन्द्वे घि' (२.२.३२) इत्येतद्बाधित्वा 'अजाद्यदन्तम्' (२.२.३३) इत्यन्तशब्दस्य पूर्वनिपातः [2]प्राप्तोऽस्मादेव निर्देशान्न भवति। न चात्यन्तबाधः, अन्तादिवच्चेति लिङ्गात्। असहायस्येत्यादिना सूत्रारम्भस्य प्रयोजनमाह। सति परस्मिन् यस्मात्पूर्वं नास्ति स आदिः, सति च पूर्वस्मिन्यस्मात्परं नास्ति सोऽन्तः, तदेतदुभयमसहाये न सम्भवति। तस्मादाद्यन्तयोर्यान्युपदिष्टानि उक्तानि कार्याणि तान्यसहायस्यापि यथा स्युरित्ययमारम्भः। असहायस्येत्यनेनासहायवचन एकशब्दो न संख्यावचन इति दर्शयति। बहुष्वपि व्यवस्थितस्यैकत्वसंख्यास्तीति 'एकस्मिन्' इति व्यर्थं स्यादिति भावः। 'एकस्मिन्' इत्युपनेये सप्तमीश्रवणादुपमानस्यापि सप्तमीसमर्थतेत्याह—सप्तम्यर्थे वतिः इति। वर्तमाननादिति शेषः। 'तत्र तस्येव' (५.१.११६) इति इवार्थे वतिः। पूर्वं त्वसहायस्येति षष्ठीनिर्देशः सप्तम्यर्थस्यैव शेषरूपविवक्षया। कार्यार्थत्वात्सर्वातिदेशानां प्राधान्यात्कार्यातिदेशोऽयमित्याह—कार्यं भवति इति। आद्यन्तवद्व्यपदेशो[3] निमित्तम्, 'पूर्ववत्सनः' (१.३.६२) इति [4]तु निर्मूलम्। व्यपदेशातिदेशे हि कुरुते, कुर्वे इत्यादौ अन्तवद्व्यपदेशेऽपि अन्त्योऽजादिरस्येत्येवंरूपस्य बहुव्रीह्यर्थस्याभावाट्टिसञ्ज्ञाया अभावे टेरेत्वं न स्यात्। कुर्वति इत्यादौ तु दृष्टस्य टेरेत्वाख्यस्य कार्यस्यातिदेशे न दोषः। आभ्याम् इति। अत्र द्वे अन्तत्वे उपयुज्येते, अकारान्तस्याङ्गस्यालोऽन्त्यस्य दीर्घ इति।

सभासन्नयन इति। असत्येकग्रहणे यत्रादिव्यपदेशो नास्ति मध्येऽसहाये च सोऽतिदेशस्य विषयः। 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (१.१.७३) इत्यत्रादिग्रहणस्याप्येतदेव व्यावर्त्यमिति विकल्पः स्यात्, कदाचित् वृद्धसञ्ज्ञा, कदाचिन्न इति। तस्मादाकारमाश्रित्य पक्षे वृद्धसञ्ज्ञा न भवतीति ग्रन्थार्थः॥

## २२. तरप्तमपौ घः।

तरप्तमपौ घः। तरतेः 'ॠदोरप्' (३.३.५७) इत्यपि गुणे भूतपूर्वेण पकारेण यद्यपि तरबिति रूपं भवति, तथापि तमपा साहचर्यात् प्रत्ययस्यैव ग्रहणमित्याह-तरप्तमपौ प्रत्ययौ इति। तेन नद्यास्तरो नदीतर इति ह्रस्वो न भवति। अथ वा तरबिति रूपाश्रया सञ्ज्ञा, रूपनिर्ग्रहश्च प्रयोगे उपदेशे वा। तत्र न क्वचित्प्रयोगे तरबिति रूपमस्तीत्युपदेशगतं गृह्यते। न चात्रौपदेशिकं तरब्रूपमस्ति, सत्यामपि वा[5] घसंज्ञायां न दोषः, ह्रस्वत्वं हि समानाधिकरणे स्त्रीलिङ्गे विधीयते। आतिशायनिकप्रकरण एव तादौ घः, पितौ घ इति वा कर्तव्ये प्रकरणोत्कर्षेण सञ्ज्ञाकरणमन्योऽपि तरबस्तीति सूचनार्थम्, तेन 'अल्पाच्तरम्' (२.२.३४), 'लोपश्च बलवत्तरः' इत्यादौ स्वार्थे तरप् सिद्धो भवति॥

## २३. बहुगणवतुडति संख्या।

बहुगणवतुडति संख्या। यद्यपि 'वतुडती' इति सञ्ज्ञाविधौ प्रत्ययग्रहणम्, तथापि केवलयोः प्रत्यययोः [6]सञ्ज्ञायां प्रयोजनाभावात् तदन्तयोरेव ग्रहणम्। बहुकृत्व इत्यादि। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५.४.१७), 'संख्याया विधार्थे धा' (५.३.४२), [7]'बह्वल्पार्थात्' (५.४.४२) इति वर्तमाने 'संख्यैकवचनात्' (५.४.४३) इति

1. अनयोः 2. प्राप्नोति 3. अतिदेशयो इत्यधिकम् 4. तु नास्ति 5. घ नास्ति 6. संज्ञायाः 7. बह्ववल्पार्थात् इत्यतः इति शस् नास्ति।

शस्, 'संख्याया अतिशदन्तायाः कन्' (५.१.२२)। तावत्कृत्व इति। 'यत्तदेतेभ्यः परिमाणे वतुप्' (५.२.३९), 'आ सर्वनाम्नः' (६.३.९१)। कतिकृत्व इति। 'किमः संख्यापरिमाणे इति च' (५.२.४१)।

बहुगणशब्दयोः इत्यादि। कथं पुनर्ग्रहणं नास्ति? संख्येत्यन्वर्थसञ्ज्ञेयम्, संख्यायतेऽनयेति [1]संख्येति। न च यो वैपुल्ये बहुशब्दः बहुरोदन इति, [2]संख्येये [3]वा गणशब्दः [4]इक्षूणां गण इति। नाभ्यां संख्यायते। यदि तर्हि संख्यावाचिनोरेव ग्रहणं किमर्थं तयोरिह सञ्ज्ञा विधीयते, यावता संख्याप्रदेशेषु लौकिक्यपि संख्या गृह्यते, अन्यथा पञ्चकः, सप्तक इत्यादौ 'संख्याया अतिशदन्तायाः' (५.१.२२) इति कन् न स्यात्, अतिशदन्ताया इति[5]च प्रतिषेधोऽनर्थकः स्यात्, शास्त्रीयायाः [6]संख्यायास्तिशदन्ताया अभावादित्यत आह—भूर्यादीनाम् इत्यादि। एतेन नियमार्थमेतयोर्ग्रहणमिति दर्शयति। तुल्यजातीयापेक्षत्वाच्च नियमस्य, भूर्यादीनामेवानियतबहुत्ववाचिनां निवृत्तिः, नाबहुत्वविषययोर्न्येकशब्दयोः, नापि नियतबहुत्ववाचिनां त्र्यादीनां तदाह भूर्यादीनामिति।

अर्धपूर्वपदश्च इति। अर्धशब्दः पूर्वपदं यस्य स च पूरणप्रत्ययान्तः, पूरणप्रत्यान्तान्त इत्यर्थः, नहि पूरणप्रत्ययान्तस्यार्धशब्दः [7]पूर्वपदं सम्भवति, समास एव [8]हि पूर्वपदं सम्भवति। अर्धपञ्चमशूर्प इति। अर्धं पञ्चमं येषामिति बहुव्रीहिः। अर्धपञ्चमैरर्धाधिकैश्चतुर्भिः शूर्पैः क्रीत इति 'तद्धितार्थ' (२.१.५१) इति समासः। 'शूर्पादञन्यतरस्याम्' (५.१.२६) इति विहितस्याञष्ठञो वा 'अध्यर्धपूर्वद्विगोः' (५.१.२८) इति लुक्। कथं पुनर्लुक्, यावता नायं समासः नापि कन्? समासकन्विध्यर्थमिति। सम्बन्धसामान्ये षष्ठी, तेन समासे विधीयमाने समासनिमित्ते वान्यस्मिन्विधीयमान इत्यर्थः॥

## २४. ष्णान्ता षट्।

ष्णान्ता षट्। इह कस्मान्न भवति[9] विप्रुषः, पामान इति? सङ्ख्येति वर्तते। ननु [10]च [11]तत्संख्याग्रहणं सञ्ज्ञाप्रधानम्, [12]इहानुवृत्तमपि ष्णान्तानां [13]सञ्ज्ञामेव विदध्यात्, न तु ष्णान्तेत्यस्य विशेष्यं समर्पयेत्, अत आह—स्त्रीलिङ्गनिर्देशात् इति। ष्णान्ता इत्यत्र स्त्रीलिङ्गस्य [14]विशेष्यापेक्षायां सम्बध्यमानं प्रदेशेष्विव सञ्ज्ञि[15]प्रधानं भविष्यतीत्यर्थः। अत एवात्रान्तग्रहणम्। इतरथा वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धम्। इह कस्मान्न भवति, शतानि, सहस्राणि? नुमि कृते तस्य पूर्वभक्तत्वान्नान्ता सङ्ख्या भवति। अस्तु, लुक्कस्मान्न भवति? सर्वनामस्थानसन्निपातकृतो नुम् न [16]तत् विहन्ति। अथेह कथं सञ्ज्ञा अष्टानामिति? कथं च न स्यात्? अष्टन् आम् इति स्थिते परत्वान्नित्यत्वाच्च 'अष्टन आ विभक्तौ' (७.२.८४) इत्यात्वे कृतेऽनान्तत्वादसत्यां सञ्ज्ञायां नुड् न स्यात्, अष्टनो दीर्घग्रहणं ज्ञापकम् कृतात्वस्याप्यष्टनः सञ्ज्ञा भवतीति। एतच्च तत्रैवोपपादयिष्यामः। यद्वा, प्रागेव विभक्त्युत्पत्तेरनुद्दिश्य प्रयोजनविशेषं षट्सञ्ज्ञा [17]भविष्यति। सा च कृतेऽप्यात्वे न निवर्तते॥

## २५. डति च।

डति च। डत्यन्ता [18]च [19]या संख्येति। अनेन संख्याग्रहणानुवृत्तिं दर्शयति। असत्यां [20]ह्यनुवृत्तौ पातेर्डतिः [21]पतयः, अत्रापि स्यात्। [22]अथेह संख्याग्रहणानुवृत्तावपि कस्मादेवात्र न भवति, सामान्येन हि डतेः संख्यासञ्ज्ञा विहिता? उच्यते। संख्यासञ्ज्ञायां हि वतुना साहचर्यात्तद्धितस्य डतेर्ग्रहणम्, [23]न त्वौणादिकस्य॥

---

1. संख्येति नास्ति 2. संख्येयो 3. वा नास्ति 4. भिक्षूणां 5. च नास्ति 6. संख्याया अतिशदन्तायाः 7. पूर्वं 8. हि नास्ति 9. इति इत्यधिकम् 10. च नास्ति 11. यत् 12. अत इत्यधिकम् 13. संख्यासंज्ञाम् 14. विशेषापेक्षायां 15. प्रधानं 16. तं 17. भवति 18. च नास्ति 19. या नास्ति 20. हि नास्ति 21. प्रत्ययः 22. अथेह......उच्यते नास्ति 23. न त्वौणादिकस्य नास्ति

## २६. क्तक्तवतू निष्ठा ।

क्तक्तवतू निष्ठा । [1]इह क्तक्तवतुरूपाश्रयेयं सञ्ज्ञा, रूपनिर्ग्रहश्च प्रयो` उपदेशे वा भवति । न च प्रयोगे सानुबन्धकं रूपमस्तीत्युपदेशगतं ग्राह्यम् । तत्र 'नपुंसके भावे क्तः' (३.३.११४), 'ञीतः' (३.२.१८७)[2] इति क्तस्य क्वचिदुपदेशोऽस्ति । तदि तस्यैव स्यात्, लिङ्गान्तरे, कालान्तरे, धात्वन्तरे च न स्यात् । क्तवतोस्तु न क्वचिदुपदेशः, तत्केन विहितयोः क्तक्तवत्वोरेषा सञ्ज्ञा विधीयते ? अनयैव सञ्ज्ञया । वक्ष्यति निष्ठेति । यद्येवम्, इतरेतराश्रयः प्राप्नोति, विहितयोः सञ्ज्ञा, सञ्ज्ञया च विधानमिति । नैष दोषः । भाविनी सञ्ज्ञा विज्ञायते सूत्रशाटकवत् । तद्यथा, कश्चित्कञ्चित्तन्तुवायमाह, अस्य सूत्रस्य शाटकं वयेति । स पश्यति यदि शाटको, न वातव्यः, अथ वातव्यो, न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, स [3]मन्ये [4]वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । तद्वदिहापि तौ [5]भूते काले भवतः, ययोर्विहितयोर्निष्ठेत्येषा सञ्ज्ञा [6]भविष्यतीति ॥

## २७. सर्वादीनि सर्वनामानि ।

सर्वादीनि सर्वनामानि । द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गत्वेन [7]नपुंसकत्वायोगात् 'बहुवचनासंभवाच्च सर्वादीनीति बहुव्रीहिरित्याह—सर्वशब्द[8] इत्यादि । आदिर्येषाम् इति । यद्येवं बहुव्रीहेरन्यपदार्थप्रधानत्वात्सर्वशब्दोपलक्षितानां विश्वादीनामेव सञ्ज्ञा स्यात्, नो[9]पलक्षणस्य सर्वशब्दस्य, यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः स एवानीयते, न [10]चित्रा गाव इत्याशङ्क्याह—तानीमानि इति । [11]अत्र तानि इत्येव सिद्धे इमानीति प्रत्यक्षविषयेणेदंशब्देन गणपठितेषु सर्वशब्दस्यान्तर्भावं सूचयन् तद्गुणसंविज्ञानबहुव्रीहिं दर्शयति । तस्य अन्यपदार्थस्य, गुणः वर्तिपदार्थः सोऽपि कार्यी संविज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानः । मत्वर्थे हि बहुव्रीहिः । भूमादिषु [12]च मतुब् विधीयते । यद्यत्र स्वस्वामि[13]भावादिसम्बन्धः प्रवृत्तिनिमित्तम्,[14] न तत्रोपसर्जनस्य कार्ययोगः, यथा गोमन्तमानयेति । सम्भवति ह्यारण्यावस्थिताभिरपि गोभिः स्वस्वामिभावः । यत्र[15] तु संयोगसमवाययोरन्यतरत् प्रवृत्तिनिमित्तम्, तत्र स्वभावादेवोपसर्जनस्या[16]पि कार्ययोगः, यथा दण्डिनमानय. [17]विषाणिनमानयेति । नो खलु गृहावस्थितेन दण्डेन दण्डसंयुक्तः पुरुषो भवति, एवं बहुव्रीहावपि चित्रगुः, शुक्लवासा इति । इहाप्यादिशब्दोऽवयववचन उद्भूतावयवभेदः समुदायः समासार्थः, तत्र समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानां सञ्ज्ञा [18]भवन्ती विश्वादीनामिव सर्वशब्दस्यापि भविष्यति । अत्र च लिङ्गम्—'अदः सर्वेषाम्' (७.३.१००) इति निर्देशः, 'आमि सर्वनाम्नः सुट्' (७.१.५२) । सर्वे इति । 'जसः शी' (७.१.१७) । पूर्वयोस्तूपन्यासो जसन्ततामस्य दर्शयितुम् । सर्वस्मै [19]इत्यादि । 'सर्वनाम्नः स्मै' (७.१.१४), 'ङसिङ्योः स्मात्स्मिनौ' (७.१.१५) ।

उभशब्दो द्विवचनविषये एव प्रयुज्यते, असति द्विवचने नैव प्रयुज्यते । न हि भवति उभौ पुत्रावस्य उभपुत्र इति, उभयशब्दोऽत्र तत्स्थाने भवति उभयपुत्र [20]इत्यादि । न च द्विवचने किञ्चित्सर्वनामकार्यमस्ति, स्मैप्रभृतीनामेकवचनबहुवचनविषयत्वात्, काकचोश्च नास्ति विशेष [21]इति तस्येह पाठे प्रयोजनमाह—उभशब्दस्य इत्यादि । उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ भवतः । उभयेषाम् उभयस्मिन् इति । उभाववयवाव[22]स्येति व्युत्पाद्यमान उभयशब्दो यदा तिरोहितावयवभेदं समुदायमाचष्टे तदैकवचनं भवति, उभयो मणिरिति । यदा तु वर्गद्वयारब्धे समुदायिनि वर्तमानो वर्ग्यभेदानुगतं समुदायमाचष्टे तदा बहुवचनम्, उभये देवमनुष्या इति ।

---

1. इह नास्ति 2. क्तः इत्यधिकम् 3. मन्यते 4. स इत्यधिकम् 5. भूत 6 भवति 7. नपुंसकायोगात् 8. इत्यादि नास्ति 9. उपलक्षकस्य 10. चित्रा नास्ति 11. अत्र नास्ति 12. तु 13. भावादि नास्ति 14. न नास्ति 15. तु नास्ति 16. अपि नास्ति 17. विषाणिनमानयेति नास्ति 18. भवतीति 19. इति नास्ति 20. इत्यादि नास्ति 21. इति नास्ति 22. अस्य नास्ति

डतर डतम इति । सञ्ज्ञाविधौ प्रत्ययग्रहणेऽपि तदन्तयोर्ग्रहणम्, केवलयोः प्रयोजनाभावात् ।

वक्ष्यमाणेन इति । 'प्रथमचरम' (१.१.३३) इत्यादिना । सर्वशब्दपर्यायस्य इति । [1]अस्ति च सर्वशब्दपर्यायः समशब्दः 'नभन्तामन्यके समे' (ऋ. ८.३९.१), 'मा नो वृकाय वृक्ये समस्मै' (ऋ. ६.५१.६), 'उरुष्या णो अघायतः समस्मात्' (ऋ. ५.२४.३), 'उतो समस्मिन्नाशिशीहि नो वसो' (ऋ. ८.२१.८), 'मा नः समस्य दूढ्यः' (ऋ. ८.७५.९) इति यथा । एतच्च सर्वेषां नामानि सर्वनामानि इत्यन्वर्थसञ्ज्ञाकरणाल्लभ्यते । स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः । यद्यन्वर्थसञ्ज्ञा, [2]'पूर्वपदात्सञ्ज्ञायाम्' (८.४.३) इति णत्वं[3] [4]कस्मान्न भवति ? अस्मादेव निपातनात् । यदि सर्वादीनि सर्वनामानि तर्हीहापि प्राप्नोति, सर्वो नाम कश्चित्तस्मै सर्वाय देहीति, इह चातिक्रान्तः[5] [6]सर्वस्मै अतिसर्वाय देहीति । तस्मात्सञ्ज्ञानामुपसर्जनानां च सर्वादीनां [7]सञ्ज्ञाप्रतिषेधो वक्तव्यः, न केवलं सञ्ज्ञायाः पाठोऽपि तेषां गणे नास्तीति वक्तव्यम्, सञ्ज्ञामात्रप्रतिषेधे हि सर्वनामप्रयुक्तमेव कार्यं तेषां न स्यात् । पाठाश्रयं तु स्यादेव, त्यदादीनामः तन्नामकः कश्चित्, तत्, तदौ, तदः, अतिक्रान्तस्तमतितत्, अतितदौ, अतितदः, 'अद्ड्डतरादिभ्यः पञ्चभ्यः' (७.१.२५), कतरमतिक्रान्तं ब्राह्मणकुलमतिकतरमिति । सञ्ज्ञाप्रतिषेधस्तावन्न वक्तव्यः ।

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥

तत्र यथा बाहुर्नाम कश्चित्तस्यापत्यं बाहवः, 'बाह्वादिभ्यश्च' (४.१.९६) इतीञ् न भवति सञ्ज्ञा, श्वशुरस्यापत्यम् 'राजश्वशुराद्यत्' (४.१.१३७) न भवति, [8]धान्यमातुः स्वसा, 'मातृपितृभ्यां स्वसा' (८.३.८४) इति षत्वं न भवति, एवमिहापि, सञ्ज्ञाभूतानां सर्वादीनां सञ्ज्ञा, तन्निबन्धनं च कार्यम्, अन्तर्गणकार्यं च न भविष्यति ।

यद्वा 'व्यवस्थायाम्'[9] इत्यत्र 'असञ्ज्ञायाम्' इति विभज्यते, तेन च [10]गणपाठो विशेष्यते, यान्येतान्यनुक्रान्तानि सर्वादीनि तान्यसञ्ज्ञायां द्रष्टव्यानीति । उपसर्जनप्रतिषेधोऽपि न कर्तव्यः सर्वादीनां सञ्ज्ञा विधीयते, तत्र कः प्रसङ्गो यत् सर्वाद्यन्तस्य स्यात् ? सर्वशब्दस्य तु सत्यामपि सञ्ज्ञायामङ्गस्यासर्वनामत्वात् स्मायाद्यप्रसङ्गः । यद्येवम्, [11]परमसर्वस्मै इत्यादावपि न स्यात्, यतो यदङ्गं न तत्सर्वनाम, यच्च सर्वनाम न तदङ्गमिति ? मा भूदङ्गं सर्वनाम, अवयवस्यैव तु सर्वनामत्वे 'अङ्गाधिकारे तस्य [12]च तदुत्तरपदस्य च' (सी. प. ७७) इति समुदायस्य[13] च कार्यं भविष्यति, यथा अस्थ्यादीनामनङ् परमास्थ्नेति । न चैवमत्यस्थ्नेत्यादिवदतिसर्वायेत्यादावुपसर्जनेऽपि प्रसङ्गोऽर्थद्वारकस्य सम्बन्धस्याश्रयणात्सर्वनामार्थगतमेकत्वादिकं या विभक्तिराहेति, यथा, 'अष्टाभ्य औश्' (७.१.२१), 'षड्भ्यो लुक्' (७.१.२२) इति परमाष्टौ, परमपञ्चेत्यादौ भवति, प्रियाष्टानः, प्रियपञ्चान इत्यादौ न भवति[14] तद्वदत्रापि । 'त्यदादीनामः' (७.२.१०२) इत्याद्यन्तर्गणकार्यमप्येवमेव द्रष्टव्यम् । यत्तु रूपाश्रयं कार्यम् 'युष्मदस्मदोरनादेशे' (७.२.८६) इति, न[15] पाठाश्रयम्, नापि सञ्ज्ञाश्रयं तदस्थ्याद्यनङ्वदुपसर्जनेऽपि भवति । यत्तूपसर्जनदशायाः प्रागेव प्राप्तं तदपि भवति अतिक्रान्तो भवकन्तमतिभवकानिति, तस्मान्नार्थस्तदन्तस्य सञ्ज्ञया । उच्यते । अव्ययसर्वनाम्नाम् (५.३.६१) इत्यकच् परमभवकानिति तदन्तान्न स्यात् । 'पञ्चम्यास्तसिल्' (५.३.७) परमसर्वतः, 'सप्तम्यास्त्रल्' (५.३.१०) परमसर्वत्र, 'आ सर्वनाम्नः' (६.३.९१), 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' (६.३.९२) परमतद्र्यङ्, परमयद्र्यङ् इत्यादौ न स्यादिति तदन्तस्य[16] सञ्ज्ञेषितव्या । कथं पुनरिष्यमाणापि लभ्यते ? ज्ञापकादिति वक्ष्यामः । [17]तत्तवन्तस्य च [18]भवन्ति परमसर्वादिवत् अतिसर्वादेरपि स्यादिति उपसर्जनप्रतिषेधोऽपि वक्तव्यः ? न वक्तव्यः । अन्वर्थसञ्ज्ञाविज्ञानादेव सिद्धम् ।

1. अस्ति च नास्ति 2. पूर्वपदात्संज्ञायामग. 3. प्राप्नोति इत्यधिकम् 4. कस्मान्न भवति नास्ति 5. सर्वं तस्मै इत्यधिकम् 6. सर्वस्मै नास्ति 7. संज्ञायाः 8. धान्यमातृस्वसा 9. असंज्ञायाम् इत्यधिकम् 10. गण नास्ति 11. परमसर्वस्मात् 12. च नास्ति 13. च नास्ति 14. इति इत्यधिकम् 15. अपि इत्यधिकम् 16. एव इत्यधिकम् 17. तदन्तस्य 18. भवन्ति

वृत्तौ हि प्रधानार्थसंसर्गादुपसर्जनानि न सर्वार्थानि, यथासम्भवं [1]च सार्वार्थ्यमिति प्रत्यक्षपरोक्षतादिविशेषवाचित्वेऽपि तदिदमादीनां भवत्येव । अन्वर्थत्वादेव [2]च सञ्ज्ञाभूतानामपि सञ्ज्ञाभावः । एवं तावत्सञ्ज्ञानिबन्धनं स्मायाद्युपसर्जनानां निवारितम् । त्यदाद्यन्तर्गणकार्यं तु स्यादेव, पाठस्य स्थितत्वात् । एवं तर्हि तन्त्रावृत्त्येकशेषाणा[3]मन्यतमाश्रयणात् द्वितीयोऽपि सर्वनामशब्द उपात्तः, तेन पाठो विशेष्यते, यानि सर्वेषां नामानि तानि सर्वादीनीति । तेन सर्वादिपाठोपजीवनेन प्रवर्तमानमन्तर्गणकार्यमपि व्यवस्थास्यते । यद्वा सञ्ज्ञाया अन्वर्थत्वात्तत्सम्बन्धयोग्यानां सर्वार्थानां तावत्पाठोऽवश्याभ्युपगन्तव्यः । ततश्च प्रकारान्तरजुषां पाठे प्रमाणाभावादेव सिद्धः पाठात्पर्युदासः ॥

## २८. विभाषा दिक्समासे बहुव्रीहौ ।

विभाषा दिक्समासे बहुव्रीहौ । अत्र समासावयवानां सर्वादीनां सञ्ज्ञा विकल्प्यत इति वृत्तौ लक्ष्यते, [4]यथाह—दिगुपदिष्ट इत्यादि । दिशामुपदिष्ट उक्ते 'दिङ्नामान्यन्तराले' (२.२.२६) इत्यस्मिन्समासेऽवयवत्वेन वर्तमानानीत्यर्थः । न चावयवानां सञ्ज्ञाविकल्पे किञ्चित्प्रयोजनमस्ति, स्मायादिकं तावदङ्गाश्रयम्, काकचोश्च नास्ति विशेषः, दिग्वाचिनामकारान्तत्वात् । 'सर्वनाम्नो वृत्तिमात्रे' (वा. १०४) [5]इति [6]पूर्वपदस्य पुंवद्भावोऽपि न प्रयोजनम्, तत्र हि मात्रग्रहणम् क्वचित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेऽपि यथा स्यात्, तथा च दक्षिणपूर्वाया इति सञ्ज्ञाभावपक्षेऽपि भवति । स्यादेतत्, अवयवानामेव सञ्ज्ञा, कार्यं तु 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (सी. प. ७७) इति । एवमपि दक्षिणपूर्वतः, दक्षिणपूर्वत्रेत्यत्र[7] तसिलादयो न स्युः, तस्मात्सर्वाद्यन्ते बहुव्रीहौ सञ्ज्ञा [8]विकल्प्यते । 'सर्वादीनि' इत्ययं तु वृत्तिग्रन्थः 'सर्वाद्यन्ते प्रवर्तमाना सञ्ज्ञा सर्वादीन्यपि गोचरयति' इत्येवंपरो व्याख्येयः । यद्वा, अवयवानां सञ्ज्ञा[9]विधानेन [10]तदन्तस्यापि सिद्ध्यति, तदन्तविधेरभ्युपगमादिति ।

समासग्रहणं किम् इति । न बहुव्रीहिः समासत्वं व्यभिचरतीति प्रश्नः । दक्षिणदक्षिणस्यै इति । 'एकं बहुव्रीहिवत्' (८.१.९) इत्यनुवृत्तौ 'आबाधे च' (८.१.१०) इति दक्षिणशब्दस्य द्विर्वचनम्, 'न बहुव्रीहौ' (१.१.२९) इत्ययमपि निषेधो न भवति, तत्रापि समासाधिकारात् । दक्षिणोत्तरपूर्वाणाम् इति । असति बहुव्रीहिग्रहणे यथा 'न बहुव्रीहौ' (१.१.२९) इति प्रतिषेधं बाधते, एवं 'द्वन्द्वे च' (१.१.३१) इत्येतमपि बाधेत । अथ क्रियमाणेऽपि बहुव्रीहिग्रहणे या पूर्वा सोत्तरा [11]यस्योन्मुग्धस्य तस्मै पूर्वोत्तराय देहीत्यत्र कस्मान्न भवति ? प्रतिपदोक्तो यो दिक्समासः 'दिङ्नामान्यन्तराले' (२.२.२६) इति, तस्य ग्रहणम् । यद्येवम्, [12]तत एव हेतोर्द्वन्द्वे[13] न भविष्यति ? सत्यम् । उत्तरार्थमवश्यं कर्तव्यं बहुव्रीहिग्रहण[14]मिहापि [15]विस्पष्टार्थं भविष्यतीति मन्यते ॥

## २९. न बहुव्रीहौ ।

न बहुव्रीहौ । अत्र वृत्तौ [16]द्विधा सूत्रार्थो लक्ष्यते । बहुव्रीहाविति निषेधाधिकरणम्, बहुव्रीहौ सञ्ज्ञा न भवति[17], बहुव्रीह्याधारा सञ्ज्ञा न भवतीति । बहुव्रीहेः सञ्ज्ञा न भवतीति सर्वाद्यधिकरणं वा, बहुव्रीहौ यानि सर्वादीनि तानि सर्वनामसञ्ज्ञानि न भवन्तीति । [18]तत्र सर्वनामसञ्ज्ञायाम् इत्यादिनाऽऽद्यं पक्षं दर्शयति । कथं पुनर्ज्ञायतेऽभ्युपगतस्तदन्तविधिरिति ? अत एव निषेधात् । द्वितीयं सूत्रार्थं दर्शयति—बहुव्रीहौ इत्यादि[19] । प्रथमस्योदाहरणमाह—प्रियविश्वाय इति । 'सर्वनामसंख्ययोरुपसंख्यानम्' (वा. ११३) इति सर्वनाम्नः पूर्वनिपाते प्राप्ते 'वा प्रियस्य' (वा. ११४)

---

1. च नास्ति 2. च नास्ति 3. अन्यतराश्रयत्वात् 4. यदाह 5. इति नास्ति 6. पूर्वपदस्य नास्ति 7. इत्यत्र नास्ति 8. विकल्प्यते 9. विधानेन नास्ति 10. क्रियामाणा इत्यधिकम् 11. अस्य 12. अत 13. अपि इत्यधिकम् 14. इहापि नास्ति 15. इति इत्यधिकम् 16. हि इत्यधिकम् 17. इति इत्यधिकम् 18. तत्र नास्ति 19. आदिना

इति प्रियशब्दस्य पूर्वनिपातः। द्वचन्याय इति। 'सर्वनामसंख्ययोः' (वा. ११३) [1]इति द्वचन्ययोः पूर्वनिपाते [2]प्राप्ते परत्वात् संख्यायाः पूर्वनिपातः। द्वितीयस्योदाहरणमाह—इह च इति। अत्र च प्रतिषेधोऽयमारभ्यत इत्यनुषङ्गः। अत्रासति निषेधेऽकचि सति त्वकत्पितृको [3]मकत्पितृक इति प्राप्नोति, सति तु 'प्रागिवात्कः' (५.३.७०) इति के सति 'प्रत्ययोत्तरपदयोश्च' (७.२.९८) इति त्वमादेशयोस्त्वत्कपितृको मत्कपितृक इति सिध्यति 'नद्यृतश्च' (५.४.१५३) इति[4] [5]समासान्ते कपि। ननु च बहुव्रीहावयं निषेधः, इह च प्रागेव ततस्त्वकं पिताऽस्य, अहकं पिताऽस्येति वाक्यावस्थायामेवाकच् प्राप्नोति। एवं तर्हि प्रतिषेधसामर्थ्यात् यद्वाक्योपमर्दन बहुव्रीहिर्भवति तमेवावस्थायां निषेधो भविष्यति। अत्र च प्रथमः सूत्रार्थस्तदन्तविधिज्ञापनायैवोपन्यस्तः, न तु प्रियविश्वायेत्यादौ समुदायस्य सञ्ज्ञाप्रसङ्गः असर्वार्थत्वात्, यथा अतिसर्वायेत्यादौ।

बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं किमर्थमित्याह—बहुव्रीहौ इत्यादि। वस्त्रान्तरवसनान्तरा इति वसनमन्तरं येषामिति [6]बहुव्रीहौ द्वन्द्वः। अत्रासति बहुव्रीहिग्रहणे वर्तमानद्वन्द्वाश्रयो निषेधः स्यात्, ततश्च जसि विभाषा स्यात्। पुनर्बहुव्रीहिग्रहणात्तु यदन्ते द्वन्द्वः, सोन्तरशब्दो बहुव्रीहेः[7] पूर्वमत्रासीत् इति बहुव्रीह्याश्रयो नित्य एव निषेधो भवति। इदं तु 'तदन्तस्य सञ्ज्ञानिषेधः' इति प्रथमपक्षानुरोधेन प्रत्युदाहरणम्। न त्वत्र प्रसङ्गः, असर्वार्थत्वात्, वसन्त्यस्मिन्निति वसनं गृहम्, तेन 'विरूपाणामपि समानार्थानाम्' (का. वा. ७४७) इत्येकशेषाभावः॥

## ३०. तृतीयासमासे।

तृतीयासमासे। समासे इति [8]वर्तमाने इत्यादि। मुख्यस्यैव ग्रहणे प्राप्ते गौणस्यापि ग्रहणार्थं पुनः समासग्रहणमित्यर्थः। [9]न च तृतीयासमासमात्रार्थे वाक्ये प्रसङ्ग इत्याह—पूर्वसदृश इत्यादि। एतच्च लक्षणप्रतिपदोक्तपरिभाषया (व्या. प. ३) लभ्यते। त्वयका, मयका इति। 'युष्मदस्मदोस्तृतीयैकवचने', 'त्वमावेकवचने' (७.२.९७), 'योऽचि' (७.२.८९) सुबन्तयोः प्राक् टेरकच्॥

## ३१. द्वन्द्वे च।

द्वन्द्वे च। अयं समुदायस्यैव निषेधो नावयवानाम्। कुतः ? त्यदादीनां तावत् 'त्यदादीनि सर्वैर्नित्यम्' (१.२.७२) इति [10]एकशेषेण [11]भाव्यम्, प्राक् च त्यदादिभ्योऽकारान्ताः, तत्र [12]न काकचो[13]र्विशेषः, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा. १०४) त्विष्यत एव, दक्षिणोत्तरपूर्वाणामिति, सोऽयं प्रतिषेधो ज्ञापयति, 'अस्ति सर्वनामसञ्ज्ञायां तदन्तविधिः' इति॥

## ३२. विभाषा जसि।

विभाषा जसि। जसः कार्यं प्रति विभाषा इति। तत् कथम् ? व्यवस्थितविभाषेयम्। यद्वा, जसीति कार्यापेक्षयाधिकरणसप्तमी, जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्य इति। अन्ये त्वाहुः—जस ई जसी शब्दरूपापेक्षया नपुंसकह्रस्वत्वे सप्तम्या लुका निर्देशः, जस ईकारे कर्तव्य इति। किं [14]पुनः कारणमेवं व्याख्यायते तत्राह—अकज् हि इति। हिशब्दो यस्मादर्थे। यद्यविशेषेण विकल्पः स्यात्, कतर कतम अस् इति स्थिते कुत्साद्यर्थविवक्षायां यस्यामवस्थायामकज्विधिं प्रति सञ्ज्ञा स्यात्, ततश्च तन्मध्यपतितत्वात्त[15]द्ग्रहणे शीभावः स्यात्, के तु सति न भवति॥

---

1. इति द्वचन्ययोः नास्ति 2. प्राप्ते नास्ति 3. मकत्पितृक नास्ति 4 कप् इत्यधिकम् 5. समासान्ते कपि नास्ति 6. बहुव्रीह्योः 7. अन्त इत्यधिकम् 8. अनुवर्तमाने 9. न च......प्रसङ्ग इत्याह नास्ति 10. एकशेषभावात् 11. भाव्यम् नास्ति 12. न नास्ति 13. अविशेषः 14. पुनः नास्ति 15. ग्रहणेन ग्रहणे

## ३३. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । उभयशब्दस्य इत्यादि । उभाववयवावस्य 'उभादुदात्तो नित्यम्' (५.२.४४.) इति [1]तयपोऽयजादेशः । स्थानिवद्भावाद्भवत्ययं तयबन्तः, तथापि गणे पाठात् नित्यैव सञ्ज्ञा भवति । ननु गणे पाठस्योभयस्मिन्नुभयेषामित्यादिरवकाशः, इह तयब्ग्रहणस्य द्वितये द्वितया इति, उभयशब्दाज्जस्युभयप्रसङ्गे परत्वादिय-मेव विभाषा प्राप्नोति ? नैष दोषः । अन्तरङ्गा नित्या सञ्ज्ञा विभक्त्यनपेक्षत्वादिति सैव प्रवर्तते ।

काकचोर्यथायोगं वृत्ति इति । नेमशब्देऽकचो वृत्तिः, अन्येषु कस्येत्येष यथायोगार्थः । कः पुनर्दोषो नेमशब्दे यदि जसः कार्यं प्रति न स्यात्, पक्षे कोऽपि स्यात् । अस्तु नेमके, नेमकाः, नित्येऽप्यकचि तस्य तद्ग्रहणेन ग्रहणादस्मिन् विकल्पे सति एतद्रूपद्वयं भवत्येव । सत्यम् । प्रथमादिषु पक्षे[2]ऽकज्न भवतीत्येवम्परो[3] ग्रन्थः ॥

## ३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् ।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् । असञ्ज्ञायामिति सञ्ज्ञायामसत्याम्, पूर्वादयश्चे-त्सञ्ज्ञारूपा न भवन्तीत्यर्थः । व्यवस्था नियमः, स चात्रार्थादवध्यपेक्ष इत्याह—स्वाभिधेयापेक्ष इत्यादि । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते, तेन वाऽपेक्ष्यते यः स स्वाभिधेयापेक्षः । अवधिः मर्यादा, [4]पूर्वदेशस्य यत्पूर्वत्वं तत्परदेशमपेक्ष्य भवति, परस्यापि यत्परत्वं [5]तत्पूर्वदेशम् । एवं दिक्कालयोरपि द्रष्टव्यम् । तस्मात्पूर्वादिशब्द-वाच्योऽर्थोऽवश्यमवधिं कञ्चिदपेक्ष्य भवति । तत्र योऽयमपेक्षाया नियमः सा व्यवस्थेति ताव[6]द्विवक्षितम् । तस्यां गम्यमानायां पूर्वादिशब्दानां स्वाभिधेय एव वर्तमानानामियं सञ्ज्ञा भवति, न तु वाच्यायाम् ।

प्रवीणा इत्यर्थं [7]इति । अनेन व्यवस्थाभावमाह । न हि प्रवीणशब्दः सापेक्षमर्थमाचष्टे । सत्यामेव व्यवस्थाया-मित्यनेना[8]न्वर्थतां दर्शयति । सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्तते, अत्र जसः कार्यं प्रतीति नोक्तम्, विशेषाभावात् ॥

## ३५. स्वमज्ञातिधनाख्यायाम् ।

स्वमज्ञातिधनाख्यायाम् । अज्ञातिधनाख्यायामित्यस्यार्थमाह—न चेत् इत्यादि । यत्र शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे तत्रासौ सञ्ज्ञारूपेण[9] [10]प्रवर्तते । आत्मीया इत्यर्थं इति । पुत्राणां गवां सत्यपि ज्ञातिधनत्वे न तेनाकारेण तत्र वर्तते, किन्त्वात्मीयाकारेणेत्यर्थः । आख्याग्रहणे त्वसति ज्ञातिधनयोः पर्यवसानादत्रापि प्राप्नोति ।

धूमायन्त इत्यादि । यथोल्मुकान्यश्लिष्टानि असंहतानि धूमायन्ते, संहतानि तु प्रज्वलन्ति, तद्वत् [11]ज्ञातयो-ऽपीत्यर्थः । स्वा ज्ञातय इति । स्वशब्दस्या[12]नेकार्थस्य[13] व्यक्तीकरणाय पर्यायस्यापि ज्ञातिशब्दस्य प्रयोगः, स एव तु न प्रयुक्तः, निरङ्कुशाः कविवाच इति ॥

## ३६. अन्तरं बहिर्योगोपसंव्यानयोः ।

अन्तरं बहिर्योगोपसंव्यानयोः । बहिरित्यनावृतो देश उच्यते । बहिरित्यनेन योगो बहिर्योग इतीतिशब्दाध्याहारेण विगृह्य समासः । स चानावृतस्य बाह्यस्य वस्तुनो भवति । उपसंवीयते विधीयते वासोऽन्तरेणेत्युपसंव्यानम्, कर्मणि ल्युट् । नगरबाह्या इति बहिर्योगं दर्शयति । परिधानीयमन्तर्वासः, प्रावरणीयं बहिर्वासः । अन्तरे तापस इति । अत्र सञ्ज्ञाभावात्

---

1. तयपः नास्ति 2. अकज् नास्ति 3. परः नास्ति 4. पूर्वस्य 5. तत्पूर्वमपेक्ष्य 6. व्यवस्थितम् 7. इति नास्ति 8. अन्वर्थताम् इत्यस्य स्थाने अगतार्थताम् इति पाठः 9. तयोर्वर्तते इत्यधिकम् 10. प्रवर्तते नास्ति 11. अत्रापि इत्यधिकम् 12. अनेकार्थत्वात् 13. तदर्थस्य इत्यधिकम्

ङः स्मिन्न भवति । 'जसि' इति वर्तमाने कथं सप्तम्यन्तं [1]प्रत्युदाहरणे [2]दीयत इत्यत आह—गणसूत्रस्य च इत्यादि गणसूत्रमप्येवमेव पठ्यते । कस्मात्पुनरप्रस्तुतस्य [3]गणसूत्रस्य प्रत्युदाहरणं दीयते न सूत्रस्य ? 'अपुरीति वक्तव्य (वा. ५) इति[4] वक्ष्यति, तद् गणसूत्रविषयं यथा स्यादिति, तस्यायं प्रस्तावः । सूत्रस्याप्यनया दिशा प्रत्युदाहरणं गम्य इति न पृथग्दर्शितम् । अन्तरायाम् इति प्राकाराद्बहिर्वर्तिन्याम् इत्यर्थः । यद्यपि गणसूत्रेऽन्तरशब्दः पठ्यते, तथा तस्यैव सर्वनामत्वात् [5]टापा सहै[6]कादेशो[7]ऽपि तद्ग्रहणेन गृह्यत इति स्यात् प्रसङ्गः । लिङ्गविशिष्टपरिभाषया वा टाब स्यैव सञ्ज्ञाप्रसङ्गे वचनम् । विभाषाप्रकरण इत्यादि । यथायमर्थः सिद्ध्यति तथा 'विभाषा द्वितीयातृतीयाभ्या (७.३.११५) इत्यत्र वक्ष्यामः ॥

## ३७. स्वरादिनिपातमव्ययम् ।

स्वरादिनिपातमव्ययम् । तसिलादिः इति । 'पञ्चम्यास्तसिल्' (५.३.७) इत्यारभ्य 'एधाच्च' (५.३.४६) इत्येतदन्तः । शस्तसी[8]—'बह्वल्पार्थाच्छस्' (५.४.४२), 'प्रतियोगे पञ्चम्यास्तसिः' (५.४.४४) । 'संख्यायाः क्रि भ्यावृत्तिगणने कृत्वसुच्' (५.४.१७), 'द्वित्रिचतुर्भ्यः सुच्' (५.४.१८) । आस्थालौ इति । 'इण आसिः' (उ. ६७) अयाः, 'प्रत्नपूर्व' (५.३.१११) [9]त्वं प्रत्नथाः । च्व्यर्थाः—'सम्पद्यकर्तरि च्विः' (५.४.५०), 'विभाषा साति कात्स्न (५.४.५२), 'देये त्रा च' (५.४.५५), 'अमु च च्छन्दसि' (५.४.१२), 'किमेत्तिङव्ययघादामु'(५.४.११)। निपाता वक्ष्य इति । अथ किमर्थं स्वरादीनां पृथग्ग्रहणं क्रियते, [10]ते [11]चादिष्वेव[12] पठ्येरन् ? [13]न । चादीनामसत्त्ववचनानां निपा सञ्ज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चाव्ययसञ्ज्ञा, स्वस्ति वाचयति, स्वः पश्येति । [14]क्रियासम्बन्धे क[15]शक्तिदर्शनात् सत्त्ववाचित्वम् । अथ 'प्राग्रीश्वरान्निपाताः स्वरादीनि चादयोऽसत्त्वे' इत्येवं सूत्रन्यासः क्रियेत, कः पुन विशेषस्तत्र वा स्वरादिग्रहणं [16]क्रियेत, अत्र वा ? किं च 'निपात एकाजनाङ्' (१.१.१४) इति प्रगृह्यसञ्ज्ञा स्वरा नामप्येकाचां प्रसज्येत, 'किमोऽत्' (५.३.१२), 'दक्षिणादाच्' (५.३.३६), एकाच्च तद्धितः, केन्प्रभृतयस्तु कृत एका स्सन्ति । अथ [17]'चादिरेकाजनाङ्' इति क्रियते [18]तदा चादीनाम[19]सत्त्ववचनत्वं विशेषणं न लभ्यते । नैष दोष 'चादयोऽसत्त्वे' (१.४.५७) [20]इत्यत्रासत्त्वग्रहणं चादीनां पाठविशेषणम्, यथा 'तिङो गोत्रादीनि' (८.१.२७) इत्य कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनाम्, तेन यत्र यत्र चादिग्रहणं तत्र सर्वत्र विशिष्टानामेव ग्रहणम् । तत्रायमप्यर्थः, उभे स न कर्तव्ये भवतः, अव्ययम्, निपातः इति । कथम् ? 'प्राग्रीश्वरान्निपाताः' इति वा 'अव्ययानि' इति वा सूत्रं [21]कर्तव्य ततः स्वरादीनि 'तद्धितश्चासर्वविभक्तिः' (१.१.३८) यावद् 'अव्ययीभावश्च' (१.१.४१) इति । ततः 'चादयोऽसत्त्वे' (१.४.५७) इत्यारभ्य यावद् 'अधिरीश्वरे' (१.४.९७), 'विभाषा कृञि' (१.४.९८) इति । तत्र यस्मिन् प्रदेशे निपा ग्रहणं तत्र चादिग्रहणमस्तु, अव्ययप्रदेशेष्वव्ययग्रहणं निपातग्रहणं चेति, तत्तु तथा न कृतमित्येव ।

अव्ययमित्यन्वर्थसञ्ज्ञा इति । सदृशम् [22]इत्यादि । श्रुतिश्चेयमाथर्वणी प्रणवविद्यायां त्रिषु लिङ्गेषु स्त्रीषु पुंसकेषु सदृशम्, लिङ्गविशेष[23]प्रतिपादनेऽसामर्थ्यात् । विभक्तिषु इति कारकेषु । वचनेष्विति [24]एकत्वादिसंख्या अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् 'यस्मान्न व्येति नाना न गच्छति सत्त्वधर्मान्न गृह्णातीत्यर्थ तस्मादव्ययम्' इति, यच्छब्दरूपं न व्येति तदव्ययमिति वा । किं पुनः प्रयोजनमन्वर्थसञ्ज्ञाकरणे ? उपसर्जनप्रतिषे अत्युच्चैसौ, अत्युच्चैस इति । अतिक्रान्तप्रधानस्यात्र सत्त्वधर्मपरिग्रहात् उच्चैःशब्दः पठ्यते, कः प्रसङ्गस्तदन्तस्य [25]एतज् ज्ञापयत्याचार्यः, अस्त्यव्ययसञ्ज्ञायां तदन्तविधिः इति । तेन परमस्वः, परमोच्चैरिति स्वरादिप्राधान्ये तदन्तस्य भवति । कुशब्दः स्वरादिषु पठितव्योऽव्ययसञ्ज्ञार्थः ॥

---

1. प्रत्युदाहृतम् 2. दीयते नास्ति 3. गणसूत्रस्य नास्ति 4. च इत्यधिकम् 5. आपा 6. एकादे 7. अपि नास्ति 8. इति इत्यधिकम् 9. त्वम् नास्ति 10. ते नास्ति 11. न इत्यधिकम् 12. एव नास्ति 13. न नास्ति 14. क्रियासम्बन्धेन 15. शक्तेः 16. क्रियते 17. चादय एकाजनाङ 18. तथा 19. असत्त्ववचनम् 20. इत्यसत्त्ववचनम् 21. कर्तव्यम् नास्ति 22. आदि नास्ति 23. प्रतिपादनसामर्थ्या भावात् 24. एकत्वादिसंज्ञासु 25. तत्

## ३८. तद्धितश्चासर्वविभक्तिः ।

तद्धितश्चासर्वविभक्तिः । इह यद्यपि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधस्तथापि केवलस्य तद्धितस्य सञ्ज्ञायाः प्रयोजनाभावात् तदन्तविधिर्विज्ञायत इत्याह-तद्धितान्त. शब्द इति । अकच् तावत्प्रातिपदिकस्य सुबन्तस्य वा विधीयते । 'अव्ययादाप्सुपः' (२.४.८२) इत्यत्राप्यव्ययाद्विहितस्य [1]सुपो लुक्, न तु परस्य, अत्युच्चैसावित्यादावपि प्रसङ्गात् । 'तत्पुरुषे तुल्यार्थ' (६.२.२), 'नाव्ययदिक्छब्द' (६.२.१६८), 'खित्यनव्ययस्य' (६.३.६६) इत्यत्रापि पूर्वपदस्याव्ययस्य ग्रहणम् । सर्वा विभक्तिर्यस्य सम्बन्धिनी न भवति सोऽसर्वविभक्तिः ।

किं पुनरिदं तद्धितस्य विशेषणम्, आहोस्वित्तदन्तस्य ? कथञ्चेदं तद्धितस्य विशेषणम्, कथं वा [2]तदन्तस्य ? यदि सर्वा विभक्तिर्यस्य सम्बन्धिनी न भवति, कारणत्वेन यस्योत्पत्तौ सर्वा विभक्तिः कारणं न भवति, यथा 'पञ्चम्यास्तसिल्' (५.३.७) इत्यादाविति कार्यमन्यपदार्थः, तदा तद्धितस्य विशेषणं भवति, तद्धितस्यैव ह्युत्पत्तिर्न तदन्तस्य । एवंविशिष्टेन तद्धितेन तदन्तविधौ तादृशतद्धितान्तोऽव्ययमित्यर्थो भवति । अथ [3]तु सर्वा विभक्तिर्यस्य कार्यत्वेन सम्बन्धिनी न भवति, यस्मात्सर्वा विभक्तिर्नोत्पद्यत इति कारणमन्यपदार्थः, तदा तदन्तस्य विशेषणं [4]भवति । न हि तद्धितमात्राद्विभक्त्युत्पत्तिप्रसङ्गः । तत्र पूर्वस्मिन् पक्षे विना, नानेत्यत्र न स्यात्, न हि विनञ्भ्यामित्यत्र प्रतिनियता काचिद्विभक्तिराश्रीयत इति सर्वविभक्त्यन्ताभ्यां विनञ्भ्यां नानाञौ भवतः । अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति पक्षे येऽपि [5]भवदादिप्रयोगे तसिलादयो विधीयन्ते, 'इतराभ्योऽपि दृश्यन्ते' (५.३.१४) इति,[6] तेऽपि स भवाँस्ततो भवाँस्तं[7] भवन्तं ततो भवन्तमित्यादिसर्वविभक्त्यन्तेभ्य उत्पद्यन्त इति तत्रापि न स्यात् । 'तस्यापत्यम्' (४.१.९२), 'तत्र भवः' (४.३.५३) इत्यादौ च [8]षष्ठ्यादिकैकैव विभक्तिर्निमित्तम्, न तु सर्वेत्यौपगवादावतिप्रसङ्गश्चेति द्वितीयं पक्षमाश्रित्याह—यस्मात् इत्यादि । तत इत्यादौ 'प्राग्दिशो विभक्तिः' (५.३.१) इति तसिलादीनां विभक्तित्वात्स्यदाद्यत्वम् ।

कथं पुनरेतेऽसर्वविभक्तयः, यावता यत्र [9]च सङ्ख्या सम्भवति तत्रायमुपदेशः, अव्ययेभ्यस्तु निःसंख्येभ्य इत्यस्मिन्पक्षे 'अव्ययादाप्सुपः' (२.४.८२) इति ज्ञापकाश्रयणे च सर्वविभक्तयः, अथ सङ्ख्याकर्मादयश्च स्वादीनामर्था[10]स्तेन सहास्यैकवाक्यतेति पक्षः, ततोऽविभक्तित्वमेवासत्त्वभूतार्थानामापद्येत । उच्यते । 'द्व्येकयोर्द्विवचनैकवचने' (१.४.२२) इत्यत्रैकस्मिन्नित्यपनीय 'एकवचनम्' इति पृथक् सूत्रम् कर्तव्यम्, ततः 'द्विबह्वोर्द्विवचनबहुवचने' इति । ततश्चैकवचनमेकस्मिन्नपि भविष्यति, सङ्ख्याकर्माद्यभावे चाप्राप्तप्रापणार्थत्वादेकवचनमित्यस्य सूत्रस्य, द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते, ततश्चासत्त्ववचनेभ्योऽपि [11]सप्तानां विभक्तीनां सप्ताप्येकवचनानि भवन्ति । अव्ययीभावादप्येवमेव, तावतापि नाव्ययीभावात् 'तृतीयासप्तम्योः' (२.४.८४) इत्यस्योपपत्तेः, तदिदमुच्यते 'एकवचनमुत्सर्गतः करिष्यते' इति । एवं स्थिते यस्मात्सर्वा विभक्ति[12]र्नोपपद्यत इत्येकवचनेन विग्रहोऽवयवकात्स्र्न्यवृत्तिः सर्वशब्दो यस्य त्रिकस्य विभक्तिसञ्ज्ञा विहिता तन्निरवशेषं यस्मान्नोत्पद्यते, किन्तु तदेकदेश एवेत्यर्थस्तत्राह–यस्मात्सर्वा विभक्तिः इति । यदि तु सर्वा विभक्तय इति बहुवचनेन विगृह्येत ततः सर्वान्नीन [13]इतिवत् प्रकारकात्स्र्न्येऽपि सर्वशब्दस्य सम्भवात् एकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः, सप्ताप्येकवचनान्य[14]सत्त्व[15]वचनेभ्य उत्पद्यन्त इति न स्यादसर्वविभक्तित्वमिति भावः । इह 'तेनैकदिक्' (४.३.११२), 'तसिश्च' (४.३.११३) इत्येकस्मिन्नर्थे विधीयमानयोरप्य[16]ण्तसोरण् द्रव्यप्रधानः, तसिस्तु द्रव्योपसर्जनतृतीयार्थप्रधान इति तस्यासत्त्ववचनता ।

---

1. सुपो नास्ति 2. तद्धितान्तस्य 3. तु नास्ति 4. भवति नास्ति 5. भवतादियोगे 6. सम्भवात् इत्यधिकम् तेऽपि स भवान् नास्ति 7. तं भवन्तं नास्ति 8. षष्ठ्यादिकाणुकैव 9. च नास्ति 10. अर्था इति तेन 11. सर्वासाम् 12. नोत्पद्यते 13. इति नास्ति 14. असत्त्वेभ्य 15. वचनेभ्य नास्ति 16. तस्योरण

तद्धित इति किम् इति। असर्वविभक्तिरव्ययमित्येवास्तु, मा भूत्सर्वमेव प्रकरणं ये हि स्वरादयः, ये च निपाताः, ये[1] च [2]कृन्मेजन्ताः, ये च क्त्वादयः, यश्चाव्ययीभावः, सर्वे तेऽसर्वविभक्तय इति प्रश्नः। एकः, द्वौ, बहव इति। एतेभ्यो[3]ऽपि [4]सप्तस्वपि [5]विभक्तिष्वेकैकमेव वचनमुत्पद्यत इति स्यादतिप्रसङ्ग इति कर्तव्यं तद्धितग्रहणम्। तस्मिंश्च कृते प्रकरणमपि कर्तव्यमिति भावः। विंशत्यादयस्तु कृतैकशेषा द्विवचनबहुवचनान्ता अपि भवन्तीति नासर्वविभक्तयः। एवं द्वयत्रयोभयशब्दा अयजन्ताः। एवमपि [6]गोदयोरदूरभवो ग्रामः 'अदूरभवश्च' (४.२.७०) इत्यणः 'वरणादिभ्यश्च' (४.२.८२) इति लुपि [7]युक्तवद्भावात् सर्वासु विभक्तिषु द्विवचनस्योत्पत्तेरस्त्यतिप्रसङ्गः। स्यादयं पर्यनुयोगः यदि तद्धितान्तो गोदशब्दः, वयं तु 'लुब्योगाप्रख्यानात्' (१.२.५४) 'योगप्रमाणे च तदभावे दर्शनं स्यात्' इत्यधीयाना नैवं पर्यनुयोज्याः, एवमपि 'सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु' (५.१.५८) सञ्ज्ञायां [8]स्वार्थे उत्पाद्यः, पञ्चैव पञ्चकाः शकुनयः, अत्र प्राप्नोति, पचतिरूपं पचतिकल्पमित्यादौ च एकवचनमेवोत्पद्यत इति स्यादेवातिप्रसङ्गः। तस्मात्तद्धितानां पाठ एवाश्रयणीयः। तदाह—सिद्धं तु पाठात्तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, मान्तः, कृत्वोर्थाः, तसिवती, नानाञाविति॥

## ३९. कृन्मेजन्तः।

कृन्मेजन्तः। अत्रापि पूर्ववत्तदन्तस्य सञ्ज्ञेति स्थिते मेजन्तग्रहणं कृदन्तस्य विशेषणम्, कृदन्तम्मेजन्तमव्ययम् इति, कृत एव वा कृद्यो मेजन्तस्तदन्तमव्ययमिति। तत्राद्ये पक्षे प्रतामौ, प्रतामः, लवमाचष्टे इति णिचि, क्विपि, णिलोपे, ऊठि, 'एत्येधत्यूठ्सु' (६.१.८९) इति वृद्धौ लौरत्रापि प्राप्नोति। भवति ह्येतत् प्रत्ययलक्षणेन कृदन्तम्, मेजन्तं च श्रूयत इतीमं दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—कृद्य इति। नन्वत्रापि कारयाञ्चकार—आमन्तस्य न प्राप्नोति, पूर्वत्र तु लिटः कृत्त्वात्सिद्धम्, अत्रापि स्वरादिष्वामिति पाठात् सिद्धम्। अथापि तत्र तद्धितस्य पाठः, एवमपि कृदन्तत्वादुत्पन्नानां सुपाम् 'आमः' (२.४.८१) इति लुग्भविष्यति, 'लेः' (२.४.८०)। [9]इति [10]हि तत्र नानुवर्तते।

स्वादुङ्कारम् इति। 'स्वादुमि णमुल्' (३.४.२६)। स्वादुमित्यर्थग्रहणात्सम्पन्नङ्कारमित्यपि भवति, स्वादुमीति निपातनात्पूर्वपदस्य मान्तत्वम्। 'येन विधिस्तदन्तस्य' इत्येव सिद्धेरपार्थकमन्तग्रहणं तत्राह—अन्तग्रहणम् इत्यादि। नित्ययोगे बहुव्रीहिविज्ञानादौपदेशिकप्रतिपत्तिः। आधय इति। आङ्पूर्वाद्धाञः 'उपसर्गे घोः किः' (३.३.९२), चतुर्थ्येकवचने 'घेर्ङिति' (७.३.१११) आधये। भवत्ययं सम्प्रत्येजन्तः, नोपदेशे। एवं चिकीर्षवे, करोतेः सन्नन्तात् 'सनाशंस भिक्ष उः' (३.२.१६८)। कुम्भकारशब्दः कर्मण्यन्तः 'बहुवचने झल्येत्' (७.३.१०३)। अत्राव्ययसञ्ज्ञायाम् [11]'अव्ययात्' (२.४.८२) इति लुक्स्यात्, सन्निपातपरिभाषयाप्येतत्सिद्धम् (व्या. प. १२), तथा 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' (व्या. प. ३) इति। [12]अन्तग्रहणं तु [13]यत्नान्तरं द्रष्टव्यम्॥

## ४०. क्त्वातोसुन्कसुनः।

## ४१. अव्ययीभावश्च।

अव्ययीभावश्च। लुङ्मुखस्वरोपचारा इति। अत्र मुखस्वरोपचारौ निवर्त्यमानतया प्रयोजनम्, मशकार्थो धूम इतिवत्, लुक् प्रवर्त्यमानतया। उपाग्नि इति। अव्यादिति लुक्। पूर्वपदप्रकृतिस्वर एव इति। समासस्वरेणान्तोदात्तत्वम्। उपपयःकाम इति। 'शीलिकामिभिक्षाचरिभ्यो णः' (वा. २२९), कर्मणि घञन्तेन वा बहुव्रीहिः। अत्र मुखस्वरनिवृत्तिरेव साक्षात्प्रयोजनम्, लुक् तु 'नाव्ययीभावादतोऽम्' (२.४.८३) इति विशेषप्रतिषेधात् सिद्धः, 'अतः कृकमिकंस'

1. यः 2. कृन्मेजन्तः 3. अपि नास्ति 4. सप्तस्वपि नास्ति 5. सप्तविभक्तिषु 6. गोदयोर्नदयोरदूरभवो 7. लुपि इत्यधिकम् 8. स्वार्थे कन् 9. इतीह 10. हि तत्र नास्ति 11. अव्ययात् इति नास्ति 12. अन्तग्रहणे 13. मतान्तर

(८.३.४६) इत्यत्र च 'अनुत्तरपदस्थस्य' (८.३.४५) इति वर्तते। नन्वन्यदप्यव्ययकार्यं सम्भवति, उपाग्निकमित्यकच्, उपकुम्भमन्य इति [1]मुम्प्रतिषेधः, उपकुम्भीभूत इति 'अस्य च्वौ' (७.४.३२) इतीत्वस्यौपसङ्ख्यानिकः प्रतिषेधः, उपाग्न्यधीयानेति 'सुबामन्त्रिते' (२.१.२) इत्यस्यौपसङ्ख्यानिकः प्रतिषेधः, तत्कुतोऽयं कार्यनियम इत्यत आह—सर्वमिदम् इत्यादि। इह चेत्यादिना 'न लोकाव्यय' (२.३.६९) इत्यत्र यद्वक्ष्यति, 'अव्ययप्रतिषेधे [2]तोसुन्कसुनोरप्रतिषेधः' (वा. १४८) इति, तस्यावक्तव्यतां दर्शयति ॥

## ४२. शि सर्वनामस्थानम् ।

शि सर्वनामस्थानम्। कुण्डानि इति। 'जश्शसोः शिः' (७.१.२०), 'सर्वनामस्थाने' (७.१.७०) इति वर्तमाने 'नपुंसकस्य झलचः' (७.१.७२) इति नुम्। 'सर्वनामस्थाने चासम्बुद्धौ' (६.४.८) इति दीर्घो यद्यपि 'जसः शी' (७.१.१७) 'नपुंसकाच्च' (७ १.१९) इति विहितस्य शीशब्दस्य [3]शब्दरूपापेक्षया नपुंसकह्रस्वत्वे 'शि' इति रूपं सम्भवति, तथापि लाक्षणिकत्वान्न तस्य ग्रहणम्, सर्वनामस्थानप्रदेशेषु शिग्रहणे सुटो ग्रहणं न स्यात्। शिसुटोरिति वचने नपुंसकसुटोऽपि ग्रहणं प्राप्नोति, अतः सञ्ज्ञा तावत्कर्तव्या। किमर्थं तु महती क्रियते? केचिदाहुः, सर्वं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानम्, नाम प्रातिपदिकम्, सर्वशब्दोऽवयवकात्स्न्र्यवचनः। सर्वावयवयुक्तं यत्र नाम तिष्ठतीत्यर्थः। तेनान्यत्र न्यूनं नाम तिष्ठती[4]त्यर्थो गम्यते। किं सिद्धं भवति? 'उपेयुषः' इत्यादौ सम्प्रसारणे कृते पूर्वकृतस्येटो निवृत्तिः सिद्धा भवति, अन्यथा निवृत्तिकारणाभावात् अवतिष्ठेतेति[5]। एवं तु कस्मिन् प्रातिपदिके [6]किं न्यूनमिति न [7]ज्ञायेत, तस्मात्पूर्वाचार्यानु[8]पालब्धुमेषा महती सञ्ज्ञा प्रणीता ॥

## ४३. सुडनपुंसकस्य ।

सुडनपुंसकस्य। सुडिति पञ्चवचनानि इति। अनेनौटष्टकारेण प्रत्याहारः, न टाशब्दस्येति दर्शयति। आदिरन्त्येनेत्यत्रान्त्यत्वप्रयुक्ता यस्येत्सञ्ज्ञा तेन प्रत्याहारः। लकारे[9]त्वकारस्येत्सञ्ज्ञाविधानसामर्थ्यात् प्रत्याहार इति भावः। नपुंसकादन्यत्र इति। अनेन पर्युदासतां दर्शयति। प्रसज्यप्रतिषेधे हि कुण्डानि तिष्ठन्तीति जसः [10]शौ (७.१.१७) पूर्वेण या प्राप्तिस्तस्या अपि प्रतिषेधशङ्कायाम् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या. प. १९) इति परिहर्तव्यं स्यात्, असमर्थसमासश्चाश्रयणीयः स्यात्। नपुंसके न विधिः इति। स्त्रीपुंससम्बन्धिनः सुट उपादानात्। न प्रतिषेध इति। विधिप्रधानत्वात्पर्युदासस्य। तेन इत्यादि। यत एवं नपुंसकेनास्य व्यापारः, तेन जसो यः शिस्तस्य पूर्वेण सञ्ज्ञा भवतीति। सामनी इति। 'नपुंसकाच्च' (७.१.१९) इति शीभावः। 'विभाषा ङिश्योः' (६.४.१३६) इत्यल्लोपाभावे दीर्घो न भवति ॥

## ४४. न वेति विभाषा ।

न वेति विभाषा। नवाशब्दोऽयमेकनिपातोऽप्यस्ति प्रतिषेधवाची, नवोक्तार्थत्वादिति यथा, तस्य ग्रहणे 'विभाषा दिक्समासे' (१.१.२८) इति प्रकृते 'न बहुव्रीहौ' (१.१.२९) इति प्रतिषेधोऽनर्थकः स्यात्, विभाषाप्रदेशेषु च नशब्द एवोपादेयः स्यात्। अत एव सङ्ख्यावाचिनो नकारान्तस्याप्यग्रहणम्। प्रत्ययस्त्रीलिङ्गवचनोऽपि न गृह्यते, प्रदेशेष्वसम्भवात्। न हि 'विभाषा श्वेः' (६.१.३०) इत्यादौ विधेयस्य [11]नवपुराणत्वं स्त्रीलिङ्गता वा सम्भवति। तस्मान्निपातसमुदायोऽयमित्याह—न इति। प्रतिषेध इत्यादि। तयोः प्रतिषेधविकल्पयोरित्यनेनार्थयोरेषा सञ्ज्ञेति दर्शितम्। ननु च 'स्वं रूपं शब्दस्य' (१.१.६८) इति वचनान्नवाशब्दयोरेव ग्रहणं युक्तम्, तत्राह—इतिकरण इत्यादि।

---

1. मुमः प्रतिषेधः 2. तोसुनोरप्रतिषेधः 3. शब्द नास्ति 4. अर्थात् 5. इति नास्ति 6. किं न्यूनं किमन्यूनमिति 7. ज्ञायते 8. उपालब्धुं तेषामेषा 9. अकारेणेत्संज्ञा 10. शेः 11. नवत्वपुराणत्वं

कर्मणि ल्युट् इतिश्चासौ करणश्च सोऽर्थस्य सञ्ज्ञिनो निर्देशो यथा स्यादित्येवमर्थः। इतिशब्दो हि पदार्थविपर्यासकृत्। तत्र लोके बाह्यार्थप्रधानेषु शब्देष्वितिशब्दः प्रयुक्तः, अर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति गौरित्ययमाहेति, इह तु व्याकरणे 'स्वं रूपम्' इति वचनात् [1]स्वरूपपदार्थः। ततश्च नवाशब्दाभ्यां [2]परत्र प्रयुक्त [3]इतिशब्दस्तौ स्वरूपपदार्थकत्वात्प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति, तस्मादर्थयोरेव [4]सञ्ज्ञा।

विभाषाप्रदेशेषु इत्यादिना प्रतिषेधविकल्पयोरेकस्मिन्नेव योगे सहोपस्थापनं[5] विषयभेदेनेति [6]तं दर्शयति, तथा सति [7]विषयभेदो दुर्ज्ञानः स्यादिति भावः। तत्रेत्यादिना पूर्वं प्रतिषेधः प्रवर्तते, पश्चाद्विकल्प इति दर्शयति। यदि तु पूर्वं विकल्पः प्रवर्तेत पश्चात्प्रतिषेधः, ततो विकल्पप्रवृत्ति[8]रनर्थिकैव स्यात्। आनुपूर्वी च सञ्ज्ञाविधिवाक्ये श्रुतैव प्रदेशवाक्येष्वप्याश्रयितुं युक्ता। उभयत्रविभाषाः प्रयोजयन्ति इति। प्राप्तविभाषायामप्राप्तविभाषायां च सञ्ज्ञाकरणस्यानुपयोगात्। तथा हि प्राप्तविभाषायां तावत् 'विभाषोपपदेन प्रतीयमाने' (१.३.७७) इति 'स्वरितञितः' (१.३.७२) इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषा विधीयते। विभाषाशब्दश्चायं[9] 'वा' 'अन्यतरस्याम्' इत्यादिवद्विकल्पवाचित्वेन प्रसिद्धः। तेन भावाभावयोः प्रतिपादितयोर्भावांशस्य प्राप्तत्वादभावांशपरता विज्ञायते, [10]भावांशः स्थित एव। अप्राप्तविभाषायामपि 'विभाषोर्णोः' (१.२.३) इत्यभावांशस्य प्राप्तत्वात् भावांशपरता विज्ञायते। 'विभाषा श्वेः' (६.१.३०) इत्यत्र तु यदि विधिमुखेन विभाषा श्रुतिः प्रवर्तते, पित्स्वेव संप्रसारणं विभाषा स्यात्, कित्सु तु यजादित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन [11]प्रवृत्तिस्तदा कित्स्वेव विकल्पः स्यान्न पित्सु। न च शक्यं [12]वक्तुम् पित्सु विधिमुखेन प्रवर्तते, कित्सु प्रतिषेधमुखेनेति, एकत्वाद्वाक्यस्य तस्य चान्यतरविकल्प एवोपक्षीणत्वात्। सञ्ज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदाख्यो लिट् सर्व एव समीकृतो भवति, सर्वस्यासम्प्रसारणनिमित्तत्वात्। ततो विकल्पः सर्वत्र विधिमुखेन पक्षे सम्प्रसारणं सम्पादयति। एतच्च—'आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते' इति दर्शने प्रयोजनम्। यदा तु प्रतिलक्ष्यं 'विभाषा श्वेः' (६.१.३०) इत्यस्य व्यापारः, तदा क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन प्रवर्तत इति सञ्ज्ञाकरणमन्तरेणापीष्टं सिद्ध्यति। तथा च 'हृक्रोरन्यतरस्याम्' (१.४.५३) इत्यादावन्यतरस्यां[13]ग्रहणे [14]वाग्रहणे चोभयत्र [15]विभाषास्विष्टसिद्धिः। सूत्रारम्भे तु सञ्ज्ञाप्यर्थः, विभाषेत्यर्थः। सञ्ज्ञा नवार्थयोरिति व्याख्येयम्। शुशाव इति। श्वयतेर्लिटि तिपो णलि सम्प्रसारणे वृद्ध्यावादेशौ॥

## ४५. इग्यणः सम्प्रसारणम्।

इग्यणः सम्प्रसारणम्। [16]कथं पुनरनुवादे स्थानसम्बन्धो लभ्यते? 'षष्ठी स्थानेयोगा' (१.१.४९) इत्यत्राधिकारात्। भूत इति। कार्यान्तरार्थमनूद्यमानो भूतः, विधेयस्तु भावी, तत्र च सञ्ज्ञिनो भावित्वात् सञ्ज्ञापि भाविन्येव, यथा अस्य सूत्रस्य शाटकं वयेति। 'वचिस्वपियजादीनां किति' (६.१.१५) तद्भवति यस्य भूतस्य [17]सम्प्रसारणसञ्ज्ञा भवतीति। इष्टम्, उप्तम् इति। 'वचिस्वपि' (६.१.१५)इत्यादिना सम्प्रसारणम्। गृहीतम इति। 'ग्रहिज्या' (६.१.१५) इत्यादिना। 'ग्रहोऽलिटि दीर्घः' (७.२.३७)।

केचित् इत्यादि। [18]एवंवदतां भाविनी सञ्ज्ञा नाश्रयणीया, स्थानेयोगश्च लभ्यते। 'इग्यणः' (१.१.४५) इत्यत्र [19]भवतीत्यध्याहारात्पूर्वसूत्राच्चेतिकरणानुवृत्तेर्यणः स्थाने इग्भवतीति योऽयं वाक्यार्थ इत्यर्थो लभ्यते। कथं पुनरर्थद्वयमेकस्य सूत्रस्य भवति? तन्त्रेण, आवृत्त्या वा। अस्य च लिङ्गं विभक्तिविशेषनिर्देशः। यदयं 'ष्यङः सम्प्रसारणम्' (६.१.१३) इत्यादौ भाव्यमानविभक्त्या निर्देशं करोति, ततो [20]ज्ञापयति वाक्यार्थः [21]सञ्ज्ञेति। न हि तत्र वर्णस्य

1. स्वं रूपं पदार्थः 2. पर इति शब्दः 3. इतिशब्दः नास्ति 4. सञ्ज्ञेति 5. न इत्यधिकम् 6. तं नास्ति 7. विषयविभागो 8 अनर्थकैव 9. अयं नास्ति 10. भावांशस्तु 11. प्राप्तिस्तदा 12. वक्तुम् नास्ति 13. ग्रहणेन 14. वाग्रहणेन 15. विभाषया 16. यणः स्थान इति इत्यधिकम् 17. सम्प्रसारणमिति संज्ञा 18. एवंवदता 19. भवतीत्यस्य व्यापारात्पूर्वसूत्राच्चेति 20 ज्ञायते 21. सञ्ज्ञेति

सम्भवः । 'सम्प्रसारणस्य' (६.३.१३९) इत्यादौ तु भूतविभक्त्या निर्देशात् ज्ञायते वर्णः सञ्ज्ञेति । न हि तत्र वाक्यार्थः सम्भवति । तत्रेत्यादिना द्वयोरर्थयोर्विषयविभागेनोपस्थानं दर्शयति । अदुहितराम् इति । दुहेर्लङि कर्मकर्तरि उत्तमैकवचने इटि 'न दुहस्नुनमाम्' (३.१.८९) इति यकि प्रतिषिद्धे शब्लुकि अदुहि इति स्थिते 'तिङश्च' (५.३.५६) इति [1]तरपि 'किमेत्तिङव्ययघात्' (५.४.११) इत्याम् । तत्र लकारस्य यणः स्थाने इड्विहित इति सम्प्रसारणसञ्ज्ञायाम् 'हलः' (६.४.२) इति दीर्घत्वं प्राप्नोतीति चोद्यमपाकरोति । [2]सङ्ख्यातानुदेशात् इति । तरप उपन्यासोऽङ्गसञ्ज्ञार्थः । सङ्ख्यासाम्यात् सङ्ख्यातानुदेशे सति यकारस्थानिकस्येकारस्य सञ्ज्ञया भाव्यम्, अयं तु लकारस्थानिकः । द्युभ्यामित्यत्र 'दिव उत्' (६.१.१३१) इत्युत्वे यणादेशे[3] 'हलः' (६.४.२) इति दीर्घत्वं प्राप्तं तपरकरणान्न भवति । अक्षद्यूः, अक्षद्युवौ, अक्षद्युवः इत्यादावूठः सम्प्रसारणसञ्ज्ञायाम्, 'सम्प्रसारणाच्च' (६.१.१०८) इति पूर्वरूपत्वं प्राप्तम् 'वार्णादाङ्गं बलीयः' (व्या. प. ३९) इति उवङा बाध्यते ॥

## ४६. आद्यन्तौ टकितौ ।

आद्यन्तौ टकितौ । अत्र द्वौ पक्षौ सम्भवतः, सञ्ज्ञा स्यात् परिभाषा वेति । तत्र सञ्ज्ञापक्षेऽयमर्थः—टकिताविति कर्मधारयः, इत्सञ्ज्ञकौ टकारककारौ आद्यन्तयोः सञ्ज्ञेति । तत्रेडित्यत्राद्यर्थेन टकारेण बहुव्रीहौ इकारादिः शब्दो [4]गृहीत आदेशो विधीयमानस्तव्यस्य स्थानेऽन्तरतम इतव्यो भवतीति सिद्धमिष्टम् । एवं षुक्यन्तवचनेन ककारेण बहुव्रीहौ षकारान्तो गृहीत आदेशो भियो भीष् भवतीति सिद्धम् ।

[5]नन्वस्मिन्पक्षे सञ्ज्ञा सञ्ज्ञिप्रत्यायनार्था, सञ्ज्ञिनं प्रत्याय्य स्वयमेव निवर्तिष्यत इति किमिद्ग्रहणेन, टकावित्येवास्तु ? उच्यते । इत्सञ्ज्ञकत्वेन देशविशेषो लक्ष्यते, तेनेत्सञ्ज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ सञ्ज्ञे भवत इति 'आलजाटचौ' (५.२.१२५) 'ठस्येकः' (७.३.५०) इत्यादौ टकौ सञ्ज्ञे न भवतः । अस्मिन्पक्षे दोषः, 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६.४.७१) इत्यडित्यकारादेशस्य[6] विधानात्तस्यैवोदात्तत्वमलोऽन्त्यस्य स्यात्, नाकारस्य ? नैष दोषः । 'अडुदात्तः' इति त्रिपदो बहुव्रीहिः, उदात्तोऽकार आदिरस्येति । विशेषणस्याप्युदात्तस्य सौत्रः परनिपातः । एवमपि 'आडजादीनाम्' (६.४.७२) इत्यत्रोदात्तग्रहणमेवानुवर्तत इति बहुव्रीहेरसम्भवाद्दोषः, तस्मात्परिभाषापक्षमाश्रित्याह–'आदिष्टिद्भवति इति । परेण परिभाषाप्रकरणेन साहचर्यादिति भावः । यद्वा 'षष्ठी स्थानेयोगा' (१.१.४९) इत्यत्रेदमनुवर्त्यम्, अत एवाह—षष्ठीनिर्दिष्टस्य इति । तेन 'चरेष्टः' (३.२.१६), 'आतोऽनुपसर्गे कः' (.३..२.३) इत्यादयः प्रत्यया आद्यन्तभूता न भवन्ति[7] । एवमपि 'गापोष्टक्' (३.२.८), 'व्रीहिशाल्योर्ढक्' (५.२.२) इत्यत्र प्रसङ्गः, तत्र टकष्टित्त्वकित्त्वयोगे[8] परत्वादन्त्यः स्यात् ? नैष दोषः, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते न [9]परान्' (व्या. प. ९) इति । एवमयं स्थानेयोगं बाधते, न प्रत्ययपरत्वम् । भीषयत इति । 'ञिभी भये' (धा. पा. १०८५) णिच्, 'भियो हेतुभये षुक्' (७.३.४०), 'भीस्म्योर्हेतुभये' (१.३.६८) ॥

## ४७. मिदचोऽन्त्यात्परः ।

मिदचोऽन्त्यात्परः । अचः इति निर्धारणे षष्ठी, जातावेकवचनमित्याह—अचाम् इत्यादि । अत्रापि जातौ बहुवचनम् । यदि पुनरन्त्यादित्यनया समानाधिकरणा पञ्चमी स्यात्, ततो हलन्तेष्वस्याः प्रवृत्तिर्न स्यात् । ततश्च 'नपुंसकस्य झलचः' (७.१.७२) इति नुमिहैवान्त्यात्परः स्यात् कुण्डानीति, [10]यशांसीत्यत्र स्वलोऽन्त्यस्य स्यात्, एवं 'शे मुचादीनाम्' ( .१.५९) [11]इत्यादौ । ततश्च तेषु मित्त्वमनर्थकं स्यादिति भावः । समानजातीयस्यैव निर्धारणं भवतीत्यन्त्योऽप्यजेव विज्ञायत इत्याह—अन्त्यादचः पर इति । पुरस्तादपवादन्यायेन (व्या. प. ९) स्थानेयोगत्वस्यैवायमपवादो

1. तरप् 2. सङ्ख्यातानुदेश इति 3. च इत्यधिकम् 4. गृहीत आदेशो नास्ति 5. नन्वस्मिन्नपि पक्षे 6. एव इत्यधिकम् 7. इति इत्यधिकम् 8. अपि इत्यधिकम् 9. उत्तरान् 10. पयांसीत्यत्र 11. इत्यत्र

युक्त इत्याशङ्क्याह—स्थानेयोगप्रत्ययपरत्वस्या[1]पवाद इति । स्थानेयोगश्च प्रत्ययपरत्वं चेति [2]समाहारे [3]द्वन्द्वः । '[4]तृणहः' (७.३.९२) इति निर्देशात् श्नमो मकारो न श्रवणार्थः, अतो मित्करणसामर्थ्यात् प्रत्ययपरत्वस्याप्ययमपवादो युक्त इति भावः । मस्जे इत्यादि । 'मस्जिनशोर्झलि' (७.१.६०) इति नुम् यद्यन्त्यादचः परः स्यात् ततो निष्ठायां मन्स्ज इति स्थिते 'स्कोस्संयोगाद्योरन्ते च' (८.२.२९) [5]इति सलोपो न स्यात् । बहूनां समुदाये समुदायस्यैका संयोगसञ्ज्ञा न द्वयोर्द्वयोरित्यस्मिन् पक्षे सत्यपि वा सलोपे तस्यासिद्धत्वादनुपधानकार इति 'अनिदिताम्' (६.४.२४) इत्यनुषङ्गलोपो न स्यात् । नकारस्योपधायाः 'अनुषङ्गः' इति पूर्वाचार्याणां सञ्ज्ञा । तस्माज्जकारात्पूर्वो नुम् कर्तव्य इत्यर्थः ।

मग्न इति । 'ओदितश्च' (८.२.४५) इति निष्ठानत्वम्, तस्यासिद्धत्वात्कुत्वम् । अत्र 'आद्यन्तौ टकितौ' (१.१.४६) इत्यतः 'अन्तः' इत्यनुवृत्तौ पूर्वस्य सङ्घातस्य [6]मिदन्तावयवो भवति । [7]'आदि' इत्यनुवृत्तौ तत्र सन्निहितस्य परस्यादिर्भवति । अथोभयं निवृत्तं ततोऽभक्त इति त्रयः पक्षाः । तत्राभक्ते ताता पिण्डानामिति नलोपो न स्यात् । तच्छब्दात् 'जश्शसोः शिः' (७.१.२०) तानि 'शेश्छन्दसि बहुलम्' (६.१.७०) इति शेर्लुक् । वहंलिहः, अभ्रंलिहः—'वहाभ्रे लिहः' (३.२.३२) इति [8]खशि 'अरुर्द्विषदजन्तस्य मुम्' (६.३.६७) इति [9]मुम् । अस्यापदान्तत्वादनुस्वारो न स्यात् । त्रपुणी इत्यत्र परत्वान्नित्यत्वाच्च नुमि कृते तेन व्यवधानादौङः शीभावो न स्यात् । अथ परादिः—त्रपुणे 'घेर्ङिति' (७.३.१११) इति गुणः प्राप्नोति, अतिसखीनि—'सख्युरसम्बुद्धौ' (७.१.९२) इति [10]णिद्वद्भावे 'अचो ञ्णिति' (७.२.११५) इति वृद्धिः प्राप्नोति । त्रपुणि, 'अच्च घेः' (७.३.११९), शुचीनि, 'नोपधायाः' (६.४.७) इति दीर्घत्वं प्राप्नोति । ताता पिण्डानामिति नलोपः, वहंलिह इत्यनुस्वारः । तस्मात्पूर्वान्त [11]एवायं मिदेषितव्यः ॥

## ४८. एच इग्घ्रस्वादेशे ।

एच इग्घ्रस्वादेशे । परिभाषेयं स्थानिनियमार्था 'ह्रस्वो नपुंसके' (१.२.४७) इत्यादावुपतिष्ठते । इहैचां पूर्वो भागो मात्रात्मकः कण्ठ्योऽकारसदृशः, एदैतोरुत्तरस्तालव्य इकारसदृशः, ओदौतोरोष्ठ्य उकारसदृशः । एवमवयवसमाहारात्मनामेचां ह्रस्वशासनेषु समुदायान्तरतमस्याभावात् अवयवान्तरतमो ह्रस्वो भवन् कदाचिदकारः स्यात्, कदाचिदिकारोकारौ । मा कदाचिदकारो भूदित्येवमर्थमिदमारभ्यते, तदाह—इगेव ह्रस्वो भवति इति । यदि त्वयं विधिः स्यात् तदा ह्रस्वादेश इति विषयोपलक्षणमेतत्स्यात्, [12]यस्मिन्विषय एचो ह्रस्वादेशप्रसङ्गस्तत्रेग्भवतीति । ततश्च दीर्घाणां स्थाने दीर्घा [13]एवेकः स्युः, सवर्णग्रहणात् ? नैष दोषः, 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' (व्या. प. ३५), 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' (पु. प. २१), 'दिव उत्' (६.१.१३१) इति तपरकरणात् अमूभ्यामितिवत्, तथैचामिकां च साम्यात् संख्यातानुदेशोऽपि स्यात्, आदेशग्रहणं चानर्थकं स्यात् । तत आदेशग्रहणसामर्थ्यात् ह्रस्वादेशे ह्रस्वादेशनकाल इक्कर्तव्यः ह्रस्वादेशं कुर्वन्निकं कुर्यादित्यर्थः । यद्वा आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः । निर्धारणे सप्तमी जातावेकवचनम् । आदिश्यमानेषु [14]ह्रस्वेषु मध्ये इगेव ह्रस्वो भवतीति सर्वथा नियमरूपेणास्य प्रवृत्तिः । प्राप्तिपूर्वको नियम इति ये प्राप्ता अन्तरतमास्तेष्वेव नियमः । न च ऋकारलृकारौ प्राप्ताविति कुतो यथासङ्ख्यम्, कुतो दीर्घप्रसङ्गः ? एवं चेणित्येव सिद्धे इग्ग्रहणं परेण मा भूदिति । अतिरि, अतिनु । रायमतिक्रान्तम्, नावमतिक्रान्तं ब्राह्मणकुलमिति प्रादिसमासे नपुंसकह्रस्वत्वम् । उपगु इति । अव्ययीभावः । रैशब्दश्छन्दस्येवेति भाष्यम् । एकारस्याप्रसिद्धत्वादुदाहरणं न प्रदर्शितम् । हेशब्दमतिक्रान्तं [15]ब्राह्मणकुलमतिहि । अतिखट्व इति । [16]उपसर्जनह्रस्वः । देवदत्त इति । आमन्त्रिताद्युदात्तत्वम् । देवदत्त । 'गुरोरनृत' (८.२.८६) इत्यादिना प्लुतः ॥

---

1. अयमपवादः 2. समाहारः 3 द्वन्द्वः नास्ति 4. तृणह इम् 5. इति लोपो 6. मिदन्त्यावयवो 7. आदिः 8. खशि नास्ति 9. मुम् नास्ति 10. णिद्वद्भावः 11. एवायमित्येषितव्यः 12. यस्मिंश्च वि[षये] 13. इकः नास्ति 14. ह्रस्वेषु नास्ति 15. ब्राह्मणकुलमिति अतिहि 16. उपसर्जनह्रस्वत्वम्

## ४९. षष्ठी स्थानेयोगा ।

योगनियमार्था इति । यद्यपि षष्ठी स्थानेयोगैवेत्यस्यां वचनव्यक्तौ यत एवकारस्ततोऽन्यत्रावधारणमिति षष्ठीनियमः श्रुत्या प्रतीयते तथापि स्थाननिमित्तक एव सम्बन्धः षष्ठ्या वाच्य इत्यर्थात् सम्बन्धनियमो[1]ऽपि भवतीति भावः । योगे वा नियमो योगनियमः । यदि योगनियमः क्रियते लोकेऽपि नियमः प्राप्नोति, अवयवषष्ठ्यादयश्च न सिध्यन्ति । ततश्च 'शास इदङ्हलोः' (६.४.३४) शासेश्चान्त्यस्य स्यादुपधामात्रस्य च, 'ऊदुपधाया गोहः' (६.४.८९) गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च, [2]तत्राह—इह शास्त्रे या षष्ठ्यनियतयोगा इति । एतेन शास्त्रेऽयं नियमः, शास्त्राङ्गत्वात् परिभाषाणाम्, तत्राप्यनियमप्रसङ्ग इति दर्शयति । अनियमप्रसङ्गे नियमः कर्तव्यो लोकवत्, तद्यथा लोके ग्रामान्तरं जिगमिषुः कश्चित्कञ्चिदाह 'पन्थानं मे भवानुपदिशतु' इति, स यत्र सन्देहः, पथि द्वैविध्यात्, तत्रैवोपदिशति 'अमुष्मिन्नवकाशेऽनेन पथा गच्छ' इति । एवमिहापि 'अस्तेर्भूः' (२.४.५२) अस्तेः स्थाने[3]ऽनन्तरो वेति सन्देहे नियमः क्रियते स्थानेयोगैवेति । एतदेव स्पष्टयति—स्थानेयोगस्य निमित्तभूत इति । निमित्तभूते, निमित्तत्वं प्राप्ते । निमित्तग्रहणं कुर्वन् 'स्थाने' इति निमित्तसप्तमीति दर्शयति । स्थानशब्दोऽयमस्त्यपकर्षवचनः, गोस्थानेऽश्वो बध्यतामिति, अस्ति च निवृत्तिवचनः, [4]श्लेष्मणः स्थाने कटुकमौषधमिति अस्ति च प्रसङ्गवचनः, [5]दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति । तदिह चरमस्य ग्रहणमित्याह—स्थानशब्दश्च इति । चशब्दोऽवधारणे भिन्नक्रमश्च वाचीत्यस्यानन्तरं द्रष्टव्यः । प्रसङ्गवाच्येवेति [6]कथमित्याह—यथा इति । निवृत्तिवाची न गृह्यते, अस्तेरुपदेशसामर्थ्यात् । न ह्यार्धधातुके [7]निर्वर्तितस्य सार्वधातुके श्रवणमुपपद्यते, न हि मथुरायां व्यापादितः [8]स्रुघ्ने जीवति । नाप्यपकर्षवचनः, न ह्यर्थेन नित्यसम्बद्धस्य ततोऽपकर्षः सम्भवति । नाप्यार्धधातुकादपकर्षः, न हि नित्ये प्रकृतिप्रत्ययसमुदाये प्रकृतेरपकर्षः सम्भवति । स्वाभाविक एव ह्यस्तेरप्रयोग आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते, अतः प्रसङ्ग एव स्थानम् । प्रसङ्गः प्राप्तिः, अस्तेः प्राप्तौ भूः प्रयोक्तव्य इत्यर्थः । अस्तिनार्थं प्रतिपादयितुमुद्युक्त आर्धधातुके विषये भवतिना प्रतिपादयेदिति यावत् । प्रसङ्गसम्बन्धस्येत्यादिना सूत्रार्थमुदाहरणे दर्शयति । ब्रुव इत्युपलक्षणम् ।

किं पुनर्बह्वः षष्ठ्यर्था यत इदमुच्यत इत्यत आह—बहवो हि इति । एकशतं षष्ठ्यर्थाः । तत्र स्वस्वामिभावादयः शब्दे न सम्भवन्ति, समीपादय एव [9]तु सम्भवन्तीत्यतो यावन्तः शब्दे सम्भवन्तीत्युक्तम् । व्यवहितमपि समीपं भवतीत्यनन्तराद्भेदेनोपादानम् । स्थानेयोगेत्यसमासश्चेत् योगेति स्त्रीलिङ्गं षष्ठीशब्देन च सामानाधिकरण्यमनुपपन्नम् । समासेऽपि तत्पुरुषश्चेत् तौ च [10]पूर्वोक्तदोषौ, सप्तम्या लुक्प्रसङ्गश्च । बहुव्रीहावपि लुक्प्रसङ्गोऽनिवार्य [11]एवेत्यत आह—षष्ठी स्थानेयोगा इत्यादि ।

यद्वा अयोगेति पदच्छेदः । न विद्यते योगो यस्याः साऽयोगा । तत्र योगमन्तरेण षष्ठ्या एवाभावात् विशिष्टो योगो यस्या नास्तीत्यर्थः । एवं च कृत्वा सन्देह एवोपस्थानम् [12]इत्येवं [13]सर्वत्र सिद्धं भवति । अथ वा योगवती योगा, षष्ठ्याश्चावश्यम्भावी योग इति सामर्थ्यात् भूम्नि मत्वर्थीयोऽकारः, बहवो योगा यस्याः सन्तीति । अस्मिन्नपि पक्षे सन्देहविषय उपस्थानमिति सिद्धम् ।

भाष्ये सूत्रं प्रत्याख्यातम् । कथम् ? 'अस्तेर्भूः' (२.४.५२) इत्यत्र सन्देहः, स्थाने[14]ऽनन्तरः समीप इति । [15]लक्ष्यानुरोधात् स्थान इति व्याख्यास्यामः । इदं तु षष्ठ्यन्तं यथा स्थानेन युज्येत, अतः षष्ठ्युच्चारिता । तेन 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या. प. १०६) इति सिद्धं भवतीति[16] । तत्र सूत्रे[17] षष्ठ्यन्तं गृह्यते, षष्ठ्यन्तमेव निर्दिश्यमानं

1. अपि नास्ति 2. तत्राह—इह नास्ति 3. अनन्तरे 4. श्लेष्माण 5. दर्भाणां—प्रस्तरितव्यमिति नास्ति 6. क्व तथेत्याह 7. निर्वर्तितस्य 8. सृघ्ने 9. तु नास्ति 10. पूर्वोक्तौ दोषौ 11. एवेत्याह 12. इत्येतदपि 13. सर्वत्र नास्ति 14. अनन्तरे 15. तत्र इत्यधिकम् 16. इति नास्ति 17. षष्ठीति इत्यधिकम्

स्थानेन युज्यते न तु प्रतीयमानमिति । तेन 'पादः पत्' (६.४.१३०) इत्यस्यायमर्थः, [1]पादान्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टः, तस्य पच्छब्द आदेशः, न [2]तु प्रतीयमानस्य तदन्तस्येति[3] ॥

## ५०. स्थानेऽन्तरतमः ।

यद्ययं स्वतन्त्रो विधिः स्यात्, अत्रापि प्राप्नोति, दधि, मधु । अस्तु[4], न कश्चिदन्य आदेशः प्रति निर्दिश्यते, तत्रान्तर्यतः स एव [5]तस्य भविष्यति ? [6]न, तस्याप्यन्य [7]इत्यनवस्थाप्रसङ्गात् । प्रयोजनमन्तरेण [8]हि प्रवर्तमानमसकृदपि प्रवर्तते । ततश्च सर्वस्य निवृत्त्युन्मुखत्वादर्थप्रत्यायनाय प्रयोगो न स्यात् । अपि च बिसं, मुसलमित्यादौ यदा समुदायस्य समुदायस्तदा सकारमात्रस्यानादेशत्वात् षत्वाप्रसङ्गेऽपि सकारमात्रस्य सकार [9]इति षत्वं प्राप्नोति । अतः परिभाषाप्रकरणात् परिभाषेयं यत्र स्थानषष्ठी तत्रोपतिष्ठते । तेन विधिवाक्याना[10]मनेन सूत्रेणैकवाक्यत्वात् विधानकाल एवान्तरतम आदेशो विधीयते इत्याह—स्थाने प्राप्यमाणानाम् इति । अत्रैवशब्दाप्रयोगात् प्राप्यमाणानामिति वचनाच्च विशिष्टविधिरेवायम्, न नियमः । अर्थात्वनन्तरतमव्युदास इति दर्शितं भवति । अन्तरतम इत्यस्यार्थमाह—सदृशतम इति । कुतश्च इति । शब्दत्वस्य साधारणत्वात् प्रातिस्विकविशेषस्य चासाधारणत्वात् प्रश्नः । वतण्डी चासौ युवतिः इति । विग्रहवाक्यम्, इतरदुदाहरणम् । अत्र वतण्डस्यापत्यं स्त्री, 'वतण्डाच्च' (४.१.१०८),[11] 'लुक् स्त्रियाम्' (४.१.१०९) इति यञो लुक्, शार्ङ्गरवादिपाठान्ङीन् । 'पोटायुवति' (२.१.६५) इति समासे [12]सति 'पुंवत्कर्मधारय' (६.३.४२) इति पुंशब्दो निर्दिश्यमानो वतण्डापत्यवाचिनो [13]वतण्डशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति । 'चकारसं' इत्यादि । [14]अल्पप्राणत्वादिकं सवर्णसञ्ज्ञायामुक्तम् । 'अमुष्मै, अमूभ्याम्' इति । अदसश्चतुर्थ्येकवचने त्यदाद्यत्वम्, 'सर्वनाम्नः स्मै' (७.१.१४), भ्यामि 'सुपि च', (७.३.१०२) इति दीर्घत्वम् ।

'स्थान इति वर्तमाने' इति । पूर्वसूत्रात् । यद्यपि तत्र समस्तम्, तथापि स्वरितत्वानुषङ्गादनुवृत्तिरविरुद्धा । 'पुनः [15]स्थानेग्रहणम्' इति । प्रकृतेन हि स्थानशब्देन स्थाने प्राप्यमाणानामित्ययमर्थो लभ्यते, अयं तु ताल्वादिस्थानवचनो वाक्यभेदेन सम्बध्यते, स्थानेऽन्तरतमो भवति । '[16]यत्रानेकमान्तर्यं तत्र [17]स्थानकृतान्तर्यमाश्रीयते' (पु. प. १४) इति वाक्यभेदस्य च तमब्ग्रहणं लिङ्गम् । स्थानकृत एव [18]हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात् तमब्ग्रहणं व्यर्थमेव[19] स्यात् । 'तमब्ग्रहणं किम्' इति । सुसदृशसम्भवे तदेव [20]ग्रहीष्यत इति प्रश्नः । 'वाग्घसति' इत्यादि । ईषत्सदृशेऽपि लोके [21]सादृश्यव्यवहारदर्शनात् तमब्ग्रहणमिति भावः । 'सोष्मणः, सोष्माणः' इत्यादि । ऊष्मशब्दोऽत्र गुणमात्रवचनः । इतिकरणो हेतौ । यस्मादूष्मगुणयुक्ताः, तस्मादूष्मगुणयुक्तस्य हकारस्य द्वितीयाः प्रसक्ताः इत्यर्थः । 'शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्थाः' इति शिक्षा । अत्रोष्मशब्दो [22]गुणवचनः, सस्थानेनेति 'इत्थंभूतलक्षणे' (२.३.२१) तृतीया । हशषसाः खच्छा-दीनां द्वितीयानां सस्थाना यथा ते ऊष्माण एवं द्वितीया अपीत्यर्थः । फकारस्य सस्थान ऊष्मा नास्ति, तस्मात्तस्य विशेषत ऊष्मत्वं वक्तव्यम् । हकारेण चतुर्था इति, यथा हकार ऊष्मा एवं तेऽपीत्यर्थः । एवं नादवतो नादवन्तः इतीत्यत्रापि हेत्वर्थो योज्यः । इह इष्टम्, [23]उप्तम्, आन्तर्यतोऽर्धमात्रस्य व्यञ्जनस्यार्धमात्रेक् संप्रसारणं प्राप्नोति, इह च दध्यत्र, कुमार्यत्र, ब्रह्मबन्ध्वर्थम् [24]मात्रिकद्विमात्रिकत्रिमात्रिकाणामिकां [25]मात्रिकद्विमात्रिकत्रिमात्रिका यणः प्राप्नुवन्त्यान्तर्यतः । नैव लोके न [26]वेदेऽर्धमात्र इगस्ति, नापि मात्रिको द्विमात्रिको वा यण्, योऽस्ति स भविष्यति । इहान्तरतमशब्दः सप्तम्यन्तो[27]ऽपि पठितो भाष्ये । 'स्थानेऽन्तरतमः, उरण् रपरः' इति संहितापाठो नित्यः तत्र पदच्छेदे सप्तम्यन्तमपि

---

1. पादशब्दान्तस्याङ्गस्य 2. तु नास्ति 3. इति नास्ति 4. यत्र इत्यधिकम् 5. तस्य नास्ति 6. न नास्ति 7. तस्याप्यन्य इत्यधिकम् 8. हि नास्ति 9. आदेश इत्यधिकम् 10. अनेन नास्ति, तत्स्थाने एतेन इति पाठः 11. इति यत्र इत्यधिकम् 12. सति नास्ति 13. वतण्डीशब्दस्य 14. अल्पप्राणादिकं 15. स्थानग्रहणमिति 16. यत्र चानेकमान्तर्यं 17. स्थानकृतमान्तर्यं 18. हि नास्ति 19. एव नास्ति 20. ग्रहिष्यत 21. सादृश्यदर्शनात् 22. गुणिवचनः 23. सुप्तम् 24. मात्रिकाद्विमात्रिकाणामिकां 25. मात्रिकद्विमात्रिका 26. च इत्यधिकम् 27. अपि नास्ति

सम्भवति । तत्र चायमर्थः—षष्ठीति वर्तते, अन्तरतमो य आदेशस्य स्थानी, तत्र षष्ठी [1]यत्र षष्ठी तस्यादेश इति 'अकः सवर्णे दीर्घः' (६.१.१०१) इत्यादौ विधीयमानस्य दीर्घस्यान्तरतमे स्थानिन्यक इति षष्ठ्योपसंहारात् सिद्ध[2]मिष्टम् । तथा 'वान्तो यि प्रत्यये' (६.१.७९) इत्यत्रैच इत्यनुवृत्तायाः षष्ठ्या वान्तादेशस्यान्तरतमयोरोदौतोरुपसंहारात् सिद्धम् । इतरथैज्मात्रस्य वान्तादेशः स्यात् । अत्र पक्षे दोषः, 'इको यणचि' (६.१.७७) इति यणो येऽन्तरतमा इकस्तत्र षष्ठीति दध्यत्रेत्यादावेव स्यात्, कुमार्यत्रेत्यादौ न स्यात् । तथा 'इको गुणवृद्धी' (१.१.३) गुणवृद्ध्योर्येऽन्तरतमा इकस्तत्र षष्ठीति इहैव स्यात्, नेता, लविता, नायकः, लावकः, चेता, स्तोता, चायकः, तावक इत्यत्र न स्यात् । एवं दोषवत्त्वादस्य पक्षस्य यथाऽऽख्यातमेव साधीयः । 'वान्तो यि प्रत्यये' (६.१.७९) इत्यत्र परिहारं वक्ष्यति ॥

## ५१. उरण् रपरः ।

अत्र चत्वारः पक्षाः सम्भवन्ति—'उः स्थाने रपरोऽण् भवतीत्यनेन रपरत्वविशिष्टोऽण् भाव्यते' इति प्रथमः पक्षः । 'उः स्थानेऽणेव भवति, स च रपर इति अणनण्प्रसङ्गे[3]ऽण् नियम्यते, तस्य च रपरत्वं विधीयते' इति द्वितीयः पक्षः । 'उः स्थाने विहितोऽणित्यनूद्य तस्य [4]विधानोत्तरकाले [5]रपरत्वमात्रं विधीयते' इति तृतीयः पक्षः । 'य उः स्थानेऽण्विधीयते इत्यनूद्य तस्य प्रसङ्गावस्थायामेव रपरत्वमात्रं विधीयते' इति चतुर्थः पक्षः । तत्र प्रथमपक्षे नाप्राप्तेषूदात्तादिषु विधीयमानोऽण् तेषां बाधकः स्यात्, तैरनवरुद्धस्य विषयस्याभावात्, एवं हि तदा वचनव्यक्तिः, [6]षष्ठीनिर्दिष्टमात्रस्याभावान्नादेशोऽन्तरतमो भवति, ऋवर्णस्य त्वण् रपर इति, ततश्च कृतिरित्यत्र 'ञ्नित्यादिर्नित्यम्' (६.१.१९७) इति प्राप्तमृकारं बाधित्वाऽण् रपरः स्यात्, प्रकृतमिति [7]शेषनिघातः [8]स्वरितश्च, नॄः पाहीति पूर्वसवर्णदीर्घत्वमनुनासिकं च बाधित्वाऽण् रपरः स्यात्, कर्ता, कारक इति च गुणवृद्धी बाधित्वाऽण् भवन्नकार एवेति नियमाभावादिकारोकारावपि रपरौ स्याताम्, ये चामी प्रदिपदमुः स्थान आदेशाः 'ऋत इद्धातोः' (७.१.१००) इत्यादयः, तेषु रपरत्वं न स्यात् ।

द्वितीये तु कामं गुणवृद्ध्योर्दोषो न स्यात् । तथा हि—'सर्वेषु गुणवृद्धिसञ्ज्ञकेषु प्राप्तेषु अणेव भवति' इति नियमादकाराकारावेव गुणवृद्धी रपरे भवत इति सिद्धं कर्तेत्यादि, शास्त्रान्तरेण योऽण् प्रसक्तः स एव नियमादपि [9]भवतीतीकारोकारावपि न प्राप्नुतः । ननु 'अनियमप्रसङ्गे नियमः' इति वृद्धावेव स्यात्, अस्ति तत्रानियमप्रसङ्ग इति कृत्वा, गुणस्तु कर्तेत्यादौ मात्रिकस्य मात्रिकोऽकार एव प्राप्नोति, तरितेत्यादौ द्विमात्रस्य द्विमात्र एव भवेत्, [10]अणेवेति तत्र नियमाभावात् तरितेत्यादावेङेव गुणः स्यात्, कर्तेत्यादौ तु यद्यप्यकार एव गुणो लभ्यते तस्य रपरत्वं तु न लभ्यते यो [11]ह्यणनण्प्रसङ्गेऽणेवेति भवतीति [12]नियमतो योऽण् तस्यैव रपरत्वं विहितम्, अतो नियमपक्षे[13]ऽपि गुणविषये दोषस्तदवस्थ एव ? उच्यते । द्वे एते परिभाषे आदेशनियमार्थे, 'स्थानेऽन्तरतमः' (१.१.५०) इति च, 'उरण् रपरः' इति च । तत्र पूर्वस्या अवकाशः 'चजोः कु घिण्ण्यतोः' (७.३.५२) [14]इत्यादि । अस्या अवकाशो [15]यत्रान्तरतम्ये विशेषो नास्ति, यथा तारक इत्यादौ, वृद्धीनां कर्ता तारितेत्यादौ । गुणो भवतीत्युक्ते सर्वेषु गुणेषु प्राप्तेषु 'स्थानेऽन्तरतमः' (१.१.५०) इति नियमोऽस्तु, 'उरण् रपरः' (१.१.५१) इति वा । परत्वात् 'उरण् रपरः' (१.१.५१) इत्ययमेव भविष्यति । अतः सुष्ठूक्तम् 'नियमपक्षे [16]गुणविषये न कश्चिद्दोषः' इति । किन्तूदात्तादिषु दोषस्तदवस्थ एव स्यात् । तथा हि—कृतिरित्यादावुदात्तो भवतीत्युक्ते सर्वेषूदात्तसञ्ज्ञकेषु प्राप्तेषु परत्वादनेनाण एवोदात्ताः स्युः, ते च रपराः । एवमनुदात्तादिष्वपि द्रष्टव्यम् । ये च प्रतिपदमादेशाः 'ऋत इद्धातोः' (७.१.१००) इत्येवमादयः, तेष्वनियमप्रसङ्गाभावादसति नियमे रपरत्वं न स्यात्, तदाह—'उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः' इति ।

1. यस्य 2. इष्टम् नास्ति 3. अण् नास्ति 4. विधानोत्तरकालं 5. रपरत्वं 6. षष्ठीनिर्दिष्टमात्रस्य भवन्नादेशोन्तरतमो 7. शेषनिघातं 8. स्वरितं च 9. इति नास्ति 10. अणेव नास्ति 11. ह्यणनण्प्रसङ्गेऽणेवेति 12. नियमतो नास्ति 13. अपि नास्ति 14. आदि नास्ति 15. यत्रान्तरतमो 16. गुणवृद्धिविषये

तृतीये पक्षे उदात्तादिषु न दोषः, [1]ञ्नित्यादिभिरन्तरतमस्यैव विधानात्। [2]किरतीत्यादौ [3]च न दोषः गुणवृद्ध्योरुक्तदोषः स्यादेव, तथा हि—विहितस्य पश्चादनेन रपरत्वं विधीयते, विधानकाले त्वान्तर्यतो मात्रिकस्य मात्रिके गुणे रपरे कर्तेत्यादि यद्यपि सिध्यति, तरितेत्यादौ [4]त्वेङेव गुणः स्यात्, वृद्धिषु [5]च विधानसमये [6]कस्यात्रि दान्तर्याभावात् तिसृषु प्रवृत्तास्वा[7]कारस्याण्त्वात् रपरत्वे कारकस्तारक [8]इति यद्यपि सिध्यति, [9]वायकस्तावक इत्याद्य[10]निष्टमनुसज्यत एव। [11]अत एवमेतेषु पक्षेषु [12]दोषसद्भावाच्चतुर्थं पक्षमाश्रित्याह—'उः स्थानेऽण् प्रसज्यमान एव'[13] इत्यादि। एतच्च स्थानद्वयग्रहणानुवृत्तेर्लभ्यते। तत्रैकमुः स्थाने योऽण् विधीयत इत्यनुवादेऽपि स्थानसम्बन्धलाभाय। द्वितीयं तु सोऽण् प्रसङ्ग एव प्रसज्यमानावस्थायामेव रपरो भवतीति रपरत्वस्य कालविधानार्थम्। 'स्थानेऽन्तरतमः' (१.१.५०) इत्यत्र हि यद्यपि ताल्वादिवचनः स्थानशब्दः, तथापि न तेनात्र कश्चिदर्थो[14]ऽस्तीति प्रसङ्गवचन एव सम्पद्यते। एवं च गुणवृद्ध्योः प्राप्त्यवस्थायामे[15]वाणो [16]रपराः [17]सम्पन्ना इति प्रमाणतोऽन्तरतमावेङैचौ बाधित्वा स्थानतो[18]ऽन्तरतम एव भविष्यतीति न कश्चिद्दोषः। न चानेकाल्त्वात् सर्वादेशप्रसङ्गः, आनुपूर्व्या सिद्धेः। यदाङ्गस्यैव षष्ठी अन्त्येऽल्य[19]नुसंहृता तदायमुः स्थाने, [20]यदायमुः स्थाने तदा रपरः, यदा रपरस्तदानेकाल्तिति न पुनः परावृत्त्य सर्वादेशो युज्यते।

'द्वैमातुरः' इति। 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' (४.१.११५)। खेयम् इति। 'ई च खनः' (३.१.१११)। 'सौधातकिः' इति। 'सुधातुरकङ् च' (४.१.९७)। अत्रायमकङादेशोऽनण्त्वाद्रपरो न[21] भवति। अथ योऽत्राण् स [22]पर कस्मान्न भवति ? अनादेशत्वात्, समुदायो ह्यत्रादेशः। यद्येवम्, 'खट्वर्श्यः' इत्यादावपि रपरत्वं न स्यात्, पूर्वपरयोर्हि समुदायोऽत्र स्थानी, नावयव ऋकारः ? उच्यते। पूर्वपरयोरिति द्विवचननिर्देशात्तयोरेव स्थानित्वं न समुदायस्य, अनिर्देशात्। अत एव [23]द्वयोः स्थानिनोर्भिन्नादिषु नत्ववत् द्वावादेशौ स्यातामिति तत्रैकग्रहणं क्रियते। तत ऋकारस्यापि स्थानित्वमस्त्येव। तदिदमुच्यते—'यो ह्युभयोः[24] स्थाने भवति लभते सोऽन्यतरव्यपदेशम्' इति। अतस्तत्रापि रपरत्वं भविष्यति॥

## ५२. अलोऽन्त्यस्य।

'अलः' इति जसन्तं चेदयमर्थः स्यात्, अलात्मका आदेशा अन्त्यस्येति। तत्र रहोरजसां लोपः सर्वादेशः स्यात्, 'नीरजीकरोति' इति। [25]अन्त्यस्य चाविशेषितत्वात् 'वसुस्रंसुध्वंस्वनडुहां दः' (८.२.७२) इति दत्वं पदस्याप्यन्त्यस्य स्यात्, 'परमानडुद्भ्याम्'[26]इति। असन्देहार्थं चालोऽन्त्यस्येति वाच्यं स्यात्। अतोऽलोन्त्यस्येत्यनेन [27]सामानाधिकरण्यात् षष्ठ्यन्तमिति स्थितम्। यदि 'षष्ठी स्थानेयोगा' (१.१.४९) इत्यनेनैकवाक्यताऽस्य स्यात्, ततोऽयमर्थः स्यात् 'इह शास्त्रे या काचन षष्ठी सान्त्यस्यालो भवति सा[28] स्थानेयोगा, इति। ततश्च 'आर्धधातुकस्येड्वलादेः' (७.२.३५) इत्यस्याप्यन्तेऽल्यनुसंहारादार्धधातुकान्त्यस्यैवेट् स्यात्, स च भवन् 'आद्यन्तौ टकितौ' (१.१.४६) इत्यन्त्यात् प्राक् स्यात्। 'आद्यन्तौ टकितौ' (१.१.४६) इत्यनेन हि स्थानेयोगत्वमेव षष्ठ्या बाध्यते, न पुनरन्त्येऽल्यनुसंहारोऽपि। अतो भिन्नं वाक्यम्, तदाह—'षष्ठीनिर्दिष्टस्य' इत्यादि। सामान्यवचनेऽपि 'षष्ठी स्थानेयोगा' (१.१.४९) इत्यधिकारात् स्थानषष्ठीनिर्दिष्टस्येति वेदितव्यम्, अन्यथा षष्ठीमात्रस्याधिकारे यस्य षष्ठीनिर्दिष्टस्य यत्कार्यं यथाभूतमुच्यते—आदेशरूपम् आगमरूपं वा, तत्तथाभूतमेव तदन्तस्य भवतीत्यर्थः स्यात्। ततश्च स एव दोषो य एकवाक्यतायाम्। अतः 'षष्ठी

---

1. ञ्नित्यादिर्नित्यम् इत्यादिभिः 2. कृतिरित्यादौ 3. च नास्ति 4. च एङेव 5. च नास्ति 6. कस्यचिदान्तर्याभावात् 7. आकारस्याप्यण्त्वात् 8. इत्यादि 9. नायकस्तावक 10. अनिष्टमप्यनुषज्यत 11. अत नास्ति 12. दोषसम्भवात् 13. आदि नास्ति 14. अस्ति नास्ति 15. एवावर्णौ 16. रपरः 17. सम्पन्न 18. अन्तरतमःस 19. उपसंहृता 20. यदचि 21. न नास्ति 22. रपरः 23. द्वयोरपि 24. षष्ठीनिर्दिष्टयोः इत्यधिकम् 25. अन्त्यस्यालाविशेषितत्वात 26. इत्यादि 27. समानाधिकरणं 28. च इत्यधिकम्

स्थानेयोगा' (१.१.४९) इति सर्वमनुवर्त्यम्। अयं चार्थो भवति, 'स्थानषष्ठीनिर्दिष्टस्य यदुच्यते [1]तत्तदन्त्यस्यालो भवति, न तस्य कृत्स्नस्य' इति। सोऽयं कार्यस्यान्त्येऽल्यनुसंहारो वृत्तिकारेण दर्शितः।

यद्वा 'या स्थानेयोगा षष्ठी सान्त्यस्यालः' इति षष्ठ्या [2]एवानुसंहारो वेदितव्यः। अत्र पक्षे 'ङिच्च' (१.१.५३) इत्यस्यायमर्थः, 'यत्र ङिदादेशो विधीयते तत्र या षष्ठी साऽन्त्यस्यालः' इति। एवं सर्वत्र। कार्यानुसंहारे तु यथाश्रुतमेव षष्ठ्याः स्यात्, अनुसंहारे 'ङिच्च' (१.१.५३) इत्यादावसङ्गतिः। अतः कार्यानुसंहारो वृत्तिकारेण दर्शितः॥

## ५३. ङिच्च।

'होतापोतारौ' इति। 'ऋतो ङिसर्वनामस्थानयोः' (७.३.११०) इति गुणः। 'अप्तृन्' (६.४.११) इत्यादिना दीर्घः। मातापितरौ इति। 'पिता मात्रा' (१.२.७०) इत्येकशेषाभावपक्षेऽभ्यर्हितत्वान्मातुः पूर्वनिपातः, 'पितुर्दशगुणं माता गौरवेणातिरिच्यते'। अथ तातङन्त्यस्य कस्मान्न भवति, तत्राह— [3]तातङि इत्यादि। अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थमेतत् [4]गुणवृद्धिप्रतिषेधार्थतया [5]चरितार्थङित्त्वे तातङि परेण 'अनेकाल्शित्सर्वस्य' (१.१.५५) इत्यनेन बाध्यत इत्यर्थः। ननूत्सर्गापवादयोरयुक्तो विप्रतिषेधः, अतुल्यकक्षत्वात्, न चान्तरेण सर्वादेशतां गुणवृद्धिप्रतिषेधार्थत्वस्योन्मेष इति चरितार्थत्वमपि [6]ङित्त्वस्य चिन्त्यम्। न ब्रूमो गुणवृद्धिप्रतिषेधार्थस्य निश्चितत्वात् दुर्बलं ङित्त्वमिति, किं तु सर्वादेशेऽपि तातङि गुणवृद्धिप्रतिषेधः प्रयोजनं सम्भाव्यते। तावता च कियानपि विलम्बो भवति। अनङादिषु सर्वादेशत्वे न किञ्चिन् ङित्त्वस्य प्रयोजनमिति सर्वादेशार्थतासम्भावनापि[7] नास्तीति। तेष्वेव सहसा प्रवर्तते। ततश्च विप्रतिषेधोपपत्तिः।

अथ वा, 'एरुः' (३.४.८६) इत्यस्यानन्तरम् 'तुह्योस्तातङाशिषि' (७.१.३५) इति वक्तव्यम्, एरित्येव। एवं वक्तव्ये ङित्करणं गुणवृद्धिप्रतिषेधार्थमेवेति निश्चितमिति विप्रतिषेधोपपत्तिस्तदाह—तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेश इति।

अथ वा यथोपदर्शितं गुणवृद्धिप्रतिषेधार्थत्वं सर्वादेशतामन्तरेण नोपपद्यत इति [8]अन्तरेणैव विप्रतिषेधं सर्वादेशस्तातङ भवति॥

## ५४. आदेः परस्य।

[9]शास्त्रे [10]न क्वचित् परस्येत्युच्चार्य कार्यं विधीयत इति निर्विषयमेतदि[11]त्यभिप्रायेणाह—क्व च इति। यत्र इत्यादि। पञ्चमीनिर्देशेषु 'तस्मादित्युत्तरस्य' (१.१.६७) इति परस्य कार्यं विधीयत इत्यर्थः। 'आसीनः' इति। 'आस उपवेशने' (धा. पा. १०२१) अनुदात्तेत्। द्वीपम् इति। द्विधागता आपोऽस्मिन्निति[12] 'ऋक्पूरब्धूःपथामानक्षे' (५.४.७४) इति अकारः समासान्तः॥

## ५५. अनेकाल्शित्सर्वस्य।

अनेकाल्ग्रहणं किमर्थम्? 'अस्तेर्भूः' (२.४.५२) सर्वस्य यथा स्यात्, अलोऽन्त्यस्य मा भूत्। नैतदस्ति प्रयोजनम्। 'ङिच्च' (१.१.५३) इत्येतन्नियमार्थं भविष्यति, यद्यनेकालन्त्यस्य भवति, ङिदेव इति। एवमप्यसत्यनेकाल्ग्रहणे 'अतो भिस ऐस्' (७.१.९) इत्यादिषु पञ्चमीनिर्देशेष्वनेकाल्प्यादेश 'आदेः परस्य' (१.१.५४) स्यात्, सति तु तस्मिन् द्वावेतौ 'अलोऽन्त्यस्य' (१.१.५२) इत्यस्यापवादौ, 'आदेः परस्य' (१.१.५४). 'अनेकाल्शित्सर्वस्य'

1. तत्तदन्तस्यालो 2. एवान्त्येऽल्यनुसंहारो 3. तातङित्यादि 4. गुणवृद्धिप्रतिषेधार्थं 5. चरितार्थं नास्ति 6. ङित्त्वस्य नास्ति 7. अपि नास्ति 8. अन्तरेणापि 9. न शास्त्रेण 10. न नास्ति 11. इत्यभिप्रेत्याह 4. इति नास्ति

(१.१.५५) इति । तत्र 'आदेः परस्य' (१.१.५४) [1]इत्यस्यायमवकाशो य एकालादेशो लोपो वा, 'ईदासः' (७.२.८३), 'बहोर्लोपो भू च बहोः' (६.४.१५८), आसीनः, भूयान् । 'अनेकाल्शित्सर्वस्य' (१.१.५५) इत्यस्यावकाशो [2]यत्र पञ्चमीनिर्देशो नास्ति, 'अस्तेर्भूः' (२.४.५२) । इहोभयं प्राप्नोति, 'अतो भिस ऐस्' (७.१.९), अपवादविप्रतिषेधादनेकाल्शित्सर्वस्येत्ययमेव भवतीति सिद्धमिष्टम् ।

[3]शिद्ग्रहणं किमर्थम् ? 'जसः शी' (७.१.१७) सर्वस्य यथा स्यात्, अनेकालित्येव भविष्यति, शकारे लुप्ते नानेकाल्, आनुपूर्व्यात्सिद्धम् । यदायं सर्वादेशस्तदा प्रत्ययः, यदा प्रत्ययस्तदेत्सञ्ज्ञा, यदेत्सञ्ज्ञा तदा लोपः, यदा लोपस्तदैकाल्, तदिह सर्वादेशत्वमन्तरेण नैकाल्त्वमुपपद्यते । इह तर्हि 'इदम इश्' (५.३.३), 'इदंकिमोरीश्की' (६.३.९०)? अत्र ह्यन्तरेणापि सर्वादेशतां[4] प्रागेवेत्सञ्ज्ञा भवति । नन्वत्रापि शकारः प्रयोजनान्तराभावात् अनेकाल्त्वमादेशस्य सम्पाद्य निर्वर्तिष्यते । इह तर्हि 'घ्वसोरेद्धावभ्यासलोपश्च' (६.४.११९) इति लोपः शित्सर्वस्य यथा स्यात् । 'इदम इश्' (५.३.३) इत्यादावपि प्रयोजनाभावादित्सञ्ज्ञैव शकारस्य न स्यादिति श्रवणप्रसङ्गः ॥

## ५६. स्थानिवदादेशोऽनल्विधौ ।

ननु [5]तत्स्थानापन्नस्य तद्धर्मलाभो लोकवेदयोः सिद्ध एव । लोके तावदेकस्मिन्नुपाध्याये मृते [6]तत्स्थाननिविष्टस्याप्यभिवादनाद्युपाध्यायधर्मलाभो भवति, एकस्मिश्च राजनि प्रोषिते तत्स्थानेऽभिषिक्तस्य तत्पुत्रादेरपि तद्धर्मलाभो भवति । वेदेऽपि व्रीहिस्थानपतिता नीवारादयोऽवघातादीन् व्रीहिधर्मान् लभन्ते । तद्वदत्राप्यस्तिस्थानापन्नो भूरस्तिधर्मान् धातुत्वादीन् लप्स्यते, नार्थोऽनेनेत्याशङ्क्याह—'स्थान्यादेशयोः' इत्यादि । अयमभिप्रायः—उपाध्यायत्वप्रयुक्ता उपाध्यायधर्मा राजधर्माश्चाभिषिक्तत्वप्रयुक्ता व्रीहिधर्माश्चापूर्वं[7]साधनत्वनिबन्धनाः, न तत्तत्स्वरूपनिबन्धना इति [8]युक्तं तत्प्रकारजुषो भवन्तीति । इह तु स्वं रूपमितिवचनादस्त्यादिस्वरूपनिबन्धना धातुत्वादयो धर्मा न भवनाद्यर्थाभिधानलक्षणकार्यप्रयुक्ताः, तच्च स्वरूपमादेशानां नास्तीति तत्स्थानापन्नानामपि[9] न स्युरिति तदाह—'पृथक्त्वात्' इति । रूपभेदादित्यर्थः ।

नन्वेतत्प्रकारजुषोऽपि तत्स्थानापन्नस्य तद्धर्मलाभो दृश्यते, यदा ह्युपाध्यायः शिष्येण यज्ञार्थमुपनिमन्त्रितः कार्यव्यासङ्गात् स्वशिष्यमन्यं प्रेरयति तदा स तत्र गत्वा[10]ऽग्रासनादीनुपाध्यायधर्मान् लभते, अत्राप्युपाध्यायप्रतिनिधित्वात् तद्बुद्ध्यैव तद्धर्मा अनुष्ठीयन्ते, एवं कृते तु सत्युपाध्याय इति न तत्स्थानापन्नतया, न [11]चैवमत्र सम्भवतीत्यारब्धव्यमेव सूत्रम् ? युष्मदस्मदोरादेशनिषेधात् सिद्धम् । यदयं 'युष्मदस्मदोरनादेशे' (७.२.८६) इत्याह, तज्ज्ञापयति—'भवति स्थानिकृतमादेशः' इति, अलाश्रये चाप्रसङ्गः, [12]'अदो जग्धिः' (२.४.३६) [13]ल्यब्ग्रहणात् । यदि हि स्थान्यलाश्रयमप्यादेशे स्यात् कितीत्येव सिद्धे ल्यब्ग्रहणमनर्थकं स्यात् । सत्यम्, उत्तरार्थं तावत् स्थानिवदादेश इति वक्तव्यम् । अजादेशस्य [14]विषयविशेषे स्थानिवत्त्वं वक्ष्यामि, पदान्तादिविधिषु प्रतिषेधं वक्ष्यामीति सोऽन्यार्थः सन्निहैव क्रियते लिङ्गनाश्रयणाय ।

[15]षोढातिदेशः—निमित्तातिदेशः, व्यपदेशातिदेशः शास्त्रातिदेशः, रूपातिदेशः, तादात्म्यातिदेशः, कार्यातिदेश इति । तत्र निमित्तमशक्यमतिदेष्टुं ब्राह्मण्यवत्, न हि ब्राह्मणस्याग्रभोजनादिनिमित्तं ब्राह्मण्यं वचनशतेनापि क्षत्रियेऽतिदेष्टुं शक्यते । 'पूर्ववत्सनः' (१.३.६२) इत्यत्रापि न प्रकृतिगतं निमित्तं ङित्त्वादि सनन्ते[16]ऽतिदिश्यते, किन्तु प्रकृतिगतमेव तत् सना व्यवधानेऽप्यात्मनेपदनिमित्तमिति । एतावता [17]निमित्तातिदेशवाचोऽयुक्तिः ।

1. अयं नास्ति 2. तत्र 3. शित्करणं 4. ततः इत्यधिकम् 5. च इत्यधिकम् 6. तत्स्थाने 7. साधनविशेषत्वनिबन्धनाः 8. युक्तमेतत्प्रकारजुषो 9. अपि नास्ति 10. अग्र्यासनादीन् 11. चैतदत्र 12. अदो जग्धिः नास्ति 13. जग्धौ ल्यब्ग्रहणात् 14. विशिष्टे विषये 15. षोढातिदेशाः 16. अतिदेश्यते 17. निमित्तातिदेश इति वाचोऽयुक्तिः

व्यपदेशातिदेशः सञ्ज्ञापक्षान्न भिद्यते, तत्र च वतेरानर्थक्यं वक्ष्यते। कः पुनरायुष्मतो [1]व्यपदेशोऽभिप्रेतः ? किं स्थानीति व्यपदेशः, यथा 'आद्यन्तवदेकस्मिन्' (१,१.२१) इत्यत्र व्यपदेशातिदेश[2]पक्षः, उत स्थानिनो ये व्यपदेशा धातुरङ्गमित्यादयः, त आदेशस्य भवन्ति इति। [3]पूर्वः पक्षो भवतोऽप्यनभिप्रेतः, द्वितीयस्य तु सञ्ज्ञापक्षान्महान्भेदः। तथा हि, सञ्ज्ञापक्षे यत्र स्थानिरूपमुच्चार्यते 'आङो यमहनः' (१,३.२८) इत्यादौ, तत्रैव कार्यं स्यात्, न[4] धातोस्तव्यादयोऽङ्गस्येनादय इत्यादौ। न ह्यत्र सञ्ज्ञात्वेन विनियुक्तमस्त्यादि स्थानिरूपमुच्चारितम्, यच्चोच्चारितं न सा सञ्ज्ञा। आदेशस्यैव[5] कार्यं स्यात् न स्थानिनः, न हि सञ्ज्ञोच्चारिता स्वयं कार्येण युज्यते, स्थानिनस्तु व्यपदेश [6]आदेशस्यातिदिश्यमाने धातोस्तव्यादयोऽङ्गस्येनादय इत्यादौ स्थान्यादेशयोरुभयोरपि कार्यं सिद्धयति, उभयोरपि [7]व्यपदेशसद्भावात्। 'आङो यमहनः' (१.३.२८) इत्यादिकं तु स्थानिस्वरूपनिबन्धनं कार्यमादेशस्य न स्यात्, न ह्यत्र कश्चिद्व्यपदेशो य आदेशस्यातिदिश्येत। अथापि 'स्वं रूपम्' (१.१.६८) इतिवचनाद्धन्नित्यपि हन्तेर्व्यपदेश इति तस्मिन्नतिदिष्टे कार्यं सिध्यती[8]त्युच्यते, एवमपि पूर्वोक्तस्तावद्विशेषो विद्यत इत्यास्तामेतत्।

अप्रधानत्वात्तु [9]व्यपदेशो न भवति। अत एव शास्त्रातिदेशोऽपि न भवति। स्थानिरूपे [10]चातिदिश्यमान आदेशविधानं व्यर्थं स्यात्। न च वचनद्वयप्रामाण्याद्विकल्पः 'वा लिटि' (२.४.५५) इति विकल्पारम्भात्। तादात्म्याति-देशोऽसम्भवान्न भवति, द्वयोर्हि सहावस्थितयोरन्योन्यतादात्म्यमतिदिश्यते, सुबामन्त्रितयोरिव, इह त्वादेशेन स्थानी [11]निर्वर्तित इत्यसम्भवः। अतः पारिशेष्यात् प्राधान्याच्च कार्यातिदेशोऽयम्, तदाह—'स्थान्याश्रयकार्यम्' इति 'स्थान्याश्रयेषु कार्येषु' इति च। तात्पर्यतश्चायं[12] कार्यातिदेशो वर्ण्यते। अक्षराणि त्वादेशः स्थानिना तुल्यं वर्तत इत्येतावत्येव पर्यवसितानि। केन [13]तु प्रकारेण तुल्यत्वमित्यपेक्षायां तत्कार्यापत्त्येति[14] तदाह—'स्थानिना तुल्यं वर्तते' इति। 'स्थानिवत्' इति। 'स्थान्याश्रयेषु' इति। बहुव्रीहिः।

अनल्विधावित्यस्यार्थमाह— अनलाश्रयेषु इति। एतेन विधीयते इति विधिः कार्यम्, अलाश्रयो विधिरल्विधिरि-त्युत्तरपदलोपी समास इति दर्शयति। किमर्थं पुनरुत्तरपदलोपाश्रयणम् ? स्यादेतत्—सति तस्मिन् यश्चालि विधिः, यश्चालो विधिः, यश्चालः परस्य विधिः, यश्चाला विधिः [15]सर्वश्चासावलाश्रय इति सर्वत्र [16]प्रतिषेधः सिध्यति। तत्रालि विधिः—यजेः क्तः, इष्टः, क इष्ट इत्यत्र सम्प्रसारणस्य स्थानिवत्वात् को यष्टेत्यादिवत् 'हशि च' (६.१.११४) इत्युत्वं प्राप्तं न भवति, 'स इष्ट' इत्यत्र 'एतत्तदोः' (६ १.१३२) सुलोपो न भवति। अलो विधिः—[17]द्युकामः, उकारस्य 'लोपो व्योर्वलि' (६ १.६६) इति न भवति। उत्वं तु 'अहर्विमलद्यु' इत्यत्र चरितार्थम्। अलः परस्य विधिः—द्यौः, पन्थाः, सः, 'हल्ङ्याब्' (६.१.६८) इति लोपो न भवति। अला विधिः—व्यूढोरस्केन, अत्र 'सोऽपदादौ' (८.३.३८) इति विसर्जनीयस्य स्थाने विहितस्य[18] स्थानिवत्त्वात् विसर्जनीयस्याट्सूपदेशात् 'अड्व्यवाये' (८.४.२) इति णत्वं प्राप्तं न भवति। अतः सर्वविभक्त्यर्थसंग्रहार्थमुत्तरपदलोपाश्रयणम्। अन्यथा हि षष्ठीसमास एवाश्रीयतेऽल्स्थानिक एव विधिराश्रितः स्यादिति, तन्न, सम्बन्धसामान्ये षष्ठीविज्ञानादपि सर्वविभक्त्यर्थसंग्रहस्य सिद्धत्वात्। अनुवादे हि स्थानेयोगाभावात् सर्वोऽल्सम्बन्धी विधिः प्रतिपत्स्यते। एवं तर्हि यत्र गुणभावेनाप्यलाश्रीयते, तत्रापि [19]निषेधो यथा स्यात्, प्रपठ्येति, अत्र हि [20]वलादेरिति प्रत्ययः प्राधान्येनाश्रितः, वल् तु गुणभावेनेति अप्राधान्यान्न स्यात्। उत्तरपदलोपे तु भवति, अलाश्रयत्वादिड्विधेः। यद्यलाश्रयेषु स्थानिवत्त्वं न भवति, वृक्षाय—'सुपि च' (७.३.१०२) इति दीर्घो न स्यात्, यञादौ सुपीत्यलाश्रयत्वात्। [21]अरुदितामित्यत्र सार्वधातुकस्य तसस्तामादेशे 'रुदादिभ्यः सार्वधातुके' (७.२.७६)

---

1. व्यपदेशातिदेशो 2. पक्ष 3. तत्र इत्यधिकम् 4. तु इत्यधिकम् 5. च इत्यधिकम् 6. आदेशस्य नास्ति 7. व्यपदेशस्य सद्भावात् 8. उच्येत 9. व्यपदेशातिदेशो 10. चादेशस्यातिदिश्यमाने 11. निवर्त्यंत 12. अयं नास्ति 13. तु नास्ति 14. इति नास्ति 15. स सर्व एव अलाश्रय इति 16. निषेधः 17. दिव उत् इत्यधिकम् 18. सत्वस्य इत्यधिकम् 19. निषेधो नास्ति 20. वलादिप्रत्ययः 21. तथा इत्यधिकम्

इति वलाश्रय इण् न स्यात्, अत आह—स्थान्यलाश्रयाणि इति। स्थानिनोऽल् स्थान्यल्, स आश्रयो येषां तानि तथोक्तानि।

अयमभिप्रायः—यथा गुरुवद् गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसंग्रहणाच्चेति अतिदेशे प्रवृत्ते, यदा गुरुपुत्रः स्वयं गुरुर्भवति तदोच्छिष्टं[1] भुज्यते पादौ चोपसंगृह्येते। तत् कस्य हेतोः? अतिदेशेनैकवाक्यतामापन्नः प्रतिषेध आतिदेशिकीमेव प्राप्तिं प्रतिषेधतीति। तथेहाप्यातिदेशिक एवाल्विधिः प्रतिषिध्यते। न च वृक्षाय, अरुदितामित्य[2]त्रातिदेशापेक्षा, स्वयमेव यत्रादित्वाद्वलादित्वाच्च। ततश्च यत्र स्थानिन एवालाश्रीयते स एव निषिध्यते, यथा प्रपठचेत्यत्र, न ह्यत्र ल्यप् स्वयं वलादिरिति। ननु [3]च गुरुपुत्रस्य स्वयं गुरुत्व उच्छिष्टभोजनादौ न मात्रयाप्यतिदेशापेक्षा, इह तु सत्यपि स्वयमेव यञादित्वे [4]नान्तरेणातिदेशं दीर्घः सिध्यति असुप्त्वात्? अरुदितामित्यत्रापि सत्यपि स्वयं वलादित्वेऽसार्वधातुकत्वादतिदेशेनैव [5]वेट् [6]प्रार्थनीयः? सत्यम्। [7]द्वे कार्ये, सुप्सञ्ज्ञा च, दीर्घत्वं च। न हि 'प्रयोगसमवाय्येव कार्यमतिदेश्यम्' इति नियमोऽस्ति. यत्तु शास्त्रीयं तदेवातिदिश्यते। न च सुप्सञ्ज्ञाऽलाश्रयेति तस्यामतिदिष्टायां स्वाश्रयं यञादित्वमाश्रित्य दीर्घत्वं भविष्यति। अरुदितामित्यत्राप्यातिदेशिकं सार्वधातुकत्वं स्वाश्रयं च वलादित्वमाश्रित्येड् भविष्यति।

ननु [8]च वृक्षायेत्यत्र स्थानिन एकारस्याल्त्वात्तदाश्रयं सुप्त्वमलाश्रयमेव? उच्यते—कार्यापेक्षमल्विधित्वं नोदाहरणापेक्षम्। एतदुक्तं भवति—यस्मिन् कार्ये विधीयमानेऽल एवासाधारणं [9]किञ्चिद्रूपं निमित्तादिरूपेणाश्रीयते, 'हशि' (६.१.११४), 'हलि' (८.२.७७), 'व्योर्वलि' (६.१.६६), 'हल्ङ्याब्भ्यः (६.१.६८), 'अड्व्यवाये' (८.४.२) इति, स एवाल्विधिः, 'सुपि च' (७.३.१०२) इत्यत्र तु नैवंविधं किञ्चिदस्ति, केवलं वृक्षायेत्यत्रोदाहरणेऽलात्मकः स्थानीत्येतावत् किमुदाहरणमिति प्रश्नः। [10]धात्वाद्यादेशाः प्रयोजनमित्युत्तरम्। [11]तत्र 'प्रयुज्यतेऽनेनेति प्रयोजनम्' [12]उदाहरणं न[13] प्रयुज्यत इत्यर्थात् प्रश्नानुरूपं प्रतिवचनम्।

ननु चास्तिब्रुवोरार्धधातुके परत आदेशाभ्यां भाव्यम् तत् [14]किमतिदेशेनेत्यत आह—[15]आर्धधातुके विषय इत्यादि।

'दाधिकम्'। [16]दध्नि संस्कृतम् 'दध्नष्ठक्' (४.२.१८)। 'अव्ययादेशः' इति। क्त्वामात्रस्य ल्यबादेशः क्त्वान्तस्याव्ययसञ्ज्ञा, स कथमव्ययादेशः; तस्मात् क्त्वाग्रहणेन ल्यपो ग्रहणात्तदन्तस्यापि सञ्ज्ञा भवतीत्येवम्परमेतत्। तत्रापि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या. प. १२६) इति प्रस्तुत्येति सङ्घातस्य भवति।

'वत्करणं किम्' इति। विनापि तेन [17]तदर्थो गम्यते, यथा ङित्किदित्यादाविति प्रश्नः।

'स्थानी' इत्यादि। असति वत्करणे सञ्ज्ञाप्रकरणत्वात् स्थान्यादेशस्य सञ्ज्ञा विज्ञायेत मैवं विज्ञायीति वत्करणमित्यर्थः। किमर्थं पुनः स्थान्यादेशस्य सञ्ज्ञा नेष्यत इत्याह—'स्वाश्रयमपि' इति। सञ्ज्ञाया [18]हि स्थानिस्वरूपनिबन्धनम्, 'आङो यमहनः' (१.३.२८) इत्यादि कार्यमादेश एव स्यात्, न स्थानिनि, न हि सञ्ज्ञोच्चारिता स्वयं कार्येण युज्यते। 'आत्मनेपदेष्वन्यतरस्याम्' (३.१.५४) इति [19]च विषयसप्तमी विज्ञायते। 'स्वाश्रयमपि' इति। कोऽर्थः? स्थानित्वापीत्यर्थः। तथा चोत्तरग्रन्थे 'उभयत्र' इति सप्तमीनिर्देशः।

---

1. च इत्यधिकम् 2. अत्र नास्ति 3. च नास्ति 4. नान्तरेणातिदेशदीर्घः 5. वा नास्ति 6. प्रार्थ्यनीयः 7. द्वे अत्र 8. च नास्ति 9. किञ्चित् नास्ति 10. धात्वादेशाः 11. अत्र 12. उदाहरणे 13. च इत्यधिकम् 14. किमत्रातिदेशेनेत्यत 15. आर्धधातुकविषय 16. दध्ना 17. वत्यर्थो 18. हि नास्ति 19. च नास्ति

'आदेशग्रहणं किम्' इति। यथा पितृवत् स्थूलः इत्युक्ते [1]सम्बन्धिशब्दात् पुत्र इति गम्यते, तथेहापि स्थानिवदित्युक्ते क इत्यपेक्षायाम् 'यदपेक्षं स्थानित्वं स एवादेशः' इति गम्यत इति प्रश्नः। 'आनुमानिकस्य' इत्यादि। द्विविधो हि आदेशः—प्रत्यक्षश्च 'अस्तेर्भूः' (२.४.५२) इत्यादिः, आनुमानिकश्च 'एरुः' (३.४.८६) इत्यादिः। [2]अत्रेकारेणेकारान्तः [3]स्थान्यनुमीयते, विषाणेनेव गौः। उकारेण चोकारान्त आदेशः, ततस्तेस्तुरिति सम्पद्यते। तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य, पुनःश्रुतेस्तु व्याप्त्यर्थत्वात् आदेशमात्रं स्थानिवद्भवति। तेन पचत्वित्यत्र 'तिङन्तं पदम्' (१.४.१४) इति पदसञ्ज्ञा सिद्धा भवति। ननु चेकारमात्रस्योकारमात्रमादेशोऽस्तु, किं तदन्तानुमानेन? एवं हि 'एरुः' (३.४.८६) इत्येतच्च यथाश्रुतमेव व्याख्यातं भवति, आदेशग्रहणं [4]च न कर्तव्यं भवति, 'एकदेशविकृतस्यानन्यत्वात् पदसञ्ज्ञा भविष्यति। एवं तर्हि पुनःश्रुतिरेव लिङ्गम्, एकदेशविकारः शास्त्रे नाश्रीयते' इति। तेन

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते'॥

इति सिद्धं भवति। 'द्युपथित्यदादेशाः' इति। 'दिव औत्' (७.१.८४) 'पथिमथ्यृभुक्षामात्' (७.१.८५), 'त्यदादीनामः' (७.२.१०२) इत्येते। ननु सामान्यातिदेशो विशेषानतिदेशः, [5]ततश्च यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति [6]ब्राह्मणमात्रकार्यमेव भवति, न माठरादिविशेषकार्यम्, तथा स्थानिवदादेशः इत्युक्ते यः स्थानी यदाकारविशिष्टः सूत्रे [7]श्रुतस्तदादेशस्य तदाकारप्रयुक्तेनैव कार्येण भवितव्यम्। 'क्त्वो ल्यप्' इत्यत्र [8]च वस्तुस्थित्या सन्निहितमपि वलादित्वं स्थानिरूपेण नाश्रितम्। तथा हि इडादिरपि क्त्वा भवत्येव, क्त्वा केवलोऽपि, दत्वायेति यगन्तोऽपि 'इष्ट्वीनम्' इति [9]मान्तोऽपि; तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं [10]कृत्त्वप्रत्ययत्वादि, तदादेशेऽतिदिश्यताम्, वलादित्वस्य तु कुतोऽतिदेशः? एवं क इष्ट इत्यादावपि [11]च यण इक् भवति, दिवोऽलोऽन्त्यस्योत्वौत्वे भवतः, पथ्यादीनामन्त्यस्याद्भवति, त्यदादीनामन्त्यस्याकारः, विसर्जनीयस्य सत्वमित्येवं यणादिरूपेण स्थानिन आश्रयणम्। ततश्च तत्तदाकारप्रयुक्तस्यैव कार्यस्यापि[12] अतिदेशः, न हल्त्वादिविशेषनिबन्धनस्येति नार्थोऽनल्विधावित्यनेन। यत्र तर्हि विशेषरूपमेव स्थानित्वेनाश्रीयते, यथा 'च्छ्वोः शूठ्' (६.४.१९) इति वकारः, तत्र तत्कार्यमा[13]देशस्य मा भूत्, अक्षद्यूभ्याम्। वलि लोपो न भवति।

[14]अथात्रापि वकारान्तस्याङ्गस्यालोऽन्त्यस्यो[15]डिति [16]रूपेण स्थानिन आश्रयणम्, [17]एवमपि विशेषातिदेशज्ञापनार्थमिदमुच्यते, अन्यथा ल्यपो वलादित्ववत् कित्त्वस्याप्यतिदेशो न स्यात्, देवित्वेत्यादावकितोऽपि क्त्वः सम्भवात्। 'अनुबन्धाश्च स्थानिनि[18]असन्त एव कार्येषु युज्यन्ते इति तत्कार्येष्वनल्विधाविति निषेधो न भवति। लिङ्गाच्च। यदयं 'सेर्ह्यपिच्च' (३.४.८७) इत्याह, तज् ज्ञापयति—भवत्यनुबन्धकार्याणामतिदेश इति॥

## ५७. अचः परस्मिन्पूर्वविधौ।

'अच इति स्थानिनिर्देशः' इति। यद्यप्यनूद्यमानादेशविशेषणत्वात् स्थानषष्ठी न लभ्यते, तथाप्यचो य आदेश इत्युक्ते तत्स्थानिक एव प्रतीयत इति[19]। परस्मिन्निति [20]निमित्तभावे सप्तमी, न परसप्तमी, परशब्देनैव परत्वस्योक्तत्वात्, परस्मिन् य आदेश इति [21]अनुवादत्वाच्च, क्ङिति ये गुणवृद्धी इतिवत्, पूर्वविधाविति विषय इति प्रकृतत्वात् स्थानिवत्त्वस्य।

---

1. सम्बन्धिशब्दत्वात् 2. अत्र हि 3. स्थानीत्यनुमीयते 4. च नास्ति 5. ततश्च यथा, नास्ति 6. मात्र नास्ति 7. अस्ति 8. च नास्ति 9. ईनन्तोऽपि 10. कृत्प्रत्ययत्वादि 11. च नास्ति 12 अपि नास्ति 13. आदेशे 14. अत्र नास्ति 15. ऊठिति 16. अन्त्यरूपेण 17. एवं तर्हि 18. असतं 19. भावः इत्यधिकम् 20. भावे नास्ति 21. अनुवादाच्च

'पूर्वविधौ कर्तव्ये स्थानिवत्' इति। एवं पदतात्पर्यं दर्शयित्वा वाक्यार्थमाह—'अ..देशः' इत्यादि। किमर्थमिदमुच्यते, पूर्वत्र स्थानिकार्यमा[1]देशोऽतिदिष्टम्, इह तु स्थानिनि सति पूर्वस्य यत्कार्यं तदादेशेऽपि सति पूर्वस्य भवत्यतिदिश्यते। [2]ननु तत्रापि स्थानिनिमित्तमन्यस्य[3] तदप्यतिदिश्यते, यथा वृक्षायेति 'सुपि च' (७.३.१०२) इति दीर्घत्वम्। एवं तर्ह्यल्विध्यर्थमिदम्। तथा हि—वव्रश्चेत्युरदत्वे 'न सम्प्रसारणे सम्प्रसारणम्' (६.१.३७) इति वकारस्य सम्प्रसारणप्रतिषेधः स्थान्यलाश्रयोऽस्माद्वचनाद्भवति। इदं च 'सम्प्रसारणे परतः प्रतिषेधः' इति पक्षे प्रयोजनम्, 'सम्प्रसारणभाविनि यण्येव प्रतिषेधः' इति तु पक्षे न प्रयोजनम्। इहाचितीकः, बहुचितीक इति चितेः [4]कपि दीर्घत्वे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' (६.२.१७४) इति स्थान्यलाश्रयः स्वरो भवति। एवं यातेर्यङन्तात् क्तिचि [5]अतो लोपे यलोपविधिं प्रति स्थानिवत्त्वनिषेधात् यलोपे च [6]या या ति इति स्थिते यङकारलोपस्य स्थानिवत्त्वात् 'आतो लोप इटि च' (६.४.६४) इत्याकारलोपे, पुनर्यलोपे यातिरिति भवति। न च पुनराकारलोपः, पुनश्च यलोप इति प्रत्ययमात्रस्य श्रवणप्रसङ्गः, आल्लोपस्य स्थानिवत्त्वाच्चिणोलुङ्न्यायेना[7] सिद्धत्वाद्वा। तथा च वरेविधौ स्थानिवत्त्वं निषिध्यते, यायावर इति। स्थानिवद्भावादातो लोपो मा भूदिति। तथा तिष्ठतेर्यङन्तात [8]क्तिच्, अल्लोपयलोपयोस्तेष्ठीति स्थिते अल्लोपस्य स्थानिवत्त्वादियङ् भवति, तथा चोत्तरसूत्रे कण्डूतिरित्यत्र उवङ्प्रसङ्गं चोदयित्वा 'अस्तु तस्यैव च्छ्वोः शूडित्यूठ करिष्यते' इत्युक्तम्, इयङि [9]च कृते यलोपे च तेष्ठितिरिति भवति। न [10]च पुनरियङ्, आदिष्टादचः पूर्वत्वात्। तथा पेपीयतेः क्तिचि अल्लोपयलोपयोः 'एरनेकाचः' (६.४.८२) इति [11]यणि यलोपे पेप्तिरिति भवति। 'शो तनूकरणे' (धा. पा. ११४५) यङन्तात् क्तिचि अल्लोपयलोपाल्लोपेषु 'पूर्वत्रासिद्धीये न स्थानिवत्' (जै. प. ४८) इति स्थानिवत्त्वनिषेधाच्च 'छशां षः' (८.२.३६) इति षत्वे शाष्टिरिति भवति। एवं [12]चिचीयतेश्चेक्तिरित्येषा दिक्।

[13]तथा तितउमाचष्ट इति णिचि [14]टिलोपस्य स्थानिवत्त्वात् 'अचो ञ्णिति' (७.२.११५) इत्यस्याभावे 'अत उपधायाः' (७.२.११६) इति [15]स्थान्यलाश्रया वृद्धिर्भवति। न चात्र 'क्विलुगुपधात्व'—इत्युपधाविधिं प्रति स्थानिवत्त्वनिषेधः, तस्य प्रत्ययविधिविषयत्वात्, सत्यां च वृद्धौ पुकि सति 'तितापयति' इति भवति। न च पुक्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात्। ननु पूर्वस्य कार्ये[16] कर्तव्ये सति स्थानिवत्त्वेन भवितव्यम्, अत्र च सर्वत्र स्थानिवत्त्वे सति पूर्वस्य कार्यप्राप्तिरिति [17]इतरेतराश्रयम्। नात्र [18]स्थानिवत्त्वात् प्रागेव पूर्वस्य कार्ये प्राप्ते स्थानिवत्त्वम्, किं तर्हि ? प्राग्वा पश्चाद्वा पूर्वस्य कार्ये चिकीर्षिते। अत एव वरेविधौ स्थानिवत्त्वनिषेधः। तदेवमल्विध्यर्थमिदम्।

किञ्च ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र ब्राह्मणाश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं युद्धादिकं व्यावर्त्यते। पूर्वसूत्रेऽपि स्थान्याश्रयं प्राप्यते, न स्वाश्रयं व्यावर्त्यते, यथा वृक्षायेति दीर्घत्वमादेशाश्रयं भवति; भविता, भवितुम्, भवितव्यमिति गुणः। इह तु स्थान्यलाश्रयमेवेष्यते, स्वाश्रयं नेष्यते। तथा च 'पटयति' इति टिलोपे कृते प्राप्ता उपधावृद्धिर्न भवति, 'अवधीत्' इति हलन्तलक्षणा; 'बहुखट्वकः' इति 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' (६.२.१७४) इति स्वरो न भवति, वाय्वोर्यलोपो न भवति, 'तन्वन्ति' इतीण् न भवति। एवं बहूनि स्वाश्रयनिवृत्तेरुदाहरणानि। अत एव द्विर्वचनादिविधौ स्थानिवत्त्वनिषेधः। अतोऽजादेशः परनिमित्तकः [19]पूर्वस्य विधौ स्थानिवदेव यथा स्यात्, मा भूत् स्वयं निमित्तमिति नियमार्थमपीदमारब्धव्यम्।

कथं पुनरेकेन यत्नेनोभयं लभ्यम्, विधिश्च, नियमश्च ? विधिग्रहणसामर्थ्यादिति तन्निरूपणे वक्ष्यामः। अथ वा विधिग्रहणं विधिमात्रे स्थानिवद्भावो यथा [20]स्यादशास्त्रीये च विपरीते च। तेन पटयति इत्यादौ [21]स्थानिनि

1. आदेशस्यातिदिष्टम् 2. ननु नास्ति 3. यत्कार्यं इत्यधिकम् 4. कपीति 5. आलोपे 6. या या इति स्थिते 7. असिद्धत्वाच्च 8. क्तिनि 9. च नास्ति 10. च नास्ति 11. यणि नास्ति 12. चेचीयतेः 13. तथा नास्ति 14. टिल्लोपस्य 15. स्थानिन्यलाश्रया 16. प्राप्ते इत्यधिकम् 17. इतरेतराश्रयत्वम् 18. स्थानिवद्भावात् 19. पूर्वविधौ 20. स्यात् शास्त्रीये 21. स्थानिनिर्दिष्टो

[1]दृष्टो वृद्धचभावादिरशास्त्रीयोऽप्यतिदिश्यते । तत्र वृत्तिकारेण यत्नसाध्यत्वादशास्त्रीयोदाहरणानि दर्शितानि । विधिशब्दः कर्मसाधनः, पूर्वस्येति [2]शेषलक्षणषष्ठी, पूर्वस्य व्यवस्थितस्य सतः सम्बन्धिनि कार्ये कर्तव्ये इति । पूर्वत्वं त्वत्राजपेक्षमाश्रीयते, नादेशापेक्षम् निमित्तापेक्षं वा । न चाजपेक्षे पूर्वत्वे विधिशब्दो भावसाधनः सम्भवति । भावसाधने हि तस्मिन्, पूर्वस्येति कर्मणि षष्ठीविज्ञानात् पूर्वस्मिन्विधातव्ये स्थानिवदित्यर्थः स्यात् । अवस्थिते चाचि ततः पूर्वं किञ्चिद्विधेयं भवति, इह चादेशः स्थानिवदिति वचनात् [3]आदेशेन [4]स्थानी निर्वासित इति नायमर्थः सम्भवति । [5]अत्रादेशः परनिमित्तकः, तस्यैवादेशस्य स्थानिभूतो योऽच् ततः पूर्वस्मिन् विधातव्य इति । तथा हि 'अचो य आदेशः' इत्यादेशात् प्रागवस्थाऽनूद्यते, ततश्च संनिधानात् प्रतीयमानमवधित्वमपि तदवस्थस्यैवाचो युक्तम् । अत एवोच्यते 'योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः' इति । आदेशनमादिष्टं तदकृतं यस्य सोऽनादिष्टः, अकृतादेशादचः पूर्वस्येत्यर्थः । आदेशात् प्रागवस्थायामिति यावत् । न चास्या अवस्थायाः पूर्वस्मिन् विधातव्ये तदादेशः स्थानिवदिति सम्भवति । ननु कर्मसाधनेऽप्यजादेशः स्थानिवद्भवति, अकृतादेशादचः पूर्वस्य विधाविति नायमर्थः सम्भवति, स्थानिवद्भावदशायामच आदेशेन निर्वर्तितत्वात् । नात्र सम्प्रत्ययचः पूर्वस्येत्ययमर्थः, किं तर्हि ? अचोऽवस्थानदशायां[6] पूर्वत्वेन [7]दृष्टस्याजवस्थाप्रभृतिपूर्वस्येत्यर्थः । तदेवमजपेक्षस्य [8]पूर्वत्वस्याश्रयणात् कर्मसाधन एव विधिशब्दः । किं पुनः कारणमजपेक्षमेव पूर्वत्वमाश्रीयते, न पुनरादेशापेक्षं निमित्तापेक्षं वा ? उच्यते, तदपेक्षे पूर्वत्वे वैयाकरणः, सौवश्व इत्यत्र[9] स्थानिवद्भावादैचोरायावौ प्राप्नुतः, तावपि हि यणादेशात्तन्निमित्ताच्च परस्मादचः पूर्वस्य कार्यम् । न च वाच्यम् 'सत्यपि स्थानिवत्त्वेऽन्तर्भूताज्निमित्ततयाऽन्तरङ्गयोरायावोः कर्तव्ययोर्बहिर्भूततद्धितापेक्षतया बहिरङ्गावैचावसिद्धावित्यायावौ न भविष्यतः' इति; 'नाजानन्तर्ये [10]बहिरङ्गप्रक्लृप्तिः' (व्या. परि. ४४) इतिवचनात् । यथा 'अक्षद्यूः' इति बहिर्भूतक्विबपेक्षोऽप्यूडन्तर्भूताजपेक्षे यणि नासिद्धो भवति । अजपेक्षे तु पूर्वत्वे 'वि+आकरणः, सु+अश्वः' इत्यजवस्थायां य्वोरभावेनैचोरदर्शनादप्रसङ्गस्तदाह—'अचः पूर्वत्वविज्ञानादैचोः सिद्धम्' (कात्या. वा. ४०३)इति । किं च निमित्तापेक्षे पूर्वत्वे द्वाभ्याम्, देयम्, लवनमित्यत्रात्वेत्वगुणाः स्वनिमित्तात् पूर्वेषां स्वेषामेव कार्येषु दीर्घगुणावादेशेषु स्थानिवत् स्युः । तथोभयोरपि पक्षयोः 'अपीपचत्' इत्यादौ 'सन्वल्लघुनि' (७.४.९३) इति सन्वद्भावो न स्यात्, उपधाह्रस्वस्य स्थानिवत्त्वादलघूपधत्वात् । अजपेक्षे तु पूर्वत्वे पाचि+अत् इति स्थिते द्विर्वचनमुपधाह्रस्वत्वं णिलोपः इत्येतेषु प्राप्तेषु परत्वादन्तरङ्गत्वाच्च णिलोपे [11]कृते परत्वान्नित्यत्वाच्च ह्रस्वत्वे च पश्चाद् द्विर्वचनेऽभ्यासस्य स्थानिनोऽचः पूर्वत्वेनादृष्टत्वान्नास्ति स्थानिवद्भावः । तथा च तत्र तत्रोच्यते 'योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव आदिष्टाच्चैषोऽचः पूर्वः' (म. भा. १.१४६) इति । तस्मादजपेक्षमेव पूर्वत्वम् । यद्येवम्, 'तन्वन्ति' इत्यत्रेटि कर्तव्ये यणः स्थानिवत्त्वं न स्यात् । 'तन् उ अन्ति' इत्यजवस्थायां यत्पूर्वमङ्गं न तस्येट्, किं तर्हि ? ततः परस्यादेशस्यैव । निमित्तापेक्षे [12]तु यणो निमित्तादन्त्याकारात् पूर्वस्य तस्यैव यण इड् विधेय इति कर्मसाधने भावसाधने [13]च विधिशब्दे स्थानिवत्त्वं लभ्यते । आदेशापेक्षेऽपि भावसाधने यणः पूर्वत्वेनेटो विधेयत्वात् सिध्यति । नैष दोषः । 'आर्धधातुकस्येड्' (७.२.३५) इत्यत्र 'एकाच उपदेशे' (७.२.१०) इत्यतः 'उपदेशे' इत्यनुवृत्तेरुपदेशे वलादेरिड् भविष्यति । 'नन्दकः' इत्यत्रापि तर्हि प्राप्नोति । 'नेड् वशि कृति' (७.२.८) इति निषेधो भविष्यति, [14]तत्राप्युपदेश इत्यनुवृत्तेः । एवमपि [15]'चोरिष्यते' इत्यादौ वलादिलक्षणे चिण्वदिटि च प्राप्ते नित्यत्वाच्चिण्वदिडिति । वक्ष्यति—'नित्यश्चायं वल्निमित्तविघाती' इति, तन्नोपपद्यते, उक्तेन प्रकारेण वलादिलक्षणस्यापोटो नित्यत्वात् । एवं तर्हि बहिरङ्गस्य यणोऽसिद्धत्वादिडभावः ।

यद्वा पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोऽप्याश्रीयते, तेन पूर्वस्मादङ्गादिटो निमित्तत्वेनाश्रितात् परस्य यण इति कर्तव्ये स्थानिवद्भविष्यति ।

---

1. दृष्टो नास्ति 2. शेषलक्षणा षष्ठी 3. आदेशेनाच् 4. स्थानी नास्ति 5. अजादेशः 6. यः इत्यधिकम् 7. दृष्टः तस्याजवस्थानदशाप्रभृतिपूर्वस्येत्यर्थः 8. पूर्वस्याश्रयणात् 9. यणः इत्यधिकम् 10. अन्तरङ्गबहिरङ्गप्रक्लृप्तिः 11. कृते नास्ति 12. तु नास्ति 13. वा 14. अत्राप्युपदेश 15. चोरयिष्यत

कानि पुनः पञ्चमीसमासप्रयोजनानि ? इदं तावत् प्रयोजनम्—'तन्वन्ति' इति। किञ्च 'बेभिदिता, माथितिकः, अपीपचन्'। [1]बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोः कृतयोः 'एकाच उपदेशेऽनुदात्तात्' (७.२.१०) इति इट्प्रतिषेधः स्यात्, अल्लोपस्य स्थानिवत्त्वान्न भवति। नैतदस्ति। बेभिद्य तृ इति स्थितेऽल्लोपश्च प्राप्नोति इट् च, परत्वादिट्। [2]नित्योऽल्लोपः, कृतेऽपीटि प्राप्नोति। इट् पुनरनित्यः, न हि [3]कृतेऽल्लोपे प्राप्नोति, [4]नित्येनाल्लोपेन बाध्यते। यस्य च निमित्तं लक्षणान्तरेण [5]न [6]विहन्यते [7]तत् नित्यम्, अत उभयोर्नित्ययोः परत्वादिडेव भविष्यति। इदं तर्हि मथितं पण्यमस्य माथितिक इति ठस्येकादेशे कृते, यस्येति लोपे चेकस्य [8]स्थानिवद्भावेन ठग्रहणेन ग्रहणात् 'इसुसुक्तान्तात्कः' (७.३.५१) इति कादेशः प्राप्नोति, यस्येति लोपस्य स्थानिवद्भावान्न भवति। एतदपि सन्निपातपरिभाषया (व्या. १२) ठस्येति वर्णग्रहणेनाल्विधित्वेन स्थानिवद्भावाभावाद्वा सिद्धम्। इदं तर्हि अपीपचन्, अपीपच [10]अन् इति स्थितेऽन्त्याकारस्य चङकारस्य च 'अतो गुणे' (६.१.९७) इति पररूपत्वे तस्य परं प्रत्यादिवद्भावात् झिग्रहणेन ग्रहणे सति 'सिजभ्यस्तविदिभ्यश्च' (३.४.१०९) इति जुस् प्राप्नोति, णिलोपस्यैकादेशस्य वा स्थानिवद्भावान्न भवति। तदेवमजपेक्षमेव पूर्वत्वमाश्रीयते, विधिशब्दश्च कर्मसाधनः, [11]शेषषष्ठ्या च समास [12]इति न कश्चिद्दोष इति स्थितम्।

'पटयति' इति। [13]णाविष्ठवत् इति टिलोपः। 'अवधीत्' इति। 'हनो वध लिङि' (२.४.४२), 'लुङि च' (२.४.४३) इति वधादेशः। 'हलन्तलक्षणा' इति। 'वदव्रज' (७.२.३) [14]इत्यत्र हलन्तस्येत्यनुवृत्तेर्हलन्तलक्षणा। 'बहुखट्वकः' [15]इत्यत्र 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' (कात्या. वा. ४३१) इति वचनात् स्वरविधावप्यत्र स्थानिवत्त्वं भवत्येव।

'प्रश्नः' इति। 'यजयाचयत' (३.३.९०) इत्यादिना नङ्, [16]'च्छ्वोः शूठ्' (६.४.१९) इति छस्य शः। 'तुकि न [17]स्थानिवद्भवति' इति। [18]तुकि कर्तव्ये न स्थानिवद्भवतीत्यर्थः। [19]नन्वन्तरङ्गत्वात् पूर्वं तुका भाव्यम्, यत्र चैकं निमित्तीकृत्य युगपदाङ्गवार्णयोः प्रसङ्गः, तत्र 'वार्णादाङ्गं बलीयः,' (व्या. प.३९) यथा करोतेर्लिटि णलि 'कृ अ' इति स्थिते, गौरित्यत्र सावकाशाम् 'अचो ञ्णिति' (७.२.११५) इति वृद्धिं बाधित्वा अन्तरङ्गत्वात् प्राप्तं यणं वृद्धिरेव बाधते, प्रश्न इत्यत्र तु शस्य नङ् निमित्तं तुकस्तु छः, [20]भिन्नकाला चानयोः प्राप्तिरिति नायमस्या विषय इति तुकि सति 'च्छ्वोः शूठ्' (६.४.१९) इत्यत्र [21]सतुक्कच्छकारनिर्देशेन [22]तस्यैवादेशः। एवं च सत्यपि स्थानिवत्त्वे [23]सतुक्कच्छग्रहणेन शो गृह्यते, न केवलं छग्रहणेनेति कुतस्तुकः प्रसङ्गः। अत एव नङो ङित्त्वमपि विश्न इति गुणो मा भूदिति, [24]तस्मादप्रत्युदाहरणमेतदिति प्रत्युदाहरणान्तरमाह—'आक्राष्टाम्' इति। '[25]स्पृशमृशकृषतृपदृपां च्लेः सिज् वा वक्तव्यः' (३.१.४४.२०७) इति क्सापवादः पक्षे सिच्। [26]अनुदात्तस्येत्यम्, यणि 'वदव्रज' (७.२.३) इति वृद्धिः। [27]पूर्वत्रासिद्धे न स्थानिवत्' (जै. प. ४८) इति वचनादत्राप्यतृप्यन्नाह—'आगत्य' इति। '[28]वा ल्यपि' (६.४.३८)।

'युवजानिः' इति। बहुव्रीहौ पुंवद्भावः, युवतिशब्दस्य वयोवचनत्वेनाजातिवाचित्वात् 'जातेश्च' (६.३.४१) इति प्रतिषेधो न भवति। 'यलोपे न स्थानिवत्' इति। ननु योऽत्रादेशो[29] नासौ लोपस्य निमित्तम्, तस्य वल्मात्रनिमित्तत्वात्, यश्च निमित्तं नकारः नासावादेश इति स्थानिवत्त्वं न भविष्यति। न च जायाशब्दस्य जनेरौणादिके

1. भिदेर्यङन्तात् 2. नित्यो लोपः 3. कृते अलोपे 4. नित्येन यलोपेन 5. न नास्ति 6. व्याहन्यते 7. तदनित्यम् 8. स्थानिवद्भावात् 9. वा इत्यधिकम् 10. अन्ति 11. शेषषष्ठ्याश्च 12. इति नास्ति 13. णविष्टवत् 14. इत्यतो 15. अत्र नास्ति 16. च्छ्वोः शूठ् इति छस्य शः नास्ति 17. स्थानिवद्भवतीत्यर्थः 18. तुकि ......स्थानिवद्भवतीत्यर्थः नास्ति 19. ननु चात्रान्तरङ्गत्वात् 20. भिन्नकालं 21. सतुक्छकारनिर्देशेन 22. तस्यैव शादेशः 23. सतुक्छकारग्रहणेन 24. तस्मान्न प्रत्युदाहरणमेतदिति 25. स्पृशमृशकृषतृपदृपसृपां 26. अनुदात्तस्येत्यमि 27. पूर्वत्रासिद्धीये 28. वा ल्यपि नास्ति 29. निर्दिष्ट समुदायः इत्यधिकम्

यङ्प्रत्यये 'ये विभाषा' (६.४.४३) इत्यात्वे च व्युत्पादितत्वात् निङः स्थानिवत्त्वे सति आतो लोपप्रसङ्गः। न ह्युणादिषु व्युत्पत्तिकार्यमवश्यं भवति, अत उदाहरणान्तरोपन्यासः—'वैयाघ्रपद्यः' इति। व्याघ्रस्येव पादावस्येति 'पादस्य लोपोऽहस्त्यादिभ्यः' (५.४.१३८) [1]इत्यपर[2]निमित्तः 'गर्गादिभ्यो यञ्' (४.१.१०५)। ननु सत्यपि स्थानिवत्त्वे वचनात् पद्भावो भविष्यति। यद्येवम्, पादे इत्यत्रापि प्राप्नोति, सति तु [3]परस्मिन्नित्यस्मिन् 'वैयाघ्रपद्यः' इत्यत्र पद्भावस्य चरितार्थत्वात् पादे इत्येकादेशस्य स्थानिवत्त्वात् पद्भावाभावः। कथं पुनरेकादेशस्य स्थानिवत्त्वम्, न ह्ययमच आदेशः, किं तर्हि? अचोः। उच्यते—वर्णनिर्देशेषु जातिग्रहणात्, 'अचः' इत्येकत्वस्याविवक्षितत्वात् अचोरप्यादेशः स्थानिवत्[4]। द्वयोरपि वा स्थानित्वे यदेकस्य स्थानित्वं तदाश्रयं [5]तस्य स्थानिवत्त्वं भविष्यति। अत एव "[6]श्रायसौ, गौमतौ, चातुरौ, आनडुहौ' इति [7]श्रायसादिभ्योऽणन्तेभ्य औप्रत्यय एकादेशस्या[8]दिवत्त्वात् प्राप्तौ नुमामौ न भवतः। 'उदकं वहति', 'कर्मण्यण्' (३.२.१) सञ्ज्ञायामुदभावः, सप्तम्येकवचन एकादेशस्यादिवत्त्वाद्भत्वे सति प्राप्तः 'वाह ऊठ्' (६.४.१३२) न भवति उदवाहे इति। 'आदीध्ये' इति। अदादित्वाच्छपो लुक्। परस्मिन्नित्युच्यमाने स्थानिवद्भावाभावात् कृते टेरेत्वे लोपो न प्राप्नोति। टेरेत्वं [9]तु कृताकृतप्रसङ्गित्वान्नित्यमिति तदेव भवति। ननु च परस्मिन्नित्यसति शब्लुकोऽपि स्थानिवत्त्वात् तद्व्यवधानादेव लोपो न भविष्यति। न। 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषु' (कात्या. वा. ४३२) इति लुका लुप्तस्य स्थानिवत्त्व[10]प्रतिषेधात्।

'हे गौः' इति। 'गोतो णित्' (७.१.९०)। 'बाभ्रवीया.' इति। [11]बभ्रोरपत्यमिति 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' (४.१.१०६) इति यञ्, 'ओर्गुणः' (६.४.१४६), 'वान्तो यि प्रत्यये' (६.१.७९) इत्यवादेशः। 'अवादेशो न स्थानिवद्भवति' इति[12]। ननु चासत्यपि स्थानिवद्भावे संनिपातपरिभाषया (व्या. प. १२) न भवितव्यमेवात्र[13] यलोपेन। नैतदस्ति। "[14]अचः' इत्ययं सङ्घातो [15]यावित्संनिपातकृतः, न च स लोपस्य निमित्तम्, किं तर्हि, वकारमात्रम्। यद्येवम्, स्थानिवद्भावस्याप्यप्रसङ्गः। योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः। 'नैधेयः' इति। निपूर्वाद्धाञः 'उपसर्गे घोः किः' (३.३.९२), 'आतो लोपः' (६.४.६४), 'द्व्यचः' (४.१.१२१), 'इतश्चानिञः' (४.१.१२२) इति ढक्। ननु च पूर्वस्मादपि विधौ स्थानिवत्त्वमुक्तम्, तत् कथमेतानि प्रत्युदाहरणानि? नैष दोषः, अत्राप्यजपेक्षस्य [16]पूर्वस्याश्रयणात् 'योऽनादिष्टादचः पूर्वस्ततः परस्य' (सी. ६७) इति। एवमपि हे गौरित्यत्र प्राप्नोति व्यवहितेऽपि परशब्दवृत्तेर्गकारात परस्य सोर्लोपः, एवमितरयोरपि। नैतदेवम्, [17]पूर्वस्य विधिरिति षष्ठीसमास एवायम्, तत्रानुवादत्वात् स्थानषष्ठ्यभावात् सम्बन्धसामान्ये षष्ठी, पूर्वसम्बन्धिनि विधाविति। सम्बन्धश्च द्विविधः, कार्यित्वेन निमित्तत्वेन वा। यत्र कार्यित्वेन स पूर्वस्य विधिः, यत्र निमित्तत्वेन स पूर्वस्मात्, ततश्च योऽनादिष्टादचः पूर्वस्तन्निमित्तत्वेनाश्रित्य यत्कार्यं प्राप्तं स एव पूर्वस्माद्विधिः, यथा 'अपीपचन्' इति। अत्र हि योऽनादिष्टो [18]णिच् चङ् वा, ततः पूर्वम् अपीपच् इत्येवाभ्यस्तं परस्य झेर्जुसो निमित्तम्। तन्वन्ति इत्यत्र योऽनादिष्टोऽच् उप्रत्ययस्ततः पूर्वं यत्[19] तन्निमित्तत्वेनाश्रीयते तद्विधावङ्गस्येत्यनुवृत्तेः। एतदेव तत्राङ्गाधिकारस्य प्रयोजनम्। 'हे गौः' इत्यादौ तु योऽनादिष्टादचः पूर्वो गकारादिर्न तत्सम्बुद्धिलोपादेर्निमित्तम्, यच्च निमित्तमोकारादिर्नासावनादिष्टादचः पूर्व इति न दोषः। [20]इह तर्हि 'वेतस्वान्' इति, टिलोपस्य [21]पूर्वविधौ स्थानिवत्त्वात् सकारात् पूर्वस्यानुपधात्वात् 'मादुपधायाः' (८.२.९) इति वत्वं न स्यात्। न च स्थानिवद्भावेन सन्निहितमकारमपेक्ष्याकारान्तादिति लभ्यते, तस्यानादिष्टादचः पूर्वत्वाभावात्, तदपेक्षत्वे स्थानिवद्भावात्। नैष दोषः। 'पूर्वत्रासिद्धे न स्थानिवत्' (जै. प. ४८)।

विधिग्रहणं किम्, ननु पूर्वसूत्रादेवानुवर्तते? समासद्वय[22]परिग्रहार्थम्। असति हि तस्मिन् पूर्वस्येत्युक्ते पूर्वस्माद्विधौ न स्यात्, पूर्वस्मादित्युक्ते पूर्वस्य विधौ न स्यात्। नैतदस्ति। पूर्वस्येत्युक्तेऽपि अनुवादत्वात् स्थानषष्ठ्यभावात्

1. इति नास्ति 2. निमित्तकः, पद्भावं न प्रतिबध्नाति इत्यधिकम् 3. परस्मिन्नित्येतस्मिन् 4. भवति इत्यधिकम् 5. तस्य नास्ति 6. ज्यायसौ 7. ज्यायसादिभ्यो 8. आदिवत्त्वात् 9. तु नास्ति 10. निषेधात् 11. बभ्रोरपत्यानीति 12. इति नास्ति 13. अत्र नास्ति 14. अच् 15. यद्यपि 16. पूर्वत्वस्य 17. पूर्वस्य विधिः पूर्वविधिरिति 18. णिच् 19. यद् नास्ति 20. एवं 21. पूर्वस्माद्विधौ 22. परिग्रहणार्थम्

सर्वः पूर्वसम्बन्धी विधिः प्रतिपत्स्यते। एवं तर्हि विधिमात्रे स्थानिवद्यथा स्यात्, शास्त्रीये विपरीते च। यद्वा, विधिग्रहणं द्वितीयो यत्नः, तत्राचः परस्मिन् पूर्वस्येत्येको योगः, विधावित्येव। अनेन [1]वव्रश्च इत्यादौ स्थान्यलाश्रयमतिदिश्यते। ततो विधौ, अचः परस्मिन् पूर्वस्येत्येव, नियमार्थमेतत् 'अजादेशः परनिमित्तकः पूर्वविधौ स्थानिवदेव, न तु स्वयं निमित्तम्' (म. भा. १.१४४) इति। तेन पटयतीत्यादि सिद्धं [2]भवतीति। नन्वसत्यपि [3]द्वितीययत्ने [4]यथा 'चोलवत् काश्मीरेषु व्रीहयः' [5]मरुभूमिवदस्मिन् प्रदेशे जलम्' इत्यादौ दृष्टान्ते प्रसिद्धस्य भावस्याभावस्य वा यथादर्शनमतिदेशः, एवमत्रापि भविष्यति? विषम उपन्यासः। युक्तं तत्र भावस्यैवाभावस्यैव च प्रसिद्धत्वात्, इह तूदाहरणभेदेन भावाभावयोः प्रसिद्धत्वात् 'स्थानिवदादेशः' इत्युक्तेऽश्रुतक्रियापदेषु वाक्येषु [6]भवतीत्येवाध्याहारस्य प्रसिद्धत्वात् भावातिदेशः [7]स्यात् इत्यलम[8]तिप्रबन्धेन ॥

## ५८. न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु।

द्विर्वचने यलोपादौ च तावत् तदेव विधेयम्, न तु तस्य व्यवस्थितस्य किञ्चित्। 'कौ स्तः' इत्यादौ तु पदान्तस्य सतः कार्यमावादि पदान्तस्य वाऽऽवादेर्विधानमित्युभयथा सम्भवः। एवं वरेविधावपि। तथापि सर्वग्रहणा भावसाधन एव विधिशब्दः। 'एतेषु' इति। पदान्तादिविधेयभेदेन भिन्नानि यानि विधानानि एतेष्वित्यर्थः। 'पूर्वविधौ' इत्यादि। यद्यपि व्याकरणे न पदानि संस्क्रियन्ते, न वाक्यम्, तथापि वाक्यगते स्त इत्यादिके पदे व्युत्पाद्यमाने काविव्यादेः पदस्यासत्यपि निमित्तत्वे सन्निधानमविरुद्धम्। ततश्चानादिष्टादचः पूर्वत्वसम्भवादस्ति स्थानिवत्त्वप्रसङ्ग इति भावः।

'दध्यत्र' इति। स्थानिवद्भावप्रतिषेधसामर्थ्यात् 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) इत्येतदपि न प्रवर्तते। शच्यावित्यादावपि बहिर्भूताजपेक्षत्वाद्यण् बहिरङ्ग एव, 'वरे' इति निपातनादलुक्। 'यायावरः' इति। 'नित्यं कौटिल्ये गतौ' (३.१.२३) इति यङ्। 'अतो लोपः परनिमित्तकः' इति। 'आर्धधातुके' इति परसप्तमीपक्ष इति भावः। तथा च 'अनुदात्तेतश्च हलादेः' (३.२.१४९) इत्यत्रादिग्रहणम्। असति हि तस्मिन् हलन्तादिति विज्ञायेत, ततश्च 'जुगुप्सनो मीमांसनः' इत्यत्र युज् न स्यादिति। यदि च सा विषयसप्तमी स्यात्, प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति हलन्तत्वादत्रापि युच् सिद्धः स्यात्। [9]यत्तु 'अचो यत्' (३.१.९७) इत्यत्र वक्ष्यति—अज्ग्रहणं किम्. यावता हलन्तात्ण्यतं वक्ष्यति? अजन्तभूतपूर्वादपि यथा स्यात्, 'दित्स्यम्, धित्स्यम्' इति। [10]तद्विषयसप्तमीपक्ष इति वेदितव्यम्। परसप्तमीपक्षे हि प्राक्प्रत्ययोत्पत्तेरतो लोपाभावादनुपपन्नं तत् स्यात्।

'कण्डूयतेः क्तिनि कृते' इति। 'क्तिन्नाबादिभ्यो वक्तव्यः' (३.३.९४ वा. ३०७) इत्यनेनेति भावः। 'क्तिवि' इति [11]तु युक्तः पाठः। 'कण्डूतिः' इत्यत्राल्लोपस्य स्थानिवत्त्वादुवङ् प्राप्नोति, अस्तु 'च्छ्वोः शूठ्' (६.४.१९) इत्यूठ् भविष्यति। न चोठ्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात्। अत एवोठः पुनरुवङ् न भवति।

'परसवर्णे न स्थानिवद्भवति' इति। ननु [12]श्नसोरल्लोपे कृते पश्चादनुस्वारो भवन्नादिष्टादचः पूर्वं इति कथमस्य परसवर्णे कर्तव्ये स्थानिवत्त्वप्रसङ्गः? स्यादेतत्, स्थानिनो नकारस्यानादिष्टादचः पूर्वत्वादादेशोऽनुस्वारोऽपि स्थानिवद्भावादनादिष्टादचः पूर्व इति। तन्न। न ह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं[13] यदतिदिश्येत। एवं तर्ह्यनादिष्टादचः पूर्वत्वापेक्षेऽचः परस्मिन्नित्यतिदेशो कर्तव्ये 'स्थानिवदादेशः' (१.१.५६) इत्येतत् प्रवर्तते, अतः सवर्णग्रहणं कृतम्।

'शिपन्ति' इति। यद्यपि '[14]शिण्ढि' इत्येवानुस्वारविधेरप्युदाहरणम्, तथापि तस्मिन्नेवोदाहृते परसवर्णविधौ स्थानिवत्त्वनिषेधः, तस्य स्थानिनोऽनुस्वारस्यापि विधौ स्थानिवत्त्वप्रतिषेधमन्तरेणा[15]नुपपन्न इति पृथगनुस्वारग्रहणं च कर्तव्यमित्याशङ्कानिराकरणाय केवलानुस्वारोदाहरणं दर्शितम्।

---

1. पूर्वविधिं प्रति 2. भवतीति नास्ति 3. द्वितीये यत्ने 4. यथा नास्ति 5. मरुभूमि 6. एव नास्ति 7. एव इत्यधिकम् 8. अतिप्रसङ्गेन 9. तत्र 10. तत् नास्ति 11. तु नास्ति 12. व इत्यधिकम् 13. कार्यं इत्यधिकम् 14. शिण्ढीत्येतदेवानुस्वारस्य 15. अनुपपन्नम्

'प्रतिदीव्ना' इति। प्रतिपूर्वाद्दिवेः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उणादि. १५४) इति कनिन्प्रत्ययः। 'भस्येत्यधिकृत्य' इति। परनिमित्तकत्वोपपादनार्थः। किमिदमुक्तम्, [1]'हलि च' (८.२.७७), 'उपधायां च' (८.२.७८) इति दीर्घत्वं न स्यादिति ? उपधायां चेत्येतल्लेखकैः प्रमादाल्लिखितम्, तथा च 'उपधायां च' (८.२.७८) इत्यत्र वक्ष्यति, प्रतिदीव्नेत्यत्र 'हलि च' (८.२.७७) इति दीर्घत्वमिति। 'अस्माद्वचनाद्भवति'[2] इति। 'न भकुर्छुराम्' (८.२.७९) इति तु प्रतिषेधो रेफवकारान्तस्य भस्येत्यत्र न प्रवर्तते।

'झलो झलीति [3]सलोपः' इति। सकारे सिचो लोप इत्येतत्तु नाश्रीयते, तस्मिंस्त्वाश्रिते [4]छान्दसत्वाद्वर्णलोपः।

'बहुखट्वकः' इति। अत्र स्थानिवद्भावात् 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' (६.२.१७४) इति खकाराकारस्योदात्तत्वं न भवति, 'कपि पूर्वम्' (६.२.१७३) इत्येतदेव तु भवति। 'किर्यो. गिर्यो' इति। 'कॄगॄोरिच्च' (उणादि २४) इति व्युत्पत्तिपक्ष एतदुदाहृतम्। 'उपधायां च' (८.२.७८) इत्यत्र [5]त्वव्युत्पत्तिपक्षमाश्रित्य वक्ष्यति 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (पु. प. १२३) [6]इति '[7]किर्योर्गिर्योरित्यादिषु दीर्घो न भवति' इति।

'क्विलुगुपधात्वचङ्परनिर्ह्रास[8]कुत्वेष्वजादेशो न स्थानिवद्भवति' (कात्या. वा. ४३२) इति वक्तव्यम्। क्वि— क्वौ यद्विधीयते तत्र कर्तव्ये यत्र कुत्रचित् कृतोऽजादेशो न स्थानिवद् भवतीति[9], लवमाचक्षाणो लौः, अत्र णिचि यष्टिलोपः. यश्च [10]क्वौ णिलोपस्तदुभयमपि 'च्छ्वोः शूठ्' (६.४.१९) इति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवद् भवतीति[11] 'एत्येधत्यूठ्सु' (६.१.८९) इति वृद्धिः। ये तु 'क्वौ लुप्तं न स्थानिवत्' इति पठन्ति तेषामेतन्न स्यात्। तथा पिपठिषतेः क्वौ, अतो लोपे नपुंसके बहुवचने जसि झल्लक्षणे नुमि जस्निमित्तेऽपि कर्तव्येऽतो लोपस्य स्थानिवत्त्वनिषेधः स्यात्, क्वौ कृतत्वात्। क्वौ विधिं प्रतीत्यत्र तु पक्षे प्रतिषेधो न भवति, 'पिपठींषि ब्राह्मणकुलानि', नुम्यसति 'सान्तमहतः' (६.४.१०) इति दीर्घत्वं न भवति। देवयतेर्द्यूरित्यत्रोभयथापि सिद्धयति। लुक्—लुका [12]लुप्ते न स्थानिवत्, आमलक्या विकारः फलम् 'नित्यं वृद्धशरादिभ्यः' (४.३.१४४) इति मयटः 'फले लुक्' (४.३.१६३), 'लुक्तद्धितलुकि' (१.२.४९) इति ङीपो लुक् परनिमित्तकः यस्येति लोपे न स्थानिवत् भवति। केचित्त्वेतदर्थं सूत्रे वर + ई = वरे इति ईकारप्रश्लेषं वर्णयन्ति, ईविधिं प्रति न [13]स्थानिवदिति। उपधात्वे—उपधात्वे कर्तव्ये न स्थानिवत्। परिखाशब्दाच्[14]चातुरर्थिके णिकृते पारिखे भवः [15]पारिखीय इति 'वृद्धादकेकान्तखोपधात्' (४.२.१४१) इति छो न स्यात्, आकारलोपस्य स्थानिवत्त्वादनुपधाखकार इति। प्रत्ययविधिविषयं चैतत्, यत्रोपधासञ्ज्ञानिबन्धनः प्रत्ययो विधातुमिष्यते तत्रैवेत्यर्थः, [16]घटयतीत्यादौ [17]तु तन्न भवति। [18]चङ्परो यो निर्ह्रासो ह्रस्वस्तत्र न स्थानिवद्भवति। वादितवन्तं प्रयोजितवान् 'अवीवदद्वीणां परिवादकेन', योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावात् णौ चङ्युपधाया[19] ह्रस्वो न स्यात्, यश्चङ्परो णिर्न तस्मिन्नङ्गस्योपधा, यस्मिंश्चाङ्गस्योपधा न[20] चङ्पर इति। कुत्वम्—पाचयतेः क्तिचि पाक्तिः। कुत्वमुपलक्षणम्। लेहयते[21]र्लेढिः, दोहयतेर्दोग्धिः, याचयतेर्याक्तिः, वेशयतेर्वेष्टिरित्यादि[22]॥

## ५९. द्विर्वचनेऽचि।

'अचः परस्मिन्' (१.१.५७) इत्यत्र 'योऽनादिष्टादचः पूर्वः' (कात. प.१२) इति स्थितम्। साच्कस्य द्विर्वचनं न त्वचः पूर्वस्येत्यप्राप्तं स्थानिवत्त्वं विधीयते, रूपातिदेशार्थं च।

---

1. हलि चेत्युपधादीर्घत्वं न स्यादिति 2. इति नास्ति 3 सकारलोप 4. छान्दसो वर्णलोपः 5. तु नास्ति 6. इतिं नास्त 7. तेन गिर्योरित्येवमादिषु 8. कुत्वेषु, एतेषु विधिषु अजादेशो 9. इति नास्ति 10. क्विपि 11. इति नास्ति 12. लुप्तं 13. स्थानिवद्भवति 14. चातुर्यिकेऽणि कृते 15. पारिखीय नास्ति 16. पटयतीत्यादो 17. तु नास्ति 18. चङ्परनिर्ह्रास चङ परे णौ 19. इति इत्यधिकम् 20. स इत्यधिकम 21. लिटिः 22. आदि नास्ति

अत्र षट् पक्षाः सम्भवन्ति । अचीत्यादेशोपलक्षणम्, द्विर्वचन इति विषयनिर्देशः, अचि [1]योऽजादेशः स द्विर्वचने स्थानिवद्भवतीति प्रथमः पक्षः । अचीत्येतदपि स्थानिवद्भावेनैव[2] सम्बध्यते, द्विर्वचन इति विषयनिर्देशात्, द्विर्वचने कर्तव्येऽजादेशः स्थानिवद्भवत्यचि परः इति द्वितीयः[3] । द्विर्वचननिमित्तत्वादजेव द्विर्वचनग्रहणेन विशेष्यते, द्विर्वचनमस्मिन्नस्तीति 'अर्शआद्यच्प्रत्ययान्तेन' (५.२.१२७) वा अधिकरण[4]साधनेन वा, [5]आदेशोपलक्षणम्, द्विर्वचननिमित्तेऽचि योऽजादेशः स स्थानिवदिति तृतीयः । एवं [6]विशेषितं वाज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, अजादेशः स्थानिवद्भवति द्विर्वचननिमित्तेऽचि परत इति चतुर्थः । [7]द्विर्वचनग्रहणमावर्तते, तत्रैकेनाज् विशेष्यते, [8]परेण [9]विषयी निर्दिश्यत इति स्थिते तद्विशेषितमज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, द्विर्वचने कर्तव्येऽजादेशः स्थानिवद्भवति द्विर्वचननिमित्तेऽचि परत इति पञ्चमः । एवमेव स्थितेऽज्ग्रहणमादेशोपलक्षणम्, द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवद्भवतीति षष्ठः ।

[10]अत्र आद्ये पक्षेऽचो द्विर्वचनेनाविशेषितत्वात् [11]द्विर्वचननिमित्तेऽप्यचि आदेशः स्थानिवत् स्यात्, ततश्च 'अचिकीर्तत्' इत्यत्र णिचि 'उपधायाश्च' (७.१.१०१) इतीत्वस्य 'चङि' (६.१.११) इति द्विर्वचने [12]स्थानिवद्भावात् 'अचकीर्तत्' इति स्यात् । 'दुद्यूषति'—ऊठि यणादेशः स्थानिवत् स्यात् । भवनमिच्छति, भवनीयतेः सन्, 'बिभवनीयिषति', ल्युटि कृतयोर्गुणावादेशयोः स्थानिवत्त्वे [13]'बुभवनीयिषति' इत्यनिष्टं रूपं प्राप्नोति । द्वितीये तु 'अचिकीर्तत्' इत्यत्र न दोषः इत्वस्य तकारेण व्यवहितत्वात् स्थानिवद्भावभाजो [14]ह्यादेशस्य स्थानिवत्त्वविधानवेलायामचयनन्तरे स्थानिवत्त्वेन भवितव्यम् । एवं ह्यचि परतः स्थानिवद्भावः कृतो भवति । 'दुद्यूषति' इत्यादौ [15]तु स्यादेव । [16]त्यत्र [17]'आत औ णलः' (७.१.३४) इत्यौकारेण वृद्धौ कृतायां सम्प्रत्यादेशात् परोऽज् नास्तीति स्थानिवत्त्वं न स्यात् । 'जग्मतुः' इत्यादौ च 'गमहन' (६.४.९८) इत्युपधालोपस्य व्यवहितत्वान्न स्यात । तृतीये तु कालावधारणं कर्तव्यम्, अन्यथा द्विर्वचनादुत्तरकालमपि स्थानिरूपमेवावतिष्ठेत । चतुर्थे तु[18] 'ययौ. जग्मतुः' इत्यादौ पूर्वोक्तन्यायेन स्थानिवद्भावो न प्राप्नोति, कालावधारणं च कर्तव्यम् । पञ्चमे[19]ऽपि '[20]ययौ, जग्मतुः' इत्यादौ न स्यात् । अत [21]एतेषु पक्षेषु एवं दोषसम्भवात् षष्ठं पक्षमाश्रित्याह—'द्विर्वचननिमित्तेऽचि' इत्यादि । अत्र हि पक्षे द्विर्वचनेनाचो विशेषणात् 'अचिकीर्तत्, दुद्यूषति, बिभवनीयिषति' इत्यादौ न दोषः । आदेशोपलक्षणत्वाच्च [22]ययावित्यादावपि न दोषः । पुनश्च द्विर्वचनग्रहणात् कालावधारणमपि लभ्यते। ननु द्विर्वचननिमित्तेऽचि योऽजादेशः इत्युच्यमाने [23]'नुनावयिषति, चुक्षावयिषति, पुस्फारयिषति' इत्यादौ णेरद्विर्वचननिमित्तत्वात्तन्निमित्तावादेशः, आकारश्च न स्थानिवत् स्यात्, ततश्चाभ्यास उकारो न श्रूयेत । नैष दोष । 'पुयण्ज्य' (७.४.८०) इति ज्ञापकात् द्वित्वनिमित्तेऽपि णौ स्थानिवत्त्वापायात् । तथा हि—न हि णौ कृतस्य स्थानिवद्भावमन्तरेण ओः पराः पुयण्ज्योऽवर्णपराः सम्भवन्ति । 'पिपविषति, यियविषति' इत्यत्र सम्भव इति चेत्, किमेतावता पुग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवतीति ? ज्ञापकमुक्तार्थस्य । यद्येवम्, 'अचिकीर्तत्' इत्यत्रेत्वस्य स्थानिवत्त्वाद्अचकीर्तदिति स्यात्। नैष दोषः । ज्ञापकस्य तुल्यजातीयापेक्षत्वात् यत्रोत्तरभागस्याद्योऽवर्णपरो भावस्तत्रैव स्थानिवत्त्वज्ञापनात् । नन्वेवमपि 'ओः पुयण्' (७.४.८०) इत्यत्र णेरित्यश्रवणात् सामान्येन द्वित्वनिमित्तं स्थानित्वं विज्ञायेत, ततश्च 'बिभवनीयिषति' इत्यत्रापि स्यात् । नैतदस्ति । 'येन नाव्यवधानम्' (व्या. प. ४६) इत्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणात् णेरेव केवलस्य व्यवधायकस्य सम्भवात् । नन्वचीत्युच्यमाने 'चक्रतुः' इत्यादौ न स्यात् । न ह्यत्राज्मात्रं [24]द्विर्वचननिमित्तम् । क्व तर्हि स्यात् ? 'चकार, चक्रे' इत्यादौ [25]ह्यज्मात्रं प्रत्ययः । स्यादेतत्, परस्मिन्नित्यनुवृत्तमचीत्यनेन विशेष्यते, [26]तत्र

---

1. य आदेशः 2. एव नास्ति 3. पक्षः इत्यधिकम् 4. साधन 5. एवं विशेषितं चाज्ग्रहणं इत्यधिकम् 6. विशेषितमेवाज्ग्रहणं 7. द्विर्वचनग्रहणं द्विरावर्तते 8. अपरेण 9. विषयो 10. तत्र 11. अद्विर्वचननिमित्तेऽप्यचि 12. स्थानिवत्त्वात् 13. बुभवनीयिषतीत्याद्यनिष्ट 14. अप्यादेशस्य 15. तु नास्ति 16. पपावित्यत्र 17. च इत्यधिकम् 18. पपौ 19. अपि नास्ति 20. पपौ 21. एव तेषु 22. पपौ 23. नुनावयिषति......नन्वचीत्युच्यमाने नास्ति 24. द्विर्वचनस्य 25. यत्राज्मात्रं 26. तत्र नास्ति

'यस्मिन्विधिस्तदादावल्[1]ग्रहणम्' (व्या. प. १२७) इति तदादिविधि[2]र्भवति । अजादौ परस्मिन्निति द्विर्वचननिमित्तत्वेनापि अजाद्येव विशेष्यत इति । एवमपि 'चक्रतुः' इत्यत्र [3]स्यात्, यत् द्विर्वचननिमित्तमजादि न तदादेशस्य निमित्तम्, अच्येव यणो विधानात् । यच्चादेशस्य निमित्तं न तत् द्विर्वचनस्य निमित्तम्, 'पपतुः चख्नतुः' इत्यादावेव तु स्यात् । किञ्च 'यस्मिन्विधिः' (व्या. प. १२७) इति वचनाद्यत्र किञ्चिद्विधीयते तत्रैव तदादिविधिः, इह तु अचि योऽजादेश इत्यनुवादत्वात् [4]तदादिविधेरेवासम्भवस्तस्मादजेव गृह्यते, न [5]तदादिः । [6]उच्यते, [7]चक्रतुरित्यादावतुसोर्द्विर्वचनं प्रति निमित्तत्वेनाश्रयणेऽप्यचि परत्रावस्थिते द्विर्वचनं दृष्टमित्येतावताऽजेव द्विर्वचननिमित्तमित्युच्यते । समुदायेऽप्ययं द्विर्वचनशब्दः उपचारेण प्रवर्तते । एवमपि '[8]पपतुः' इत्यत्र न स्यात्, आल्लोपस्याजादिर्निमित्तं नाज्मात्रम् । नैष दोषः । 'अचि योऽजादेशः' इति कोऽर्थः ? अचि यो दृष्ट इत्यर्थः । यश्चाचि विधीयते, यश्चाजादौ, [9]द्वावपि अचि दृष्टावेवेति सर्वत्र सिध्यति । [10]अथ वा अजादावाल्लोपो न हलादौ, तत्र प्राप्ताप्राप्तविवेकेनाच एव निमित्तत्वम् । 'द्विर्वचन एव कर्तव्य' इति एवकारेणैतद्दर्शयति, द्विर्वचनग्रहणमचं [11]विशिनष्टि कालं चावधारयतीति । एकस्योभयसम्बन्धे हि भवति एवकारः, '[12]देवदत्तो ग्रामं गच्छतु स एव गामानयतु' इति । यद्यत्रापि पूर्ववत् कार्यातिदेशः स्यात्, चक्रतुरित्यादावनच्कत्वादप्राप्तं द्विर्वचनं स्थानिवद्भावात् [13]भवदपि यणाद्यादेशयुक्तस्यैव स्यादित्यभ्यासे स्थानिरूपं न श्रूयेत, तदर्थमाह—'रूपातिदेशश्चायम्' इति । चशब्दोऽवधारणे । कथं पुनरवगम्यते रूपातिदेशोऽयमिति ? अल्ग्रहणात् । तद्धि 'जेघ्रीयते'[14] इत्यत्र 'ई घ्राध्मो' (७.४.३१) इति हलादौ विहितस्येत्वस्य स्थानिवत्त्वं मा भूदित्येवमर्थं क्रियते । यदि च रूपं स्थानिवत्, ततोऽसत्यज्ग्रहणे 'घ्राय्घ्रीय्ध्माय्ध्मीय्' इति द्विर्वचनं स्यादिति तन्निवृत्तयेऽज्ग्रहणमर्थवद्भवति । अथ हि कार्यं स्थानिवत् भवति, तस्य सत्यपि स्थानिवत्त्वे ईकारयुक्तस्यैव द्विर्वचनमिति नार्थोऽज्ग्रहणेन । भसेस्तु क्वसौ 'घसिभसोर्हलि च' (६.४.१००) इत्युपधालोपे कृते सत्यसति वा द्विर्वचने भ्स्वानिति श्रुतौ विशेषाभावः । छान्दसश्च क्वसुः, छन्दसि दृष्टानुविधानमतो ज्ञापकमेवाज्ग्रहणम् । तत्र यद्यपि स्थान्येव [15]स्वरूपमापद्यते, तथाप्यातिदेशिकानातिदेशिकरूपभेदाश्रयस्तु वर्तिर्द्विर्वचन एव कर्तव्य इत्येतदेव स्पष्टयति । 'नियतकालः' इति । कृते द्विर्वचने इत्यादिना नियतकालत्वमेव दर्शयति । यदि[16] कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते, यथा 'चक्रतुः' इत्यादौ द्विर्वचनादूर्ध्वं पूर्वं कृतो यणादेश एव श्रूयते तथा 'निन्यतुः' इत्यादावपि द्विर्वचनात् पूर्वमेकाच्त्वादि, यङादेशे कृते स्थानिवद्भावात् द्विर्वचनेऽपि पूर्वप्रवृत्त इयङेव स्यात् । अस्तु, तस्य 'असिद्धवदत्राभात्' (६.४.२२) इत्यसिद्धत्वात् 'एरनेकाचः' (६.४.८२) इति यणि सति श्रवणं न भविष्यति । यद्वा पूर्वप्रवृत्तोऽपीयङ् द्विर्वचनकालेऽपहृत इति पुनः प्रवर्तयितव्यः, तस्यां च दशायामनेकाच्त्वाद्यणा बाध्यते । यद्येवम्, 'इयेष, उवोष' इति इषेरुषेश्च लिटि तिपि णलि प्रवृत्तस्यापि गुणस्य द्विर्वचनकालेऽपहृतत्वात् कृते द्विर्वचने पुनः प्रवृत्तिः, ततश्चानादिष्टादचः पूर्वत्वेनाभ्यासो दृष्ट इति तस्याभ्यासस्य [17]उवङि कर्तव्ये गुणस्य स्थानिवद्भावादसवर्ण इति प्रतिषेधः स्यात् । असवर्णग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति । अस्ति वचनस्यावकाशः—इयर्त्ति, इयृतः । न ह्येकमुदाहरणम[18]सवर्णग्रहणं प्रयोजयति । यद्येतावत् प्रयोजनं स्यात्, अर्ताविर्त्येव ब्रूयात् । किं तर्ह्युच्यते [19]द्विर्वचने पुनरादेशरूपमेवावतिष्ठत इति, अत्र हि पुनःशब्दात्, अवतिष्ठते इति वचनाच्च पूर्वकृतस्यैवादेशस्योन्मज्जनमेवोक्तं प्रतीयत [20]इति ? [21]नायमर्थः, अपि तु कृते द्विर्वचने स्थानिरूपं नावतिष्ठते, यत् प्राप्तं तद्भवतीत्येवम्परमेतत् ।

आल्लोप इत्यादि । उपलक्षणमेतत् । '[22]ततुरिः, पपुरिः' इत्यादौ 'ॠत इद्धातोः' (७.१.१००), 'उदोष्ठ्यपूर्वस्य' (७.१.१०२), '[23]बहुलं छन्दसि' (७.१.१०३) इति इत्वोत्वयोरपि स्थानिवत्त्वं भवति ।

---

1. ग्रहण इति 2. भविष्यति 3. न इत्यधिकम् 4. तदादिविधेरेव सम्भवः 5. तदादिरिति 6. उच्यते नास्ति 7. चक्रतुरित्यादौ चातुसोर्द्विर्वचनं प्रति निमित्तत्वं नाज्मात्रस्य । नैष दोषः, अतुसोर्द्विर्वचननिमित्तत्वेनाश्रयणेऽपि अचि 8. पपुरित्यत्र 9. तौ इत्यधिकम् 10. यद्वा 11. च इत्यधिकम् 12. यथा इत्यधिकम् 13. भवद् नास्ति 14. देध्मीयते इत्यधिकम् 15. स्वं रूपमापद्यते 16. तु इत्यधिकम् 17. असवर्ण इतीयङि 18. असवर्णग्रहणं 19. कृते इत्यधिकम् 20. इति नास्ति 21. नात्र पूर्वकृत एव आदेशो भवतीत्ययमर्थः 22. ततिरिः 23. बहुलं छन्दसि नास्ति

'आटिटत्' इति अटतेर्ण्यन्ताल्लुङि चङि 'अजादेर्द्वितीयस्य' (६.१.२) इति टिशब्दस्य द्विर्वचनम् 'आङजादीनाम्' (६.४.७२)। 'निनाय' इत्यादि। 'णलुत्तमो वा' (७.१.९१) इति यदा णित्वं नास्ति तदा गुणः, णित्त्वपक्षे वृद्धिः।

'नेनॅलोलो इति द्विर्वचनम्' इति। गुणवृद्धयोस्तु [1]स्थानिवद्भावे विशेषाभावान्नोक्तः।

'जग्ले मम्ले' इति। भावे लिट्, अनैमित्तिकमात्वम्, शिति तु प्रतिषेध इत्यात्वस्य स्थानिवत्त्वं न भवति। 'श्रवणम्' इत्यादि। यदि कालो नावधार्येत, तदोत्तरकालमपि स्थानिरूपं प्रसज्येत, ततश्चाकारस्य श्रवणे सति परेण सह 'वृद्धिरेचि' (६.१.८८) इति वृद्धिः स्यात्। इह 'अधिजगे' इति 'गाङ् लिटि' (२.४.४९) इति [2]द्विलकारनिर्देशे लकारादौ लिटि गाङादेशविधानादज्निमित्तत्वाभावात् स्थानिवत्त्वाभावः॥

## ६०. अदर्शनं लोपः।

[3]इह दर्शनं ज्ञानमुपलब्धिः। तच्च शब्दानुशासनप्रस्तावाच्छब्दविषयं सच्छ्रवणं भवतीत्याह—'अश्रवणम्' इति। श्रवणं च [4]श्रोतृव्यापारः, तन्निषेधे 'लोपो व्योर्वलि' (६.१.६६) इत्यस्य वकारयकारौ वल्परौ न श्रोतव्याविति स्यात्। ततश्च प्रयोक्तृव्यापार [5]उच्चारणमनिषिद्धं स्यात्। असति[6] श्रवणे उच्चारणमनर्थकमेव स्यादिति श्रवणनिषेधे तद्धेतुभूतमुच्चारणमेव निषिद्धं भवतीत्याह—'अनुच्चारणम्' इति। 'लोपो व्योर्वलि' (६.१.६६) [7]इत्यस्य कोऽर्थः? वकारयकारौ वल्परौ नोच्चारयितव्याविति। अनेनापि प्रकारेणास्मिन्विषये तयोरभाव [8]एव [9]व्याख्यापितो भवति, न हि विद्यमानयोरनुच्चारणमुपपद्यत इत्याह—'अभावः' इति। स्वाभाविक एवाभाव इत्यर्थः। 'विनाशः' इति। कार्यशब्दर्शनं एतत्। 'अनर्थान्तरम्' इति। शब्दविषयाणामेषामर्थो न भिद्यत इत्यर्थः। 'स्वं रूपम्' इति वचनात् अदर्शनशब्दस्य सञ्ज्ञायां लोपप्रदेशेषु [10]अदर्शनशब्द [11]एवादेशः स्यादित्यत आह—'एतैः शब्दैः' इति। एतच्च 'न वेति विभाषा' (१.१.४४) इत्यत इतिकरणानुवृत्तेर्लभ्यते। अथ वा महती सञ्ज्ञा क्रियते, अन्वर्था यथा विज्ञायेत, 'लोपनं लोपः' [12]इति। न [13]चादर्शनशब्दो लोपनक्रिया भवति। यद्येवम्, प्रदेशेष्वेवा[14]र्थग्रहणमस्तु, किं सञ्ज्ञया? तन्न। असति सञ्ज्ञाकरणे 'स्वं रूपम्' इति वचनात् प्रदेशेषु लोपशब्द एवादेशः स्यात्। सति त्वशब्दसञ्ज्ञेति निषेधान्न स्वरूपग्रहणं भवति। 'न शब्दस्य' इति। अर्थसिद्धमप्येतद्विस्पष्टार्थं पुनरुक्तम्। ननु विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति, सतोऽदर्शनस्य सञ्ज्ञा, सञ्ज्ञया चादर्शनं भाव्यत इति? तन्न। न हि लोपविधानात् प्रागसदेवादर्शनं वचनेन भाव्यते, अनित्यत्वप्रसङ्गात्, किं तर्हि सदेवादर्शनं साधुत्वेनान्वाख्यायते। यद्येवम्, सर्वस्य स्वविषयादन्यत्र स्वभावतोऽदर्शनमस्तीति लोपसञ्ज्ञा स्यात्। ततश्च 'दधि, मधु' इति णिचोऽदर्शनस्य लोपसञ्ज्ञायां प्रत्ययलक्षणेन वृद्धिः स्यात्। [15]अङ्गस्य वृद्धिः, अङ्गसञ्ज्ञा च विधानप्रतिबद्धा। क्विपस्तर्ह्यदर्शनस्य लोपसञ्ज्ञायां तुक् प्राप्नोति, तत्राह—'प्रसक्तस्य' इति। एवं मन्यते—'स्थाने' इति वर्तते, स्थानं च प्रसङ्गः, तेन प्रसङ्गे यददर्शनं तस्य [16]लोपसञ्ज्ञा, न च दधीत्यत्र क्विपः केनचित् प्रसङ्गोऽस्ति[17]। एवमपि ग्रामणीरित्यत्र कर्मधातुकर्तृसन्निधानात् अस्ति अणः प्रसङ्ग इति तददर्शनस्य सञ्ज्ञायां वृद्धिः स्यात्। योऽत्राणः प्रसङ्गः [18]क्विपा सोऽपह्रियते। सामान्यशास्त्रं हि [19]विशेषसन्निधौ तद्व्यतिरिक्त एव विषये प्रतीतिं जनयति। तेन 'सत्सूद्विष' (३.२.६१) इत्यस्य सन्निधौ 'कर्मण्यण्' (३.२.१) इत्यनेन नयतेरण् भवतीति बुद्धिरेव न जन्यते॥

## ६१. प्रत्ययस्य लुक्श्लुलुपः।

'अदर्शनम्' इति सम्बन्धात् 'प्रत्ययस्य' इति कर्मणि षष्ठी। यदि प्रत्ययादर्शनस्य लुगादिसञ्ज्ञासङ्करः प्राप्नोति, विधानदशायां यया कयाचन सञ्ज्ञया भावितस्य प्रत्ययादर्शनस्या[20]नुवादप्रदेशेषु यत्किञ्चनसञ्ज्ञोच्चारणेऽपि[21] ग्रहण-

1. स्थानिवद्भावो 2. द्विलकारकनिर्देशेन 3. अदर्शनमज्ञानमनुपलक्ष्यता 4. श्रोत्रव्यापारः 5. उच्चारणं न निषिद्धं 6. च इत्यधिकम् 7. अस्य नास्ति 8. एव नास्ति 9. ख्यापितो 10. अदर्शनशब्द एव नास्ति 11. स आदेशः 12. इति नास्ति 13. चादर्शनं लोपक्रिया भवति 14. अन्वर्थग्रहणमस्तु 15. न इत्यधिकम् 16. लोप नास्ति 17. इति इत्यधिकम् 18. क्विपाऽसावपह्रियते 19. विशेषशास्त्रसन्निधौ 20. अनुवाद नास्ति 21. अपि नास्ति।

प्रसङ्गः, ततश्च, अत्तीति [1]लुक्सञ्ज्ञाया भावितस्यापि शपोऽदर्शनस्य 'श्लौ' इत्यत्र ग्रहणात् द्विर्वचनं स्यात्, [2]जुहोतीति 'उतो वृद्धिर्लुकि हलि' (७.३.८९) इति वृद्धिः स्यात्, हरीतक्या फलानि 'लुक्तद्धितलुकि' (१.२.४९) इति ङीषो लुक् स्यात्, 'लवणाल्लुक्' (४.४.२४) लवणः सूपः, युक्तवद्भावः स्यात्; तथा लोपसञ्ज्ञया भावितस्यापि [3]लुक्सञ्ज्ञाया 'अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणी' इति च्वेर्लोपे 'लुक् तद्धितलुकि' (१.२.४९) इति लुक् स्यादित्यत आह— 'अनेकसञ्ज्ञाविधानाच्च' इत्यादि । यद्यतद्भावितस्याप्येताः[4] सञ्ज्ञाः स्युः, [5]नैकसञ्ज्ञाकरणमनर्थकं स्यात् । एकामेव सञ्ज्ञां कृत्वा तयैव सर्वाणि कार्याणि विधीयेरन् ! तस्मादनेकसञ्ज्ञाविधानाद्यया सञ्ज्ञया यददर्शनं भावितं तस्यैव सा सञ्ज्ञेति [6]सञ्ज्ञानां सङ्करो न भवति । यद्येवम्, [7]विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति । न चात्र नित्यतया परिहार. सम्भवति, अदर्शनमेव हि नित्यम्, न [8]पुनर्लुगादिसञ्ज्ञया भावितम् । तत्र यदि तया सञ्ज्ञया भावित[9]स्याददर्शनस्य सा सञ्ज्ञेति[10], व्यक्तमितरेतराश्रयो भवति, तत्राह—'विधिप्रदेशेषु च' इति । अदिप्रभृतिभ्यः परस्य शपस्तद्भवति, यस्य भूतस्य लुक्सञ्ज्ञा भविष्यतीत्येवं भाविन्याः सञ्ज्ञाया विज्ञानान्न भवतीतरेतराश्रयत्वदोषः । लोपसञ्ज्ञात्वदर्शनमात्रस्य विधीयत इति लुगादिसञ्ज्ञाविषयेऽपि[11] भवत्येव । न च लुगादिसञ्ज्ञाभिर्बाधः, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशात् । अत एव 'न लुमताऽङ्गस्य' (१.१.६३) इति निषेधः । वरणाः' इति । 'अदूरभवश्च' (४.२.७०) इत्यणः 'वरणादिभ्यश्च' (४.२.८२) इति लुप् ।

'प्रत्ययग्रहणं किम्' इति । न तावदप्रत्ययनिवृत्त्यर्थम्, लुग्, अणिञोः, तद्राजस्य, यञञोश्च, शपः, यङः, सिचः, लेः, सुपः इति सर्वत्र प्रत्ययस्यैव निर्देशात्, अनुवादेषु च तद्भावितस्यैव [12]तस्य [13]सम्प्रत्ययात् । 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इत्यत्र योगो विभज्यते—'गोरुपसर्जनस्य स्त्रियाः' इति, [14]'लुक्तद्धितलुकि' (१.२.४९) [15]इति स्त्रिया इत्येव, गोरिति निवृत्तम्, इतरथा कृतेऽपि प्रत्ययग्रहणे 'गमेर्डोः (उ. २२५) लुक् स्यात्, 'कंसीयपरशव्ययोर्यञञौ लुक् च' (४.३.१६८) इत्यत्र ङ्याप्प्रातिपदिकाधिकारात् कंसीयपरशव्ययोः प्रातिपदिकात् परस्य भागस्य लुग् विज्ञास्यते[16], न प्रकृतिभागस्य, अन्यथा कृतेऽपि प्रत्ययग्रहणे कमेः सः कंसः, परान् शृणाति परशुरिति उकारसकारयोर्लुक् स्यात्, अतोऽप्रत्ययनिवृत्त्यर्थं तावत् प्रत्ययग्रहणं न कर्तव्यम् । यत्र तर्हि न कश्चिन्निर्दिश्यते, 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' (२.४.६५) इत्यत्र प्रत्ययप्रतिपत्त्यर्थं प्रत्ययग्रहणं [17]भविष्यति । [18]नैवम् । तत्रापि 'यस्कादिभ्यो गोत्रे' (२.४.६३) इत्यतो गोत्रग्रहणानुवृत्तेरत्र्यादिभ्यो गोत्रे यो विहितस्तस्य लुक्, तथा 'जनपदे लुप्' (४.२.८१) इत्यत्र '[19]ङ्याप्प्रातिपदिकात् प्रत्ययः' इत्यनुवृत्तेः जनपदे [20]विहितस्य [21]चातुरर्थिकप्रत्ययस्यैव लुप् । 'लवणाल्लुक्' (४.४.२४) इत्यादिष्वपि प्रकृतस्य अतः प्रत्ययस्य प्रतिपत्त्यर्थमपि न कर्तव्यं भवति । सर्वत्र चात्र्यादिभ्यः प्रातिपदिकाल्लवणादिति पञ्चम्यधिकारेण सन्निहितस्य षष्ठीं प्रकल्पयिष्यति । सा चानियतयोगत्वात् स्थानषष्ठी भविष्यतीति स्थानषष्ठीप्रतिपत्त्यर्थमपि [22]प्रत्ययग्रहणं न कर्तव्यं भवति ।

एवं तर्हि सर्वादेशार्थं प्रत्ययग्रहणम्, असति तस्मिन् 'यञञोश्च' (२.४.६४), 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इत्यादिषु यत्रानेकाल् प्रत्ययः, तत्रालोऽन्त्यस्य स्यात्, 'लवणाल्लुक्' (४.४.२४) इत्यादौ तु आदेः स्यात्, सति [23]तु प्रत्ययग्रहणे तत्सामर्थ्यात् सर्वादेशो लुगादिर्भवति ? ज्ञापकात् सिद्धम्, यदयम् 'घोर्लोपो लेटि वा' (७.३.७०) इति लोपे प्रकृते 'लुग्वा दुहदिह' (७.३.७३) इति लुकं शास्ति, तज् ज्ञापयति 'लुगादयः सर्वादेशाः' (म. भा. १. १६७) इति । 'अलोऽन्त्यस्य' (१.१.५२) ह्यदर्शनं प्रकृतेन लोपेनापि सिद्धम् । विपर्ययस्तु न भवति,[24] 'घोर्लोपः' (७.३.७०) इत्यत्र

1. लुक्सञ्ज्ञया 2. जुहोत्यत्रेति 3. लुक्सञ्ज्ञायां 4. अपि नास्ति 5. अनेक 6. सञ्ज्ञानां सङ्करो न भवति नास्ति 7. विधिप्रदेशेषु नास्ति 8. पुनः नास्ति 9. अदर्शनस्य नास्ति 10. इति नास्ति 11. अपि नास्ति 12. तस्य नास्ति 13. संप्रत्ययः स्यात् 14. ततो इत्यधिकम् 15. इति नास्ति 16. विज्ञायते 17. भविष्यति नास्ति 18. नैवम् नास्ति 19. ङ्याप्प्रातिपदिकाधिकारात्प्रत्ययः 20. विहितस्यैव लुक् 21. चातुरर्थिकप्रत्ययस्यैव लुप् नास्ति 22. प्रत्ययग्रहणं नास्ति 23. तु नास्ति 24. कुतः इत्यधिकम् ।

तावदसञ्जातविरोधित्वात् 'अलोऽन्त्यस्य' (१.१.५२) इति प्रवर्तते, पश्चाल्लुग्ग्रहणं तस्यैव सर्वादेशतां गमयति। सामान्येन च ज्ञापकं समर्थयिष्यते, 'लोपव्यतिरिक्तमदर्शनं सर्वादेशः' इति। अतः सर्वादेशार्थमपि प्रत्ययग्रहणं कर्तव्यमिति प्रश्नः।

इतरोऽपि विदिताभिप्रायः परिहरति—'अगस्तयः कुण्डिनाः' इति। असति प्रत्ययग्रहणे 'आगस्त्यकौण्डिन्ययोः' (२.४.७०) इत्यत्र [1]'लुग्', 'अणिञोः' (४.१.७८) इत्यतो लुग्ग्रहणमनुवर्तते वा न वा? अनुवृत्तौ स्थानिनौ द्वौ, लुका सह त्रय आदेशा इति वैषम्याद्सति यथासङ्ख्ये एकैकस्य त्रय आदेशाः पर्यायेण स्युः। ततश्चागस्तयोऽपि कुण्डिनाः स्युः, कुण्डिनाश्चागस्तयः स्युः। लुक् च क्रियमाणो यदि ज्ञापकात् सर्वादेशः, तत उभयत्रापि विभक्तिमात्रश्रवणप्रसङ्गः।

अथ निवृत्तम्, ततो 'अगस्तयः, कुण्डिनाः' इत्यत्र न कश्चिद्दोषः। अगस्तीनां छात्राः आगस्तीया इत्यत्र प्राग्दीव्यतीयेऽजादौ (४.१.८३) प्रत्यये विवक्षितेऽप्यगस्त्यादेशस्य निषेधाभावात् प्रवृत्तावृद्धत्वाच्छो न स्यात्, प्रत्ययग्रहणे [2]तु सति [3]लुग्ग्रहणानुवृत्त्याऽऽगस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुग् न [4]भवति। [5]परिशिष्टयोर्भागयोर्यथासङ्ख्यमगस्तिकुण्डिनचावित्यर्थः सम्पद्यते, तेनागस्तयः, कुण्डिना इति च सिध्यति। प्राग्दीव्यतीये च विवक्षिते 'गोत्रेऽलुगचि' (४.१.८९) इति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टत्वादगस्त्यादेशेऽपि निवृत्ते आगस्त्यशब्दस्य वृद्धत्वाच्छे कृते 'सूर्यतिष्यागस्त्य' (६.४.१४९) इति यलोपे चागस्तीया इति सिध्यति। कौण्डिन्ये च नास्ति विशेषः, निवृत्तेऽपि कुण्डिनजादेशे कौण्डिन्यशब्दादपि 'कण्वादिभ्यो गोत्रे' (४.२.१११) इति अणि कृते 'आपत्यस्य' (६.४.१५१) इति यलोपे कौण्डिना इत्येव भवितव्यम्। अत आगस्त्यकौण्डिन्ययोरित्यत्रावश्यमनुवर्त्यं लुग्ग्रहणम्। ततश्च पूर्वोक्तदोषपरिहाराय प्रत्ययग्रहणमपि कर्तव्यम्।

वयं तु ब्रूमः—'सर्वादेशार्थमपि प्रत्ययग्रहणं सामान्येन ज्ञापकम[6]गतिकगति' इति॥

## ६२. प्रत्ययलोपे प्रत्ययलक्षणम।

सूत्रारम्भस्य प्रयोजनमाह—'प्रत्ययनिमित्तम्' इत्यादि। लक्षणशब्दोऽयमस्ति भावसाधनः प्रादुर्भाववचनः अस्ति च करणसाधनो निमित्तवचनः। तत्राद्यस्य ग्रहणे प्रत्ययलोपे सति प्रत्ययस्य प्रादुर्भावो [7]भवतीत्यर्थः स्यात्। तत्र लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावविधौ लोपविधिर्व्यर्थः स्यात्। ननु [8]च यः प्रत्ययस्यैव लोपः 'णेरनिटि' (६.४.५१)[9] इत्यादि, तस्य[10] वैयर्थ्यं नामास्तु, यस्तु 'टेः' (६.४.१४३) इत्यादिना सामान्येन विहितः, स यदा प्रत्ययस्य भवति 'भिक्षुमाचष्टे भिक्षयति' इति, तदा [11]तस्य पुनः प्रादुर्भावेऽपि न तस्य वैयर्थ्यम्, [12]उप्रत्यये चरितार्थत्वात्। एवं तर्हि लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भाव इष्टे, न [13]प्रत्ययस्य लोप इति वक्तव्यम्—सामान्यविहितो लोपः प्रत्ययस्य न भवतीति।

अथ प्रत्ययान्तरस्य लुप्तप्रत्ययनिमित्तकस्य प्रादुर्भावो [14]विधीयते, यथा 'ग्रामणीः' इति [15]क्विपो लोपे तन्निमित्तकस्य सोर्विधिः। एवमपि 'प्रत्ययलोपे प्रत्यय' इत्येव वक्तव्यम्—प्रत्ययस्य लोपे न[16] तन्निमित्तकः प्रत्ययो भवतीति। अतो निमित्तपर्यायेण लक्षणशब्देन बहुव्रीहिः, कार्यं चान्यपदार्थ इत्याह—'प्रत्ययहेतुकं कार्यम्' इति। प्रत्यासत्तेश्च यः प्रत्ययो यस्य कार्यस्य निमित्तं तस्य लोपेऽपि तद्भवतीत्यर्थः।

'पदसञ्ज्ञा भवति' इति। ननु च स्थानिवद्भावेनापि सिद्धा पदसञ्ज्ञा, इह तर्हि 'ताता पिण्डानाम्' (ऋ. १.१६२.१९) इति तच्छब्दात् परस्य जसः शिः, 'शेश्छन्दसि बहुलम्' (६.१.७०) इति लोपे 'नपुंसकस्य झलचः'

1. लुगणिञोः इत्यतो नास्ति 2. तु नास्ति 3. तु इत्यधिकम् 4. भविष्यति 5. परिशिष्टयोः 6. अगतिकागतिरिति 7. भवतीत्ययमर्थः 8. च नास्ति 9. इत्यादिः 10. तस्यैव 11. तस्य नास्ति 12. अप्रत्यये 13. प्रत्ययलोप 14. विधीयेत 15. क्विलोपे 16. न नास्ति।

(७.१.७२) इति नुम्, 'सर्वनामस्थाने' (६.४.८) इति दीर्घश्च भवति. 'अनड्वान्'—सोर्लोपे [1]नुम् भवति, 'अधोक्'—अड्गुणौ भवतः, 'न्यमार्ट्'—मृजेर्वृद्धिः, उन्देर्लङि तिलोपे श्नमाटौ भवतः, 'श्नान्नलोपः'—'औनत्, अग्निचित्' [2]क्विपो लोपे तुग् भवति। एतान्यपि स्थानिवद्भावेनैव [3]सिध्यन्ति, अल्विधित्वात्, सर्वत्रैवाल्मात्रप्रत्ययः, तदाश्रयो विधिरल्विधिरिति। नैतत् सुष्ठूच्यते, उक्तं हि 'कार्यापेक्षमल्विधित्वं नोदाहरणापेक्षम्' इति। नुमादिविधौ च सर्वत्र शास्त्रे यद्रूपमाश्रीयते—सर्वनामस्थाने सार्वधातुके पिति कृति सुप्तिङन्तमिति, साधारणं तदलश्चानलश्च। केवलं 'ताता पिण्डानाम्' (ऋ १.१६२.१९) इत्याद्युदाहरणेऽर्थादलात्मकं [4]तदित्येतावत्।

इह तर्हि 'अतृणेद्'[5]—'[6]तृहि हिंसायाम् (धा. पा. १४५५), लङ्, तिप्, श्नम्, 'इतश्च' (३.४.१००) इतीकारलोपः, तकारस्य हल्ङ्यादिलोपे हलादौ पिति सार्वधातुके विधीयमानोऽल्विधिः 'तृणह इम्' (७.३.९२) [7]अस्माद्भवति, तथा आशीरित्यत्र 'शास इदङ्हलोः' (६.४.३४) इतीत्वं लुप्तेऽपि क्विपि[8] भवति। ननु च 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' (व्या. प. ९६), नैवंविधं वचनमस्ति। द्वितीयस्य प्रत्ययग्रहणस्य प्रयोजनमिदं पठ्यते, अत्र हि 'प्रत्ययलोपे तल्लक्षणम्' इत्येव[9] सिद्धे पुनः प्रत्ययग्रहणाद्यत्र प्रत्ययस्यैवासाधारणं रूपं निमित्तत्वेनाश्रीयते सुपि सार्वधातुके कृति सुप्तिङन्तमिति तदेव यथा स्यात्। तेन 'गोहितम्' इत्यवादेशो न भवति। न हि 'एचोऽयवायावः' (६.१.७८) इत्यत्र प्रत्ययस्यासाधारणं किञ्चिद्रूपमुपात्तम्, किन्त्वचीति यदुपात्तं तद् गवे हितमित्य[10]स्मिन्नुदाहरणे अर्थात् प्रत्ययात्मकमित्येतावत्। इत्वेमागमयोस्तु हलादौ ङिति हलादौ पिति सार्वधातुक इति प्रत्यय एव प्राधान्येन निमित्तम्, हल् तु तद्विशेषणमिति [11]नेमौ वर्णाश्रयौ। तस्मादल्विध्यर्थमिदमारब्धव्यम्।

यद्येवं, भसञ्ज्ञाङीप्ष्फेषु दोषः। भसञ्ज्ञायां तावत्—'राज्ञः पुरुषो राजपुरुषः' इति श्रूयमाणे प्रत्यये यथा सञ्ज्ञा भवति, एवं लुप्तेऽपि स्यात्। ततश्च तथा पद[12]सञ्ज्ञाया बाधितत्वात् नलोपो न स्यात्। [13]ननु च[14] द्वे अत्र पदसञ्ज्ञे—स्वादाविति [15]च, सुप्तिङन्तमिति [16]च। तत्र या स्वादौ पदमिति पदसञ्ज्ञा, साऽपवादभूतया भसञ्ज्ञया बाध्यते, या तु 'सुप्तिङन्तम्' (१.४.१४) इति पदसञ्ज्ञा, सा न बाधनीया, यथा श्रूयमाणे प्रत्यये 'राज्ञः' इति समुदायस्य। नैतदेवम् श्रूयमाणे प्रत्यये ततः [17]पूर्वस्य भागस्य भसञ्ज्ञा, समुदायस्य तु विसर्जनीयान्तस्य पदसञ्ज्ञेति युक्तम्, [18]विभिन्नावधिकया भसञ्ज्ञया पदसञ्ज्ञा न बाध्यत इति। [19]लुप्ते तु प्रत्यये [20]यस्यैवावधेः स्वादौ पदमिति पदसञ्ज्ञा, सुबन्तं [21]पदमित्यपि तस्यैवावधेः पदसञ्ज्ञा। तत्रैवावधौ भसञ्ज्ञा भवन्ती [22]यथाऽपवादत्वात् स्वादिलक्षणां पदसञ्ज्ञां बाधते, तथा सुबन्तलक्षणामपि परत्वाद् बाधते।

एवं तर्हि 'न लुमताऽङ्गस्य' (१.१.६३) इति प्रतिषेधात् भसञ्ज्ञा न भविष्यति, यचीति सप्तमीनिर्देशात्। ततः पूर्वस्य भागस्य [23]वस्तुतोऽस्य प्रवर्तमाना भसञ्ज्ञाऽप्यङ्गकार्यमेव। एवं [24]च बुद्ध्वा 'न ङिसम्बुद्ध्योः' (८.२.८) इत्यत्र ङौ नलोपः प्रतिषिध्यते, यदि प्रत्ययलक्षणेन भसञ्ज्ञा स्यात्, अपवादत्वादेव 'आर्द्रे चर्मन्' इति नलोपो न भविष्यतीति किं तेन प्रतिषेधेन ? इह तर्हि चित्रायां जातो 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम्' (४.३.३४.४५०) इत्यणो लुकि 'लुक्तद्धितलुकि' (१.२.४९) इति टापि लुप्ते, चित्र इति स्थिते प्रत्ययलक्षणेनाणन्तत्वात् ङीप् प्राप्नोति। नैष दोषः। 'टिड्ढाणञ्' (४.१.१५) इत्यत्र 'अतः' इत्यनुवर्तते, तत्र चाणाकारो विशेष्यते, अण्योऽकार इति, ततश्चाकार एव ङीपो निमित्तम्, अण् तु तद्विशेषणमिति प्रत्ययलक्षणत्वाभावात् ङीबभावः।

---

1. आम्भवति 2. क्विलोपे 3. सिद्धानि न 4. तदित्येव तत् 5. इति तिपो हलादिलोपे इत्यधिकम् 6. "तृहि हिंसायाम् 'हल्ङ्यादिलोपे' नास्ति 7. अस्माद्वचनाद्भवति 8. हौ लिति इत्यधिकम् 9. एव नास्ति 10. अस्मिन् नास्ति 11. न त्विमौ 12. सञ्ज्ञा 13. ननु च नास्ति 14. न इत्यधिकम् 15. च नास्ति 16. च नास्ति 17. पूर्वभागस्य 18. भिन्नावधिकतया 19. लुप्तेऽपि 20. तस्यैवावधेः 21. पदं नास्ति 22. यथा परत्वात् 23. वस्तुतोऽङ्गस्य 24. च नास्ति।

इह तर्हि वतण्डस्यापत्यं स्त्री 'वतण्डाच्च' (४.१.१०८) [1]इत्यञः 'लुक् स्त्रियाम्' (४.१.१०९) इति लुकि वतण्डी, शार्ङ्गरवादि[2]लक्षणं ङीनं बाधित्वा 'प्राचां ष्फ तद्धितः सर्वत्र' (४.१.१७) इति सर्वत्रग्रहणस्य पूर्वत्रापकर्षात् प्राचां मतेन यञन्तलक्षणः ष्फः प्राप्नोति, यथा[3] 'आवट्याच्च' (४.१.७५) आपं वा बाधित्वा ष्फ एव भवतीति[4] ? नैष दोषः। अत्रापि यत्राकारो विशेष्यते, यञोऽकार [5]इति, यञवयवो योऽकारस्तदन्तादिति । तेनात्राप्यकार एव निमित्तम्, तद्विशेषणं तु यञिति ष्फो न भवति। अयं तर्हि दोषः 'परिवीः'इति, परिपूर्वाद् व्येञः क्विपो लोपे यजादित्वात् सम्प्रसारणे पूर्वत्वे च तुक् प्राप्नोति, 'हलः' (६.४.२) इति दीर्घश्च, तत्र विप्रतिषेधेन दीर्घ इष्यते, स विप्रतिषेधो न सिध्यति। किङ्कारणम्? इह प्रत्ययलोपे सर्वाणि [6]प्रत्ययाश्रयाणि कार्याणि [7]पर्यवसन्नानि, तान्यनेन प्रत्युत्थाप्यन्ते, अनेनैव तुक्. अनेनैव दीर्घः, तदेकयोगलक्षणयोरयुक्तो विप्रतिषेधः ? नैष दोषः, अवस्थिते प्रत्यये तन्निबन्धनं [8]यत्कार्यं भवत्येव तदेवानेन [9]लुप्ते तस्मिन् प्रत्युत्थाप्यते, न तु यस्य प्राप्तिमात्रं तदपि। 'परिवीयेत्यादौ'[10] श्रूयमाणे प्रत्यये दीर्घ एव[11] परत्वाद्भवति, न तुक्, ततश्चात्रापि यदि [12]क्विबेवास्थास्यत्, दीर्घ एवाभविष्यदिति स एवानेन प्रत्युत्थाप्यते। तदेवमारब्धव्यं सूत्रं न कश्चिद्दोष इति स्थितम्।

अत्रोच्यते—[13]यदुक्तं 'तृणह इम्' (७.३.९२) [14]हलाश्रय इति, [15]नायं हलाश्रय, हलीति तत्र निर्वर्तिष्यते यदि निवर्तते, तृणहानि—अत्रापि प्राप्नोति ? [16]'नाभ्यस्तस्याचि'(७.३.८७)इत्यतो नाचीत्यनुवर्तते, ततश्चानल्विधित्वात् स्थानिवद्भावेनैव सिद्ध इमागमः। आशीरित्यत्रापि 'आशासः क्वावुपसङ्ख्यानम्' (६.४.३४.७८१) इत्यस्माद्वचनात् सिद्धमित्वम्। आरब्धेऽपि खल्वस्मिंस्तदवश्यं वक्तव्यम्। यदि तावत् 'शास इदङ्हलोः' (६.४.३४) इत्यत्र शासिमात्रस्य ग्रहणम्, ततो नियमार्थं 'आशासः क्वावेव यथा स्यात्[17]आशास्त इत्यादौ मा भूत्' इति। अथ यस्माच्छासेरङ् विहितस्तस्य ग्रहणम्, ततो यथाऽऽशास्त इत्यादौ न भवति तथा क्विप्यपि न स्यादिति विध्यर्थमिदम्। इह बिदस्यापत्यानि बहूनि 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४.१.१०४) बिदाः, बिदानामपत्यं युवा, 'अत इञ्' (४.१.९५) तस्य 'ण्यक्षत्रियार्षञितः' (२.४.५७) इति लुकि कृते, अञो गोत्रबहुत्व उत्पन्नस्य लुकि प्राप्ते 'गोत्रेऽलुगचि' (४.१.८९) इति प्रतिषेध इष्यते [18]सोऽञावाविति लुप्तोऽप्यस्माद्वचनाद् भवति ? एतदपि नास्ति प्रयोजनम्, अचीति विषयसप्तमी,[19] [20]तेन [21]गोत्र इति विवक्षितेऽनुत्पन्न एव लुकि प्रतिषिद्धे पश्चादिञो लुगिति सिद्धमिष्टम्। तदेवमल्विधेः [22]कस्यचिद् दर्शनात् स्थानिवद्भावेनैव सिद्धमिति नार्थोऽनेन।

एवं तर्हि नियमार्थमिदम् 'प्रत्ययलोपे प्रत्ययलक्षणमेव यथा स्यात् प्रत्ययाप्रत्ययलक्षणं मा भूत्' इति। एतदुक्तं भवति, यस्मिन् कार्ये विधीयमाने प्रत्ययस्यैवासाधारणं किञ्चिद्रूपं निमित्तत्वेनाश्रीयते, तदेव प्रत्ययलोपेऽपि भवति, न पुनः प्रत्ययाप्रत्ययसाधारणं रूपमाश्रित्य यद्विधीयते तदिति। तेन शोभना दृषदो यस्य सुदृषदिति 'सोर्मनसी अलोमोषसी' (६.२.११७) इत्युत्तरपदाद्युदात्तत्वं न भवति। अन्यथा लुप्तेऽपि जसि स्थानिवद्भावेनासन्तमुत्तरपदमिति स्यात् प्रसङ्गः। [23]प्रत्ययलक्षणं तु न भवति, [24]'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति' (व्या. प. १२९) इत्यस्मात् तस्य ग्रहणात्।

वृत्तिकारेण तु 'नियमार्थमप्येतत् प्रत्ययलोपे सर्वत्र प्रवर्तते' इति मत्वोक्तं पदसञ्ज्ञा भवतीति। 'आघ्नीय' इति 'आङो यमहनः' (१.३.२८)। 'संग्मीय' इति। 'समो गम्यृच्छि' (१.३.२९) इत्यात्मनेपदम्[25], 'इटोऽत्' (३.४.१०६) 'बहुलं छन्दसि', (२.४.७३) इति शपो लुक्, उभयत्र 'गमहन' (६.४.९८) इत्युपधालोपः॥

1. इति यञो 2. लक्षणं नास्ति 3. आवट्यायन इति इत्यधिकम् 4. इति नास्ति 5. इति नास्ति 6. प्रत्ययाश्रयाणि नास्ति 7 पर्यवसितानि 8. यत् नास्ति 9. लुप्तेऽपि 10. च इत्यधिकम् 11. यत् इत्यधिकार 12. एव नास्ति 13. यदुच्यते 14. अलाश्रय 15. नायं हलाश्रयः नास्ति 16. नाभ्यस्ताचीत्यतो 17. आस्त 18. सोऽञादाविति 19. इति इत्यधिकम् 20. तेनेति 21. गोत्र इति नास्ति 22. कस्यचिददर्शनात् 23. प्रत्ययलक्षणे 24. अनिनस्मिन् 25. इट् इत्यधिकम्।

## ६३. न लुमताऽङ्गस्य ।

'लुमता' इति लुशब्दो यस्मिन्नस्ति[1] स[2] लुमान्, लुगादिः सञ्ज्ञाशब्दः । करणे च तृतीया, लोपे च करणत्वम् । 'प्रत्ययलोपे' इत्यनुवृत्तेः लुमता शब्देन प्रत्ययलोपे सति अङ्गस्य प्रत्ययलक्षणं [3]कार्यं न भवति । [4]तत्र च प्रत्यासत्तेर्लुप्तप्रत्ययापेक्षया येनाङ्गसञ्ज्ञा [5]प्रतिलब्धा तस्य [6]तन्निमित्तं कार्यं न भवतीत्यर्थः । एतदेव [7]वस्तुतो दर्शयति—'लुमता लुप्ते प्रत्यये यदङ्गम्' इति । तेनोत्क्रामेत्यत्र 'अतो हेः' (६.४.१०५) इति लुकि कृते परस्मैपदापेक्षया यदङ्गं शबन्तं न तस्य दीर्घत्वम्, यस्य च दीर्घत्वं न तत् परस्मैपदापेक्षयाऽङ्गम्, किं तर्हि ? शबपेक्षयेति निषेधाभावात् प्रत्ययलक्षणेन 'क्रमः परस्मैपदेषु' (७.३.७६) इति दीर्घो भवति, तथा 'गमेरिट् परस्मैपदेषु' (७.२.५८) 'न वृद्भ्यश्चतुर्भ्यः' (७.२.५९) इटो विधिप्रतिषेधौ जिगमिष विवृत्सेति परस्मैपदलुक्यपि भवतः । लुमता लुप्ते परस्मैपदे यदङ्गं सनन्तं न तस्येटो [8]विधिनिषेधौ, किं तर्हि ? सकारादेः प्रत्ययस्येति । इदं चान्यदस्मिन् ग्रन्थे दर्शितम्—नाङ्गस्येत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यते 'न लुमता लुप्ते प्रत्यये [9]आङ्गं भवति' (म. भा. १.१६६) इति, किं तर्हि ? लुमता लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं च सर्वं प्रतिषिध्यते इति । तेन गर्गाः विदाः—यत्रत्रोः' (२.६.६४) लुक्, उष्ट्रग्रीवः—'इवे प्रतिकृतौ' (५.३.९६) इति कनः 'देवपथादिभ्यश्च' (५.३.१००) इति लुप्, पन्थाः [10]प्रियोऽस्य पथिप्रियः—'सुपो धातु' (२.४.७१) इति सर्वनामस्थानस्य लुक् । अत्र 'ञ्नित्यादिर्नित्यम्' (६ १.१९७), 'पथिमथोः सर्वनामस्थाने' (६.१.१९९) इति चाद्युदात्तस्यानाङ्गस्यापि निषेधो [11]भवति । [12]सप्तमीनिर्देशाद्धयेतद्वस्तुतोऽङ्गस्य कार्यम् । तथा 'अहर्ददाति'—'रोः सुपि' (८.३.१६) इति रत्वप्रतिषेधो न भवति । यद्यनाङ्गमपि प्रतिषिध्यते, 'अवधि भवता दस्युः, अगायि भवता ग्रामः, अध्यगायि भवताऽनुवाकः', लुङि परतोऽङ्गस्य विधीयमाना हनिणिङादेशाः 'चिणो लुक्' (६.४.१०४) इति लुङो लुकि न स्युः । न लुङि हनिणिङादेशा विधीयन्ते. किं तर्हि ? लुङि यदार्धधातुकं तत्र । ततश्च लुङि यदङ्गं[13] चिणन्तं न तस्य हनिणिङादेशाः, यस्य च ते न तल्लुक्यङ्गमिति निषेधाभावः । इह तर्हि 'मा हि दातां [14]सर्पिरागच्छेत्' इति सिजामन्त्रितयोर्लुकि सति 'आदिः सिचोऽन्यतरस्याम्' (६.१.१८७), 'आमन्त्रितस्य च' (६.१.१९८) इति आद्युदात्तत्वं न स्यात् । नैतदङ्गस्य [15]चिणन्तं कार्यम्, किं तर्हि ? तदन्तस्य, षष्ठीनिर्देशात् । तेन 'पयः साम' इत्यादौ [16]पदसञ्ज्ञा [17]च भविष्यति । ननु यद्यपि तदन्तस्याद्युदात्तत्वं, [18]पदसञ्ज्ञाऽपि, [19]तथा लुप्ते इदानीं प्रत्यये वस्तुतोऽङ्गस्य प्राप्नुत इति भवितव्यं निषेधेन । नात्र लुप्ते प्रत्यये यदङ्गस्य प्राप्तं तन्निषिध्यते, किं तर्हि ? अवस्थितेऽपि[20] प्रत्यये यत्ततः पूर्वस्याङ्गस्य कार्यं तन्निषिध्यते । 'वृक्षा मा [21]हि लाविष्टाम्' इत्यादौ च श्रूयमाणे प्रत्यये तदन्तस्यैव पदसञ्ज्ञा स्वरश्चेति लुप्तेऽपि [22]भविष्यतः । एवं [23]च राज्ञः पुरुष इति श्रूयमाणे ङसि, ततः पूर्वस्य भसञ्ज्ञा न तदन्तस्येति अङ्गकार्यत्वात् लुप्तेऽपि तस्मिन् [24]प्रत्ययलक्षणेन प्राप्ताऽनेन निषिध्यते ।

इह तर्हि अत्रेरपत्यानि 'इतश्चानिञः' (४.१.१२२) इति ठकः 'अत्रिभृगु' (२.४.६५) इति लुकि कृते अत्रय इति तद्धितस्य 'कित.' (६.१.१६५) इत्यन्तोदात्तत्वं स्यात् तदन्तकार्यत्वात् । नैष दोषः । तद्धितस्यैवा[25]न्तोदात्तत्वम्, न तदन्तस्य ।

इह तर्हि सर्वः स्तोमो यस्य सर्वस्तोमः 'सर्वस्य सुपि' (६.१.१९१) इत्याद्युदात्तत्वं न स्यात्, सुपीति सप्तमीनिर्देशात् । कर्तव्योऽत्र यत्नः । यत्नश्च—सर्वस्य सुप इति षष्ठीनिर्देशः, षष्ठीनिर्देशे तु [26]तदन्तकार्यत्वात्

---

1. इति इत्यधिकम् 2. स नास्ति 3. कार्यं नास्ति 4. ततश्च 5. प्रतिबद्धा 6, तन्निबन्धनं 7. वस्तुतो नास्ति 8. विधिप्रतिषेधौ यस्येटो विधिप्रतिषेधौ न तत्परस्मैपदापेक्षयाङ्गं—इत्यधिकम् । 9. आङ्गं भवति—लुमता लु ते प्रत्यये नास्ति 10. प्रियो यस्येति 11, भवतीति 12. हि नास्ति 13. चिणन्त नास्ति 14. आगच्छेत् नास्ति 15. चिणन्तं नास्ति 16. पदसंज्ञावत् 17. च नास्ति 18. पदसञ्ज्ञा च 19. तथापि 20. अपि प्रत्यये नास्ति 21. हि नास्ति 22. भवति 23. च नास्ति 24. प्रत्ययलक्षणप्राप्ता 25. अन्त नास्ति 26. तदन्तस्य कार्यत्वात् ।





[1]सिच्स्वरवत् सिध्यति । ननु[2] द्वयोरपि पक्षयोः 'अभूवन्' प्रत्ययलक्षणेन जुस् प्राप्नोति, 'आतः' (३.४.११०) इति नियमान्न भविष्यति ।

इह तर्हि देवदत्तं याजयाञ्चकार—'आमः' (२.४.८१) इति लुकं बाधित्वा परत्वात् तिवादिषु कृतेषु तेषां लुकि प्रत्ययलक्षणेन तिङन्तत्वादामन्तस्य च निघातः, ततः परस्यानिघातश्च प्राप्नोति, लेरित्यनुवृत्तेर्लावस्थायामे लुग्भविष्यति । इह च देवदत्तो युष्मत्पुत्र इति षष्ठ्यन्तस्य [3]विधीयमानौ [4]वांनावौ 'द्वितीयास्थयोः' इति स्थग्रहणा [5]भवतः । षष्ठीचतुर्थीद्वितीयास्ववस्थानं [6]श्रूयमाणस्यैव सम्भवति ।

इह तर्हि 'परमवाचा, परमगोदुहा, [7]परमलिहा, परमदण्डिना, परमदिवा, परमकुमार्या' इति समासार्था विभक्तिः, तामाश्रित्योत्तरपदस्य पदसञ्ज्ञायां प्राप्तायाम्, 'चोः कुः' (८.२.३०), 'दादेर्धातोर्घः' (८.२.३२), 'हो ढः' (८.२.३१) 'नलोपः प्रातिपदिकान्तस्य' (८.२.७) 'दिव उत्' (६.१.१३१) 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (६.१.१२७) इत्येते विधयः प्राप्नुवन्ति, नैष दोषः । भसञ्ज्ञाविषये तावत् सैव पदसञ्ज्ञां बाधिष्यते । ननु च समुदायस्य या पदसञ्ज्ञा स्वादिष्विति प्राप्ता सा [8]तुल्यावधिकया भसञ्ज्ञया बाध्यताम्, या तूत्तरपदस्य सुबन्तमिति प्राप्ता सा कथं बाध्यते [9]भिन्नावधित्वात् ? एवं तर्हि 'सुप्तिङन्तम्' (१.४.१४) इत्यतः सुबन्तमित्यनुवर्तनीयम्, ततश्चायमर्थो भवति 'यजादावसर्वनामस्थाने परतः पूर्वः समुदायो भसञ्ज्ञो भवति, तत्र च समुदाये यत् सुबन्तं वर्तते तदपि भसञ्ज्ञं भवति यजादावनन्तरे' इति । तत्र च समुदायस्य भसञ्ज्ञा प्रधानशिष्टा, अवयवस्य त्वन्वाचयशिष्टा । यत्र च सुबन्तं पश्यति तत्र तस्याप्नोति तेन राज्ञ इत्यादौ सुबन्ताभावेऽपि भवति । सुबन्तसद्भावे तु तस्य समुदायस्य चे [10]विवेक्तव्यम् । सर्वनामस्थानेऽपि 'असर्वनामस्थाने' इति प्रतिषेधात् पदसञ्ज्ञा न भविष्यति । ननु 'स्वादिषु' इति प्राप्तिः समुदायस्य, तस्या एव [11]स [12]प्रतिषेधः, नेत्याह, तत्रापि सुबन्तमित्यनुवर्तते, प्रसज्यप्रतिषेधश्चाश्रीयते, तत्सामर्थ्या 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या. प. १९) इति नाश्रीयते । ततश्चायमर्थो भवति—'सर्वनामस्थाने परतः पूर्वस्य समुदायस्य स्वादिष्विति प्राप्ता पदसञ्ज्ञा न भवति, तत्र च यत् सुबन्तम्[13]अवयवत्वेन वर्तते, तस्य [14]सुबन्तमिति पदसञ्ज्ञा न भवति' इति । यद्येवम्, 'सुवाक्, सुराजा' इति सावपि समुदायस्यावयवस्य च स्वादिष्विति वा सुबन्तमिति वा पदसञ्ज्ञाया अभावात् कुत्वादि न स्यात् । एवं तर्हि 'असर्वनामस्थाने' इत्यत्र उत्तरसूत्राद्यचीत्यपकृष्यते, ततो [15]यजादौ सर्वनामस्थाने या च यावती [16]च पदसञ्ज्ञा, सा सर्वा प्रतिषिध्यते, सौ तु [17]स्वादिष्विति च सुबन्तमिति च भवत्येव यद्येवम्, श्रूयमाणेऽपि सौ पूर्वस्य पदसञ्ज्ञा प्राप्नोति । तत्र को दोषः ? 'एचोऽप्रगृह्यस्य' (८.२.१०७) इत्यत्र पदान्तग्रहणं [18]चोदयिष्यति, 'भद्रं [19]करोषि गौः' इत्यत्र मा भूदिति । तत्र क्रियमाणेऽपि पदान्तग्रहणे प्लुतविकारः प्राप्नोति, नैष दोषः वाक्यपदयोरन्त्यस्येत्येवमेतद्विज्ञायते, तदेवं समासेषूत्तरपदस्य पदत्वं नास्तीति स्थितम् । यद्येवम्, [20]दधिसेचौ, दधिसेच 'सात्पदाद्योः' (८.३.१०९) इति षत्वनिषेधो न प्राप्नोति, नैवं विज्ञायते, पदस्यादिः [21]पदादिः, पदादेर्नेति, [22]कथं तर्हि पदादादिः पदादिः, पदादेर्नेति । कथम् 'अग्निषु,[23] वाक्षु, त्वक्षु' ? सात्प्रतिषेधो ज्ञापयति—स्वादौ यत् पदं ततः परस्य नेति । अवश्यं च पदादादिरित्येवं [24]विज्ञेयम्, अन्यथा 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या. प. १३८) इति यत्र सुबन्तमुत्तरपदं तत्र प्रतिषेधो न स्यात् ।

इह तर्हि 'बहुसेचौ, [25]बहुसेचम्', बहुचोऽपदत्वात् प्रतिषेधो न प्राप्नोति, वक्तव्यमेवैतत् 'बहुच्पूर्वस्य'[26] इति, तत्रायं सूत्रन्यासः—साते [27]सः षत्वं न भवति, ततो[28] 'बहुचः', बहुचः परस्य षत्वं न भवति, आदिग्रहणं न कर्तव्यम् 'आदेः परस्य' (१.१.५४) इत्येव सिद्धम् । तदिदं [29]बहुज्ग्रहणेन निमातव्यम् ।

---

1. सिचः स्वरवत् 2. च इत्यधिकम् 3. विधीयमाना 4. वस् भावा 5. भवति 6. श्रूयमाणस्यै 7. परमाश्वलिहा 8. तुल्यावधिकतया 9 भिन्नावधिकत्वात् 10. वक्तव्यम् 11. स नास्ति 12. निषे 13. तदवयवत्वेन 14. सुबन्तमिति 15. अजादौ 16. च नास्ति 17. स्वादाविति 18. नोदयिष्य 19. करोति 20. दधिसेचौ नास्ति 21. पदादिः नास्ति 22. किं 23. वायुषु इत्यधिकम् 24. अं 25. बहुसेचम् नास्ति 26. पदस्य इत्यधिकम् 27. सः नास्ति 28. बहुच् पदाभ्यां परस्य 29. बहुज्ग्रहणमादिग्र

'कार्यते, हार्यते' इति । ण्यन्तात् कर्मणि लकारः, यक्, णिलोपः । ननु [1]चात्रान्तरङ्गा वृद्धिरुत्पन्नमात्र एव णौ भवति, लोपस्तु यकि भवन् बहिरङ्गः । एवं तर्हि विभज्यान्वाख्यानपक्षे एतत् प्रत्युदाहृतम् ॥

## ६४. अचोऽन्त्यादि टि ।

अन्ते भवोऽन्त्यः, दिगादित्वाद्यत्, अन्त्यादीति बहुव्रीहिः । यद्यप्यचामित्येतद[2]पेक्षोऽन्त्यशब्दस्तथापि सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वादविरुद्धः समास । 'निर्धारण षष्ठी' इति । यद्येवं निर्धारणस्यानेकाश्रयत्वात् अच इत्येकवचनमनुपपन्नम्, तत्राह—'जातौ' इति । 'योऽन्त्यश्च' इति । निर्धारणस्य सजातीयविषयत्वादजिति लभ्यम् । इच्छन्त्व इत्यादि रूपोदाहरणम् । कार्यं त्वग्निचितमाचष्टे[3] णिचि 'णाविष्टवत्' (६.४.१५५.८१३) इति टिलोपः । पचेते इत्यादि कार्योदाहरणम् ॥

## ६५. अलोऽन्त्यात्पूर्व उपधा ।

समुदाय एवान्त्यो भवतीत्याह—'धात्वादौ' इति । 'अलः' इति जसन्तं चेत् अन्त्यस्याविशेषितत्वात् समुदायादपि पूर्वस्य सञ्ज्ञायां शिष्ट इति [4]शकारस्यैवं स्यात्, असन्देहार्थमलित्येव [5]च ब्रूयात्, अतोऽन्त्यादित्यनया समानाधिकरणा पञ्चमीत्याह—'अन्त्यादलः' इति । यद्येवम्, पूर्वस्याविशेषितत्वात् समुदायस्यापि सञ्ज्ञायां शिष्ट इति 'शा' इति समुदायस्यैवं प्राप्नोति, 'अलोऽन्त्यस्य' इत्यन्त्यस्य भविष्यति । 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारेषु' (व्या. प. ६२) तत्र यथा आभ्यामित्यत्र 'हलि लोपः' (७.२.११३)[6] इद्रूपस्य विधीयमानो लोपोऽन्त्यस्य न भवति, तथाऽत्रापि न स्यात्, अतोऽलोऽन्त्यात् पूर्वोऽलिति वक्तव्यमित्यत[7] आह—'अलेव' इति । एवकारः पौनर्वचनिकः, यथाऽन्त्योऽल्, एवं पूर्वोऽप्यलेवेति । कथं पुनर्द्वितीयमल्ग्रहणमन्तरेणायमर्थो लभ्यते ? लोकतः । लोके ह्यमीषां ब्राह्मणानामन्त्यात् पूर्व आनीयतामित्युक्ते एक एवान्त्यात् पूर्वोऽनन्तर आनीयते, न समुदायः । संयोगोपधग्रहणं कृञर्थमित्यत्रावयवधर्मेण समुदायस्य संयोगस्योपधाव्यपदेशः । अकार इत्यादीनि रूपोदाहरणानि । कार्यं तु पाचक इत्यादौ 'अत उपधायाः' (७.२.११६) इति वृद्धिः । भेदक इत्यादौ 'पुगन्तलघूपधस्य च' (७.३.८६) इति गुणः । 'शिष्टः' इति । शासेर्निष्ठा, 'शास इदङ्हलोः' (६.४.३४) इतीत्वम्, 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम् ॥

## ६६. तस्मिन्निति निर्दिष्टे पूर्वस्य ।

इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात् 'तस्मिन्नणि च' (४.३.२) इत्यत्रोपात्तस्येदमनुकरणम्, ततश्च तत्रैवास्य प्रवृत्तिः स्यात् । अस्ति च तत्र व्यवच्छेद्यं 'हे यौष्माकीणमस्मभ्यं [8]देहि, [9]आस्माकीनं युष्मभ्यं ददामि', इति परनिवृत्तिः, तामिमां भ्रान्तिमपाकरोति—'तस्मिन्निति सप्तम्यर्थनिर्देशे' इति । एतेन 'तस्यापत्यम्' (४.१.९२), 'तत्र भवः' (४.३.५३) इत्यादिवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशः, तद्वदेव [10]तस्मिन्निति [11]सामान्यविशेषणमचि, हलीत्यादीनामुपलक्षणम्, न त्वनुकरणमिति दर्शयति । एतच्चेतिकरणाल्लभ्यते । स हि पदार्थविपर्यासकृत् । शास्त्रे च [12]स्वरूपपदार्थः, तस्य विपर्यासोऽर्थपदार्थकता । यदि [13]च 'तस्मिन्नणि च' (४.३.२) इत्यत्रैवेतद्रुपास्थास्यत तत्रैव पूर्वग्रहणमकरिष्यतेति भावः । किमर्थं पुनरिदमारभ्यते ? 'इको यणचि' (६.१.७७) इत्यादौ सन्देहः, किं सत्सप्तमी, किं वा गङ्गायां घोष इतिवदौपश्लेषिकाधिकरणे सप्तमी इति । तत्र सत्त्वं परस्य च पूर्वस्य च सम्भवति, एवमुपश्लेषोऽपि । तत्र पूर्वस्य परस्य [14]च व्यवहितानन्तरस्य[15] यण् प्राप्तः, दध्युदकादिषु तु युगपदेकस्य कार्यित्वनिमित्तत्वायोगात् पर्यायेण यण् प्राप्तः । इष्यते च पूर्वस्यैव [16]स्यादनन्तरस्यैवेति, तत्र नियमार्थमिदम्—सप्तमीनिर्देशे पूर्वस्य भवति

---

1. अत्र नास्ति 2. अपेक्षतेऽन्त्यशब्दः 3. इति इत्यधिकम् 4. श इत्यस्य 5. च नास्ति 6. इति इत्यधिकम् 7. इति नास्ति 8. देहीति 9. हे अस्माकीन 10. च इत्यधिकम् 11. सामान्यं विशेषणामचि 12. स्वं रूपं पदार्थः 13. च नास्ति 14. च नास्ति 15. च इत्यधिकम 16. तस्याप्यनन्तरस्यैवेति ।

अनन्तरस्यैवेति । 'इको यणचि' (६.१.७७) इत्यादेश्च सकृत्प्रवृत्तिः, सा चैवं विशेषितेति न क्वाप्यनिष्टशङ्का । नियमं दर्शयति—'पूर्वस्यैव' इति । व्यावर्त्यं दर्शयति—'नोत्तरस्य' इति ।

'पचत्योदनम्' इति । यद्यप्यत्रानियमप्रसङ्गो नास्ति, तथापि 'इको यणचि' (६.१.७७) इत्यस्मिन् सूत्रेऽनि प्रसङ्गे नियमः क्रियत इत्येतदपि भवत्येवोदाहरणम् । द्वितीयं नियमं दर्शयति— निर्दिष्टग्रहणम्' इति । दिशिरुच्चारण निःशब्दो नैरन्तर्ये, निरन्तरं दिष्टो निर्दिष्ट [1]इत्येवमानन्तर्यमर्थो भवति, तत्रैवं वचनव्यक्तिः—अचि हलीत्यादौ पूर्व कार्यं भवति, तत्र निर्दिष्टे निरन्तर एवोच्चारित इति तत्रार्थात् पूर्वस्यानन्तरस्येत्यर्थो भवति, तदाह—'व्यवहितस भूत्' इति । अन्यथा व्यवहिते मा भूदिति वक्तव्यम्, [2]पूर्वपदस्य व्यवहितेऽपि वृत्तेस्तस्य [3]प्रसङ्गात् ॥

## ६७. तस्मादित्युत्तरस्य ।

'निर्दिष्टग्रहणमनुवर्तते' इति । तेनात्रापि [4]व्यवहिते कार्यं न भवतीति भावः । अत्रापि इतिपरत्वादनुकरण कस्यचिद् भ्रान्तिः स्यात् । 'तस्मान्नुड् द्विहलः' (७.४.७१) इत्यत्र 'अत आदेः' (७.४.७०) इति दीर्घात् पूर्वस्याङ्ग सम्भवात् प्रयोजनाभावात् यद्यपि तस्यानुकरणं न भवति, 'तस्माच्छसो नः पुंसि' (६.१.१०३), 'तस्मान्नुडचि' (६.३. इत्यत्र [5]तु व्यवच्छेद्यमस्ति, उच्चारितोऽनुपलभ्यते, गौरनश्व इति पूर्वस्य मा भूदिति, अतस्तयोरेवेदमनुकरण तामिमां भ्रान्तिमपाकरोति—'तस्मादिति पञ्चम्यर्थनिर्देशः' इति । एतेन पूर्वसूत्रवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्दे तद्वदेव च तस्मादिति सामान्यमतिङ इत्यादीनां विशेषाणामुपलक्षणम्, न त्वनुकरणमिति दर्शयति । एतच्चेतिकरणाल इत्युक्तम् । किमर्थं पुनरिदमारभ्यते ? 'तिङ्ङतिङः' (८.१.२८) इत्यादौ कारकविभक्तेरसम्भवात् दिग्योगल पञ्चमीति, दिक्छब्दस्त्वध्याहार्यः, तत्र पूर्वोत्तर[6]शब्दयोरध्याहारः सम्भवतीति नियमार्था परिभाषेयम्, तदाह 'उत्तरस्यैव कार्यम्' इति । तदेवं पूर्वस्य चास्य च वृत्तिकारेण नियमार्थत्वं दर्शितम् ।

षष्ठीप्रक्लृप्तिपक्षोऽपि भाष्ये प्रदर्शितः । कथम् ? 'षष्ठी' इति वर्तते, सप्तम्यर्थनिर्देशे पूर्वस्यानन्तरस्य षष्ठी [8]पञ्चम्यर्थनिर्देशे उत्तरस्यानन्तरस्य षष्ठीति, तत्र 'इको यणचि' (६.१.७७) इत्यादौ यत्र पूर्वमेव षष्ठी विद्यते पूर्वस्यानन्तरस्य, नोत्तरस्या[9]नन्तरस्य सा षष्ठीत्युच्यते । 'आने मुक्' (७.२.८२) 'ईदासः' (७.२.८३) इत्यादौ तु षष्ठी नास्ति, तत्र षष्ठ्यपि प्रकल्प्यते, सा चानियतयोगत्वात् स्थानषष्ठी भवति । यस्य च स्थानषष्ठी तस्यैव कार्य [10]सर्वत्र कार्यनियमोऽपि सिध्यति । यत्र तूभयनिर्देशस्तत्र याऽनवकाशा सा इतरस्याः षष्ठीं [11]प्रकल्पयति, यथा 'आने (७.२.८२) इति सप्तमी निरवकाशा 'अतो येयः' (७.२.८०) इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः । एवम् 'ईद (७.२.८३) इति पञ्चमी 'आने मुक्' (७.२.८२) इति सप्तम्याः, उभयोस्त्वनवकाशयोः परत्वात् पञ्चमी सप्त षष्ठीं [12]प्रकल्पयति, यथा 'आमि सर्वनाम्नः सुट्' (७.१.५२) इति [13]सर्वनाम्न इति पञ्चम्यनवकाशाऽऽमीति सप्त अनवकाशायाः । अथ सप्तम्युत्तरार्था तथाप्यादित्यनुवृत्तया पञ्चम्या समानाधिकरणा 'सर्वनाम्नः' इति पञ्चम्यपि साव षष्ठीं प्रकल्पयति । एवं नियमपक्षेऽपि परत्वानवकाशत्वाभ्यां व्यवस्था द्रष्टव्या । 'दीर्घात् (६.१.७५) छे तुग्भवति' षष्ठ्याः स्थाने पञ्चमीव्याख्यानात्, दीर्घस्यैव तुग्भवति, न तु छस्य, तथा च 'सुराच्छाया' इति निर्देश उपपद्यते ॥

## ६८ स्वं रूपं शब्दस्याशब्दसञ्ज्ञा ।

स्वरूपस्य पर्यायाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयम् । शास्त्राङ्गत्वाच्च[14] परिभाषाणां शास्त्र नियमः, न लोक इत्याह—'शास्त्रे स्वमेवेत्यादि, ग्राह्यम्' इति । [15]ग्राह्यम् इति णिजन्तात् यत्, एतच्चाध्याहारेण लभ्य

1. इति नास्ति 2. पूर्वशब्दस्य 3. प्रसङ्गः 4. व्यवहितस्य 5. तु नास्ति 6. शब्दयोरध्याहारः 7. इति इत्यधिकम् 8. पञ्चम्यर्थनिर्देशे उत्तरस्यानन्तरस्य षष्ठीति नास्ति 9. अनन्तरस्य ना 10. सर्वकार्यनियमोऽपि 11. प्रकल्पयिष्यति 12. प्रकल्पयिष्यति 13. सर्वनाम्न इति नास्ति 14. च ना 15. ग्राह्यम् इति नास्ति ।

शब्दस्येति 'कृत्यानां कर्तरि वा' (२.३.७१) इति षष्ठी, शब्दः स्वमेव रूपं ग्राहयति बोधयतीत्यर्थः। सञ्ज्ञापक्षे तु वृत्तावेव शब्दः [1]सञ्ज्ञानुच्चारणं च नोपपद्यते। सूत्रे षष्ठीनिर्देशोऽपि नातीव युक्तः स्यात्, सञ्ज्ञासञ्ज्ञिसम्बन्धे प्रायेण सामानाधिकरण्यदर्शनात्। रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषादिभिरुदीरितासु भिन्नासु शब्दव्यक्तिषु समवेतं सामान्यमभिधीयते। 'अग्नेर्ढक्' (४.२.३३) इति सूत्रकारेण या व्यक्तिरुच्चारिता, तस्याः सर्वोच्चारणेष्वनुगतं सामान्यं वाच्यमित्यर्थः। सामान्यस्य कार्ययोगो व्यक्तिद्वारक इति तेन तेनोच्चारितायास्तस्यास्तस्या व्यक्तेर्ढक् भवतीत्यर्थः सम्पद्यते।

एवकारस्य व्यवच्छेद्यं दर्शयति—'न बाह्योऽर्थः' इति। 'शब्दसञ्ज्ञां वर्जयित्वा' इति। शब्दसञ्ज्ञासु स्वरूपं ग्राह्यं न भवतीत्यर्थः। अनियमप्रसङ्गे नियमः कर्तव्यस्तं दर्शयति—'शब्देन' इत्यादि। लोके [2]गौरुपलभ्यतामित्युक्तेऽर्थ एव कार्ययोगो गम्यते, न हि शब्दरूपमुपलभ्य कृती भवति, व्याकरणे तु प्रत्ययविधाना[3]दिकार्यमर्थे न सम्भवति, तेन सह पौर्वापर्यायोगात्। तेन 'अग्नेर्ढक्' (४.२.३३)इत्युक्ते लोकवदर्थ एव तावत् प्रतीयते, तत्र[4] सम्भवो नास्ति, अतस्तद्वाचिनां सर्वेषां सम्प्रत्ययः स्यात्, यथा—आकृतिचोदनायां व्यक्तीनाम्। मा भूदेष दोषः, उपात्तादेव यथा स्यादिति नियमार्थमिदमारभ्यत इत्यर्थः।

'औदश्वित्कम्' इति। [5]उदश्विति संस्कृतमिति सप्तमीसमर्थाट्ठक्, 'इसुसुक्तान्तात्कः' (७.३.५१)।

'घुग्रहणेषु' इत्यादि। अन्यथा 'उपसर्गे घोः किः' (३.३.९२) इति किप्रत्ययो धातोरेव घोः शब्दार्थात् स्यात्, न तु दाधाभ्यः। 'ई हल्यघोः' (६.४.११३) इत्यत्र [6]तु [7]घुशब्दस्यानाकारान्तत्वाद् दाधानामेव ग्रहणं सिध्यति। कुमारीघ इत्यत्र 'घरूप' (६.३.४३) इति ह्रस्वप्रसङ्गः।

ननु च प्रदेशेषु सञ्ज्ञिसम्प्रत्यायनार्थं सञ्ज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति। नैतदस्ति। उभयगतिरिह शास्त्रे सम्भवतीति सङ्ख्याकर्मकरणादिष्विव स्वरूपस्य सञ्ज्ञिनश्च प्रदेशेषु ग्रहणं स्यात्। ज्ञापकात् सिद्धम्, यदयं 'ष्णान्ता षट्' (१.१.२४) इति षकारान्तायाः सङ्ख्यायाः षट्सञ्ज्ञां विदधाति, तज्ज्ञापयति—'सञ्ज्ञाशब्दो न स्वरूपग्राहकः' इति। अन्यथा 'षड्भ्यो लुक्' (७.१.२२), 'षट्चतुर्भ्यश्च' (७.१.५५) इत्यादौ स्वरूपस्यापि षडित्यस्य ग्रहणात् षकारान्तायाः सङ्ख्यायाः षट्सञ्ज्ञां न विदध्यात्।

ननु च षकारान्ता सञ्ज्ञा षकारान्तस्य[8] कार्यमिष्यते, सञ्ज्ञाऽपि षकारान्तैव, अतो नार्थोऽशब्दसञ्ज्ञेत्यनेन? सत्यम्, प्रतिपत्तिगौरवपरिहारार्थः प्रतिषेधः। शब्दशब्देन चाभेदोपचारात् व्याकरणमुच्यते, शब्दे सञ्ज्ञा [9]शब्दसञ्ज्ञा, एवं च कर्मकरणमित्यादिष्वर्थसञ्ज्ञास्वपि शास्त्रीयासु स्वरूपग्रहणं न भवति।

अथ रूपग्रहणं किमर्थम्? इह यावता प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वान्नित्यसम्बन्धित्वाच्च तदेव शब्दस्य [10]स्वार्थो हि स्वप्रतीतौ सम्बन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात् साधारणश्चानित्यसम्बन्धश्चानुकरणदशायामभावात्, न चार्थो ग्राहकः शक्यते कर्तुम्, ग्राह्यत्वे च सूत्रमनर्थकं स्यादिति नार्थो रूपग्रहणेन? एवं तर्ह्येतज् ज्ञापयति, 'शास्त्रे स्वरूपेण समानकक्ष्योऽर्थः' इति। तेन 'अर्थवद्ग्रहणे नानर्थकस्य'(व्या. १) इत्युपपन्नं [11]भवति। [12]तत्र [13]ज्ञापकादर्थोऽपि ग्राह्यः, स्वं रूपमिति वचनात्। रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम्। तेन काशे कुशे इत्यत्र 'शे' (१.१.१३) [14]प्रगृह्यसञ्ज्ञाऽभावः सिद्धः।

---

1. सञ्ज्ञाशब्दानुच्चारणं 2. गौरालभ्यतामित्युक्ते 3. आदि नास्ति 4. च इत्यधिकम् 5. उदश्विदिति 6. तु नास्ति 7. घुशब्द इत्यस्य 8. च इत्यधिकम् 9. शब्दसंज्ञा नास्ति 10. स्वं, अर्थो 11. भवति नास्ति 12. तत्र नास्ति 13. तज्ज्ञापकादर्थोऽपि 14. इति इत्यधिकम्

सित्तद्विशेषाणामिति वार्तिकं व्याचष्टे—'सिन्निर्देशः कर्तव्यः' इति । वृक्षस् इत्येवम् । 'ततो वक्तव्यम्' इति स्वं रूपमित्यस्यानन्तरम् । ननु किं प्रयोजनमित्युक्ते वृक्षादीति वक्तव्यम् । किमुच्यते वृक्षाद्यर्थमिति ? वृक्षादिषु प्रयोजनमस्येत्युक्ते वृक्षाद्यस्य प्रयोजनमि[1] [5]त्यर्थादुक्तं भवतीत्यदोषः । अस्यार्थस्य न्यायतः सिद्धिं विभाषेत्यत्र वक्ष्यामः ।

'पित्पर्यायवचनस्य च' इति । चकारात् स्वरूपस्य विशेषाणां च इदं वाचनिकमेव ।

'जित्पर्यायस्य' इत्यस्यापि न्यायतः सिद्धिं वक्ष्यामः । 'झित्तस्य च' इति । इदं वाचनिकमेव । मृगपक्षिणोस्तु पिन्निर्देशः कर्तव्य इत्याहुः । 'अथेवस्य' इति[1] । इयमिष्टिरेव ॥

## ६९. अणुदित्सवर्णस्य चाप्रत्ययः ।

सञ्ज्ञासूत्रमेतत्, न परिभाषा, [1]प्रसिद्धार्थविनियोगात् । 'परेण णकारेण' इति । एतच्च 'लण्' (मा. सू. ६) इत्यत्र प्रतिपादितम् । 'स्वस्य च रूपस्य' इति । यद्यपि प्रथमान्तं प्रकृतम्, तथापि सवर्णस्य चेति षष्ठ्यन्तस्यानन्तरं श्रूयमाणश्चशब्दोऽन्यस्य षष्ठ्यन्तस्याभावात् तस्यैव षष्ठ्यन्ततां प्रकल्पयतीति भावः । 'प्रत्ययं वर्जयित्वा' इति । तेन तत्रोच्चारितमेव रूपं गृह्यते । 'आद्गुणः' (६.१.८७) इत्यादि । यथेह भवति देवेन्द्रः इति, एवं [2]खट्वेन्द्रः इत्यादावपि भवति । 'अस्य च्वौ' (७.४.३२), यथेह भवति शुक्लीभवतीति, एवं मालीभवतीत्यादावपि भवति । 'यस्येति च' (६.४.१४८), यथेह भवति दाक्षिः प्लाक्षिरिति, एवं 'चौडिर्बालाकिः' इत्यादावपि भवति । चूडावलाकाशब्दौ बाह्वादी ।

ननु च 'अकः' 'अचि' इत्यादौ प्रत्याहारग्रहणे कथं मध्यवर्तिभिरिकारादिभिः सवर्णग्रहणम्, उच्चारितो हि सञ्ज्ञाशब्दः सञ्ज्ञिनं प्रत्याययति, न च मध्यवर्तिनामुच्चारणमस्ति । ते ह्यगादिसञ्ज्ञाभिः सञ्ज्ञित्वेन प्रत्याय्यन्ते । कस्तर्हि स्यात् ? 'अस्य च्वौ' (७.४.३२), '[1]यस्येति' (६.४.१४८), यत्र सञ्ज्ञाया उच्चारणमस्ति । प्रत्याहारे चाद्यो वर्ण उच्चारितत्वात् सवर्णग्राहकः । स्यादेतत् 'अक्षरसमाम्नाय उच्चारिता इकारादयः सवर्णानां ग्राहकाः' इति । अगादिचोदनासु ईकारादयोऽपि ह्रस्ववत्सञ्ज्ञित्वेनैव प्रतीयन्ते, त्विकारादिभिः प्रतीतैः प्रत्याय्यन्त इति, न; अपरकालत्वात् । इह[2] वर्णानामुपदेशस्तावत्. उपदेशोत्तर[3]काला इत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालमादिरन्त्येनैतत् प्रवर्तते, ततोऽण् सवर्णस्येति[4] । तदनेनोपदेशादिष्वङ्गेषु निष्पन्नेषु अन्यत्र 'अस्य च्वौ' (७.४.३२) इत्यादौ सवर्णानां ग्रहणं भवति, नाङ्गेषु, नापि स्वात्मनि अनिष्पन्नत्वात् । यदि त्वस्मिन्नपि सूत्रे सवर्णग्रहणं स्यात्, 'आदृगमहनजनः' (३.२.१७१), 'ऋदोरप्' (३.३.५७) इत्यादौ अकारादयोऽपि सवर्णान् गृह्णीयुः । अतोऽस्मिन् सूत्रेऽक्षरसमाम्नाये चागृहीतसवर्णानां ग्रहणम् । ततश्च तदेस्थितम् प्रत्याहारेषु मध्यवर्तिभिः सवर्णग्रहणं न स्यादिति । नैष दोषः । उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति नियमः, बुद्ध्युपारूढास्तु प्रत्यायकाः । अस्ति च मध्यवर्तिनां बुद्ध्युपारोहः, ततश्च सञ्ज्ञित्वेन प्रत्याय्यमानस्यापि प्रत्यायकत्वं भविष्यति । अत्र ज्ञापकम्—'दीर्घाज्जसि च' (६.१.१०५) इति प्रतिषेधः । स [1]हि कुमार्यौ इत्यादौ 'प्रथमयोः पूर्वसवर्णः' (६.१.१०२) इति दीर्घो मा भूदिति । तत्र चाक इति वर्तते । [2]खट्वे इत्यादौ तु 'नादिचि' (६.१.१०४) इत्येव सिद्धः प्रतिषेधः । 'दीधीवेवीटाम्' (१.१.६), 'ल्वादिभ्यः' (८.२.४४) इत्यादयश्च निर्देशा एवमेवोपपद्यन्ते, यदि मध्यवर्तिभिरपि सवर्णग्रहणं भवति । स्वरानुनासिकेत्यादिरुदात्तः सूत्रे गृहीतः स्वरान्तरभिन्नमपि गृह्णाति, एवमनुदात्तस्वरितौ [3]च । तथा सानुनासिको निरनुनासिकम्, सोऽपि तम् ।

'दीर्घो न भवति' इति । असति त्वप्रत्यय इत्यस्मिन् प्रत्ययेनापि सवर्णग्रहणात् दीर्घोऽपि स्यात् । अत्यल्पमिदमुच्यते 'अप्रत्ययः' इति, 'अप्रत्ययादेशटित्किन्मितः इति वक्तव्यम्' । प्रत्यये प्रत्युदाहृतम् तत्र । आदेशे 'इदम इश्' (५.३.३)

1. अर्थात् नास्ति 2. इति नास्ति 3. अप्रसिद्धार्थ विनियोगात् 4. खट्वर्षे 5. यस्येति च 6. हि इत्यधिकम् 7. काल 8. इति नास्ति 9. हि नास्ति 10. खट्वेत्यादौ 11. च नास्ति

इतः, इह विशेषविहितत्वात्यदाद्यत्वं बाधित्वा त्रिमात्रिक आदेशः प्राप्नोति । टिति—'आर्धधातुकस्येड् वलादेः' (६.२.३५) पठिता इति[1] दीर्घोऽपि स्यात् । 'ग्रहोऽलिटि दीर्घः' (७.२.३७) इत्येतत्तु ग्रहेर्दीर्घ एव, न ह्रस्व इति नियमार्थं स्यात् । 'वृतो वा' (७.२.३८) इत्येतदपि 'ववरिथ' इति लिटि दीर्घो मा भूदित्येवमर्थं स्यात् । किति—'भुवो वुग्लुङ्लिटोः' (६.४.८८), बभूव, अनुनासिकोऽपि स्यात् । ङिति—'अम् सम्बुद्धौ'(७.१.९९) हे अनड्वन्, आमपि स्यात् । एवं तर्ह्यप्रत्यय इ त नेह [2]सञ्ज्ञाग्रहणम्, किं तर्हि, [3]अन्वर्थग्रहणम्, प्रतीयते विधीयत इति प्रत्ययः, भाव्यमानः सवर्णान्न गृह्णाति इत्यर्थः । इशादयो[4]ऽपि भाव्यन्ते । सञ्ज्ञाप्रत्ययस्य तु नावश्यकः प्रतिषेधः । [5]येनार्थं प्रतियन्ति स प्रत्ययः, न हि दीर्घप्लुतयोरर्थस्याभिधानमस्ति । 'कुहोश्चुः' (७.४.६२) इत्यादौ भाव्यमानस्याप्युदित्त्वसामर्थ्यादप्रत्यय इति निषेधाभावः । तथा[6] च पठ्यते, 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' (व्या. प.३५) इति ॥

## ७०. तपरस्तत्कालस्य ।

'तः परो यस्मात्' इति बहुव्रीहिं दर्शयति । 'तादपि परस्तपरः' इति पञ्चमीतत्पुरुषम् । स पुनरस्मादेव निपातनाद्वेदितव्यः । एकस्यापि तपरशब्दस्य तन्त्रावृत्त्योरन्यतराश्रयणादर्थभेदो न विरुद्धः । तत्र बहुव्रीहेर्लिङ्गम्—'अतो भिस ऐस्' (७.१.९) इति तपरकरणम् । तत्पुरुषस्य लिङ्गम्—'वृद्धिरादैच्' (१.१.१) इत्यैजर्थं हि तदित्युक्तम् ।

'तपरो वर्णः' इति । वर्णस्यैव सवर्णसम्भवाद्वर्ण इत्युक्तम् । 'तत्कालस्य' इति बहुव्रीहिः, स कालोऽस्येति । अयुक्तोऽयं निर्देशः । तदित्यनेन तपरो वर्णः परामृश्यते, 'प्रसिद्धपरिमाणा च क्रिया प्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका' । कालो यथा—'दिवसमधीते' इति । दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते, स चाध्ययनस्य परिच्छेदकत्वात् कालः, वर्णस्तु क्रियात्मको न भवतीत्ययुक्तं वर्णवाचिनस्तच्छब्दस्य कालशब्देन सामानाधिकरण्यम् । एवं तर्ह्युत्तरपदलोपी समासो द्रष्टव्यः, उष्ट्रमुखवत् । गम्यमानार्थत्वाच्च[7] अप्रयोग एव लोपः, [8]यथा—उष्ट्रो मुखमस्येत्येव विग्रहः । न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात् सादृश्यप्रतीतिः । उष्ट्र इव मुखमस्येति मुखेनैव मुखस्य सादृश्यं प्रसिद्धम्, न कृत्स्नेनोष्ट्रेणेति सामर्थ्यादयमर्थो भवति, उष्ट्रमुखमिव मुखमस्येति । एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरेण निमेषादिना परिच्छिन्ना सती वर्णान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक इत्युच्यते । स कालोऽस्येत्यस्य कोऽर्थः ? तत्कालसम्बन्धिनी क्रिया परिच्छेदिका [9]अस्येत्यर्थः । एतदेव दर्शयति—'आत्मना इत्यादिना' । तपरवर्णसन्निधावुच्चारितोऽप्ययमात्मशब्दस्तत्सहचरितायामुच्चारणक्रियायां वर्तते, वर्णेन क्रियायास्तुल्यत्वानुपपत्तेः । यादृशी तपरस्य वर्णस्यो[10]च्चारणक्रिया निमेषादिपरिच्छिन्ना, तादृश्युच्चारणक्रियाऽ[11]स्येत्यर्थः ।

'गुणान्तरयुक्तस्य' इति । यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्येत्यर्थः । किं पुनरिदं नियमार्थम्, आहोस्विद् विध्यर्थम् ? तत्राणित्यनुवृत्तौ नियमार्थम्, तपरो [12]वर्णस्तत्कालस्यैवेति । निवृत्तौ विध्यर्थम् । तत्राद्ये पक्षे 'आतो धातोः' (६.४.१४०), 'आतां पुङ्णौ', 'यस्येति च' (६.४.१४८), 'विड्वनोरनुनासिकस्यात्' (६.४.४१), इत्यादौ 'भेदका गुणाः' इत्यस्मिन् दर्शने यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्य ग्रहणं न स्यादिति द्वितीयं पक्षमाश्रित्याह—[13]'विध्यर्थम्' इति । [14]अत्र हेतुमाह—'अणिति नानुवर्तते' इति । यदि विध्यर्थमिदम्, ततोऽस्यानण्सु चरितार्थत्वादण्सु पूर्वमेव प्रवर्तेत । तत्राह—'अणामन्येषां च' इति । एतदेव [15]विशदयति—'अतो भिस ऐस्' (७.१.९) इत्येवमादिषु इति । 'न [16]प्रवर्तत एव' इति । परेणानेन बाधितत्वादिति भावः । विरोधो ह्यत्र [17]वर्तते—पूर्वसूत्रेण ह्यष्टादशानां ग्रहणम्, अनेन तु षण्णामिति ।

---

1. इति नास्ति 2. संज्ञाकरणम् 3. अन्वर्थकरणम् 4. अपि नास्ति 5. यनार्थः प्रतीयते 6. ततश्च अण्स्वेवायं नियमः इत्यधिकम् 7. च नास्ति 8. तथा हि 9. अस्येत्ययमर्थः 10. उच्चारिता क्रिया 11. यस्येत्यर्थः 12. अण् तत्कालस्यैवेति 13. विध्यर्थमिदमिति 14. तत्र 15. दर्शयति 16. प्रवृत्तमेवेति 17. विद्यते

'किमुदाहरणम्' इति। 'अभेदकत्वात् गुणानाम्' (सो. प. ८०) अनण्सु [1]सिद्धमिति प्रश्नः, अण्सु भिन्नकालनिवृत्त्यर्थं [2]तावदारब्धव्यं सूत्रम्। तदेवानण्स्वपि विधिमुखेन प्रवर्तमानमिष्टं साधयतीत्युत्तरम्। 'विड्वनोरनुनासिकस्यात्' (६.४.४१) इति। कस्य पुनरत्र [3]सवर्णस्य ग्रहणमिष्यत इति चिन्त्यम्। तस्मादुपलक्षणमेतत्। 'आतो धातोः' (६.४.१४०), 'यस्येति च' (६.४.१४८), इत्यादावेव [4]प्रयोजनम्।

'तत्कालस्येति किम्' इति। प्रधानावयवद्वारेण सूत्रमेवाक्षिप्यते। 'खट्वाभिः' इति। वर्णाश्रयविधावन्तादिवद्भावो न भवति॥

## ७१. आदिरन्त्येन सहेता।

इदमपि सञ्ज्ञासूत्रम्, आद्यन्तयोर्मध्यापेक्षत्वात मध्यवर्तिनां सञ्ज्ञित्वं विज्ञायते, 'स्वं रूपम्' (१.१.६८) इत्यनुवृत्तेः स्वरूपस्य चेत्याह—'मध्यवर्तिनाम्' इति। यद्यप्या[5]द्यन्तावयवा अवयविनः समुदायरूपस्य सम्बन्धिनौ तथापि तस्य युगपल्लक्ष्ये प्रयोगाभावात् समुदायिनां सञ्ज्ञेति दर्शयति—'वर्णानाम्' इति। 'स्वस्य च रूपस्य' इति। स्वरूपमादेरेव गृह्यते नान्त्यस्य, [6]अप्राधान्यादिति दध्यत्र इति केवल एव यकारः प्रवर्तते, न [7]णकारेण सहितः। सहग्रहणादाद्यन्तौ समुदितौ सञ्ज्ञेति समुदायादेव विभक्तिर्भवति 'इको यणचि' (६.१.७७) इति. नादिमात्रात्। 'टा इत्यनेन ग्रहण मा भूत्' इति। तावतोऽवधेरविवक्षितत्वान्नायमन्त्यः 'टाङसिङसामिनात्स्याः' (७.१.१२), 'द्वितीयाटौस्स्वेनः' (२.४.३४) इति तृतीयैकवचनस्यासौ विशेषणार्थः॥

## ७२. येन विधिस्तदन्तस्य।

स्वरूपविधिपरिहारायायमारम्भः। इदमपि सञ्ज्ञासूत्रम्। येनेति करणे तृतीया। विधीयत इति विधिः कर्मसाधनः किप्रत्ययः। 'विधिर्विधायते' इति। विधिशब्देन विधानयोग्यं वस्त्वभिधीयते, तस्य सांप्रतिकक्रियाविशेषद्योतनायाख्यातप्रयोगः, 'आसने आस्ते', 'करणेन करोति' इतिवत्। तदन्तस्येति बहुव्रीहिः। तदित्यनेन येनेति निर्दिष्टः करणभूतः शब्दो निर्दिश्यते तदाह—'आत्मान्तस्य' इति। अन्तशब्दस्यावयववाचित्वात्तदाक्षिप्तस्य समुदायस्येयं सञ्ज्ञेत्याह—'समुदायस्य सञ्ज्ञा भवति' इति। 'अवश्यलाव्यम्' इति। मयूरव्यंसकादित्वात् समासः 'लुम्पेदवश्यमः कृत्ये' (काशिकायामुपलभ्यमाना कारिका— सू. ६.१.१४४) इति मलोपः।

अथेह कस्मादेजन्तस्य सञ्ज्ञा न भवति 'एचोऽयवायावः' (६.१.७८) इति? किं [8]स्यात्? अनेकाल्त्वादयादयः सर्वादेशाः स्युः, ततश्च [9]चयनलवनादिष्वयनमिति प्राप्नोति, प्रकरणादिवशाच्चाक्षा[10]दिवदर्थविशेषावगतिः स्यात्। नैष दोषः। 'निर्दिश्यमानस्यादेशा भवन्ति' [11](व्या. प. १०६) [12]इत्येवं भविष्यन्ति। अथ वा यथा एचां तदन्तविधिः, एवमयादिभिरपि भविष्यति। एवमपि 'आद्गुणः' (६.१.८७) इत्यत्र आदित्यवर्णान्तो गृह्यते, अचीति [13]चाजादेरिति खट्वेन्द्र [14]इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गः षष्ठ्यनिर्देशान्निर्दिश्यमानस्येत्यपि नास्ति। एवं तर्हि नैवंविधोऽस्य[15] विषयः। येनेति करणे तृतीयेत्युक्तम्, करणं च परतन्त्रम् कर्त्रधिष्ठितस्यैव करणत्वात्। न च 'एरच्' (३.३.५६) इत्यादाविकारादीनां पारतन्त्र्यम्, धात्वादीनां च स्वातन्त्र्यं स्वरूपतोऽवभासते। वा स्याद् इति [16]वृक्षादीनामतो विवक्षानिबन्धनं तदुभयमिति। विशेषणत्वेन विवक्षितं परतन्त्रमप्रधानम्, विशेष्यत्वेन विवक्षितं स्वतन्त्रं प्रधानम्। तेन विशेषणं विशेष्यस्य तदन्तस्य सञ्ज्ञेत्युक्तं [17]सम्भवति। विशेष्यसन्निधौ च विशेषणं भवति सन्निधिश्च कुत्रचित् साक्षान्निर्देशेन, यथा 'ईदूदेद्द्विवचनम्' (१.१.११) इति द्विवचनस्य। क्वचिदधिकाराद्यथा 'एरच्'

1. सिद्धमिष्टमिति 2. तावदवश्यमारब्धव्यं 3. सवर्णग्रहणमिष्यत 4. तु इत्यधिकम् 5. आद्यन्तावयवौ 6. प्राधान्यादिति 7. णकारसहितः 8. च इत्यधिकम् 9. चयनादिष्वयनमिति 10. आदि नास्ति 11. एच एव इत्यधिकम् 12. इत्येवं भविष्यन्ति नास्ति 13. चाजादिरिति 14. इति नास्ति 15. योगस्य इत्यधिकम् 16. वृक्षादीनाम् नास्ति 17. भवति

(३.३.५६) इति धातोः। क्वचिदाक्षेपात्, यथा 'इको झल्' (१.२.९) इति [1]सना धातोः। 'एचोऽयवायावः' (६.१.७८) इत्यादौ न कथञ्चिद्विशेष्यसन्निधिरिति नैतत् प्रवर्तते। यदि विशेषणं तदन्तस्य सञ्ज्ञा, ततः 'उदोष्ठ्यपूर्वस्य' (७.१.१०२), इत्यत्र ऋकारस्तदन्तस्य धातोः सञ्ज्ञेति ओष्ठ्यपूर्वग्रहणं धातोरेव विशेषणं स्यात्, न ऋकारस्य, सञ्ज्ञायाः सञ्ज्ञिप्रत्ययनार्थत्वात्। ततश्चेह[2] स्यात्, सङ्कीर्णमिति, पूर्तमित्यादौ च न स्यात्। एवम् 'उतश्च प्रत्ययादसंयोगपूर्वात्' (६.४.१०६) इत्यत्रासंयोगपूर्वग्रहणमङ्गस्य विशेषणं स्यात्, नोतः। नैष दोषः। इयं हि सञ्ज्ञा गुणप्रधानभावापेक्षा, ततश्च 'उतश्च प्रत्ययात्' (६.४.१०६) इत्यादौ विशेषणसम्बन्धवेलायां गुणभावास्फुरणा[3]त्तमनुभूय [4]पश्चात् विशेष्येण सम्बन्धे सञ्ज्ञा भवति।

'समास' इति। अनेनैतदाह—श्रितादयः [5]पश्चात् विशेष्यास्तद्विशेषणं च सुप्। एवं 'नडादिभ्यः फक्' (४.१.९९) इत्यादौ नडादिविशेष्यं प्रातिपदिकं[6] विशेषणमिति। 'कष्टं परमश्रितः' इति[7]। श्रितान्तमेतत् सुबन्तं न भवतीति सम्बुद्ध्यन्तं पठितव्यम्, तद्धि प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते।

'नेत्याह' इति। कः पुनराह? उत्तरवादी, आचार्यो वा।

'उगिद्वर्ण' इति। उगिता वर्णेन च प्रातिपदिकं विशेष्यमित्यर्थः। 'यस्मिन् विधिः' इति तदन्तविध्यपवादस्तदादिविधिः, [8]अतो विशेषणेनैव भवति॥

## ७३. वृद्धिर्यस्याचामादिस्तद् वृद्धम्।

समुदायस्यैवाचामादिः सम्भवतीति स एव यस्येत्यनेनोच्यत इत्याह—[9]'यस्येति समुदाय उच्यते' इति। सञ्ज्ञिनिर्देशार्थं चेदम्, अन्यथा तच्छब्देन किं परामृश्येत, [10]तदित्यस्यानुपादाने[11] वृद्धेरेव [12]सा वृद्धसञ्ज्ञा स्यात्। 'अचां मध्ये' इत्यादि। अत्र यस्येत्यस्याचामित्यनेन सम्बन्धः, आदिश्च निर्धार्यते, [13]वृद्धिविधेयो धर्मः। आदिशब्दश्चोपक्रमवचनः, उपक्रम्यत इत्युपक्रमः, [14]प्रथम उच्चार्यत इत्यर्थः। यस्य समुदायस्य सम्बन्धिनामचां मध्ये प्रथमत उच्चार्यमाणो वृद्धिसञ्ज्ञक इत्यर्थः। 'अचामिति जातौ बहुवचनम्' इति। तेन द्वयोरपि भवतीति भावः। एकस्यापि व्यपदेशिवद्भावात् भवति। 'शालायः' इति। अत्र समुदायस्य [15]हलादित्वेऽप्यजपेक्षया प्रथमो[16]ऽच् [17]वृद्धिरिति सञ्ज्ञा भवति। ननु च निर्धारणस्य [18]तुल्यजातीयविषयत्वान्निर्धार्यमाण आदिरप्यजेव प्रतीयते, न वा आकारोऽच्, अक्षरसमाम्नायेऽनुपदेशात्। [19]कथं तर्हि 'सोमपं ब्राह्मणकुलम्' इति अच्कार्यं ह्रस्वत्वं भवति, सवर्णग्रहणात्, न त्वच्त्वात्। इहापि तर्हि [20]सवर्णग्रहणाद्भविष्यति? स्यादेवम्, यदि [21]ह्यज्ग्रहणमुच्चारितं स्यात्, इह तु निर्धारणस्वभावात् प्रतीयते। अस्तु, [22]तथा प्रतीयमान एव सवर्णं [23]ग्रहीष्यति यथाज्ग्रहणे मध्यवर्तीकारादिः। किञ्च अचामिति निर्धारणाश्रये तावदकारस्योच्चारितत्वात् आकारोऽपि प्रतीयते। तेन निर्धार्यमाणस्याप्याकारादेस्तथाभूतमेवाच्त्वं प्रतीयत इति यत्किञ्चिदेतच्चोद्यम्[24]।

'वा नामधेयस्य' इति। नामधेयशब्दः, साङ्केतिकेषु रूढः। 'देवदत्तीयाः' इति। काश्यादिषु देशवाची देवदत्तशब्दः पठ्यते, 'एङ् प्राचां देशे' (१.१.७५) इति वृद्धसञ्ज्ञकः काश्यादिभिः साहचर्यादित्यदेशवाचिनश्छ एव भवति। वाहीकग्रामवाचिनोऽपि देवदत्तशब्दस्यानादित्वेनासाङ्केतिकत्वात् अप्राचां देशवाचित्वाच्च[25] वृद्धसञ्ज्ञाया अभावात् काश्यादिलक्षणौ ठञ्ञिठौ न भवतः।

---

1. सना नास्ति 2. च इत्यधिकम् 3. तम् नास्ति 4. पश्चात् नास्ति 5. पश्चात् नास्ति 6. तु इत्यधिकम् 7. समासादत्र सुब्विहित इति इत्यधिकम् 8. अतो नास्ति 9. यस्येति नास्ति 10. अस्य नास्ति 11. च इत्यधिकम् 12. सा नास्ति 13. वृद्धिविषयो 14. प्रथमतः 15. हशादित्वे 16. अच् नास्ति 17. वृद्धिसंज्ञो भवति 18. तुल्यजातीयविषयविषयत्वान्निर्धार्य 19. अथ इत्यधिकम् 20. सवर्णत्वाद्भवति 21. द्वितीयमज्ग्रहणमुच्चारितं 22. तथा नास्ति 23. ग्रहिष्यते 24. चोद्यम् नास्ति 25. च नास्ति

'गोत्रान्तात्' इत्यादि। गोत्रशब्देन गोत्रप्रत्ययान्तं गृह्यते, तदन्ताद[1]समस्तवत् केवलात् [2]गोत्रान्ताद्यः प्रत्यय भवति स एव तदन्तादपि भवतीत्यर्थः।

'घृतरौढीयाः' इति। रूढस्यापत्यम् 'अत इञ्' (४.१.९५), शैषिकेष्वर्थेषु 'इञश्च' (४.२.११२) इत्यणः द्व्यचः प्राच्यभरतेषु'(४.२.११३) इति निषेधात् 'वृद्धाच्छः' (४.२.११४)। एवं वृद्धाम्भोयाः। अम्भसोऽपत्यम् 'सम्भसोऽम्भसोः सलोपश्च' (४.१.९६ग.सू. ६१) इति बाह्वादिषु पाठाद् इञ्, सलोपश्च। 'आदनपाणिनीयाः' इति। पणिनोऽपत्यमित्यण्, 'गाथिविदथि' (६.४.१६५) इति प्रकृतिभावात् 'टेः' (६.४.१४३) इति [3]टिलोपाभावः, पाणिनस्यापत्यं पाणिः युवेति इञ्, तस्य छात्रा इति विवक्षिते 'यूनि लुक्' (४.१.९०)इति इञो लुकि कृतेऽपि प्रत्ययलक्षणेन 'इञश्च'(४.२.११२) इत्यण् प्राप्तो गोत्राधिकारान्न भवति। 'कण्वादिभ्यो गोत्रे' (४.२ १११) इत्यत्र तावत् पारिभाषिकं गोत्रं गृह्यते, [4]'इतश्च'(३.४.१००) इत्यत्राप्यनुवर्तते, तेन [5]यूनीञ् न भवति। कश्यपशब्दो बिदादिः, [6]कतशब्दो गर्गादिः, जिह्वाकात्य हरितभक्षश्च कात्यस्ततोऽणेव भवति। कः पुनरत्र प्रत्ययातिदेशप्रस्तावः, यावता शेषाधिकारे 'प्राग्दीव्यतोऽ' (४.१.८६)इत्यत्र चैतद्वक्तव्यम्? सत्यम्। कैश्चित्तु[7] गोत्रान्तस्य वृद्धसञ्ज्ञा विहिता, एवमपि वृद्धाम्भीया इति सिद्धं वार्तिककारस्तु "वृद्धसञ्ज्ञायां सत्यां पिङ्गलकाण्वस्य छात्राः 'पैङ्गलकाण्वाः' इति [8]'वृद्धाच्छः' (४.२.११४) स्यात् प्रत्ययातिदेशे 'कण्वादिभ्यो गोत्रे' (४.२.१११) इत्यण् लभ्यते" इति मन्यमानः पूर्ववाक्येन [9]परमतमुपन्यस्यानेन वाक्ये निरस्यति [10]स्म, तदेव पठितं वृत्तिकारेण[11]॥

## ७४. त्यदादीनि च।

'उत्तरार्थम्' इति। [12]तत्र प्रयोजनवत्त्वात् यस्याचामादिरेङिति सम्बन्धसम्भवाच्च। 'इह तु न सम्बध्यते' इति अयोग्यत्वात् निर्धारणस्य सजातीयविषयत्वात् त्यदादीनां चाजात्मकत्वाभावात् न ह्यस्ति सम्भवः। 'यस्याचामादयस्त्यदाद इति। [13]न च त्यदादिस्थेऽचि त्यदादिशब्दो वर्तत इति क्लिष्टकल्पना युक्ता, उत्तरार्थमप्यनुवृत्तिसम्भवात्। तदुक्तम्- 'उत्तरार्थमनुवर्तते' इति। 'त्यादायनिः' इति। 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इति फिञ्, 'प्रत्ययोत्तरपदयोः' (७.२.९८)॥

## ७५. एङ् प्राचां देशे।

'प्राचां देशाभिधाने' इति। प्राचि देशे ये वसन्ति ते [14]प्राञ्चः पुरुषास्तेषां सम्बन्धी यो देशस्तदभिधान इत्यर्थः एतेन [15]श्रुतस्य विशेषणं प्राचां ग्रहणं [16]नाचार्याणामिति दर्शयति। तथा हि सति मतेनेत्यध्याहार्यं स्यादिति भावः 'एणीपचनीयः' इत्यादि। एणीपचनादिभ्यश्छः। 'दैवदत्ताः' इति। [17]'वाहीकग्रामेभ्यश्च' (४.२.११७) इति [18]वृद्धाधि विहितौ ठञ्ञिठौ न भवतः। काश्यादिपाठादपि न भवतः, तत्रापि वृद्धाधिकारात्। [19]एवं क्रोडो नाम [20]ग्रामस्तत्र क्रौडः इत्यणेव [21]भवति। कुणिना तु [22]प्राचांग्रहणमाचार्यनिर्देशार्थं व्याख्यातम्, भाष्यकारोऽपि तथैवाशिश्रियत्। ते सैपुरं स्कौनगरं च वाहीकग्रामौ, तत्र 'वाहीकग्रामेभ्यश्च' (४.२ ११७) इति ठञ्ञिठौ भवतः,—'सैपुरिकी, [23]सैपुरिका स्कौनगरिकी, स्कौनगरिका'। [24]अस्य व्यवस्थितविभाषाविज्ञानाच्च क्रोडदेवदत्तशब्दयोरप्राग्देश[25]वाचिनोष्ठञ्ञिठौ भवतः। [26]शैषिकेष्वेवार्थेष्वियं वृद्धसञ्ज्ञेष्यते। तेनापत्यविकारयोः 'उदीचां वृद्धादगोत्रात्' (४.१.१५७), 'नित्यं वृद्ध

1. असमस्तवदसमस्तात् 2. गोत्राद्य. 3. लोपाभावः 4. च इञश्च 5. यूनीञो 6. कतशब्दो गर्गादिः नास्ति 7. तु नास्ति 8. वृद्धत्वाच्छः 9. तन्मतमुपन्यस्यानेन 10. स्म नास्ति 11. अपि इत्यधिक 12. तत्र नास्ति 13. न च नास्ति 14. प्राचः 15. देशस्य 16. न त्वाचार्याणामिति 17. वाहीकग्रामेभ्यश्च इति नास्ति 18. वृद्धाधिकारविहितौ 19. एवं नास्ति 20. ग्रामः नास्ति 21. भवति नास्ति 22. प्राग्ग्रहणम् 23. सैपुरिका नास्ति 24. अस्य नास्ति 25. वाचिनो ठञ्ञिठौ 26. शैषिकेष्वर्थेषु

शरादिभ्यः' (४.३.१४४) इति वृद्धलक्षणप्रत्ययाभावः। एतदपि व्यवस्थितविभाषयैव सिद्धम्। वृत्तिकारपक्षे त्वेतत्सर्वं वचनात[1]साध्यम्। 'गौमताः' इति।

गोमती [2]प्राग्देशे [3]नदी देशग्रहणेन [4]न गृह्यते, 'नदीदेशोऽग्रामाः' इति नद्याः पृथग्ग्रहणात् 'एङ् प्राचां देशे' (१.१.७५) 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इत्यादिषु प्रागुदञ्चौ श्रुतौ, तयोर्विभागज्ञानार्थमाह—'प्रागुदञ्चौ' इति। शरावती नाम नदी उत्तरपूर्वाभिमुखो, तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः, [5]उत्तर-परस्यामुदग्देशः, तौ शरावती विभजते, तया मर्यादया तयोर्विभागो ज्ञायते। 'क्षीरोदकम्' इति। 'जातिरप्राणिनाम्' (२.४.६) इत्येकवद्भावः। क्वचित् 'क्षीरोदके' इति [6]पाठात्तत्र [7]नियतव्यक्तिविवक्षया [8]जातिपरत्वाभावात् [9]द्विवचनम्। [10]किमर्थं विभजते? विदुषां शब्दसिद्ध्यर्थम्। यद्यपि नद्या [11]एवमुद्देशो न भवति, विदुषां शब्दा व्यवस्थिताः [12]सिध्यन्ति, तथापि तया हेतुभूतया व्यवस्थितं शब्दसाधुत्वमिति [13]उद्देशोऽध्यारोप्यते। [14]सैवम्भूता सा नोऽस्मान् पातु। क्वचित् प्रागुदीचाविति पाठः, तत्र 'अचप्रत्यन्ववपूर्वात्' (५.४.७५) इत्यत्राजिति योगविभागादच्प्रत्ययः, 'उद ईत्' (६.४.१३९) इतीत्वम्। प्रागुदीचमिति पाठे समाहारद्वन्द्वः, 'द्वन्द्वाच्चुदषहान्तात्समाहारे' (५.४.१०६) इति टच्। क्वचित् प्रागुदीच इति पाठः, तत्रावयवबहुत्वस्य समुदाय आरोपः, प्राग्देशानुदग्देशांश्चेत्यर्थः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
प्रथमाध्यायस्य प्रथमः पादः ॥



1. सिद्धम् 2. प्राचां देशे 3. न च नदीदेशग्रहणेन 4. न नास्ति 5. उत्तरपूर्वस्यामुदग्देशः 6. पाठः 7. नियतद्रव्यविवक्षायां 8. ज्ञातिपरत्वाभावात् 9. द्विवंचनम् 10. किमर्थं नास्ति 11. एवमुपदेशो 12. सिद्ध्यन्त्विति 13. उपदेशोध्यारोप्यते 14. सैवंभूता इति मुद्रितः पाठः।

## १. गाङ्कुटादिभ्योऽञ्णिन्ङित् ।

कुट आदिर्येषामिति बहुव्रीहावन्तर्वर्तिन्या विभक्त्या पदत्वेऽपि जश्त्वं न भवति, अनुक्रियमाणरूपविना-
प्रसङ्गात् । अथ वा 'कुट कौटिल्ये' (धा. पा. १३६७) इति धातुपाठे योऽकारस्तेन सह सानुबन्धानुकरणं द्रष्टव्यम् ।

अत्र चत्वारः पक्षाः सम्भवन्ति—'इत्सञ्ज्ञकेन ङकारेण सह सम्बन्धप्रतिपादनम्, ङितो वा विधिः, सञ्ज्ञारू-
पम्, तद्वदतिदेशो वा' इति । तत्राद्ये पक्षे गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्ययो ङित् इत्सञ्ज्ञकङकारयुक्तः, इत्सञ्ज्ञको ङका-
रस्तस्यास्तीत्यर्थः । अत्र येषामस्ति ङकारो यङादीनां तेषु व्यर्थोऽनुवादः, येषां नास्ति तव्यादीनां तेषु मिथ्योद्यमित्युपक्र-
मात्रमयं पक्षः ।

अथ द्वितीयः—'गाङ्कुटादिभ्यः' इति पञ्चम्या 'अञ्णित्' इति प्रथमायाः षष्ठ्यां प्रकल्पितायां ङिदादे-
प्राप्नोति । अत्र प्रथमाया न च वैयर्थ्यम्, लाघवार्थत्वात् । तत्र ङिदिति कर्मधारये, असमासे वा 'आदेः परस्य' (१.१.५४)
इति तव्यादीनामादेर्ङकारः प्राप्नोति, कथं पुनरित्सञ्ज्ञको नामादेशः स्यात् स्वयं निवृत्त्यभिमुखः ? को दोषः ? स्थानि-
निवर्त्य निर्वर्तिष्यते ? स्यादेतत्—इदग्रहणसामर्थ्यादादेशो न भविष्यति, आदेशत्वे हि 'लशक्वतद्धिते' (१.३.८) इत्ये-
सिद्धेत्सञ्ज्ञेत्यागमो ङकारो विधास्यत इति, तन्न; अनेनेत्सञ्ज्ञा यथा स्यात् तेन मा भूदित्येवमर्थमिद्ग्रहणं स्यात् । कि-
पुनरत्र विशेषस्तेन वा सत्यामनेन वा ? अयमस्ति विशेषः—तेन सत्यां लोपः स्यात्, अनेन पुनर्न । तस्येति प्रकृतपरामर्श-
तस्यंतस्य प्रकृतस्येत्सञ्ज्ञकस्येति । एवं च श्रूयमाण एव ङकारे ङित्कार्याणि भवन्ति । तत्र 'नेड्वशि कृति' (७.२.८)
इत्यत्र वरमनादौ कृतीति यदि परिगणनम्, तदात्र प्रतिषेधाभावात् 'कुटिङ्गा कुटिङम्' इति प्राप्नोति । बहुव्रीहौ तु ये-
प्रसिद्धा ङितश्च ङादयस्त एव तृजादीनामादेशाः स्युः । न चान्तर्यतो व्यवस्था, यत्र खल्वन्तरतमस्यानन्त तमस्य
प्रसङ्गस्तत्रान्तरतमपरिभाषा । न चात्रान्तरतमानां तव्यङादीनां प्राप्तिः, लोके शास्त्रे वा तेषामप्रसिद्धेः । न चान्तरत-
परिभाषैव तान् कल्पयितुमर्हति, नियामकत्वात्तस्याः । सन्तु वा तव्यङादयः तेऽपि त्वादेशा भवन्तः 'ङिच्च' (१.१.५३)
इत्यन्तस्यैव स्युः । ननु च नात्र श्रौतः स्थान्यादेशभावः, किं तर्हि ? गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्ययो ङित् इत्सञ्ज्ञकङका-
युक्त इति सिद्धानुवादमात्राक्षरव्यापारः । स तु सिद्धानुवादो विधानमन्तरेण नोपपद्यते इति ङकारस्येत्सञ्ज्ञकस्य विधि-
कल्प्यते । किमतः ? यद्येवम्, इदं ततो भवति विधिवाक्यस्याश्रुतत्वात् क्व परिभाषाङ्गतामुपेयात्, 'षष्ठी स्थानेयोगा'
(१.१.४९) इति वा, 'आदेः परस्य' (१.१.५४) इति वा, 'ङिच्च' (१.१.५३) इति वा ? नैतदस्ति, यस्मात् षष्ठी-
प्रकल्पनेन श्रौत एव स्थान्यादेशभाव उपपादितः । अस्तु वा कल्पितविधानम्, य एव त्वसौ विधिः कल्प्यते, तत्रैव परि-
भाषाङ्गभावमुपैति, विध्यङ्गत्वात् परिभाषाणाम् । परिभाषाः खलु विधेरङ्गभूता अनुवादवाक्यश्रुतार्थान्यथानुपपत्त्या विधि-
वाक्यमेव कल्पन्ते इति सर्वथा दुष्ट एवायं पक्षः ।

सञ्ज्ञाकरणे 'क्ङिति च' (१.१.५) इत्यत्रास्य ग्रहणं न स्यात्, सञ्ज्ञारूपस्यानुच्चारितत्वात् । ङिच्छब्द-
सञ्ज्ञा, ङिच्छब्दश्चोच्चारितः प्रत्येकसम्बन्धमपीद्ग्रहणं क् इद् यस्येत्येतावदेव सम्पादयेत् । न वाऽन्वर्थाऽवयवद्वययुक्त-
सञ्ज्ञेति प्रत्यभिज्ञाभावात् क्ङित्प्रदेशेष्वस्य ग्रहणं न स्यादेव । तथा केवले ङिच्छब्द उच्चारिते तस्यैव ग्रहणं स्यात्, न
यङादीनाम्, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्' (व्या. प. ६) । ततश्च ग्रहिज्यादिसम्प्रसारणं गृह्णातीत्यादावेव
स्यात्, न जरीगृह्येत इत्यादौ । न च यङादीनां ङित्कारणस्य वैयर्थ्यम्, क्ङित्प्रदेशेषु यत्र सञ्ज्ञारूपं न प्रत्यभिज्ञायते तद्-
ग्रहणार्थत्वात् । ननु चैवं गाङ्कुटादिभ्यः परस्य ङित्सञ्ज्ञाविधानमनर्थकमापद्यते, कथम् ? क्ङित्प्रदेशेष्वस्य ग्रहणं नास्ती-
त्युक्तमेव । केवलश्च ङिच्छब्दो ग्रहिज्यादि (६.१.१६) सूत्रे एव, न च तत्र गाङ् गृह्यते, नापि सर्वे कुटादयः, किं तु
व्यतिरेक एव, सत्यम्, न्यायगतेऽर्थे किं कुर्मः ? त्यज्यतामयं पक्षः ।

तदेवमेतेषां पक्षाणां दुष्टत्वात् चतुर्थं पक्षमाश्रित्याह—'अतिदेशोऽयम्' इति । 'इङादेशो गृह्यते' इति । 'इङश्च'
(३.३.२१) 'गाङ् लिटि' (२.४.४९) 'विभाषा लुङ्लृङोः', (२.४.५०) इति विहितः । 'ङकारस्यानन्यार्थत्वाद्' इति ।

इङादेशस्य हि यो ङकारस्तस्यैतदेव प्रयोजनम्—इह तस्यैव ग्रहणं यथा स्यादिति। अथ सामान्यग्रहणं कस्मान्न भवति ? अप्रमाणत्वादादेशस्य। ङकारोऽन्यार्थः, आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्, धातोस्तु चरितार्थः। यद्येवम्, आब्ग्रहणे चाप एव ग्रहणं प्राप्नोति, पकारस्यानन्यार्थत्वात्, न; एवं हि चापोऽनुबन्धावनर्थकौ स्याताम्, टापश्च टकारः। अतो यच्च यावच्च समानं संभवति चरितार्थपित्त्वमचरितार्थपित्त्वमपि तत्सर्वमाश्रीयते, न चाब्रूपमेव यावत्। 'कुङ् शब्दे' (धा. पा. ९५१) इति। तदनन्तरं वृत्करणाद् 'आकूतम्' इति प्रयोगदर्शनात् 'कूङ् दीर्घान्तो ङिद्वद् भवतीत्यर्थः.' इत्यन्तरेणापि वतिं वत्यर्थो गम्यते, यथा 'सिंहो माणवकः' इति। यद्ययमतिदेश, 'असंयोगाल्लिट् कित्' (१.२.५) इति प्रकरणेऽपि कित्कार्यातिदेशोऽङ्गीकर्तव्यः, ततश्च 'सिसृक्षति' इत्यत्र सत्यपि 'हलन्ताच्च' (१.२.१०) इति सनः कित्त्वातिदेशे स्वाश्रयमकित्त्वमाश्रित्य 'सृजिदृशोः' (६.१.५८) इत्यमागमः प्राप्नोति। अतिदेशेन पराश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं निवर्त्यते। सिद्धं तु प्रसज्यप्रतिषेधात् किति न भवतीति। ततश्च स्वाश्रयस्य कार्यस्याभावादातिदेशिककित्त्वाश्रयः प्रतिषेधो भविष्यति। इह तर्हि 'उच्चुकुटिषति'—'ङितः' इत्यात्मनेपदं प्राप्नोति ? ङितो धातोरात्मनेपदमुच्यते, इह चातिदेशेन सन एव ङित्त्वम्, न धातोः। यत्र 'अवयवे लिङ्गमचरितार्थं तत्र समुदायस्य विशेषकं भवति' (हे. १०७), इह त्ववयव एव गुणप्रतिषेधादिकं ङित्त्वस्य प्रयोजनमस्ति। यङन्तादपि तर्हि न प्राप्नोति, तस्मान्नैवं शक्यं विज्ञातुम्—'ङितो धातोः' इति, ततश्चैकं सनमेव ङितमाश्रित्यात्मनेपदं प्राप्नोति ? नैष दोषः, सप्तमी समर्थाद्वतिः—'ङितीव ङिद्वत्'। ननु च नात्र वतिर्निर्दिश्यते, सत्यम्; परत्र परशब्दप्रयोगात् कल्प्यमानो वतिर्व्याख्यानात् सप्तम्यन्तादाश्रीयते। एवमपि प्रतियोगिनि सप्तमी प्राप्नोति—'अञ्णति' इति ? एवं तर्हि 'अनुदात्तङितः' (१.३.१२) इत्यत्र 'उपदेशे' इति वर्तते, उपदेशे यो ङित्, तत आत्मनेपदं भवति।

'अध्यगीषत' इति। 'विभाषा लुङ्लृङोः' (२-४-५०) इति गाङादेशः, 'आत्मनेपदेष्वनतः' (७-१-५) घुमास्थादिसूत्रेण (६-४-६६) इत्त्वम्।

'व्यचेः' इत्यादि। 'व्यच व्याजीकरणे' (धा. पा. १२९४) तुदादौ कुटादिभ्यः प्राक् पठ्यते। 'उद्विचिता' इति। ग्रहिज्यादिना (६.१.१६) संप्रसारणम्।

'उरुव्यचाः' इति बहुव्रीहिः। कथं विव्यचिथ ? 'असि' इति पर्युदासोऽयमसुन्प्रत्ययस्य कृत्वा तत्सदृशे कृति कार्यं विज्ञायते।

कथं लिखितुम्, स्वयमेव लिखिष्यते, यावता कुटेः पूर्वं लिखिः पठ्यते ? कश्चिदाह—"कुटस्यादिः, कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्चेति बहुव्रीहितत्पुरुषयोः सह विवक्षायाम् 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति बहुव्रीहेः शेषः। तत्र तत्पुरुषवृत्त्या संगृहीतो लिखिरपि ङित्त्वस्य निमित्तम्" इति। एवं तु लिखित्वा, लेखित्वा, लिलिखिषति, लिलेखिषति; 'शकुनिष्वालेखने' इत्यनुपपन्नं स्यात्। तस्माद्यवश्यमुपपादनीयम्—'संज्ञापूर्वको विधिरनित्यः' (व्या. प. ६४) इति गुणो न भविष्यति। 'धू विधूनने' (धा. पा. १३९९) कुटादिः, तस्य 'अर्तिलूधूसूखनसहचर इत्रः' (३.२.१८४) इतीत्रप्रत्यये गुणो न प्राप्नोति। नात्र गुण इष्यते, 'धुवित्रम्' इत्येव भवति, कल्पसूत्रकाराणां तु प्रयोगाश्छांदसत्वादुपपादनीयाः। अथ वा 'भञ्जभासमिदो घुरच्' (३.२.१६१) 'विदिभिदिच्छिदेर्ङिद्' इति वक्तव्ये प्रत्ययान्तरकरणं ज्ञापकम्—'आतिदेशिकं ङित्त्वमनित्यम्' (व्या. प. ९५) इति॥

## २. विज इट्।

'ओविजी भयचलनयोः' (धा. पा. १२९०) इति। यस्तु 'सृजिविजि विद्धयनिट्स्वरान्' इति विजिः, न स गृह्यते; अनिट्त्वात्। इतरस्तु ईदित्त्वसामर्थ्यात् सेट्, वृद्धसञ्ज्ञासूत्रात् (१.१.७३) यस्यादिरिति वर्तते, तेनेड् विशेष्यते—'यस्यादिरिड्' इति। तेनोत्तमैकवचनस्य ग्रहणं न भवति, न ह्यसौ कस्यचिदादिः। अत एवागममात्रस्यायं ङित्त्वविधिर्न भवति। किं तर्हि ? तदादेः प्रत्ययस्येत्याह—'इडादिः प्रत्ययः' इति। 'उद्विजिता' इति। ङित्वाल्लघूपधगुणाभावः॥

## ३. विभाषोर्णोः ।

'ऊर्णुञ् आच्छादने' (धा. पा. १०३९) ञिद्, नोपधः, 'रषाभ्याम्' (८.४.१) इति णत्वेन पाठः। प्रोर्णुनाव रेफवियोगेऽभ्यासात् परस्य नकारस्य श्रवणं भवति। 'प्रोर्णुविता' इति।[1] ङित्त्वपक्षे उवङ्. अन्यत्र गुणः ॥

## ४. सार्वधातुकमपित् ।

अपिदिति पर्युदासश्चेत्, च्यवन्ते इत्यत्र 'च्यु अ अन्ते' इति स्थिते नित्यत्वादन्तरङ्गत्वाच्चैकादेशः। न 'वार्णादाङ्गं बलीयः' (व्या. प. ३९), नानाश्रयत्वात्। तत्र कृते परस्येहापित् आश्रितत्वात्तं प्रत्यादिवद्भावात् पिदपितो- कादेशोऽपिद्ग्रहणेन गृह्यत इति शबेकादेशवतः सार्वधातुकस्य ङित्त्वाद् गुणनिषेधः प्राप्नोति। प्रसज्यप्रतिषेधे तु पित्त्वं मित्तो निषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवद्भावात् ङित्त्वाभावः। अस्तु तर्हि प्रसज्यप्रतिषेधः? यद्येवम्, तुदानीति विकरणोत्तमयोः पिदपितोरेकादेशः परस्य पितो ङित्त्वनिषेधे कर्तव्ये आदिवत् स्यात्, इत्यङितमुत्तममाश्रित्य ङ प्राप्नोति। 'अन्तादिवच्च' (६.१.८५) इत्यत्र पूर्वपरौ समुदायावभिप्रेतौ नाचौ। किं कारणम्? आद्यन्तयोरवयवतः स्थानिनोरचोरेकादेशेन निर्वर्तितत्वाच्च। अतः स्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी, एकादेशोऽपि तयोरेवान्ता- दिवद्भवतीत्ययमतिदेशार्थः। अत एव 'ब्रह्मबन्धूः' इत्यत्र एकादेशोऽपि प्रातिपदिकं प्रत्येवान्तवद्भवति, '[2]ध्रुवै तुवै' इत्य- च उत्तमैकवचने कृत्स्नयोरेव पिदपितोरेकादेश इति अचावेव प्रत्यादिवत्त्वे स्यादेव दोषः।

एवं तर्ह्येकादेशस्य पूर्वविधौ स्थानिवद्भावात् पक्षद्वयेऽपि यथा स्थानिकाले यथायोगं गुणस्य प्रवृत्तिनिवृत्ती भवतः, तथा कृतेऽप्येकादेशे स्थानिबुद्ध्या भविष्यतः।

एवमुभयोर्निर्दोषत्वेऽपि प्रसज्यप्रतिषेध एवाश्रयणीयः। तत्र हि—तदाश्रयणसामर्थ्याद्यच्च यावच्च पितो ङित्त्वं प्राप्तं तस्य सर्वस्य निषेधादिदमपि सिद्धं भवति—'अचिनोद्, अचिनवम्' इति। अत्र हि ङितो लङ आदेशस्य स्थानिवद्भावेन प्राप्तस्य[3] निषेधो भवति। पर्युदासे त्वतिदेशेनैकवाक्यत्वात् तस्यैव पर्युदासात् स्थानिवद्भावकृतं ङित्त्वं स्यादेवेति यासुटो ङिद्वचनं ज्ञापकमाश्रयणीयं स्यात्। किं च 'ङिच्च पिन्न भवति' इत्ययमप्यत्रार्थ इष्यते। [4]अतो न 'ब्रूताद्भवान्' इत्य- तातङः स्थानिवद्भावात् प्राप्तस्य पित्त्वस्य निषेधात् पिदाश्रयो ब्रुव इण् न भवति, 'तृण्ढाद्भवान्'—तृणह इम् भवतीत्येषा दिक्।

अत एतदर्थमपि प्रसज्यप्रतिषेध आश्रयणीयः। तत्र हि पृथक्कृतस्य नञो यथेष्टमभिसम्बन्धो भवति—पित् ङिन्न भवति, ङिच्च पिन्न भवति। तत्र यस्यौपदेशिकं पित्त्वं तस्यातिदेशप्राप्तं स्थानिवद्भावप्राप्तं च ङित्त्वं निषिध्यते, यस्य पुनरौपदेशिकं ङित्त्वं तस्य स्थानिवद्भावप्राप्तं पित्त्वं निषिध्यत इति विवेक्तव्यम्।

'कुरुते' इति। ङित्त्वाद्विकरणस्य गुणाभावः, 'अत उत् सार्वधातुके' (६.४.११०) इत्युत्त्वं च भवति। अत्र तृतीयासमर्थाद् वतिराश्रयणीयः, न पूर्ववत् सप्तमीसमर्थात्। तेन पचेते इत्यत्र 'आतो ङितः' (७.२.८१) इति ङितो यत्कार्यं तदपि भवति। यद्येवं, चिनुत इति 'तास्यनुदात्तेत्' (६.१.१८६) इति लसार्वधातुकानुदात्तत्वं प्राप्नोति। नैष दोषः, उपदेशग्रहणमुभाभ्यामपि सम्बध्यते—'ङिदुपदेशात्, अदुपदेशाद्' इति। 'अह्न्वि[5]ङ्कोः' इति वा पर्युदासात् तत्सदृशस्योपदेशे इकारवतो ग्रहणमिति सर्वमनवद्यम् ॥

## ५. असंयोगाल्लिट् कित् ।

लिटाऽऽक्षिप्तो धातुरसंयोगग्रहणेन विशेष्यत इत्याह—'असंयोगान्ताद्धातोः' इति। ननु चात्र पर्युदासत्वमुक्तं प्रतीयते, ततश्च संयोगान्तसदृशाद् हलन्तादेव स्यात् 'बिभिदतुः, बिभिदुः' इत्यादौ, 'निन्यतुः' इत्यादौ तु न स्यात्।

1. ङिद्वद्भवति इति पाठः 2. च्यवै तुदे 3. अपि ङित्त्वस्य इत्यधिकम् 4. तेन 5. अङ्किङोरिति

ज्ञापकात् सिद्धम् । यदयम् 'ऋतश्च संयोगादेर्गुणः (७.४.१०) इति 'सस्मरतुः' इत्यादौ गुणं विधत्ते, तज्ज्ञापयति—'नात्र नञिवयुक्तन्यायो धातुमात्रस्यैव ग्रहणम्' इति । ङित्त्वे प्रकृते कित्त्वातिदेशस्य प्रयोजनम्—'[1]ईजनम्, ईजतुः, ईजुः', यजादीनां कितीति सम्प्रसारणं यथा स्यात्; 'जजागरतुः, जजागरुः'—'जाग्रोविचिण्णल्ङित्सु'(७.३.८५) इति गुणो यथा स्यात् । यदि पुनर्गाङ्कुटादिभ्योऽपि कित्त्वमेवातिदिश्येत नैवं शक्यं, इह हि दोषः स्यात्—'णु स्तुतौ'(धा. पा. १०३५)'धू विधूनने' (धा. पा. १३९८), तृच्, [2]नुविता [3]धुविता—'श्र्युकः किति' (७.२.११) इतीट्प्रतिषेधः प्राप्नोति । यथा लूत्वा, लूनः? नैष दोषः; पूर्वस्य कार्यातिदेशोऽयमित्युक्तम् । इह तर्हि 'कुटित्वा, पुटित्वा'—'न क्त्वा सेट्' (१.२.१८) इत्यातिदेशिकस्यापि कित्त्वस्य प्रतिषेध स्यात् ? ननु च सनि झल्ग्रहणं ज्ञापकं वक्ष्यते—'न क्त्वा सेट्' (१.२.१८)इति निषेधो नातिदेशिकस्य भवतीति । सत्यम्, असति क्त्वाग्रहणे, सति तु तस्मिन् सनः 'न क्त्वा सेट्' (१.२.१८) इति निषेधो न लभ्यते इत्यज्ञापकं तत्र झल्ग्रहणम् । तथा 'सार्वधातुकमपित्' (१.२.४) इति कित्त्वातिदेशे 'जागृतः, जाग्रति' इति गुणः स्यात्, ङित्त्वातिदेशे "[4]त्वविचिण्णल्ङित्स्विति पर्युदासो भवति । 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' (कात्या. वा. २५९३) । कित्त्वस्यावकाशः—'[5]ईजतुः, ईजुः' न ह्यत्र विध्यन्तरस्य कस्यचित् प्रसङ्गः, गुणस्यावकाशः—'वर्तित्वा, वर्धित्वा, ववृते, [6]ववृधुः' इत्यत्रोभयप्रसङ्गे कित्त्वं भवति पूर्वविप्रतिषेधेन । इह तु 'बिभिदतुः, बिभिदुः', नित्यत्वादेव कित्त्वं सिद्धम्; तद्धि कृतेऽपि गुणे प्राप्नोत्यकृतेऽपि, गुणस्तु कित्त्वे सति न प्राप्नोति । 'ववृते' इत्यत्र तु गुणे कृते संयोगान्तत्वात् कित्त्वं न प्राप्नोतीत्युभयमनित्यमिति पूर्वविप्रतिषेध उच्यते । स चायं कार्यातिदेशपक्षे स्फुटमेव वक्तव्यः । तथा हि—अनेनैव कित्कार्यातिदेश 'ईजतुः' इत्यादौ । यत्र विध्यन्तरस्याप्रसङ्गस्तत्र सम्प्रसारणमतिदिश्य चरितार्थमतिदेशं परत्वाद् गुणो बाधेत । शास्त्रातिदेशे वा 'क्ङिति च' इत्येतच्छास्त्रमतिदिश्यते, तच्च यद्यपि गुणस्यापवादभूतम्, तथाप्यन्यत्र चरितार्थत्वाद् दुर्बलेनातिदेशेनातिदिष्टः 'क्ङिति च' इति प्रतिषेधो दुर्बल इति तं बाधित्वा गुणः स्यादेव ॥

## ६. इन्धिभवतिभ्यां च ।

इन्धेरागन्तुक इकारो न तु 'इक्श्तिपौ धातुनिर्देशे' (वा. ३१९) इतीक् प्रत्ययः, तेन 'अनिदिताम्' (६.४.२४) इति नलोपो न भवति । 'समीधे' इति । 'ञिइन्धी दीप्तौ' (धा. पा. १४४८) अनुदात्तेत्, एशः कित्त्वात् 'अनिदिताम्' (६.४.२४) इत्युपधालोपद्विर्वचने सवर्णदीर्घत्वम् । 'बभूविव, बभूविथ' इति कित्त्वाद्यथाक्रमं वृद्धिगुणौ न भवतः । इन्धेः संयोगार्थमित्यादिना पूर्वेणासिद्धिं दर्शयन् सूत्रारम्भं समर्थयते ।

'अयं योगः शक्योऽवक्तुम् । कथम्' (म. भा. १.१९४) ? इन्धेरनन्तरश्छन्दस्येव लिड् भवति, भाषायां त्विजादेश्चेत्यामा भवितव्यम् [7]छन्दसि च 'छन्दस्युभयथा' (३.४.११७) इति लिटः सार्वधातुकसंज्ञा, 'सार्वधातुकमपित्' (१.२.४) इति ङित्त्वादुपधालोपः । श्नमि तु कर्तव्य आर्धधातुकसंज्ञा, छान्दसत्वाद्वा श्नमभावः । भवतेरपि 'भुवो वुग्लुङ्लिटोः' (६.४.८८) इति वुग् विधीयते, तत्र 'भू अ, भू इथ' इति स्थिते वुक् प्राप्नोति । वृद्धिगुणौ च; कृताकृतप्रसङ्गित्वेन नित्यो वुक् । न च शब्दान्तरप्राप्तिः, एकदेशविकृतस्यानन्यत्वात् (व्या. प. १६), वुकि च कृतेऽनजन्तत्वावलघूपधत्वाच्च वृद्धिगुणौ न भविष्यतः । अवश्यं चैतदेवं विज्ञेयम् 'वुका वृद्धिगुणौ बाध्येते' इति । यो हि मन्यते—'कित्त्वादिसे गुणवृद्धी न भविष्यतः' इति, तस्य णलि वृद्धिः स्यादेव । न हि 'अचो ञ्णिति' (७.२.११५) इति वृद्धेः किति नेति प्रतिषेधः, अनिग्लक्षणत्वात् । एवं तर्हि ज्ञापकार्थमिन्धिग्रहणम् । एतज् ज्ञापयति—'इन्धेर्भाषायामप्यनित्य आम्' इति, 'समीधे, समीधाञ्चक्रे' इति भाषायामपि भवति ।

भवतेरपि वुगनित्यः, किं कारणम् ? उरिति वर्तते, न च गुणवृद्धयोः कृतयोरुवर्णान्तो भवतिर्भवति, उरिति निर्वर्तिष्यते । यदि निवर्तते, 'बोभाव,[8] 'अहं किल बोभव' यङ्लुक्यपि नित्यत्वात् वुक् प्राप्नोति । अनुवर्तमाने पुनरुरित्यस्मिन् उभयोरनित्ययोः परत्वाद् गुणवृद्धयोः कृतयोरनुवर्णान्तत्वाद् वुङ्[9]न भवति ।

---

1. ईजनम् नास्ति 2. नुविता 3. धुविता 4. त्वविचिस्मल्ङित्स्विति 5. ईजतुः ईजुः 6. ववृध 7. छन्दसि च नास्ति 8. बोभविथ इत्यधिकम् 9. न नास्ति

अथेदानीं यङ्लुक्यप्यनेनैव लिटः कित्त्वं कस्मान्न भवति ? श्तिपा निर्देशात् । यदि पुनर्वुग्विधावेव श्तिपा निर्देशः क्रियते, नैवं शक्यम् । इह हि दोषः स्यात्—'बोभूवतुः, बोभूवुः' । यदा पुनः कित्त्वविधौ श्तिपा निर्देशः क्रियते, वुग्विधौ, तदा यङ्लुकि पित्सु वचनेषु लिटः कित्त्वाभावाद् गुणवृद्धयोः कृतयोरुरित्यधिकाराद् वुङ् न भवति । अपित्सु वचनेषु 'असंयोगाल्लिट् कित्' (१.२.५) इति कित्त्वे सति गुणाभावादुवर्णान्तत्वाद् वुग् भवति । ननु चोक्तम्—'आरभ्यमाणेऽपि कित्त्वे वृद्धेः प्रतिषेधो न सिद्धयति, अनिग्लक्षणत्वाद्' इति, नैष दोषः । ङिद्ग्रहणमप्यनुवर्तते, तत्सामर्थ्यादनिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति, । सत्यम्, अस्त्ययं शुष्कस्तर्कः । वार्तिककारस्तु न क्षमते, यदाह—'इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' (कात्या. वा. ५९४) इति ।

'श्रन्थिग्रन्थि' इत्यादि । 'श्रन्थ ग्रन्थ संदर्भे' (धा. पा. १५१२, १५१३), 'दम्भु दम्भे' (धा. पा. १२७०) 'ष्वञ्ज परिष्वङ्गे'(धा. पा. ९७६)। 'श्रेथतुः, श्रेथुः' इति कित्त्वादुपधालोप, एत्वाभ्यासलोपावप्यत्र वक्तव्यौ । 'देभतुः' इति । नलोपे कृते 'अत एकहल्मध्येऽनादेशादेः' (६.४.१२०) इत्येत्वाभ्यासलोपौ । न च लोपस्यासिद्धत्वम्, आभाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वात् । 'परिषस्वजे' इति । 'ष्वञ्ज परिष्वङ्गे', (धा. पा. ९७६) अनुदात्तेत्, 'उपसर्गात्सुनोति' (८.३.६५) इति षत्वम्, 'सदिस्वञ्ज्योः परस्य लिटि' (८.३.११८) इति परस्य प्रतिषेधः । अत्र केचिद्वेति पठन्ति, शश्रन्थतुरित्याद्यपि भवति । अथ पित्सु वचनेषु कथम् ? यदि संयोगार्थमेव वचनम्, पित्सु न भाव्यम् । अथ संयोगान्तार्थं पिदर्थं च ? पित्स्वपि भाव्यम् । किं पुनरत्रार्थतत्त्वम् ? देवो ज्ञातुमर्हति ॥

## ७. मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।

'क्लिश हिंसायाम् (धा. पा. ११६१) अनुदात्तेत्, दिवादिरकर्मकः; 'क्लिशू विबाधने' (धा. पा. १५२१) क्र्यादिः सकर्मकः, परस्मैपदी, द्वयोरपि ग्रहणम् । किमर्थं पुनरिदम्, तावता किदेव हि क्त्वा ? तत्राह—'न क्त्वा सेट्' इत्यादि । अपकर्षः अपवादः । नन्विदमेव नियमार्थं भविष्यति—'मृडादिभ्य एव क्त्वा किद्भवति नान्येभ्यः' इति नार्थः 'न क्त्वा सेट्' (१.२.१८) इत्यनेन; कथं लूत्वा, पूत्वा—तुल्यजातीयस्य सेटो नियमः ? ननु 'क्लिशः क्त्वानिष्ठयोः' (७.२.५०) इति विकल्पेनेड्विधानादनिट् क्त्वा सम्भवति । एवं तर्हि मृडमृदवदवसां कित्त्वविधानं नियमार्थम्, इतरेषां तु 'रलो व्युपधात्' (१.२.२६) इति विकल्पबाधेन विधिसम्भवान्नियमो न भविष्यति । एवमपि विपरीतोऽपि नियमः स्यात्—मृडादिभ्यः क्त्वैव किदिति ।

'उदित्वा, उषित्वा' इति । यजादित्वात् सम्प्रसारणम्; 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम्, 'वसतिक्षुधोरिट्', (७.२.५२) ॥

## ८. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।

'सन्नर्थम्' इति । तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥

## ९. इको झल् ।

सनाक्षिप्तस्य धातोरिका विशेषणात्तदन्तविधिर्भवतीत्याह—'इगन्ताद्धातोः' इति । 'इक् स्मरणे' (धा. पा. १०४७) इत्यस्य तु धातोर्ग्रहणं न भवति, न ह्यतः परो झलादिसन् सम्भवति । कथम् ? 'इणो गा लुङि' (२.४.४५) 'णौ गमिरबोधने' (२.४.४६), 'सनि च' (२.४.४७) 'इण्वदिक इति वक्तव्यम्' (वा. १६७) 'गमेरिट् परस्मैपदेषु' (७.२.५८)—'अधिजिगमिषति' । ननु च भावकर्मणोरात्मनेपदे 'अनुदात्तोपदेश' (६.४.३७), इत्यनुनासिकलोपार्थमेतत् स्यात्, तत्र तु रूपे विप्रतिपत्तिः, गमेरिङादेशस्य ग्रहणमिति वचनात् 'अज्झनगमां सनि' (६.४.१६) इति दीर्घो न भवति—'अधिजिगंस्यते' इति केचित् ।

अन्ये त्वाहुः—'अज्झनगमां' (६.४.१६) इत्यत्राज्ग्रहणं न कर्तव्यम् । कथम् ? 'सनि दीर्घः' इत्येको योगः, 'अचश्च' (१.२.२८), एवं सिद्धेऽज्ग्रहणं प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्—अजादेशस्य गमेरिति, तेनास्यापि दीर्घेण भाव्यम्, अजादेशत्वात्—'अधिजिगांस्यते' इति रूपमिति । तदेवं धातोरपि ग्रहणं युक्तमेव । एवं तर्हि झला साहचर्याद् गर्गादिषु जिगीषुशब्दस्य पाठाच्च प्रत्याहारस्य ग्रहणमुत्तरसूत्रे च इक्समीपाद्धलः परः इत्यनुपपन्नं धातुग्रहणे । 'झलादिः' इति । कथं पुनः सत्सप्तमीनिर्देशे तदादिविधिः शक्यो विज्ञातुम् ? झलमात्रस्य सनोऽसम्भवात् । ननु च चिकीर्षितेत्यादावतो लोपे सति सम्भवति, अपूर्वविधित्वाच्च न लोपस्य स्थानिवत्त्वम् । एवं तर्हि वृद्धसञ्ज्ञासूत्राद्यस्यादिरिति वर्तते सन् किद्भवति, कीदृशः ? 'यस्य झलादिः' इति । एतेन तदन्तविधिरपि निरस्तो वेदितव्यः । 'चिचीषति' इति । 'एकाच' (७.२.१०) इतीट्प्रतिषेधः । 'तुष्टूर्षति' इति । 'शर्पूर्वाः खयः' (७.४.६१) । 'शिशयिषते' इति । 'पूर्ववत्सनः' (१.३.६२) ।

'किमर्थम्' इति । योगविभागविषयः प्रश्नः । सूत्रं तूत्तरार्थं कर्तव्यम् । 'दीर्घत्व गुणस्य बाधकं भविष्यति' इति । ननु 'कुङ् शब्दे' (धा. पा. ९५१) कुटादिः, 'चुकूषते इत्यस्ति दीर्घस्यावकाशः । दीर्घान्तोऽयमित्यवोचाम । इह तर्हि 'गु पुरीषोत्सर्गे' (धा. पा. १३९९) 'ध्रु गतिस्थैर्ययोः' (धा. पा. १४००) कुटादी, 'जुगूषति, दुध्रूषति' । एवमपि प्रत्याहारग्रहणमनर्थकम् 'उतो दीर्घः' इति वक्तव्यम् । अस्ति प्रत्याहारग्रहणे प्रयोजनम्, किम् ? प्रतिभेदेन गमिमपि विशेषयिष्यामीति । यद्येतावत्प्रयोजनं स्यात् 'उतो दीर्घः' इत्युक्त्वा 'इङ्हन्योरिति वक्तव्यम्—येषां गमेरिङादेशस्य ग्रहणमिति पक्षः । येषामनिङादेशस्यापि ग्रहणं तेषामिहन्योरिति वक्तव्यं, हना साहचर्यादिरिति धातुर्गृह्यते, नेकारः, तस्मादज्ग्रहणसामर्थ्याद्दीर्घत्वं गुणस्य बाधकं भविष्यतीति सुष्ठूक्तम् । यथैव तर्हि झलादौ गुणो बाध्यते, एवमिङादावपि बाध्येत—'जिजविषयति', नात्र दीर्घं प्रवर्तते, किं कारणम् ? झलिति वर्तते, 'अनुनासिकस्य क्विझलोः' (६.४.१५) इति । 'यथैव तर्हि' इत्यादि । असति हि कित्त्वे नाप्राप्ते विध्यन्तरे आरभ्यमाणं दीर्घत्वं यथा गुणं बाधते एवं णिलोपमपि बाधेत ।

ननु यत्र नाप्राप्ते तस्य बाधकः, क्व च नाप्राप्ते ? दीर्घ आरभ्यते गुणे, णिलोपे तु ज्ञीप्सति इत्यत्र प्राप्ते, 'चिचीषति' इत्यत्राप्राप्ते, पाक्षिक एष परिहारः । यत्र बाध्यं भेदेनापेक्ष्यते—'इदमस्मिन्विषये प्राप्तमिदमस्मिन्विषये' इति तत्रैकबाधेनोपपत्तौ सत्यामनेकबाधो न न्याय्य इति किमेकं बाध्यतामित्यपेक्षायां 'येन नाप्राप्ते स बाधनीयः' (व्या. परि. ४९) इत्युच्यते । एवं ह्यपेक्षितविधिर्भवति । यदि तु 'नाप्राप्ते विध्यन्तरे इदमारभ्यते' इति कार्यसामान्यमपेक्ष्यते, तदा सर्वमेव बाधनीयम् । एतेन पुरस्तादपवादन्यायेन णिलोपमेव दीर्घत्वं बाधेत, न गुणमित्यपि चोद्यं निरस्तम्; यस्मादयमपि न्यायः कार्यसमान्यचिन्तायां नास्त्येव । अतः सुष्ठूक्तम्—'णिलोपमपि बाधेत' इति । 'दीर्घत्वस्यावकाशदानाय' इति । एतदेव स्फुटयति 'चिचीषति इत्यादिषु' इति । सति हि कित्त्वे 'चिचीषति' इत्यादौ कित्त्वेनैव गुणो बाध्यते, न दीर्घेणेत्यबाधित्वैव विध्यन्तरं सावकाशो दीर्घः परत्वाण्णिलोपेन बाध्यत इत्यर्थः । 'ज्ञीप्सति' इति । 'मारणतोषणनिशामनेषु ज्ञा', (धा. पा. ८११), 'ज्ञप मिच्च', इति चुरादिषु पाठात् णिचि पुकि 'मितां ह्रस्वः' (६.४.९२), सन्, 'सनीवन्तर्ध' (७.२.४९), इतीडभावपक्षे 'आप्ज्ञप्यृधामीत्' (७.४.५५) इतीत्त्वम्, 'अत्र लोपोऽभ्यासस्य' । (७.४.५८)

किमर्थो योगविभाग इत्याशङ्क्य प्रयोजनमाह—'इकः कित्त्वम्' इत्यादि । गुणो मा भूदित्येवमर्थमिक उत्तरस्य सनः कित्त्वं विधीयत इत्यर्थः । दूषयति—'दीर्घारम्भात्' इति । गुणो न भविष्यतीति शेषः । 'कृते भवेत्' इति । शास्त्रमावर्तमानं जपादिवद् धर्मे साधनमिति भावः । 'अनर्थकं तु' इति । शास्त्रपूर्वकात् प्रयोगाद्धर्मो न तु प्रवृत्तिमात्रादिति भावः । ननु च 'सनि मीमाघु' (७.४.५४) इत्यत्र मिनोतेरपि मीग्रहणेन ग्रहणार्थं दीर्घविधिः स्याद्, मा भूत् मीग्रहणेन ग्रहणम्, 'मीनातिमिनोतिदीङां ल्यपि च' (६.१.५०) इत्यात्वे कृते 'गामादाग्रहणेष्वविशेषः' (व्या. प. १२४) इति माग्रहणेन ग्रहणं भविष्यति; तत्रायमप्यर्थो मीग्रहणमपि न कर्तव्यं भवति । 'ह्रस्वार्थम्' इति ह्रस्वानामेव दीर्घविधानसामर्थ्याद् गुणो न स्यात्, दीर्घाणां तु पुनः प्राप्नोति—लुलूषति; न हि दीर्घान्तेषु दीर्घशास्त्रं प्रवर्तते, पूर्वमेव तद्रूपसद्भावादिति भावः ।

'सामर्थ्याद्धि पुनर्भाव्यम्' इति । सामर्थ्यम् प्रयोजनसद्भावः, यथा 'मो राजि समः क्वौ' (८.३.२५) इति मकारस्यैव मकारो विधीयते । विकारान्तरं मा भूदिति, तथा दीर्घस्यापि गुणो मा भूदिति पुनर्दीर्घो भविष्यति । यदि तर्हि

प्राप्नुवन्विधिः दीर्घेण बाध्यते, ऋदित्त्वमपि न प्राप्नोति —'चिकीर्षति'। तत्राह—'ऋदित्त्वं दीर्घसंश्रयम्' इति। दीर्घः संश्रयो निमित्तं यस्य तत्तथोक्तम्। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। न चात्राकृते दीर्घे ऋदित्त्वं प्राप्नोति। इह तर्हि—'तितीर्षति', अकृतेऽपि दीर्घत्वे ऋदित्त्वं प्राप्नोतीति ऋदित्त्वनिवृत्त्यर्थं दीर्घत्वं स्यादत आह—'दीर्घाणां नाकृते दीर्घे', इति। दीर्घाणामप्यकृते दीर्घत्वे ऋदित्त्वं न प्राप्नोति। किं कारणम्? इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन, अतो यावद्दीर्घेण गुणो न बाधितः, तावदित्त्वं न प्राप्नोति। तस्मान्नार्थ एतेनेति स्थिते प्रयोजनमाह—'णिलोपस्तु' इति॥

## १०. हलन्ताच्च।

'समीपवचनोऽन्तशब्दः' इति। अवयववचनस्तु न भवति, धातावन्यपदार्थे 'येन विधिस्तदन्तस्य' (१.१.७२) इत्येव तदन्तविधेः सिद्धत्वात्। इकस्त्वन्यपदार्थत्वं नैव सम्भवति, न हि वर्णो वर्णान्तरस्यावयव उपपद्यते। 'हल् चासावन्तश्च' इति। कर्मधारयं दर्शयति। निपातनाद्विशेषणस्य परनिपातः। तत्र च कस्यान्तो हलित्यपेक्षायाम् 'इकः' इति पञ्चम्यन्तं सन्निहितं षष्ठ्यन्तं विपरिणम्यत इत्याह—'इगन्तात्' इति। इकमपेक्षमाणस्याप्यन्तशब्दस्य नित्यसापेक्षत्वात् सूत्रे कर्मधारयः, बहुव्रीहौ तु धातोरन्यपदार्थत्वं नैव सम्भवति अन्तशब्दो हि नियतदेशमेव समीपमाचष्टे परं नाम, न समीपमात्रम्। न च धातोः परसमीपावस्थिते हलि ततः परः सन् सम्भवति। इकि त्वन्यपदार्थे—यस्येकः परसमीपे हल् न तस्यानन्तरः सन् सम्भवतीत्येकेन हला व्यवधाने विज्ञायेतेति 'धिप्सति' इत्यत्र न स्यात्। हलिति जातिग्रहणात् सिद्धावपि प्रतिपत्तिगौरवप्रसङ्गः। ननु च मा भूदन्तग्रहणम्, 'हलः' इत्येवास्तु, इका हल् विशेष्यते, तेन च धातुः— इकः परो यो हल् तदन्ताद्धातोरिति। न चैवमत्र शङ्कनीयम्—"असत्यन्तग्रहणे इग्वतो हलन्तादिति विज्ञायेत, ततश्च यजेः सन् 'सन्यतः' (७.४.७९) 'यियक्षते' इत्यत्रापि कित्त्वे सति सम्प्रसारणं प्राप्नोति" इति। न हीक्शब्दस्य मुख्येऽर्थे सम्भवति तद्वति वृत्तिर्युक्ता। किञ्च 'इग्वतः' इत्यस्य व्यावर्त्यमपि न सम्भवति। यायज्यतेः सनि यायजिषत इत्यत्र सन्न झलादिः। तस्मादन्तग्रहणं चिन्त्यप्रयोजनम्।

इह 'धीप्सति' इति य इक्समीपे हल् नकारो न ततः परः सन्, यतश्च परः सन् भकारात् न स इक्समीपे इति कित्त्वं न स्यादित्याह—'दम्भेः' इति। दम्भेरपि परस्य सनः कित्त्वं सिद्धम्। कुतः? हल्ग्रहणस्य जातिवाचकत्वात्। 'तत्प्रयोजकः' (१.४.५५) इतिवत् समासः। जातिवाची हल्शब्दः, एकैव च जातिर्नकारभकारयोः। व्यक्तिद्वारकं च जातेरिक्समीपत्वं तदपेक्षयाऽत्र सनः परत्वम्। भकारव्यक्तिरिक्समीपे वर्तते इति जातिरपि वर्तते, भकारव्यक्तेः परः सन्निति जातेरपि परः। विपर्ययस्तु सन्नपि शास्त्रेणानाश्रितत्वादकिञ्चित्करः। नकारव्यक्तिरिक्समीपे न वर्तत इति जातिरपि न वर्तते। नकारव्यक्तेः परः सन्न भवतीति जातेरपि परो न भवतीति। 'धीप्सति' इति। 'दम्भ इच्च' (७.४.५६) कित्त्वादुपधालोपः, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (८.२.३७) इति भष्भावः, द्विर्वचनम्, 'अत्र लोपोऽभ्यासस्य' (७.४.५८)॥

## ११. लिङ्सिचावात्मनेपदेषु।

'आत्मनेपदेषु परतः' इति। एतत्सिच एव विशेषणम्, न लिङ्परस्मैपदस्य, झल्ग्रहणानुवृत्त्यैव व्यावर्तितत्वात्। 'भित्सीष्ट' इति। भिदिः स्वरितेत्, 'लिङः सीयुट्' (३.४.१०२) 'सुट् तिथोः' (३.४.१०७) 'भुत्सीष्ट' इति। बुधिरनुदात्तेत्, पूर्ववद् भष्। 'अबुद्ध' इति। 'च्लेः सिच्' (३.१.४४) 'झलो झलि' (८.२.२६) 'झषस्तथोर्धोऽधः' (८.२.४०) 'झलां जश् झशि' (८.४.५३) इति धकारस्य दकारः। 'यक्षीष्ट' इति। स्वरितेत्त्वादात्मनेपदम्। व्रश्चादिषत्वम्, 'षढोः कः सि' (८.२.४१)। 'अद्राक्षीत्' इति। अमागमे यणि च कृते 'वदव्रज' (७.२.३) इत्यकारस्य वृद्धिः॥

## १२. उश्च ।

लिङ्सिज्भ्यामाक्षिप्तस्य धातोरुरित्यनेन तदन्तविधिरित्याह—'ऋवर्णान्तात्' इति । 'ऋ गतौ' (धा. पा. १०९८) इत्यस्य तु ग्रहणं न भवति; 'सर्तिशास्त्यर्तिभ्यश्च' (३.१.५६) इत्यङो विधानेन सिचोऽसम्भवात् । नन्वङ्विधौ कर्तरीत्यनुवृत्तेः कर्मणि सिजपि सम्भवति । एवं तर्हि शैलीयमाचार्यस्य यत्रास्य धातोर्ग्रहणमिच्छति तत्र श्तिपा निर्देशं करोति—'अर्तिपिपर्त्योश्च' (७.४.७७) 'सर्तिशास्त्यर्त्तिभ्यश्च' (३.१.५६) 'गुणोर्तिसंयोगाद्योः' (७.४.२९) इति, नैतदस्ति; 'स्मिपूङ्रञ्ज्वशां सनि' (७.२.७४) 'ऋच्छत्यृताम्' (७.४.११) इति स्वरूपेणापि ग्रहणं दृष्टम् । एवं तर्हि व्याप्तिन्यायाद्वर्णग्रहणम् । 'अकृत' इति । 'ह्रस्वादङ्गात्' (८.२.२७) इति सिचो लोपः । 'अवरिष्ट' इति । 'लिङ्सिचोरात्मनेपदेषु' (७.२.४२) इतीट् ॥

## १३. वा गमः ।

'सङ्गंसीष्ट' इति । 'समो गम्यृच्छि' (१.३.२९) इत्यात्मनेपदम् ॥

## १४. हनः सिच् ।

सौत्रत्वान्निर्देशस्याल्लोपो न कृतः । 'आहसत' इति । 'आङो यमहनः' (१.३.२८) इत्यात्मनेपदम्, 'आत्मनेपदेष्वनतः' (७.१.५) इत्यदादेशः । 'सिज्ग्रहणं लिङ्निवृत्त्यर्थम्' इति । प्रकृतं सिज्ग्रहणं लिङ्सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः ।

ननु च 'हनो वध लिङि' (२.४.४२) इति लिङि वधादेशो नित्यः । 'घानिषीष्ट' इति चिण्वदिटि वधादेशाभावेऽप्यझलादित्वादप्रसङ्गस्तत् किं लिङ्निवृत्त्येत्यत्राह—'उत्तरत्र' इति । उत्तरार्थमवश्यं सिज्ग्रहणं कर्तव्यम्, तदिहैव क्रियते, न्यायानुसरणे प्रतिपत्तिगौरवं मा भूदित्येवमर्थमित्यर्थः ।

'आत्मनेपदग्रहणम्' इत्यादि । यमः परस्मैपदेषु 'यमरमनमाताम्' (७.२.७३) इति सगिटौ भवत इति झलादिः सिज् न भवति । उपयमने तु नित्यमात्मनेपदम्, स्थाघ्वोः परस्मैपदेषु सिचो लुग् भवति । 'वा गमः' (१.२.१३) इत्यत्रापि परस्मैपदेष्वङ् भवति, लिङि यासुट्निवृत्त्यर्थमेव च झल्ग्रहणमनुवर्त्यम् । एवमस्मिन्नपि 'अघानिषाताम्' इति चिण्वदिटि मा भूदिति । तदेवम् 'वा गमः' (१.२.१३) इत्यारभ्यात्मनेपदग्रहणं चिन्त्यप्रयोजनम् । किमर्थं पुनरिदम् ? यावता आत्मनेपदं ङिति सिजन्तस्याङ्गस्य 'अनिदिताम्' (६.४.२४) इत्येव नलोपः सिद्धः, उच्चारणार्थो हि सिच इकारः, नानुबन्धः । ज्ञापनार्थम् । एतज्ज्ञापयति—'न सिजन्तस्योपधालोपो भवति' इति । तेन 'अमंस्त' इति सिद्धं भवति । ननु च सिचि 'अनुदात्तोपदेश:' (६.४.३७) इति लोपो यथा स्यात्, आत्मनेपदे उपधालोपो मा भूदित्येवमर्थमिदं स्यात् । कः पुनरत्र विशेषः—सिचि वा लोपो भवतु, आत्मनेपदे वा ? अयमस्ति विशेषः—आत्मनेपदे लोपे सति 'अतो लोपः' (६.४.४८) प्राप्नोति, सिचि तु न, आभीयस्यानुनासिकलोपस्यासिद्धत्वात् । यद्यपि उपधालोपोऽप्याभीयस्तथापि व्याश्रयत्वादसिद्धत्वं न प्राप्नोति—आत्मनेपदे उपधालोपः, सिच्यतो लोपः । यद्येवम्, बहिरङ्ग उपधालोपः, बहिर्भूतात्मनेपदापेक्षत्वादन्तरङ्गोऽल्लोपः, अन्तर्भूतसिजपेक्षत्वात्, 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) ।

ननु चैषा परिभाषाप्याभाच्छास्त्रीया 'वाह ऊठ्' (६.४.१३२) इत्यत्र ज्ञापितेति तस्यामन्तरङ्गबहिरङ्गयोरसिद्धत्वात्, यथा 'पपुषः' इत्यादावल्लोपादिषु वसोः सम्प्रसारणस्यासिद्धत्वं न भवति । तथात्रापि न स्यात्, ततश्चातो लोपः स्यादिति सिच्येवानुनासिकलोप एषितव्य इति वक्तव्यमेव सिचः कित्वमिति ज्ञापकानुपपत्तेः 'अमंस्त' इत्यादावुपधालोपः स्यात् । तस्मात् सिच इकारोऽनुबन्ध एव, नोच्चारणार्थः । तेन 'अदिताम्' इति प्रतिषेधादुपधालोपाभावः ।

'इदितो नुम्' (७.१.५८) इत्यत्र धातुग्रहणं सिजन्तनिवृत्त्यर्थमेव क्रियते, न धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थम् कुण्डेस्यादिसिद्धये च यत्नान्तरमास्थेयमिति केचित्; नेति वयम् । उपधालोपेऽपि नातो लोपेन भवितव्यम् । किं कारणम्? 'उपदेश' इति वर्तते, उपदेशे योऽकारान्तस्तस्य लोपः, इहापि तर्हि न प्राप्नोति—'धिन्विकृण्व्योर च' (३.१.८०) 'धिनुतः, कृणुतः', नोपदेशग्रहणेन प्रकृतिरभिसम्बध्यते—उपदेशे या प्रकृतिरकारान्तेति । किं तर्हि ? आर्धधातुकमभिसम्बध्यते—आर्धधातुकोपदेशे यदकारान्तं तस्येति । तदेवमुपधालोपेऽपि न कश्चिद्दोष इति ज्ञापकार्थमेव वचनमिति सर्वमनाकुलम् ॥

## १५. यमो गन्धने ।

ननु यमिरुपरमे पठ्यते, कथं गन्धने वर्तत इत्यत आह—'अनेकार्थत्वात्' (है. प. १००) इति । 'उदायंस्त' इति । परावद्यं स्वयं प्रकाशितवानित्यर्थः उदायंस्त पादम्' इति । अपकृष्टवानित्यर्थः ॥

## १६. विभाषोपयमने ।

## १७. स्थाघ्वोरिच्च ।

चकारेण कित्वं समुच्चीयत इत्याह – 'सिच्च कित्' इति । प्रयोजनं गुणो मा भूदिति । इत्त्वं तु गुणविधानार्थमपि स्यात् । लघुत्वात् । 'उपास्थित' इति । 'उपान्मन्त्रकरणे' (१.३.२५) 'अकर्मकाच्च' (१.३.२६) इत्यात्मनेपदम्, 'ह्रस्वादङ्गात्' (८.२.२७) इति सिचो लोपः । न चेत्त्वं सिचीत्युच्यते, किं तर्हि ? इकारश्चान्तादेशः सिच्च किद् भवतीत्येतावत् । तेनेत्त्वस्यासिज्निमित्तत्वाद् भवत्येव लोपः ।

'इच्च' इत्यादि । तकार इद्यस्य तस्य भावः तकारेत्त्वम् । इच्चेत्यत्र निर्देशे कस्य कार्यस्य सिद्धये इकारस्य तकारेत्त्वं क्रियत इत्यर्थः । 'दीर्घो मा भूत्' इति । आन्तर्यतः प्राप्नोतीति भावः । 'ऋतेऽपि सः' इति । इकारविधानादिति विनेत्यर्थः । कित्त्वे हि घुमास्थादिसूत्रेणैव (६.४.६६) दीर्घः [1]सिद्धः, तस्मादित्त्वविधानसामर्थ्याद् अनन्तरतमोऽपि ह्रस्व एव भविष्यतीत्यर्थः 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' (व्या. प. ३५) इत्ययमप्यत्र परिहारः सम्भवति । 'अनन्तरे' इति । असदृश आदेशे क्रियमाणे ह्रस्व इव प्लुतोऽपि स्यात्, स मा भूदित्यर्थः । 'प्लुतश्च' इति । अनेन तपरत्वं प्रत्याख्यायते । यद्यनेन प्लुतो विधीयेत, तदा यत्र विषये 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८.२.१०५) इत्यादिना प्लुतो विहितस्तत्राप्यनेनैव स्यात्, अस्मिन् कर्तव्ये तस्यासिद्धत्वादिति पक्षेऽनुवाददोषः प्राप्नोति, ततो ह्रस्व एव भविष्यति । अन्ये तु तपरत्वमनेन समर्थितं मन्यन्ते—असति तकार आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । ननु चोक्तम्—'सिद्धोऽत्र दीर्घः' इति, सिद्धे सत्यारम्भो नियमार्थः स्यात्' (कात. प. ६२), दीर्घ एव यथा स्यात् प्लुतो मा भूदिति ? तदिदमुक्तम्— अनन्तरे' इत्यादिना । घुमास्थादिसूत्रेण (६.४.६६) अनेन वा दीर्घे सति यद्यपि विशेषो नास्ति, तथाप्यनन्तरेऽविद्यमानेऽपि विशेषे प्लुतो मा भूदिति दीर्घः स्यादित्यर्थः । [2]मा भूदिति चेत्तत्राह—'प्लुतश्च' इति । स चासति तपरत्वे न प्राप्नोति, सति तु तस्मिन् दीर्घस्याप्रसङ्गाद्विधिरेव सम्पद्यत इति स्वविषये प्लुतो न [3]व्यावर्त्यते । तदेवमन्यत्र भिन्नकालनिवृत्त्यर्थं तपरकरणम्, इह तु दीर्घनिवृत्त्यर्थं प्लुतप्रवृत्त्यर्थं च वस्तुबलात् समपादि ॥

## १८. न क्त्वा सेट् ।

'न किद् भवति' इति । कित्कार्यं न करोतीत्यर्थः । न पुनः ककारस्येत्सञ्ज्ञाभावात् किन्न भवतीति । प्रकृतो हि किच्छब्दः कित्कार्यकारिणि वर्तत इति तदर्थस्यैव निषेधो युक्तः—'देवित्वा' इत्यादौ गुणप्रतिषेधाख्यं कित्कार्यं न भवतीति ।

1. सिद्धः नास्ति 2. मा भूत् प्लुत इति चेत्तत्राह 3. व्यावर्तते

'निगृहीतिः' इति । अत्र 'तितुत्र' (७.२.९) इतीट्प्रतिषेधो न भवति, तितुत्रेष्वग्रहादीनामिति वचनात् । 'निकुचितिः' इति । 'कुञ्च कौटिल्याल्पीभावयोः' (धा. पा. १८६) । एषूदाहरणेषु सम्प्रसारणम्, गुणप्रतिषेधः, उपधालोपश्च कित्वाद् भवन्ति ।

'न सेट्' इत्यादि । पूर्वार्धमेको ग्रन्थः उत्तरार्धाच्च नेत्यपकृष्यते । न सेडित्येतावताऽपि योगेनाकित्वे कृते गुधितो गुधितवानित्यत्र निष्ठायामवधारणान्नियमान्न भविष्यति । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' (१.२.१९) इति नियमः, शीङादिभ्य एव परा निष्ठा न किदिति । विपरीतस्तु नियमः, निष्ठैवेति व्याख्यानान्न भवति । लिटि तर्हि प्रतिषेधः स्यात्, ततश्च जग्मिव, जग्मिम 'गमहन' (६.४.९८) इत्युपधालोपो न स्यात्, अत आह—'ज्ञापकात्' इति । पूर्वाचार्यप्रसिद्धया परोक्षे लिडुच्यते, यथा भवन्ती लट्, श्वस्तनी लुट् । किं ज्ञापकमित्यत आह—'सनि' इति । 'इको झल्' (१.२.९) इत्यत्र झल्ग्रहणस्यैतत् प्रयोजनम्,—शिशयिषत इत्यत्र मा भूदिति । यदि च न सेडिति प्रतिषेध आतिदेशिकस्यापि कित्वस्य स्यात्, झल्ग्रहणमनर्थकं स्यात् । प्राप्नोत्वत्र कित्वम्, 'न सेडिति' प्रतिषेधो भविष्यति । ब्रदेतत् झल्ग्रहणमौपदेशिकस्य कित्वस्यायं प्रतिषेधो नातिदेशिकस्येत्यस्यार्थस्य ज्ञापकं विदुः । ननु चोत्तरार्थं झल्ग्रहणम्, स्थाघ्वोरित्वं झलादौ यथा स्यात् चिण्वदिटि मा भूदिति—उपास्थायिषाताम् । अत्र हि उपास्थास् आतामिति स्थिते, इत्वं च प्राप्नोति चिण्वद्भावश्च, परत्वाच्चिण्वद्भावे युक्च प्राप्नोति वृद्धिश्च, अपवादत्वाद्युकि कृते यकारस्येत्वप्रसङ्गः । न च पुनर्वृद्धिर्लभ्यते, पूर्वमेव युका बाधितत्वात्, तस्मादुत्तरार्थं झल्ग्रहणम् ? नैतदस्ति, यस्मादित्वं कित्वसंयोगेनोच्यते, न चात्र कित्वमस्ति, 'न सेट्' इति प्रतिषेधात् । न ह्यत्रास्यां दशायां झल्ग्रहणस्य ज्ञापकत्वं स्थितमित्यातिदेशिकस्यापि कित्वस्यायं प्रतिषेधो भवति । 'रेण तुल्यं सुधीवनि' इति । शोभना धीवानोऽस्याः सुधीवा स्त्री, 'अनो बहुव्रीहेः' (४.१.१२) इति प्रकृतस्य ङीपो निषेधे सति, 'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभावः' (व्या. प. ४८) इति यथा रेफो न भवति तद्वदिहापीत्यर्थः । 'वस्वर्थम्' इति । अर्थशब्दो निवृत्तौ । जग्मिवानित्यत्र क्वसोः कित्वप्रतिषेधो मा भूदित्येवमर्थं तर्हि क्त्वाग्रहणमित्यर्थः । दूषयति—'किदती देशात्' इति । सिद्धमिति शेषः । अस्त्वत्रौपदेशिकस्य कित्वस्य प्रतिषेधः, आतिदेशिकं कित्वं भविष्यति । यत्र तर्हि तत्प्रतिषिध्यते संयोगान्तेष्वञ्जेः, आजिवान्—अत्र हि नलोपे कृते द्विर्वचन एकदेशे च 'वस्वेकाजाद्घसाम्' (७.२.६७) इतीडागमः, तत्र कृते कित्वप्रतिषेधात् नलोपनिवृत्तौ द्विहल्त्वात् नुटि सति एकाच्त्वाभावाविण्निवृत्तौ कित्वनलोपादीनां चक्रकप्रसङ्गः । एवं तर्हि छान्दसः क्वसुः, लिट् छन्दसि सार्वधातुकमपि भवति 'सार्वधातुकमपित्' (१.२.४) इति ङित्वम्, [1]ङितीत्युपधालोपः । न च संयोगान्तेषु कित्वङित्वयोः, कश्चिद् विशेषः, तस्माद्वस्वर्थमपि क्त्वाग्रहणं न भवति । एवं तर्हि—'निगृहीतिः प्रयोजनम्' । [2]क्तिन्क्तिज्निवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः ।

यदि पुनरुपरिष्टाद्योगविभागः क्रियते—'न सेट्' (१.२.१८) 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः, (१.२.१९) 'मृषस्तितिक्षायां' (१.२.२०), 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' (१.२.२१), ततः 'पूङश्च' (७.२.५१), पूङश्च परा निष्ठा सेण् न किद् भवति, ततः क्त्वा च, क्त्वा च सेट् किन्न भवति । अत्र 'पूङः' इति निवृत्तमिति, ततः क्त्वाग्रहणं शक्यमकर्तुम् ॥

## १९. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।

'ञिष्विदा स्नेहनमोचनयोः' (धा. पा. ७४४) इत्यस्य भौवादिकस्य [3]ञिद्धातोर्ग्रहणम्, न तु 'ष्विदा गात्रप्रक्षरणे' (धा. पा. ११८८) इति दैवादिकस्य, ञिद्भिः साहचर्यात्; अस्य चाञित्वात । 'ञिक्ष्विदा स्नेहनमोचनयोः' (धा. पा. १२४४) इति दैवादिकस्य ग्रहणम् । न तु 'ञि क्ष्विदा अव्यक्ते शब्दे' (धा. पा. ९७९) इत्यस्य भौवादिकस्य, मिदिना साहचर्यात्, 'ञि धृषा प्रागल्भ्ये' (धा. पा. १२६९) । 'शयितवान्' इति । 'अत्वसन्तस्य' (६.४.१४) इति दीर्घः । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति, स एव धातुर्द्विरुच्यत इति कृत्वा, तत्रापवादः स्मर्यते ।

---

1. ङित्युपधालोपः 2. क्तिन्निवृत्यर्थः 3. ञिग्रहणम्

शितपा शपमुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि ॥ (पु. प. ९४)

इति । तदिह शीङोऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः, शेशियितः, शेशियितवान्, 'एरनेकाचः' (६.४.८२) इति यण्

## २०. मृषस्तितिक्षायाम् ।

इदमेव तितिक्षाग्रहणं ज्ञापकम्-'अनेकार्था धातवः' (हे. प. १००) इति, अन्यथा मृषिस्तितिक्षायामेव पठ्येत इति तदपार्थकं स्यात् । 'अपमृषितम्' इति । अविस्पष्टमित्यर्थः ॥

## २१. उदुपधाद् भावादिकर्मणोरन्यतरस्याम् ।

'द्युतितम्' इति । 'द्युत दीप्तौ' (धा. पा. ७४१) 'नपुंसके भावे क्तः' (३.३.११४) 'प्रद्युतितः' इति । 'आदिकर्मणि क्तः कर्तरि च' (३.४.७१) इति कर्तरि क्तः । 'मुदितम्' इति । 'मुदी हर्षे' (धा. पा. १६) । 'लिखितम्' इति शब्विकरणानामेवेति न तावत् स्थितम् इत्यशब्विकरणोऽपि लिखिः प्रत्युदाहृतः । एवं 'प्रभुक्तः' इति । स्थिते तस्मिन् 'खिटिकिटि' (धा.पा. ३०२,३०१) भौवादी, कुशिश्च (धा. पा. ८५६) ; खिटितम्, किटितम्, कुष्टमिति प्रत्युदाहर्तव्यम् ॥

## २२. पूङः क्त्वा च ॥

इहान्यतरस्यां[1]ग्रहणानुवृत्तौ सेडित्यस्य च निवृत्तौ इड्विधौ 'पूङश्च' (७.२.५१) इति शक्यमकर्तुम्, उत्तरसूत्रे वाग्रहणम्, कथम् ? अनिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते । तत्र यदा कित्त्वं तदा 'श्र्युकः किति' (७.२.११) इति प्रतिषेधात् पूतः पूतवान् पूत्वेति, अकित्त्वपक्षे त्विटि पवितः पवितवान, पवित्वेति भवति । सेड्ग्रहणं तु विच्छिद्येत तस्मात् सेडित्यस्मिन्नुत्तरार्थमनुवर्तमाने 'पूङश्च' (७.२.५१) इत्यारभ्य उत्तरत्र वाग्रहणमिह नित्यतासिद्ध्यर्थम्, पुवितेति पक्षे मा भूत्तत्राह—'अन्यतरस्यां ग्रहणं न स्वर्यते' उत्तरसूत्रे पुनर्वावचनात्' इति । 'न सेडिति वर्तते' इति । ननु पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यम्, 'श्र्युकः किति' (७.२.११) इति प्रतिषेधात्, अत आह—'पूङश्च' इति । 'पूङः परो निष्ठाप्रत्ययः' इत्यादि ।

किं पुनः कारणं साक्षात् श्रुतं क्त्वाप्रत्ययमपहायानुवृत्तस्य निष्ठाप्रत्ययस्यान्वयो दर्शित उदाहरणं च ? अत आह—'क्त्वाप्रत्ययस्य' इति । एतदेव द्रढयति—'तथा चोक्तम्' इति । इडाद्योः क्त्वानिष्ठयोर्नित्यमकित्त्वमिष्यते, ततश्च क्त्वाग्रहणमुत्तरार्थमिति भारद्वाजीयैरेवमुक्तम् । उत्तरार्थमपि तदिहैव कर्तव्यं सेडित्यनेन सम्बन्धार्थम्, अन्यथा निष्ठानिवृत्तौ तत्सम्बद्धं सेडित्येतदपि निवर्त्तेत । अनुबन्धोच्चारणं विस्पष्टार्थं न पूञो निवृत्त्यर्थम्, इड्विधौ पूङ एव ग्रहणात् । पूञः क्त्वानिष्ठयोः इडभावात् नापि यङ्लुकि निवृत्त्यर्थम्, इड्विधावनुबन्धनिर्देशेन यङ्लुक्यपि[2] 'न क्त्वा सेट्' (१.२.१८) इति प्रतिषेधस्य स्थितत्वात् । न च क्त्वाग्रहणसामर्थ्यात् तस्यापि प्रतिषेधः, तस्योत्तरत्राप्युपयोगसम्भवात्, अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वात् । एवं च 'क्त्वाग्रहणमुत्तरार्थम्' इति वृत्तिग्रन्थस्याविरोधः, तेन '[3]पोपुवितवान्' इति निष्ठायां भवति क्त्वायां तु गुणे 'पोपवित्वा' इति भवति ॥

---

1. ०ग्रहानु०. 2. पूङोपीडभावादिति केचित् । अन्ये तु श्र्युकःकितीति अत्रैकाच इत्यनुवृत्तेः यङ्लुकि तस्याप्रवृत्तेः आर्धधातुकस्येट् इत्येवेट् भवति । ततश्च यङ्लुकि निवृत्यर्थं अनुबन्धोच्चारणमिति अत्रापि पक्षे क्त्वाग्रहणमुत्तरार्थमेव यङ्लुक्यपि—इत्यधिकम्, 3. पोपुवितः इत्यधिकम्,

## २३. नोपधात् थफान्ताद्वा ।

'निष्ठेति निवृत्तम्' इति। पूर्वसूत्रे चानुकृष्टत्वात्। 'गुफित्वा' इति। 'गुफ गुम्फ ग्रन्थने'(धा.पा. १३१७,१३१८) 'रेफित्वा' इति । 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' (धा. पा. १३०६) । अथैतद्विकल्पाभावेऽपि 'रलो व्युपधाद्' (१.२.२ ) इति विकल्पोऽत्र कस्मान्न भवति ? नोपधग्रहणसामर्थ्यात् । ननु ऋकारोपधो नोपधग्रहणस्य व्यावर्त्यः सम्भवति 'ऋफ हिंसायाम्' (धा. पा. १३१५) अर्फित्वेति; नैतदस्ति, त्रैशब्द्यं ह्यनयोर्धात्वोर्भवति । अर्फित्वा, ऋफित्वा, ऋम्फित्वेतिः, [1]तच्च सत्यसति[2] नोपधग्रहणे भवत्येव । सति तावत, अनोपधस्य 'न क्त्वा सेट्' (१.२.१८) इति [3]निषेधे सति अर्फित्वेति भवति, नोपधस्य त्वस्मिन्विकल्पे [4]ऋफित्वेति । असत्यपि नोपधग्रहणे सर्वत्रास्मिन्विकल्पे प्रवृत्तेऽपीदमेव रूपत्रयं भवति । अन्तग्रहणं ज्ञापनार्थम्—यत्नमन्तरेणास्मिन् प्रकरणे न तदन्तविधिर्भवतीति, तेनोत्तरसूत्रे 'ऋतः' इति धातुर्गृह्यते, न ऋदन्तः ॥

## २४. वञ्चिलुञ्च्यृतश्च ।

'वञ्चु गतौ' (धा. पा. १८९) भौवादिः, 'वञ्चु प्रलम्भने' (धा. पा. १७०३) चुरादिः, सोऽपि गृह्यते, 'अनित्यण्यन्ताश्चुरादयः (है. प. ९७) इति । 'लुञ्च अपनयने' (धा. पा. १८७) । ऋतिः सौत्रो धातुः 'ऋतेरीयङ्' (३.१.२९) इति, स च घृणायां वर्तते ॥

## २५. तृषिमृषिकृशेः काश्यपस्य ।

'ञितृषा पिपासायाम् (धा. पा. १२२८), 'मृष तितिक्षायाम्' (धा. पा. १८४९) 'कृश तनूकरणे (धा. पा. १२२७) । 'काश्यपग्रहणं पूजार्थम्' इति । 'काश्यपस्यैतद्विषयं विज्ञानं नान्येषाम्' इत्यसाधारणज्ञानोद्भावनमाचार्यस्य पूजाद्वारेण शास्त्रस्यापि पारम्पर्यप्रतिपादनेन प्रामाण्यप्रतिपादनात् पूजा भवति ॥

## २६. रलो व्युपधाद्धलादेः सश्च ।

क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' (१.२.१८) इति कित्वे प्रतिषिद्धे सनोऽप्यकित्वे स्वतःसिद्ध उभयत्र विधिमुखेनेदं प्रवर्तत इत्याह—'वा कितौ भवतः' इति। 'दिद्योतिषते' इति । 'द्युतिस्वाप्योः सम्प्रसारणम्' (७.४.६७) 'रिरिषिषति' इति । इटि कृते 'अजादेर्द्वितीयस्य' (६.१.२) ॥

## २७. ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।

ऊः कालो यस्य स ऊकालः 'तपरस्तत्कालस्य' (१.१.७०) इतिवन्निर्देशः समर्थनीयः । एतच्च सञ्ज्ञिनो विशेषणम्, तत्र च 'ऊ' इत्येकस्यैव शब्दस्योच्चारणाद् विशेषणस्यैकत्वात् सञ्ज्ञाप्येकैवेति यश्चोदयेत् तं प्रत्याह—'ऊ इति त्रयाणाम्' इत्यादि । प्रश्लेषणं प्रश्लिष्टम्, तेन निर्देशः प्रश्लिष्टनिर्देशः । तेन विशेषणत्रयपरिच्छिन्नास्त्रयः सञ्ज्ञिन इत्यर्थः । प्रश्लेषणे प्रमाणमाह—'ह्रस्व' इति । ह्रस्वदीर्घप्लुत इति न तावदेका सञ्ज्ञा; गौरवादनावृत्तेश्च । अतस्तिसृणां सञ्ज्ञानां द्वन्द्वोऽयम् । न चैकस्यानेकसञ्ज्ञाकरणे प्रयोजनमस्ति । लुगादिसञ्ज्ञास्वपि तद्भावितत्वेन प्रत्ययादर्शनस्य भेद आश्रितः; प्रकारान्तरासम्भवात् । इह तु निर्देश एव त्रयाणां सम्भवति । तस्मात् सञ्ज्ञानां त्रित्वात् सञ्ज्ञिनामपि त्रित्वमनुमीयत इति भावः । 'बहुवचननिरासार्थमेकवद्भावः' इत्युक्तम् । समाहारद्वन्द्व इत्यर्थः । 'स नपुंसकम्' (२.४.६७) इत्येतत्तु न भवतीत्याह—'पुंलिङ्गनिर्देशः' इति । सौत्र इति भावः ।

1. एतच्च 2. वा इत्यधिकम् 3. प्रतिषेधे 4. ऋफित्वा ऋम्फित्वेति.

प्रश्लेषे क्रममाह—'उ ऊ ऊ३ इत्येवं कालः' इति। उकारादीनां परिच्छेदको यः कालो निमेषादिः, तत्काल इत्यर्थः। कुतः पुनरवसितमेष एव क्रम इति? आदौ मध्ये वा त्रिमात्रे प्लुताश्रयः प्रकृतिभावः प्राप्नोति, तथा मध्ये वा मात्रिके 'द्वन्द्वे घि' (२.२.३२) इत्येतद् बाध्येतेति चेत्, न; अनेन हि प्लुतसञ्ज्ञा, ततश्चादौ मध्ये वा पठित त्रिमात्रस्य प्लुतसञ्ज्ञैव न, कुतः प्रकृतिभावः? यदि च मात्रिको मध्येऽन्ते वा स्यात्, ह्रस्वसञ्ज्ञैव न स्यात् कुतो घिसञ्ज्ञा? कुतस्तरां पूर्वनिपातः? एवं तर्हि ज्ञापकात् सिद्धम्, यदयं 'विभाषा पृष्टप्रतिवचने हेः' (८.२.९३) इति हेः प्लुतं शास्ति, तज्ज्ञापयति—'नान्ते मात्रिकः' इति। कथं योऽन्ते स प्लुतः? प्लुतस्य प्लुतवचनमनर्थकम्। अनन्तरस्य प्लुतार्थमेतत् स्यादिति चेत्, न हि सत्यां गतौ परिभाषा बाध्या। यच्च 'सुपि च' (७.३.१०२) इति दीर्घत्वं शास्ति तज्ज्ञापयति—'न मध्ये मात्रिकः' इति। कथं यो मध्ये स दीर्घः? दीर्घस्य दीर्घवचनमनर्थकम्। यच्च 'ओमभ्यादाने' (८.२.८७) इत्योमः प्लुतं शास्ति, तज्ज्ञापयति—'द्विमात्रिको नान्त्यः' इति। कथं योऽन्ते स प्लुतः? प्लुतस्य प्लुतवचनमनर्थकम्।

'दधि, मधु' इति। रूपोदाहरणे। कुमारीत्यादि कार्योदाहरणम् 'हल्ङ्याब्भ्यः' (६.१.६८), इति दीर्घाश्रयः सुलोपो भवति। 'देवदत्ता ३ अत्र न्वसि' इति। 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८.२.१०५) इति प्लुतः। देवदत्त त्वमत्र भवसीति प्रश्नः। नुशब्दः प्रश्नं द्योतयति। देवदत्तशब्दात् परस्य सोः 'ससजुषो रुः' (८.२.६६) इति रुत्वम् 'अतो रोरप्लुतात्' (६.१.११३) इत्युत्वे प्रतिषिद्धे 'भोभगोअघो अपूर्वस्य योऽशि' (८.३.१७) इति यत्वम्, 'लोपः शाकल्यस्य' (८.३.१९)। उकारोऽयमण्, तेन द्विमात्रयोरपि ग्रहणात् ह्रस्वसञ्ज्ञा प्राप्नोति। न च दीर्घप्लुतसञ्ज्ञाभ्यां बाधः, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशाभ्युपगमात्, अत आह—'कालग्रहणम्' इति। कालग्रहणं तावदुकारादिभिः प्रत्येकमभिसम्बध्यते, ऊकाल इत्यस्मिन्वाक्ये सत्यपि सवर्णग्रहणे कालशब्दस्य न पुनः प्रत्येकपरिसमाप्तिर्युज्यते कुतः? एकस्यैव श्रुतत्वात् 'द्विमात्रत्रिमात्रौ हि सञ्ज्ञित्वेन प्रतीयेते, न तु साक्षादुच्चरितौ। एव चैकत्वाद् बहुव्रीहेरेक एव सञ्ज्ञी, तत्रैकस्य विरुद्धकालद्वयासम्भवेन सवर्णग्रहणाभावाच्छ्रुत एवोकारः कालविशेषणम् इति कालग्रहणं सञ्ज्ञिपरिमाणार्थम्।

यद्वा—ऊ अजित्येव कालार्थो लभ्यते, कथम्? उकारादयोऽच्त्वं न व्यभिचरन्तीति नाच्त्वेन ते विशेष्यन्ते अपि तु तैरच्। न चाज्मात्रस्योकारादित्वमुपपद्यत इति सामानाधिकरण्यान्यथानुपपत्त्या तत्सदृशस्याचः प्रतिपत्तिः। तत्र च स्थानसाम्यमसम्भवान्न गृह्यते, प्रयत्नसाम्यं चाव्यभिचारीति कालसाम्यमेव ग्रहीष्यते, नार्थः कालग्रहणेन। तत्क्रियते श्रूयमाणेनैव कालं विशेषयितुमिति कालग्रहणं परिमाणार्थम्।

'आलय' इति। ह्रस्वाश्रयस्तुङ् न भवति। 'तितउच्छत्रम्' इति। असत्यज्ग्रहणे चद्वयसमुदायस्य प्रत्येकवर्णकालसङ्कलनया द्विमात्रत्वाद्दीर्घसञ्ज्ञा स्यात्। यस्तु मध्येऽर्धमात्राकालः सवर्णकालो न भवतीति समुदायस्य द्विमात्रतां न व्याहन्तीति स एव प्रसङ्गः। अज्ग्रहणे तु न भवति; अच्समुदायस्यानच्त्वात्। यद्यपि वर्णग्रहणे जातिग्रहणम्, तु जातिरेकैकव्यक्तिव्यङ्ग्या न समुदायव्यङ्ग्या, तेन दीर्घसञ्ज्ञायामभावात् 'दीर्घात्' (६.१.७५), 'पदान्ताद्वा' (६.१.७६) इति तुग्विकल्पो न भवति। न च सत्यपि विकल्पे तेन मुक्ते ह्रस्वाश्रयस्तुग् लभ्यते; समुदाये कार्यमारभ्यमाणेऽवयवानां स्वकार्यं प्रत्यव्यापारात्॥

## २८. अचश्च।

'इको गुणवृद्धी' (१.१.३) इत्यनेन समानमिदम्। स्वसञ्ज्ञया विधाने नियमार्थमित्यत्र युक्तिमाह—'अजिति वर्तते' इति। ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाचमुपस्थापयन्ति, तस्य स्वयमुपस्थानादिति स्वरूपपदार्थाः आश्रीयन्ते। तेन ह्रस्व इत्येवं योऽज् विधीयते सोऽचः स्थाने भवतीत्ययमर्थः सम्पद्यते। एवं दीर्घप्लुतयोः।

'द्यौः' इत्यादि । 'दिव औत्' (७.१.८४), 'पथिमथ्यृभुक्षामात्' (७.१.८५), 'त्यदादीनामः' (७.२.१०२), 'दिव उत्' (६.१.३१) इति औकारादयो न सञ्ज्ञया विधीयन्ते इति हल एव स्थाने भवन्ति ॥

## २९. उच्चैरुदात्तः ।

ननूदात्तादयः शब्दाः लोकवेदयोः प्रसिद्धा एव, तत् किं सञ्ज्ञाकरणेन ? तत्राह —'उदात्तादिशब्दा.' इत्यादि । सत्यं प्रसिद्धा एव ते, कुत्र प्रसिद्धाः ? धर्ममात्रे स्वरे, न तु तद्वत्यचि । ततश्च 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६) इति स्वरिताख्यस्य धर्मस्यैव विधिः स्यात्, न च धर्मधर्मिणोः स्थान्यादेशभावः सम्भवतीति 'षष्ठी स्थानेयोगा' (१.१.४९) इत्यस्यानुपस्थानात् तदङ्गभूतम् 'तस्मादित्युत्तरस्य' (१.१.६७) इत्येतदपि न प्रवर्तेतेति पूर्वस्याप्यचः स्वरितप्रसङ्गः । स्यादेतत्—यथा 'कृपो रो लः' (८.२.१८) इत्यत्र ऋकारस्य रेफस्य लृकारस्थे लकारेऽपि विहिते कृत्स्नस्य वर्णस्य कृत्स्न एव वर्णो भवति । तद्वदिहापि धर्मिणोरेव स्थान्यादेशभावो भविष्यतीति युक्तं तत्र रेफलकारावृकारलृकारयोरात्मभूतौ न तावन्तरेण तावुच्चारयितुं शक्यौ, इह तूदात्तादिकमन्तरेणाप्यच उच्चारणं शक्यम्, दृष्टं च भाषायामिति धर्ममात्रमेवादेशः स्यात् । नन्वेवं स्थिते स्थान्यपि धर्म एवेति युक्त एव परिभाषाव्यापारः, सत्यम्, वर्णमात्रधर्मोऽयमुदात्तादिरिति व्यामोहनिवर्तनेनाचामेवायं धर्मो न हलामिति दर्शयितुमिदमारब्धम् । अत एव 'वर्णधर्मे' इति सामान्येनोक्तम् ।

'तद्गुणेऽचि' इति । स उदात्तादिर्गुणो यस्य । एतेन वस्तुतोऽज्धर्मत्वमुदात्तादेर्दर्शितम् । तथा हि, अन्तरेणापि हलमच एष धर्मो दृश्यते—'आ ते पितर्मरुतां सुम्नमेतु', (ऋ. २.३३.१) यथा आकारस्य, नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति । कुत एव स्वरः ? यदि च हलामप्येते गुणास्ततो हलामचां च पृथक् स्वरोप्युपलभ्येत । यस्तु खल्वचामेव स्वरमनुविदधति हलस्ततो निश्चीयते—अजुपरागादेषु स्वरप्रतिभासो न स्वत इति । अजुपरागश्च पूर्वपरसन्निधानेऽपि परेणैव भवति, न पूर्वेण ।

'परिभाष्यन्त' इति । केचिदाहुः—'प्रदेशे लोकप्रसिद्ध्या हलामचां च ग्रहणे प्राप्तेऽचामेव ग्रहणं नियम्यते इति परिभाषेयम्' इति । अन्ये तु—'धर्मिण्यप्रसिद्धत्वात् सञ्ज्ञात्वेन परिभाष्यन्ते' इति व्याचक्षते । उच्चैरित्यस्याधिकरणप्रधानत्वात् क्रियापेक्षत्वाच्चाधिकरणस्योपलभ्यमान इत्युक्तम् ।

'श्रुतिप्रकर्षो न गृह्यते' इति । यदि गृह्येत उपांशुप्रयोगे न स्यादित्यव्याप्तिः, श्रुतिप्रकर्षस्य चानवस्थितत्वाद् यदेव कञ्चित्प्रत्युच्चैस्तदेव कञ्चित्प्रति नीचैरिति सर्वमुदात्तं स्यात्, सर्वं चानुदात्तमित्यतिव्याप्तिरव्यवस्था च स्यादिति भावः । 'स्थानकृतम्' इत्यादि । उच्चता नाम प्रमाणविशेष ऊर्ध्वतापर्यायः, तत्र ताल्वादिसम्बन्धो वर्णानामन्तरङ्ग इति स्थानसम्बन्धिन्युच्चता गृह्यते, तत्कृतमुच्चैस्त्वं सञ्ज्ञिनो विशेषणम् । ननु पूर्वमुच्चैरुपलभ्यमान इति ताल्वादिस्थानवृत्तिरुच्चैःशब्दो दर्शितः, इह तूच्चैःस्थाननिष्पन्नत्वादजेवोच्चैः इत्युच्यते इति उक्तिविरोधः, न । पूर्वमक्षरार्थ उक्तः, इह तु वस्त्वर्थो व्याख्यातः । ननु चोच्चैःस्थान उपलभ्यमान इत्याश्रितेऽपि प्रांशुपुरुषोच्चारितोऽनुदात्तोऽप्युदात्त एव स्यात्, वामनपुरुषोच्चारित उदात्तोऽप्यनुदात्तः स्यात्, तत्रान्योन्यमुच्चतानीचतायोगात्, अत आह—'ताल्वादिषु हि' इति । ताल्वादीनि स्थानानि भागवन्ति, भागाश्चौत्तराधर्येण व्यवस्थिताः । 'तत्र यः समाने' इति । एकपर्यायोऽयं समानशब्दः । तेनायमर्थः- एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाणोऽजुदात्तसञ्ज्ञो भवति । एवं चोच्चैरित्यस्योर्ध्वभाग इत्यर्थः । सर्वश्चायमर्थो लोकप्रसिद्धेरेव लभ्यते, सूत्रं तु व्यामोहनिवृत्त्यर्थम् । ऊर्ध्वभागनिष्पत्तेरप्रत्यक्षत्वात् तन्निश्चये लिङ्गमाह—'यस्मिन्' इति । 'आयामः' इत्यस्य विवरणं निग्रहः, 'रूक्षता' इत्यस्य विवरणं 'अस्निग्धता' इति । 'संवृतता' इति । अणुता । अत एव वायुः शनैर्निष्क्रामन् गलादयवान् शोषयतीति स्वरस्य रूक्षता भवति । 'ये ते के' इति । यत्तत्किम्भ्यो जसि त्यदाद्यत्वम्, 'जसः शी' (७.१.१७), 'आद् गुणः' (६.१.८७), 'एकादेश उदात्तेनोदात्तः' (८.२.५) ॥

## ३०. नीचैरनुदात्तः ।

'अजिति वर्तते' इति। तेन हल् स्रंसनधर्मेणानुदात्तसञ्ज्ञो न भवति। 'अन्ववसर्गः' इत्यस्य विवरणं 'मार्दवम्' इति शैथिल्यमित्यर्थः । 'मृदुता' इत्यस्य 'स्निग्धता' इति । 'उरुता' इत्यस्य 'महत्ता' इति । महत्त्वादेव च शीघ्रं वायोर्नि णाद् गलावयवानामशोषणात् स्वरस्य स्निग्धता भवति । 'अनुच्चानि' इति । सर्वादावेवमेव पाठात् । फिषि तु 'सिमस्याथ (फि. ७९.) इत्यन्त उदात्त इत्युक्तम् । अनाथर्वणेऽपि [1]तुच्छन्दस्यन्तोदात्तत्वं दृश्यते, 'आद्रात्री वासस्तनुते सिम (ऋ. १.११५.४) 'उच्छुक्रमजते सिमस्मात्' (ऋ. १.९५.७) इति, [1]'नमस्ते रुद्र' (वा. सं. १६.१) इति, 'तेमयावेक नस्य' (८.१.२२) इत्यत्र 'अनुदात्तं सर्वम्' (८.१.१८) इत्यधिकारात् तेशब्दोऽनुदात्तः । 'रुद्रादयोऽप्यामन्त्रितनिघा (८.१.१९)। पदकाले चानुदात्तस्य श्रवणम् । संहितायां तु 'स्वरितात् संहितायाम्' (१.२.३९) इत्यैकश्रुत्यं भवति ॥

## ३१. समाहारः स्वरितः ।

'सामर्थ्याच्चात्र' इति । पारिभाषिकयोरुदात्तानुदात्तयोरचोः समाहाररूपस्याचः क्वचिदप्यसम्भवः सामर्थ्य ननु च समाहरणं समाहारः, विप्रकीर्णानामेकत्र राशीकरणमेकधर्मयोर्योगो वा । यथा 'पञ्चपूली, षण्णगरी दृष्टा' इ तत्र पूर्वो मूर्तानामेव, उत्तरस्तु धर्मयोरपि सम्भवति, किं तु अचा सामानाधिकरण्यं न घटते, न हि वर्णधर्मयोरुदात्ता दात्तयोः समुदायरूपः कश्चिदज् भवतीत्यत आह--'तौ समाह्रियेते अस्मिन्नचि' इति । नानेनाधिकरणसाधनत्वं समाह शब्दस्य दर्शितम् । तत्र हि 'करणाधिकरणयोश्च' (३.३.११७) इति ल्युटा भवितव्यम् । वासरूपविधिश्च नास्ति, 'क्तल्यु मुन्खलर्थेषु वासरूपविधिर्नास्ति' (पु. प. ५८) इति वचनात् । तस्मादर्थकथनमात्रमेतत् । सामानाधिकरण्यं त्वर्शआदि दच्प्रत्ययान्तत्वेन (५.२.१२७) समर्थनीयम् । 'शिक्यम्, कन्या' इति । 'शिल्पशिक्यकाश्मर्यधान्यकन्याराजन्यमनु णामन्तः' (फि. ७६) इति फिट्सूत्रेणान्तःस्वरितत्वम् । 'सामन्यः' इति । सामसु साधुः 'तत्र साधुः' (४.४.९८) इति 'तित् स्वरितम्' (६.१.१८५) । 'क्व' इति : 'किमोऽत्' (५.३.१२), 'क्वाति', (७.२.१०५)॥

## ३२. तस्यादित उदात्तमर्धह्रस्वम् ।

आदौ आदितः । सप्तम्यन्तात्तसिः । 'अर्धह्रस्वम्' इति । 'अर्धं नपुंसकम्' (२.२.२) इति समासः । ह्रस्व उभयलिङ्गः 'ह्रस्वो नपुंसके' (१.२.४७) 'ह्रस्वं लघु' (१.४.१०) इति । तदिह परवल्लिङ्गत्वेन नपुंसकत्व [2]उक्तपरिमाणस्याचो ह्रस्वसञ्ज्ञा कृतेति यत्रैव तस्यार्धमिति दीर्घप्लुतयोरेतद्विभागवचनं न स्यादित्याशङ्क्याह 'अर्धह्रस्वम्' इति । 'च' इत्यादि । ह्रस्वस्य हि मात्रा भवति अतोऽर्धह्रस्वग्रहणेनार्धमात्रोपलक्ष्यते । इह प्रकृतत्वा स्वरितस्य विभागाख्यानसिद्धे तस्येति वचनं स्वरितमात्रपरिग्रहार्थम् । यदि चार्धह्रस्वग्रहणमर्धमात्रोपलक्षणं तत्र स्वरि मात्रपरिग्रहोऽर्थवान् भवति ।

'ह्रस्वग्रहणमतन्त्रम्' इति । अप्रधानम् उपलक्षणत्वात्, यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकाः । वमप्याष्टमिकस्वरितस्य विभागो न सिद्धयति, तस्यासिद्धत्वात्, नैष दोषः । इत आरभ्य नव सूत्राणि असिद्ध 'उदात्तादनुदात्तस्य' (८.४.६६) इत्यस्मात्पराणि पठितव्यानि । किं प्रयोजनम् ? इदं तावद्विभागाख्यानमाष्टमिक भवति । उत्तरत्रापि प्रयोजनं तत्र तत्र वक्ष्यामः ।

'एकश्रुतिर्वा' इति । उदात्तभागस्य पटुत्वात् पटुत्वकृतो विकल्पः । पटुत्वे हि तदुपरागात्तद्रूपतामिवापन्नो दात्तव्यपदेशमर्हति, नाप्युदात्तव्यपदेशम्; उपरागमात्रत्वात् । तेन भेदतिरोधानलक्षणमैकश्रुत्यं परो भागः प्रतिपद्यते,

1. नमस्ते रुद्रेति नास्ति 2. उक्त...अतोऽर्धह्रस्वग्रहणेन नास्ति

वा एकश्रुतित्वम्, पूर्वभागश्रुतेरेकाऽभिन्नाकारा श्रुतिरस्येति कृत्वा। 'अध्यर्धमात्रानुदात्ता' इति। एकश्रुतिर्वेति नोक्तम्, पूर्वानुसारेण गम्यमानत्वात्, लघुना वा महतोऽनुपरागात्। 'माणवका ३ माणवका' इति। 'स्वरितमाम्रेडितेऽसूया' (८.२.१०३) इति प्लुतः स्वरितः ॥

## ३३. एकश्रुति दूरात्सम्बुद्धौ ।

इह यद्यप्यामन्त्रितान्तस्य पदस्याप्यभिमुखीकरणं प्रति सामर्थ्यम्, तथापि [1]ह्यर्थविशेषस्य कस्यचिदनुष्ठेयतया, सम्बोधना सम्बुद्धिः, अन्तर्भावितण्यर्थो बुद्धिः, तथा च सम्बोधयति येनेति णिच् प्रयुक्तः। तत्र च वाक्यस्यैव करणभावो न पदस्येति मत्वाह—'एकश्रुति वाक्यं भवति' इति। कतरत् पुनस्तदित्यत आह—'दूरात्' इति। 'सम्बोधनं सम्बुद्धिः' इति अनेनान्वर्थस्य सम्बुद्धिशब्द[2]ग्रहणं न पारिभाषिकस्येति दर्शयति। पारिभाषिकस्य हि ग्रहणे, देवा ब्राह्मणा इत्यत्र न स्यात्। अन्वर्थग्रहणं च दूरादित्यनेन सम्बन्धाल्लभ्यते, न ह्यामन्त्रितैकवचनस्य दूरत्वमदूरत्वं वा सम्भवति। सम्बोधनस्य [3]क्रियारूपत्वादपादानतया दूरादिति विशेषणसम्भवात्। दूरत्वं च न देशस्वरूपागतमाश्रीयते, अनवस्थितत्वात्, किन्तु सम्बोधनक्रियापेक्षया दूरत्वम्। यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते, किन्त्वधिकं प्रयत्नमपेक्ष्यते, तत्सम्बुद्धौ दूरं[4] भवति। 'स्वराणाम्' इत्यादि। एकश्रुति स्वरूपाख्यानम्, भेदतिरोधानमित्यनन्तरोक्तस्यैव विवरणम्। 'आगच्छ' इत्यादि। दूराद्धूते 'वाक्यस्य टेः प्लुत उदात्तः' (८.२.८२) परिशिष्टमेकश्रुति। ननु च प्लुतैकश्रुत्योर्द्वयोरपि दूरात्सम्बोधनं द्योत्यमिति फलैक्याद्विकल्पो युक्तः, कथं समावेशः? उच्यते, वाक्यमेव प्रतिपादकत्वात् सम्बुद्धौ करणं [5]प्लुतैकश्रुतीत्यस्यैव संस्कारमात्रम्, यथा विषयग्रहणे चक्षुष उन्मीलनादि, तत्कुतः समानफलत्वमिति वाक्यापेक्षया च समावेशः। अन्त्याजपेक्षया तु बाध्यबाधकभाव एव। प्रत्युदाहरणे त्रैस्वर्यमेव भवति। तत्राङ् 'उपसर्गाश्चाभिवर्जम्' (फि. ८२) इत्याद्युदात्तः। गच्छेति तिङन्तस्य 'तिङ्ङतिङः' (८.१.२८) इति निघातः। भोःशब्दः 'निपाता आद्युदात्ताः' (फि. ८०) इति आद्युदात्तः, शेषयोरामन्त्रितनिघातः ॥

## ३४. यज्ञकर्मण्यजपन्यूङ्खसामसु ।

'ऐकश्रुत्यम्' इति। बहुव्रीहेर्भावप्रत्ययः, चातुर्वर्ण्यादित्वाद्वा कर्मधारयात्स्वार्थे ष्यञ् (५.१.१२४)। 'संपाठे' इति। स्वाध्यायकाले 'अग्निर्मूर्धा दिवः ककुत्' (ऋ. ४.४.१६), 'अङ्गेर्नलोपश्च' (उ. ४९९) इत्यग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः 'मुर्वी बन्धने' (धा. पा. ५७५) 'कनिन्युवृषितक्षि' (उ. १६२) इति वर्तमाने '[6]श्वन्नुक्षन्पूषन्तक्षन्' (उ. ६६५) इत्यत्र सूत्रे मूर्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः। 'दिवु क्रीडादौ' (धा. पा. ११०७) दिवेरन्तो डिविः षष्ठ्येकवचनस्य 'ऊडिदम्' (६.१.१७१) इत्युदात्तत्वम्। ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः, (उ. १), 'पातेर्डतिः' (उ. सू. ५०६), पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः, 'प्रथेः षिवन् सम्प्रसारणं च' (उ. १५६) षित्वात् ङीष् (४.१.४१), षष्ठ्येकवचनस्य 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इत्युदात्तत्वम्। इदंशब्दः प्रतिपदिकस्वरेणान्तोदात्तः (उ. १), आप्नोतेः क्विब् ह्रस्वश्च, 'ऊडिदम्' (६.१.१७१) इति विभक्तेरुदात्तत्वम्। 'रि गतौ' (धा. पा. १४०४), 'स्रुरिभ्यां तुट् च' (उ. ६५१) इति असुन्प्रत्ययः, नित्स्वरेणाद्युदात्तो रेतः शब्दः (६.१.१९७)। 'जिन्वति' इति। जिन्वतेः प्रीणनार्थस्य तिपि निघातः 'प्रणवष्टेः' (८.२.८९) इति प्रयोगकाले प्रणयः।

'मम' इत्यादि। 'युष्मदस्मदोर्ङसि' (६.१.२११) इत्याद्युदात्तत्वम्। अग्नेशब्दस्यामन्त्रितनिघातः (८.१.१९), वर्चःशब्दोऽसुन्प्रत्ययान्तः। विपूर्वात् ह्वयतेः 'ह्वः सम्प्रसारणं च' (३.३.७२) इत्यप्प्रत्यये थाथादिसूत्रेणान्तोदात्तत्वम् (६.२.१४४)। 'जपोऽनुकरणमन्त्रः' इति। यद्यपि स एव मन्त्र उच्चार्यते, तथापि वर्णाभिव्यक्त्यनभिव्यक्तिभ्यां भेदपरि-

---

1. हि नास्ति 2. शब्दस्य ग्रहणं 3. तु इत्यधिकम् 4. दूरे 5. प्लुतैकश्रुती तस्यैव 6. श्वसन् पूषन्तक्षत्।

कल्पनयाऽनुकरणव्यवहारः । अत एवाह—'उपांशुप्रयोगः' इति । यथा जले निमग्नस्य पाठः । क्वचिदकरणमन्त्र इति । अनेनेदं कुर्यादिति चोदितः करणमन्त्रः, ततोऽन्योऽकरणमन्त्रः । प्रसिद्धस्तु पाठोऽन्तःकरणमन्त्र इति । ननु वागिन्द्रियेण उच्चार्यते स कथमन्तःकरणेन सर्वेन्द्रियसाधारणेन व्यपदिश्यते ? सत्यम्; वागिन्द्रियस्य स्थूलो व्यापार उपांशुत्वे नास्ति, स एव च तद्व्यापारत्वेन प्रसिद्ध इति सूक्ष्मव्यापारे मन एव प्रधानं मन्यते ।

'न्यूङ्खाः' इत्यादि । षोडशेति पाठः, ओकारा इति च, न त्वेते मकारान्ताः, तेषु प्रथमसप्तमत्रयोदशा उदात्तास्त्रिमात्राः, इतरे त्रयोदश अनुदात्ता अर्धोकाराः । [1]एतच्च आश्वलायनेन चतुर्थेऽहनीत्यस्मिन् खण्डे लक्षणेनोदाहृतं च । 'षडोङ्काराः' इति पाठे मूलान्तरं मृग्यम् । 'ए ३ विश्वम्' इत्यादि । एशब्दो गीतिपूरणः, निपात इत्यन्ये विश्वशब्दो क्वन्प्रत्ययान्त आद्युदात्तः, [2]विश्वमन्त्रिणं पाप्मानं सन्दह इति सम्बन्धः । गीतिवशादेशब्दोऽनेकमात्र 'वाक्यविशेषस्था गीतयः' इति । तदुक्तमृषिणा 'गीतिषु सामाख्या' इति ॥

## ३५. उच्चैस्तरां वा वषट्कारः ।

'वषट्शब्देन चात्र वौषट् शब्दो लक्ष्यते' इति । समानार्थत्वाद् द्वावपि हि तौ देवतासम्प्रदानस्य द्योतकौ कारग्रहणं तु ज्ञापकम् 'अवर्णादपि कारप्रत्ययो भवति' इति । तेन एवकार इत्यादि सिद्धं भवति । 'यद्येवम्' इति । लक्षणा हि प्रतिपत्तिगौरवं भवतीति भावः । 'विचित्रा हि' इति । क्वचिदक्षरलाघवमाश्रीयते, क्वचित्प्रतिपत्तिलाघवमिति वैचित्र्यम् । 'उच्चैस्तराम्' इति । उच्चैःशब्द उदात्तभवने वर्तते, तत्र भवनक्रियापेक्षया [3]प्रत्यय उदात्ततर इति विवक्षितः । प्रकर्षश्च वौषट्शब्दे 'ब्रूहिप्रेष्यश्रौषड्वौषड्वहानामादेः' (८.२.९१) इति यः प्लुतो विहितः तदपेक्षो वेदितव्यः । [4]सन्त्युदात्ताः, अयं तूदात्ततरः । अन्त्यसदेशस्येत्येके । प्लुतोदात्तस्य च विधानसामर्थ्याच्छेषनिघाताभावोऽसि- त्वाद्वा द्वयोरप्यचोरुदात्ततरो भवतीत्येके । तदा याज्यान्तापेक्षः प्रकर्षः । स्वार्थिकस्तरबित्यन्ये । [5]ततो [6]ह्युदात्त प्रथमस्य सिद्धमिति द्वितीयस्याचो विधीयते । वषट्कारशब्दोऽयं मन्त्रब्राह्मणयोः कल्पसूत्रेषु वौषट्शब्दे निरूढः । क्रियते अनेन इति वषट्कारः । 'मा मास्प्रमृज' इति मन्त्रे, 'त्रयो वै वषट्काराः वौषडिति वषट्करोति' इति ब्राह्मणे च वषट्कारोऽन्त्यः । 'सर्वत्रोच्चैस्तरां बलीयान् याज्यायाः' इति सूत्रे उच्चैस्तरामिति श्रुतिप्रकर्षो विधीयत इत्याहुः ॥

## ३६. विभाषा छन्दसि ।

'यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्' इति । ननु यद्ययं योगो यज्ञकर्मणि स्यात्, पूर्वो योगो निर्विषयः स्यात् । जपन्यूङ्खसामान्यस्य विषयः, जपादिव्यतिरिक्तस्तु पूर्वस्य विषय इति व्यवस्था; तथा हि सत्यत्रैव जपादिग्रहणं कर्तव्यं स्यात्, किं छन्दोग्रहणेन ? छन्दोग्रहणात्तु छन्दो[7]मात्रोऽयं विकल्प इति गम्यते, [8]ततश्च यज्ञकर्मणीत्यस्यानुवृत्तौ पूर्वो नित्यो विधिर्निर्विषयः स्यात् ? एवं मन्यते—'ऊहमन्त्राणामच्छन्दस्त्वात्ते पूर्वयोगस्य विषया इति छन्दोरूपेषु मन्त्रेष्वयमेव विकल्पः स्यात्' इति । यद्यूहमन्त्रेषु सावकाशः पूर्वो योगः, तदा यज्ञकर्मणीत्यस्य विभाषाग्रहणेन निवृत्तावपि छन्दोरूपेष्वनूह्येषु मन्त्रेषु परत्वादयमेव विकल्पः प्राप्नोति । नैष दोषः, यज्ञकर्मणीत्यत्र कर्मग्रहणं यज्ञानुष्ठानमात्रे सर्वत्र नित्यो विधिः स्यादित्येवमर्थम् । यद्यप्यूह्यमाना मन्त्रा न भवन्ति, तथाप्यमन्त्राणामेव तेषां यज्ञकर्मणि प्रयुज्यमानानां पूर्वयोगविषयत्वं भवत्येव । ये तु जपादिपर्युदासेन मन्त्राणामेव तत्र ग्रहणमिच्छन्ति, तेषां सामर्थ्यलभ्या यज्ञकर्मणीत्यस्य निवृत्तिरिति विभाषाग्रहणमनर्थकं स्यात् । 'इषे' इत्यादि । इडन्नम्, [9]ऊर्ग् बलम् । चतुर्थ्येकवचनस्य 'सावेकाचः' (६.१.१६८) इत्युदात्तत्वम् । 'त्वामौ द्वितीयायाः' (८.१.२३) इति त्वादेशोऽनुदात्तः । 'अग्ने' इत्यामन्त्रिताद्युदात्तः (६.१.१९८) । आङुपसर्गः । 'याहि' इति । 'तिङ्ङतिङः' (८.१.२८) 'वा गत्यादिषु' (धा. पा. १०४८)

---

1. एवम् 2. विश्वसमत्रिणम् 3. प्रकर्षप्रत्ययः 4. स ह्युदात्तः 5. तत्र 6. हि नास्ति 7. ... 8. तेन 9. ऊर्क ।

वृषेषपच' (१.३.९६) इत्यादिना क्तिन्नुदात्तः। अग्निशब्दोऽन्तोदात्तः 'अमि पूर्वत्वं' (६.१.१०७), 'एकादेश उदात्तेनोदात्तः' (८.२.५)। 'ईळे' इति। 'ईड स्तुतौ' (धा. पा. १०१९.) लडुत्तमैकवचनम्। बह्वृचा द्वयोरचोर्मध्ये स्थितस्य डकारस्य लकारं विदधति। 'पुरोहितम्'। 'पुरोऽव्ययम्' (१.४.६७) इति गतिसञ्ज्ञा, 'गतिरनन्तरः' (६.२.४९) इति पूर्वपदप्रकृतिस्वरः, पुरःशब्दोऽसिप्रत्ययान्तोऽन्तोदात्तः। शन्शब्दो निपातः, नसादेशोऽनुदात्तः। 'देवट्' इति पचादिषु (३.१.१३४) पठ्यते, टित्वात् ङीप्। 'अनुदात्तस्य च यत्रोदात्तलोपः' (६.१.१६१)। अभिपूर्वादिषेः क्तिनि शकन्ध्वादित्वात् पररूपेऽभिष्टेस्यादौ च 'निति कृत्यतौ' (६.२.५०) इति पूर्वपदप्रकृतिस्वरेणाभिशब्दस्यान्तोदात्तत्वं चतुर्थ्येकवचनम्॥

## ३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः।

'सुब्रह्मण्या नाम निगदः' इति। अपादबन्धे गदिर्वर्तते, यथा गद्यमिति, निशब्दः प्रकर्षे। उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः, नितरां गद्यत इति कर्मणि 'नौ गदनद' (३.३.६४, ) इत्यप्। तस्य च सुब्रह्मण्याशब्दोपलक्षितत्वात् सुब्रह्मण्याशब्दोऽपरित्यक्तस्त्रीलिङ्ग एव नाम। ओङ्कारस्तित्स्वरेण स्वरित इति सुब्रह्मणि साधुरिति यत्प्रत्ययः, तित्स्वरेण स्वरितः। तस्य टाबेकादेशः, स्वरितानुदात्तयोरान्तर्यात् स्वरितः। ततो निपातेनौंशब्देन 'ओमाङोश्च' (६.१.९५) इत्युदात्तस्वरितयोरेकादेशः स्वरित एव। 'आमन्त्रितमाद्युदात्तम्' (६.१.१९८) इति आष्टमिकस्तु निघातोऽसमानवाक्यत्वान्न भवति। 'तस्यानेन' इति। न च तस्यासिद्धत्वम्, इदं हि प्रकरणमसिद्धकाण्ड उत्कृष्टव्यमित्युक्तम्। अत एवास्मिन्नुदात्ते कृते शेषनिघातोऽपि न भवति, यथोद्देशपक्षेऽनुदात्तपरिभाषायां कर्त्तव्यायामसिद्धत्वेन वर्ज्यमानाभावात्। तेनेह द्वावनुदात्तौ सम्पन्नौ इति। 'पश्चिम एकोऽनुदात्तः' इति। न च तस्य 'उदात्तादनुदात्तस्य' (८.४.६६) इति स्वरितप्रसङ्गः, प्रकरणोत्कर्षेणास्यासिद्धत्वात्, 'नोदात्तस्वरितोदयम्' (८.४.६७) इति निषेधाच्च। 'द्वावनुदात्तौ' इति। चकारच्छकारौ, शिष्टं स्पष्टम्। '[1]असावमुष्येत्यन्तः' एतस्मिन्नेव सुब्रह्मण्यानिगदे प्रथमान्तस्य षष्ठ्यन्तस्य चान्त उदात्तो भवति। गार्ग्यो यजते, दाक्षेः पिता यजते। तित्स्वरे प्राप्ते वचनम्। 'स्यान्तस्योपोत्तमं च' (कात्या. वा. ६५३) स्यशब्दान्तस्योपोत्तममुत्तमं चोभयमुदात्तं भवति। गार्ग्यस्य पिता यजते 'वा नामधेयस्य' (कात्या. वा. ६५४)। देवदत्तस्य पिता यजते॥

## ३८. देवब्रह्मणोरनुदात्तः।

'स्वरितस्योदात्त प्राप्ते' इति। कथं प्राप्तः, यावताऽसिद्धः स्वरितः? एवं तर्ह्येतज्ज्ञापयत्याचार्यः—'तस्यादितः' (१.२.३२) इत्यारभ्य नवसूत्रा 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६) इत्यस्मात् परा द्रष्टव्येति। उक्तानि प्रयोजनानि, उत्तरत्र च वक्ष्यामः। सामान्यापेक्षत्वाज्ज्ञापकस्य नवसूत्र्यप्युत्कृष्यते, न सुब्रह्मण्यास्वर एव। 'द्वयोरपि पदयोः' इति। द्वितीयस्य पदात् परस्यापि निघातो न भवति, 'आमन्त्रितं पूर्वमविद्यमानवत्' (८.१.७२) इति पूर्वस्याविद्यमानत्वात्। प्रथमस्यापि न भवति, भिन्नवाक्यत्वात्॥

## ३९. स्वरितात् संहितायामनुदात्तानाम्

अनुदात्तानामिति [2]बहुवचनं जातौ, तेनैकस्य द्वयोर्बहूनां च भवति। एकस्य पचति, द्वयोराग्निवेश्यः; बहूनां तु वृत्तावेव दर्शितम्। 'इममिस्यन्तोदात्तम्' इति। इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः; विभक्तिरनुदात्ता, त्यदाद्यत्वे 'अमि पूर्वः' (६.१.१०७.) 'एकादेश उदात्तेनोदात्तः' (८.२.५)। 'विधिकाल एव' इति। यद्यप्यत्र विहितस्यानुदात्तविधानेऽपि न कश्चिद्दोषः, तथापि तत्त्वेन व्यवहर्तव्यमित्येवमुक्तम्। 'तस्मात् स्वरितात्' इति। न च तस्यासिद्धत्वम्, उत्कृष्टत्वात् नवसूत्र्यास्तेन कार्ये देवदत्तेत्यादावविवेकश्रुतिर्भवत्येव। 'गङ्गेप्रभृतीनाम्' इति। न च यमुनेप्रभृतीनां व्यवधानम्,

---

1. असावमुष्यन्तः. 'असावित्यन्तः' (कात्या. वा. ६५१) 'अमुष्येत्यन्तः' (कात्या. वा. ६५२) 2. जातौ बहुवचनम्।

जातेरेकत्वाद् व्यक्तीनां सतीनामप्यनाश्रितत्वादकिञ्चित्करत्वम् । 'ततः परेषाम्' इति । 'नामन्त्रिते समानाधिकरणे' (८.१.७३) इति माणवकशब्दस्याविद्यमानत्वं न भवति । 'अवग्रहे मा भूत्' इति । इदमेव च संहिताग्रहणं ज्ञापकम् पञ्चमीनिर्देशे कालो न व्यवधायक इति । तेन 'तिङ्ङतिङः' (८.१.२८) इत्यवग्रहेऽपि भवति । 'अग्निमीळे' (ऋ. १.१.१)

## ४०. उदात्तस्वरितपरस्य सन्नतरः ।

परशब्दः प्रत्येकमभिसम्बध्यत इत्याह—'उदात्तः परो यस्मात्' इति । सन्नशब्देन नीचैरर्थ उच्यते, तेनानुदात्तत्वं लक्ष्यत इत्याह—'अनुदात्ततरः' इति । प्रकर्षः स्थान्यनुदात्तापेक्षः । 'मातर इत्यनुदात्तः' इति । समासेऽपि निष्कृष्यानुकृतः, देवा इत्यादीनां त्रयाणामामन्त्रितानामेकीभूतानामाद्युदात्तत्वे शेषनिघातः । 'विभाषितं विशेषवचने बहुवचनम्' (८ १.७४) इति विद्यमानपक्षे चामन्त्रितनिघातः, जसः सकारस्य रुत्वम्, तस्य त्र्यंसनयुक्तस्य 'अतो रोरप्लुतात्' (६.१.११३) इति उकारोऽनुदात्तः, 'आद् गुणः' (६.१.८७) सोऽप्यान्तर्यतोऽनुदात्तः, अच्छन्दाकारस्य शेषनिघातः तयोरनुदात्तयोः 'एङः पदान्तादति' (६.१.१०९) इत्येकादेश आन्तर्यतोऽनुदात्तः । 'सरस्वतीकारस्य' इति । ननु च सूत्र्युत्कृष्यत इति ज्ञापितम्, ततश्च गङ्गेप्रभृतीनामिव सरस्वतीकारस्यापि पूर्वेणैकश्रुतिरेव प्राप्नोति, कः पुनः सन्नतरस्यावकाशः, यः स्वरितात् परो न भवति ? 'अग्निः' इति । न च विप्रतिषेधेन सन्नतरो लभ्यते, पूर्वत्रासिद्धे नास्ति विप्रतिषेधः भावादुत्तरस्य । एवं तर्हि 'न मु ने' (८.२.३) इत्यत्र नेति योगविभागात् सिद्धत्वं भविष्यति । इह देवदत्तस्य न्यङ्‌क्‌ 'न्यधी च' (६.२.५३) इति पूर्वपदप्रकृतिस्वरे 'उदात्तस्वरितयोर्यणः' (८.२.४) इत्यञ्चत्यकारस्य स्वरितः पूर्वस्य सन्नतरत्वप्रत्यसिद्धो न भवति, प्रकरणोत्कर्षात् । 'उदात्तस्वरितयोः' इत्येव सिद्धे परग्रहणं बहुव्रीहावेकवचनविवक्षार्थमिति गङ्गेप्रभृतीनां सन्नतराभावः ॥

## ४१. अपृक्त एकाल्प्रत्ययः ।

'घृतस्पृक्' इति । 'क्विन्प्रत्ययस्य कुः' (८.२.६२) इति कुत्वम् । [1]'अर्धभाक्' इति । अत्र 'वेरपृक्तस्य' (६.१.६७) इति लोपः प्रयोजनम् । 'एकाल्ग्रहण किम्' इति । समुदायद्वारेणायमेकपदविषयः प्रश्नः, अन्यथा प्रत्ययमात्रस्य सञ्ज्ञा स्यादिति प्रदेशेषु प्रत्ययग्रहणमेव कर्तव्यं स्यात्, किं सञ्ज्ञया ? तत्र यद्यलन्तस्य स्यात्, केवलस्य चाप्यलन्तवद्भावात् अल्ग्रहणं व्यर्थं स्यादिति तत्सामर्थ्यादलसमुदायस्य न भविष्यतीति भावः ।

'दर्विः' इति । 'दॄ विदारणे' (धा. पा. १४९३) औणादिको विन् प्रत्ययः । वर्णग्रहणे जातिग्रहणाद[2]लसमुदाया गृह्यन्ते इति भावः । स्यादेतत्—'वेरपृक्तस्य' (६.१.६७) [3]इत्यत्र 'वोऽपृक्तस्य' इत्यस्तु, क्विबादिषु च मा भूदिकारः न चान्यः प्रत्ययो वकारोऽस्तीति । तन्न, 'राजनि युधि कृञः' (३.२.९५) राजकृत्वा, तमाचष्ट इति णिचि टिलोपे क्विपि णिलोपे च कृते क्वनिपः सम्बन्धी प्रत्ययो वकारोऽस्ति । अवश्यं च क्विबादीनामु[4]च्चारणार्थे कश्चिदजासञ्जनीयः तत्राकारे 'सृशृभ्यां वः' (उ. ३. ६) इत्यादिष्वपि लोपः प्रसज्येत, उकारे तु ण्वुलादिषु, अन्यत्र तु गौरवमिति यथान्यासमेव साधीयः । ननु च यद्यलसमुदायोऽपि गृह्येत, अल्ग्रहणमनर्थकं स्यात् । अतो यद्यपि 'निपात एकाजनाङ्' (१.१.१४) इत्यत्रैकग्रहणात् वर्णग्रहणे जातिग्रहणं ज्ञापितम्, तथाप्यत्राल्ग्रहणसामर्थ्यात् समुदायस्य न भविष्यतीति विना प्रयोजनमेकग्रहणम् । तथाऽपृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धे नार्थः सञ्ज्ञया, नतरां महत्या, नतमां पूर्वनिर्दिष्टया ।

'सुराः' इति । सुरां सुनोतीति क्विपि तुक् सुरासुतमाचष्टे इति णिचि टिलोपः, क्विब्, णिलोपः । अत्र यदि सकारस्य 'हल्ङ्याब्भ्यः' (६.१.६८) इति लोपो न भवति । प्रत्ययपरिभाषया सिद्धम् । तिपा साहचर्याच्चैकवचनग्रहणं सिद्धमिति प्रत्ययग्रहणमपि[5] चिन्त्यप्रयोजनमेव ॥

---

1. अर्धभाक् इति नास्ति 2. समुदायो गृह्येत 3. इत्येतदत्र 4. धारणार्थः 5. अपि नास्ति ।

## ४२. तत्पुरुषः समानाधिकरणः कर्मधारयः ।

अत्र 'तत्पुरुषः', 'समानाधिकरणः' इति द्वयोरपि पदयोर्मुख्यार्थत्वे ब्राह्मणराज्यं शोभनमित्यादौ यत्र बाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यं तत्रैव सञ्ज्ञा स्यात्, न तु परमराज्यमित्यादौ, शब्दान्तरस्याप्रयोगादित्यन्यतरद् गौणार्थमिति स्थिते कामचाराद्यदि तत्पुरुषशब्दो गौणः स्यात् तत्पुरुषार्थानि पदानि समानाधिकरणानीति. ततः सहग्रहणाभावात् प्रत्येकं सञ्ज्ञा इति शङ्क्येत । अतस्तत्पुरुष इति पदं मुख्यार्थमित्याह –'तत्पुरुषः' इति । 'समासविशेषस्य' इत्यादि । इतरद् गौणार्थमित्याह—'समानाधिकरणादः' इति । समानाधिकरणानि पदान्याश्रयत्वेन यस्य सन्ति स तथोक्तः, अवयवद्वारकं सामानाधिकरण्यमौपचारिकमपि पदान्तरनिरपेक्षमन्तरङ्गमिति तदेवाश्रीयत इति भावः । भवति ह्यवयवधर्मेण समुदायस्य व्यपदेशः, यथा––'समं चूर्णम्' इति । अत्र ह्यवयवद्वारकं चूर्णस्य साम्यम्, न तु कृत्स्नस्य चूर्णस्यान्येन । 'परमराज्यम्' इति । 'अकर्मधारये राज्यम्' (६.२.१३०) इत्यत्राकर्मधारय इति निषेधादुत्तरपदाद्युदात्तत्वाभावे समासान्तोदात्तत्वमेव भवति । 'पाचकवृन्दारिका' इति । 'न कोपधायाः' (६.३.३७) इति प्रतिषेधं बाधित्वा 'पुंवत्कर्मधारयः' (६.३.४२) इति पुंवद्भावो भवति ।

'तत्पुरुष इति किम्' इति । प्रतिपदोक्तत्वादधिकारावगतेर्वा समानाधिकरणाधिकारविहितस्तत्पुरुष एव प्रतिपत्स्यत इति प्रश्नः । 'पाचिकाभार्यः' इति । अयमेवार्थो दुरवधार इति भावः । 'ब्राह्मणराज्यम्' इति । अत्रोत्तरपदाद्युदात्तत्वमेव भवति । अथ 'पूर्वकालैक' (२.१.४९) इत्यस्य प्रकरणस्यान्ते 'कर्मधारय' इति कस्मान्नोक्तम्, योऽयं समानाधिकरणाधिकारविहितस्तत्पुरुषः स कर्मधारय इति, एवं हि 'तत्पुरुषः समानाधिकरणः' (१.२.४२) इति न वक्तव्यं भवति ? सत्यम्, एकसञ्ज्ञाधिकारात्तु कर्मधारयसञ्ज्ञया तत्पुरुषसञ्ज्ञाया बाधः स्यादिति द्विगोरिव पुनस्तत्पुरुषसञ्ज्ञाविधानाय कर्मधारयपदमुपादेयम् । पुनश्च पर्यायप्रसङ्गे समावेशाय चकारोऽपि वक्तव्यः । नन्वेवं करिष्यते––द्विगुकर्मधारयौ चेति, ? एवं तु न कृतमित्येव ॥

## ४३. प्रथमानिर्दिष्टं समास उपसर्जनम् ।

समास इत्यधिकरणनिर्देशोऽयम् । कष्टश्रितादयश्च समासाः, तेषु किं प्रथमानिर्दिष्टं भवितुमर्हति ? समासे सति यस्मात् प्रथमा विधीयते, न च तथाभूतं सम्भवति । समासे हि कृते तत एव प्रथमोत्पद्यते, न तदवयवात् । अन्तर्वर्तिन्या च विभक्त्या श्रितशब्द एव प्रथमानिर्दिष्टो न कष्टशब्दः । सापि न समासे सत्युत्पन्ना, किं तर्हि ? वाक्यकाल एव । निर्दिष्टग्रहणं चानर्थकं स्यात्, समासे प्रथमान्तमित्येव वाच्यं स्यात्, अतो मुख्यस्यासम्भवाद् गौणः समासो गृह्यते इत्याह––'प्रथमया' इत्यादि । कथं पुनः समास इति शास्त्रस्य ग्रहणमित्याह––'समासविधायि' इति । समासविधायित्वात्तादर्थ्यात्ताच्छब्द्यमित्यर्थः । निर्दिष्टग्रहणादेव च तुल्येऽपि समासार्थत्वे वाक्यं न गृह्यते, न हि तत्र निर्देशार्था प्रथमा, अर्थप्रयुक्तत्वात् । 'द्वितीयेत्येतत् प्रथमानिर्दिष्टम् इति । प्रथमया विभक्त्या उच्चारितम् । यद्येवं, तस्यैव सञ्ज्ञा स्यान्न कष्टादीनाम्, न हि ते शास्त्रे प्रथमानिर्दिष्टाः । य एव द्वितीयेत्यस्य प्रथमानिर्देशः, स एव कष्टादीनामपि, तत्परत्वात्तस्य । यथा वक्ष्यति––'तस्येति सामान्यं विशेषोपलक्षणार्थं तदीयप्राथम्यं विशेषाणां विज्ञायते' इति । कष्टश्रितादिषूपसर्जनत्वात् पूर्वनिपातः । महासञ्ज्ञाकरणमन्वर्थसञ्ज्ञाविज्ञानार्थम् । लोकेऽप्रधानमुपसर्जनमुच्यते, इहाप्यप्रधानमुपसर्जनम् । प्रधानमप्रधानमिति च सबन्धिशब्दावेतौ, तेन यत्प्रति यदप्रधानं तदेव प्रति तदुपसर्जनं भवति । तेन राज्ञः कुमारीश्रित इति 'द्वितीया श्रित' (१.१.२४) इत्यत्र प्रथमानिर्दिष्टस्यापि कुमारीशब्दस्य सञ्ज्ञा न भवति । यदि स्यात्, पूर्वनिपातानियम उपसर्जनह्रस्वत्वं च स्यात् । अन्वर्थत्वे तु श्रितादीनेवापेक्ष्य द्वितीयान्तमुपसर्जनमिति न प्रसङ्गः । एवं राज्ञः कुमार्या इत्यत्र द्वयोरपि 'षष्ठी' (२.२.८) इत्यत्र प्रथमानिर्देशेऽपि कुमारीमपेक्ष्य राज्ञ उपसर्जनत्वम्, न तं प्रति तस्याः । यद्यन्वर्थसञ्ज्ञा, नार्थोऽनेन, प्रदेशेष्वेवान्वर्थग्रहणमस्तु । वाक्येऽपि तर्हि स्यात्––कुमारीं श्रिता गवां कुलम् । अथ [1]सञ्ज्ञा-

1. सञ्ज्ञाविधावपि वाक्ये ।

विधिर्वाक्ये कस्मान्न भवति, यावता 'समासे' इति प्रथमानिर्देशस्याधारो न सञ्ज्ञायाः ? तथा गोकुलं कुमारीपुत्र इत्र समासेऽपि पूर्वनिपातवद् ह्रस्वत्वं कस्मान्न भवति ? तस्मात् सत्येवोपसर्जनत्वे उपसर्जनगोशब्दान्तस्योपसर्जन[1]स्त्रीप्रत्ययान्तान्तस्य प्रातिपदिकस्य ह्रस्वविधानात् समासाधिकारे पूर्वनिपातवचनाच्च वाक्ये तौ न भवत इति वाक्य सञ्ज्ञाविधानं तून्मत्तगङ्गमित्यादौ द्वयोरप्यप्राधान्ये पूर्वनिपातनियमार्थम् । यत्र चानन्यार्थः प्रथमानिर्देशस्तत्र प्रधानस्य यथा स्यादित्येवमर्थं च । यथा—'पाचकवृन्दारकः, पुरुषव्याघ्रः, अर्धपिप्पली, पूर्वकायः' इति, अत्र 'वृन्दारकनागकुञ्ज पूज्यमानम्' (२.१.६२), 'उपमितं व्याघ्रादिभिः' (२.१.५६), 'अर्धं नपुंसकम्' (२.२.२), 'पूर्वापराधरोत्तर (२.२.१), इति प्रथमानिर्देशस्येदमेव प्रयाजनम्, समासस्य विशेषणं विशेष्येण षष्ठीत्येव सिद्धत्वात् । न च पूज्यमा तादिविषय एव यथा स्यादिति नियमार्थस्तदारम्भः ? उपसर्जनसञ्ज्ञार्थत्वेऽर्धादि[2]पूर्वपदस्य विशिष्टरूपस्यार्धपिप्पलीत्य समासस्य विधिसम्भवात् । तस्मादेतदर्थाऽपि सञ्ज्ञा, अन्वर्थत्वं तु सति सम्भवे व्यवस्थापकम् ॥

## ४४. एकविभक्ति चापूर्वनिपाते ।

विभक्तिशब्दः सुपां वाचकः, कारकशक्तिवचनो वा, विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा । 'समासे विध माने' इति । यदुपमर्देन समासो भवति तस्मिन् वाक्य इत्यर्थः, समासरूपप्राप्त्यभिमुखे[3]पदत्रय इति यावत् । एतेन समास वाक्यमत्र समासः, न पूर्वसूत्र इव शास्त्रमिति दर्शयति । शास्त्रे[4]सर्वमेकविभक्तिकमित्येकविभक्तीत्यनर्थकं स्यात्, सुब समासे प्रत्ययलक्षणेनैकविभक्तित्वं समर्थनीयमिति वाक्यमेवात्र समासः । एकस्मिंश्च प्रयोगे सर्वमेकविभक्तिकमिति कि णोपादानसामर्थ्यात् प्रयोगभेदेनापि यस्य न सर्वविभक्तित्वं तदाश्रीयत इत्याह—'यन्नियतविभक्तिकम्' इति । एत स्पष्टयति—'द्वितीये सम्बन्धिनि' इत्यादि ।

केचिदाहु—'येन सह समस्यते स [5]द्वितीयसम्बन्धी' इति । एवं तु पञ्चानां खट्वानां समाहारः पञ्चख इति वा टाबन्त इति स्त्रीलिङ्गपक्षे उपसर्जनह्रस्वत्वं न स्यात् । समाहारो ह्यत्र नानाविभक्तियुक्तो न [6]पञ्चन्शब्दः, तस्म प्रधानार्थवाची शब्दो द्वितीयः [7]सम्बन्धः । 'निष्कौशाम्बिः' इति । कौशाम्बीशब्दो निष्क्रमणक्रियापेक्षयाऽपादानशक्तियो पञ्चम्यन्ते एव, न तस्य क्रियान्तरमपेक्ष्य शक्त्यन्तरावेशः सम्भवति । निःशब्दस्तु निष्क्रान्तप्रधानो नानाशक्तिभिर्युज्य

'निष्कौशाम्बिः' इति । कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी, 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८.) इति ह्रस्व 'निर्वाराणसिः' इति । अनो जलं तद्वरं यस्याः सा वाराणा गङ्गा, तस्या अदूरभवा नगरी वाराणसी । पुराणे तु व चासिश्च नद्यौ, शकन्ध्वादिः, तयोरदूरभवा पृषोदरादित्वाद्रेफाकारस्य दीर्घः । निसः पूर्वेणोपसर्जनत्वम्, प्रधानस्यापि प्रथमानिर्देशसामर्थ्यात् भवतीत्युक्तम् । इहास्यावकाशोऽप्रथमानिर्दिष्ट, पूर्वस्यावकाशोऽनेकविभक्तिः नीलोत्पलादि अर्धपिप्पल्यादिश्च । कष्टश्रितादिषु कष्टादय एकविभक्तिकाः प्रथमानिर्दिष्टाश्चेत्युभयप्रसङ्गे परत्वादनेनैव प्राप्नोति ततश्च 'अपूर्वनिपाते' इति प्रतिषेधप्रसङ्गः ? न, अप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः—पूर्वनिपाते नेति, किं तर्हि ? पर्युदासोऽ पूर्वनिपाते न विधिर्न प्रतिषेधः । प्रसज्यप्रतिषेधेऽप्यनन्तरप्राप्तिः प्रतिषिध्यते । कुत एतत् ? 'अनन्तरस्य विधिर्वा भव प्रतिषेधो वा भवति' (शा. प. २०), पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । न चेयं प्राप्तिः पूर्वां प्राप्तिं बाध प्रतिषिद्धत्वात् ॥

## ४५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

'अभिधेयवचनोऽर्थशब्दः' इति । न प्रयोजनवचनोऽव्यभिचारात्, न निवृत्तिवचनः, स्वयं निवृत्तस्य किं सञ्ज्ञया ? धनवचनः, स्वस्वामिभावस्यासम्भवात् । तच्चाभिधेयं चतुर्धा,— जातिगुणक्रियाद्रव्यभेदेन, 'गौः, शुक्लः, पाचकः, डित्थः' इ

1. त्वात् नास्ति 2. पूर्वस्य 3. पदद्वय 4. हि इत्यधिकम् 5. द्वितीयसम्बन्धी 6. पञ्च 7. सम्बन्धो ।

यद्यर्थवतः सञ्ज्ञा, अभावशशविषाणादीनां न प्राप्नोति, अर्थाभावात् । मा भूदनेन, समास इति भविष्यति । न, अर्थवदित्यनुवृत्तेः । अन्यथाऽनर्थकेऽत्र विधिसम्भवात् समासग्रहणं नियमार्थं न स्यात् ? उच्यते । येषां तावद् भूतलाद्याश्रयं घटादिप्रतियोगिकं नास्तीति[1] बुद्धिबोध्यं तत्त्वान्तरमभावस्तन्मते तेनार्थेनार्थवत्त्वम् । येषामप्याश्रयाभिमतं भूतलादिस्वरूपमेव तद्बुद्धिविशेषो वा प्रतियोगिनो घटादेरभावस्तन्मते तेनैव भूतलादिनाऽर्थवत्त्वमित्यभावस्य तावत् सिद्धा सञ्ज्ञा । शशविषाणमित्यत्रापि गवादिष्वनुभूतविषाणं शशमग्तकर्वतितया बुद्ध्योत्प्रेक्ष्य तस्यैवाभिधानाय शब्दप्रयोगः । बुद्ध्युपारोह एव चार्थस्य शब्दप्रयोगे कारणम् न बहिःसत्ता । यदि बहिःसन्तमेवार्थं शब्दा अभिदधति, घटोऽस्ति, घटो नास्तीति प्रयोगो न स्यात्, एकत्र पौनरुक्त्यात्, अपरत्र विरोधात् । बुद्ध्युपारूढस्य बहिःसत्त्वासत्त्वप्रतिपादनायोपपद्यते प्रयोगः । एवम्-अपाक्षीत्, पक्ष्यति, अस्य सूत्रस्य शाटकं वय इत्यादावपि बुद्ध्युपारूढ एव पच्यादीनामर्थः, न तु शब्दप्रयोगकाले बहिःसिद्धिः ।

डित्थादीन्यव्युत्पन्नान्युदाहरणानि । व्युत्पत्तौ कृदन्तत्वादेव सिद्धम् । सर्वं नाम धातुजमित्यत्रापि पक्षेऽव्ययार्थमनुकरणशब्दार्थं च सूत्रमारभ्यमेव । ननु लौकिके प्रयोगे शब्दानामर्थवत्ताध्यवसायः, स च वाक्यस्यैव पदस्य वा विभक्त्यन्तस्य, न तु प्रकृतिभागमात्रस्येति कथं तस्य निष्कृष्यार्थवत्त्वनिश्चयः, येषां हि सहैव प्रयोगस्तेषां सङ्घातस्यैवार्थवत्ता यथा वर्णानाम् ? उच्यते । अन्वयव्यतिरेकाभ्यां शब्दार्थनिश्चयः, यस्य शब्दस्यान्वये योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थः । वृक्षौ वृक्षा इत्यादौ च [2]प्रत्ययसामान्यव्यभिचारेऽपि तद्विशेषव्यभिचारः, वृत्तौ सामान्यव्यभिचारश्च वृक्षखण्डं वार्क्षी शाखा इति, अर्थस्तु मूलस्कन्धफलपलाशादिमान् यावद्वृक्षशब्दं प्रतीयते ।

'नान्तस्यावधेः' इति । ननु 'वन षण सम्भक्तौ' (धा. पा. ४६३.४६४) 'धन् धान्ये' (धा पा. ११२४) इत्येतयोर्षात्वोरेतौ शब्दौ पचाद्यचि व्युत्पादितौ, तत्राधातुरिति [3]निषेधो भविष्यति । एवं तर्ह्यव्युत्पत्तिपक्ष एतदुक्तम्, अत एवोदाहरणत्वेनाप्यनयोरुपन्यासः । किं चानत्यर्थवद्ग्रहणे प्रतिवर्णं सञ्ज्ञाप्रसङ्गः, न च प्रतिवर्णं धातुसञ्ज्ञा, न चाधातुरप्रत्यय इति पर्युदासाश्रयणात् अर्थवतो ग्रहणम्, अनर्थकयोरपि धातुप्रत्यययोः सम्भवात्, यथा—अधीते, यावक इति । अत्र ह्यधिपूर्वस्येङोऽर्थवत्त्वं न तु इङि, तस्य क्वचिदप्यप्रयोगात् । यावक इत्यत्रापि यावशब्दस्यैवार्थवत्त्वं न तु कनः, अन्तरेणापि तदर्थावगमात् । न च ज्ञायते केन धर्मेण सादृश्यमिति । 'न चार्थवद्ग्रहणपरिभाषयाऽर्थवतो ग्रहणम्', (व्या. प १) एषा हि नियतरूपोपादाने व्यवस्थापयति, न चात्र रूपविशेषोपादानम् । ननु सत्यामप्यनर्थकस्य सञ्ज्ञायां सङ्ख्याकर्मादिषु विधीयमानाः स्वादयो न भविष्यन्ति ? नैतदस्ति । अविशेषेणोत्पद्यन्ते, उत्पन्नानामर्थनियमः, ततश्चाव्ययवत स्वादयः स्युरेव । 'नलोपो हि स्यात्' इति । विभक्तेस्तु श्रवणं न भवति, समुदायस्यापि पृथक् प्रातिपदिकसञ्ज्ञायां तदन्तर्भावाल्लुको भावात । यद्येवम्, द्विर्वचनन्यायेनावयवस्य न भविष्यति. युक्तं तत्र [4]पज् इत्यत्र येनैवाचा समुदाय एकाच्, तेनैव तदवयवोऽच्छब्दः पशब्दश्च, न चैकस्यैकदाऽनेकं प्रत्ययवयवत्वम् निरूपयितुं शक्यम् । किञ्च समुदायद्विर्वचनेनावयवा अपि द्विरुच्यन्ते, तदात्मकत्वात्तस्य । इह त्ववयवानां समुदायस्य च सञ्ज्ञानिबन्धनं शब्दत्वं पृथगेव । तत्र समुदायस्य यत् तेन तस्यैव कार्यं नावयवानाम् । ननु च एति. आभ्याम्, औपगवः, अ अपेहोति, धातुप्रातिपदिकप्रत्ययनिपातानाम् एकवर्णानामर्थदर्शनात् वृक्षादिष्वपि वर्णा अर्थवन्तः तथा कूप इति ककारे सति कश्चिदर्थो गम्यते, यूप इति यकारोपजनेऽर्थान्तरम्, तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य, यो यूपे यूपार्थः, स यकारस्येति तथा 'ब्राह्मण' इत्युक्ते योऽर्थो गम्यते नासौ बकारादीनामन्यतरापायेऽपि गम्यते । येषां च सङ्घातो यत्कार्यं करोति प्रत्येकमपि तत् कुर्वन्ति, यथा तिलानां खारी तैलमुत्पादयति, प्रत्येकं च तिलाः । ये च यस्मिन् प्रत्येकमसमर्थास्तेषां सङ्घातोऽपि तत्रासमर्थः, यथा—प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तथा खार्यपि तासाम् । अतः सङ्घातार्थवत्त्वाच्चार्थवन्तो वर्णाः, तत्कथमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिः । अनर्थकास्तु प्रति[5]वर्णानामर्थानुपलब्धेः, न हि 'ब्रा' इत्युक्ते कश्चिदर्थो गम्यते । अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येऽपि वर्णाः अर्थवन्त इत्यनुपलब्धिबाधितमेतत् । एवमन्येऽपि हेतवो बाधितविषयाः । किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वे यूप इति[6]चतुर्णां वर्णानामानर्थक्यमभ्युपगतं स्यात्, अथ तेषामर्थवत्त्वं भूयिष्ठः कूपे यूपार्थ. स्यात्, कूपार्थश्च

1. इति नास्ति 2. सामान्याव्यभि 3. प्रतिषेधो 4. पच् 5. वर्णमर्थानु 6 चतुर्णां नास्ति ।

यूपे। यत्र भूयसामर्थवतामन्वयः, व्यतिरेकस्तु कस्यचित, तत्रार्थानामपि भूयसामनुवृत्तिर्भवति, व्यतिरेकस्तु कस्यचित्, 'देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्' इति। अतः सङ्घाता एव [1]तेनार्थवन्तः। सङ्घातार्थवत्त्वाच्च हेतुरनैकान्तिकः, तैलाग्निर्वर्तिसङ्घातेन दीपः, न प्रत्येकम्, रथावयवैश्चक्रादिभिः संहतैर्व्रजिक्रिया। किञ्चार्थवतां विपर्यासे प्रत्ययस्यापि विपर्यासः—आहर पात्रं पात्रमाहरेति, अपाये चापायः—गामभ्याज शुक्लां गामभ्याजेति, उपजने चोपजनः—[2]गामभ्याज शुक्लामिति। वर्णेषु तु नैवम्, हिनस्तीति सिंहो, हन्ति हतः घ्नन्ति। अतः सङ्घाता एवार्थवन्तः।

'अहन्' इति। हन्तेर्लङि तिप्, 'इतश्च' (३.४.१००) लोपे हल्ङ्यादिलोपोऽट्, स हन्ग्रहणेनैव गृह्यते, प्रागेव लङुत्पत्तेः सञ्ज्ञायां सत्यामुत्तरकालं पदत्वे सति नलोपः स्यात्। यद्वा प्रातिपदिकसञ्ज्ञा पदसञ्ज्ञासमकाले स्यात्, न वाऽप्रत्यय इति प्रतिषेधः; 'न ङिसम्बुद्ध्योः' (८.२.८) इति लिङ्गात्, अन्यथा हे राजन्नित्यादावप्रत्यय इति निषेधादप्रातिपदिकत्वादेव नलोपप्रसङ्गात्।

अधातुरिति शक्यमकर्तुम्, 'सुपो धातु' (२.४.७१) इति धातुग्रहणं ज्ञापकम्, न धातोरियं सञ्ज्ञेति। नैतदस्ति ज्ञापकम्, प्रतिषिद्धार्थमेतत् स्यात्, श्येनायत इत्यादावप्रत्यय इति निषिद्धा सञ्ज्ञेति भिद्, छिद्, भू, पुरित्येवमादौ [3]क्विबन्तत्वे कृदन्तत्वादुत्तरसूत्रेण सञ्ज्ञा। न च तस्या अपि प्रतिषेधोऽयम् 'मध्येऽपवादाः' (व्या. प. १०) इति न्यायात् पर्युदासत्वाद्वा।

'काण्डे' इति। प्रथमाद्विवचनस्य 'नपुंसकाच्च' (७.१.१९) इति शीभावः, अप्रत्यय इति च प्रत्ययग्रहणमिति भाषया तदन्तस्य निषेधः। यत्र हि प्रत्ययः सञ्ज्ञिरूपेऽनुप्रविशति, यथा 'तरप्तमपौ घः' (१.१.२२.) इति, तत्र पदसञ्ज्ञायामन्तवचनेन तदन्तविधिप्रतिषेधः। इह तु पर्युदासे प्रत्ययव्यतिरिक्तः सञ्ज्ञी, प्रसज्यप्रतिषेधेऽपि न सञ्ज्ञाविधौ प्रत्ययग्रहणं किं तर्हि, प्रतिषेध इति नास्ति निषेधः। ननूत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति, प्रत्ययान्तस्य यदि भवति कृत्तद्धितान्तस्यैवेति? उच्यते। [4]अस्मिन् सत्यप्रतिषेधे 'सञ्ज्ञाविधौ तदन्तविधिप्रतिषेधात्' (व्या.प. ७१) प्रत्ययस्य यदि भवति कृत्तद्धितस्यैवेति [5]स्यानियमः स्यात्। सति त्वस्मिन्, अत्र तावत् प्रत्ययान्तस्य निषेध इति उत्तरसूत्रेऽपि तद्धितान्तस्य ग्रहणं भवति। अथ क्रियमाणेऽप्यप्रत्यय इत्यस्मिन् नपुंसकह्रस्वत्वं कस्मान्न भवति? पर्युदासे तावत् प्रत्ययाप्रत्यययोरेकादेशस्य पूर्वं प्रत्ययान्तवद्भावः, प्रसज्यप्रतिषेधेऽप्यन्तरङ्गत्वात् प्रागेव प्रत्ययोत्पत्ते काण्डशब्दस्य प्रवृत्ता सञ्ज्ञेति एकादेशस्यान्तवद्भाव इत्यस्त्येव प्रातिपदिकत्वम्। तथा च ब्रह्मबन्धूरित्यूङेकादेशस्यान्तवत्त्वात् स्वाद्युत्पत्तिः। न चाप्रत्यय इत्यस्य वैयर्थ्यम्, त्रपुणी इत्यादौ यत्रैकादेशत्वं नास्ति तत्रार्थवत्त्वात्। एवं तर्हि नपुंसके यद्वर्तते तस्य ह्रस्वः. विभक्त्यन्तं तु सङ्ख्याप्रधानं कारकशक्तिप्रधानं च, न च तयोर्लिङ्गयोगः, न चान्तवद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्वः। यद्येवम्. त्रपुणो इत्यादावपि वमेव न भविष्यति, नार्थोऽनेन, न चान्यः प्रत्ययान्तो व्यावर्त्यः सम्भवति। तथा हि, षड्विधाः प्रत्ययाः,—सनादयः, कृतः, तिङः, सुपः, स्त्रीप्रत्ययाः, तद्धिताश्चेति। प्रातिपदिककार्यमपि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७) 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इति ह्रस्वत्वम्, 'ङ्याप्प्रातिपदिकात्' (४.१.१) इति प्रत्ययविधिश्च। तच्च कृत्तद्धितान्तस्येष्यत एव। सन्प्रभृतिषु येषां तावद्धातुत्वं तेषामधातुरित्येव प्रतिषेधः, श्यन्शबादीनामपि विकरणानां लिङ्गाभावः, सङ्ख्याकर्माद्यभावादपत्याद्यर्थायोगश्च। एवं तिङन्तानाम्, यथा—यः पचतिरूपम्, तस्यापत्यमिति रूपवन्तत्वात् सत्यपि प्रातिपदिकत्वे। ये तु सम्भवन्ति स्वार्थिकास्ते 'तिङश्च' (५.३.५६) इति ज्ञापकान्न भवन्ति। स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग एव। कुमारीपुत्र इत्यत्र 'गोस्त्रियोः' (१.२.४८) इति ह्रस्वः स्यादिति चेत्, अथ क्रियमाणेऽपि प्रतिषेधे राजकुमारीपुत्र इत्यत्र कस्मान्न भवति? अत्र हि समासत्वादस्त्येव प्रातिपदिकत्वम्। अतो यस्तत्र परिहारः स एवात्रापि भविष्यति। प्रत्ययविधिस्त्विष्यत एव। 'ङ्याप्प्रातिपदिकात्' (४. .१) इति सुबन्तस्य ह्रस्वत्वं न प्राप्नोतीत्युक्तमेव, सुपां चाप्रसक्तिः, तद्विधानदशायां तदन्तस्यासम्भवात्, लिङ्गाभावात् स्त्रीप्रत्ययाभावः। तद्धितास्त्विष्यन्त एव 'समर्थानां प्रथमाद्वा' (४.१.८२.) इति। अतो नार्थोऽनेन, उत्तरसूत्रे तद्धितग्रहणेन च? उच्यते—'बहुषु बहुवचनम्' (१.४.२१,) 'कर्म

1. तेनार्थेनार्थवन्तः. 2. गामभ्याज गामभ्याज 3 क्विबन्ते 4. असत्यस्मिन्प्रतिषेधे. 5. स्थानि ना'स्त्य

द्वितीया' (२.३.२,) इत्यादीनां स्वादिविधिवाक्येन भिन्नवाक्यतापक्षे सर्वेभ्यः प्रत्ययान्तेभ्यः स्वादयः स्युः, यथा—अव्ययेभ्यः। विकरणान्ताच्च स्वार्थिकास्तद्धिताः स्युरेवेत्यतोऽप्रत्ययग्रहणं कर्तव्यं तद्धितग्रहणं च। काण्डे कुड्य इत्येतयोस्तु प्रत्युदाहरणत्वम् 'ह्रस्वो नपुंसके' (१.२.४७) इत्यत्रोपपादयिष्यामः।

अथ प्रत्ययमात्रस्य सञ्ज्ञा कस्मान्न [1]भविष्यति, सत्यां हि सञ्ज्ञायामुक्तेन न्यायेन बहुपटव इत्यादौ स्वादयः स्युः ? उच्यते—व्यपदेशिवद्भावेन प्रत्ययान्तवदप्रत्यय इति प्रतिषेधो भविष्यति। यद्येवम्, कृत्तद्धितमात्रेऽपि विधिसम्भवात् उत्तरसूत्रे तदन्तविधिर्न भवति ? अत्र परिहारं वक्ष्यामः॥

## ४६. कृत्तद्धितसमासाश्च।

[2]कृतो विहितास्तदादय इति वेदितव्यम्। अत्र हि कृद्ग्रहणपरिभाषा नोपतिष्ठते। तेन मूलकेनोपदंशमिति वाक्यस्य सञ्ज्ञा न भवति। मध्येऽपवादन्यायेन (व्या प. १०) ह्यप्रत्यय इति निषेधः कृद्ग्रहणेन बाध्यते, न तु समासग्रहणेन कृतो नियमः। 'सञ्ज्ञाविधौ प्रत्ययग्रहणेऽप्यत्र तदन्तविधिर्भवति' (सी.प. २७) इत्यत्रोपपत्तिमाह—'अप्रत्ययः' इति। पूर्वसूत्रे प्रत्ययान्तस्य निषेधो न केवलस्य प्रत्ययस्येत्याश्रित्यैतदुच्यते। अप्राप्तप्रापणं विधिः। न च तदा कृत्तद्धितमात्रस्याप्राप्ता सञ्ज्ञा तदन्तस्य त्वप्राप्ते'ति विध्यर्थत्वात्तदन्तस्यैव ग्रहणम्। येषां तु पूर्वत्र प्रत्ययमात्रस्यापि निषेधस्तेषामर्थवद्ग्रहणानुवृत्तेरर्थवद्विशेषस्य तदन्तस्य ग्रहणम्, समासग्रहणमनर्थकम्, अर्थवत्त्वात् पूर्वेणैव सञ्ज्ञासिद्धेरित्यत आह—'अर्थवत्समुदायानाम्' इति। कर्मणि षष्ठी। नियमः व्यावृत्तिः।

ननु सुराजा अतिराजेत्यादौ अन्तर्वर्तिन्यां विभक्तौ लुप्तायां समुदायस्य[3] सञ्ज्ञा, तामपेक्ष्य सोरुत्पन्नस्य हल्ङ्यादि लोपे (६.१.६८) तस्यामवस्थायां नलोपार्थं या सञ्ज्ञा प्राप्नोति तस्याः प्रत्ययलक्षणेनाप्रत्यय इति निषेधे प्राप्ते विध्यर्थमेतत् स्यात्। ज्ञापकात्सिद्धम्, 'न ङिसम्बुद्ध्योः' (८.२.८) इति निषेधो ज्ञापयति, न प्रत्ययलक्षणेन निषेध इति, अन्यथा उक्तेन न्यायेन हे राजन्नित्यादौ नलोपाप्रसङ्गात्। नैतदस्ति ज्ञापकम्। हे सुराजन् इत्यादौ यत्र समासग्रहणेन सञ्ज्ञा विहिता तत्र नलोपप्रसङ्गे निषेधः स्यात्। एवं तर्ह्यत्राप्यप्रत्यय इत्यनुवर्तते, तेन प्रत्ययान्ते समासे विध्यर्थत्वासम्भवान्नियमार्थमेव समासग्रहणम्।

यद्वा अनुद्दिश्य प्रयोजनविशेषं न[4] कृत्सञ्ज्ञा प्रवर्तते, तस्यां तु सत्यां यस्यामवस्थायां यत्कार्यं प्राप्नोति तस्यां तद्भवति, न प्रतिकार्यमावर्तनीया सञ्ज्ञेत्ययं पक्ष आश्रीयते। अत्र च पक्षे सुबुत्पत्त्यर्थं नलोपार्थं च समाससञ्ज्ञानन्तरमेव सकृत् सञ्ज्ञा प्रवर्तते, न तु नलोपदशायामिति विध्यर्थत्वासम्भवान्नियमार्थमेव समासग्रहणम्। तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयः ? यस्यार्थवत्समुदायस्य पूर्वो भागस्तावत्पदम्, यश्चैव हि सुबन्तानां समासः राजपुरुष इति, यश्चैव हि तिङन्तानाम् 'आख्यातमाख्यातेन क्रियासातत्ये' (ग. सू. २०), अश्नीतपिबता, खादतमोदतेति, यश्च सुबन्तानां तिङन्तानां च 'जहि कर्मणा बहुलमाभीक्ष्ण्ये' (ग. सू. १९), जहिजोडः, जहि[5]शकटः इति, यश्च सुबन्तानां प्रातिपदिकानां च 'गतिकारकोपपदानाम्' (पु. प. ६२) इति वस्त्रक्रीती, निष्कक्रीतीति। सर्वत्रात्र पूर्वो भागस्तावत्पदम्। अतः स तुल्यजातीयो नियमेन व्यावर्त्यते, तेन बहुपटव इत्यत्र जसन्तस्य पुरस्ताद्बहुचि कृते [6]नोत्तरत्र सङ्घाते पूर्वो भागः पदमित्यसति नियमे ईषदसमाप्तिलक्षणेनार्थेनार्थवत्त्वात् सत्यां सञ्ज्ञायां पूर्वोत्पन्नस्य जसः 'सुपो धातु' (२.४.७१) इति लुकि कृते चिरस्त्रत्रोऽपि भवन् 'चितः सप्रकृते[7]र्बह्वकजर्थम्' (कात्या. वा. ३७४९) इति पटुशब्दोकारस्य भवति। पूर्वोत्पन्नस्य तु जसोऽवस्थाने तस्यैव स्यात्। 'वाक्यस्यार्थवतः' इति। प्रत्येकं पदैरप्रतीतस्य संसर्गस्य वाक्येन प्रतीयमानत्वात्तस्यार्थवत्त्वम्, समुदायाच्च प्रत्ययस्याविधानान्नास्त्यप्रत्यय इति निषेधः। न च 'नास्ति यस्मिन् प्रत्ययः सोऽप्रत्ययः' इति बहुव्रीहिः शक्य आश्रयितुम्, बहुपटव इत्यत्रापि निषेधप्रसङ्गात्॥

---

1. भवति 2. कृदेना इति। यस्मात्, इत्यधिकम् 3. या इत्यधिकम् 4. सकृत्सञ्ज्ञा 5. शाकट
6. न तत्र 7. बहुजकजर्थम्।

## ४७. ह्रस्वो नपुंसके प्रातिपदिकस्य ।

सूत्रे नपुंसकशब्देन तद्वद्द्रव्यं विवक्षितं न लिङ्गमात्रमित्याह—'नपुंसकलिङ्गेऽर्थे' इति । नपुंसकं लिङ्गमस्ये बहुव्रीहिः ।

'ग्रामणीः' इति । 'सत्सूद्विष' (३.२.६१) इत्यादिना क्विप् । 'प्रातिपदिकस्येति किम्' इति । नपुंसकलिङ्गं द्रव्यस्य धर्मं, द्रव्यवाचित्वं च प्रातिपदिकस्यैव, न सुबन्तस्य, शक्तिसङ्ख्याप्राधान्यात् । न धातोस्तिङन्तस्य वाक्यस्य वा, क्रि प्रधानत्वात् । वर्णास्त्वनर्थकाः, स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग इति प्रश्नः । 'काण्डे कुडचे' इति । अत्र 'अप्रत्य इति निषेधात् प्रातिपदिकत्वं नास्ति । ननु च एकादेशः पूर्वं प्रत्यन्तवद्भावात् प्रातिपदिकग्रहणेन गृह्यते इति क्रियमाणे प्रातिपदिकग्रहणे ह्रस्वत्वं स्यादेवात आह—'प्रातिपदिकग्रहणसामर्थ्यात्' इति । कथं पुनः सामर्थ्यं, यावता यत्रान्तवद्भा नास्ति—वाः वारी, त्रपुणी इत्यादौ, तद्व्यावर्त्यं स्यात् ? अथ शक्तिसङ्ख्याप्रधानत्वात् तत्र नपुंसकेनायोगः, काण्डे इत्यादावे एवमेव न भविष्यति । न ह्यन्तवद्भावेन प्रातिपदिकत्वे सत्यपि शक्तिसङ्ख्याप्राधान्यं हीयते । एवं मन्यते—'असति प्रातिपदि ग्रहणे नपुंसकवृत्तेरनपुंसकवृत्तेश्च य एकादेशः स नपुंसकवृत्तिग्रहणेन गृह्यते [1]नपुंसक इति स्यात् प्रसङ्गः, प्रातिपदिकग्रहणे मुख्यप्रातिपदिकग्रहणार्थत्वात् अतिदिष्टप्रातिपदिकत्वस्य ह्रस्वस्याभावः,' इति । उत्तरार्थं च प्रातिपदिकग्रहणम् । वनाय, वनाभ्याम्, वनार्थम्, वनेभ्यः इति ह्रस्वो न भवति, बहिरङ्गयोर्दीर्घत्वयोरसिद्धत्वात् । काण्डीभूतमित्यत्र नपुंसकत्वेऽपि च्व्यन्तदशायां अव्ययत्वेनालिङ्गत्वाद् ह्रस्वाभाव ॥

## ४८. गोस्त्रियोरुपसर्जनस्य ।

'स्त्री इति प्रत्ययग्रहणम्' इति । अत्र हेतुमाह 'स्वरितत्वात्' इति । 'स्वरितेनाधिकारः' (१.३.११) इत्यस्य स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो ग्राह्य इत्ययमप्यर्थः । इह च स्त्रीग्रहणं स्वर्यते, तेन स्त्रियामित्यधिकृत्य विहिता टाबादीनां ग्रहणं भवति, नार्थस्य, नापि स्वरूपस्य । [2]क्तिन्नादीनां तु ह्रस्वभावित्वाभावादग्रहणम् । 'उपसर्जनग्रहण तयो विशेषणम्' इति । प्रत्येकं सम्बन्धात्तु द्विवचनं न भवतीत्याह—'गोरुपसर्जनस्य' इत्यादि । 'स्त्रीप्रत्ययान्तस्य' इति पाठः पारिभाषिकं ह्यत्रोपसर्जनं गृह्यते । न च स्त्रीप्रत्ययमात्रस्य पारिभाषिकोपसर्जनत्वसम्भवः । 'ताभ्याम्' इति । उपसर्जन गोशब्देन स्त्रीप्रत्ययान्तेन च यदि ताभ्यां तदन्तविधिर्न विज्ञायते, तदा उपसर्जनस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य च प्राति पदिकस्य ह्रस्व इत्यर्थः स्यात्, ततश्च गोकुलं, राजकुमारीपुत्र इत्यत्रापि स्यादिति भावः । इह तु 'कुमारीपुत्रः' [3]इत्य प्रातिपदिकत्वादेवाप्रसङ्गः । उपसर्जनस्त्रीप्रत्ययान्तान्तस्य इति पाठः । उपसर्जन यत् स्त्रीप्रत्ययान्तं तदन्तस्येत्यर्थः । यदि लौकिकेनोपसर्जनेन स्त्रीप्रत्ययमात्रं विशेष्य पश्चात्तेन प्रातिपदिकस्य तदन्तविधि[4]र्विज्ञायते—उपसर्जनं य स्त्रीप्रत्ययस्तदन्तस्य प्रातिपदिकस्येति, ततो हरीतक्यः फलानीत्यत्रापि स्यात्, स्त्रीप्रत्ययार्थस्य फलं प्रत्युपसर्जनत्वात्तद्धितान्तत्वेन प्रातिपदि कत्वाच्च । अत एवमेवाश्रयणीयम्—स्त्रीप्रत्ययान्तं यच्छास्त्रीयमुपसर्जनं तदन्तस्य प्रातिपदिकस्येति । 'निष्कौशाम्बिः' इति कौशाम्बीत्येकविभक्तीत्युपसर्जनं स्त्रीप्रत्ययान्तं तदन्तं समासप्रातिपदिकम् ।

अथेह कथं ह्रस्वत्वम् अतिराजकुमारिरिति, यावता कुमारशब्दात् ङीब् विहितो न तु राजकुमारशब्दात् ? सत्यम्, अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नास्ति । अथ गोशब्देन स्त्रीप्रत्ययान्तेन च प्रातिपदिकस्य तदन्तविधौ सत्यपि गोकुलं राजकुमारीपुत्र इत्यत्र कस्मान्न भवति, यावता 'येन विधिस्तदन्तस्य' (१.१.७२) इत्यत्र 'स्वं रूपं' (१.१.६८) इत्य नुवर्तते, ततश्च येन तदन्तविधिः तत्स्वरूपस्यापि ग्रहणेन भाव्यम् ? एवं तर्हि गोशब्देन प्रातिपदिकस्य विशेषणसामर्थ्यात् केवलस्य न भवति, अन्यथा गोशब्दस्यैवोपसर्जनस्य ह्रस्वं विदध्यात् 'येन विधिस्तदन्तस्य' (१.१.७२) इत्यत्र वा 'स्वं रूपम्' इति निवर्त्यम् । व्यपदेशिवद्भावोऽपि प्रातिपदिके नास्ति । राजकुमारीपुत्र इत्यत्र तु परिहारः—शास्त्रीयमप्युप सर्जनं सति सम्भवेऽन्वर्थमेवाप्रधानमुपसर्जनमिति, प्रधानं चापेक्ष्याप्रधानं भवति । स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समास मन्तरेणानुपपन्नम्, समास[5]श्चावयवात्मकः । द्वयं चात्र सन्निहितम्—प्रधानमप्रधानमिति । तत्रैवं विज्ञास्यामः—[1]प्र

1. नपुंसक नास्ति 2. क्तिनादीनां 3. इत्यप्रातिपदि 4. विज्ञायेत 5. श्चावयवद्वयात्मक ।

स्त्रीप्रत्ययान्तं समासप्रातिपदिकं तदन्तर्भूतमेवापेक्ष्य स्त्रीप्रत्ययान्तस्याप्राधान्यमिति । इह तु तत्रानन्तर्भूतं पुत्रमपेक्ष्याप्राधान्यमिति न भवति ह्रस्व ।

'ईयसः' इत्यादि । [2]ईयसुन्नन्ताद्यः स्त्रीप्रत्ययो विहित[3]स्तवन्तान्तस्येत्यर्थः । 'बहुश्रेयसी' इति । 'प्रशस्यस्य श्रः' (५.३.६०) ङीप्, बह्व्यः श्रेयस्योऽस्येति बहुव्रीहिः, 'नद्यृतश्च' (५.४.१५३) इति कप्, 'ईयसश्च' (५.४.१५६) इति प्रतिषेधः । पुंस्यपि सोर्हल्ङ्याादिलोपः (६.१.६८) । बहुव्रीहेरिति किम् ? अतिश्रेयसिः ॥

## ४९. लुक्तद्धितलुकि ।

'स्त्रीग्रहणमनुवर्तते' इति । न तु गोग्रहणम् । कुतः ? प्रत्ययादर्शनस्य लुक्सञ्ज्ञाविधानात् [4]गोशब्दस्याव्युत्पन्नत्वात्, व्युत्पत्तिपक्षेऽप्यस्वरितत्वात् । 'उपसर्जनस्य च इति । 'अनुवर्तते' इत्यपेक्षते । लौकिकं चात्रोपसर्जनं गृह्यते, न शास्त्रीयम् । पूर्वेण ह्रस्वत्वे प्राप्ते इति क्वचित् पठ्यते, तत्र क्वचिदिति[5] विशेषः । [6]पूर्वसूत्रेण हि शास्त्रीयमुपसर्जनं गृह्येतं तस्यावकाशो यत्र न तद्धितलुक्––निष्कौशाम्बिरिति, अस्यावकाशो यत्र शास्त्रीयमुपसर्जनम्––आमलकमिति ; [7]तद्धितलुक्च यथा––'पञ्चेन्द्रः' इति । अत्र हि समासार्थे नानाविभक्तिके पञ्चेन्द्राणीत्येकविभक्तिकमिति अस्त्युपसर्जनत्वम् । तत्रोभयप्रसङ्गे परत्वादयमेव लुग् ह्रस्वं बाधत इत्यर्थः ।

केचित्त्वस्मादेव ग्रन्थात् पूर्वसूत्रेऽपि लौकिकस्योपसर्जनस्य ग्रहणं मन्यन्ते, तेषां हरीतक्यः फलानि इति लुब्विषये ह्रस्वप्रसङ्ग इत्युक्तम् । स्यादेवम्––लुपि युक्तवदिति शब्दार्थयोरप्यतिदेशः, प्रकृत्यर्थस्य यल्लिङ्गं यश्च तदभिधायी प्रत्ययः तयोर्द्वयोरतिदेशः, तत्रौपदेशिकस्य ह्रस्वत्व आतिदेशिकस्य श्रवणं भविष्यतीति । यद्येवम्, युवतिरिव पुरुषः 'लुम् मनुष्ये' (५.३.९८) युवतिः, द्वौ तिशब्दौ श्रूयेयाताम्, तस्मात् 'लुब्योगाप्रख्यानात्' (१.२.५४) इति लुपः प्रत्याख्यानेन वाऽत्र परिहारो वाच्यः, शास्त्रीयं वोपसर्जनं ग्राह्यम् । ग्रन्थस्य च व्याख्यात एवार्थः ।

अभावरूपेण लुका पौर्वापर्यासम्भवाल्लुकीति सत्सप्तमीत्याह––'लुकि सति' इति । 'पञ्चेन्द्रः' इति । 'तद्धितार्थ' (२.१.५१) इति समासः, 'साऽस्य देवता' (४.२.२४) इत्यणः 'द्विगोर्लुगनपत्ये' (४.१.८८) इति लुक्, 'इन्द्रवरुण' (४.१.४९) इत्यादिना विहितस्य ङीषोऽनेन लुक्, 'सन्नियोगशिष्टानामन्यतराभावे' (व्या. प. ४८) इत्यानुको निवृत्तिः । 'पञ्चशष्कुलिः' इति । तेन क्रीतम्' (५.१.३७) इत्यार्हीयस्य ठकः 'अध्यर्धपूर्व' (५.१.२८) इति लुक् । 'आमलकम्' इति । 'नित्यं वृद्धशरादिभ्यः' (४.३ १४४) इति मयटः 'फले लुक्' (४.३.१६३) । बदरीकुवलीशब्दाभ्याम् 'अनुदात्तादेश्च' (४.३.१४०) इति अञ् । शष्कुल्यादयो गौरादिङीषन्ताः (४.२.४२) ।

'अवन्ती' इत्यादि । अवन्तिकुन्तिशब्दाभ्यामपत्ये, 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१) । कुरोः 'कुरुनादिभ्यो ण्य' (४.१.१७२), स्त्रियामवन्तीति लुक्, कुरुशब्दात् 'ऊङुतः' (४.१.६६) इत्यूङ् । इतराभ्याम् 'इतो मनुष्यजातेः' (४.१,६५) इति ङीष् । अत्रापत्यलक्षणा जातिः स्त्रीप्रत्ययान्तेन प्राधान्येनाभिधीयते ॥

## ५० इद् गोण्याः ।

'पञ्चगोणिः' इति । गोणीशब्दः परिमाणवचनः, आवपनवचनश्च, तत्राद्यात् 'प्राग्वतेष्ठञ्' (५.१.१८), द्वितीयादार्हीयष्ठक् (५.१.१९) । तयोः पूर्ववल्लुक् ।

'इदिति योगविभागः' इति । इहेद्ग्रहणमनर्थकम्, गोण्या इत्येवास्तु, ह्रस्व इत्येव । लुकस्तु वचनासामर्थ्यादनुवृत्तिः । तदेतदिद्ग्रहणमेव लिङ्गं योगविभागस्य । यदि योगविभागः क्रियते, सर्वत्रेत्त्वं प्राप्नोति । तत्राह––'स च' इति ।

1. यत् तत् स्त्रीप्रत्ययान्तान 2. ईसुनन्ताद्यः 3. तदन्तस्य 4. गोशब्दस्य चाव्युत्प॰ 5. शेष 6 पूर्वसूत्रे 7. यत्र तु शास्त्रीयमुपसर्जनं तद्धितलुक्च ।

यदि सर्वत्र स्याद् गोणीग्रहणमनर्थकं स्यादिति भावः । ननु तद्धितलुकि लुगप्युक्त, इत्त्वं चेति, तयोर्विकल्पप्रसङ्गे नित्य स्त्वमेव यथा स्यादित्येवमर्थं गोणीग्रहणं स्यात् । तत्कथं ततो विशिष्टविषयत्वं योगविभागस्य ? उच्यते । एक तावद्योगः सूत्रकारेण पठितः, तत्सामर्थ्यात् विभागसंस्कारोऽप्यनुवर्तते । अविभक्तश्च [1]योगो विशिष्टविषयः । इद सामर्थ्यान् क्रियमाणो विभागो विशिष्टविषय एव कल्प्यते । अत एवोच्यते--योगविभागादिष्टसिद्धिरिति । स पुनर्विशि विषयो व्याख्यानादवसेयः । तपरकरणं तत्कालार्थम्, दीर्घस्य दीर्घो मा भूत्, वचनं तु लुग्ह्रस्वबाधनार्थं स्यात् । असति तकारे प्राप्तप्रतिषिद्ध ईकार एवं [2]प्रतिप्रसूतः स्यात्, न त्वपूर्व इकारो विहित स्यादिति भाव्यमानत्वमेव न स्यात् ॥

## ५१. लुपि युक्तवद्व्यक्तिवचने ।

अभिधेयवल्लिङ्गवचनयोः प्राप्तयोरयमारम्भः । अभावरूपस्य लुपो लिङ्गसङ्ख्यातिदेशासम्भवादाह—'लु इति लुप्सञ्ज्ञया' इत्यादि । क्वचित्तु सप्तम्यन्तो लुप्शब्द उपादीयते, तत्रापि प्रकृत्यर्थ एवाभिधातुमिष्टः । सप्तम्युपादानं सूत्रे पठितत्वात्, यथा—मताविति मत्वर्थ उच्यत इति । युक्तवदिति निष्ठाप्रत्ययेन' इत्यादि । अत्र हेतुमाह —'स ह' इ युनक्ति सम्बध्नाति । यद्यपि प्रत्ययार्थोऽपि प्रकृत्यर्थमात्मना युनक्ति, तथापि न तस्येह ग्रहणम्, आनर्थक्यात् । न तस्यैव लिङ्गसङ्ख्ये तस्यैव विधातव्ये ।

'अथ वा' इत्यादि । पूर्वं 'युजिर्योगे' (धा. पा. १४४५) इत्यस्य क्तवत्वन्तस्य षष्ठीसमासो दर्शितः, इदानीं तस्यैव धातोः क्तान्तस्य वतिनिर्देशः, असमासश्चेति प्रदर्श्यते । 'युक्तः प्रकृत्यर्थः' इति । अत्र हेतुः —'प्रत्ययार्थेन सम्बद्धः' इ अस्मिन्नपि पक्षे पूर्ववदेव प्रत्ययार्थस्याग्रहणम् । 'सप्तम्यर्थे वतिः' इति । 'लुपि' इति प्रतियोगिनि सप्तमीनिर्देशात् सप्तम वर्तमानादिवार्थे वतिरित्यर्थः । व्यक्तिशब्द आविर्भावादिकेऽप्यर्थे वर्तते । वचनशब्दोऽपि भीमसेनो भीम इतिवत्, एकवच दिशब्दानां एकदेशप्रयोगोऽपि [4]सम्भाव्येत । तस्य च ग्रहणे 'पञ्चालानां निवासः' इति वाक्यावस्थायां षष्ठीदर्शनात एवातिदेशः स्यात् । कुरुपञ्चाला इति च द्वन्द्वे वाक्यावस्थायामतिदिष्टस्य वचनस्य लुकि समुदायाद् बहुवचनं न स्या ततस्तत्सम्प्रत्ययो मा भूदित्याह—'व्यक्तिवचने इति च इत्यादि । पूर्वाचार्यनिर्देशाश्रयणे कारणमाह —'तदेयमेव' इत्या कुत इत्यत आह—'तथा च' इत्यादि । न हि स्वकृतमेव स्वयं प्रत्याचष्ट इति युक्तम्, 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुम म्प्रतम्' (कु. २.५५) इति न्यायादिति भावः ।

'पञ्चालाः क्षत्रियाः' इति । पञ्चालस्यापत्यानि बहूनि 'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६६), 'ते तद्रा (४.१.१७२), 'तद्राजस्य बहुषु' (२.४.६२) । 'तेषां निवासो जनपदः' इति । अस्य वक्ष्यमाणेन 'पञ्चालाः' इत्य सम्बन्धः । 'तस्य निवासः' (४.२.६९) इत्यण् 'जनपदे लुप्' (४.२.८१) । कुरवः इत्यादि । 'कुरवः क्षत्रियाः' इत्यादिकं पूर्वानुसारेण गम्यमानत्वान्नोक्तम् । कुरुशब्दादपत्ये 'कुरुनादिभ्यो ण्यः' (४.१.१७६), मगधादिभ्यः 'द्व्यच्मग (४.१.१६८)इत्यण्, शेषं पूर्ववत् ।

'लुपीति किम्' इति । तद्धितोऽनुवृत्तः साहचर्यादर्थमुपस्थापयिष्यतीति प्रश्नः । 'लुकि मा भूत्' इति । अ 'तद्धितलुकि' (१.२.४९) इत्यनुवृत्तेस्तत्रैव स्यादिति भावः । 'लवणः सूपः' इति । 'संसृष्टे' (४.४.२२) 'लवणाल्लु (४.४.२४) । 'व्यक्तिवचने इति किम्' इति । युक्तवदिति क्तान्ताद्वतिरेवाश्रयिष्यते, षष्ठीनिर्देशो वा वरिष्यते इति मन्य 'शिरीषाणामदूरभवः' इत्यादि । अरीहणादिषु, वराहादिषु, कुमुदादिषु शिरीषशब्दस्य पाठात् 'वुञ्छणादिसूत्रेण' (४.२.८ वुञादयोऽस्माद्भवन्ति, तेषां च विशेषविहितत्वाल्[5]लुका न भवितव्यम् ? सत्यम्, 'औत्सर्गिकोऽपि तत इ इति वक्ष्यति, तस्य वरणादिदर्शनाल्लुप् । असति व्यक्तिवचनग्रहणे शिरीषेषु यद्वनस्पतित्वं तस्या

1. योगोऽविशिष्ट० 2. प्रतिप्रतिसूतः 3. लुबिति. 4. सम्भाव्यते 5. लुपा ।

ग्रामेऽतिदेशः स्यात्, ततश्च णत्वं प्राप्नोति, णत्वविधौ [1]विफली वनस्पतिरिति नाश्रीयते विशेषः। अत एव वृक्षवृत्तेर्णत्वं भवत्येव। 'शिरीष[2]वनम्' इति। ननु च ग्रामेऽपि वर्तमानो गुणभूतं वनस्पतित्वमाहेति णत्वप्रसङ्गः, न चात्र किञ्चित् प्रधानाश्रयं कार्यमस्ति येन गुण स्वकार्यं नारभेत। न च व्यक्तिवचनग्रहणस्य वैयर्थ्यम्, असति हि तस्मिन् प्रकृत्यर्थगतस्य व्यतिरेकस्याप्यतिदेशात् षष्ठी प्रसज्येत। सति तु तस्मिन् सङ्ख्यामात्रातिदेशे व्यतिरेकसहितायाः सङ्ख्याया अनतिदेशात्? नायं दोषः, एवं तर्हि णत्वविधौ प्रधानवनस्पतिग्रहणादत्र तदभावः।

'हरीतक्याः फलानि' इति। हरीतकीशब्दात् गौरादिङीषन्तात् (४.१.४१) 'अनुदात्तादेश्च' (४.३.१४०) इत्यञः 'हरीतक्यादिभ्यश्च' (४.३.१६७) इति लुप्। अत्र व्यक्तिरेव युक्तवद्भवति, वचनं त्वभिधेयवदेव। 'खलतिक वनानि' इति। खलतिकशब्दो वरणादिः, समासे उत्तरपदस्य बहुवचनस्य लुपो नियमार्थमेतद्, लुबर्थस्य बहुत्वातिदेशः समासे यदि भवति—उत्तरपदस्यैवेति, मधुरापञ्चालाः, इह न भवति—पञ्चालमधुरे इति। बहुवचनस्येति वचनात्। द्वित्वातिदेशः पूर्वपदस्यापि भवति—गोदौ च ग्रामः मधुरा च गोदमधुरा इति॥

## ५२. विशेषणानां चाजातेः।

पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसङ्ख्ययोर्लुबर्थेऽतिदेशः कृतः, न तु लुबन्ते शब्दे इति तत्र वर्तमानानां विशेषणानां सिद्ध एव युक्तवद्भावः। वचनं तु जातिप्रतिषेधार्थम्। अथ व्यधिकरणानां विध्यर्थं कस्मान्न भवति, ब्रह्मदत्तस्य पञ्चाला इति? 'तत्पुरुषः समानाधिकरणः' (१.२.४२) इत्यतः समानाधिकरणानुवृत्तेः। 'गोदौ' इति। गोदौ ह्रदौ वरणादिः (४.२.८२), ग्रामजनपदशब्दौ जातिवाचिनौ ताभ्यां लुबर्थो जातिरूपेणोच्यते। 'जात्यर्थस्य च' इत्यादि। जातिरूपस्य चार्थस्य, न जातिवाचिनः शब्दस्येत्यर्थः। तेन किं सिद्धं भवतीत्याह—'तेन' इति। द्वारग्रहणेनैतद् दर्शयति—जातौ प्रक्रान्तायां यद्विशेषणमुपनिपतितं तज्जातिमेव साक्षाद्विशिनष्टि, तद्द्वारेण तु लुबर्थो विशिष्टः प्रतीयते। तत्र विशेषणविशेष्यभावं प्रति [3]कामचार इति रमणीयादीनां जात्युपनिपाते युक्तवद्भावो न भवति, लुबर्थोपनिपाते तु भवति। यद्येवम्, नार्थोऽनेन, लुपोऽन्यत्राप्ययं प्रकारो दृष्टः, यथा—बदरी सूक्ष्मकण्टका मधुरावृक्ष इति। मधुरादीना बदर्युपनिपाते तल्लिङ्गसङ्ख्यायोगः, वृक्षोपनिपाते वृक्षलिङ्गसङ्ख्यायोगः, वृक्षस्य च नियतलिङ्गता। एवं तर्हि यत्तत्र तत्रोच्यते–गुणवचनानां हि शब्दानां [4]नाश्रयतो लिङ्गवचनानि भवन्तीति तदनेन क्रियते। विशेषणानां गुणवचनानामित्यर्थः। 'युक्तवद्व्यक्तिवचने'। आश्रयवल्लिङ्गसङ्ख्ये इत्यर्थः, यदा तु जातिविशेषणं तदा नेति। पदसंस्कारपक्षे च वाचनिकमेतत्। पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे लिङ्गसर्वनामनपुंसकत्वं वस्त्वन्तरानपेक्षमेकत्वं च प्राप्तमिति शुक्लं पटा इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य लिङ्गसङ्ख्ये विधीयेते। वाक्यसंस्कारे त्वयमनुवाद एव, आश्रयविशेषनिष्ठत्वेन विशेषणानामपि तल्लिङ्गसङ्ख्ययो[5]रसिद्धत्वात्।

'मनुष्यलुपि' इति। मनुष्यलक्षणे लुबर्थे विशेषणानां प्रतिषेधः। लुबन्तस्य तु भवत्येव—'चञ्चाभिरूपः' इति। [6]तृणपुरुषश्चञ्चा तत्सदृशो मनुष्यश्चञ्चा, 'सञ्ज्ञायाम्' (५.३.९७) इति कन्, 'लुम्मनुष्ये' (५.३.९८) इति लुप्। चर्मविकारविशेषो [7]वध्रिका॥

## ५३. तदशिष्यं सञ्ज्ञाप्रमाणत्वात्।

'सञ्ज्ञाप्रमाणत्वात्' इति। प्रमाणानां हि प्रमाणत्वं प्रतिपादकत्वं स्वार्थप्रत्यायनलक्षणम्। एतच्च सर्वेषामेव शब्दानामस्ति, न सञ्ज्ञाशब्दानामेव। उच्यते चेदं तत्र विशेषो विज्ञायत इत्याह—'सञ्ज्ञा शब्दा हि' इत्यादि। ये सञ्ज्ञाशब्दास्ते नानालिङ्गसङ्ख्या अपि स्वाभिधेयगतलिङ्गसङ्ख्यापेक्षया भिन्नलिङ्गसङ्ख्या अपि प्रमाणम्, [8]स्वार्थस्य प्रतिपादका इत्यर्थः। भवतु सञ्ज्ञाशब्दानामेवंविधं प्रमाणत्वम्, किमायातं यौगिकानां पञ्चालादिशब्दानामित्यत आह—

1. च फली 2. °वणम् 3. कामचाराद्रमणीयाक्षीनाम् 4. आश्रयतो 5. सिद्धत्वात 6. तृणस्य पुरुषः 7. वर्द्ध्रिका 8. स्वार्थप्रतिपादक।

'पञ्चाला वरणाः' इत्यादि । तदनेन पक्षधर्मत्वं हेतोरुक्तम्, पूर्वं तु दृष्टान्तगतो हेतुर्व्याख्यातः । दृष्टान्तमाह—'यथा' इति युक्तवद्भावमारभमाणोऽपि नात्र कश्चिद्यत्नं करोति. तदवश्यमयं शब्दस्वभाव एवाश्रयणीयः । कश्चिद्धि शब्दः स्वभावात् समुदायसङ्ख्यामभिधत्ते, कश्चिदवयवसङ्ख्याम्, यथा—'वनम् वृक्षाः' इति । एवं लिङ्गेऽपि द्रष्टव्यम् ॥

## ५४. लुब्योगाप्रख्यानात् ।

'किं कारणम्' इति । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति प्रथमा द्वितीया वा । तथा च योगाप्रख्यानादित्युत्तरोपपत्ति । योगः जनपदादेः क्षत्रियादिभिः सम्बन्ध, तस्याप्रख्यानादनुपलब्धेरित्यर्थः । तदाह—'न हि' इति । एतदेव विवृणोति 'नैतत्' इति । 'सञ्ज्ञा एताः' इति । यद्यपि सञ्ज्ञाशब्दा अपि पङ्कजादयोऽपेक्षितप्रवृत्तिनिमित्ताः सन्ति, तथापीह प्रकरणादनपेक्षितप्रवृत्तिनिमित्ता अपीति बोद्धव्यम् । अत एवाह—'तस्मादत्र' इत्यादि । ननु योगाप्रख्यानेऽपि तद्धित उत्पद्यते तद्यथा—'कम्बलाच्च सञ्ज्ञायाम्' (५.१.६) कम्बल्यमूर्णा[1] पलशतमिति ? सत्यम्, यत्र रूपे विशेषोऽस्ति । ननु च सञ्ज्ञाप्रमाणत्वादिति पञ्चालादिशब्दानामयौगिकत्वमुपपादितमित्यर्थाल्लुबपि प्रत्याख्यात एव, किमनेन क्रियते ? उच्यते सञ्ज्ञाप्रमाणत्वादित्यनेन दृष्टान्तगतो हेतुः शब्देनोक्तः, तस्यैव त्वर्थात पञ्चालादिगतत्वेन प्रतीयमानस्यासिद्धिमाशङ्क्य योगाप्रख्यानादिति यौगिकत्वमपाकुर्वन् हेतुमेव समर्थयते ॥

## ५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।

'पञ्चालादयः' इत्यादि । पूर्वयोगस्याप्रतिभास उक्तः, यस्तु तमपजानीते तं प्रत्यनेनानिष्ट[2]मापद्यत इति दर्शयति—'योगप्रमाणे हि' इति । हिशब्दो हेत्वर्थे प्रयुञ्जानः सूत्रे 'च' शब्दो हेतौ प्रयुक्त इति दर्शयति । एतदेव व्याचष्टे—'यदि' इति । 'अदर्शनमयोगः स्यात्' इति । दर्शनं ज्ञानं तच्च प्रयोगस्योच्चारणस्य फलम्, अतः फलाभावेन हेत्वभावो विवक्षित इत्याचष्टे । योगनिमित्तको हि योगाभावेन[3] प्रदर्शनं[4] युज्यते, यथा—दण्डीशब्द इति भावः । ननु भूतपूर्वमपि निमित्तं भवति, ततश्च सम्प्रति वरणादियोगाभावेऽपि भूतपूर्वः स एव निमित्तं भविष्यति ? नैतदेवम् । भूतपूर्वनिमित्तो हि व्यपदेशः गौणः स्यात्, न चायं गौणः, पदान्तरस्य प्रयोगमन्तरेणापि प्रतीयमानत्वात् । किञ्च यौगिकत्वे पुरुषान्तरसम्बन्धनिबन्धनोऽपि व्यपदेशः कस्मान्न प्रवर्तते ? विपर्ययो वा कस्मान्न भवति ? देशसम्बन्धाद् राजसु पञ्चालशब्द इत्यतोऽक्षादिशब्दवदनेकार्थ एवायं पञ्चालादिशब्दः ॥

## ५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।

'अर्थवचनम्' इति । कर्मणि षष्ठ्याः समासः । ननु च प्रधानप्रत्यययोः कर्त्रोर्निर्देशादुभयप्राप्तावित्यनेनात्र षष्ठी, ततश्च 'कर्मणि च' (२.२.१४) इति निषेधः प्राप्नोति ? नैष दोषः । प्रधानप्रत्यययोरत्र करणत्वं विवक्षितम् । कस्तर्हि कर्ता, पुरुषः समुदायो वा प्रधानोपसर्जनयोः प्रकृतिप्रत्यययोश्च ? एतदुक्तं भवति—प्रधानप्रत्ययाभ्यां करणाभ्यां पुरुषेण समुदायेन वा यदर्थस्य वचनशब्देन सह 'कर्तृकरणे कृता बहुलम्' (२.१.३२), 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या. प. १२६) इति समासः । ननु च प्रत्ययोऽपि प्रकृत्यपेक्षया प्रधानम्, कस्माद्भेदेनोपादीयते ? उच्यते । यदा 'प्रकृतिः प्रत्ययार्थं प्रति विशेषणतया स्वार्थमभिधत्ते' इति सिद्धं भवति, तदा प्रत्ययस्य प्राधान्यम्, तदेवेदानीं परिभाष्यत इति पूर्वाचार्यैस्तावत् प्रत्ययो भेदेन निर्दिष्टः—'प्रधानोपसर्जने,' 'प्रकृतिप्रत्ययौ' इति । ततश्च तल्लक्षणनिराकरणे प्रत्ययोऽपि भेदेनोपादेयः । 'अशक्यत्वात्' इति । अशक्यत्वमनन्तप्रकारत्वात् । बहुव्रीहावन्यपदार्थ उच्यते, प्लक्षन्यग्रोधमिति समाहारः क्वचित् प्रधानयोरेव सहाभिधानम्. प्लक्षन्यग्रोधाविति, स्वार्थिकेषु च प्रकृतिप्रत्ययौ प्रकृत्यर्थं सह ब्रूतः शुक्लतर इति, तथा आख्यातेषु 'क्रियाप्रधानमाख्यातम्' (वा. प. २.३४२) इति । तथा 'कर्तरि कृत्' (३.४.६७) कर्तरि तृतीया (२.३.१८) तत्र 'कृत्सु शक्तिमद् द्रव्यं प्रधानमुच्यते' इति क्रियाभेदे शक्त्यन्तराविर्भावः, पाचकं पश्येति विभक्तिषु शक्ति-

1. पल नास्ति 2. आपाद्यते 3. प्रदर्शनं नास्ति 4. प्रयुज्यते ।

प्राधान्यम्–इत्याद्यनन्तप्रकारमर्थाभिधानमशक्यं परिभाषितुमिति लोकत[1] एवार्थावगतेः कथमेतदित्याह––'यैरपि' इत्यादि ।

## ५७ कालोपसर्जने च तुल्यम् ।

'अर्थस्यान्यप्रमाणत्वात्' इति । कथं पुनरयमत्र हेतुर्लभ्यत इत्याह—'तुल्यशब्दो हेत्वनुकर्षणार्थः' इति । कथमेतदित्याह—'अशिष्यविशेषणं चैतत्' इति । चशब्दो हेतौ । आन्याय्यात्' इति रात्रेश्चतुर्धा विभक्तायाः पश्चिमे यामे न्याय्यं स्वापादुत्थानम्, शास्त्रीयत्वात्, प्रथमे यामे गते च संवेशनं शयनम् । अत्र लक्षणे रात्रेर्मध्ययामद्वयं नाद्यतनम्, द्वितीये तु तदपि । 'उभयतोऽर्धरात्रम्' इति । बहुव्रीहिः, कृत्स्नो दिवसः, आगामिन्या रात्रेः पूर्वार्धेन अतीतायाः पश्चिमार्धेन च युक्त इत्यर्थः । 'यद्येवम्' इति । यद्यर्थस्यान्यप्रमाणत्वादित्ययमेवात्रापि हेतुरित्यर्थः 'पूर्वसूत्र एव' इति । एवं हि तुल्यमिति न वक्तव्यम भवतीति भावः ।

## ५८. जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ।

'जात्याख्यायाम्' इति विषयसप्तमी, एवमेकस्मिन्नित्यपि व्यधिकरणे चैते सप्तम्यौ । जातिर्नामेत्यादिना सूत्रारम्भस्य कारणमाह—'एकोऽर्थ' इति । यद्यपि वैशेषिकपरिभाषिता सङ्ख्या जातेर्न विद्यते, तस्या द्रव्यधर्मत्वात्, तथापि भेदगणनरूपा सङ्ख्या विद्यत एव । यथोक्तम्—

> दिष्टिप्रस्थसुवर्णादि मूर्तभेदाय कल्पते ।
> क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका ।। (वा. प. ३.९.२)

इति । वैशेषिकाश्च व्यवहरन्ति––पञ्च कर्माणि, चतुर्विंशतिर्गुणा इति । 'जातेराख्या' इति । आख्यानमाख्या [2]प्रत्ययनम् । 'एकस्मिन्नर्थे' इति । जात्याख्ये बहुवचनशब्दोऽयमन्वर्थो न पारिभाषिकः । उक्तिर्वचनम् । बहूनां वचनं बहुवचनम् । ततश्चायमर्थः—एकस्मिन्नर्थे बहूनामुक्तिर्भवतीति सामर्थ्याद्वत्यर्थो गम्यते––बहूनामिवोक्तिः[3] । [4]यदि च जात्यर्थो बहुवद्भवतीति बहूनामिवोक्तिर्भवतीति सामर्थ्यात् स एवार्थ सम्पद्यत इत्याह—'जात्यर्थो बहुवद्भवति' इति । तेन किं सिद्धं भवतीत्याह–– नेन इति । यदि तु जातिशब्दाद्बहुवचनं [5]जात्यादि विधीयेत, ततो विशेषणेभ्यः सम्पन्नादिभ्यो न स्यात्, तेषामजातिशब्दत्वादिति भावः ।

'देवदत्तः' इति । यद्यपि जातिपदार्थवादिपक्षे ह्यत्राप्यवस्थाभेदानुगता जातिः शब्दवाच्या, तथापीह सामर्थ्याद्भिन्नपिण्डसमवेता जातिराश्रीयत इत्यनतिदेशः । काश्यपः' इति । काश्यपशब्दाद् 'बिदाद्यञ्' (४.१.१०४) तत इवार्थे सञ्ज्ञायां कन् (५.३.९७) 'लुम्मनुष्ये' (५.३.९८)। 'भवत्यय जातिशब्दः' इति । गुणभूताया गोत्रजातेरभिधानात् । 'न त्वनेन जातिराख्यायते' इति । प्राधान्येनेति भाव. । असत्याख्याग्रहणं जातौ वर्तमानादित्यर्थ स्यात्, तत्र यथा व्यक्तिपर्यन्ताभिधाने गवादिभ्योऽपि भवति, एवमत्रापि स्यात् । सति तु तस्मिंस्तत्सामर्थ्याज्जातिप्राधान्ये भवति । व्रीहियवौ' इति । ननु च यथा काशिकोसलीया इति जनपदलक्षणो वुञ् न भवति, तथा बहुवद्भावोऽत्र न भविष्यति ? विषम उपन्यासः । जनपदवाचिनो वुञ् विधीयते, न च जनपदरूपः समुदायोऽवयवाभ्यामारभ्यते, अतो यत् स्वतन्त्रं प्रातिपदिकं न तज्जनपदवाचि, [6]यज्जनपदवाचि न तत्स्वतन्त्रं प्रातिपदिकमिति कुतो वुञः प्रसङ्गः । अयं तु जातिप्रत्यायने विधिर्न जातिशब्दादिति स्यादेव प्रसङ्ग. ।

'सङ्ख्याप्रयोगे' इति । एकस्यैव बहुत्वातिदेशे क्रियमाण एकशब्दप्रयोगेऽपि स्यादिति भावः । आरभ्यमाणेऽप्येतस्मिन् गोत्वं व्रीहित्वमित्यादि निष्कृष्य जात्यभिधानेनैवायं विधिरिष्यते । व्यक्तिपर्यन्ते त्वभिधाने जातिव्यक्त्योस्तादात्म्यं सम्बन्ध इति जातिरूपेण व्यक्तीनामभिधाने एकवचनं सिद्धम् । व्यक्त्यात्मना तु जातेरभिधाने बहुवचनमिति नार्थोऽनेन ।।

---

1. एवार्थावगतिः 2. प्रत्यायनम् 3. भवतीति इत्यधिकम् 4. यदि च—सामर्थ्यात् नास्ति 5 जसादि
6. यज्जनपदवाचि नास्ति

## ५९. अस्मदो द्वयोश्च ॥

'अस्मदः' इत्यभिधेय[1]सम्बन्धेन षष्ठीत्याह—'अस्मदा योऽर्थः' इति । पञ्चम्यां तु तत्र वर्तमानस्य तिङन्त न स्यादिति भावः । 'एकत्वे द्वित्वे च' इति । ननु चास्मच्छब्दः प्रत्यगात्मनि वर्तते, स चैकः तस्य कथं द्वित्वयोगः, एक मपि तस्यायुक्तं विशेषणम्, [2]अव्यभिचारात् ? उच्यते । यदाऽन्यत्रात्मत्वमध्यारोप्यते—अयं मे द्वितीय आत्मेति, यदा 'त्यदादीनि सर्वैर्नित्यम्' (१.२.७२) इति एकशेषः क्रियते, तदा सम्भवत्यनेकार्थत्वम । अथ यत्रैवास्मच्छब्दो बहुवचना प्रयुज्यते, तत्र कथं द्वित्वैकत्वविशेषावसायः ? प्रकरणात्, आराच्छब्दस्येव दूरान्तिकयोः । 'अहम्' इति । 'ङेप्रथमयो (७.१.२८), 'त्वाहौ सौ' (७.२.९४)। 'वयम्' इति । 'मपर्यन्तस्य' (७.२.९१)। 'यूयवयौ जसि' (७.२.९३), 'शेषे लो (७.२.९०)। 'आवाम्' इति। 'युवावौ द्विवचने' (७.२.९२), 'प्रथमायाश्च द्विवचने' (७.२.८८) इत्यात्वम् ।

'सविशेषणस्य' इति । 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' (वै. श. १६३) इत्यत्रोन्नतत्वं विधीयते । न च विधेयोऽर्थो विशेषणमिति अतिदेशो भवत्येव ।

युष्मदि' इति । भाष्यवार्तिकयोरपठितमपि शिष्टप्रयोगदर्शनात पठितम् ॥

## ६०. फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।

'चकारः' इत्यादि । केचिदाहुः—ज्योतिषामावस्थिकी नक्षत्रत चन्द्रयोगे सति भवति, अन्यदा तु ज्योतिष्ट्वमे चन्द्रयोगश्च द्वयोः समुदितयोरिति द्वयोरेव बहुवचने सिद्धं चकारेण द्वयोरित्यनुकर्षन्नाचार्यो ज्ञापयति–नक्षत्रग्रहणं ज्यो उपलक्षणमिति, उपलक्षितज्योतिष्ट्वमेकैकस्याप्यस्तीति एकनिवृत्त्यर्थं द्वयोरित्यनुकर्षणीयमिति ।

तत्रोच्यते—सत्यप्येकैकस्य ज्योतिष्ट्वे न तत्र फल्गुनीशब्दो वर्तते, एवं प्रोष्ठपदादिशब्दः, उद्भूतावयव समुदाय एव ताभ्यामुच्यते । अत एव 'छन्दसि पुनर्वस्वोरेकवचनम्' (१. .६१) 'विशाखयोश्च' (१.२.६२) सूत्रारम्भः। नक्षत्रशब्दश्च निघण्टुषु तारकापर्याय एव पठितः । वेदेऽपि 'नक्ष[3]त्रेभिः पितरो द्यामपिंशन्' (ऋ. १०.६८.१ 'त्वं नक्षत्राणां [4]मेथ्यसि चित्रम्' (हि. गृ सू. १.२२.१४) 'नक्षत्रमुदगात् पुरस्तात्' इत्यादौ ज्योतिर्मात्रवचन एव नक्ष शब्दः । 'नक्षत्रेण युक्तः कालः' (४.२.३) इत्यत्र वृत्तिकारो वक्ष्यति—'कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्य (काशिका. पृ. ३६३) इति, तदप्यनुपपन्नम्, आवस्थिके नक्षत्र[5]रूपे पुष्यादिभिर्योगस्य [6]कादाचित्कत्वात । 'तिष्यपुनर्वस्वो (१.२.६३) इत्यत्र च 'उदितौ तिष्यपुनर्वसू दृश्येते' इत्थं चन्द्रयोगेऽप्युदाहरिष्यते। प्रत्युदाहरणे च ज्योतिःस्वभावमेव दर्शयति—तिष्यपुनर्वसवो माणवका इति, तस्मान्नायं वृत्तिकार[7]पक्षः—आवस्थिकी नक्षत्रतेति । ज्योतिर्मात्रवचन एवाय चकारेण द्वयोरित्यस्यानुकर्षणमपि उद्भूतावयवभेदः समुदायोऽभिधीयते, न त्वेकैकं ज्योतिरिति प्रदर्शनार्थम् । 'प्रोष्ठप नाम्' इति सप्तम्यर्थे षष्ठी, 'नक्षत्रे' इति वा षष्ठ्यर्थे सप्तमीत्याह—'फल्गुन्योर्द्वयोः' 'नक्षत्रयोः' इति प्रत्येकमभिसम्बध्य सूत्रे तु व्यत्ययेनैकवचनम् । अत्राप्यर्थस्य बहुत्वातिदेश इति विशेषणस्यापि भवति । 'पूर्वे फल्गुन्यौ' इति । फल्गुनीभ्यां फल्गु भिर्वा युक्तः कालः (४.२.३) इति अण्, 'लुबविशेषे' (४.२.४), 'लुपि युक्तवद्व्यक्तिवचने' (१.२.५१) ।

'फल्गुन्यौ माणविके' इति । फल्गुन्योर्जाते 'फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ' (वा. ४५१) इति[8] टप्रत्य 'टिड्ढाणञ्' (४.१.१५) इति ङीप् ।

## ६१. छन्दसि पुनर्वस्वोरेकवचनम् ।

'द्वयोर्द्विवचने प्राप्ते' इति । पूर्वसूत्रे चानुकृष्टस्य द्वयोरित्यस्येहाननुवृत्तावपि पुनर्वसुशब्देनोद्भूतावयवभे ज्योतिर्द्वयस्य समुदायस्याभिधानात् द्वयोरेवायं विधिरिति दर्शयति ॥

---

1. सम्बन्धे 2. अभिचारात् 3. मेध्यासि 4. नक्षत्रत्वे इत्यधिकम् 5. रूपैः 6. कादाचित्क 7. वृत्तिकारस्य 8. टः

## ६२. विशाखयोश्च ।

किमर्थो योगविभागः ? इह चकारेण छन्दसीत्यनुवर्तयिष्यामीति, तेनोत्तरत्र 'छन्दसि' इति नानुवर्तते ॥

## ६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।

तिष्यपुनर्वस्वोरित्यनेनैव सूत्रेण द्विवचनापेक्षया सप्तमीद्विवचनम् । नक्षत्रद्वन्द्वे इति सत्सप्तमी, नक्षत्रद्वन्द्वे सति तिष्यपुनर्वस्वोरर्थयोर्द्वयोरिवोक्तिर्भवतीति, द्वन्द्वापेक्षया षष्ठीद्विवचनं वा । 'तेषां द्वन्द्वः' इति । अत्र तच्छब्दाद् द्विवचनं न भवति, वाक्यस्य प्रस्तुतत्वाद्द्वन्द्वार्थवृत्तित्वात् । अत्र पारिभाषिकयोर्द्विवचनबहुवचनयोर्ग्रहणे बहुवचनस्य द्विवचनमादेश स्यात् । तत्र जसादेशे प्रथमाद्विवचने 'जसि च' (७.३.१०९) इति गुणः स्यात्, विशेषणानां च न स्यादिति मत्वाऽऽह—'बहुवचनप्रसङ्गे' इति । बहूनामर्थानामुक्तिप्रसङ्ग इत्यर्थः । 'द्विवचनं भवति' । द्वयोरिवोक्तिर्भवतीत्यर्थः ।

'तिष्यपुनर्वसवो माणवकाः' इति । तिष्यपुनर्वसुशब्दाभ्यां नक्षत्राणो लुपि (४.२.३४) जातार्थे सन्धिवेलादिसूत्रेणाण् (४.३.१६), तस्य 'श्रविष्ठाफल्गुन्यनुराधा' (४.३.३४) इत्यादिना लुक् । [1]नात्र द्वन्द्वो नक्षत्रे वर्तते, किं तर्हि ? माणवकेषु । तत्रापि न गौणः, योगपरम्परया वृत्तेः । 'पर्यायाणामपि' इति । पुनर्नक्षत्रग्रहणसामर्थ्यादर्थस्यैवायमनपेक्षितोपात्तशब्दस्यातिदेशो भवति, तेन पर्यायाणामपि ग्रहणं सिध्यति ।

'द्वन्द्व इति किम्' इति । तिष्यश्च पुनर्वसू चेति वाक्ये समासेऽप्युत्तरपदार्थप्रधाने बहुत्वं न सम्भवति तादृशः समासश्च न सुलभः, बहुव्रीहिश्च न सम्भवति व्यधिकरणत्वात्, 'सङ्ख्यापूर्वो द्विगुः' (२.१.५२) [2]अप्यपूर्वोऽव्ययपूर्वः, अव्ययीभावश्चासम्भाव्य एवेति द्वन्द्व एव भविष्यतीति मन्यते । 'यस्तिष्यः' इत्यादि । अवयवेन विग्रहे उद्भूतावयवभेदः समुदायः समासार्थः । [3]उन्मुग्धाः पुरुषास्तदाह – 'तिष्यादय एव' इति । क्वचित्तु इमे तिष्यपुनर्वसवो मुग्धा इति पठ्यते, तत्रापि वैकृत्यवचनान्मुहेः कर्तरि क्त, अविविक्ता इत्यर्थः, ऋतवो मुह्यन्तीति यथा । 'नक्षत्रमम'स एवायम्' इति । समुदायसमुदायिनोरभेदादिति भावः । 'सर्वो द्वन्द्वः' इति । ननु च एकवद्भावप्रकरणे प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधिपयआदीनामितरेतरयोग एवेति नियम आश्रितः, ततश्च तस्मिन् प्रकरणेऽनुपात्तानाम् 'चार्थे द्वन्द्वः' (२.२.२९) इत्येव समाहारेतरेतरयोगयोर्द्वन्द्वसिद्धिः, किं ज्ञापकोपन्यासेन ? सत्यम्, विपरीतोऽपि नियमः सूत्रे सम्भाव्येत प्राण्यङ्गादीनामेव समाहार इति । तस्माद्बहुवचनग्रहणेन प्राण्यङ्गादीनां नियम्यत्वं ज्ञाप्यते । वृक्षादिविभाषाप्रयोजनं तत्रैव वक्ष्यामः ॥

## ६४. सरूपाणामेकशेष एकविभक्तौ ।

'समानं रूपं येषामिति सरूपाः' इति । 'ज्योतिर्जनपद' (६.३.८५) इत्यादिना समानस्य सभावः । 'सह रूपेण वर्तन्त इति सरूपाः' इति तु न भवति, व्यभिचाराभावात् । रूपशब्दश्चेह श्रोत्रग्राह्ये शब्दसम्बन्धिनि स्वरूपे वर्तते, न चक्षुर्ग्राह्ये शुक्लादौ, शब्दानुशासनप्रस्तावात्तदाह—'सरूपाणां शब्दानाम्' इति । निर्धारणे चैषा षष्ठी समुदायापेक्षया वा ।

अत्र पञ्च पक्षाः सम्भवन्ति । समानपर्याय एकशब्दः 'तेनैकदिक्' (४.३.११२) इतिवत् । समानत्वं च भेदाधिष्ठानमिति पृथक् सर्वेभ्यः समानायां विभक्तौ परत एकः शिष्यत इति प्रथमः । 'द्वन्द्वे' इति वर्तते, तत्र विरूपेष सावकाशमपि द्वन्द्वमेकशेषो न बाधते, निमित्तत्वात् । सरूपाणां द्वन्द्वे कृते समासादेकस्यां विभक्तौ परत इति द्वितीयः । अत्र पक्षे सङ्ख्यावाच्येकशब्दः । 'ह्रस्वो नपुंसके' (१.२.४७) इत्यतः 'प्रातिपदिकस्य' इति वर्तते, एकविभक्ताविति सारूप्योपलक्षणम् । एकविभक्तौ यानि सरूपाणि दृष्टानि तेषां प्रातिपदिकानामेवानैमित्तिक एकशेष इति तृतीयः । विभक्तिशब्दः कारकशक्तिवचनः, विभज्यते अनया प्रातिपदिकार्थ इति कृत्वा । एकस्मिन् कारके विवक्षिते यानि सरूपाणि

1. नायं 2. अप्यपूर्वः नास्ति 3. ननु मुग्धाः ।

तेषामेकशेषः, कारकं च विवक्षितं स्वनिमित्तां विभक्तिं प्रसूत इति, पृथग्विभक्त्यन्तानामेकशेष इति चतुर्थः। सरूप- दायादेकस्यां विभक्तौ परत इति पञ्चमः।

तत्राद्ये पक्षे—वृक्षस्, वृक्षस्, वृक्षस् इति स्थिते पूर्वयोर्निवृत्तौ स् स् वृक्षस् इति स्थिते मध्यसम्बन्धिनः सोर्ह- ल्ङ्यादिलोपे तदितरयोः श्रवणप्रसङ्गः। एवमाद्यन्तयोरपि निवृत्तौ द्रष्टव्यम्। परयोर्द्वयोर्निवृत्तावपि शिष्यमाणसम्बन्धि- लोपासिद्धिरेव। गोदौ वरणा इत्यादौ च पृथग् द्विवचनयोः परत एकशेषे तयोः श्रवणप्रसङ्गः। यत्र हि प्रत्ययनिमि- प्रकृतिनिवृत्तिस्तत्र केवलस्यापि प्रत्ययस्य प्रयोगो भवत्येव, यथा—इयानिति।

द्वितीये तु—अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात् पूर्वमन्तरङ्गत्वात् समासान्तोदात्तत्वे कृते पूर्वशेषः सर्वानुदात्तं पदं स्यात्, परशेषे तु [1]अश्वशब्दोऽन्तोदात्तः स्यात्, इह च ऋक् च ऋक्च ऋचौ अन्तरङ्गत्वात् 'ऋक्पूरब्धूः' (५.४.७४) इति समासान्ते कृते विभक्तेरकारेण व्यवधानान्नैकशेषः स्यात्, समासान्तो हि समासग्रहणे गृह्यमाणस्तमेव न व्यवदध्यात, सरूपं तु व्यवदधात्येव। एकग्रहणं वाऽनर्थकम्, न हि द्वन्द्वाद्युगपदनेका विभक्तिः सम्भवति। यदि पुनरेकविभक्तावित्येतदकृत्वा द्वन्द्वक्रियाऽनन्तरमेवैकशेष इत्युच्येत, एवमपि पादौ पादा इत्यादौ द्विवचनबहुवचने न स्याताम्, 'प्राण्यङ्गादीनां समाहार एव द्वन्द्वः' इति नियमात्।

तृतीये तु पक्षे—जननीवचनो यो मातृशब्दः, यश्च 'माङ् माने' (धा. पा. ११४२) इत्यस्मात्तृचि धान्यमातृ- वचनः, 'तयोरपि' 'माता मातृभ्याम्' इति क्वचिद्विभक्तौ सरूपत्वात् सर्वत्रैकशेषप्रसङ्गः। तथा हरितशब्दाद् 'वर्णादनुदात्तात्' (४.१.३९) इति ङीब्नकारयोर्यो हरिणीशब्दः सम्पद्यते, यश्च हरिणशब्दाज्जातिलक्षणे (४.१.६३) ङीषि, तयोर्न स्यात् ङ्यन्तयोः सारूप्येऽपि प्रातिपदिकावस्थायामसारूप्यात्।

चतुर्थे तु—निवर्तमानः शब्दो यद्यपि सह विभक्त्या निवर्तते, शिष्यमाणस्य त्वेकवचनश्रवणप्रसङ्गः। अतः पञ्चम- पक्षमाश्रित्याह—'सरूपाणां शब्दानामेकविभक्तौ परतः' इति। सरूपसमुदायादेकस्यां विभक्तौ परत इत्यर्थः। ननु 'ङ्या- प्प्रातिपदिकात्' (४.१.१.) इत्येकवचनान्तानां द्वन्द्वः, तत्र चैकत्वं विवक्षितम्, तत्कथं प्रातिपदिकसमुदायाद्विभक्तिः? अस्तु प्रत्येकं प्रातिपदिकत्वम्, समुदायोऽपि त्वर्थवत्त्वात् प्रातिपदिकम्। कः पुनः समुदायस्यार्थः? परस्परसम्बन्धः। एकैकेन विशकलितोऽर्थ उच्यते, समुदायेन तु सम्बन्धः। तुल्यजातीयस्य चार्थवत्समुदायस्य समासग्रहणेन निवृत्तिः। कश्च तुल्य- जातीयः? यत्र पूर्वो भागः पदम्। न चात्रैवमिति समुदायाद्विभक्तिरविरुद्धा। सा [2]त्वनुस्यूतावयवभेदत्वाद् द्विवचनं बहुवचनं वा, न त्वेकवचनम्। नावौ [3]जनावौ कर्तारावि[4]त्यादावचपरत्वादावादिष्वपि कृतेषु विरूपाणामपि समानार्थत्वा- देकशेषः। शेषशब्दोऽयं नागराजे अनन्ते अप्रधाने उपयुक्तादन्यत्र च न वर्तते, किं तर्हि? निवृत्तिमदवस्थान इत्याह— 'एकः शिष्यते इतरे निवर्तन्ते' इति। नन्वस्मिन् पक्षे एकग्रहणमनर्थकम्, न हि समुदायाद्युगपदनेका विभक्तिः सम्भवति? उच्यते, असत्येकग्रहणे पृथक् सर्वेभ्यो विभक्तौ परत इति प्रथमोऽपि पक्षः सम्भाव्येत। अतो यत्र पक्ष एकैव विभक्तिः सरूपाणां सम्भवति स एवैकग्रहणादाश्रीयते। अथ वा चतुर्थे पक्षे ग्रन्थः—कथं तर्हि विभक्तौ परत इति, न हि कारक- शक्त्या शब्दानां पौर्वापर्यं भवति। उच्यते। इष्टवाची परशब्दः एकस्यां विभक्ताविष्टायां एकस्मिन् कारके विवक्षित इति यावत्। ननु चोक्तम्—शिष्यमाणस्यैकवचनश्रवणप्रसङ्ग इति, न वेदानीं निवर्तमानसङ्ख्यावशादुपजायमाने द्वित्वबहुत्वे द्विवचनबहुवचने उपजनयितुमुत्सहेते, प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्? नैष दोषः। सहविवक्षायामेकशेषः। का पुनः सहविवक्षा? उक्तमत्र—

> [5]अनुस्यूतेव भेदाभ्यामेका प्रख्योपजायते।
> यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः॥ (वा. प. ३.१४.२८)

---

1. अश्वशब्दान्तोदात्तः इति मुद्रितः पाठः 2. त्वनद्भूतावयव० 3. राजानौ 4. इत्यादौ च परत्वादा- 5. अनुद्भूतेव भेदानाम् इति मुद्रितः पाठः।

इति । अयमर्थः—यदा बहवोऽर्था एकस्यां बुद्धौ उपारूढाः, यथा—पुरोऽवस्थितस्य हस्तस्य पञ्चाङ्गुलयः, ते चैकस्मिन्गुणे क्रियायां वा [1]तथैव विनियुज्यन्ते—शोभना इति वा, दृश्यन्त इति वा, तदा सहविवक्षा । तथा हि—आत्मनो या बुद्धिस्तां परत्र सङ्क्रमयितुं प्रयोक्त्रा शब्दः प्रयुज्यत इति । यदि चावयवाः पृथक् पृथगवधारिताः स्युः, यथा वातायनगतेन क्रमेण गच्छन्तः ततो भिन्नैरेव शब्दैः प्रत्येकं पर्यवसायिभिरेकवचनान्तैरभिधीयेरन् । समुदायाकारा त्वनुस्यूतावयवभेदैका बुद्धिः, तां परत्र सङ्क्रमयितुमिच्छता [2]तदनुरूपं शब्दः प्रयोक्तव्यः । न च तादृशस्य समुदायस्यासाधारणः कश्चिच्छब्दोऽस्तीत्यवयवशब्दैरेवासौ प्रतिपाद्यः । उपपद्यते चावयवशब्दैरेवाभिधानम्; समुदायसमुदायिनोरभेदात् । स चैकैक एवावयवशब्द उद्भूतावयवभेदसमुदायप्रतिपादनात् द्विवचनान्तो बहुवचनान्तश्च प्रवर्तत इति नैकवचनश्रवणप्रसङ्गः । यद्येवम्, एकेनैवावयवशब्देन तादृशस्य समुदायस्याभिधातुं शक्यत्वान्न यावदवयवशब्दप्रयोगप्रसङ्गः ।

अथ मतम्—अन्योऽन्यसन्निधावेव [3]समुदायरूपार्थाभिधानशक्तिः प्रादुर्भवति, कथं तर्हि एकशेषारम्भे एकस्य सा भवति, न हि सतोऽसती शक्तिरेकशेषवचनेन कर्तुं शक्यते ? उच्यते, विरूपेष्वन्योऽन्यसन्निधाने समुदायार्थाभिधानशक्तिः प्रादुर्भवति । पटुगुप्तावित्यत्रापि ह्युद्भूतावयवभेदं समुदायं प्रतिपादयितुमवयवशब्द एव प्रत्येकं [4]द्विवचनान्तः प्रवर्त्तते । अन्यथा द्विवचनबहुवचनायोगात् स्वार्थमात्रपर्यवसायिभिरवयवशब्दैः [5]क्रमेणैवोच्चरणादर्थोऽपि [6]प्रतीयते । क्रमेण चानेकार्थप्रतीतौ द्विवचनबहुवचने न भवतः । समुच्चयश्च भवति, तद्यथा वाक्ये पटुश्च गुप्तश्चेति । अतो विरूपेष्वेवं दर्शनात् सरूपेष्वपि द्वन्द्वाशङ्कायां सरूपेष्वेकस्यैवानेकार्थप्रतिपादनशक्तिरस्तीति वचनेन व्युत्पाद्यते ।

अन्ये तु तृतीयमपि पक्ष ग्रन्थारूढं वर्णयन्ति । सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति, एकविभक्तौ परतः सरूपाणामित्यन्वयः, न त्वेकशेष इति । एकस्मिन् कारके विवक्षिते एकविभक्तौ वा परतो ये सरूपाः दृष्टाः शब्दास्तेषामित्यर्थः । तत्र च शिष्यमाण एव निवर्तमानस्याप्यर्थमाचष्टे । अग्निचिदिति प्रत्ययनिवृत्तौ प्रकृतिवदिति द्विवचनबहुवचने यथायोगं भवतः । तत्र यदुक्तम्—हरितहरिणयोर्ङ्यन्तयोर्न स्यादिति, तन्न । प्रातिपदिकग्रहणं नानुवर्तते, तेन ङ्यन्तयोरेव सारूप्याद् भविष्यति । यदप्युक्तम—मातृशब्दयो प्रसङ्ग इति, अथविप्रतिषेधान्न भविष्यति । कृते ह्येकशेषे ताभिरित्यनुप्रयोगे पुमर्थो न गम्यते, तैरित्युक्ते स्त्र्यर्थः । वक्ष्यमाणस्य वा एवकारस्येहानुकर्षणादेकविभक्तौ यानि सरूपाण्येवेत्याश्रयणात् परिच्छेत्तृवाचिनश्च 'अप्तृन्तृच्' (६.४.११) इति सर्वनामस्थाने दीर्घविधानादसारूप्यादेकशेषाभावः । अत्र पक्षे एकग्रहणं चिन्त्यप्रयोजनम् । तदेवं पञ्चसु पक्षेषु त्रय स्वीकृताः ।

'वृक्षश्च वृक्षश्च' इति । 'अनैमित्तिक एकशेषः' इति पक्षे विभक्तौ सारूप्यं दर्शयितुं विभक्त्यन्तेन विग्रहः । कथं पुनर्विग्रहः, यावता एकशेषवृत्तिर्नित्या ? नैतद्वृत्त्या समानार्थवाक्यम्, प्रत्येकमत्र विवक्षा । आतश्च प्रत्येकम्, यतोऽत्र भेदनिबन्धेन समुच्चयश्चशब्देन द्योत्यते, भिन्नार्थमपि किञ्चिन्मात्रसाधर्म्याद्वाक्यं भवत्येव । समानार्थं तु वाध्यत एव, यथा—वृक्षौ च वृक्षौ च वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षा इति । ननु यद्येतावदेकार्थाभिनिवेशिनः शब्दाः—आकाशद्रव्यत्वगोत्वादयः, न तेषु द्विवचनबहुवचनेनाप्येकशेषः, ये त्वनेकार्थाभिनिवेशिनः—गौः, शुक्लः, पाचक इत्यादयः, तेष्वनुस्यूतं किञ्चिदर्थगतमेकं गोत्वादिनिमित्तं वक्तव्यम्, अन्यथा सम्बन्धग्रहणासम्भवादत्र गवादिषु [7]तद्गुणता जातिर्निमित्तं[8]न, [9]यथा शुक्लादिष्वपि गुणमात्रनिष्ठेषु । गुणिनिष्ठेषु तु स्वगतया जात्या एकीभूतो गुणः । एवं पाचकादिष्वपि । गोत्वाश्वत्वे सामान्ये, [10]निःसाम्यानि सामान्यानीत्यत्र भिन्नेष्वभिन्नप्रत्ययहेतुत्वं तावेतावित्यादौ परोक्षत्वप्रत्यक्षत्वादिकम् ।

अभावाश्चत्वार इत्यत्र निरुपाख्यत्वमित्यादि सर्वत्र द्रष्टव्यम् । निमित्ततद्वतोश्च तादात्म्यम्;, सर्वं हि वस्तु एकं नाना च गवादिरूपेणैकं खण्डमुण्डादिप्रातिपदिकरूपेण नाना । एवं स्थिते यदि तावज्जातिरेव शब्दार्थस्तदा तस्या

1. तथैव—यदि चावयवा नास्ति 2. तदनुरूपः 3. समुदायप्रतिपादनशक्तिः 4. द्विवचनबहुवचनान्तः 5. क्रमेणोच्चारणाद् 6. क्रमेणैव इत्यधिकम् 7. तद्गता 8. न नास्ति 9. तथा 10. निःसामान्यानि ।

एकत्वाप्नानेकशब्दप्रसङ्गः । अथाप्युभयम्, एवमपि जातिरूपेणैव शब्दो द्रव्यमभिधत्ते, न प्रातिस्विकेनाकारेण नास्त्यनेकशब्दप्रसङ्गः । केवलद्रव्यपदार्थपक्षेऽपि अस्मिन् विषयेऽनेकार्थाभिधानसामर्थ्यं शब्दस्य द्व्यादिपदवदभ्युपगन्तव्यम् अन्यथा सत्यप्येकशेषे तन्न स्यादिति सिद्धमेकशब्दत्वम् । द्रव्यगतसङ्ख्याप्रतिपादनाय द्विवचनबहुवचने भविष्यतः, न एतेनेत्याशङ्क्याह—'प्रत्यर्थम्' इत्यादि । एकैकस्मिन्नर्थे यस्माच्छब्दानां निवेशस्ततोऽनेकेन शब्देनानेकस्याभि सिध्यति । तत्रैवं स्थितेऽनेकार्थाभिधाने कर्तव्ये यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, इष्यते चैकशब्दः तस्मादेकशेष आरभ्यते ।

अयमभिप्रायः—केवलं जातिपक्षे अक्षाः, पादाः, माषाः इत्यादौ अनेकशब्दत्वं स्यात्, न हि विभीतकदेवन टाक्षेष्वनुस्यूतं किञ्चित् सामान्यमस्ति । अत एव तत्र व्युत्पत्तिर्भेदेनापेक्ष्यते, एवमुभयपक्षेऽपि । केवलद्रव्यपक्षेऽपि वृक्षवे वाक्येऽनेकशब्ददर्शनाद्विरूपेषु द्वन्द्वदर्शनाच्चारम्भणीयमेतदिति ।

'रूपग्रहणं किम्' इति । अन्तरङ्गत्वादहेयत्वादुपदेशानपेक्षत्वाच्च रूपकृतमेव समानत्वं ग्रहीष्यते इति प्रश्नः प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति रूढिशब्दत्वेन रूढिरिति तुल्यार्थावगमात् । रूपग्रहणे तु वर्तिपदार्थमव स्यान्यपदार्थोऽवगन्तव्य इति गौरवं भवति । 'भिन्नेऽप्यर्थे' इति । 'स्वं रूपम्' (१.१.६८) इत्यत्र रूपग्रहणेन ज्ञापितं शा रूपवदर्थोऽपि तन्त्रमिति । ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेति भावः । 'एकग्रहणं किम्' इति । शेष इत्येकत्वं विवक्षि इति प्रश्नः । 'द्विबह्वोः' इति । द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः । ननु द्वयोर्बहूनां चेति बहुवचनप्रसङ्गात् ए शेषविधानद्वारेण संस्क्रियमाणत्वाच्छिष्यमाणं प्रधानम्, प्रधाने च सङ्ख्या न विवक्ष्यते, यथा ग्रहं संमार्ष्टीति ? विष उपन्यासः । संमार्गे विधौ द्वितीयानिर्देशात् ग्रहाः प्रधानभूताः, संमार्गस्तु तेषां संस्कारः । संस्कारो नाम तस्य भवि यच्छास्त्रान्तरे प्रयोजनवत्यां क्रियायां साधनत्वेन विनियुक्तम्, संस्कृतस्य वा यस्य विनियोगः, द्रव्यमात्रस्य रूपसंस्का रोऽनर्थकः स्यात् । [1]यदिह संमार्गसंस्कारो विधीयमानः शास्त्रान्तरे विनियुक्तं ग्रहमपेक्षते, तत्र नवसङ्ख्या ग्रहाः श्रू इति तदपेक्षः संमार्गविधिर्नवानामपि भवितुमर्हति । ग्रहमित्येकवचनं तु कर्मत्वमात्र[2]मभिधायकतार्थं भविष्यति । इह शेषस्य वाक्यान्तरेऽनवधारणादिदमेवोत्पत्तिवाक्यमिति विवक्षणीया सङ्ख्या, पशुमालभेतेतिवत् । सत्यम्, इदमेवैकग्रह ज्ञापकम्—शास्त्रान्तरानवगतेऽपि प्रधाने सङ्ख्या न विवक्ष्यत इति, तेन 'कर्तुरीप्सिततमम्' (१.४.४९) इत्यत्र ईप्सिततमस सङ्ख्याया अविवक्षा सिद्धा भवति ।

'शेषग्रहणं किम्' इति । साध्वनुशासनप्रक्रमात् सरूपाणामेकः साधुर्भवतीति विज्ञास्यत इति भावः । 'आदेशो मा भूत्' इति । असति हि शेषग्रहणे 'षष्ठी स्थानेयोगा' (१.१.४९) इति वचनात् स्थानषष्ठी स्यात्, ततश्चादेश स्यात् । अस्तु, शब्दतोऽर्थतश्चान्तरतमो भविष्यति । नैवं शक्यम् । स्वरे हि दोषः स्यात्, द्वयोरश्वशब्दयोः समुदाय स्थानी, तत्र च द्वावुदात्താविति द्व्युदात्त आदेशः स्यादेतेन द्व्यनुदात्तत्वं व्याख्यातम् ।

'एकविभक्ताविति किम्' इति । नानाविभक्तौ वैरूप्यमवश्यंभावीति भावः । 'पयः पयः' इति । एकविभ क्तावित्यस्मिन्नसति सरूपाणां सर्वत्र सहप्रयोगो न स्यात् । अथ क्रियमाणेऽप्यस्मिन्ननैमित्तिकपक्षे कस्मादेवात्र भवति, एतदपि ह्येकस्यां विभक्तौ परतः सरूपं दृष्टमेव ? नैष दोषः । एकग्रहणमस्मिन् पक्षे अतिरिच्यत इत्युच्यते तत्सामर्थ्यादेकस्यामेव विभक्तौ विषयभूतायां भविष्यति । अत्र तु सत्येकशेषे पर्यायेण भिन्ना विभक्तिः स्यात् ।

अथ वा—किं न एतेन पक्षेण क्लेशतो व्याख्येयेन ? स्तां द्वावेव पक्षौ, इह एकश्चेति सङ्ख्याशब्दानामेकशेषो न भवति, अनभिधानात् । विंशत्यादीनां तु भवत्येव ॥

## ६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।

वृद्धशब्दोऽयं लोके चरमे वयसि प्रसिद्धः, युवशब्दो द्वितीये, तयोरिह ग्रहणे तरुणश्च वृद्धश्च युवा च स्थविरश्चेत्यादौ स्यात् । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (१.१.७३) 'जीवति तु वंश्ये युवा' (४.१.१६३), अनयो

1. तदिह 2. अभिधाय कृतार्थं ।

शास्त्रीययोर्ग्रहणे औपगवश्चानन्तर औपगविश्च युवेत्यादावपि स्यात्। अतो युवशब्दस्य तावत् कृत्रिमस्य व्यवहितापत्यवाचिनोऽत्र ग्रहणम्, तत्साहचर्याद्वृद्धशब्दस्यापि व्यवहितापत्यवाचिनः शास्त्रान्तरे प्रसिद्धस्य ग्रहणमित्याह—'वृद्धशब्दः' इत्यादि। गोत्रग्रहणे त्वपत्याधिकारादन्यत्र लौकिकस्य ग्रहणमित्यपत्यमात्रस्य ग्रहणं स्यात्। क्वचित् पुनरधिकोऽपि ग्रन्थः पठ्यते—'यूनेति सहयोग एषा तृतीया' इति, स इदानीन्तनैः प्रक्षिप्तः। 'यूना सहवचने' इति सहशब्दं प्रयुञ्जानः सूत्रे सहयोगे तृतीयेति दर्शयति। अत एव ज्ञाप्यते—सहविवक्षायामेकशेष इति। 'विशेषो वैरूप्यम्' इति। शब्दस्य वृद्धयुवनिमित्तस्य ग्रहणान्नान्य इति भावः। पदार्थं दर्शयित्वा तदयमर्थ इत्याह—'वृद्धयुवनिमित्तकमेव' इत्यादि। 'समानायामाकृतौ' इति। आकृतिः शब्दस्य प्रवृत्तिनिमित्तं गर्गापत्यत्वादि। क्वचित्तु प्रकृताविति पाठः, प्रकृतिः मूलप्रकृतिर्गर्गशब्दादिः। 'गार्ग्यश्च' इत्यादि। गर्गवत्सशब्दाभ्यां गर्गादित्वाद्यञन्ताभ्यां यूनि (४.१.१०५) 'यञिञोश्च' (४.१.१०१) इति फक्। 'गार्ग्यायणौ' इति। प्रकरणाद्विनाऽत्र जीवद्वंश्यताऽवसायः, शब्दस्य गोत्रद्वयस्यापि साधारणत्वात्।

यद्येवम् गार्ग्यश्च गार्ग्यश्चेति गोत्रशब्दयोरेव पूर्वेणैकशेषोऽस्ति. प्रकरणाद्विनैव युवत्वमन्यतरस्य गंस्यते। यूनो हि द्वावाकारौ—जीवद्वंश्यत्वम्, पौत्रप्रभृत्यपत्यत्वं च। तत्र विशेषाविवक्षायां सामान्यशब्दो न निवर्तते, यथा—वस्तुतो भूतानद्यतनेऽपि 'अभून्नृपो विबुधसखः' (भ. १.१) इति लुङ् भवति। तस्मान्नार्थ एतेन? उच्यते। प्रकरणानपेक्षेण शब्देन जीवद्वंश्यत्वं प्रतिपादयितुकामो द्वन्द्वं प्रयुञ्जीत [1]गार्ग्यायणाविति। अतो द्वन्द्वनिवृत्त्यर्थं वचनम्। प्रत्युदाहरणे तु सर्वत्र द्वन्द्वो भवति—'गार्ग्यवात्स्यायनौ' इति। नन्वत्र विशेषान्तरसद्भावेऽपि तल्लक्षणो विशेषो विद्यत इति स्यादेकशेषः? नैष दोषः। एवमर्थवचनं व्यज्यते—योऽसौ विशेषो यस्य सद्भावात् पूर्वेणाप्राप्तिः, स तल्लक्षणश्चेदिति। एवं च [2]यावदुद्देश्यं विधेयसम्बन्धात् सूत्रारम्भहेतुभूतस्य कृत्स्नस्य विशेषस्य तल्लक्षणत्वविधानात् कुतोऽत्र प्रसङ्गः? इह तु प्राप्नोति—'भागवित्तिभागवित्तिकौ, इति, कृत्स्नस्य विशेषस्य तल्लक्षणत्वात्। एवकारेण तु व्यावर्त्यते, न ह्यत्र तल्लक्षण एव विशेषस्तदाह—'कुत्सा सौवीरत्वं चापरो विशेषः' इति। विशेषहेतुरित्यर्थः॥

## ६६. स्त्री पुंवच्च।

स्त्रीत्वस्य वैरूप्यकारणस्याधिक्याद् वचनं पुंवच्चेति वक्ष्यामीति च। अत्र स्त्रीशब्दस्य स्वरितत्वे स्त्र्यधिकारविहितानां टाबादीनां ग्रहणादयमर्थो भवति—पुंवत् स्त्रीप्रत्ययो न [3]भवति। यथा पुंवदस्यास्तनावित्यभावातिदेशस्तद्वत्। ततश्च स्त्रीत्वस्यानिवृत्तत्वात् [4]गार्ग्यश्च स्त्रियो गार्ग्यायणश्च गर्गा इत्यत्र 'यञञोश्च' (२.४.६४) इति लुग् न स्यात्। 'अस्त्रियाम्' (२.४.६२) इत्यधिकारात प्रसज्यप्रतिषेधे[5]ऽयं दोषः। पर्युदासे तु शिष्यमाणस्य निवर्तमानार्थाभिधायित्वादस्ति स्त्रीसदृशोऽर्थ इति सिद्ध्यति। इह तु गर्गान् पश्येति स्त्रीत्वस्यानिवृत्तत्वान्नायं पुंसां बहुत्वे शस् उत्पन्न इति नत्वं न स्यात्। स्त्र्यर्थवृत्ते. शब्दस्य तु ग्रहणे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीत्यर्थः स्यात्। स्त्रीत्वं त्वनुवृत्तमेव। तत्र यद्यपि गर्गा इति बहुषु पुंशब्दस्य रूपमिति तस्मिन्नतिदिष्टे जसादिषु न दोषः, नत्वं तु विभक्तिकार्यं न स्यात्। एवं स्त्र्यर्थग्रहणे तु पुमर्थातिदेशात् तत्प्रतिबद्धानां कार्याणां सिद्धिरिति न कश्चिद्दोषः। स्त्रीति चोक्तेऽर्थ एव प्रतीयते। शब्दानामर्थपरत्वात् स्वरूपग्रहणं त्वनाशङ्क्यमेव, वृद्धो यूनेत्यनुवर्तनात्। अतोऽर्थस्यैव ग्रहणमित्याह—'स्त्र्यर्थः पुमर्थवद्भवति' इति। 'गार्गी च' इत्यादि। गार्ग्यवात्स्यशब्दाभ्याम्। 'यञश्च' (४.१.१६) इति ङीप्। 'दाक्षी' इति। 'इतो मनुष्यजातेः' (४.१.६५) दाक्षी इति ङीषि निवृत्ते इञन्तात् द्विवचने 'प्रथमयोः' (६.१.१०२) इति दीर्घः। इदमपि द्वन्द्वनिवृत्त्यर्थमेव वचनम्॥

## ६७. पुमान् स्त्रिया।

'स्त्रे पुंसलक्षणश्चेदेव विशेषः' इति। पदान्तरगम्येऽपि तल्लक्षणे विशेषे भवति, यथा—गौश्चायं गौश्चेयमिति एतौ गावौ चरत इति। एवं कन्याखुकुक्कवाकुग्रामणीखलपूप्रभृतिषु पुंसः शेषो वेदितव्यः। इह कस्मान्न भवति—हंसश्च

---

1. गार्ग्यगार्ग्यायणाविति 2. यावदुद्देश्यविधेय० 3. भवतीति 4. गार्ग्यौ स्त्रियौ 5. ष्यायं।

वरटा च कच्छपश्च [1]डुलिश्वरुश्यश्च रोहिच्च अश्वश्च वडवा च पुरुषश्च योषिच्चेति, सर्वत्राप्यत्र स्त्रीपुंसकृत विशेषः ? 'सरूपाणाम्' (१.२.६४) इति वर्तते, तेन समानायां प्रकृतौ यत्र स्त्रीपुंसकृत एव विशेषस्तत्रैव भवति। तु ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र प्राप्नोति ? नैष दोषः; स्त्रीपुंसयोः सहविवक्षायामेकशेषः। सा च प्रधानयोः भवतीति यत्र प्रधानस्त्रीपुंसकृत एव विशेषस्तत्रैवैकशेषः। इह त्वप्रधानकृतोऽपीत्येकशेषाभावः। इहापि मृगक्षीरा वज्जातिविवक्षायां कुक्कुटावित्यादि सिद्धम्। द्वन्द्वनिवृत्त्यर्थं तु वचनम्। 'प्रागित्यव्ययम्' इति। प्रपूर्वादञ्चतेः न्तादस्तातेः 'अञ्चेर्लुक्' (५.३.३०) इति लुकि 'तद्धितश्चासर्वविभक्तिः' (१.१.३८) इत्यव्ययत्वं सत्त्वासत्त्वे द्वन्द्वैकशेषौ चिन्त्यौ ॥

## ६८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।

इदमपि द्वन्द्वनिवृत्त्यर्थं वचनम्। स्वसृशब्दस्य ह्येकापत्यत्वं निमित्तम्, दुहितृशब्दस्यापत्यत्वमेव। भ्रातृ शब्दयोः स्त्रीत्वं पुंस्त्वं चोभयत्र विशेषः। तत्र 'भ्रातरौ पुत्रौ' इति स्त्रीपुंस्त्वाविवक्षायां सिद्धं स्वसृदुहित्रोरभिधान एकशेषारम्भेऽप्ययमेव निर्वाहः ॥

## ६९. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।

'शुक्ला च शुक्ल च' इति। विभक्तौ विभक्त्यन्तयोश्चासारूप्यादप्राप्त एकशेषः, शुक्लं च शुक्लश्चेति विभक्त्यन्तयोरसारूप्यम्। विभक्तौ सारूप्येऽपि पुंनपुंसकयो पर्यायः स्यादिति वचनम्, एकवद्भावार्थं च तल्लक्षणश्चेत् विशेष इति वर्तते' इति। शुक्लं च कृष्णश्चेत्यत्र मा भूत्। एवकारस्तु हिमहिमान्यौ अरण्यारण्यान्यावित्यत्र मा भूदिति [2]अत्र 'हिमारण्ययोर्महत्त्वे' (वा. ३५२) इति महत्त्वमपरो विशेषः, अन्यतरस्यांग्रहणमानन्तर्यादेकवच्चेत्यनेन सम्बध्यते न त्वेकशेषेण चेत्याह—'एकवच्च' इत्यादि। अस्य ग्रहणमेकवच्चेत्यस्योत्तरत्रानुवृत्तिर्मा भूदिति। इह शुक्लेन च वस्त्रेण शुक्लेन च कम्बलेन तेनानेन शुक्लेनेति तल्लक्षणविशेषाभावादेकशेषो न प्राप्नोति, सामान्यविवक्षायामेकशब्दत्वमेकवत् नपुंसकत्वं च भविष्यति। यद्येवम्, तदिदं शुक्लमित्यत्राप्येवमेव भविष्यति, नार्थ एतेन ? द्वन्द्वनिवृत्त्यर्थं तु वचनम्।

'अनपुंसकेनेति किम्' इति। नपुंसकेनापि सहवचने सरूपाणामित्येकशेषेण भवितव्यमिति प्रश्न, तेन स्यादनेन मा भूदिति प्रत्युत्तरम्। को न्वत्र विशेष इत्यत आह—'एकवच्च' इति ॥

## ७०. पिता मात्रा ।

'मातापितरौ' इति। अभ्यर्हितत्वान्मातुः पूर्वनिपातः, 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' (ग. पितरावित्यभिधानं जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। एकशेषारम्भेऽपि द्वन्द्वस्त्विष्यत एवेति नार्थ एतेन ॥

## ७१. श्वशुरः श्वश्र्वा ।

पितृश्वशुरौमातृ श्वश्रूभ्यामिति नोक्तम्, लाघवार्थम्। श्वश्रूशब्दोऽव्युत्पन्नं प्रातिपदिकम्, श्वशुरस्योकारा लोपश्चेत्यूङन्तत्वे प्रत्ययान्तत्वात् ब्रह्मबन्धूरित्यादिवदेकदेशाभावाच्चाप्रातिपदिकत्वेऽपि श्वश्र्वेत्यस्मादेव निर्देशाल्लिङ्ग सुपस्तद्धिताश्च भवन्ति। 'श्वश्रूश्वशुरौ' इति। अभ्यर्हितत्वादेव पूर्वनिपातः, 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता अत्रापि दम्पत्योर्जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। अनारम्भपक्षेऽपि श्वश्रूश्वशुरावित्यभि द्वन्द्वस्त्विष्यत एवेति नार्थ एतेन ॥

1. डुलिश्च ऋष्यश्च 2. अत्र हिमारण्ययोर्महत्त्वमपरो ।

## ७२. त्यदादीनि सर्वैर्नित्यम् ।

सर्वशब्दस्यार्थमाह—'त्यदादिभिरन्यैश्च' इति । एतदेव प्रकटयति—'सर्वग्रहणम्' इति । 'त्यदादिभिरन्यैश्च' इति । यदिदं साकल्यमुक्तं तदर्थमित्यर्थः, अन्यथा प्रत्यासत्तेः, 'तल्लक्षणश्चेदेव विशेषः' (१.२.६५) इत्यधिकाराद्वा त्यदादिभिरेव सहवचने स्यादिति भावः । 'स च देवदत्तश्च' इति । ननु देवदत्तोऽपि सामान्यविवक्षायां तच्छब्देनैव निर्देष्टुं शक्यते, ततश्च सरूपाणामित्येव सिद्धम् । न चाऽरब्धेऽपि सूत्रे वृत्तौ विशेषोऽन्तर्भावयितुं शक्यः, तावित्यस्य [1]सरूपसाधारणत्वाद्विरूपाणां च नानाविधत्वात् ? सत्यम् । तद्देवदत्तावित्यादिद्वन्द्वनिवृत्त्यर्थं वचनम् । अन्यथा 'तत्पुत्रस्तदीयः' इ[2]त्यादिवृत्त्यन्तरवद् द्वन्द्वेऽपि स्यात् ।

'यद्यत्परम' इति । त्यदादिपाठे शब्दपरविप्रतिषेधाश्रयणादिति भावः । 'स च यश्च यौ' इत्यादि । भाष्ये तु 'पूर्वशेषः खल्वपि दृश्यते, स च यश्च तौ' इत्युक्तम् । इह चाहं च भवांश्चावामिति भवतीत्याहुः ।

'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' (कात्या. वा. ७९९) । आद्यादित्वात्तसिः, त्यदादीनां शेषे सह विवक्षितो योऽर्थः पुमान्, यच्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः । स च देवदत्ता च तौ, सा च देवदत्तश्च तौ, तच्च देवदत्तश्च ते । पुंनपुंसकयोस्तु सहविवक्षायां परत्वान्नपुंसकवशेन व्यवस्था । तच्च देवदत्तश्च ते । इह स च कुक्कुटः सा च मयूरी [3]कुक्कुटमयूर्याविते, अर्धं पिप्पल्यास्तदर्धपिप्पली च सा अर्धपिप्पल्यौ ते इति परवल्लिङ्गमिति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तदेव लिङ्गं भवति ॥

## ७३. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ।

ग्रामे भवा ग्राम्याः । 'ग्रामाद्यखञौ' (४.२.९४) । 'पुंसः शेषे प्राप्ते' इति । 'पुमान् स्त्रिया' (१.२.६७) इत्यनेन । 'सामर्थ्यात्' इति । प्रधानस्य सङ्घस्य [4]तारुण्यातारुण्ये न सम्भवत इत्यस्मात् सामर्थ्यात् [5]गुणभूतानामपि पशूनां विशेषणमित्यर्थः ।

'एतौ गावौ' इति । यद्यपि द्वयोरपि सङ्घो भवत्येव, तथापीह सङ्घग्रहणसामर्थ्याद्बहूनां सङ्घो गृह्यते, 'अन्यथा' शेषस्यानेकविषयत्वादनर्थकं तत् स्यात् ।

'अनेकशफेषु' इति । शफाः खुराः । उष्ट्राणां त्वारण्यकत्वादेकशेषाभावः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य

द्वितीयः पादः समाप्तः ॥

---

1. सरूपविरूपसाधारणत्वा० 2. आदि नास्ति 3. कुक्कुटमयूर्यौ ते 4. तारुण्यं न सम्भवति 5. गुणीभूतानामपि ।

# अथ प्रथमाध्याय तृतीयः पादः ।

## १. भूवादयो धातवः ।

'भू' इत्येवमादयः शब्दा इत्यनेन पाठनिबन्धनेयं सञ्ज्ञेति दर्शयति । यदि त्वनादृत्य पाठम्, क्रियावचनो धातुरित्युच्येत, तत 'आणवेदु' इत्यादिष्वपि स्यात् । कथं पुनरपभ्रंशानामनुशासनमाशङ्क्यते ? कुतो नु खल्वेतत् 'आणवेदु' इत्यादयोऽपभ्रंशा इति, यावता ये शास्त्रेणानुगम्यन्ते ते साधवः ? अवश्यं चानुबन्धादिविशिष्टं रूपं पाठेन दर्शनीयम्, न हि तद्रूपं प्रयोगे सम्भवति । अतोऽन्यार्थः सन् गणपाठ एवाश्रितो भवतीति धातुत्वे सति लङ् भवति, 'एधते, स्पर्धते' इत्यनुदात्तेतौ । यदि पाठमात्रनिबन्धनेयं सञ्ज्ञा, या-वा-दिव्[1] शब्दानां सर्वनाम-विकल्प-स्वर्गवाचिनां समानशब्दानामपि प्रसङ्गः । न च प्रापणादिरर्थो नियामकः, अनार्षत्वात्, अभियुक्तैरुत्तरकालनिर्दिष्टत्वात्, अनेकार्थत्वाभ्युपगमाच्च । सत्यम्, सञ्ज्ञायां को दोषः ? न तावद्धातुप्रत्ययानां लडादीनां प्रसङ्गः, कर्त्रादीनामभावात्, उच्यते; याः पश्येति 'आतो धातोः' (६.४.१४०) इति लोपः स्यात् । ननु 'अधातुः' इति निषेधात् अप्रातिपदिकत्वाद्विभक्तिरेव न स्यात्, नैतदस्ति; विभक्तावुत्पन्नायां त्यदाद्यत्वे टापि च यारूपत्वे सति धातुत्वम्, सुबुत्पत्तिदशायां तु यदित्यस्य नास्ति धातुत्वम्; वाशब्दात्तु सुबेव न स्यात्, एवं दिव्शब्दावपि । न च 'दिव औत्' (७.१.८४) इत्येतद्धातुत्वाभावे लिङ्गम्; क्विबन्ताद् दीव्यतेः सुपि सम्भवात् । सानुबन्धकत्वेऽपि तस्यैव ग्रहणं स्यात् । अतः समानशब्दानां प्रतिषेधो वक्तव्य इत्यत आह- 'धातुशब्दः' इत्यादि । क्वचित्तु 'भू' इत्येवमादयः शब्दा इत्य यानन्तरं क्रियावाचिन इति पठ्यते, तस्मिन् पक्षे यावान् ग्रन्थस्य शङ्का सा तस्य द्रष्टव्या । अस्य तु कथं पुनः सूत्रेऽनुदात्तः क्रियावचन इत्ययं विशेषो लभ्यते ? अत आह- 'धातुशब्दः पूर्वाचार्यसञ्ज्ञा' इति । ततः किमित्याह—'त च इति । ततोऽपि किमित्याह—'तदिहापि' इति । महत्याः पूर्वाचार्यसञ्ज्ञाया आश्रयणं तदीयोपाधिपरिग्रहार्थमेवेति भावः ।

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ।। (वा. प. ३.८.१)

सिद्धं वा भवत्वसिद्धं वा, शब्देन तु यद्वस्तु साध्यत्वेनाभिधीयते सा क्रिया साध्यत्वे[2] चाश्रितक्रमरूपत्वात् पूर्वापरीभूतावयवत्वं विततरूपत्वं [3]यत्तद्रूपमभिधीयते तस्यैकस्मिन् क्षणेऽनवस्थानम्, यदाह—'क्रिया नामेयम् अत्यन्तापरिदृष्टाऽशक्या च सा पिण्डीभूता निदर्शयितुम्' (म. भा.१. २५४) इति । एकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेऽपि समूहरूपा धातुवाच्या क्रिया न प्रत्यक्षेत्यर्थः । क्रमवन्त एव क्षणा एकफलोद्देशेन सम्पाद्यमानत्वात् ऐक्यमिवापन्ना धातुवाच्याः, तद्यथा-पचतीत्यधिश्रयणादयोऽधःश्रयणान्ताः क्लेदनफलावच्छिन्नाः । एवमपचदित्यत्रापि क्रिया साध्यैव । तादृशस्यैव हि रूपस्य तत्रात्ययः प्रतीयते यत्पूर्वापरीभूतं क्षियते । घट इत्यत्र तु घटशब्देन चक्रोदरगतोऽपि घटः सिद्धरूप उच्यते, एकस्मिन् क्षणे यद्दर्शनयोग्यं[4] रूपं[5] तेन रूपेणेत्यर्थः । तदेवं क्रियावचनो धातुरित्याश्रयणादतिप्रसङ्गो नास्तीति स्थितम् ।

इह भूरादिर्येषामिति बहुव्रीहौ यणादेशे कृते 'भूवादयः' इत्यनुपपन्नो निर्देश इत्यत आह—'भूवादीनां वकारः मङ्गलार्थः', इति । अभिधानधर्मस्याप्यभिधेये उपचारः, यथा—भ्रमरे द्विरेफ इति । भूवादीनां सञ्ज्ञिनां सम्बन्धी वकारः, तदभिधायिनि भूवादिशब्दे स्थितोऽयं प्रयुज्यते, लक्षणेनाप्राप्तो निपात्यत इत्यर्थः । स च मङ्गलार्थ । अपूर्वलाभो मङ्गलम्, दध्यादिलाभ इव । [6]अस्य वशब्दस्यापूर्वस्य लाभायेत्यर्थः । धर्मो वा मङ्गलम्, साधुशब्दप्रयोगेऽपि धर्मो भवति, भूवादिशब्दश्च साधुः । किं च वकारे सत्यविकृतो भूशब्दो व्याहृत्यादि स्मारयतीत्यपि धर्मो भवतीति ।

प्रकारान्तरमाह —'भुवा व र्थं वदन्ति' इति । भुवो धातोरर्थं वदन्तीति वा, भूवादय इति निर्देश इत्यर्थः । अर्थकथनं चैतत्, व्युत्पत्तिस्तु भवनं भूः, क्रियासामान्यभुवं वदन्तीत्यौणादिकोऽयम्, 'वसिवपियजिराजिव्रजि[7]सदिहनि

1. 'दिव' 2. साध्यत्वं 3. च यत्तत्क्रमरूपम० 4. दर्शनयोग्यः 5. रूपं तेन नास्ति । रूपेणेत्यर्थः 6. अस्यैव 7. सद्दि ।

वाशिवादिवारिभ्य इञ्' (उ. ५६४) इति कर्तरि वदेः इञ् प्रत्ययः। यदि क्रियासामान्यं ये वदन्ति ते सञ्ज्ञिनः, अस्ति-भवतिविद्यतीनामेव स्यात्, न पचत्यादीनां विशेषवाचिनाम्? घञ्विधिवद्भविष्यति, तद्यथा—'भाव' इति सामान्योपादानेन विधीयमानो घञ् विशेषवाचिभ्योऽपि भवति—'पाकः, त्यागः' इति। तत्कस्य हेतोः? विशेषेष्वपि [1]सामान्यस्य सम्भवात् विशेषाश्रयनिषेधाभावाच्च, तद्वदिहापि। अस्मिन् पक्षे गणपाठसामर्थ्यात् सोऽप्यङ्गीक्रियते, अन्यथा शब्विकरणा ये सेटो निरनुबन्धका अन्तर्गणकार्यवर्जिता भूप्रभृतयस्तेषां पाठोऽनर्थकः स्यात्। बहुव्रीहेस्तु [2]भूत्वादिशब्दस्य पृषोदरादित्वात् साधुत्वम्।

तृतीयं प्रकारमाह—'भ्वर्था वा वादयः स्मृताः' इति। भवनं भूः, सोऽर्थो येषां ते भ्वर्थाः, एवम्भूता वादयो वात्र सञ्ज्ञिनः स्मृताः इत्यर्थः। किमिदं वादय इति? 'वा गतिगन्धनयोः' (धा. पा. १०५०), वा आदिर्येषां ते वादयः, 'वा गति' इत्यारभ्याचुरादिसमाप्तेः। तथा च [3]भ्वादयो वादयो भूप्रभृतय आ 'वा गतिगन्धनयोः' इत्यस्मात्। वादयश्च वादयश्च बहुव्रीहितत्पुरुषयोः सहविवक्षायां स्वरभिन्नानां यस्योत्तरः स्वरविधिरिति बहुव्रीहेः शेषः। ततो भुवो वादय इति वाच्यवाचकसम्बन्धे शेषषष्ठीसमासः। अस्मिन् पक्षे पाठविशेषोऽर्थश्चेत्युभयं सूत्राक्षरैरेवोपात्तं भवति॥

## २. उपदेशेऽजनुनासिक इत्।

'उपदिश्यतेऽनेनेत्युपदेशः' इति। 'अकर्त्तरि च कारके' (३.३.१९) इति करणे घञ्। ननु च नेयं सञ्ज्ञा, परत्वाच्च 'करणाधिकरणयोः' (..३.११७) इति ल्युट् प्राप्नोति, 'हलश्च' (३.३.१२१) इत्यत्रापि सञ्ज्ञायामित्येव। ल्युट् तावन्न भवति, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति। 'अकर्तरि च' (३.३.१९) इत्यत्र चकारो भिन्नक्रमः—सञ्ज्ञायां चेति, तेन क्वचिदसञ्ज्ञायामपि भवति। अथोपदिश्यतेऽनेनेत्यत्रोपदेशः कोऽर्थः? विधानम्। यद्येवम्, 'लण्', 'एध वृद्धौ' (धा. पा. २) इत्यादौ न स्यात्, न ह्यत्र किञ्चिद् विधीयते। अथानिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनं तत्, [4]'आचारेऽवगल्भक्लीबहोडेभ्यः क्विप्' (कात्या. वा. १८६) इत्यत्र गल्भाद्यकारस्य न स्यात्, न हि गल्भादीनां स्वरूपज्ञापनार्थमुच्चारणम्, पञ्चमीनिर्देशेन क्विपो विधानात्। यद्येवम्, क्विबवनेनानिर्ज्ञातरूपो ज्ञाप्यते, तत्र [5]चायं भवत्यकार इति भविष्यति। शास्त्रवाक्यानि' इति। लण्-एध-स्पर्धेत्यादीनामपि विशिष्टप्रयोजनपरत्वेनोच्चारणाद् वाक्यत्वम्। अस्यैव विवरणम्—'सूत्रपाठः' इति। 'खिलपाठः' धातुपाठः, प्रातिपदिकपाठः, वाक्यपाठश्च। तत्र सूत्रे मतुबादेरुकारः धातुषु एधाद्यकारः प्रातिपदिकेषु भवच्छब्दस्योकारः, वाक्ये गल्भाद्यकारः। ननु च सर्वत्रात्र शुद्धोऽच् पठ्यते, नानुनासिक इत्यत आह—'प्रतिज्ञानुनासिक्याः' इति। प्रतिज्ञामात्रेण समधिगम्यमानुनासिक्यं येषां ते तथोक्ताः। प्रतिज्ञानुनासिका इति तु प्रसिद्धः पाठः। तत्र प्रतिज्ञासमधिगम्यत्वात् अनुनासिके प्रतिज्ञाशब्दो द्रष्टव्यः। ततः समानाधिकरणपदो बहुव्रीहिः। तच्च प्रतिज्ञानं नानियमेन भवति, किं तर्हि? यत्र आचार्याः स्मरन्ति तत्रैव। सूत्रकारेण तावद्विवक्षिताः सर्वेऽनुनासिकाः पठिताः 'डुलभँष्' प्राप्तौ (धा. पा ९७५) इतिवत्, लेखकैस्तु संकीर्णा लिखिताः, तत्र स्मृतिपरम्परया निर्णयमित्यर्थः।

'अभ्र आँ अपः' इति। नायं सूत्रादिषु स्वरूपेणोच्चरितोऽनुनासिकः, किं तर्हि? "आङोऽनुनासिकश्छन्दसि" (६.१.१२६) इत्यनुनासिकशब्देन विहितः। अथ क्रियमाणेऽप्युपदेशग्रहणे [6]'उञः' (१.१.१७), 'ऊँ' (१.१.१८) [7]इत्यत्र कस्मान्न भवति? विधानसामर्थ्यात्। इत्सञ्ज्ञायां हि [8]'तस्य लोपः (१.३.९) इति लोपः स्यात्। यद्येवम्, अत्रापि विधानसामर्थ्यादेव न भविष्यति। एवं तर्हि उदाहरणदिगियं दर्शिता। इदं [9]तत्रोदाहरणम्—'अणोऽप्रगृह्यस्यानुनासिकः' (८.४.५७), 'दधीच्छति ब्राह्मणकुलम्' इति क्यजन्तात् क्विपि अल्लोपे, वलि लोपे नपुंसकह्रस्वत्वं दधि इति। यद्यत्रेत्सञ्ज्ञा स्यात् "इदितो नुम् धातोः (७.१.५८) इति नुम् स्यात्। अत्राप्यनुनासिकविधान-

1. सामान्यसम्भवात् 2. भूवादिशब्दस्य 3. तथा व आदयो वादयो भूप्रभृतयः 4. आचारे गल्भ इति पाठः 5. वाये 6. उञः इति नास्ति 7. इत्यस्य इति पाठः—8. तस्य लोपः स्यात् इति पाठः 9. त्वत्रोदाहरणम्।

सामर्थ्यादेवेत्सञ्ज्ञा न भविष्यति । ननु च यत्रेत्संज्ञायां सत्यां प्रयोजनं न सम्भवति यथा—'दधि, मधु' इति प्रातिपदिके तत्रेत्संज्ञायाः अभावः । अत्रानुनासिकविधानमर्थवत्, नैतदेवम्, लोपस्येत्कार्यस्य सर्वत्र सम्भवात् । तस्मादणोऽप्रगृह्य इत्संज्ञायामेव विधेयायामनुनासिकविधानसामर्थ्यादेवात्र लोपो न भविष्यति । एवं तर्ह्युत्तरार्थमवश्यम् 'उपदेशे' इ वक्तव्यम्, तदिहापि विस्पष्टार्थं भविष्यतीति मन्यते । 'आतो मनिन्' इति । अत्र मकारस्येत्संज्ञा न भवति । स्यात् 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति हलन्तेऽन्त्यादचः परः स्यात् । 'सर्वस्य' इति । दरिद्राप्रभृतिसम्बन्धिनोऽपि

## ३. हलन्त्यम् ।

अन्तशब्दोऽत्र समाप्तौ वर्तते, नावयवे असंभवात् । न समीपे; अतिप्रसङ्गात् । येन समाप्यते समुदायस्तः भवमन्त्यम्, 'दिगादित्वाद्यत्' (४.३.५४) । हलन्त्ये सर्वप्रसङ्गः, सर्वस्य हलः संज्ञा प्राप्नोति । सर्वो हि हल् तं तमर्थं प्रत्यन्तो भवति, अन्त्यग्रहणं त्वादिनिवृत्त्यर्थं स्याद्, अत आह—'धात्वादेः' इति । आदिशब्देन सूत्रप्रातिपदिकप्रत्ययनिपा गमादेशानां ग्रहणम् । शीङ्, लण्, नवट्, सन्, आङ्,[1] 'त्रपुजतुनोः षुक्, (४.३.१३८), 'चक्षिङः ख्याञ्', (२.४.५४) इति धा धात्वादिरूपः समुदायस्तदर्थः स उपदेशः, न तु नान्तरीयकावान्तरसमुदायार्थ इत्यन्त्यस्य समुदायापेक्षायां प्राधान्याद् धात्वा देरेव ग्रहणमिति भावः । 'अग्निचित्' इति । अत्रेत्संज्ञायां लोपः स्यात् । न च तुको वैयर्थ्यम्, आगत्येत्यादौ चरितार्थत्वात् न च क्विपः पित्त्वस्य वैयर्थ्यम्, अग्निचितावित्यादौ चरितार्थत्वात् । यद्यन्यत्रोभयत्रापि तावतोऽवधेस्तकारोऽन्त्यः, तथा मुख्यसमुदायस्य नान्त्य इति नास्ति प्रसङ्गः । इह च दण्डिन्निति नकारस्येत्संज्ञायां सत्याम् 'न ङिसम्बुद्ध्योः' (८.२. इति निषेधाल्लोभावेऽपि समुदायस्य नित्त्वादाद्युदात्तत्व [2]प्रसङ्गः, यथा—श्रोत्रियशब्दे वाक्यार्थे पदवचनमिति पक्षे अथोपदेशानुवृत्तावपि सनुतरित्यस्य रेफस्य कस्मान्न भवति ? स्वरादिष्वन्तोदात्तपाठसामर्थ्यात् ।

इह 'शषसर्' (प्र १३), हल्'(प्र.१४) इति यो लकारस्तस्येत्संज्ञायां सत्यां हलित्ययं प्रत्याहार उपपद्यते, सति प्रत्याहारे लणित्यत्र लकारस्य हल्त्वात्तस्यैव 'शषसर्हल्' इत्यत्रान्ते निर्दिष्टत्वादित्संज्ञा, तदाश्रयश्च प्रत्याहार इति इत तराश्रयत्वात् प्रत्याहारो नोपपन्नः । ततश्च सर्वेषामेव णकारादीनामित्संज्ञा न स्यादिति सर्व एव प्रत्याहारव्यवहारोऽनु पन्नः । 'आदिरन्त्येन' (१.१.७१) इत्येतस्यापि वैयर्थ्यम् ? स्यादेतत—हलित्यत्र हकारात्परो लृकारः, तस्य लृकारस्यैकादे लपरः, तस्य 'उपदेशेऽजनुनासिकः' (१.३.२) इति इत्संज्ञा, स एव 'हलन्त्यम्' (१.३.३) इत्यत्राप्येकादेशेन लपरेण निर्दि इति । एवमपीतरेतराश्रयमेव, लृकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहार, सति च प्रत्याहारे 'ऐ औच्' (प्र. ४) इ चकारस्य इत्संज्ञा, [2]तस्यां सत्यामजिति प्रत्याहारः, अजिति प्रत्याहारे सति लृकारस्येत्संज्ञेति, तस्माद्वक्तव्योऽत्र परिहार माह—'हस्य ल् हल्' इत्यादि । साधारणं भवेत्तन्त्रम्, यथा—तुल्यकक्ष्ययोर्भुञ्जानयोः प्रदीपः । स चेह प्रयत्नविशे यथा—श्वेतो धावतीत्यत्र साधारणेनैकेनैव प्रयत्नेन द्वयोर्वाक्ययोरुच्चारितयोः फलं सम्पद्यते, तथेहाप्येकेन तन्त्र [3]प्रयत्नेन द्वितीयं हल्ग्रहणमुपात्तं परिगृहीतं वेदितव्यम् । तस्य द्वितीयस्यार्थमाह—'हस्य' इति । समीपसमीपिसम्बन्धे षष्ठी समास इत्यर्थः । तत. किमित्याह—'तेन' इत्यादि । एतद्दर्शयति—हकारसमीपवर्तिनो लकारस्य न प्रत्याहारसमाश्रयणेनेत्संज्ञा किं तर्हि ? साक्षादुपादानेनेति । प्रत्याहारपाठः अक्षरसमाम्नायः । 'तथा च' इत्यादि । गतार्थम् । किं पुनस्तन्त्रे प्रमाणम् [4]अगृह्यमाणविशेषत्वमेव । ननु गृह्यते विशेषः—'कृत्रिमाकृत्रिमयोः कृत्रिमस्य ग्रहणम्' (शा. प. ७) इति, कृत्रिमो हि प्रत्याहारः, सत्यम्, स एवासति तन्त्रेऽनुपपन्न इति त्वयैवोक्तम् ॥

## ४. न विभक्तौ तुस्माः ।

वृक्षात् इति तकारस्येत्संज्ञायाम् 'तित्स्वरितम्' (६.१.१८५) स्यात् । ननु [5]चादेशोत्तरकालं स्थानिवद्भावे नास्य विभक्तिसञ्ज्ञा, [6]उपदेशानन्तरमेवेत्सञ्ज्ञा प्राप्नोति ? सत्यम्, प्रतिषेधसामर्थ्यात्तु भाविन्यपि विभक्तित्वे प्रतिषेधः

1. त्रपुजः तुनोः इति पाठः 2. तस्यां सत्यामजिति प्रत्याहारः इति भागो नास्ति 3. "प्रयत्नेन इति पाठः 4. अगृ—त्वयैवोक्तम् इत्यन्तो भागः नास्ति 5. चादेशत्वोत्तरकालं इति पाठः 6. उपदेशा—त्सञ्ज्ञा इति भागो नास्ति

भविष्यति । वर्गग्रहणं किम् ? वृक्षानित्यत्रापि यथा स्यात्, क्व पुनरुपदेशे नकारोऽयमन्त्यः, न तावत्तस्य क्वचिदुपदेशः ? 'शसो न' (७.१.२९) इत्यत्र त्वकारो नकारस्येत्संज्ञापरित्राणार्थ इति शक्यं वक्तुम् । इह तर्हि 'झस्य रन्' (३.४.१०५) पचेरन्निति । 'ब्राह्मणाः' इति । रूपोदाहरणमेतत् । कार्योदाहरणं तु [1]'भवतः' इति । अत्र 'सिति च' (१.४.१६) इति पदत्वे जश्त्वं स्यात् । 'पचतः पचथः' इत्यत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम् । 'अपचताम्' इत्यादि । तामादयस्तसादीना[2]मन्त्यावचः परे स्यु । 'किमोऽत्' (५.३.१२) इत्यस्य 'प्राग्दिशो विभक्तिः' (५.३.१) इति विभक्तित्वम् । 'इटोऽत्' (३.४.१०६) इत्यस्यापि स्थानिवद्भावेनेति तयोरपि प्रतिषेधः प्राप्नोति, तत्राह—'किमोऽत्' इत्यादि । अनित्यत्वं तु 'इदमस्थमुः' (५.३.२४) इति थमोरुकारोऽनुबन्धाद्विज्ञायते । क्वचित्तु वृत्तावेव 'इदमस्थमुः' (५.३.२४) इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते इति पठ्यते । 'इदानीं' 'तदानीम्' इति । दानीमस्तु प्रतिषेधो भवत्येव । अनित्यत्वं हि ज्ञापितम्, न पुनः प्राग्दिशीयेष्वस्याप्रवृत्तिः ॥

## ५. आदिर्ञिटुडवः ।

आदिशब्दः प्रत्येकमभिसम्बध्यते, तेनैकवचनमुपपद्यते इति भावः । अत्र 'टु' इति न टवर्गस्य ग्रहणम्, उकारस्यानुनासिकत्वेनानुदित्त्वात्, 'चुटू' (१.३.७) इत्युत्तरत्र [3]वर्गग्रहणात्, ञिडुभ्यां साहचर्याच्च । 'मिन्नः' इति । 'आदितश्च' (७.२.१६) 'रदाभ्यां निष्ठातो नः' (८.२.४२) । 'वेपथुः' इति । 'ट्वितोऽथुच्' (३.३.८९) । 'उप्त्रिमम्' इति । 'ड्वितः क्त्रिः' (३.३ ८८), 'त्रेर्मम् नित्यम्' (४.४.२०) यजादित्वात् संप्रसारणम् ।

'पटूयति' इति । पृथ्वादिषु टुशब्दस्योपदेशः, अत्रेत्संज्ञायां सत्याम् 'अवयवे कृतं लिङ्गं समुदायस्य विशेषकम्' (हे. प. १०७) इति समुदायादथुच्प्रसङ्गः । केवलस्यानुदाहरणत्वम्; इत्कार्याभावात् । 'कण्डूयति' इति । ननु चायं दीर्घान्तः कण्ड्वादिषूपदिश्यते, एवं तर्हि कण्डूमिच्छतीति क्यजन्तात् क्विपि कण्डु ब्राह्मणकुलं तदिच्छतीति पुनः क्यचि द्रष्टव्यम् । तत्रेत्संज्ञायामन्तरङ्गत्वादकृत एव दीर्घे भवत्ययं डुशब्दः । गणपठितश्च कण्डूशब्द एकदेशविकृत इति स्यात् प्रसङ्गः । 'ञिकारीयति' इति । नायं समुदायः क्वचिदुपदिष्टः ॥

## ६. षः प्रत्ययस्य ।

'रजकी' इति । 'षिद्गौरादिभ्यश्च' (४.१.४१) इति ङीष् । कथं पुनरत्रोपधालोपः, [4]यावता 'अनिदितां हल उपधायाः क्ङिति' (६.४.२४.) इत्युच्यते ? यदयं 'जनीजॄष्क्नसु रञ्जोऽमन्ताश्च (धा. पा. ८२७) इति मित्सञ्ज्ञां शास्ति तज् ज्ञापयति—रञ्जेरक्ङित्यपि क्वचिदुपधालोपो भवतीति । 'षोडः' इति । षड् दन्ता अस्य 'वयसि दन्तस्य दतृ' (५.४.१४१), [5]'षष उत्वं, दतृदशधासूत्तरपदादेः ष्टुत्वम्'[6] (कात्या. वा. ४००१) । षषोन्त्यस्योत्वम्, उत्तरपदादेर्डकारः, षोडन्तमाचष्टे इति णिचि [7]टिलोपे पचाद्यचि णिलोपः । 'षण्डः' इति । 'षणु दाने' (धा. पा. १४६४) 'ञमन्ताड्डः' (उ. १११), 'उणादयो बहुलम्' (३.३.१) इति बहुलवचनात् इत्संज्ञासत्त्वयोरभावः । 'षडिकः' इति । अनुकम्पितः षडङ्गुलिः 'बह्वचो मनुष्यनाम्नष्ठज् वा' (५.३.७८), 'ठाजादावूर्ध्वं द्वितीयादचः' (५.३.८३) इति ङ्गुलिशब्दस्य लोपः, यस्येति लोपस्य स्थानिवद्भावात् षकारान्तेऽवधौ भसंज्ञाया अभावादन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज् जश्त्वम् । अत्रेत्संज्ञायां स्त्रीत्रिवक्षायां ङीष्प्रसङ्गः । यद्यप्येते समुदाया न क्वाप्युपदिश्यन्ते, षकारस्तु षष उत्वम्, 'षणु दाने' (धा. पा. १४६४) इत्युपदेशस्थो भवति । 'अविषः, महिषः' इति । 'अविमह्योष्टिषच्' (उ. ४५) । नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति, ईकारस्य टित्वादेव सिद्धेः । न च पक्षे ङीषर्थः षकारः, ङीपोऽपि चितः परस्योदात्तनिवृत्तिस्वरेणोदात्तत्वात्, सत्यम्, अन्यतरस्यैव श्रवणार्थं उपदेशः स्यादिति टकारस्यापि शङ्क्येत ॥

---

1. 'भवंत इति'—इति पाठः 2. मन्त्यादधः इति पाठः । 3. 'दवर्गग्रहणात्' इति पाठः 4. यावतो–इति पाठः 5. षडत्वग्–इति पाठः 6. 'ष्टुत्वं चेति षषोऽत्वस्योत्त्वम्–इति पाठः 7. टिलोपः–इति पाठः ।

## ७. चुटू ।

'[1]आदी इत्' इति। प्रारम्भे वर्तमानावित्यर्थः। 'कौञ्जायन्यः' इति। चफञन्तात् 'व्रातचफञोरस्त्रि (५.३.११३) इति स्वार्थे ञ्यः। 'शण्डिकादिभ्यो ञ्यः' (४.३.९२) इति। 'सोऽस्याभिजनः' इति तत्र वर्तते। 'ङ्यापोःसंज्ञाच्छन्दसोः' (६.३.६३) इति ह्रस्व। 'अन्नाण्णः' (४.४.८५) इति। 'धनगणं लब्धा' (४.४.८ इति। इत्यतो लब्धेति तत्रानुवर्तते। किमर्थो योगविभागः '[2]चुटुषाः प्रत्ययस्य' इत्येक एव योगः क्रियतामत आह—'पृ इत्यादि। 'केशचुञ्चुः, केशचणः' इति। अत्र चकारस्येत्संज्ञायां 'चितः' (६.१.१६३) इत्यन्तोदात्तत्वं स्यात्, पित्कर पर्यायार्थं स्यात्। 'अवात् कुटारच्च' इति। अनेन "नते नासिकायाः संज्ञायाम्' (५.२.३२) इत्यत्र अवादि स्यानुवृत्तिर्दर्शिता ॥

## ८. लशक्वतद्धिते ।

'प्रियंवदः' इति। 'अरुर्द्विषदजन्तस्य मुम्' (६.३.६७)। 'जिष्णुः' इति। [3]ग्स्नुप्रत्ययस्य गित्त्वपक्षे गकारस मुदाहरणम्। 'चूडालः' इति। मत्वर्थे 'प्राणिस्थादातो लजन्यतरस्याम्' (५.२.९६) इति लच्। अत्र लित्स्वरचित्त्वा पर्यायः स्यात्। 'लोमशः' इति। अत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम्। 'कर्णिका' इति। 'कर्णललाट कनलङ्कारे' (४.३.६५) इति भवार्थे कन्। अत्र 'किति च' (७.२.११८) इति वृद्धिः स्यात्, रूपं च न सिध्ये अथ '[4]तुदिर्छिदिर्प्रभृतिषु इरित्यस्य समुदायस्य केनेत्संज्ञा ? मा भूत् समुदायस्य, रेफस्य 'हलन्त्यम्' (१.३.३) इ भविष्यति, इकारस्य 'उपदेशेऽजनुनासिक इत्' (१.३.२) इति। 'इरितो वा' (३.१.५७) इत्यत्रापि—इश्च रश्च इ तावितावस्येति विग्रहः, न तु इरित्ययं समुदायः स इद्यस्येति। अवश्यं च इकारस्य पृथगित्संज्ञेषितव्या, स्वरितेत इत्यात्म पदं यथा स्यादिति। यद्येवम्, 'इदितो नुम् धातोः' (७.१.५८) इति नुम् प्राप्नोति, कुम्भीधान्यन्यायेन न भविष्यति तद्यथा—कुम्भीधान्यः श्रोत्रिय इत्युच्यते, यस्य कुम्भ्यामेव धान्यं भवति, यस्य पुनः कुम्भ्यां चान्यत्र वा, न कुम्भीधान्यः। नायं न्यायः नुम्विधौ शक्य आश्रयितुम्। इह हि न स्यात्—'टु नदि'(धा. पा. ६७) नन्दथुरिति। ज्ञापक सिद्धम्, यदयं 'न दृशः' (३.१.४७) इति क्सस्य प्रतिषेधं शास्ति, तज् ज्ञापयति—नेदितां नुम् भवति, अन्यथा दृशेरिदि नुमि सति अनिगुपधात्वात् क्सस्य प्राप्तिरेव नास्ति, किं तन्निषेधेन ? परिहारान्तरमप्यत्र नुम्विधौ वक्ष्यते ॥

## ९. तस्य लोपः ।

तस्य ग्रहणं किमर्थम्, यावताऽभावो लोपः, स च कस्यचिदेव भवति, तत्र प्रकरणादित्संज्ञकस्यैव भविष्यतीत्यत आह—'तस्य ग्रहणम्' इत्यादि। 'आदिर्ञिटुडवः' (१.३.५) इति। असति तस्य ग्रहणे येऽनेकाल इत्संज्ञ [5]ञिप्रभृतयस्तेषु 'अलोऽन्त्यस्य' (१.१.५२) लोपः स्यात्. तस्य ग्रहणसामर्थ्यात्तु सर्वस्य भविष्यति। एतच्च 'नानर्थ लोऽन्त्यस्य विधिः' (व्या. प. ६२) इत्यनाश्रित्योक्तम् ॥

## १०. यथासंख्यमनुदेशः समानाम् ।

'सङ्ख्याशब्देनात्र क्रमो लक्ष्यते' इति। कथम् ? अव्यभिचारात्। यत्रैक एवोद्देश्यनुद्देशी च. यथा 'मुद्गाद (४.४.२५) इति, न तत्र [6]नियमप्रसंग [7]इत्यनेकत्वसंख्याया एवेह ग्रहणम्। सा च क्रमं न व्यभिचरति; युगपदनेक शब्दस्योच्चारयितुमशक्यत्वात्। मुख्ये त्वर्थेऽयमर्थः स्यात्—समानां समसङ्ख्यानामुद्देशिनां या सङ्ख्या चतु दिलक्षणा तया [8]उद्देश्यः सम्बध्यते तत्सङ्ख्याको भूत्वा सम्बध्यते इति। ततश्चानर्थकमेव स्यात्, समत्वादेवास्यार्थ

1. आदिति–इति पाठः 2. षचुटट्–इति पाठः 3. स्नु इति पाठः 4. 'कदिरछिदिरप्रभृतिषु' इति पाठः 5. क्षिप्रभृतयः–इति पाठः 6. तत्रानियमः इति पाठः 7. इत्यतेकत्वसं सा च क्रमं इत्यादि पाठः 8. अनुदे इति पाठः।

सिद्धत्वात् । अतः क्रमपर एव सङ्ख्याशब्द इति । यथाक्रमग्रहणं तु न कृतम्, सङ्ख्याद्वारकं साम्यं यथा विज्ञायेत; अन्यथा स्थानप्रयत्नादिकृतमपि समत्वं प्रतीयेत[1] । ननु च क्रियमाणमपि सङ्ख्याग्रहणं क्रमपरमिति कथमतः सङ्ख्या-साम्यप्रतिपत्तिः ? सत्यम्, क्रमे शब्दः पर्यवस्यति, मुख्योऽप्यर्थः प्रतीयते । स हि प्रतीतो लाक्षणिकं गमयति; तस्मात् संख्याग्रहणसामर्थ्यात् तद्द्वारकमेव साम्यं गृह्यते । 'यथासङ्ख्यम्' इति । 'यथाऽसादृश्ये' (२.१.७) इति वीप्सायामव्ययीभावः । 'अनुदेशो भवति' इति । [2]सम्बन्धी भवतीति द्रष्टव्यम् । [3]तथा च वक्ष्यति—'अनुदेशिनः सम्बध्यन्ते' इति । 'अनुदिश्यत इत्यनुदेशः' इति । 'अकर्तरि च कारके संज्ञायाम्' (३.३.१९) इत्यसंज्ञायामपि कर्मणि घञ् । अनुशब्दः पश्चादर्थे. दृशिरुच्चारणक्रिय इत्याह— 'पश्चादुच्चार्यत इत्यर्थः' इति । यदुक्तं सङ्ख्याद्वारकं साम्यं गृह्यते इति तद्दर्शयति—'समानां समसङ्ख्यानाम्' । अस्यैव विवरणम्—'समं पठितानाम्' इति । 'उद्देशिनाम्' इति । कञ्चिद्धर्मं विधातुं प्रसिद्धवच्छब्दपरामर्शयोग्येन रूपेण उपादानमुद्देशः, तद्वन्त उद्देशिनः । विधेयतया पश्चादुच्चारणमनुदेशः, तद्वन्तोऽनुदेशिनः । यद्यपि सूत्रे उद्देशिनो न श्रुतास्तथाप्यनुदेशशब्दस्य सम्बन्धिशब्दत्वात् समसङ्ख्यत्वस्य च प्रतियोग्यपेक्षत्वात् त एव गम्यन्ते । 'उद्देशिनामनुदेशिनां च' इति यथाक्रममित्येतदपेक्षया षष्ठ्यौ । 'यथाक्रमम्' इति । [4]पूर्ववदव्ययीभावस्तृतीयान्तं चैतत् ।

तदयमत्रार्थः—समसङ्ख्यानामुद्देशिनामनुदेशिनां च यो यः क्रमः—प्रथमचरमभावस्तेन तेनानुदेशिनः सम्बध्यन्ते, उद्देशिभिः सहेत्यर्थाद् गम्यते । क्वचित् उद्देशिभिरिति पठ्यते । तत्र सहयोगे तृतीया । 'प्रथमात् प्रथमः' इत्यादिना सूत्रार्थमुदाहरणे योजयति । 'वहन्ति, वर्षन्ति, नदन्ति' इत्यादौ लोक एव [5]यथासङ्ख्यसम्बन्धस्य दृष्टत्वात्किमर्थं एतेन ? उच्यते, व्युत्क्रमेणापि सम्बन्धो लोके दृश्यते—'कन्याब्रह्मचारिणौ, दण्डकन्दुकहस्तौ' इति । योग्यतावशादत्र सम्बन्ध इति चेत्, क्रमेणापि सम्बन्धः, तद्वशादेव 'योग्या हि नद्यो वहने, घनाश्च वर्षणे' । अत एवैकस्य [6]धर्मिणो बहुषु धर्मेषु विहितेषु विधानक्रमेणान्यथा वा योग्यतानुरूप एव सम्बन्धो भवति—अमुमुद्वर्तय, स्नापय भोजय । [7]भोजय, स्नापय उद्वर्तयेति । स्यादेतत्—'स्वतः प्राप्तिरियं यदुक्तक्रमेण सम्बन्धः । तथा हि, योग्यताविशेषानवधारणे प्रथमप्रतीतयोः सम्बन्धः, बाधकाभावात् । तावता हि द्वयोरपि चरितार्थत्वम्, द्वितीयस्य धर्मिणो धर्मस्य वा प्रतियोग्यपेक्षायां प्रथमश्रुतस्य चरितार्थत्वात्, अचरितार्थेन द्वितीयेन प्रतियोगिनां सम्बन्धः । एवं सर्वत्र, 'तस्मात् स्वतः प्राप्त्या क्रमसम्बन्धः सिद्धः' इति । यद्येवम्, 'लक्षणेत्थंभूताख्यान' (१.४.९०) इत्यादौ वैषम्येऽप्येवमेव स्यात्, यावतां साम्यं तावतामादितः क्रमेण सम्बन्धः, परिशिष्टस्य तु सर्वैरनन्तरेण वेत्यतः समानामिति वक्ष्यामीत्यारम्भः ।

'स्वरितेनेति विशेषं वक्ष्यामि' इति । क्वचिद्धि साम्येऽपि नेष्यते । अथारभ्यमाणेऽप्यस्मिन् परस्मैपदानां णलादयः, 'लुटः प्रथमस्य डारौरसः' (२.४.८५), 'एचोऽयवायावः' (६.१.७८) इत्यत्र कथमस्य प्रवृत्तिः, यावता परस्मैपदादिसंज्ञया युगपदेव संज्ञिनां प्रतीतिः न क्रमेण ? सत्यम्, तिबादिसूत्रे अक्षरसमाम्नाये च तिबादयः क्रमेण प्रतीताः, स एव क्रमो नियामको भविष्यति । एवं द्वन्द्वेऽपि । पाघ्रेत्यादौ युगपदधिकरणवचनतायां द्वन्द्वेऽपि क्रमस्य प्रतीतेः स एव नियामकः । ननु च 'तिपो णल्. तसोऽतुस्, [8]पः पिबः, घ्रो जिघ्रः'—इत्येवं भिन्नवाक्यतयोपदेशोऽस्तु, एवं ह्रीदं न वक्तव्यं भवति ? सत्यम्; एवं तु गौरवं स्यात्, तस्य [9]रूपेणानिर्देशात्, तत्र विभक्तेर्भेदेनोच्चारणाच्च । तथा 'विदो लटो वा' (३.४.८३) इत्यत्रानन्तर्यान् मसो म इत्येव सम्बध्येत, तदाह—'संज्ञासमासनिर्देशात् सर्वप्रसङ्गोऽनुदेशस्य । तत्र यथासङ्ख्यवचनं नियमार्थम्, संज्ञासमासनिर्देशश्च पृथग्विभक्ति[10]संज्ञयनुच्चारणार्थः', 'प्रकरणे च [2]सर्वसम्प्रत्ययार्थः' (कात्या. वा. ८५३–८५५) इति । 'तौदेय.' इत्यादौ 'सोऽस्याभिजनः' इत्यत्रार्थे प्रत्ययः ।

---

1. ननु च क्रियमाणमपि सङ्ख्याद्वारकं साम्यं यथा विज्ञायेत अन्यथा स्थानप्रयत्नादिकृतमपि समत्वं प्रतीयेत इत्यधिकः पाठः 2. "सम्बन्धौ" इति पाठः 3. "यथा वक्ष्यति" इति पाठः 4. पूर्ववदव्ययीभाव इति पाठः 5. यथा सङ्ख्यया सम्बन्धस्य इति पाठः 6. धर्मिणि इति मुद्रितः पाठः 7. नास्ति— 8. 'पश्च पिबः । घ्रजिघ्रः' इति पाठः 9. "स्वरूपेण निर्देशात्" इति पाठः 10. 'नुच्चारणार्थः' इति पाठः ।

'इह' इत्यादि। एकयोगत्वपक्षे चोद्यम्, भिन्नयोगपक्षे तु योगविभागो यथासङ्ख्यनिरासार्थं इति वक्ष्यति। केचित्तु विभज्य योगं पठन्ति, अन्ये त्वेकमेव। 'स्वरितेन' इत्यादि परिहारः। कथं पुनरयं विशेषो लभ्यत इत्याह—'स्वरितेनाधिकारः' इत्यादि। यद्येवम्, स्वरिते दृष्टे सन्देहः स्यात्, न ज्ञायते—किमयं यथासङ्ख्यार्थः ? आहोस्विदधिकारार्थः ? इति। सन्देहमात्रमेतद् भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' (व्या. प. ७५) इति। तत्र व्याख्यानान्निर्णयो भविष्यति ॥

## ११. स्वरितेनाधिकारः।

अत्र पारिभाषिकस्य स्वरितस्य ग्रहणे 'रषाभ्यां नो णः' (८.४.१), इत्यादौ नकारादेर्व्यञ्जनस्याधिकारोपलक्षणं नोक्तं स्यात्, पारिभाषिकस्याज्धर्मत्वादिति मत्वाह—'स्वरितो नाम वर्णधर्मः' इति। वर्णमात्रधर्म इत्यर्थः। स चाय छं कलाध्मातादितुल्यः केवलं सूत्रेष्वेव भवति, न प्रयोगे। क्वचित्तु 'स्वरितो नाम स्वरदोषो वर्णधर्मः' इति पाठः। तत्र स्वरदोषः उच्चारणदोषः, अधिकारशब्दो भावसाधनः। 'विनियोगः' इति। व्यापारणम्। अथ शब्दस्य विनियुक्तस्य कं व्यापार इत्याह—'अधिकृतत्वादुत्तरत्रोपतिष्ठते' इति। उपस्थानमप्येतदेव यदुतास्य तत्रबुद्धिस्थता। उत्तरत्रेत्युपलक्षणम्; क्वचित् पूर्वत्राप्युपतिष्ठते, सूत्रकारेण पठितस्यास्य स्वरितत्वस्य संकीर्णत्वात् पाठस्य विषयविभागो [1]दुर्ज्ञेय इत्याह—'प्रतिज्ञास्वरिताः' इति। 'प्रत्ययः' इत्याद्युदाहरणानि।

किमर्थं पुनरिदमुच्यते, यावता निर्दिश्यमानं लोकेऽधिक्रियते, यथा—देवदत्ताय गौर्दीयतां कम्बलश्चेति देवदत्तायेति गम्यते, तथा 'सृ स्थिरे' (३.३.१७) इत्यादीनां साकाङ्क्षत्वादनुवृत्तैर्घञादिभिरेव सम्बन्धो भविष्यति ? अन्यनिर्देशस्तन्निवर्तकः, तद्यथा—देवदत्ताय गौर्दीयताम्, विष्णुमित्राय [2]कम्बल इति कम्बलो गोर्निवर्तको भवति, तथेहापि 'अभिविधौ भावे' (३.३.४४) इतीनुण् घञो निवर्तकः स्यात्, ततश्च 'आक्रोशेऽवन्योर्ग्रहः' (३.३.४५) इत्यादिष्वनन्तर इनुणेव स्यात्, तस्मात् परिभाषा। [3]अधिकारपरिमाणज्ञानं तु न ज्ञायते—कियन्तमवधिमधिकारोऽनुवर्तत इति ? यथा—प्रागभ्यासविकारेभ्योऽङ्गाधिकारः[4] उतासप्तमपरिसमाप्तेः ? 'धातोः' इति प्राक् लादेशेभ्यः उताध्यायस्य परिसमाप्तेः ? एवं तर्ह्युभयार्थमिदम्—अधिकारार्थं च निवृत्त्यर्थं च। कथम् ? 'स्वरितेनाधिकारः' स्वरिते दृष्टेऽधिकारो न भवतीत्यर्थः, तेन 'विंशतिकात् खः' (५.१.३२) इत्यत्र स्वरितत्वं प्रतिज्ञेयं तद्दर्शनाच्च[5] द्वित्रिपूर्वादित्यस्य निवृत्तिरवसीयते। एवमपि स्वरिते दृष्टे संदेहः स्यात्—किमयमधिकारार्थः आहोस्वित् प्रकृतस्य निवृत्त्यर्थं इति ? एवं तर्हि यस्य यावत्सु योगेष्वनुवृत्तिरिष्यते तत्र तावतियोऽनुबन्धनीयः, यथा—'द्वित्रिपूर्वान्निष्कात्' (५.१.३०) इत्यत्रेकारः। तेन द्वयोर्योगयोरनुवृत्तिर्भविष्यति। एवमन्यत्रापि यत्र तावतिथोऽल् नास्ति तत्र प्राग्वचनं कर्तव्यम्, यथा—'अङ्गस्य प्राक् टेः' इति तद् गुरु भवति। स्यादेतद् व्याख्यानात् परिमाणं ज्ञास्यते इति ? अधिकारोऽपि तर्हि व्याख्यानात् ज्ञायताम्। इनुण्घञिति सन्देहे घञिति व्याख्यास्यामः, इनुण आनन्तर्यम्, घञोऽप्यनुवृत्तिसामर्थ्यं दृष्टमित्यस्त्येव संदेहः। 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इत्यादिष्वनन्तरस्यापि एवाधिकारः, न दृष्टानुवृत्तिसामर्थ्यस्यापि घञः, सिद्धत्वाद्, व्याख्यानाद्वा। यदप्युत्प्रेक्षितम्—आकांक्षाहितेऽपि वाक्ये प्रकृतस्य सम्बन्धार्थं शास्त्रीयोऽधिकारः—यथा 'दूरान्तिकार्थेभ्यो द्वितीया च' (२.३.३५) इत्यत्र पञ्चम्यधिकार इति। तत्रापि व्याख्यानमेव शरणमिति तदेव सर्वत्रास्तु नार्थ एतेन। इदं तर्हि प्रयोजनम्—अन्यत्र दृष्टस्याधिकारस्य स्वरितेनोपलक्षणं यथा स्यात्, यथा—'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इत्यत्र स्त्रीग्रहणस्य, न ह्येतल्लौकिकेनाधिकारेण सिद्धम्, आनुषङ्गिकं वाऽस्य प्रयोजनम्, यत् साकाङ्क्षेषु व्यवहितस्य चानुवृत्तिः ॥

## १२. अनुदात्तङित आत्मनेपदम्।

'अविशेषेण' इत्यादि। लस्य तिबादयः, 'लटः शतृशानचौ' (३.२.१२८), 'लिटः कानज्वा' (३.२.१०६), 'क्वसुश्च' (३.२.१०७), 'लृटः सद्वा' (३.३.१४) इत्यात्मनेपदपरस्मैपदयोर्विहितत्वादापादपरिसमाप्तेर्नियमार्थं प्रकरण

1. दुर्ज्ञात इति पाठः 2. 'कम्वल इति' इति नास्ति 3. 'अधिकारपरिमाणा ज्ञायते' इति पाठः 4. ०–धिकारणं इति पाठः 5. 'च' इति नास्ति।

मित्यर्थः। एकवाक्यतया विधावितरेतराश्रयणप्रसङ्गः। स्यादेतत्—'यथा बहुषु बहुवचनम्' (१.४.२१), 'कर्मणि द्वितीया' (२.३.२), 'ङ्याप्प्रातिपदिकात्' (४.१.१), इत्येतैरेकवाक्यभूतैः स्वादीनां विशिष्टविधिः, एवमनेन प्रकारेण लस्य तिबादय इत्यादिभिश्च तिङामपि विशिष्टविधिरस्तु' इति यद्येवम्; आत्मनेपदपरस्मैपदसञ्ज्ञाभ्यां तिबादीनां विधिः, विहितानां च संज्ञाभ्यां भाव्यमितीतरेतराश्रयं प्राप्नोति। स्वरूपेण विशिष्टविधौ शत्रादिष्वतिप्रसङ्गः। स्यान्मतम्—'तिप्तस्झिसिप्थस्थमिब्वस्मस्[1]' (३.४.७८), लस्य तिबादयो भवन्ति, ततः 'अनुपराभ्यां कृञः' (१.३.७९), कर्तर्यनुपूर्वात् करोतेः परस्य लस्य तिबादयो भवन्ति। किमर्थमिदम्? 'गन्धनावक्षेपण (१.३.३२) 'स्वरितञितः' (१.३.७२) इति वक्ष्यति, तद्बाधनार्थं कर्तृग्रहणम्, भावकर्मणो.' (१.३.१३) इति वक्ष्यमाणस्य तङो बाधो मा भूदिति। एवम् 'अभिप्रत्यतिभ्यः क्षिप.' (१.३.८०) इत्यादि 'लुटि च क्लृपः'(१.३.९३) इत्येवमन्तं कृत्वा ततः [2]अनुदात्तङितः 'तातांझथासाथांध्वमिड्वहिमहिङ्' (३.४.७८), अनुदात्तङितः परस्य लस्य तादयो भवन्ति, तिबादीनामपवादः, ततो 'भावकर्मणोः' (१.३.९३) इत्यादि 'विभाषोपपदेन प्रतीयमाने' (१.३.७७) इत्येवमन्तं करिष्यते, तत्रायमप्यर्थ—आत्मनेपदग्रहणं [3]शेषग्रहणं परस्मैपदग्रहणं च न कर्तव्यं भवति। एवमपि [4]प्रकरणान्तरावस्थितानां शत्रादीनां नियमो न स्यात्, अतो न स्वरूपेण विशिष्टविधिर्युक्तः। सञ्ज्ञाश्रयणे तु यत्रैतत्सञ्ज्ञकयोर्विधानं तत्र सर्वत्रोपस्थानान्नायं दोषः, किं [5]त्वितरेतराश्रयः प्राप्नोति। यदि तु 'अ सूत्रस्य शाटकं वय' इतिवत् भाविनी सञ्ज्ञा विज्ञायेत, ततो नेतरेतराश्रयं लाघवं प्रति न कश्चिद् विशेष इति किं मुधा भाविसञ्ज्ञाश्रयणखेदेनेति भिन्नवाक्यतया नियमपक्ष एवाश्रितो वृत्तिकारेण।

[6]यद्येवं, विकरणव्यवधाने नियमाप्रसङ्गः, लिङ्लिट्श्नम्श्लुलुक्षु वचनानुबन्धयोरर्थत्वात्। इह हि विकरणानामवकाशः—अलादेशाश्चानशादयः, नियमस्यावकाशः, यत्र विकरणा न सन्ति—'स्पर्धिषीष्ट, पस्पर्धे, आस्ते, शेते, [7]अर्त्ति जुहोति, भिनत्ति, भूयात्' इत्यादि; 'एधते, स्पर्धते, कुरुते, निविशते' इत्यादावुभयप्रसङ्गे परत्वाद्विकरणेषु कृतेषु तैर्व्यवधानान्नियमो न स्यात्। असति नियमे, यदि तावत् प्रकृतिनियमोऽनुदात्तङिदादिभ्य आत्मनेपदमेव, शेषाद्धातोः परस्मैपदमेवेति, ततोऽस्मिन् विषये उभयप्रसङ्गः, प्रत्ययनियमेऽपि तुल्यजातीयस्य नियमेन व्यावृत्तिरिति धातोरनन्तरस्य [8]लस्य यद्यात्मनेपदपरस्मैपदे भवत [9], अनुदात्तङिच्छेषानन्तरमेवेत्येवं नियमो विज्ञायमानो धात्वन्तरादेव व्यावर्तयेदिति विकरणव्यवधाने नियमाप्रवृत्तावुभयप्रसङ्ग एव। एकवाक्यतया विधाने तु नायं दोषः। विहितेषु लादेशेषु सार्वधातुकापेक्षैर्विकरणैर्भाव्यम्, विधानं चानेन प्रकरणेन सहेति नेतः प्राग्विकरणसम्भव। स्यादयो लावस्थायां [10]विधीयमाना अपि लकारविशेषापेक्षत्वाद्बहिरङ्गा इति लमात्रापेक्षेष्वन्तरङ्गेष्वादेशेषु कृतेष्वेव भविष्यन्तीति न तत्रापि दोषः[11]। ज्ञापकात् सिद्धम्, यदयं 'वृद्भ्यः स्यसनो.' (१.३.९२) इति स्ये विकल्पं शास्ति तज्ज्ञापयति—'विकरणेभ्यो नियमो बलीयान् (पु.प.४१) इति। एतेनैतदपि निरस्तम्—चङङ्भ्यामात्मनेपदप्रसङ्ग इति, कथम्? पूर्वनियमे प्रवृत्ते पश्चात् चङङौ भवत इति।

प्रत्येकमिच्छन्दस्यान्वय इत्याह—[12]'अनुदात्तेतः' इति। 'ये धातवो ङितश्च' इति। समुदायसम्बन्धे तु चक्षिङ एव स्यात्, स ह्यनुदात्तेत् पठ्यते, विचक्षण इत्यत्र युज् यथा स्यात्। [13]अकारस्त्वनुदात्तेत्वनिबन्धनस्यात्मनेपदस्यानित्यत्वज्ञापनार्थः, तेन 'स एवायं नागः सहति कलभेभ्यः परिभवम्', 'न सहामि साहसमसाहसिको' (शि.९.५९), इत्यादि सिद्धम्।

'धातवः' इत्येतत् कुतो लभ्यते? केचिदाहुः—"भूवादयो धातवः' (१.३.२) इत्यतो धातुग्रहणमनुवर्तते, तच्च 'अनुदात्तङितः' (१.३.१२) इत्यनेन सामानाधिकरण्यात् पञ्चम्या विपरिणम्यते, अत एव चङङ्भ्यामात्मनेपदं न भवति"

1. ०मिप्वस्मसी इति पाठः 2. अनुदात्तङितस्तासथ्यासाथांध्वमिड्वहिमहिङ्—इति पाठः 3. नास्ति 4. 'प्रकरणान्तावस्थितानां'—इति पाठः 5. 'त्वितरेतराश्रयं' इति पाठः 6. यद्येव इति पाठः 7. 'अत्ति' इति पाठः 8. 'तस्य' इति पाठः 9. 'भवतोऽमुष्मादेवेत्येवं नियमो विज्ञायमानो' इति पाठः 10. 'विधीयमानी अनपि' इति पाठः 11. 'नियमपक्षेऽपि न दोषः' इत्यधिकः पाठः 12. 'अनुदात्तेतो ये धातवो ङितश्चेति' पाठः 13. 'ङकारस्त्व—०' इति पाठः।

इति । यङन्तादपि तर्हि न प्राप्नोति बेभिद्यत इति, यङेवं[1] ह्यत्र ङित्, न तदन्तो धातुः, 'अवयवे चाचरितार्थं लिङ्गं समु इति । यङन्तादपि ... यस्य विशेषकं भवति' (हे. १०७), तस्मादिह 'धातो' इति नानुवर्त्यम् । प्रायोवृत्त्या तु वृत्तौ धातव इत्युक्तम् । चङ्क्रमे परिहार उक्त एव । यद्ययं प्रकृतिनियमः स्यात्--'अनुदात्तङित आत्मनेपदमेव' इति, तृजादयो न स्युः ? वचनाद् विष्यन्ति । अस्ति वचनस्यावकाशः - परस्मैपदिनः, तत्रापि [2]नियमः--'शेषात् परस्मैपदमेव' इति, तेन वचनाद् भविष्यन्ति तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयः ? आत्मनेपदस्य परस्मैपदम्, तस्य च तत् । एवमपि 'शेषा कर्तरि' (१.३.७८) इति शेषग्रहणं न कर्तव्यं प्रकृतिनियमपक्षे, कथम् ? प्रकृतयो नियताः, आत्मनेपदं परस्मैपदं चा यतम्, ततो वक्ष्यामि—परस्मैपदमिति, तन्नियमार्थं भविष्यति--यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेवेति प्रत्ययनियमस्तु नान्तरेण [3]शेषग्रहणं शक्यो विज्ञातुमिति शेषग्रहणं कुर्वतः सूत्रकारस्य स एवाभिप्रेत इत्याह--'तेभ्य आत्म नेपदं भवति, नान्येभ्यः' इति । यदि प्रत्ययनियमोऽयम् । 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८) इत्यत्र यदि ता नियमः—कर्तरि यदि भवति शेषादेवेति, [4]ततोऽशेषात् कर्तरि मा भूत्, भावकर्मणोस्तु [5]शेषाच्च परस्मैपदं प्राप्नोति । अ शेषाद्यदि भवति कर्तर्येवेति, ततः शेषाद्भावकर्मणोर्मा भूत्, अशेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति । न चैकस्मिन् वा नियमद्वयं शक्यं विज्ञातुम्—'शेषादेव भवति, तत्रापि कर्तर्येव' इति । एवं तर्हि योगविभागेन नियमद्वयं तत्रैव साधयिष्याम 'आस्ते' इत्यादि । 'आस उपवेशने' (धा. पा. १०२१), 'वस आच्छादने' (धा. पा. १०२३), 'षूङ् प्राणिप्रसवे' (धा. पा. १०३१), 'शीङ् स्वप्ने' (धा. पा. १०३२) अदादयः । 'शीङः सार्वधातुके गुणः' (७.४.२१) ॥

## १३. भावकर्मणोः ।

भाव्यत इति भावः, ण्यन्ताद्भवतेः कर्मणि घञ् । धात्वर्थः क्रियात्मक उच्यते, कर्म तु पारिभाषिकम् । घञादि विधौ तु 'भाव' इति शुद्धाद् भवतेर्भावे घञ् । भावः सत्ता, धात्वर्थस्य सिद्धतावस्थोच्यते । अयमपि नियम इति दर्शयितुमन्य सिद्धिमाह--'लः कर्मणि च' इत्यादि । कथं पुनरयं नियमः ? यावता 'अनुदात्तङित एवात्मनेपदम्' इति पूर्वेण नियमेन क शेषात् कर्तर्यात्मनेपदं व्यावर्तितम्, एवं भावकर्मणोरपीति तद्विषये विध्यर्थमिदं युक्तम् ? सत्यम्, यदि पूर्वसूत्रे प्रवृत्ति प्रवृत्तिः, विपर्ययोऽपि शक्यते वक्तुम् 'भावकर्मणोरेवात्मनेपदम्' इति । अस्मिन्नियमे प्रवृत्ते '[6]अनुदात्तङितः' १.३.१ कर्तर्यात्मनेपदमप्राप्तमिति पूर्वसूत्रमपि विध्यर्थमिति । तेन द्वयोरपि लस्य तिबादय इत्येतदपेक्षया नियमार्थत्वम्, परस्मै पेक्षया तु विध्यर्थत्वमेवमापादपरिसमाप्तेर्द्रष्टव्यम् । अत [7]एवास्यान्यथासिद्धिं दर्शयताप्यवशब्दो न प्रयुक्तः । तिबादिसूत्रं धातुसामान्यविहितं च लकारमाश्रित्य तिबादयो [8]विहितास्तत्रैभ्य एव धातुभ्य इति पूर्वो नियमः अयं त्वेतयोरेवावि रिति । ननु चात्रार्थनियम एव ग्रन्थे प्रतीयते, अयं त्वत्रार्थः--'लः कर्मणि' (३.४.६९) इति भावकर्मणोर्यो विहि लकारस्तस्य सामान्येन तिबादयः सर्वे वक्ष्यन्ते, न त्वात्मनेपदमेव, [9]अतस्तदेव यथा स्यादित्ययमारम्भ इति । प्रत्ययनि तु [10]भावकर्मकर्तृष्वपि विहितस्य लस्य [11]सामान्येन तङ् वक्ष्यत इति वाच्यं स्यात्, सत्यम्; अयं त्वत्रार्थः–'भावकर्म इत्युपलक्षणम्, भावकर्मकर्तृष्वित्यर्थः, तिबादयः इति सूत्रे तिपः प्रथमनिर्देशादेवमुक्तम् । तिबादिष्वन्तर्भूतास्तङ इत्य तङानाविति यावत् । किं पुनः स्याद्यद्ययमर्थनियमः स्यात् ? इह 'को भवता लाभो लब्धः, को भवता दायो दत्तः' इ कर्मणि घञ् न स्यात् । 'अकर्तरि च' (३.३.१९), इत्यस्य त्वपादानादिरवकाशः यद्यपि तुल्यजातीयस्य परस्मैपद नियमेन व्यावृत्तिरिति परिहारोऽस्ति; तथापि पूर्वसूत्रे तावत् प्रत्ययनियम इतीहापि स एवाश्रितः । 'ग्लायते' इति 'ग्लै म्लै हर्षक्षये' (धा. पा. ९०३.९०४) । 'सुप्यते' इति । 'ञि ष्वप् शये' (धा. पा. १०६७), 'वचिस्वपि' (६.१.१५) इत्यादिना संप्रसारणम् । 'क्रियते' इति । 'रिङ् शयग्लिङ्क्षु' (७.४.२८), यदा 'कर्मवत्कर्मणा' (३.१.८७), इ

1. 'यङेव' इति पाठः 2. 'नियमाशेषात् परस्मैपदमेवेति' इति पाठः 3. नास्ति 4. 'ततोऽशेषा इति पाठः 5. 'शेषादशेषाच्च परस्मैपदं प्राप्नोति ।' इति पाठः 6. 'अनुदात्तङि' इति पाठः 7. 'एवास्य अन्यथा दर्शयति । प्येवशब्दो' इति पाठः 8. 'विहितास्तत्रैभ्य' इत्यत आरभ्य 'इति भावकर्मणोर्यो' इत्यन्तं नास्ति 9. 'तत देव' इति पाठः 10. 'भावकर्मकर्तृषु त्रिष्वपि' इति पाठः 11. 'सामान्येनात्मनेपदं' इति पाठः । 'तङ्' इति नास्ति

शास्त्रातिदेशो व्यपदेशातिदेशो वा, तदा [1]शास्त्रव्यपदेशयोरतिदिष्टयोः स्वेन स्वेन शास्त्रेण तत्तत्कार्यं भवति तत्र कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म, कर्तरि परस्मैपदमित्यस्य शुद्धः कर्ता, कर्मकर्तर्युभयप्रसङ्गे परत्वात् परस्मैपदं प्राप्नोति, अत आह—'कर्मकर्तरि' इत्यादि। द्वितीयं कर्तृग्रहणमनुवर्तत इति। 'कर्तरि कर्मव्यतीहारे' (१.३.१४), इत्यतः कार्यातिदेशपक्षे त्वात्मनेपदमेव। 'परम्' इति। नायं परिहारो वाच्यः।

## १४. कर्तरि कर्मव्यतीहारे।

अत्र लौकिकं कर्म गृह्यते, न पारिभाषिकमित्याह—'कर्मशब्दः क्रियावाची' इति। ननु कृत्रिमत्वात् पारिभाषिकस्यैव ग्रहणं युक्तं ततो 'देवदत्तस्य धान्यं व्यतिलुनन्ति' इत्यत्रैव स्यात्। एवं मन्यते—इह 'कर्तरि [2]व्यतीहारे' इतीयता सिद्धं, करणादि[3]व्यतीहारे कस्मान्न भवति? उच्यते, क्रियायाः साध्यत्वात् प्राधान्यं क्रिययाप्तुमिष्टतमत्वात् तादर्थ्येन क्रियाप्रवर्तनात् कर्मणोऽपि प्राधान्यमित्युभय[4]व्यतीहारे लब्धे कर्मग्रहणं क्रियते। तद्यदि [5]साधनं कर्म गृह्येत, तदा क्रियाया अपि संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् कृत्रिमकर्मत्वमिति पुनरुभयोरपि ग्रहणात् कर्मग्रहणमनर्थकं स्यात्। किं चात्मनेपदेनाक्षिप्तोऽनुवृत्तो वा धातुः [6]कर्मव्यतीहारेण विशेष्यते—तत्र वर्तमानाद्धातोरिति, न च साधनकर्मणि धातोर्वृत्तिः सम्भवति, तस्य क्रियावाचित्वादिति। विनिमयो व्यत्यास इत्यर्थः। एतदेव स्पष्टयति—'यत्र' इति। योग्यतावशादस्येदं साधनम्, अस्येयं क्रिया साध्येति निर्ज्ञातयोर्विपर्यासः साध्यसाधनभावस्य स [7]व्यतीहार इति विवक्षितम्। यत्रेत्युपक्रमात्तु स [8]व्यतीहारस्य विषयो विवक्षित इत्यर्थः। परस्परकरणमपि [9]कर्मव्यतीहार उच्यते—'संप्रहरन्ते राजानः', [10]व्यात्युक्षीमभिसरणग्लहामदीव्यन्' (शि. ८.५८) इति। 'व्यतिलुनते' इति। 'लूञ् छेदने' (धा. पा. १४३३), 'आत्मनेपदेष्वनतः' (७.१.५) इत्यदादेशः, 'श्नाभ्यस्तयोः' (६.४.११२) इत्याकारलोपः' 'प्वादीनां ह्रस्वः। (७.३.८०)। अन्योन्ययोग्यमन्योन्यविषये वा लवनं कुर्वन्तीत्यर्थः। एवंरूपश्चार्थोऽनेककर्तृकत्वे सति प्रतीयत इत्येकवचनं न भवतीति केचिदाहुः। [11]'व्यत्यसे, व्यतिहे' इत्येकवचनमपि तत्र तत्रोदाहरिष्यते। "अन्यो व्यतिस्ते तु ममापि धर्मः" (भ. १.३५) इति भट्टिप्रयोगः।

[12]'कर्मव्यतीहार इति किम्' इति। कर्तृग्रहणमेव 'व्यतिलुनते' इत्यादौ प्रापकत्वेनोपयोक्ष्यत इति भावः।

अथ कर्तृग्रहणं किमर्थम्? भावकर्मनिवृत्त्यर्थं न वा पूर्वेण भावात्। भावकर्मणोर्हि पूर्वेणात्मनेपदं भवत्येव—'व्यतिलूयते व्यतिपूयते' इति, तेन यथा स्यात्, अनेन मा भूत्। कः पुनरत्र विशेषः? तेन वा स्यादनेन वा? अयमस्ति विशेषः—अनेन सति 'न गतिहिंसार्थेभ्यः' (१.३.१५), इति प्रतिषेधः प्राप्नोति—'व्यतिगम्यते ग्रामः, व्यतिहन्यन्ते दस्यवः' इति। न वानन्तरस्य प्रतिषेधात् व्यतिहन्यत इत्यत्र द्वे प्राप्ती—'भावकर्मणोः' (१.३.१३) इति च, '[13]कर्मव्यतीहारे' (३.३.४३) इति च। तथा 'अनन्तरस्य विधिर्भवति प्रतिषेधो वा' (व्या. प. १९) इति अनन्तरा [14]कर्मव्यतीहारलक्षणा प्राप्तिः प्रतिषिध्यते। पूर्वा तु भविष्यति, नार्थ एतेन कर्तृग्रहणेनेत्यत आह—'कर्तृग्रहणम्' इति। 'शेषात् कर्तरि' (१.३.७८) इति प्रदर्शनमेतत्। 'आङो दोऽनास्यविहरणे' (१.३.२०) इत्यादावप्यस्योपयोगं वक्ष्यामः॥

## १५. न गतिहिंसार्थेभ्यः।

'व्यतिगच्छन्ति' इत्यादि। 'गम्लृ' (धा. पा. ९८२), 'सृप्लृ' (धा. पा. ९८३) गतौ', 'तृहि [15]हिसि हिंसायाम्' (धा. पा. १४५५. १४५६), 'हन' 'हिंसागत्योः' (धा. पा. १०१२) गमेः 'इषुगमियमां छः', (७.३.७७) 'छे च' (६.१.७३) इति तुक्, सृपेर्लघूपधगुणः, हन्तेः 'गमहन' (६. ४. ९९) इत्युपधालोपः, 'हो हन्तेः' (७.३.५४) इति कुत्वम्।

1. 'शास्त्रे व्यपदेशयोरतिदिष्टयोः' इति पाठः 2. 'व्यतिहारे' इति पाठः 3. ०—'व्यतिहारे' इति पाठः 4. ०—'व्यतिहारे' इति पाठः' 5. 'साधनकर्म' इति पाठः 6. 'कर्मव्यतिहारेण' इति पाठः 7. 'व्यतिहार' इति पाठः 8. 'व्यतिहारस्य' इति पाठः 9. 'कर्मव्यतिहार' इति पाठः 10. व्यात्युक्षीमाभि० इत्यादि पाठः 11. 'व्यत्यरे व्यत्यले व्यतिहे इत्येकवचनमपि' इति पाठः 12. 'कर्मव्यतिहार' इति पाठः 13. 'कर्मव्यतिहारे' इति पाठः 14. 'कर्मव्यतिहारलक्षणा' इति पाठः 15. 'हिंस हिंसायाम्' इति पाठः।

'हसादीनाम्' इति। [1]हसिप्रकाराणां शब्दक्रियाणामित्यर्थः। 'उपसंख्यानम्' इति। संख्यायते सं प्रतिपाद्यतेऽनेनार्थ इति संख्यानम् सूत्रम्. तस्योपोच्चारितमुपसंख्यानं [2]सूत्रम्, समीप इदमपि सूत्रं पठितव्यमित्यर्थः।

'हरतेरप्रतिषेधः' इति। अर्थग्रहणसामर्थ्याद् ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्तन्ते त इह गृह्यन्त इति उप दर्शन हिंसार्थत्वाद्धरतेरप्रतिषेध इत्याहुः। इह तु 'ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' (म. भा. कर्णपर्व) इति प्रे मानाविति विवक्षितम्। न [3]व्यतीहारः। इह च [4]संव्यवहरन्ते गर्गैरिति वहेरगत्यर्थत्वादप्रतिषेधः, देशान्तरप्रापणं वहेरर्थः—'भारं वहतीति, [5]नान्तरीयकस्तु गतिप्रत्ययः' कन्याप्रापणमुखेन गर्गैः [6]सम्बध्यन्त इत्यर्थः॥

## १६. इतरेतरान्योऽन्योपपदाच्च।

उपोच्चारितं पदमुपपदम्, न पारिभाषिकम्; असम्भवात्। असत्युपपदग्रहणे पञ्चमीनिर्देशे परस्यैवानन्त स्यात् 'तस्मादित्युत्तरस्य' (१.१.६७) इति वचनात्। सप्तमीनिर्देशे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१.१.६६) पूर्वस्यैवानन्तरस्य स्यात्। तत्र यद्यपि लकारोऽनन्तरः परो न सम्भवति, धातुस्तु सम्भवति, पूर्वस्तु धातुरनन्तरो सम्भवति, लकारस्तु सम्भवति। [7]तृतीयानिर्देशस्तु पञ्चमीसाधारणत्वादनध्यवसान इत्युपपदग्रहणं क्रियते। 'इत रस्य' इत्यादि। लौकिके तु शब्दव्यवहारे लाघवं प्रत्यनादरात् [8]इतरेतरादिशब्दास्तङ् उपसर्गाश्च [9]कर्मव्यतीहारद्योत समुच्चीयन्ते। [10]'कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम्,' यदा न समासवत् प्रथमैकवचनं तदा पूर्वपद (कात्या. वा. ४७००) इति षष्ठ्येकवचनान्तरस्येतरशब्दस्य द्विर्वचने समासवद्भावेन [11]सुब्लुकि समासत्वादेव प्राति कत्वात् पुनः षष्ठ्येकवचनम्। अन्यशब्दस्य तु बहुलग्रहणादसमासवद्भावे [12]पूर्वपदस्थस्य षष्ठ्येकवचनस्य प्रथमैकवचन एवं परस्परस्येत्यत्रापि कस्कादिषु दर्शनाद्विसर्जनीयस्य सत्वम्। पदस्य द्विर्वचनविधानादन्योऽन्यपरस्परेति सूत्रवाक्य प्रकृतिभागमात्रस्यानुकरणं द्रष्टव्यम्॥

## १७. नेर्विशः।

'शेषात् कर्तरि परस्मैपदे प्राप्ते' इति। [13]अनारम्भस्यापि शेषपक्षे निक्षेपात्। 'आत्मनेपदं विधीयते' इति यद्यपि तिबादिसूत्रापेक्षया सर्वस्यैव प्रकरणस्य नियमार्थत्वम्, 'अनुदात्तङित आत्मनेपदम्' (१.३.२२), 'भावकर्मणो' (१.३.१३) इति सूत्रद्वयापेक्षया तु विध्यर्थत्वमपि सम्भवतीति मत्वैवमुक्तम्। एवं सर्वत्र द्रष्टव्यम्।

'न्यविशत' इत्यत्र लङि निविश् ल् इति स्थिते लादेशो लकारमात्रापेक्षत्वात् अन्तरङ्गः। अडागमस्तु लुङा विशेषापेक्षत्वाद् बहिरङ्ग इति पूर्वं लादेशो विकरणश्च प्राप्नोति अडागमश्च, नित्यत्वाद्विकरणः। अडागमो हि विकर कृते तदन्तमेव लङि परतोऽङ्गम्। तदादिग्रहणस्य स्यादिनुमर्थत्वादिति तस्यैव प्राप्नोति, अकृते [14]विकरणे धातुमात्रस्य शब्दान्तरप्राप्तेरनित्यः, ततश्च विकरणान्तस्य विधीयमानोऽडागमो धातुमात्रं प्रत्यभक्त इति नेश्च धातोश्च व्यवधान इत्यात्मनेपदं न प्राप्नोतीत्यत आह—[15]'यदागमाः' इत्यादि। एवं मन्यते—बाह्योपसर्गसम्बन्धापेक्षत्वादयं विधिर्बहिरङ्ग अस्मिंश्चाप्रवृत्ते लादेशोऽप्यप्रवृत्त एव, अपवादविषयपरिहारेण हि तेन प्रवर्तितव्यम्। अनिर्वृत्तश्च लादेशो विकरणोत्पत्ते न निमित्तम्। तेन लावस्थायामेवाड् भवन् धातुमात्रस्यैव भवति, ततश्च तदवयवत्वान्न तस्यैव व्यवधायक इति

1. 'हसिसकाराणां' इति पाठः 2. सूत्रसमीप इदमपि सूत्रं इति पाठः 3. 'व्यतिहारः' इति पाठः 4. 'संविवहन्ते' इति पाठः 5. 'लान्तरीयकस्तु' इति पाठः 6. 'सम्बध्य' इति पाठः 7. 'तृतीयानिर्देशे' इति पाठः 8. 'इतरेतरादिशब्दा उपसर्गश्च' इति पाठः 9. 'कर्मव्यतिहार' इति पाठः 10. 'कर्मव्यतिहारे' इति पाठः 11. 'सुल्लकि' इति पाठः 12. 'पूर्वपदस्य' इति पाठः 13. 'अनारम्भेऽस्यापि इति पाठः 14. 'नुविकरणे' इति पाठः 15. 'तदागमा' इति पाठः।

कथं तर्ह्युक्तम् [1]व्यवधानेऽपि भवतीति ? श्रुतिमात्रापेक्षया । क्वचित्तु--'अटा नास्ति व्यवधानम्' इत्येव पाठः । 'मधुनि विशन्ति' इति अङ्गभक्तो नुम् ङेरनवयव इति निशब्दस्यानर्थक्यम् । क्वचित्तु[2] 'मधुनि निविशन्ति भ्रमराः' इति शसन्तं पठ्यते ।

## १८. परिव्यवेभ्यः क्रियः ।

'पर्यादय उपसर्गा गृह्यन्ते' इति । कथं 'क्रियः' इति षष्ठी, उपसर्गैरेव[3] पर्यादिभिरर्थद्वारको विशेषणविशेष्यभावलक्षणसबन्धः । न च क्रियो ये उपसर्गास्तेभ्यः परं धात्वन्तरं सम्भवतीति क्रीणातेरेवात्मनेपदं भवतीति । यद्वा—पर्यादिविशेषणाय षष्ठीमनुभूयात्मनेपदसम्बन्धे 'क्रियः' इति पञ्चमी सम्पद्यते, तदाह--'इत्येतेभ्य उत्तरस्मात् क्रीणातेः' इति ।[4]

'बहुवि' इति । बहवो वयः पक्षिणोऽस्मिन्निति बहुव्रीहिः, कर्मपदं चैतत् । पक्षिवाचिनो विशब्दस्य नपुंसकत्वाभावात् विभक्त्याऽस्य व्यवधानात् केवलो नोदाहृतः । ननु बहुव्रीहावपि जहत्स्वार्थायां वृत्तौ वेरानर्थक्यम्, अजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वमिति न भविष्यति । एवं तर्हि उदाहरणदिगियं दर्शिता । इदं तत्रोदाहरणम्—'वे क्रीणासि', अत्रैकदेशविकृतस्यानन्यत्वात् प्रसङ्गः, वी क्रीणीतः—अत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात् प्रसङ्गः ।

## १९. विपराभ्यां जेः ।

'साहचर्यात्' इति । द्वयोर्दृष्टापचारत्वेऽपि परस्परसाहचर्यादित्यर्थः । 'नेर्विशः' (१.३.१७) इत्यादिप्रकरणसाहचर्याद्वा । 'वहुवि' इति । अत्रापि 'वे जयसि, वी जयतः' इत्युदाहार्यम् । परा उत्कृष्टा । अथ कथं जेरिति निर्देशः, यावता 'प्रकृतिवदनुकरणं भवति' (व्या. प. ११३) इति 'अचि श्नुधातु'(६.४.७७) इत्यादिना इयङादेशेन भवितव्यम् । न च दीर्घेषु सावकाशमियङ् परत्वात् 'घेर्ङिति' (७.४.१११) इति गुणो बाधत इति युक्तम् । ह्रस्वेष्वपि पूर्वविप्रतिषेधेन इयङ् इष्टत्वात्, तथा च 'क्षियः' इति निर्देशः । उच्यते, धातुत्वं तावदर्थाश्रयं—क्रियावचनो धातुरिति, इह वा विवक्षितार्थं रूपमात्रमनुकृतमिति । अनुकार्यस्यापि धातुत्वं नास्ति, प्रागेवानुकरणस्य ॥

## २० आङो दोऽनास्यविहरणे ।

यथैव 'अवत्सा धेनुरानीयताम्' इत्युक्ते सम्भवद्वत्ससम्बन्धा गोधेनुरेवानीयते, न महिष्यादिधेनुः, तथेहापि सम्भवदास्यविहरणस्य 'डुदाञ् दाने' (धा.पा. १०९१) इत्यस्यैव ग्रहणम्, न तु 'गामादाग्रहणेष्वविशेषः' (व्या. प. १२४) इति सर्वेषां दारूपाणामित्याह—'आङ्पूर्वाद् दाञः' इति । 'आदत्ते' इति । श्लौ द्विर्वचनम्, पूर्ववदाकारलोपः, दकारस्य चर्त्वम् क्वचिद् 'आङो' ङिद्विशिष्टस्य ग्रहणं किम् ? भिक्षामाददाति इति पठ्यते, तत्र स्मृतावाकारः ।

'आस्यविहरणसमानक्रियादपि' इति । कथमिह 'आङो दोऽनास्ये' इतीयता सिद्धं द्रव्ये धातोर्वृत्त्यसम्भवादास्यसमवायिन्यां क्रियायां वर्तमानस्य समुदायस्य निषेधो विज्ञायते । न चैवं 'स्वं मुखमादत्ते' इत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधप्रसङ्गः, ग्राह्याऽऽस्य एव समवेता क्रिया, तस्यां वर्तमानो ददातिरास्ये वृत्तिर्भवति, ग्रहणं तु ग्राह्यग्राहिणोरुभयोरपि समवेतम् । अनास्य [illegible] पर्युदासः । आस्यानास्यसमुदायश्चास्यादन्य इति विधिरेव भविष्यति । एवं सिद्धे विहरणग्रहणं विहरणविशेषोपलक्षणार्थं, तेनासत्यप्यास्ये तादृशे विहरणे भविष्यति यादृशमास्यविहरणम् आस्यव्यादानम् । 'विपादिका' इति । 'पादस्फोटः विपादिका' ((अमरः २.६.५२)

'स्वाङ्गकर्मकाच्च' इति । स्वमङ्गं स्वाङ्गं, न तु पारिभाषिकमद्रवादिलक्षणम् । एतच्च न्यायसिद्धमेवोक्तम्, कथम् ? कर्तरीति वर्तते, आस्यशब्दश्चायं सम्बन्धिशब्दः, कस्यास्यमित्यपेक्षायां यस्मिन् कर्तर्यात्मनेपदं तस्य चेत्तदास्यमिति विज्ञाते तेन परकीयास्यविहरणे विधिरेव भवति ॥

---

1. 'अटा व्यवधानेऽपि' इति पाठः 2. 'मधूनीति शसन्तं पठ्यते' इति पाठः 3. 'च' इत्यधिकं पठ्यते
4. इतः परं 'आशिषि नाथ' इत्यतः प्राक्तनो ग्रन्थः पत्रलोपान्नोपलभ्यते ।

## २१. क्रीडोऽनुसम्परिभ्यश्च ।

'माणवकमनुक्रीडति' इति । माणवकेन सह क्रीडतीत्यर्थः । 'तृतीयार्थे' (१.४.८५) इत्यनुः कर्मप्रवचनीयसंज्ञः 'आगमेः' इति ण्यन्तस्येदं ग्रहणम् । 'आगमयस्व तावत्' इति । सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः ।

'शिक्षेः' इति । 'शिक्ष विद्योपादाने' (धा. पा. ६०५) इत्यस्यानुदात्तेत्त्वादेव सिद्धमिति शकेः सन्नन्तस्य ग्रहणम् । 'शिक्षते' इति । 'सनि मीमाघु' (७.४.५४) इत्यच इस्, 'स्कोः संयोगाद्योः' (८.२.२९) इति सलोपः, 'अत्र लोपोऽभ्यासस्य' (७.४.५८) धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। क्रियाविषयो हि शकेः प्रयोगः—'भोक्तुं शक्नोति, गन्तुं शक्नोति' इति । तदिह ज्ञानं विषयः, आत्मनेपदेनैव ज्ञानविषयत्वस्य गमितत्वाज्ज्ञानमिति न प्रयुज्यते ।

'आशिषि नाथः' इति । 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' (धा. पा. ६, ७) अनुदात्तेत् । नियमार्थं वचनम्—आशिष्येव यथा स्यात् याच्ञादिषु मा भूदिति । अनुदात्तेत्त्वं युजर्थम् । 'सर्पिषो नाथः' इति । 'आशिषि नाथः' इति कर्मणि षष्ठी 'सर्पिर्मे भूयादित्याशास्ते' इत्यर्थः । 'हरतेः' इति । गतिः प्रकारः । 'पैतृकम्' इति । पितुरागतं प्रकारं शीलयन्तीत्यर्थः । 'ऋतष्ठञ्' (४.३.७८), 'इसुसुक्तान्तात् कः' (७.३.५१) । प्रत्युदाहरणे सादृश्यमात्रं विवक्षितं न प्रकारताच्छील्यम् ।

'किरतेः' इति । विक्षेपार्थः किरतिः । हर्षादयस्तु विषयत्वेनोपात्ताः । तत्र हर्षो विक्षेपस्य कारणम्। जीविका-कुलायकरणे तु फलम् । एतेष्वर्थेषु 'अपाच्चतुष्पात्' (६.१.१४२) इति सुड् विधीयते । 'आनुते' इति । उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः । 'णु स्तुतौ' (धा. पा. १०३५) अदादिः । 'आपृच्छते' इति । 'प्रच्छ ज्ञीप्सायाम्' (धा. पा. १४१३) तुदादिः । [1]ग्रहीत्यादिना संप्रसारणम् । 'वाचा शरीरस्पर्शनम्' इति । 'त्वत्पादौ स्पृशामि, नैतन्मया कृतम्' इत्येवं-शपथविशेषः । 'देवदत्ताय' इति । 'श्लाघह्नुङ्स्थाशपाम्' (१.४.३४) इति सम्प्रदानसंज्ञा ॥

## २२. समवप्रविभ्यः स्थः ।

'सन्तिष्ठते' इति । पाघ्रादिसूत्रेण (३.१.१३७) तिष्ठादेशः । अत्राप्युपसर्गग्रहणादिह न भवति–'वे तिष्ठति' [2]वी तिष्ठतः' इति ।

'अस्ति सकारम्' इति । "स्तः सन्तीत्यादौ सकारमात्रस्य दर्शनात् 'स भुवि' इत्येव धातुः पाठ्यः, अस्तीत्यादौ पिति सार्वधातुके अडागमो विधेयः, आस्ताम् आसन्नित्यादौ आडागमः [3]स्यात्" इति आपिशला मन्यन्ते। 'आगमौ गुणवृद्धी' इति । 'वैयाकरणः, सौवश्वः' इत्यादौ वृद्धेरागमत्वमित्याहुः । गुणस्य त्वागमत्वे उदाहरणं मृग्यम् ॥

## २३. प्रकाशनस्थेयाख्ययोश्च ।

'स्वाभिप्रायकथनम्' इति । कथनमाविष्करणमात्रं न तु शब्देनैव, तेनाभाषमाणायामपि कन्यकायां भवति 'तिष्ठत्यस्मिन्' इति । प्रकरणादिनात्र विवादपदनिर्णेतुः प्रतीतिः, न तु शब्देति विग्रहवाक्ये ...त्मनेपदं न कृतम् 'संशय्य कर्णादिषु' इति । संशयस्थानेषु कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थः ॥

## २४. उदोऽनूर्ध्वकर्मणि ।

'कर्मशब्दः क्रियावाची' इति । साधनकर्मणि धातोर्वृत्त्यसम्भवादिति भावः । 'उद ईहायाम्' इति । ईहा परिस्पन्दः । 'ईहाग्रहणम्' इत्यादि । ईहात्मकं यदनूर्ध्वकर्म इत्येवमनूर्ध्वकर्मण एव विशेषणमीहाग्रहणम्, न पुनरनूर्ध्वकर्म...

1. 'ग्रहिज्या दिना' इति पाठः । 2. 'वा' इति पाठः 3. नास्ति

ग्रहणमपनीय ईहाग्रहणं कर्तव्यमित्युच्यते इत्यर्थः। तथा हि सति 'आसनादुत्तिष्ठति' इत्यत्रापि स्यात्, परिस्पन्दरूपत्वादुत्थानस्येति भावः। उद ईहायामित्येतत् कर्मग्रहणात् सिद्धमित्याहुः। कथम्? 'ईहाऽनूर्ध्वं' इत्येतावताऽनूर्ध्वताविशिष्टं क्रियावाचित्व सिद्धम्, धातोः क्रियावाचित्वात्। एवं सिद्धे कर्मग्रहणाल्लोकप्रसिद्धं परिस्पन्दात्मकं कर्म गृह्यत इति॥

## २५. उपान्मन्त्रकरणे।

पारिभाषिकमत्र करणं गृह्यते, मन्त्रः करणं यस्यार्थस्य तस्मिन् वर्तमानादित्यर्थः।

'उपात्' इत्यादि। अमन्त्रकरणार्थमिदम्। सङ्गतकरणमुपश्लेष इति। विनापि मैत्रीसम्बन्धात्। 'स्रुघ्नमुपतिष्ठते' इति। प्राप्नोतीत्यर्थः।

भिक्षुकः' इति। लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः॥

## २६ अकर्मकाच्च।

अत्रासम्भवात् क्रिया कर्म न गृह्यते, न ह्यस्ति सम्भवः 'धातुश्च भवत्यक्रियावचनश्च' इति। ननु च [1]साधनकर्मणाप्यकर्मकत्वमव्यभिचारादविशेषणम्, न हि शब्दात्मकस्य धातोः कर्मणा योगवियोगौ सम्भवतः, साधनयोगस्य क्रियाधर्मत्वादत आह—'अकर्मकक्रियावचनात्' इति। एतेनार्थद्वारकमेतद्धातोर्विशेषणमिति दर्शयति। 'यावद् भुक्तम्' इति। यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः। सप्तम्यन्तं चैतत्। 'संनिधीयत इत्यर्थः' इति। भावे लकारः। अर्थतो व्याख्यानं चैतत्—यो ह्युपतिष्ठते स संनिधत्ते, यश्च संनिधत्ते तेन संनिधीयते।

'अकर्मकादिति किम्' इति। पूर्वसूत्रे 'उपात्' इति योगविभागादिष्टस्य [2]सिद्धिं पश्यति। न चैवमतिप्रसङ्गः, 'मन्त्रकरणे' इत्यस्य नियमार्थत्वात्—सकर्मकाद्यदि भवति मन्त्रकरण एवेति। 'राजानमुपतिष्ठति' इति। विपरीतोऽपि नियमः स्यात्—[3]करणे यदि भवति मन्त्रकरण एवेति, ततश्चात्र स्यादेवेति भावः।

## २७. उद्विभ्यां तपः।

उत्तपति सुवर्णमित्यत्र सन्तापने विलापने वा तपिर्वर्तत इति सकर्मकत्वम्।

'स्वमङ्गं स्वाङ्गम्' इति। यस्मिन् कर्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणम्, ततोऽप्राणिन्यपि कर्तरि [4]यस्य यदङ्गं तत्कर्मकादपि प्रसङ्गः। पारिभाषिके त्वेष दोषो न भवति, तस्य प्राणिस्थत्वात्। अन्वर्थेऽपि न दोषः, तपेः प्राणिकर्तृकत्वात्। पारिभाषिकस्य त्वसबन्धिशब्दत्वात् कर्तुश्चेत् स्वमङ्गमित्येवं न प्रतीयेतेति [5]भावः॥

## २८. आङो यमहनः।

'आहते' इति। 'अनुदात्तोपदेश' (६.४.३७) इत्यनुनासिकलोपः। 'आघ्नते' इति। पूर्ववदादेशोपधालोपौ, कुत्वं च। 'आहन्ति शिरः परकीयम्' इति। 'आजघ्ने विषमविलोचनस्य वक्षः' (कि १७.६३) इत्यत्र तु गाण्डीवी विषमविलोचनस्य वक्ष एत्य स्वं वक्षो हतवानित्यर्थः। मल्लोऽप्युत्साहवर्धनाय स्वं वक्ष आस्फालयति॥

## २९. समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः।

'समो गम्यृच्छिभ्याम्' इत्येतावत् सूत्रम्। प्रच्छ्यादयस्तु वार्तिककदृष्टाः सूत्ररूपेण पठिताः, सूत्रकारवद्वार्तिककारोऽपि शास्त्रस्य कर्ता, न व्याख्यातेति दर्शयितुम्। 'तत्र हि' इति। उत्तरार्थमनुवर्तमानमपि योगविभागसामर्थ्यात् तत्र न सम्बध्यत इत्यर्थः।

---

1. 'साधनकर्मणो धर्मकत्वमव्यभिचारादविशेषणम्' इति पाठः 2. 'सिद्धं' इति मुद्रितः पाठः। 3. 'स करणे यदि भवति' इति पाठः। 4. 'तस्य' इति पाठः 5. 'भावं च' इति पाठः

'न लाभार्थस्य' इति। सत्ताविचारणार्थयोस्त्वनुदात्तेत्वादात्मनेपदेन भाव्यमेवेति भावः। 'दृशेश्च' इत्यादि।' इ वक्तव्यरूपेणैव पठितम्। विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण। अथास्मिन्नकर्मकाधिकारे ये सकर्मका हनिगमिप्रभृतयः तेषां कथमकर्मकत्वम्? उच्यते—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः [1]कर्मणोऽकर्मिका क्रिया ॥ (वा. प. ३.७.८८)

'वहति भारम्' इति। प्रापणे सकर्मको वहिः। स्यन्दने त्वकर्मकः। 'वहन्ति नद्यः' इति—प्राणविशिष्टं धारणं जीवतिराह। तत्र प्राणानां धातुनैवोपात्तत्वान्न तेन कर्मणा सकर्मकत्वम्, न च प्राणकर्मके धारणेऽन्यस्य कर्मत्वमिति जीवतिरकर्मकः। प्रसिद्धेर्यथा—'वर्षति' इत्यनुपात्ते कर्मान्तरे नियमेन जलं प्रतीयत इति न तेन सकर्मकत्वम् ते [2]'वृष्टे देवे' इति कर्तरि क्तो भवति। व्यभिचारिणा तु रुधिरादिना सकर्मक एव—'रुधिरं वर्षति, शरान् वर्षति' इति। कर्मणोऽविवक्षयाप्यकर्मकत्वम्, यथा—'नेह पच्यते, नेह भुज्यते' इत्यत्र कर्मविवक्षायां तत्कर्मिकैव क्रिया प्रतिषिद्धा स्यात् न पाकमात्रमित्यविवक्षा कर्मणः॥

## ३०. निसमुपविभ्यो ह्वः।

'निह्वयते' इति। कथं पुनरत्रात्मनेपदम्, यावता 'ह्वा' इत्याकारान्तादियं पञ्चमी, एकारान्तश्चायम्, न च विकृतिः प्रकृतिं संगृह्णाति। सत्यम्, आकारान्तात् पञ्चमी, न त्विदं प्रयोगस्थस्याकारान्तस्यानुकरणम्, किं तर्हि? धातुपाठेऽवस्थितैकारान्तस्य, तस्यैव लक्षणवशादात्त्वम। न चानुक्रियमाणरूपविनाशप्रसङ्गः शास्त्रवासनया तस्यैव प्रतीतेः यथा—'यस्येति च' (६.४.१४८) इतीकाराकारयोः॥

## ३१. स्पर्धायामाङः।

'स विषयः' इति। हेतुभावेन च विषयत्वम्, अत एव [3]हेतोः शानच् प्रयुक्तः। 'स्पर्धमानस्तस्याह्वानम्' इति। 'शब्दक्रिय एव' इति। यद्यपि स्पर्धायां पठ्यते, तथाप्याङ्पूर्वस्तत्र न वर्तते, किं तर्हि? शब्दनक्रियावाचीत्यर्थः॥

## ३२. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।

'अपकारप्रयुक्तम्' इति। अपकारेण प्रयुक्तमनेन मेऽपकृतमित्येतया बुद्ध्या कृतमित्यर्थः। अथ वा—कथं मयाऽपकृतं स्यादिति बुद्ध्या प्रवर्तितमित्यर्थः। 'हिंसात्मकम्' इति। सूचितस्य वधबन्धनादिका हिंसा, इह तु तत्करणत्वात् सूचनमेव हिंसा स्वभावमित्युक्तम्। कथं पुनर्ज्ञायते गन्धनं हिंसात्मकमित्यत आह—'तथा हि' इति। 'चुरादौ' इति। स्वभावानुवादः। 'साहसिक्यम्' इति। सहसा वर्तते साहसिकः 'ओजःसहोऽम्भसा वर्तते' (६.३.३) इति ठक्, तस्य कर्मणि ष्यञ्। वर्तिका शकुनिविशेषः। 'एधोदकस्य' इति। समाहारद्वन्द्वः। 'कृञः प्रतियत्ने' (२.३.५३) इति षष्ठी। 'उपस्कुरुते' इति। 'उपात् प्रतियत्न' (६.१.१३९) इत्यादिना सुट्॥

## ३३. अधेः प्रसहने।

'प्रसहनमभिभवः' इति। 'सासाह यो[4] युधा नृभिः' (ऋ. ५.२५.६) 'पृतनाषाड्' (ऋ. ३.२९.९) इत्यादौ दर्शनात्। केचित्तु 'षह मर्षणेऽभिभवे छन्दसि इति [5]पठन्ति, तत्र 'छन्दसि' इति प्रायिकं द्रष्टव्यम्। 'अपराजयो वा' इति। पराजेतुं समर्थस्यैव क्षमया यस्तदभावः स इत्यर्थः। तथा च भारविः—'भवादृशाश्चेदधिकुर्वते[6] रतिम्' (कि. १.४३) इति, भवादृशाश्चेत् परानधिकुर्वते—क्षमया न पराजयन्ते, क्षमन्त इत्यर्थः, तदाह—'न वा तेन पराजितः' इत्यर्थं इति।

1. 'कर्मिणो' इति पाठः 2. 'वृष्टो देव' इति, इति पाठः 3. 'हेतौ' इति पाठः 4. सा साह्या इति मुद्रितः पाठः 5. 'पठन्ति' इति नास्ति 6. 'परान्' इति मुद्रितः पाठः

तेनात्मनेपदवाच्येन कर्त्रा तमित्येतद्वाच्यः कर्मभूतो न पराजित इत्यर्थः । 'पृथग्योगकरणम्' इत्यादि । प्रकथनोपयोगप्रसहनेषु 'अधेः' इत्युच्यमाने गन्धनादिष्वपि अधिपूर्वादेव स्यात् । अथ तत्राधिग्रहणं न क्रियेत, प्रसहनेऽप्यध्यभावेऽपि प्रसङ्गः, अत [1]उत्सर्गेण प्रसहनं विशेषयिष्यामीति प्रसहने वा [2]उपसर्गं विशेषयिष्यामीति [3]योगविभाग इत्यर्थः ॥

## ३४. वेः शब्दकर्मणः ।

'उदोऽनूर्ध्वकर्मणि' (१.३.२४) इत्यादिवत् कर्मशब्दः क्रियावाची मा विज्ञायीत्याह—'कर्मशब्दः' इत्यादि । विपूर्वस्य करोतेः शब्दक्रियायां वृत्त्यसम्भवात्, कृत्रिमसम्भवे लौकिकस्य ग्रहणायोगाच्च । किं च 'वेः शब्दः' इत्येव वक्तव्यम्, कर्मग्रहणमनर्थकम्. 'विकरोति पयः' इति सकर्मकत्वादुत्तरेणापि न भवति ॥

## ३५. अकर्मकाच्च ।

'ओदनस्य पूर्णाः' इति । सुहितार्थयोगे षष्ठी भवति, ज्ञापनात् । यदयं पूरणगुणसुहितार्थेति [4]सुहितार्थयोगे या षष्ठी सा न समस्यत इत्याह, तज्ज्ञापयत्याचार्य—भवति सुहितार्थयोगे षष्ठीति । 'अकर्मकात् इति किम्' इति । पूर्वसूत्रे वेरिति [5]योगविभागेनेष्टसिद्धिं मन्यते, न चैवमतिप्रसङ्गः, शब्दकर्मण इत्यस्य नियमार्थत्वात्—कर्मणि यदि भवति शब्द एवेति, 'कटं विकरोति' इति । विपरीतोऽपि नियमः सम्भाव्येत—शब्दे यदि भवति कर्मण्येवेति, ततश्चात्रापि स्यादिति भावः ॥

## ३६. सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।

'सम्माननादिषु विशेषणेषु सत्सु' इति । युक्तं सम्माननाचार्यकरणवेतनानां विशेषणत्वम्, तत्र हि प्रापणमेव धात्वर्थः, सम्माननादीनि तु तमेव विषयतया व्यवच्छिन्दन्ति । उत्सञ्जनादीनां [6]त्वयुक्तम्, तेषामेव धात्वर्थत्वात्, तद्व्यतिरिक्तस्य विशेष्यस्यासम्भवात् । उच्यते; सम्माननादेरुत्सञ्जनादेश्च विशेषणत्वं समानं [7]पूर्वोक्तं धात्वर्थविशेषणम्, उत्तरस्तु धातुविशेषणमिति विशेष्यमात्रं भिद्यते, अतः सुष्ठूक्तम्—'सम्माननादिषु विशेषणेषु' इति । 'चार्वी बुद्धिः' इति । चारुशब्दात् 'वोतो गुणवचनात्' (४.१.४४) इति ङीष् । 'आचार्योऽपि चार्वी' इति । यथा यष्टीः प्रवेशयेति [8]पुरुषेष्वजहत्स्वलिङ्ग एव यष्टिशब्दः, तद्वच्चार्वीशब्दः ।'ति युक्तिभिः' इत्यादि । पूर्वस्मिन् वाक्ये गुणभावेनापि प्रकृताः शिष्याः तच्छब्देन परामृश्यन्ते । [9]'स्थाप्यमानाः' इति । तिष्ठतिः प्रतिपादनेऽत्र वर्तते । ते शिष्याः युक्तिभिः प्रतिपाद्यमानाः, निष्पाद्यमाना इत्यर्थः । 'पूजिता भवन्ति' इति । अभिलषितार्थसंपादनमेवैतेषां पूजा । पदार्था युक्तिभिः स्थाप्यमाना इति तु व्याख्याने पदार्थानामचेतनत्वात् न मुख्यं सम्माननम् ।

'उत्क्षिपतीत्यर्थः' इति । तेनोत्सञ्जनं नयतेरर्थ इति दर्शयति ।

आचार्यकरणमाचार्यक्रिया' इति । [10]सूत्रे वृत्तौ च कारणावस्थाया विवक्षितत्वात् च्विः प्राप्तोऽपि विकल्पाधिकारान्न कृतः । तथा चाचार्यीकुर्वन्निति च्विः प्रयुक्तः । ननूपनयनं माणवकस्य संस्कारः, येनासावध्ययने योग्यो भवति, न त्वनेनाचार्ये कश्चिदतिशयो जन्यते, आचार्यशब्दस्य तु प्रवृत्तिनिमित्तमुपनीयाध्यापनं नाम क्रियाविशेषः, यथोपाध्यायशब्दस्यैकदेशाध्यापनं तत्कथमाचार्यकरण आत्मनेपदं विधीयते इत्यत आह—'माणवकमीदृशेन' इत्यादि । एवं मन्यते—उपनीयाध्यापनेनादृष्टरूपः कश्चिदतिशय आचार्ये जन्यते, तदेव प्रवृत्तिनिमित्तमाचार्यशब्दस्येति तदाह—'स्वयमाचार्यः सम्पद्यते' इति । 'आत्मानमाचार्यीकुर्वन्' इति च हेतुलक्षणे लटः शत्रादेशः । 'ईदृशेन' इति । यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः । ननु यद्याचार्यकमुपनयनस्य प्रयोजनं तत्कर्त्रभिप्रायमिति नार्थ आचार्यकरण आत्मनेपदविधानेन ? उच्यते;

1. 'उपसर्गेण' इति पाठः । 2. 'उत्सर्गं' इति पाठः । 3. 'योगविभागविभाग' इति पाठः । 4. 'सुहितार्थे' इति पाठः । 5. 'योगविभागादिष्टसिद्धिं' इति पाठः । 6. 'त्वयुक्ते' इति पाठः । 7. 'पूर्वो' इति पाठः । 8. 'पुरुषेष्वप्यजहत्स्वलिङ्ग' इति पाठः । 9. 'स्थाप्यमाना इति' इति पाठः । 10. 'सूत्रवृत्तौ' इति मुद्रितःपाठः ।

[1]नोपनयननेनाचार्यकं जन्यते, किं तर्हि ? [2]तत्पूर्वकेणाध्ययनेन । उपनयनक्रियायास्तु माणवकसंस्कारः साक्षात् फलम्, एवं संस्कृतस्य माणवकस्य यदध्यापनं तेनाचार्यकं जन्यते इति न [3]तदुपनयनायाः क्रियायाः फलम् । यच्च तस्याः फ तन्माणवकगामि, न कर्तृगामि ।

'निश्चिनोतीत्यर्थः' इति । अनेन ज्ञानं नयतेरर्थं इत्याह । 'कारं विनयते' इति । कर एव कारः, प्रज्ञादि राजग्राह्यो भागः कर्षकैः कल्पितः ॥

## ३७. कर्तृस्थे चाशरीरे कर्मणि ।

नयतेरात्मनेपदविधानात् तत्सम्बन्ध्येव कर्ता लकारवाच्यः प्रत्यासन्नो गृह्यत इत्याह—'नयतेः कर्ता' इति । 'तदेक देशोऽपि शरीरम्' इति । अपिशब्दोऽवधारणे । इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियन्ति, न तद्व्यति रिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य । न च [4]शरीरमेव शरीरस्थं भवति, अतः 'तदेकदेश एव तद्ग्रहणेन गृह्यते' (शा. प. ६६) इत्यर्थः । अत्र क्रोधाद्यपनयनफलं कर्त्रभिप्रायमिति 'स्वरितञितः' (१.३.७२) इत्येव सिद्धे नियमार्थ मिदम् [5]'कर्तृस्थे कर्मण्यशरीरस्थ एव' इति । अथ कथम् 'विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः' (कि. २. ३५) इति ? केचिदाहुः—"अपगमे वर्तमानादिदमात्मनेपदविधानं [6]भवति । अत्र तु करोत्यर्थे प्राप्त्यर्थे वा वर्तते, 'अनेकार्थत्वा द्धातूनाम् (व्या. प. ११९)" इति ॥

## ३८. वृत्तिसर्गतायनेषु क्रमः ।

'सर्ग उत्साहः' इति । 'सृष्टश्चेद् ब्राह्मणवधे', [7]'येनेन्द्र' लोकापजयाय सृष्टः इत्यादौ दर्शनात् सृजिरुत्सहार्थः । 'वृत्त्यादिषु' इति किम् ? अपक्रामति ॥

## ३९. उपपराभ्याम् ।

'उपपराभ्यामिति किम्' इति । उपसर्गनियमः किमर्थ इत्यर्थः । 'संक्रामति' इति । 'क्रमः परस्मैपदेषु' (७.३.७६) इति दीर्घः ॥

## ४०. आङ उद्गमने ।

'आक्रामति माणवकः कुतुपम्' इति । अवष्टभ्नातीत्यर्थः । ह्रस्वा कुतूः कुतुपः, 'कुत्वा डुपच्', (५.३.८९)-कुतुप मिति पाठे कुतपो दर्भसंस्तरः । 'आक्रामति धूमो हर्म्यतलम्' इति । उद्गमने क्रमिरकर्मकः, तस्माद्धर्म्यतलादिति पञ्चम्यन्तं पठितव्यम् । यद्वा—उद्गमनपूर्विकायां व्याप्तावत्र क्रमिर्द्रष्टव्यः । इह तु 'नभः समाक्रामति चन्द्रमाः' क्रमाद् इति क्रमिर्व्याप्तौ वर्तते, नोद्गमने ॥

## ४१. वेः पादविहरणे ।

'विक्रामत्यजिनसन्धिः' इति । द्विधा भवति, स्फुटतीत्यर्थः ॥

## ४२. प्रोपाभ्यां समर्थाभ्याम् ।

अन्योऽन्यसाहचर्यात् प्रोपयोरुपसर्गयोर्ग्रहणम्, न प्रातिपदिकान्तकर्मप्रवचनीययोः, नापि क्रियान्तरसम्बन्धिनोः [8]नाप्यनर्थकयोरित्याह—'प्र उप इत्येताभ्यामुपसर्गाभ्याम्' इति । 'तुल्यार्थौ' इति । एतेन समोऽर्थो ययोरिति समर्थौ शकन्ध्वादित्वात् पररूपम्, संशब्दस्यैव वाऽनेकार्थत्वात्तुल्यार्थत्वमिति दर्शयति । ननु 'समर्थः पदविधिः' (२.१.१)

1. 'उपनयनेनाचार्यकं' इति पाठः । 2. 'तत्पूर्वकेणाध्यापनेन' इति पाठः । 3. 'तदुपनयनक्रियायाः' इति पाठः । 4. नास्ति 5. 'कर्तृस्थे कर्मण्यशरीरे' इति काशिका । 6. नास्ति । 7. 'येनेन्द्रलोकावजयाय' इति पाठः । 8. 'नाप्यनर्थकयोर्निपातयोरित्याह' इति पाठः ।

इत्यादौ [1]सम्बन्धार्थत्वं प्रसिद्धम्, सत्यम्, इह तु धात्वर्थं प्रति पारतन्त्र्यान्न परस्परेण[2] सम्बन्धार्थत्वम्। धातुना चोपसर्गयोः सम्बन्धोऽव्यभिचारी, तस्मात् पूर्वोक्त एवार्थः। 'प्रक्रमते' इति। आरभत इत्यर्थः॥

## ४३. अनुपसर्गाद्वा।

'अप्राप्तविभाषेयम्' इति। 'उपपराभ्याम्' (१.३.३९) इत्यस्य नियमार्थत्वात् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्प इति भावः॥

## ४४. अप वे ज्ञः।

'शेषात्' इत्यादि। असत्यस्मिन् सूत्रे अयमविशेष एव भवतीति भावः। 'सोपसर्गश्च' इति। तेन 'अनुपसर्गाज्ज्ञः' (१.३.७६) इत्यनेन कर्त्रभिप्राये क्रियाफले न सिद्ध्यतीति भावः। '[3]अपजानीते' इति। 'ज्ञाजनोर्जा' (७.३.७९)॥

## ४५. अकर्मकाच्च।

'अकर्त्रभिप्रायार्थमिदम्' इति। अथ कर्त्रभिप्राये कथम्, तत्राह—'कर्त्रभिप्राये हि' इति। ननु सोपसर्गात् कर्त्रभिप्रायेऽप्यनेनैवात्मनेपदमेषितव्यम्—औषधस्यानुजानीते, औषधस्यानुजिज्ञासत इति, तस्मात् 'सर्पिषो जानीते'[4] इत्युदाहरणाभिप्रायमेतद्वेदितव्यम्। 'कथं चायमकर्मकः' इति। 'सर्पिषः' इति कर्मणि शेषत्वेन षष्ठी, 'न माषाणामश्नीयात्' इतिवत्। तेन सर्पिरादिना ज्ञेयेन सकर्मक इति मत्वा प्रश्नः।

'अकर्मकादिति किम्' इति। यदि सर्पिरादि करणत्वेन विवक्षितम्, तर्हि करणादिति वक्तव्यमित्यभिप्रायः[5]। एवमुच्यमाने सकर्मकादपि [6]स्यादेवेति दर्शयति—'स्वरेण' इति॥

## ४६. संप्रतिभ्यामनाध्याने।

'उत्कण्ठास्मरणम्' [7]उत्कण्ठापूर्वकं स्मरणम्। 'मातुः' इति। 'अधीगर्थदयेशाम्' (२.३.५२) इति षष्ठी। ननु 'शेष' इति तत्रानुवर्तते, तेन कर्म शेषत्वेन विवक्षितव्यमिति अकर्मकत्वात् पूर्वेणात्रात्मनेपदप्रसङ्गः। 'अनाध्याने' इत्यस्य तु 'मातरं संजानाति' इति व्यावर्त्यं स्याद्यत्र कर्मतैव विवक्षिता, नैष दोषः। 'अनाध्याने' इति विभज्यते, तेन पूर्वयोगस्यापि शेषो भविष्यति॥

## ४७. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः।

'भासनादिषु' इति। अत्रापि किञ्चिद्धातोर्विशेषणम्, किञ्चिद्धात्वर्थस्य। उपसान्त्वनम् उपच्छन्दनम्, धातोः, भासनादिधात्वर्थस्य। 'भासमानः' इति। हेतौ लटः शानजादेशप्रयोगेण भासनं हेतुत्वेन विशेषणमित्याह। 'शिष्यैः स्तूयमानो भासते'। तथा चोपर्युपरि शास्त्रार्थस्य प्रतिभासनात् सुष्ठु वदनं भवति, तेजोभङ्गे तु न शक्नुयाद्वदितुम्। 'जानाति वदितुम्' इति। 'शकधृष' (३.४.६५) इत्यादिना तुमुन्, अत्र वदत्यर्थो ज्ञानस्य विषयः, ज्ञानं विषयि। 'तद्विषयम्' इत्यादि। अत्र यत्नस्याविष्करणरूपस्य वदत्यर्थस्य कर्म। 'विमतिपतिता' इति [8]हेतुगर्भविशेषणं प्रयुञ्जानो [9]विमतिर्हेतुत्वेन विशेषणमित्याह। विमतौ हि सत्यां विचित्रभाषणरूपो वदत्यर्थो निवर्तते। 'उपच्छन्दयति' इति। 'भद्रे भजस्व माम्' इदं ते दास्यामि' इति स्वाभिलषिते प्रवर्तयतीत्यर्थः॥

---

1–2. 'संबद्धार्थत्वम्' इति पाठः। 3. 'अवजानीते' इति पाठः। 4. 'इत्युदाहरणाभिप्रायः' इति पाठः। 5. 'इत्युदाहरणाभिप्रायः' इत्यतः, 'वक्तव्यमित्यभिप्रायः' इत्यन्तं नास्ति 6. 'स्यादिति' इति पाठः। 7. उत्कण्ठापूर्वकं स्मरणम्' इति नास्ति। 8. 'हेतुगर्भं विशेषणं' इति पाठः। 9. '०र्हेतुत्वं न विशेषणमित्याह' इति पाठः।

## ४८. व्यक्तवाचां समुच्चारणे ।

'मनुष्याः प्रसिद्धाः' इति । यद्यपि कुक्कुटादिरुतमपि स्वरूपेण व्यक्तम्—अस्येदं रुतमस्येदमिति । मनुष्य... तु व्यक्ततरा भवति, वर्णात्मकत्वात्, अर्थावगतिहेतुत्वाच्च, अतस्त एव गृह्यन्ते । शुकशारिकादीनां तु पुरुषप्रयत्न... क्वाचित्कं व्यक्तवाक्त्वम्, न [1]स्वाभाविकमिति न तेषां ग्रहणम् ।

'वरतनु संप्रवदन्ति कुक्कुटाः' इति ।

अपनय पादसरोजमङ्कतः, शिथिलय बाहुलतां [2]गलादृताम् ।

क्व च वदनेंऽशुकमाकुलीकृतम्............॥

इति पूर्वपादाः ।

क्वचित्तु कृत्स्न एव श्लोकः पठ्यते । तत्र वरतनुरिति बहुव्रीहौ यदि ह्रस्वान्तस्तनुशब्दः, ततः 'संबुद्धौ' (७.३.१०६) इति गुणप्रसङ्गः, दीर्घान्ते तु नदीलक्षणः कप् प्राप्नोति । केचिदाहुः—तनुशब्दः स्त्रीजातौ क्वचित् प्रयुज्यते, तस्मात् 'ऊङुतः' (४.१.६६) इति ऊङि कृते कर्मधारयोऽयमिति ॥

## ४९. अनोरकर्मकात् ।

'व्यक्तवाचाम् इति वर्तते' इति । न तु समुच्चारण इति सर्वानुवृत्तौ वचनमिदमनर्थकं स्यादिति भावः । तद्व्यक्तवाक्सम्बन्धिनो वदेरिति सूत्रार्थमाह—'व्यक्तवाग्विषयात्' इति । 'अनुः सादृश्ये' इति । तेन कलापकं तुल्यार्थयोगे शेषलक्षणा षष्ठीति भावः । 'यथा' इत्यादि । वदनमात्रसादृश्ये तात्पर्यमिति कर्म न विवक्षितमिति भावः [3]'अनुवदति' । पुनर्वदतीत्यर्थः ॥

## ५०. विभाषा विप्रलापे ।

संवत्सरान् वदन्तीति सांवत्सराः ज्यौतिषिकाः । एवं मौहूर्त्तिकाः ॥

## ५१. अवाद् ग्रः ।

'गिरः' इति पाठे धात्वनुकरणत्वाद्विभक्तावित्वम् । 'ग्रः' इति तु पाठे रूपमात्रानुकरणं द्रष्टव्यम् । 'ह्यपूर्वस्य' इति । 'नियतविषयाण्यपि 'क्रियाविशेषणानि भवन्ति', यथा—उर्यादयः कृभ्वस्तिभ्योऽन्यविषया न ... न्तीति भावः ॥

## ५२. समः प्रतिज्ञाने ।

'प्रतिज्ञानमभ्युपगमः' इति । केचिदाहुः—[4]"परोपदेशनिरपेक्षमात्मनैव विप्रतिपन्नस्य पक्षस्य परिग्रहोऽभ्युपगमः, परेण प्रार्थितस्यार्थस्य नियमवचनम् '[5]एतावद्दास्यामि' इति, 'अस्मिन् काले दास्यामि' इत्येवंरूपः प्रतिश्रवः । परै युक्त्या साधितस्यार्थस्य सम्माननम्—समीचीनमुक्तमत्र भवतेत्येवंरूपमङ्गीकरणमिति, प्रतिज्ञासामान्यावान्तरभेदा एते न तु पर्यायाः" इति । वृत्तिकारस्तु परस्परविषयेऽङ्गीकरणादिव्यवहारदर्शनात् पर्यायत्वमेव मन्यते ॥

## ५३. उदश्चरः सकर्मकात् ।

'उत्क्रम्य' इति उल्लङ्घ्येत्यर्थः । 'उच्चरति' इति, उपरिष्टाद्गच्छतीत्यर्थः ॥

1. 'स्वाभाविकं सार्वत्रिकमिति' इति पाठः । 2. 'मलावृताम्' इति पाठः । 3. 'अनुवदतीति' इति पाठः । 4. 'परोपदेश:' इति पाठः । 5. 'एतावद् दास्यामीत्येवं प्रतिश्रवः' इति पाठः ।

## ५४. समस्तृतीयायुक्तात् ।

'विभक्तिर्गृह्यते' इति । तत्रैव तृतीयाशब्दस्य मुख्यत्वात् । यद्येवम्, तया सह धातोः सम्बन्धो न भवति; न हि तृतीया धातुवाच्या, नापि धातुस्तृतीयान्त इत्यत आह—'तया' इत्यादि । तृतीयार्थेन धात्वर्थस्य योगादौपचारिको धातोस्तृतीयायोग इत्यर्थः । 'यद्यप्यत्र' इति । न हि चेष्टारूपसञ्चरणमन्तरेण करणं सम्भवति । अतोऽश्रुतेऽपि करणपदे तपसा श्रुतेन वेति गम्यमानत्वात्तदर्थयोगस्य सम्भवः । 'तृतीया तु' इति । एतदर्थमेव हि पूर्वमुक्तम् —'विभक्तिर्गृह्यते' इति । तृतीयायुक्तादिति वाऽनर्थकं स्यात् । यदि तदर्थयोगः स्यात् सर्वत्रैवं तदर्थभावादिति भावः ॥

## ५५. दाणश्च सा चेच्चतुर्थ्यर्थे ।

'वक्तव्यमेवैतत्' इति । सूत्रे चेच्छब्दश्चशब्दश्चार्थे, अनेकार्थत्वान्निपातानामिति । केचित्—'दाणस्तृतीया-युक्तादात्मनेपदं भवति, सा च तृतीया चतुर्थ्यर्थे वेदितव्या इति व्याचक्षते'; एवमपि 'अशिष्टव्यवहारे' इति वक्तव्यमेव, अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहार आचारस्तस्मिन्नित्यर्थः । 'दास्या संप्रयच्छते' इति । यो दास्या सह भुञ्जा-नस्तया दत्तं स्वयं भुङ्क्ते, स्वयं च तस्यै ददाति, तद्विषयोऽयं प्रयोग इत्याहुः । 'कथमात्मनेपदम्' इति । न कथञ्चित्, 'तस्मादित्युत्तरस्य' (१.१.६७) इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति भावः । 'विशेषणषष्ठी' इति । एवं च पूर्वसूत्रेऽपि 'अश्वेन समुदाचरते' इत्यादावपि भवितव्यम् ॥

## ५६ उपाद्यमः स्वकरणे ।

इह स्वस्य सतो रूपान्तरेण यत्करणं तत्स्वकरणमिति न गृह्यते । किं तर्हि ? यदाऽस्वं स्वं करोति तदा भवितव्यम्, च्विप्रत्ययस्तु विकल्पितत्वान्न भवति । 'पाणिग्रहणविशिष्टम्' इति । पाणिग्रहणं नाम कश्चित् कन्यासंस्कार-स्तद्विशिष्टमित्यर्थः ।[1] भाष्ये तु—अस्वस्य सतः स्वत्वापादनमेव स्वकरणमित्युक्तम् । भट्टिकाव्येऽपि तदनुगुणः प्रयोगः— 'उपायंस्त महास्त्राणि (भ. १५.२१) 'उपायंसत नासवम्', (भ. ८.३३) 'नोपायंस्त दशाननः' (भ. ७.१०१) इति । देवदत्तो यज्ञदत्तस्य [2]भार्यामुपयच्छति, यज्ञदत्तसम्बन्धिनीं भार्यां दास्यादिरूपेण स्वीकरोतीत्यर्थः । पाणिग्रहणाभावाद्-वृत्तिकारमते युक्तं प्रत्युदाहरणम्, भाष्यकारमते त्वत्रापि भवितव्यम् ॥

## ५७. ज्ञाश्रुस्मृदृशां सनः ।

'श्रुदृशोरपि' इति । श्रुवः सूत्र एव निर्देशात्, दृश उपसंख्यानात् ॥

## ५८. नानोर्ज्ञः ।

'पूर्वेण' इति । अनन्तरसूत्रेण यत्प्राप्तं तत् प्रतिषिध्यते, कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या. प. १९) इति। 'तथा च' इति। अनन्तरस्य प्रतिषेध इत्युक्तम् । एवं सति सकर्मकस्यैवायं प्रतिषेधः संपद्यते, अनन्तर-योगस्य सकर्मकविषयत्वात्, अकर्मकाविषयत्वात् 'अकर्मकाच्च' (१.३.३५) इति प्रागेव विहितत्वात् । तेनाकर्मकात् 'पूर्व-वत्सनः (१.३.६२) इत्यात्मनेपदं [3]भवति । एवं—औषधस्यानुजिज्ञासत इति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः ॥

## ५९. प्रत्याङ्भ्यां श्रुवः ।

'उपसर्गग्रहणं चेदम्' इति । परस्परसाहचर्यात् । 'देवदत्तं प्रति' इति । 'लक्षणेत्थंभूत' (१.४.९०) इत्यादिना प्रतिः कर्मप्रवचनीयः, नोपसर्गः ॥

---

1. 'भाष्ये तु अस्वसतः' इति पाठः । 2. 'भार्यामुपयच्छतीति ।' इति पाठः 3. भवत्येव ।' इति पाठः ।

## ६०. शदेः शितः ।

यद्यत्र शदेः परो यः शित्, तत आत्मनेपदं भवतीत्येवं व्यधिकरणे पञ्चम्यावाश्रित्य [1]व्याख्यायेत, [2]तर्हि विकरणे सत्यनेन विधिना भवितव्यम् । सार्वधातुके च परतो विकरणो विधीयते, ततश्च प्रागेवास्माद्विधेः सार्व... भवच्छेषत्वात् परस्मैपदं स्यात्, तस्मिंश्च सति तन्निमित्ते शिति विकरणे कृते परस्मैपदस्य निवृत्तिर्न सिद्ध्येत् ।... निर्वृत्तस्य निर्वृत्तिर्वचनशतेनापि शक्यते कर्तुमिति—इमं व्यधिकरणपक्षे दोषं दृष्ट्वा सामानाधिकरण्ये पञ्चम्या... दर्शयन्नाह—'शदियः शित्' इति । कथं पुनः शदिः शिङ्भावी, विकरणे हि शकार इद् भवति, तत्राह—'शिङ्भावी' ... शिङ्भावी यस्मात् स तथोक्तः । शिङ्भावित्वादुपचारेण शदिरेव शिदित्युक्तमित्यर्थः । 'शितो वा सम्बन्धी' इति । 'शितः' इति षष्ठ्यन्ततां दर्शयति । कश्च शदिः शितः सम्बन्धी ? यस्तस्य प्रकृतिः । प्रागेव च [3]शिदुत्पत्तियोग्यतया तत्प्रकृतित्वमस्त्येव... 'शीयते' इति । पाघ्रादिसूत्रेण शीयादेशः ॥

## ६१. म्रियतेर्लुङ्लिङोश्च ।

'लुङ्लिङोः' इति स्थानषष्ठीयम्, विषयसप्तमी वा । 'नियमार्थम्' इति । यदि नियमः क्रियते, ङित्... किमर्थम्, यावताऽप्राप्ते विधिरेवास्तु ? इह मा हि मृतेति लुङि 'तास्यनुदात्तेत्' (६.१.१८६) इति ङिल्लक्षणः ... धातुकनिघातो यथा स्यात् । तिङ्निघातोऽत्र 'हि च' (८.१.३४) इति प्रतिषिद्धः ॥

## ६२. पूर्ववत् सनः ।

'पूर्ववत्' इति । 'तेन तुल्यम्' (५.१.११५) इत्यादिना तृतीयान्ताद्वतिः, न पञ्चम्यन्तात्, लक्षणाभावात्... यथा च 'ब्राह्मणेन तुल्यं वैश्यादधीते' इत्युक्ते ब्राह्मणादिवत् वैश्यादधीते इति पञ्चम्यर्थो गम्यते, तथेहापि पूर्वस्मात्... सनन्तादप्यात्मनेपदमित्यर्थो लभ्यते । 'तुल्यार्थैः' (२.३.७२) इति हि तृतीया [4]सर्वविभक्त्यर्थानन्तर्भावयति । 'यदि ... पूर्वो यो धातुः' इति । एतेन 'सनः' इति पूर्वस्यावधिनिर्देशः, न त्वात्मनेपदापेक्षया परपञ्चमीति दर्शयति ।

यद्येवम्, सनन्तादात्मनेपदमिति न लभ्येत, [5]'सनः' इत्यस्य सकृच्छ्रुतस्यावधिनिर्देशेनोपक्षीणत्वात्, अत आह... 'तद्वत्सनन्तादपि' इति । अवधित्वेनापि तावत् सनः श्रुतत्वात् प्रत्यासत्त्या तदन्तादेव विधिर्विज्ञायत इति भावः । ... कस्मान्न विज्ञायते सनन्तादात्मनेपदं भवति, पूर्ववदिति श्रौतोऽन्वयः, तत्र कुतः पूर्ववदित्यपेक्षायां सन्निहितत्वात् सन ... पूर्ववदिति विज्ञास्यत इति ? एवं मन्यते—एवं विज्ञायमानेऽयमेव योगः पूर्वस्यावधिः सम्भाव्येत, यथा—'पूर्वत्रासिद्धम्' (८.२.१) इत्यत्र तत एव योगात् पूर्वत्र इति : ततश्चायमर्थः स्यात्—'अनुदात्तङितः' (१.३.१२) इत्यारभ्येतः पूर्वं धातवो निर्दिष्टास्तेभ्यः सनन्तेभ्यस्तद्वदेवात्मनेपदं भवतीति, ततश्चोत्तरो विधिः सनन्तान्न स्यात्—'भुजोऽनवने' (१.३.६६) 'बुभुक्षते' इति, तस्मात्सनः पूर्ववदित्येव श्रौतोऽन्वय एष्टव्य इति । यद्ययं कार्यातिदेशः शास्त्रातिदेशो वा विज्ञायेत, ... सन्प्रकृतौ प्रयोगान्तरे दृष्टमित्येव निमित्तनिरपेक्षं कार्यं शास्त्रं वातिदिश्यमानमिहाप्यतिदिश्येत—'शिशत्सति, मुमूर्षति, शीयते, म्रियते,' इत्यत्र दृष्टत्वादिति[6] मतेऽनयोः पक्षयोर्दोषं दृष्ट्वा निमित्तातिदेशमाश्रित्याह—'येन निमित्तेन' इति । निमित्तस्य तुल्यत्वात्तद्द्वारकं यदात्मनेपदविषेस्तुल्यत्वं तदाश्रीयते इत्यर्थः । 'पूर्वम्' इति । सनुत्पत्तेः प्राक् प्रयोगान्तर इत्यर्थः । पूर्वस्मादिति युक्तः पाठः, तथा च सनन्तादपीति सङ्गच्छते । यद्यपि प्रकृतिगतम् ङित्त्वादिकं सनन्ते धातौ वचनशतेनापि प्रापयितुमशक्यम्—[7]शिशयिषति, तथापि प्रकृतिगतमेव तत् सना व्यवधानेऽपि तदन्तादात्मनेपदस्य निमित्तं भवतीत्यति... देशार्थः, तावता च निमित्तातिदेशवाचोयुक्तिः । 'आसिसिषते' इति । इटि कृते 'अजादेर्द्वितीयस्य' (६.१.२) इति सिशब्दस्य द्विर्वचनम् । 'निविविक्षते' इति । 'हलन्ताच्च' (१.२.१०) इति सनः कित्त्वम्, व्रश्चादिषत्वम् 'षढोः कः सि' (८.२.४१) 'आचिक्रंसत' इति । आङ आत्मनेपदनिमित्तत्वात् 'स्नुक्रमोः' (७.२.३६) इतीड् नैव भवति ।

1. 'व्याख्यायेते' इति पाठः । 2. नास्ति । 3. 'शिदुत्पत्तियोग्यतत्प्रकृतित्वमस्त्येव' इति पाठः । 4. 'सर्वविभक्त्यर्थमन्तर्भावयति' इति पाठः । 5. 'सनः इत्यस्य' इति नास्ति । 6. '०दितीममेतयोर्दोषं' इति पाठः । 7. 'शिशयिषदिति' इति पाठः ।

निमित्तातिदेशाश्रयणस्य फलमाह--'इह' इति । कारणमाह--'न हि' इति । 'शिदाद्यपि' इति । शिङ्क्षावित्वादिकमपीत्यर्थः । आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह [1]नास्ति । कृते सनि तदन्तमेव शिङ्क्षावि, न शदिम्रियतिभ्याम् । शिशयिषत इत्यादौ तु कृतेऽपि सनि तदानीमपि ङित्त्वादिकं प्रकृतिगतं विद्यत इति भावः ।

यदि तर्हि निमित्तातिदेशः, 'अनुचिकीर्षति' इत्यत्रापि प्रसङ्गः । गन्धनादेरर्थस्य [2]ङित्त्वस्य चात्मनेपदनिमित्तस्य [3]सत्यपि परस्मैपदे निमित्तत्वात् । कार्यातिदेशे तु न दोषः । 'अनुपराभ्यां कृञः' (१.३.७९) इति परस्मैपदेनापवादेनात्मनेपदस्य[4] बाधितत्वादत आह--'यस्य च' इति । न योग्यतामात्रेण निमित्तत्वम्, किं तर्हि ? कुर्वद्रूपस्येति स्नुक्रमोरित्यत्र वक्ष्यत इति भावः । यदि कुर्वद्रूपं निमित्तं, जुगुप्सत इत्यादौ कथम्, न ह्यत्र प्रकृतिगतमनुदात्तेत्त्वं तत्रात्मनेपदत्वं कदाचिदपि करोति [5]नित्यसन्नन्तत्वात् गुपादीनामत आह--'इह' इत्यादि । न वाऽत्रानेनात्मनेपदं, किं तर्हि ? 'अनुदात्तङित:' (१.३.१२) इत्यनेनेत्यर्थः । कथं पुनः समुदायस्य जुगुप्सादेरनुदात्तेत्त्वमत आह--'अवयवे' इति । 'अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात् समुदायस्य विशेषकं भवति' (हे. प. १०७) । यद्येवम्, गोपयति तेजयतीत्यादावपि प्रसङ्गः । अथ यं समुदायं योऽवयवो न व्यभिचरति, तत्र कृतं लिङ्गं तस्य विशेषकं भवति, णिजन्तं च व्यभिचरति, विनापि तेन जुगुप्सते इति गुपेः, प्रयोगादित्युच्येत । यद्येवम्, सनन्तादपि न स्यात्. विनापि तेन गोपायतीत्यत्र गुपेः प्रयोगात् । वक्तव्यो वा विशेषः । अयमुच्यते--'गुप गोपने' (धा. पा. ९९५) इत्यस्य सन्विधौ ग्रहणम्, तस्माच्च नित्यं सनेव भवति, नापरः प्रत्ययः । गोपायतीत्यादिकस्तु प्रयोगः 'गुपू रक्षणे' (धा. पा. ३९५) इत्यस्य, स चान्य एव । अवश्यं चैतदेवं विज्ञेयम्--अन्य एव सन्प्रकृतिः तस्माच्च सनेव भवतीति; अन्यथा निन्दाया अन्यत्र यथा णिज् भवति तथा लङादिरपि स्यात् । एवं तिजिप्रभृतयोऽपि, क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्य सनन्ताश्च, क्षमादिभ्योऽन्यत्र तु यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः ॥

## ६३. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ।

नन्वामन्तस्याधातुत्वाददृष्टमात्मनेपदम्, तत्कथं कृञोऽतिदिश्यते ? स्यादियमनुपपत्तिः, यदि प्रत्ययग्रहणं न क्रियते, कृतेऽपि वा तस्मिन् प्रत्ययग्रहणे कर्मधारयस्तद्गुणसंविज्ञानो वा बहुव्रीहिराश्रीयेत, इह त्वतद्गुणसंविज्ञानो बहुव्रीहिः । धातुरन्यपदार्थस्तदाह—'आम्प्रत्ययो यस्माद्' इति । तद्गुणसंविज्ञानेऽवयवेन विग्रहः, समुदायः समासार्थ इति, आम्प्रत्ययो यस्येति विग्रहः स्यात्, प्रतियोगिनि षष्ठीनिर्देशात्, 'तत्र तस्य' इति षष्ठ्यन्ताद्वतिरित्याह—'आम्प्रत्ययस्यैवेति कृञोऽनुप्रयोगस्य' इति । समानाधिकरणे षष्ठ्यौ । अनुप्रयोगशब्दः कर्मसाधनः । 'ईक्षाञ्चक्रे' इति । 'ईक्ष दर्शने' (धा. पा. ६११) 'ईह चेष्टायाम्' (धा.पा. ६३३) लिट्, 'इजादेश्च' (३.१.३६) इत्याम्, 'आमः' (२.४.८१) इति लेर्लुक् । 'अकर्त्रभिप्रायार्थोऽयमारम्भः' इति ब्रुवता विध्यर्थमेवैतदित्युक्तम् । तत्र दोषमुद्भावयितुमाह—'यदि' इति । किं पुनः कारणं विध्यर्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्यते, न पुनर्नियमार्थत्वमङ्गीकृत्य तदनुगुणो दोष [6]उद्भाव्येत ? सत्यम्, [7]अकर्त्रभिप्राये [8]पाचयाञ्चक्रे, उब्जाञ्चकार इति प्राप्ते आम्प्रत्ययवदेव । तत्र विधिनियमसम्भवे विधिरेव ज्यायान्, तस्मादेवमुच्यते—'उब्ज आर्जवे', (धा. पा. १३२९), 'उम्भ पूरणे' (धा. पा. १३४६) 'उभयम्' इत्यादि परिहारः । 'कथम्' इति । नैकेनैव यत्नेनोभयं लभ्यमिति भावः ।

'ईक्षाम्बभूव' इति । 'भवतेरः' (७.४.७३) 'भुवो वुग्लुङ्लिटोः' (६.४.८८) । 'कथं पुनः' इति । 'कृञः' इत्यत्र स्वरूपग्रहणं मन्यमानस्य प्रश्नः । 'प्रत्याहारग्रहणम्' इति । यदि तत्र स्वरूपग्रहणं स्यात्. इह कृञ्ग्रहणमनर्थकं स्यात्,

---

1. 'नास्तीति' इति पाठः । 2. 'ञित्वस्य' इति पाठः । 3. 'सत्यपि परस्मैपदेऽनिवृत्तत्वात् ।' इति पाठः । 4. 'बाधितत्वादाह' इति पाठः । 5. 'नित्यसनन्तत्वात्' इति पाठः । 6. 'उद्भाव्यते' इति पाठः । 7. 'विध्यर्थत्वमपि सम्भवति कृञो वा मित्वमाश्रित्य कर्त्रभिप्राये 'विध्यर्थत्वमपि सम्भवति कृञो वा मित्वमाश्रित्य कर्त्रभिप्राये' इत्यधिकः पाठः । 8. "पाचयाञ्चक्रे इतिवदीक्षाञ्चकारेत्यादावपि प्राप्ते आम्प्रत्ययवदेव कृञोऽनुप्रयोगस्यात्मनेपदमिति नियमार्थत्वमपि" इति पाठः ।

अन्यस्यानुप्रयोगस्याभावाविति भावः। अत एव विपर्ययोऽपि न भवति— तत्र स्वरूपग्रहणं स्यात्, इह 'प्रत्याहारग्रहणे इति। इह हि प्रत्याहारग्रहणे भ्वस्त्योरप्यात्मनेपदविधिः प्रयोजनम्। यदि चानुप्रयोगविधिना कृञ् एवानुप्रयुक्तः स्यात् तदा भ्वस्त्योरनुप्रयोगाभावादात्मनेपदविधिरनुपपन्नः स्यात्। तस्मादिह स्वरूपग्रहणम् [1]आमनुप्रयोगविधौ प्रत्याहार स्येति सिद्धम्। 'अभिविधौ सम्पदा च' (५.४.५३) इति सम्पदोऽपि तत्रान्तर्भावादनुप्रयोगः प्राप्तः। 'सनाद्यन्ता धातवः' (३.१.३२) इत्यतो धात्वधिकाराद्धातूपसर्गसमुदायस्य न भवति। योऽत्र धातुस्तस्यापि न भवति, अर्थविप्रतिषेधादि तत्रैव वक्ष्यामः॥

## ६४. प्रोपाभ्यां युजरयज्ञपात्रेषु।

'युजिर्योगे' इति। 'युज समाधौ' (धा. पा. १८०६) इत्यस्य, न दैवादिकस्य, अनुदात्तत्वादेव सिद्धेः युजिरिति च विवक्षित इकारः, न त्वागन्तुक.। यज्ञपात्रविषयता चास्यैव सम्भवतीति भावः। 'प्रयुङ्क्ते' इति 'रुधादिभ्यः श्नम्' (३.१.७८), 'श्नसोरल्लोपः' (६.४.१११), कुत्वचर्त्वे, अनुस्वारपरसवर्णौ।

'स्वराद्यन्तोपसृष्टात्' इति। स्वरः अ, इ, आदिरन्तो वा यस्य स स्वराद्यन्तः। तेनोपसर्गेण सम्बन्ध स्वराद्यन्तोपसृष्टः—सम् निस् दुस् इत्येतान् वर्जयित्वा सर्वं एवोपसर्गाः संगृहीता॥

## ६५. समः क्ष्णुवः।

इह 'शर्परे विसर्जनीयः' (८.३.३५) इत्यस्यावकाशो यत्र कुप्वोरसम्भवः—पुरुषः त्सरुकः, 'कुप्वोः ≍क ≍पौ च' (८.३.३७) [2]इत्यस्य यत्र शर्परौ कुपू न [3]सम्भवतः—'पुरुषः करोति' इति; शर्परयोरुभयोः प्रसङ्गे पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति 'शर्परे विसर्जनीयः '(८.३.३५) इति नित्यं विसर्जनीय एव भवति। तेन 'समः क्ष्णुवः' इति सूत्रे विसर्जनीयस्यैव पाठः 'समो गम्यृच्छि' (१.३.२९) [4]इत्यत्रेवेति। एवं हि द्विः समो ग्रहणं कर्तव्यमिति भावः। '[5]संक्ष्णुवते' इति। 'अदादित्वाच्छपो लुक्' (२.४.७२), 'आत्मनेपदेष्वनतः' (७.१.५) इति झस्यादादेश', 'अचि श्नुधातु' (६.४.७७) इत्यादिनोवङ्॥

## ६६. भुजोऽनवने।

'अनवनप्रतिषेधेन' इत्यादि। संसर्गवद्विप्रयोगोऽपि विशेषस्मृतिहेतुः यथा दोग्ध्रीपर्यायो धेनुशब्दः संसर्गादि विशेषेऽवस्थाप्यते—'सवत्सा धेनुरानीयतां सकिशोरा सवर्करा' इति, तथाऽवत्साऽकिशोराऽवर्करेति। यस्या आनयने इष्टः संसर्गः सैव [6]तत्र गृहीता आनीयते, तद्वद्विहापीत्यर्थः॥

## ६७. णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने।

अत्र 'णेः' इति यद्यपि सामान्यनिर्देशः, तथापि पुच्छमाण्डादिणिङ् न गृह्यते, अणौ कर्मणो णावसम्भवात्। कमेर्णिङस्तु 'आयादय आर्धधातुके [7]वा' (३.१.३१) इति वचनादण्यन्तावस्था सम्भवति। कर्मणश्च कर्तृत्वम्—'कमिष्यते योषितं देवदत्तः' 'कामयिष्यते योषित्स्वयमेव' इति, तथापि ङित्त्वादेव [8]सिद्धे सोऽपि न गृह्यत इति णिच एव ग्रहणमित्याह—'णिचश्च इति—कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्' इति। 'अकर्त्रभिप्रायार्थः' इति। उपलक्षण मेतत्, कर्त्रभिप्राये पदान्तरेण द्योतिते 'विभाषोपपदेन प्रतीयमाने' (१.३.७७) इति विकल्पं बाधित्वा नित्यो विधिर्यथा स्यादित्यपि द्रष्टव्यम्। अत्रैकवाक्यतायामयमर्थो भवति—ण्यन्तादात्मनेपदं भवत्यण्यन्तावस्थायां यत्कर्म [9]ण्यन्तावस्थायां [10]यदि स कर्ता भवति आध्यानादन्यत्रेति। तत्र कर्मान्तरनिवृत्तिर्न कृता स्यात्, ततश्चेहापि प्रसज्येत—'आरोहन्ति

1. 'अनुप्रयोगविधौ' इति पाठः। 2. 'तु' इत्यधिकम्। 3. 'भवतः' इति पाठः। 4. 'इत्यत्रैवेति' इति पाठः। 5. 'संक्ष्णुत' इति पाठः। 6. नास्ति। 7. 'च' इति पाठः। 8. 'सिद्धेः' इति पाठः 9. नास्ति। 10. 'कर्ता यदि स भवति' इति पाठः।

हस्तिनं हस्तिपकास्तानारोहयति हस्ती' इति । किं च उक्तेऽर्थे 'णेरणौ कर्मणि' इत्येतादेव वाच्यम्, कर्तरीत्येव ण्यन्तादात्मनेपदं भवति, 'अणौ कर्मणि कर्तरि' इत्युक्ते को नाम विवक्षितोऽर्थो न सिद्धयति ? 'सः' इत्येतच्चानर्थकम्, यत्तदोर्नित्यसम्बन्धादेवाध्याहारतः सिद्धेः । तस्माद्यथाश्रुतमात्रं न विवक्षितमिति मत्वा पृच्छति—'कथम्' इति ।

इतरोऽपि वाक्यभेदाश्रयणेन परिहरति—'अणौ यत्कर्म' इत्यादि । णेरात्मनेपदं भवति आध्यानादन्यत्रेत्येकं वाक्यम्, ततोऽणौ यत् कर्मेति द्वितीयम् । अत्र वाक्ये यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते । कर्मान्तरस्य चानिर्देशाद् उद्देश्यतयाऽपि श्रुतं कर्मत्वमेव विधीयते । तच्च विधीयमानं सामर्थ्याण्णेरिति सन्निहितत्वाण् ण्यन्तावस्थायामेव विधीयते । किं तत् सामर्थ्यम् ? अणौ यत्कर्मेत्यनुवादसामर्थ्यादेवाणौ कर्मत्वसिद्धेस्तत्रैव तद्विधानस्यासम्भवः । तदेवमणौ यत्कर्मेत्येतावत एवाणौ यत्कर्म णौ चेत्तत्कर्मेत्यर्थो भवति । अनेन च कर्मान्तरनिवृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मभावः प्रतिपाद्यते । स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकस्यां क्रियायां कर्मत्वकर्तृत्वयोरुभयोरसम्भवात् । ततो णौ चेदिति तृतीयं वाक्यम्—अणौ यदित्येव, अणौ यत् प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः । ततः स कर्तेति [1]चतुर्थम् । अत्राणौ यत्कर्म णौ चेदिति सर्वमनुवर्तते । 'अनाध्याने' इत्येतदपि प्रसज्यप्रतिषेधे पञ्चमं वाक्यम् ।

तत्र वृत्तिकारेण त्रीणि वाक्यानि स्ववाचा दर्शितानि—ण्यन्तादात्मनेपदं भवतीत्येकं वाक्यम्, अणौ यत् कर्म [2]णौ चेत्तदेव कर्मेति द्वितीयम्, स एव कर्ता भवतीति तृतीयम् । 'णौ चेत्'ग्रहणं समानक्रियार्थमिति तु वक्ष्यति, अतस्तदपि वाक्यमभ्युपगतमेव ।

'आरोहन्ति' इत्यादि । अणौ कर्मप्रदर्शनार्थमिदमुक्तम्, इदं तत्रोदाहरणम्—'आरोहयते हस्ती स्वयमेव' इति । आङ्पूर्वो रुहिः न्यग्भवनोपसर्जने न्यग्भावने वर्तते, न्यग्भवन्तं हस्तिनं न्यग्भावयतीत्यर्थः । यदा तु हस्तिनः सौकर्यातिशयप्रतिपादनाय हस्तिपकव्यापारो न विवक्ष्यते, तदा न्यग्भावमात्रे रुहिर्वर्तते, तत्र च हस्तिनः कर्तृत्वम् । उक्तं च—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वकर्तृत्वेऽवतिष्ठते ॥ (वा. प. ३.७.५६) इति ।

अस्य च कर्तुः कर्मस्थक्रियेषु कर्मकार्याण्यतिदिश्यन्ते—'कर्मवत्कर्मणा तुल्यक्रियः' (३.१.८७) इति तद्यथा—'लूयते केदारः स्वयमेव' इति । लुनातिर्हि द्विधाभवनोपसर्जने द्विधाभावने वृत्तः कर्तृव्यापाराविवक्षायां द्विधाभवनमात्रे वर्तते । [3]रुहिस्तु कर्तृस्थक्रियत्वात् कर्मकार्याणि न लभत इत्येतावत् । ततो न्यग्भवनवृत्ते रुहेर्हस्तिपकव्यापारे णिजुत्पद्यते, तदा च य एवार्थ 'आरोहन्ति हस्तिनं हस्तिपकाः' स एवार्थ 'आरोहयन्ति[4] हस्तिपकाः' इति । पुनः सौकर्यातिशयविवक्षायामविवक्षिते हस्तिपकव्यापारे न्यग्भवनमात्रे रोहिर्वर्तते—आरोहयते हस्ती स्वयमेव' इति । सुष्ठु न्यग्भवतीत्यर्थः । उक्तं च—

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥ (वा. प. ३.७.५९-६०) इति ।

एवं सिञ्चतेरप्यार्द्रीभवनोपसर्जनमार्द्रीभावनमर्थः । ततो निवृत्तप्रेषणमित्यादि पूर्ववत् । सेचयते हस्ती स्वयमेव', सेचनेऽत्यन्तमनुकूलो भवतीत्यर्थः । एवं दृशिरपि कर्मव्यापारमात्रवृत्तिः, णिजुत्पन्ने पुनस्तत्रापरोऽपि, [5]तदुदाहरणम्—'दर्शयते राजा स्वयमेव', दर्शनेनानुकूलो भवतीत्यर्थः । सोऽयं निवृत्तप्रेषणपक्ष उच्यते ।

---

1. 'चतुर्थे' इति पाठः । 2. 'णौ चेतदेव...तृतीयम् ।' इत्यन्तो भागः नास्ति । 3. 'दुहिस्तु' इति पाठः मुद्रितः । 4. 'हस्तिनं' इत्यधिकम् । 5. 'तद्व्यापारेऽपीदमुदाहरणम् इति पाठः ।

अपरः प्रकारः—'आरोहन्ति हस्तिनं हस्तिपकाः', तान्सौकर्यातिशयाद्धस्ती प्रयुङ्क्ते इति, हस्तिव्यापारे णिच् क्रियते—'आरोहयति हस्ती हस्तिपकान्' [1]इति। तत्र सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्म न विवक्ष्यते, ततोऽकर्मकं भवति, यथा—नेह पच्यते, नेह भुज्यते इति पाकमात्रप्रतिषेधे तात्पर्यमिति कर्माविवक्षायां भावे लो भवति—'आरोहयते हस्ती स्वयमेव', सुष्ठु न्यग्भवतीत्यर्थः। एष एव हि हस्तिनः प्रयोजकव्यापारः। एवमितरयोरपि द्रष्टव्यम्। सोऽयमध्यारोपित प्रेषणपक्ष इति गीयते।

तदेवमुभयोरपि [2]पक्षयोः सैव क्रिया, [3]याऽण्यन्तावस्थायाम्। न च कर्मान्तरमस्ति, कर्तापि स एवेत्युप-करणोपपत्तिः। स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम्।

'णेरिति किम्' इति। अणौ कर्मत्वानुवादेन णौ कर्तृत्वविधानात् प्राधान्याण् ण्यन्तादेव भविष्यतीति प्रश्नः। 'साध्वारोहति' इति। साधु न्यग्भवतीत्यर्थः। अत्र कर्मव्यापारमात्रे रुहिर्वर्तते, कर्तृस्थक्रियत्वात्तु कर्मवद्भावाभावाद्यगात्मने-पदे न भवतः, शप्परस्मैपदे भवतः. अणौ [4]यत्कर्मेत्यण्यन्तावस्थायामपि श्रुतत्वात्ततोऽपि स्यादिति भावः। ननु प्राधान्याण्ण्यन्तादेव भविष्यतीत्युक्तम्, [5]किमर्थमणौ यत्कर्म णौ चेत् स कर्तेति? अयमुपाधिर्यस्मिन्नेव प्रयोगे संभवति, तत्रै-वात्मनेपदं युक्तम्, साध्वारोहतीत्यत्र च नायं प्रकारः [6]सम्भवति। आरोहयते हस्तीत्यत्र तु णिच प्रकृतिभूते रुहावण्यन्ते यत् कर्म[7] ण्यन्ते स एव कर्तेति तत्रैव भविष्यति। सत्यम्, तदेवमुत्तरार्थमवश्यं णेरिति वक्तव्यमिहापि विस्पष्टार्थं भविष्यतीति मन्यते।

'अणाविति किम्' इति। कर्मत्वकर्तृत्वयोर्यौगपद्यासम्भवात् णौ च कर्तृत्वस्य श्रुतत्वादवस्थान्तरे णावेव कर्म-विज्ञास्यत इति प्रश्नः। 'गणयति' इति। 'गण संख्याने' (धा. पा. १८५१) चुरादावदन्तः पठ्यते, अतो लोपस्य स्थानि-वद्भावात् उपधावृद्ध्यभावः। गण्यमानो गणो यदा गणनक्रियायामानुकूल्यं प्रतिपद्यते, तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिचः पुनः कर्मव्यापारमात्रे आरोपितस्यैवायं प्रयोगः। 'गणयति गणः स्वयमेव' इति। अत्र णावेव गणेः कर्म, णावेव कर्ता इत्यात्मने-पदं न भवति। कर्मवद्भावेनापि न भवति; कर्तृस्थक्रियत्वात्। गणनं हि संख्यानिमित्तः परिच्छेदो ज्ञानविशेषः। भाव-भागशोऽवस्थापने गणिर्वर्तते। भागशोऽवतिष्ठमानं गणं गोपालकोऽवस्थापयतीत्यर्थमङ्गीकृत्य तत्रानुकूलत्वात् गणस्य कर्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वमिति कर्मवद्भावादात्मनेपदमुदाहृतम्। ननु च 'अणावकर्मकात्' (१.३.८८) इत्यत्र वक्ष्यति—'हेतुमण्णिचो विधिः' (कात्या. वा. १८१२) इति, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति, तच्चेत्, सत्यम्; इदमपि प्रत्युदाहरणमयुक्तमेव, उच्यते—युक्तं तत्र 'हेतुमण्णिचो विधिः' इति; तत्र बुधादिसूत्रे (१.३.८६) 'णेः' इति बुधादिभ्यश्च हेतुमण्णिजेव सम्भवति। इह तु सामान्येन ग्रहणं विशेषहेत्वभावात्। ननु चाणौ यत्कर्मेत्युच्यते चुरादीनां नित्यण्यन्तत्वात् केवलानां प्रयोगाभावादणौ [8]कर्मणोऽसम्भवादत्रापि हेतुमण्णिच एव विधिः, नेत्याह, 'आ धृषाद्वा' (धा. १८०५ इत्यनन्तरं चुरादिषु अधिकारः) इति विभाषितणिचामपि केषाञ्चित् सम्भवात्। भाष्ये तु 'हेतुमण्णिचो विधिः' इति स्थितम्। लावयति दात्रं स्वयमेव' इति। करणस्य दात्रस्यापि तैक्ष्ण्यातिशयेन लवने यदानुकूल्यं तत्प्रतिपादनाय लावकान् प्रति प्रयोजकत्वविवक्षायां णिच्।

इह ण्यन्तादात्मनेपदं भवति अणौ यत्कर्म स चेत्कर्ता इत्युक्ते गम्यत एतत्—यस्मात् ण्यन्ताद्विधिः, तत्रैवाण्यन्ते यत्कर्म स चेत् कर्तेति, अतो णौ चेद्ग्रहणमनर्थकम्। तत्राह—'णौ चेद्ग्रहणं समानक्रियार्थम्' इति। प्रयोज्यप्रयोजकभावलक्षणे क्रियाभेदे मा भूत्, णिच्प्रकृत्यर्थभूतायामेव क्रियायां यथा स्यादित्यर्थः। यथा पुनरयं शब्दार्थस्तथोक्तं पुरस्तात्। 'आरोह-यमाणो हस्ती भीतान् सेचयति मूत्रेण' इति। येन प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे आत्मनेपदं वार्यते ए...

1. 'दर्शनेऽनुकूलो' इति पाठः 2. 'पक्षयोश्च' इति पाठः 3. 'या' इति नास्ति 4. '० वस्थाया अ...' इति पाठः 5. 'किं च अणौ' इति पाठः 6. 'समस्ति' इति पाठः 7. 'स एव च ण्यन्ते' इति पाठः 8. 'कर्मणोऽभावादत्रापि' इति पाठः।

धातुभेदादत्यन्तभेद इति मत्वैतत् प्रत्युदाहृतम्, भीताश्चात्रारोहयतेः कर्म[1]। 'आरोहयमाणः' इति। 'णिचश्च' (१.३.७४) इत्यात्मनेपदं शानच्, भीता ह्यारोह्यमाणा भीत्या मूत्रयन्ति तेन हस्ती सिच्यते। कर्माविवक्षायां तु सेचयतेरकर्मकत्वम्।

उद्देशप्रतिनिर्देशात् लब्धे यत्सग्रहे पुनस्तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये इत्याह—'यत्सग्रहणमनन्यकर्मार्थम्' इति। 'स्थलमारोहयति मनुष्यान्' इत्यत्र कर्मान्तरमप्यस्ति मनुष्याः, रुहेर्गत्यर्थत्वान्मनुष्याणां कर्मसंज्ञा। कथं पुनरत्राणौ कर्मणो णौ कर्तृत्वम्, यावता स्थलमणौ कर्म हस्ती तु णौ कर्ता? स्यादेतत्—'आरोहयमाण' इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वम्, स एव च स्थलमारोहयतीत्यत्रापि कर्तेति। एवमपि प्रत्यासत्तेरेवात्र न भविष्यति, तथा हि ण्यन्तादात्मनेपदं भवति। अणौ यत्कर्म णौ चेत् स कर्ता, इत्युक्ते प्रत्यासत्तेरेतद् गम्यते—येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तेनैव णिचाऽण्यन्ते तत्प्रकृतिभूते धातौ यत्कर्म स एव चेत् कर्ता तस्मिन्नेव ण्यन्त इति। अत्र च यत्रायमुपाधिः, कृतमेव तत्रात्मनेपदम् 'आरोहयमाणः' इति। यत्र तु न कृतम्, 'स्थलमारोहयति' इति, न तत्रायमुपाधिरिति नैवात्मनेपदप्रसङ्गः। इह तर्हि—'आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति हस्ती' इति? किं पुनरत्र नेष्यते? वृत्तिकृता नेष्यते, भागवृत्तिकारेण त्विष्यते। तथा माघः प्रयुङ्क्ते—'करेणुरारोहयते निषादिनम्' (शि. १२.५) इति।

'कर्तेति किम्' इति। भावकर्मणोः सिद्धत्वात् कर्तर्येव भविष्यतीति मन्यते। अणौ यत्कर्म तस्मिन्नेव कर्तरि यथा स्यात्, कर्त्रन्तरे मा भूदित्येवमर्थं कर्तृग्रहणमिति दर्शयन्नाह—'तानारोहयति महामात्रः' इति। गत्यर्थत्वाच्च रुहेः हस्तिपकानां कर्मसंज्ञा। यद्येवम्, कर्मान्तरसम्भवादेवात्र न भविष्यति? नैतदेवम्; अस्तीत्यत्राणौ कर्मणो हस्तिनो णावपि कर्मत्वेनान्वयः। न वा सति कर्तृत्वविधौ कर्मान्तरव्यावृत्तिर्लभ्यते। यद्वा—प्रयोजकव्यापारमात्रे तात्पर्याद्यदा हस्तिपकाः कर्मत्वेनाविवक्षिताः, तदेदं प्रत्युदाहरणं द्रष्टव्यम्। 'वनगुल्मस्य' इति। कर्मोपलक्षणमेतत्, न त्वत्र वनगुल्मस्य कर्मत्वमस्ति, शेषत्वेन विवक्षितत्वात्। तस्माद्वनगुल्ममिति प्रदर्शनीयम्। 'स्मरयत्येनम्' इति। 'स्मृ आध्याने' (धा. पा. ८०७) घटादिः, वनगुल्मस्य रमणीयत्वप्रतिपादनाय प्रयोजकत्वे विवक्षिते णिच्। 'एनम्' इति। बुद्ध्यर्थत्वात् कोकिलस्य कर्मसंज्ञा। एतदप्युपलक्षणम्, अत्र हि कर्मान्तरसद्भावादेव प्राप्तिर्नास्ति कर्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यम्।

'ननु चात्र कर्मकर्तरि मूलोदाहरणानि' इति। ननु चाध्यारोपितप्रेषणपक्षे आरोहयतो हस्तिनः कर्मत्वाभावात् कर्मणा समानधातौ तुल्यक्रियत्वाभावात् 'पचत्योदनं देवदत्तो राध्यत्योदनं स्वयमेव' इतिवत् कर्मवद्भावो न प्राप्नोति; सत्यम् आरब्ध एवास्मिन् सूत्रे सोऽपि पक्षः सम्भवात् प्रदर्शितः, अनारब्धे तु निवृत्तप्रेषणपक्षप्रक्रियैवाश्रयिष्यते। ननु तत्रापि व्यापारद्वयाभिधायिषु रुहादिषु भवत्येवम्। ये तु केवलकर्तृव्यापारवाचिनो दृश्यादयः तेषु कथम्, न हि दृशिः कर्मव्यापारं कञ्चिदाचष्टे? स्यादेतत्—विषयभावापत्तिः कर्मव्यापारस्तदापादनं कर्तृव्यापारः इति। यद्येवम्, इच्छाऽपि दृश्यर्थः स्यात्। [2]नन्वत्रापि विषयभावापत्तिः, तदापादनं च विद्यते, अथ दर्शनविषयभावापादनं दृश्यर्थः। ननु तदेव निरूप्यते किं नाम तद्दर्शनमिति। अत्रोच्यते, मा नामाख्यातकर्मव्यापारः, अस्ति तावत् कर्मणोऽपि व्यापारः, [3]कारकत्वात्, तत्र णिजुत्पत्तिदशायां तावत्येव वर्तिष्यते, उदाहरणदशायां ण्यन्तोऽपीति मन्यते। [4]तथा च रुहिः कर्तृयुक् कर्मणाऽभिधेय इति युक्तं केवलकर्तृव्यापारवाचिनां गमिदृशिप्रभृतीनां कर्तृस्थक्रियत्वम्; कथं तु विक्लित्त्युपसर्जनविक्लेदवचनः पचिः, द्विधाभवनोपसर्जनद्विधाभावनवचनश्च लुनातिः कर्मस्थक्रियः न्यग्भवनोपसर्जनन्यग्भावनवचनस्तु रुहिः कर्तृस्थक्रियः? उच्यते, रुहिरपि गत्यर्थः, तथा च 'ऋद्धितुपरं छन्दसि' (८.१.५६) इत्यत्र भाष्यकारो वक्ष्यति—'हस्तिनमारोहति' इत्यत्र हि उपरिगमनलक्षण एव रुहेरर्थः, तत्पुनर्न्यग्भवनहेतुत्वात् न्यग्भावनमित्युच्यते, उपरिगमनरहितं तु न्यग्भावनमात्रं रुहेरर्थो न भवति, यदा खलु क्वचित् भूमावेव तिष्ठन् वृक्षस्य शाखां हस्ताभ्यामवनमयति, तदा नासावारोहतीत्युच्यते। तस्मात् गतिविशेष एव रुहेरर्थः। कस्तर्हि क्रियाणां कर्मकर्तृस्थतायां हेतुः? उक्तमत्र—:

---

1. 'न सेचयतेः' इत्यधिकम्। 2. 'तत्रापि' इति पाठः। 3. 'कारकत्वान्न णिजुत्पत्तिदशायां' इति पाठः।
4. 'तथा च तुहिकर्क्षस्य क्रिय इति युक्तं' (?) इति पाठः।

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव [1]प्रकाश्यते ॥ (वा. प. ३.७.६६) इति ।

विशेषदर्शनेन शब्दानुसारेण वा क्रियायास्तात्स्थ्यं कथ्यते । एतच्च [2]कारणगतमारोहस्य [3]क... प्रतिपादयति, न तु कर्मस्थताम् । न हि हस्तिनमारोहति, [4]वृक्षमारोहति, पर्वतमारोहतीत्यादौ, कर्मभेदेऽप्यारोहणे ... प्रतीयते, यथा—घृतमांसतण्डुलादिषु [5]पाकः । न च हस्ती न्यग्भवत्वित्येवं कारकव्यापारः, किं तर्हि ? हस्ति... उपर्यासीरन्निति । पाके तु तण्डुलादिगतो विक्लित्यादिरूपो विशेषो यथा स्यादित्येव कारकव्यापारः । तस्मात् [6]... रूपभेदादुद्देशस्य च कर्मगतत्वात् पचिः कर्मस्थक्रियः, विपर्ययाद्रुहिः कर्तृस्थक्रिय इति सिद्धम् । एवं च 'आरुह्यते ... स्वयमेव' इति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्याः । 'दृशिः कर्तृस्थभावकः' इति । अथ सिचिः ... पेक्षितः ? कर्मस्थक्रियत्वात् । आर्द्रीभवनं ह्यत्र प्रधानम्, तदर्थत्वात् कारकव्यापारस्य । किमर्थं तर्ह्युदाहृतः ? किं... भावात् । न ह्यत्रानेन 'कर्मवत्कर्मणा' (३.१.८७) इत्यनेन वा आत्मनेपदे सति कश्चिद्विशेषः. तेनापि सति यक्चिणो... भवतः, '[7]णिश्रन्थिग्रन्थि' (कात्या. वा. १८८२) इति प्रतिषेधात् । भाष्येऽपि कर्मवद्भावात् सिद्धिमाशङ्क्याप्यात्मनेपद... षेधार्थमित्युक्त्वा स्मरतेः कर्तृस्थभावकत्वात् कर्मवद्भावस्य प्राप्तिर्नास्तीत्यभिधायोक्तम् । एवं तर्हि सिद्धे सति यदा... प्रतिषेधं शास्ति, तज् ज्ञापयत्याचार्यः—'भवत्येवञ्जातीयकानामात्मनेपदम्' इति । किमेतस्य ज्ञापने प्रयोजनम् ? ... भृत्या राजानम्. दर्शयते भृत्यान् राजा स्वयमेव' अत्रात्मनेपदं सिद्धं भवतीति । एवञ्जातीयकानामिति कर्तृस्थक्रि... मित्यर्थः । एवं च ब्रुवता विध्यर्थमेतदित्युक्तं भवति, विशेषप्रतिषेधेन सामान्यविधेरनुमानात् । अत्र 'दर्शयते ... राजा' इत्येतदेकमुदाहरणमनुपपन्नम्, कर्मान्तरसद्भावात् । तत्र वृत्तिकार 'त्यजेदेकं कुलस्यार्थे' (चा. नी. २.१०) ... न्यायात् उदाहरणमेतद् गमयितव्यं मन्यते । अस्मिन्नुदाहरणे कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्यर्थः ।

अन्ये त्वाहुः—अस्मादेवोदाहरणादणौ ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भाव एवात्मनेपदं न ... यथा—'स्थलमारोहयति मनुष्यान्' इति । इह त्वणौ कर्तॄणां भृत्यानां णौ कर्मत्वमिति । एवं [8]स्मारयत्येनमिति कोकि... कर्मत्वेऽपि प्रत्युदाहरणमुपपन्नम्, 'करेणुरारोहयते निषादिनम्' (शि. १२.५) इति प्रयोगश्चोपपन्न इति तेषां सूत्राक्षरा... तावदधिकानि, भाष्यं च सर्वमुदाहरणवर्जमनुपपन्नम् ॥

प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मने[9]पदात् ।
जयादित्यस्य हृदयं गूढमेतत् प्रकाशितम् ॥

## ६८. भीस्म्योर्हेतुभये ।

भयमनिष्टापातशङ्कासाधनमात्रं लौकिको हेतुः, न वान्तरेण साधनं क्रिया सम्भवतीति विशेषणसामर्थ्... कृत्रिमत्वाच्च पारिभाषिकस्य हेतोर्ग्रहणमित्याह—'हेतुः प्रयोजकः' इत्यादि । 'ततश्चेद्भयं भवति' इति । यद्येवम्, स्मय... न विशेषितः स्यात्, न हि स्मयतेर्भयमर्थः, अत आह—'भयग्रहणम्' इति । चित्तविकारस्योपलक्षणमित्यर्थः । 'विस्मय... तत एव' इति । अत्र चेद्भवतीत्यनुषङ्गः । 'भीषयते' इति । 'भियो हेतुभये षुक्' (७.३.४०) । 'भाययते' इति । 'बिभे... तुभये' (६.१.५६) इति वैकल्पिकमात्त्वम् । एवं चात्र षुक् न भवति, तद्विधावाकारप्रश्लेषात् । 'विस्मापयते' इति । 'नित्यं स्मयतेः' (६.१.५७) इत्यात्त्वम् । 'अर्तिह्री' (७.३.३६) इत्यादिना पुक् । 'कुञ्चिकया' इति । कारणात्... न हेतोः । यद्यपि तद्व्यापारे णिज्विधानात् प्रयोजकसाध्यमेव भयम्, तथापि विशेषणोपादानसामर्थ्यादिदं विशे...

1. प्रकल्पिता इति मुद्रितः पाठः 2. 'कारणद्वयमारोहस्य' इति पाठः । 3. 'कर्तृस्थतां' इति पाठः । 4. नास्ति । 5. 'पाके इति पाठः । 6. 'त्कर्मभेदेन' इति पाठः । 7. 'णिश्रान्थि' इति पाठः । 8. 'पूर्व... स्मरयत्येनमिति' इति पाठः । 9. ०पदे इति पाठः ।

अन्यनिरपेक्षाद्धेतोरेव [1]यद्भयमिति । एवं च मौण्डचैनं भाययतीत्यत्रापि गुणगुणिनोर्भेदविवक्षायां न भवति । उदाहरणे तु तादात्म्यस्य विवक्षितत्वाद्धेतोरेव भयम् ॥

## ६९. गृधिवञ्च्योः प्रलम्भने ।

'परिहरतीत्यर्थः' इति । वर्जयतीति यावत् ॥

## ७०. लियः सम्माननशालीनीकरणयोश्च ।

'विशेषाभावात्' इति । निरनुबन्धकपरिभाषा तु 'वामदेवाद् ड्यड्ड्यौ' (४.२.९) इत्यत्र ज्ञापिता प्रत्ययग्रहणविषयैवेति मन्यते । 'सम्मानने शालीनीकरणे च वर्तमानात्' इति । सम्माननं विषयः, न धात्वर्थः । यदाह [2]'पूजामधिगच्छतीत्यर्थः' इति । धात्वर्थे तु पूजयतीति वाच्यं स्यात्, यथा न्यक्करोतीत्यर्थ इति । अकर्मकश्चायमस्मिन् प्रयोगे पूजाख्यस्य कर्मण आत्मनेपदसहितेन धातुनैवोपात्तत्वात् पुत्रीयतीतिवदित्याहुः । 'जटाभिः' इति । हेतौ तृतीया, यस्य हि जटाः सन्ति लोके स पूज्यते ॥

## ७१. मिथ्योपपदात् कृञोऽभ्यासे ।

उपोच्चारितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः । 'मिथ्या कारयते' इति आत्मनेपदेनैवाभ्यासस्य द्योतितत्वात् 'नित्यवीप्सयोः' (८.१.४) इति द्विर्वचनं न भवति । [3]'सदोषम्' इति । एतेन मिथ्याशब्दस्यार्थमाचष्टे । अस्यैव विवरणम्—'स्वरादिदुष्टम्' इति । आदिशब्देन रूपं गृह्यते । 'असकृत्' इति अभ्यासं दर्शयति । 'उच्चारयतीत्यर्थः' इति ण्यन्तस्य करोतेरुच्चारणे वृत्तिः 'अनेकार्थत्वाद्धातूनाम्' (व्या. प. ११९)। एवं च प्रकृतिभूतः करोतिरुच्चारणे वर्तते, अकर्मकश्च ॥

## ७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले ।

कर्तारमभिप्रैतीति कर्त्रभिप्रायम्, 'कर्मण्यण्' (३.२.१), क्रियाफलं चेह कर्मैवेति नास्ति नियमः, तेनाकर्मकेभ्योऽपि यजिप्रभृतिभ्यः स्वर्गादिके फले कर्तृगामिन्ययं विधिर्भवत्येव । 'कर्तारं चेत्' इति । क्रियाफलस्य कर्तृगामित्वद्योतनायात्मनेपदं भवतीत्यर्थः । यदि यच्च यावच्च क्रियानन्तरभावि फलं तत्र कर्तृगामिन्ययं विधिर्भवति, इहापि स्यात्—'यजन्ति याजकाः, पचन्ति पाचकाः' इति, दक्षिणादेः कर्तृगामित्वादित्यत्र आह—'प्रधानभूतम्' इति । किं पुनस्तदित्यत आह—'यदर्थम्' इति । यदुद्दिश्येत्यर्थः । 'क्रिया आरभ्यते' इति । सामग्रीसमवधानात्मिका आद्या प्रवृत्तिः आरम्भः, यामन्तरेण याजकादीनामप्रवृत्तिः, स्वर्गादिकं हि फलं प्रेक्षुः सामग्रीं समवधाप्य प्रवर्तयति, सा प्रवर्तिता यथायथं प्रवर्तते । कथं पुनरेतल्लभ्यते—'प्रधाने फले कर्त्रभिप्राये' इति ? प्रधानत्वादेव । किञ्च—यत् किंचन फलं सर्वत्र कर्त्रभिप्रायं भवति । ननु यत्र क्रियाभ्यासमात्रे तात्पर्यम्, तत्र न किञ्चित्फलं कर्तृगामि, तत्रापि किञ्चित् फलं कर्तृगामि, किं कौशलम् ? पुनः पुनरभ्यासे हि कियासु कौशलं भवति, तस्मात् प्रधाने फले कर्त्रभिप्राय इति सिद्धम् । 'यजते' इति । केचिदाहुः—'देवतायै इदं न मम' इत्येवंविधो मानसः सङ्कल्पो याग इति, तेषां 'यजन्ति याजकाः' इति ऋत्विग्व्यापारे प्रयोगो नोपपद्यते । [4]अन्ये त्वाहुः—'होमादिव्वभिष्टत्वादिदृत्विग्व्यापारो यागः' इति, तेषां यजतिव्यापारप्रयोगो नोपपद्यते । एवं तर्हि उभयं यजेरर्थः—ऋत्विग्व्यापारश्च, यजमानव्यापारश्च । तदुक्तम्—यजादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वादिति ।

---

1. 'यमिति' इति पाठः 2. पूजां समधिगच्छतीत्यर्थः—इति काशिका 3. 'सापचारं' इति काशिका ।
4. अन्ये त्वाहुः......यजतिव्यापारप्रयोगो नोपपद्यते, इति भागो नास्ति ।

'न तदर्थः क्रियारम्भः' इति। ननु ऋत्विजामारम्भस्तदर्थ एव, नैतदेवम्, 'आद्या प्रवृत्तिरारम्भः' इति सा च यजमानस्य—'स्वर्गमहं लभेयेति, न पुनरिमे दक्षिणां लभेरन्' इति। यथा–अवघाते क्रियमाणे स्वेदश्च भवति च भवति, भृतिश्च लभ्यते, अथ च वैतुष्यार्थ एवावघातः, तद्वदत्रापि। तदुक्तं हरिणा—

यस्यार्थस्य प्रसिद्धयर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्॥ (वा. ३.१२.१८) इति।

'इह स्वामिदासौ पचतः' इति। क्रियामात्रविवक्षायां परस्मैपदं भवति। स्वामिगते तु धर्मे आरोपिते स्वामिदासौ पचेते इत्यात्मनेपदं भवति।

अथ अभिप्रग्रहणं किमर्थम्? विप्रकृष्टेऽपि फले यथा स्यात्। द्विविधं क्रियाफलम्, दृष्टम्—अन्नपुत्र शत्रुवधादिकम्, अदृष्टं च स्वर्गादि। तत्र पूर्वं प्रत्यासन्नमवश्यंभावीति प्रधानम्, इतरत्तु विधुरप्रत्ययोपनिपाते सति चारसम्भवाद्विप्रकृष्टत्वाच्चाप्रधानम्। सम्भवति [1]ह्यविकलमनुष्ठातुं यागस्यापि मध्ये वैराग्योत्पत्तौ [2]'मोक्षार्थ सत्यामनुत्पत्तिः स्वर्गस्य। ततश्चेह तस्य ग्रहणं न स्यात्। अभिप्रग्रहणे तु सति अभिराभिमुख्ये वर्तते, प्रशब्दस्त इति कर्तारं प्रत्याभिमुख्येन क्रियाफलं चेत्तत् प्रैति एतुमारभते, एवमात्मनेपदं भवतीत्यर्थो भवति। तथा च यद्यपि दिकं स्वरूपेणान्नादिवत् तदानीं नैति तस्य त्वङ्कुरावस्था कर्त्तारमेतीति तद्द्वारेण फलमेवैतुमारभत इति सर्वत्र सिद्धं फलस्यैव ह्यङ्कुरावस्था पूर्वशब्दवाच्या॥

## ७३. अपाद्वदः।

## ७४. णिचश्च।

अत्र कश्चिदाह—इदमात्मनेपदं चुरादिणिचो न भवति, कुतः? ज्ञापकात्। किं ज्ञापकम्? स्वरितेत्त्वमिति। [3]नात्राप्राप्तभाषितमस्ति। पारायणेऽपि चुरादिणिच आत्मनेपदमुदाहृतम्–एष [4]विधिश्चुरादिणिज स्यादिति। कश्चन निश्चिनुते स्म—[5]अप्राप्तवचनेऽत्र न किञ्चन दृष्टम्, लक्षयतेः स्वरितेत्त्वमनार्षम्॥

## ७५. समुदाङ्भ्यो यमोऽग्रन्थे।

'उद्यच्छति चिकित्साम्' इत्यत्र अधिगमपूर्वके उद्यमे यमिर्वर्तते, चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः

## ७६. अनुपसर्गाज् ज्ञः।

सकर्मकार्थमिदम्, [6]अन्यत्र 'अकर्मकाच्च' (१.३.२६) इति सिद्धत्वात्। 'गां जानीते' इति। 'स्वर्गं लोकं प्रतिजानाति' इति। 'संप्रतिभ्यामनाध्याने (१.३.४६)। इत्यनेनापि न भवति, आध्यानविषयत्वात्। प्रजानाति वा पाठः॥

## ७७. विभाषोपपदेन प्रतीयमाने।

अप्राप्तविभाषेयमित्याह—'तदुपपदेन' इति। अत्र च 'स्वरितञितः' (१.३.७२) इत्यारभ्य पञ्च सूत्राणि वर्तन्ते। 'समीपे श्रूयमाणम्' इति[7]। [8]न तु पारिभाषिकम्, असम्भवात्। 'एवं पञ्चसूत्र्यामुदाहार्यम्' इति। न केवलं

---

1. 'ह्यविकलमनुष्ठितयागस्यापि' इति पाठः 2. नास्ति 3. 'नात्राप्त०' इति पाठः 4. 'विधि चुरादि०' इति पाठः 5. 'आप्तवचोऽत्र' इति पाठः। 6. 'अन्यच्च' इति पाठः। 7. 'वा' इत्यधिकम्। 8. 'न' इत्यत आरभ्य 'संयच्छतीति वा' इत्यन्तो भागः नास्ति।

हृतयोर्द्वयोः, अपि तु पञ्चस्वपि सूत्रेष्वित्यर्थः। स्वं यत्नं कारयते, कारयति वा। स्वं व्रीहिं संयच्छते, संयच्छतीति वा। स्वं गां जानीते जानातीति वा ॥

## ७८. शेषात् कर्तरि परस्मैपदम् ।

'आत्मनेपदनियमः कृतः' इति। प्रकृत्याश्रयोऽर्थाश्रयश्च, अनुदात्तङितोरेवात्मनेपदं भावकर्मणोरेवेति। 'सर्वतः' इति। सर्वाभ्यः प्रकृतिभ्यः सर्वेषु चार्थेष्वित्यर्थः। 'तदर्थम्' इति। सर्वतः प्राप्तिनिवृत्त्यर्थमित्यर्थः। 'येन विशेषणेन' इति। अनुबन्धादिना। याति वातीत्यनुबन्धशेषः, '[1]आविशति प्रविशति' इत्युपसर्गशेषः, गन्धनादेरन्यत्र करोतीत्यादिरर्थशेषः। गन्धनादिविशिष्टो हि कृञादिः शेषग्रहणेन पञ्चम्यन्तेन निवर्त्यमानो नागृहीतविशेषणन्यायेन विशेषणं गन्धनाद्यपि व्यावर्तयति। 'शेषादेव नान्यस्मात्' इति। उपलक्षणमेतत्, कर्तर्येव नान्यत्रेत्यपि द्रष्टव्यम्।

'पच्यते, गम्यते' इति। ननु क्रियमाणेऽपि कर्त्तरिग्रहणे यदि तावदेवं नियमः—कर्तरि यदि भवति शेषादेवेति, ततोऽशेषात् कर्तरि मा भूत्, शेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति। अथाप्येवं नियमः—शेषाद्यदि भवति कर्तर्येवेति, ततः शेषाद्भावकर्मणोर्मा भूत्, अशेषात्तु त्रिष्वपि प्राप्नोति। उक्तोऽत्र परिहारः—'योगविभागोऽत्राभिप्रेतः' इति। तत्र प्रथमे योगे शेषादेवेति नियमः, द्वितीये तु कर्तर्येवेति। कर्मकर्तरीत्यपि 'भावकर्मणोः' (१.३.१३) इत्यत्रोक्त एवार्थो विस्मरणशीलाननुग्रहीतुं पुनरपि स्मारितः ॥

## ७९. अनुपराभ्यां कृञः ।

अत्रापि द्वितीयं कर्तृग्रहणमनुवर्तते। अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव ॥

## ८०. अभिप्रत्यतिभ्यः क्षिपः ।

## ८१. प्राद्वहः ।

## ८२. परेर्मृषः ।

## ८३. व्याङ्परिभ्यो रमः ।

## ८४. उपाच्च ।

उपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्तते, 'उपरतोऽध्ययनात्, उपरतो निधनात्' इति। न चानयोरुभयोरप्यर्थयोः सकर्मकत्वमुपपद्यते। तत्कथं सकर्मकस्योदाहरणम्? अत आह—'[2]उपरमयति यावत्' इति। कथं पुनरण्यन्तो ण्यर्थे वर्तते? अत आह—'अन्तर्भावितण्यर्थः' इति ॥

## ८५. विभाषाऽकर्मकात् ।

## ८६. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।

'प्राप्नोति' इति। गम्यत इति [3]वचनं तु प्राप्तिहेतुर्व्यापारः।

'कुण्डिका स्रवति' इति। कुण्डिकायामुदकं कुण्डिकोदकव्यापारो वा कुण्डिकायां छिद्रवत्यामुपचर्यते। ननु स्यन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव, तथा प्रसिद्ध्यभावात् ॥

1. 'आविशति...त्युपसर्गशेषः' इति भागो नास्ति 2. 'उपरमतीति' इति पाठः। 3. 'चलनं' इति पाठः।

## ८७. निगरणचलनार्थेभ्यश्च ।

'चलयति' इति । 'चल कम्पने' (धा. पा. ८१२) घटादिः । 'आदयते देवदत्तेन' इति । 'गतिबुद्धि' (१.४.५२) इत्यादिनाऽणौ कर्तुः कर्मसंज्ञा प्राप्ता, 'अतिखाद्योः प्रतिषेधः' (कात्या. वा. ९५९) इति वचनान्न भवति ॥

## ८८. अणावकर्मकाच्चित्तवत्कर्तृकात् ।

'अणाविति किम्' इति । ण्यन्तस्य प्रयोज्येन कर्मणा सकर्मकत्वमवश्यम्भावीति मन्यमानस्य प्रश्नः । 'चेतयमानः' इति । [1]'चिती संज्ञाने (धा. पा. ३९) भ्वादिः । 'हेतुमण्णिचो विधिः' (कात्या वा. १८१२) इति । बुधादिसूत्रात् णिज्ग्रहणमनुवर्तते, बुधादिभ्यश्च हेतुमत्येव णिच् सम्भवति । तस्मादिहापि तस्यैव ग्रहणमिति भावः । तत्र यथा—'ब्राह्मणेभ्य [2]आनीयन्तामन्यत्रानधीयानेभ्यः' इत्युक्ते प्रत्यासत्तेर्यदध्ययनं ब्राह्मणानां सम्भवति तदधीयानेभ्य इति गम्यते, न त्वध्ययनमात्रमधीयानेभ्य इति, तद्वदिहापि प्रतिषेधोऽपि तस्यैव गम्यते [3]यज्जातीयस्य विधौ ग्रहणमिति ।

'आरोहयमाणम्' इति । 'णेरणौ' (१.३.६७) इत्यात्मनेपदं शानच् तत्रैवास्याकर्मकत्वमुपपादितम् । 'प्रयुङ्क्ते' इति पाठः । 'प्रयोजयति' इति पाठे णेरर्थो मृग्यः ॥

## ८९. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति पिबतिवसत्यं ग्रहणम्, न पातिवस्त्योः, तेनाणावकर्मकत्व विवक्षायां परस्मैपदं भवत्येव । 'पाययते' इति । 'शाच्छासाह्वाव्यावेपां युक्' (७.३.३७) ।

'पादिषु' इति । धेडप्यस्मिन् सूत्रे पठितव्य इत्यर्थः । 'समीची' इति । प्रथमाद्विवचने 'वा छन्दसि' (६.१.१०६) इति पूर्वसवर्णदीर्घः ॥

## ९०. वा क्यषः ।

'लोहितायते[4]' इति । अलोहितो लोहितो भवतीत्यत्रार्थे क्यष्, 'अकृत्सार्वधातुकयोः' (७.४.२५) इति दीर्घः 'पटपटायति' इति । पटच्छब्दस्य डाज्विषये द्विर्वचनम्, 'अव्यक्तानुकरणात्' (५.४.५७) इति डाच्, टिलोपः, 'नित्यमाम्रेडिते डाचि'(६.१.१००)। 'कथम्' इति। न कथञ्चिदित्यर्थः । किं कारणमित्याह—'यावता' इति। न नियमेन व्यावर्तितमात्मनेपदमनेन शक्यं प्रापयितुम्, न ह्यशक्यार्थे वचनस्य व्यापारः, वावचनं तु केवलस्य लस्य प्रयोगार्थं स्यादिति भावः 'एवं तर्हि'इत्यादि परिहारः । विकल्पितं विभाषितम्, पाक्षिकमित्यर्थः । कथं पुनः परस्मैपदप्रकरणे विच्छिन्नमात्मनेपदं शक्यं विधातुम्, अत आह—'तच्च' इति । ननु शाब्दः सन्निधिः सम्बन्धकारणम्, प्रतिषेधेन चापवादभूतस्य[5] भावमात्रं प्रतिपाद्यते आत्मनेपदं तु स्वेन शास्त्रेण भवति, न [6]भावना तस्य सन्निधिर्भवति, उच्यते, तात्पर्यतोऽपि सन्निधिः, सन्निधिरेवापवादापनयनस्य चोत्सर्गप्रवृत्तौ तात्पर्यम्, तेन परस्मैपदं भवतीत्यस्यात्मनेपदं भवतीति तात्पर्यार्थः । यद्वा—इहापि प्रतिषेध एव विधेयः, स च पूर्वसूत्रवदिहात्मनेपदं प्रवर्तयिष्यति। किं तर्हि ? उच्यते 'अनन्तरं सन्निधापितम्' इति, नन्वेवमिहैव सन्निधिर्न भवति ? स्यादेवम्, यदि परस्मैपदेन क्यषन्तादात्मनेपदं बाधितं स्यात्, नियमेन[7] तद्व्यावृत्तिः, तत्र स्वविषये परस्मैपदप्रतिषेधो विकल्प्यमानः किं कारणमात्मनेपदं प्रवर्तयेत् ? पूर्वत्र त्वपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्यते, तस्मादिहापि तदनुवृत्तिसामर्थ्यात् यादृशः प्रतिषेध आत्मनेपदप्रवृत्त्यविनाभावी प्रकृतः, तादृश एव विधीयत इति मत्वोक्तम्—'अवनतम्

1. 'चितीः' इति पाठः 2. 'आनीयन्तामन्यत्राधीयानेभ्यः' इति पाठः 3. 'यस्य' इति पाठः 4. 'लोहितायतीति' इति पाठः 5. 'परस्मैपदस्य' इत्यधिकम् 6. 'तावता' इति पाठः 7. 'तु' इत्यधिकम्

सन्निधापितम्' इति । यद्यात्मनेपदं विधीयते, केनेदानीं परस्मैपदं पक्षे भवतीत्यत आह—'तेन मुक्ते' इति । [1]इह 'प्रोपाभ्यां समर्थाभ्याम्' (१.३.४२), 'अनुपसर्गाद्वा' (१.३.४३) इत्यनन्तरं 'क्यषः' इति सूत्रं कर्तव्यम्-क्यषन्तादात्मनेपद भवतीति, नेदं दुःखमनुभवितव्यं भवति, 'वा'ग्रहणं च न कर्तव्यं भवति, उत्तरमपि योगद्वयं तत्रैव कार्यम्, तथा तु न कृतमित्येव ॥

## ९१. द्युद्भ्यो लुङि ।

द्युतेरेकत्वाद् बहुवचनमनुपपन्नमित्याशङ्क्याह—'तत्साहचर्यात्' इति । छत्रिन्यायेनेति भावः । 'लुठादयोऽपि' इति । प्रत्यासन्नानामेव साहचर्यात् प्रतीतिः स्यादित्याशङ्कामपनेतुं दूरवर्तिनामुपादानम् । क्वचित्[2] श्वित्यादय इत्यनन्तराणामेव पाठः । 'कृपूपर्यन्ताः' इति । तदनन्तरं वृत्करणात् एतदुक्तं भवतीत्याह—बहुवचननिर्देशात् इति । 'व्यद्युतत्' इति । 'पुषादि' (३.१.५५) इति सूत्रेणाङ् । न च तत एवाङ्विधानात् परस्मैपदं शक्यं विज्ञातुम्, [3]नित्यत्वप्रसङ्गात्, [4]लुङोऽन्यत्रापि प्रसङ्गाच्च । अनुदात्तेत्त्वं युजर्थं स्यात् ॥

## ९२. वृद्भ्यः स्यसनोः ।

'स्यसनोः' इति सत्सप्तमी । 'द्युतादिष्वेव वृतादयः पठ्यन्ते' इति । यद्येवमियं प्राप्तिर्वृद्भ्यः पूर्वां प्राप्तिं बाधेत, ततश्च 'अवृतत् अवर्तिष्ट' इति लुङि विकल्पो न स्यात्, तथा चोत्तरत्र चकारः क्रियते—इमां प्राप्तिं पक्षे इतरा प्राप्तिर्न बाधेतेति, द्युतादिपाठसामर्थ्यात् सोऽपि भविष्यति । यद्वा—लुङीत्यत्र स्वरयिष्यते, वर्त्स्यतीत्यादौ 'न वृद्भ्यश्चतुर्भ्यः' (७.२.५९) इति इट्प्रतिषेधः ॥

## ९३. लुटि च क्लृपः ।

'एवं तर्हि' इति । सामान्यस्य विशेषो बाधक इति भावः । 'कल्प्ता' इत्यादौ 'तासि च क्लृपः' (७.२.६०) इतीट्प्रतिषेधः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
प्रथमाध्यायस्य तृतीयः पादः ॥

---

1. 'इह' इत्यत आरभ्य 'कृतमित्येव' इत्येतावदन्तो भागः नास्ति । 2. 'श्वित्यादय' इति पाठः । 3. 'नित्यप्रसङ्गात्' इति पाठः । 4. 'अङोऽन्यत्रापि' इति पाठः ।

## अथ प्रथमाध्याये चतुर्थः पादः

### १. आ कडारादेका सञ्ज्ञा ।

'आङ् मर्यादाभिवृद्ध्योः' (२.१.१३) इति समासस्य विकल्पितत्वात् '[1]आकडारात्' इति निर्देशः, समासे त्वाकडार- मिति स्यात्। इह द्वौ कडारशब्दौ भवतः—'प्राक् कडारात् समासः (२.१.३) 'कड राः कर्मधारये' (२.२.३८) इति च, तत्र कोऽवधिरित्यत आह—'कडाराः कर्मधारये (२.२.३८) इति वक्ष्यति' इति । कुतः पुनरेतत् ? स्वातन्त्र्यात् । स्वतन्त्रो ह्यसौ प्रथमानिर्देशेन स्वयं कार्ययोगित्वात् । प्राक्कडारादित्यय तु परतन्त्रोऽवधित्वेन स्वयं कार्ययोगित्वाभावात् व्यपेक्षा- न्यायात् । एवं हि भूयसामनुग्रहो भवति । लिङ्गाच्च, यदयं 'तत्पुरुषः' (२.१.२२), 'द्विगुश्च' (२.१.२३) इति द्विगोस्तत्पुरुषसंज्ञां शास्ति, तज्ज्ञापयति—अनुवर्तते द्वितीयेऽप्येकसञ्ज्ञाधिकार इति, अन्यथा 'दिक्सङ्ख्ये सञ्ज्ञायाम्' (२.१.५०) इत्यत्र तत्पुरुषाधिकारादेव समावेशसिद्धेस्तदर्थो यत्नोऽपार्थकः स्यात् । किमर्थं पुनरियानवधिरुपादीयते, आ द्वन्द्वात् इत्येवोच्येत, न हि 'चार्थे द्वन्द्वः (२.२.२९) इत्यतः परत्रास्योपयोगः ? उच्यते, 'द्वन्द्वश्च प्राणितूर्य' (२.४.२) इत्ययमप्यवधिः[2]सम्भाव्यते, ततश्च सम्बुद्धिसञ्ज्ञामन्त्रितसञ्ज्ञयोः समावेशो न स्यात् ।

'का पुनरसौ' इति । एका संज्ञा [3]भवतीत्येतावत् सूत्रव्यापारः, तत्र विशेषादर्शनात् प्रश्नः । 'या पराऽनवकाशं च' इति वचनात् न्यायाच्च व्यवस्थेति भावः । ननु यद्यारब्धेऽप्यस्मिन् परत्वानवकाशत्वाभ्यामेव व्यवस्था वाच्या अनारब्धेऽप्यस्मिन् आभ्यामेव व्यवस्था भविष्यति, नार्थ एतेन ? तत्राह—'अन्यत्र' इति । अयं भावः—यत्र प्रयोजनैक्यं भवति, सहानवस्थानलक्षणो वा विरोधः, तत्रैवानवकाशः सावकाशं बाधते, [4]यथा—'[5]नैर्ऋतश्चरुर्नखावपूतानाम्' (मै.२.६.१) इति । नखावपनेन वैतुष्यफलकेन तत्फलकोऽवघातो बाध्यते । [6]अष्टाश्रियूपः कर्तव्यः, वाजपेयस्य तु चतुरश्र इति, अष्टाश्रित्वचतुरश्रत्वयोर्विरोधात् बाध्यबाधकभावः । विप्रतिषेधोऽपि विरोधात्मकत्वात्तत्रैव भवति । न चासत्यस्मिन् सूत्रे संज्ञानामेतदुभयं भवति, अत एवान्यत्र समावेशो भवति, तद्यथा—कृत्कृत्यप्रत्ययसंज्ञानां तद्धित- द्राजप्रत्ययसंज्ञानां च । सति त्वस्मिन् सूत्रे एकस्यैकैवेति नियमाद्विरोधो जायते, विरोधे च सति परत्वानवकाशत्वाभ्यां व्यवस्था शक्यते वक्तुमिति, तत्रानवकाशाया उदाहरणमाह—'वक्ष्यति' इति । 'शिक्षा, भिक्षा' इति । 'गुरोश्च हलः' (३.३.१०३) इत्यकारप्रत्ययः । यद्यप्यत्र समावेशेऽपि न कश्चिद्दोषः, तथापि वस्तुतः समावेशो नास्तीत्येतावता इदमुदाहरणम् । सम्प्रति यत्र समावेशे सति दोषः, तद्दर्शयति—'अततक्षत्' इति । परस्यास्तूदाहरणम्—'धनुषा विध्यति' इति शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वमित्युभयप्रसङ्गे परत्वात् करणसंज्ञाऽपादानसंज्ञां बाधते, तथा 'कांस्यपात्र्यां भुङ्क्ते' इत्यधिकरणसंज्ञा, धनुर्विध्यतीति कर्तृसंज्ञा । उक्तं च—'अपादानमुत्तराणि' इति । कथं 'गार्ग्यो धानुष्कः' इति अनवकाशाभ्यां भपदसंज्ञाभ्यामङ्गसंज्ञाया धातुप्रत्ययेषु सावकाशाया बाधः प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयम् 'सुपि च' (७.३.१०२), 'बहुवचने झल्येत्' (७.३.१०३), 'तद्धितेष्वचामादेः' (७.२.११७), इति स्वादिषु तद्धितेषु चाङ्गस्य सतः कार्यं शास्ति, तज् ज्ञापयति—[7]समाविशत्यङ्गसंज्ञा भपदसंज्ञाभ्यामिति । द्वये हि स्वादयः—यजादयो हलादयश्च, तत्र यजादिषु भसंज्ञा, हलादिषु पदसंज्ञेति अङ्गस्य यतः कार्यविधानमनुपपन्नं स्यात् । गुरुलघुसंज्ञे वर्णमात्रे विधीयेते, नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः, तद्यथा—'वात्सीबन्धुः' इति । 'नदी बन्धुनि' (६.२.१०९) इति पूर्वपदान्तोदात्तत्वं 'वात्सीबन्धो' इति । 'गुरोरनृतः' (८.२.८६) इति प्लुतश्च भवति । विश्च ना च विनौ, 'द्वन्द्वे घि' (२.२.३२) इति पूर्वनिपातः, विन्नोर्भावो वैन्नम् 'इगन्ताच्च च लघुपूर्वात्' (५.१.१३१) इत्यण्, विनरावाचष्टे इति विनयति, [8]प्रविनय्य गतः 'ल्यपि लघुपूर्वात्' (६.४.५६) इत्ययादेशो भवति ।

---

1. कडारादिति. 2. सम्भाव्येत 3. भवतीत्येतावति. 4. यथा—नैवारश्चरुनिर्वपेत् इत्यादि 5. नैवारः इति मुद्रितः पाठः, 6. अष्टाश्रिर्यूपः 7. समाविशत्यसञ्ज्ञा 8. प्रविनय्यागतः

भाष्ये त्विष्टविषये समावेशो न्यासान्तरेण साधितः 'प्राक्कडारात् परं कार्यम्' इति। तत्रायमर्थः—प्राक्कडारात् संज्ञाख्यं कार्यं परं भवति इति [1]संज्ञाप्रकरणात् संज्ञैवात्र कार्यमित्युच्यते, परा संज्ञेत्येव तु नोक्तम्, 'विप्रतिषेधे वा' इति वक्ष्यति, तत्र परं कार्यमित्यनुवृत्तिर्यथा स्यादिति तत्र यस्याः संज्ञायाः परस्याः पूर्वयाऽनवकाशया बाधः प्राप्तः, मा परा भवतीति विधिरूपेणास्य प्रवृत्तिः। नन्वनवकाशयापि पूर्वया नैव परस्या बाधः प्राप्नोति, विरोधाभावात्, फलैक्याभावाच्च, संज्ञानामन्यत्र समावेशस्य दृष्टत्वात्; सत्यम्, एतदेव ज्ञापयति—'भवत्यत्र प्रकरणे संज्ञानां बाध्य-बाधकभावः' इति। तेन परयाऽनवकाशया पूर्वा बाध्यते, द्वयोश्च सावकाशयोर्विप्रतिषेधे परमिति परैव भवतीति। नियम-फलस्यापि सिद्धिरस्ति न्यासेऽङ्गसंज्ञा परा कार्या, पूर्वे [2]न भपदसञ्ज्ञे। एवं सर्वत्र यत्र समावेश इष्टोऽस्मिन पक्षे—'ऋतोरण्' (५.१.१०५) 'छन्दसि घस्' (५.१०६), ऋत्विय इति. अत्र 'सिति च' (१.४.१६) इति—पदसंज्ञाविषये परं कार्यमिति वचनात् भसञ्ज्ञापि स्यात्। ततश्च 'ओर्गुणः' (६.४.१४६) प्राप्नोति, सित्करण पदत्वे सति अवग्रहार्थं स्यात्। 'शेषो बहुव्रीहिः' (२.२.२३) इत्यत्र च शेषग्रहणं कर्तव्यम्, अन्यथा 'अन्यपदार्थे च संज्ञायाम्' (२.१.२१) इति अव्ययीभावविग्रहे परं कार्यमिति वचनात् बहुव्रीहिसंज्ञाऽपि स्यात्। एकसंज्ञाधिकारे त्वव्ययीभावसंज्ञैव बाधिकेति शेषग्रहण-मनर्थकम्। तदेवं शेषग्रहणमेव प्रमाणम्—न्यासान्तरमपि [3]सूत्रकारस्यैवाभिमतमिति॥

## २. विप्रतिषेधे परं कार्यम्।

'विप्रतिषेधः' इति। 'षिधु शास्त्रे', (धा. पा. ४८) [4]'षिधु गत्याम्' धा. पा. ४७) इति भौवादिकयोरन्यतरस्य रूपम्, तस्य हि 'सेधसिचसञ्जस्वञ्जाम्' (८.३.६५) इति षत्वमिति। उपसर्गवशाच्च विरोधार्थत्वम्। धातूनां ह्युपसर्गवशा-दन्यश्चार्थ उपजायते, तद्यथा—'प्रहारः, उपहारः, अनुहारः, संहारः' इति। 'षिधु संराद्धौ' (धा. पा. ११९२) इत्यस्य तु दैवादिकस्य षत्वं नास्ति, 'सेधसिच' (८.३.६५) इति शपा निर्देशात्। 'आदेशप्रत्यययोः' (८.३.५९) इति विहितस्य तु 'सात्पदाद्योः' (८.३.१११) इति निषेधः। ननु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या. प. १३८) इति वचनान्नायं सकारः पदादिः। षत्वविषये परिभाषेयं न भवति, यदि स्यात् 'गोष्ठः भूमिष्ठः' इत्यादौ सकारस्यापदादित्वात् 'आदेशप्रत्यययोः' (८.३.५९) इत्येव षत्वसिद्धेरम्बाम्बगवादिग्रहणमनर्थकं स्यात्।

परशब्दोऽयं त्रिलिङ्गः—[5]'परो देशः, परा सेना, परं कार्यम्' इति। अतोऽयमव्युत्पन्नः, पचाद्यजन्तो वा, न तु 'ऋदोरप्' (३.३.५७) इत्यबन्तः, तथा हि सति त्रिलिङ्गता न स्यात्।

कृल्ल्युट् नपुंसके भावे स्त्रियां क्तिन्नादयो यतः।
अतो घञाद्याः पुंस्येव यथा पाकश्चयो लवः॥

वासरूपविधिर्नास्ति, [6]'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति' (पु. प ५८) इति वचनात्। स्त्रियामपि नास्ति [7]'अस्त्रियाम्' इति प्रतिषेधात्। अतो [8]भावघञादयः पुंस्येव। कर्तृवर्जिते तु कारके पुंनपुंसकयोः, न कथञ्चित् स्त्रियाम्। 'परं कार्यम्' इति। परं यत्कार्यमेस्त्वादि तद्भवतीत्यर्थः, अथ वा—यत्परं तत्कार्यं भवति कर्तव्यं भवत त्यर्थः।

अन्ये त्वाहुः—'न क्रियापदत्वेन कार्यशब्दस्यान्वयः, नापि परं कार्यं भवति। न तु शास्त्रम्' इत्येवं शास्त्रा-दिव्यावृत्तये कार्यशब्दः, किं तर्हि ? यत्कार्यं कृत्यर्हं परं तद्भवतीति वचनव्यक्तिः। अर्हे कृत्यप्रत्ययः। किं सिद्धं भवति ? 'तुल्यबलविरोधः' इति सिद्धं भवति। न ह्यपवादादीनां सन्निधावुत्सर्गादीनां कृत्यर्हत्वम्, तैर्बाधितत्वादिति। 'विरोधो विप्रतिषेधः' इति। तद्वाचित्वेनैव लोके प्रसिद्धत्वात् विप्रतिषिद्धमित्युक्ते विरुद्धमिति गम्यते, तस्य विषयं दर्शयति—'यत्र' इत्यादि। यत्र विषये, वृक्षेभ्य इत्यादौ। 'अन्यार्थौ' जातिपदार्थपक्षे—अन्यत्र वृक्षाभ्याम्, वृक्षेष्वित्यादौ चरितार्थावित्यर्थः।

---

1. सञ्ज्ञाप्रकरणे 2. न नास्ति 3. एव नास्ति 4. षिधू 5. परो मे दर्शनीय 6. कृल इति मुद्रितः पाठः 7. अस्त्रियाम् इति नास्ति 8. भावे घञादयः

व्यक्तिपक्षे तु तद्विषययोः । विध्योरन्यत्र चरितार्थत्वासम्भवाद् अन्योऽर्थः [1]प्रयोजनमनयोस्तावन्यार्थौ । द्वौ प्रसङ्गौ दीर्घत्वेत्वादिके युगपत् प्राप्नुतः । स विप्रतिषेधः, [2]विप्रतिषेधस्य विषय इत्यर्थः, तुल्यबलयोर्विरोधो यस्मिन् स तयोः 'पर कार्यं भवति' इति । यत्कार्यं कृत्यर्हं परं तद्भवतीत्यर्थः ।

तुल्यबलविरोध इत्यस्य व्यावर्त्यं दर्शयति—'उत्सर्गापवाद' इत्यादि । तत्र 'श्याद्व्यध' (३.१.१४१) कारान्तलक्षणो णप्रत्यय उत्सर्गः, तं परमप्यनुपसर्गे सावकाशं बाधित्वाऽनवकाशत्वात् 'आतश्चोपसर्गे' (३.१.१३६) क एव भवति—'सुग्लः, सुम्लः' । रधेर्णिचि 'रधिजभोरचि' (७.१.६१) इति नुम् कृताकृतप्रसङ्गित्वान्नित्यः 'अत उपधायाः' (७.१.११६) इति वृद्धिरनित्या, नुमि कृतेऽकारस्यानुपधात्वादप्राप्तेः । तत्र पूर्वोऽपि नुमेव भवति—'रन्धयति' 'अशिश्रियत्, अदुद्रुवत्' [3]इत्यत्रान्तर्भूतचङपेक्षत्वात् इयङुवङावन्तरङ्गौ[4] बहिरङ्गं लघूपधगुणं परमपि बाधेते, अपवादीनां तु परस्परसम्प्रधारणायां नित्यादप्यन्तरङ्गम्, तस्मादपवादः ।

उक्तं च—

> परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव ।
> नित्यान्तरङ्गोपगमेऽन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान् ।। इति ।

[5]द्वयोरेकत्रोपनिपातः उपपत्तिः, परस्य नित्यस्य चेति । अत्र उपसमस्तमप्युपपत्तावित्येतदनुषज्यते । प्रतिपदं भवः प्रातिपदः अपवादः, अप्रवृत्तावित्याद्याकृतौ पदार्थे द्वयोरप्यन्यत्र कृतार्थत्वाद्विप्रतिषेधे सति परस्परप्रतिबन्धात् प्रवृत्तिरेव प्राप्नोति, तद्यथा—यो हि द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तु युगपत् प्रेषयतो नाना दिक्षु च कार्ये भवतस्तदा यद्यसाववविरोधार्थो भवति उभयोर्न करोति, तत्र विध्यर्थमिदं परं भवति तस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तदपि भवत्येव । यथा—भिन्धकीति, भिन्द् हि इति स्थिते परत्वात् पुनः प्रसङ्गविज्ञानादकज् भवति । व्यक्तौ तु पदार्थे सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवृत्तेस्तद्विषयोपनिपातिनोऽन्यत्र चरितार्थत्वाभावात् पर्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदम्—विप्रतिषेधे परमेव भवति, न पूर्वमिति । एतत्सूत्रारम्भात् पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते, तदुच्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (व्या. प. ४०) इति तद्यथा—'जुहुतात् त्वम्' इति परत्वात्तातङादेशे कृते स्थानिवद्भावेन प्राप्तं धित्वं न भवति । लक्ष्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागोऽवसेयः ।।

## ३. यू स्त्र्याख्यौ नदी ।

अत्र ह्रस्वयोरिदुतोर्ग्रहणे यद्यपि सवर्णग्रहणाद्दीर्घयोरपि संज्ञा लभ्यते, ह्रस्वयोरपि तु स्यात्, ततश्च 'हे कुमारि हे धेनो' अत्रापि प्राप्नोति, इह च [6]शकटिबन्धुः—'नदी बन्धुनि' (६.२.१०९) इति पूर्वपदान्तोदात्तत्वं प्रसज्यते, इह च 'बहुशकटिः बहुधेनुः' इति—'नद्यृतश्च' (५.४.१५३) इति नित्यः कप् स्यात् । नैष दोषः, 'ङिति ह्रस्वश्च' (१.४.६) इत्येतन्नियमार्थं भविष्यति—ङित्येव ह्रस्वौ नदीसञ्ज्ञौ भवतः, नान्यत्रेति । कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं, किम् ? नित्या नदीसञ्ज्ञा प्राप्नोति, सा विभाषा विधेया, अतो ह्रस्वयोरपि स्यादेवेति दोषं दृष्ट्वा दीर्घयोर्ग्रहणमिति दर्शयति—'ई च ऊ च यू' इति । समासविधौ सुबधिकारान्नैतत् द्वन्द्वस्य विग्रहवाक्यम् किं तर्हि अर्थप्रदर्शनम् । अत्र चानुकार्यानुकरणयोरभेदविवक्षया विभक्तिर्न कृता । क्वचित्तु विभक्त्यन्तमेव पठ्यते । ननु दीर्घग्रहणे 'यू' इति निर्देशो नोपपद्यते, 'दीर्घाज्जसि च' (६.१.१०५) इति पूर्वसवर्णप्रतिषेधात्, अत आह—'अविभक्तिको निर्देशः' इति । 'सुपां सुलुक्' (७.१.३९) इति लुप्तत्वात् 'वा छन्दसि' (३.४.८८) इति पूर्वसवर्णेनापहृतत्वाद्वा नात्र विभक्तिः श्रूयते इत्यविभक्तिकः ।

---

1. प्रयोजनं ययोरिति विग्रहः 2. विप्रतिषेधविषय .. 3. इत्यत्रान्तर्भूतचङ्यत्कृत्वात् 4. बहिर्भूतणिजपेक्षत्वात् इत्यधिकम् 5. द्वयोरेकत्र निपातः 6. शकटिबन्धुः

अन्ये तु नैवायं द्वन्द्वः, किन्तु प्रथक् पदे इत्युक्तमित्याहुः । अविभक्तिकत्वं चानुकार्यानुकरणयोरभेदविवक्षया । 'स्त्रियमाचक्षाते स्त्र्याख्यौ' इति । ननु [1]स्त्र्याख्या इति प्राप्नोति, अनुपसर्गे' इति को विधीयते, यस्तु 'आतश्चोपसर्गे' (३.१.१३६) इति कः, अयमकर्मोपपदे चरितार्थः, कर्मणि त्वणा बाध्यते । यथा वक्ष्यति—अकारादनुपपदात् कर्मोपपदे विप्रतिषेधेनेति तत्राह—'मूलविभुजादिषुदर्शनात्' इति । एवं च कृत्वा इदमपि सिद्धं भवति—

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ।। इति ।

इह ईदूतोरेवेयं संज्ञा विधीयेत ? तदन्तस्य वा ? आद्ये पक्षे कृत् स्त्रियां न स्यात्—'आध्यै', ब्राह्मण्यै, हे लक्ष्मि, हे यवागु इति, समुदायो ह्यत्र स्त्र्याख्यः, न त्वीदून्मात्रम् । ङ्चूङोरेव तु स्यात्, स्त्रियां विधानादन्वयव्यतिरेकाभ्यां च स्त्र्याख्यत्वादिति द्वितीयं पक्षमाश्रित्याह—'ईकारान्तम्' इत्यादि । वर्णग्रहणे सर्वत्र तदन्तविधिरिति तदन्तविधिलाभः, 'सुप्तिङन्तम्' (१.४.१४) इत्यत्र सुप्तिङोः प्रत्ययत्वादन्यत्रापि प्रत्ययग्रहणेषु तदन्तविधिर्निवारितः । कथं पुनर्ज्ञायते वर्णयोरेवेदं ग्रहणं न प्रत्यययोरिति, इयङुवङ्स्थानप्रतिषेधात् । यदि तदन्तस्य संज्ञा, कथं वक्ष्यति—'शीनद्योः परतः नद्यन्तादङ्गादुत्तरस्य' इति ? समुदायस्य नदीत्वात्तदवयवभूतावीदूतावपि तथोक्तौ ।

अन्ये त्वाहुः—वर्णयोरेव सञ्ज्ञा, समुदायधर्मस्य स्त्रीत्वस्यावयव आरोपात् । कृत् स्त्रियामपि भवति, अत्र च लिङ्गम्—इयङुवङ्स्थानप्रतिषेध इति, तेषां गुरुनदीसञ्ज्ञयोः समावेशो न स्यात्, एकविषयत्वात् ।

'यू इति किम्' इति । 'ङेराम्नद्याम्नीभ्यः' (७.३.११६) इत्यत्र पृथगाब्ग्रहणात् आपो न भविष्यतीति मन्यते । 'मात्रे दुहित्रे' इति । 'नद्यृतश्च' (५.४.१५३) इति ऋकारग्रहणमस्त्र्यर्थं स्यात् । 'बहुपितृकः' इत्यत्रेत्यज्ञापकम् ऋकारान्तानां सञ्ज्ञाभावस्य । 'ग्रामणीः खलपूः' इति । रूपोदाहरणमेतत् सम्बुद्ध्यन्तं वा द्रष्टव्यम् । अथाख्यग्रहणं किमर्थम्, यावता यू स्त्रियामित्येतावता स्त्र्यर्थवृत्तित्वं लभ्यते, तत्राह—'आख्याग्रहणम्' इति । आङ्पूर्वस्य 'ख्या' इत्यस्य धातोर्ग्रहणमित्यर्थः । क्वचित्तु आख्यग्रहणं किमिति प्रश्नः । 'शब्दार्थस्त्रीत्वे' इति आख्याग्रहणसामर्थ्यात् पदान्तरमनपेक्ष्य यौ स्वयमेव स्त्रियमाचक्षाते इत्याश्रीयते । इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति 'ङिति ह्रस्वश्च' (१.४.६) इति नदीसञ्ज्ञा भवत्येव । एवं पटुप्रभृतीनां गुणशब्दानामपि शब्दार्थ एव स्त्रीत्वम् । तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय [2]कृतीभवति ।

अन्ये त्वाहुः—'आख्याग्रहणसामर्थ्यान्नियम आश्रीयते'—स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तम् इति । ग्रामणीखलपूशब्दयोस्तु क्रियाशब्दत्वेन त्रिलिङ्गत्वान्न भवति । [3]इष्वशनिप्रभृतीनां तु स्त्रीविषयत्वाभावेऽपि 'ङिति ह्रस्वश्च' (१.४.६) इत्यत्र केवलस्य स्त्रीशब्दस्यैवानुवृत्तिर्नाख्याग्रहणस्येति भवतीति तेषामाङ्पूर्वस्य ध्यायतेः क्विपि सम्प्रसारणे—'आध्यै ब्राह्मण्यै' इत्यत्रापि न स्यात् । तस्मात् पूर्व एव प्रकार आश्रयणीयः ।

कथं तर्हि प्रत्युदाहरणम्—'ग्रामण्यै स्त्रियै' [4]इति, 'खलप्वै स्त्रियै' इति ? उच्यते, क्रियाशब्दत्वेऽप्येतयोः पुंसि मुख्या वृत्तिः, पुंसामेव ह्ययमुचितो धर्मो यदुत ग्रामनयनं नाम । एवं खलपवनमपि । आध्यानं तु स्त्रीपुंससाधारणमिति विशेषः ।

'प्रथमलिङ्गग्रहणं [5]च प्रयोजनं क्विब्लुप्समासाः', यः शब्दः [6]प्रथमस्त्रीत्वयुक्तद्रव्यमभिधाय पश्चाद्येन केनचित् प्रकारान्तरेण [7]लिङ्गान्तरसंयुक्तं द्रव्यान्तरमाह, तस्य तदानीमस्त्र्याख्यत्वावप्राप्ता सञ्ज्ञा विधीयते । क्विप्—

---

1. च स्त्र्याख्याविति 2. कृता भवति 3. पटुप्रभृतीनामिति 4. इति नास्ति 5. चाप्रयोजनं क्विप्समासाः 6. ०युक्तं द्रव्य० 7. ०युक्तं

कुमारीमिच्छन्ति कुमारीयति, कुमारीयतेः क्विप्, कुमारी ब्राह्मणः, तस्मै कुमार्यै ब्राह्मणाय। लुप्—'लुम्मनुष्ये' (५. ) इति लुप्, खरकुट्यै ब्राह्मणाय। यद्यप्यत्र युक्तवद्भावात् स्त्रीत्वमप्यस्ति, तथापि स्वाश्रयस्य पुंस्त्वस्यानिवृत्तेर्नायं स्त्रि वर्तते इत्याख्याग्रहणादप्राप्तिः। समास—अतितन्त्र्यै ब्राह्मणाय। अवयवस्त्रीविषयत्वात् सिद्धम्, समासे तावत् स्तन्त्रीशब्दः स्त्रियामेव वर्तते इति तदानीमेव सञ्ज्ञा, ततश्च वर्णसञ्ज्ञापक्षे समुदायस्य नद्यन्तत्वात् कार्यसिद्धिः, तु 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (पु प. ८५) इति वचनात् अतितन्त्रीबन्धुरित्यत्रापि 'नदी ब (६.२.१०९) इति स्वरः सिद्धः, नद्या पूर्वपदस्य विशेषणात् क्विब्लुपोरपि पूर्वं स्त्रियामेव वर्तित्वात्, पश्चादपि तत्प नार्थान्तरे वृत्तिः। तत्रार्थान्तरसंसर्गात् प्रागेवान्तरङ्गत्वात अवृत्ता सञ्ज्ञा सत्यपि पश्चाल्लिङ्गान्तरयोगे तस्य च बहिरङ्ग निवर्तिष्यते। यद्येवम्, [1]इयङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गः; [2]अवयवयोरियङुवङ्स्थानत्वात्। ह्यत्रपदस्य स्त्रीविषयत्वात् समुदायस्य सञ्ज्ञा भवति तथावयवस्येयुवस्थानत्वात् समुदायस्य यण्स्थानस्यापि प्रतिषेधप्र यथा—'धियौ, आध्यौ' इति? सिद्धं त्वङ्गरूपग्रहणात्, यस्याङ्गस्येयुवौ तत्प्रतिषेधादङ्गस्येयङुवङ्विधानसा दङ्गस्याक्षेपः, तेन यस्याङ्गस्येयङुवङौ निवर्त्तेते तस्य नदीसञ्ज्ञानिषेधः। 'आध्यै' इत्यत्र त्ववयवस्याङ्गत्वं न अङ्गस्य 'एरनेकाचः' (६.४.८२) इति यण्विधानात् इयङुवङ्स्थानता नास्तीति निषेधाभावः। एतदर्थमेव स्थानग्रहणम्—इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्यात, यदा त्वपवादेन बाधस्तदा मा भूदिति। 'ङिति ह्रस्वश्च' (१.४.६) [3]इत्यत्राप्यङ्गस्याक्षेपात् सोऽपि विधिरङ्गस्यैव स्त्रीत्वे भवति नावयवस्य—' अतिशकट्यै ब्राह्मणाय, श्रियं, अतिश्रियै ब्राह्मणाय' ॥

## ४. नेयङुवङ्स्थानावस्त्री।

'इयङुवङोः स्थानमनयोः' इति। वैयधिकरण्येऽपि गमकत्वाद्बहुव्रीहिः। अन्ये त्वधिकरणे ल्युटं विधाय षष्ठ्याः समासं कुर्वन्ति। अथ कथम् 'विमानना सुभ्रु कुतः पितुर्गृहे' (कु. सं. ५.४३) इति? प्रमाद एवायम्[4]। त्वाहुः—अनित्योऽयं [5]प्रतिषेधः, सकृद्बद्धत्वात्। तथा च परिभाषा—'सकृद्बद्धमनित्यं द्विर्बद्धं च सुबद्धम्' (ज्ञा. प. इति। अत्र च ज्ञापकं तदो वावचनमित्याहु ॥

## ५. वाऽऽमि।

संहितासाम्येऽपि षष्ठीबहुवचनस्य ग्रहणम्, न तु द्वितीयैकवचनस्य; नदीकार्याभावात्। नापि सप्तम्येकवच तस्य नदीसंज्ञोत्तरकालम् 'ङेराम्नद्याम्नीभ्यः' (७.३.११६) इति [6]विधानात्। न च 'आमि' इति विषयसप्तमी 'तस्मिन्निति निर्दिष्टे' (१.१.६६) इति वचनात्, तदाह—'आमि परतो वा नदीसञ्ज्ञौ न भवतः' इति। 'श्रीणाम्' नदीसञ्ज्ञापक्षे 'ह्रस्वनद्यापो नुट्' (७.१.५४) ॥

## ६. ङिति ह्रस्वश्च।

यद्यत्र ह्रस्वविशेषणार्थम् 'यू' इति नानुवर्त्येत, तदेहापि स्यात्—'मात्रे दुहित्रे' इति, तस्मात्तदिहानु[7] नन्वेवमपि विशेषणं न प्रकल्पते—यू ह्रस्वाविति, यदि यू, न ह्रस्वौ; अथ ह्रस्वौ, न यू; [8]यू ह्रस्वौ चेति विप्रतिषि आहायं यू ह्रस्वाविति, तत एवं विज्ञास्यामः—[9]य्वोः ह्रस्वाविति, कौ च य्वोः ह्रस्वौ सवर्णौ? तदाह—'ह्रस्व सम्बन्धी [10]यः स्त्र्याख्यः' इति। अत्रापि समुदायधर्मस्यावयव आरोपात ह्रस्वयोः स्त्र्याख्यत्वम्, तदन्तविशेषणं 'इयङुवङ्स्थानौ च यू' इति। नन्वेकं 'यू'ग्रहणमनुवर्तते, तच्च ह्रस्वविशेषण एवोपक्षीणम्, तत्कथं पुनः 'यू' इति

1. इयुवस्थानप्रतिषेधे 2. अवयवयोरियुव्स्थानत्वात् 3. इत्यपि 4. पाठः इत्यधिकम् 5. विशे
6. आम्विधानात् 7. वर्त्यते 8. ह्रस्वौ यू 9. य्वोर्यौ 10. यः नास्ति

उच्यते, चकारोऽत्र क्रियते, स संज्ञिनः समुच्चयार्थः । इयङुवङ्स्थानाविति प्रकृतं य्वोरेव च तत्स्थानत्वमित्यर्थात् 'यू' इति लभ्यते । स्वरितत्वादनुवृत्तं तु 'यू' इत्येतत् ह्रस्वविशेषणमिति न कश्चिद्दोषः ॥

## ७. शेषो घ्यसखि ।

'आ धृषाद्वा' (धा. पा. १८०५ इत्यस्यानन्तरम्) इत्यस्मिन्नधिकारे 'शिष असर्वोपयोगे, (धा. पा. १८१७) विपूर्वोऽतिशये' इति पठ्यते, तत्र णिचपक्ष कर्मणि 'एरच्' (३.३.५६), [1]अन्यथा घञ् । 'ह्रस्वः इति वर्तते' इति । अन्यथा ग्रामण्यादेरपि स्यात् [2]अस्त्र्याख्यत्वेन शेषत्वात्, यस्य नदीसंज्ञा न विहिता तस्य शेषत्वे, मात्रे[3] इत्यत्रापि स्यादिति मत्वा पृच्छति— कश्च' इति । इतरस्तु ह्रस्वविशेषणार्थं 'यू' [4]इत्यस्याननुवृत्तिमाश्रित्याह—'ह्रस्वम्' इति । ह्रस्वान्तमित्यर्थः । यदाह—'इवर्णोवर्णान्तात्' इति । क्वचित्तु 'ह्रस्वेवर्णोवर्णान्तम्' इति पाठः। ह्रस्वात्मको य इवर्ण उवर्णश्च तदन्तमित्यर्थः । ह्रस्वेन शेषस्य [5]विशेषणत्वात् तदन्तविधिः । एवं च 'असखि' इति सखिशब्दस्य प्रतिषेधो न तत्सम्बन्धिन इकारस्य, किं सिद्धं भवति ? इह शोभनः सखा अस्य सुसखिः, सुसखेरागच्छतीति घिसंज्ञा सिद्धा भवति । न ह्ययं समुदायः सखिशब्दः, 'तदन्तविधिश्च[6] [7]ग्रहणवता प्रातिपदिकेन प्रतिषिद्धः', (व्या. प. ८९) ह्रस्वमात्रस्य तु संज्ञाविधौ सखिशब्द[8]सम्बन्धिनः प्रतिषेधादिहापि न स्यात् । यदि तदन्ते निषेधो न भवति 'यस्येति च' (६.४.१४८) इत्यत्र इवर्णस्य [9]ई इति यदुदाहरणं सखिशब्दात् 'सख्यशिश्वीति भाषायाम्' (४.१.६२) इति ङीषि सखि ई इति स्थिते [10]इकारस्य लोपः । असति तु [11]लोपे [12]सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावात् सखीमतिक्रान्तोऽतिसखिः, अतिसखेरागच्छतीत्यत्रासखी[13]ति घिसञ्ज्ञाप्रतिषेधः स्यादिति [14]तन्नोपपद्यते । सत्यप्यन्तवद्भावेन सखिग्रहणेन ग्रहणे समुदायस्य सखिशब्दादन्यत्वात्। यदा खलु पुंल्लिङ्गेऽप्यति-[15]सखिरिति भवति, तदा कः प्रसङ्गो यदन्तवद्भावेन स्यात् ? एवं तर्हि तत्र सूत्रे इकारलोपस्य तद्धित एवोदाहरणम्, न स्वीति परतः । यत्तु तत्रोदाहरिष्यते सोऽनास्थावादो द्रष्टव्यः । शेषग्रहणं चिन्त्यप्रयोजनम् । एकसञ्ज्ञाधिकारादेव हि [16]स्त्र्याख्यस्य ङिति नदीसञ्ज्ञापक्षे घिसंज्ञा न भविष्यति ॥

## ८. पतिः समास एव ।

'सिद्धायाम्' इति । प्राप्तायामित्यर्थः, न पुनर्निष्पन्नायाम्, न हि निष्पन्नायां नियमेन निवृत्तिः शक्या वक्तुम् । 'पतिशब्दः समास एव घिसंज्ञो भवति' इति । किं पुनरिदं समासावयवस्य पतिशब्दस्य सञ्ज्ञा विधीयते ? आहोस्वित्त-दन्तसमासस्य ? यदि समासस्य ? पतिश्च गृहं च पतिगृहे—अत्र 'द्वन्द्वे घिः' (२.२.३२) इति पूर्वनिपातो न प्राप्नोति । अथ पतिशब्दस्य ? [17]प्रजापतिनेत्यादिकस्य घिसञ्ज्ञाकार्यं न प्राप्नोति[18] । अथ वा 'पतिः समास एव' इति नियमेन किं व्यावर्त्यते ? असमस्तः पतिशब्दः। [19]पतिशब्दस्य व्यावर्त्यमाना केन तदन्तस्य व्यावर्त्यते ? [20]पतिशब्दसम्बन्धी य ईकार-स्तदाश्रया सा घिसञ्ज्ञा भवति, यदि समास एवेत्यर्थो विवक्षितः ! तेन समासे पतिशब्दस्यानन्त्यस्यापि भवति—पतिश्च गृहश्च पतिगृहे, 'द्वन्द्वे घिः' (२.३.३२) इति पूर्वनिपातः । पतिशब्दान्तस्य समासस्यापि भवति—'प्रजापतिना' इति, अत एव वृत्तिकृता पतिशब्दानुरूपसूत्रार्थो दर्शितः । उदाहरणं तु तदन्तानुरूपं दर्शितम् । अथ कथम्—

नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ (पराशरस्मृतिः) इति ।

---

1. अन्यथा घञ् नास्ति 2. अस्त्रियाख्यत्वेन 3. दुहित्रे इत्यधिकम् 4. इत्यस्यानुवृत्ति 5. विशेषणात 6. इह इत्यधिकम् 7. ग्रहबलवता 8. सम्बद्धस्य 9. ई नास्ति 10. ईकारस्य 11. लोपः 12. सति तु लोपे सवर्णदीर्घस्य 13. त्यत्रापि 14. तत्रोपपद्यते 15. सखेरिति 16. स्त्रियाख्यस्य 17. प्रजापतिनेत्यादावङ्गस्य 18. अस्तु पतिशब्दस्याङ्गाधिकारे तस्यवदुत्तरपदस्य चेति अङ्गस्याधिकार्यं भविष्यति । इत्यधिकम् 19. तत्पति 20. 'पतिशब्दसम्बन्धी......तदन्तानुरूपं दर्शितम्' अयं भागो नास्ति ।

छन्दोवदृषयः कुर्वन्ति । अथ पूर्वत्रैव 'असखिपती' इति कस्मान्नोक्तम् ? उत्तरत्र पत्युरेव विकल्पो स्यात् । किञ्च 'असखिपती' इत्युच्यमाने पतिशब्दस्य समासेऽपि न स्यात्—पतिगृहे इति । तथा च सखिशब्दस्य समासावयवस्यापि घिसञ्ज्ञाया अभावात्—सखिगृहे, गृहसखायाविति चानियमः पूर्वनिपातस्य ॥

## ९. षष्ठीयुक्तश्छन्दसि वा ।

[1]'षष्ठ्यन्तेन शब्देन' इति । षष्ठ्या विभक्त्या युक्त इति तु न भवति । तथा हि—षष्ठ्यामित्येव ब्रूयात् युक्तग्रहणमनर्थकं स्यात् । 'षष्ठीग्रहणं किम्' इति । अत्र [2]केचित् योगस्यावर्जनीयत्वाद्युक्त इत्येव विशिष्टो योगः प्रत्येतव्य इति मन्यन्ते, वचनमन्तरेण विशेषो दुर्ज्ञान इत्युत्तरम् । अयमत्र योगविभागः कर्तव्यः 'षष्ठीयुक्तः छन्दसि', 'षष्ठीयुक्तः पतिशब्दः छन्दसि घिसञ्ज्ञो भवति, ततो 'वा', छन्दसीत्येव, यच्च यावच्च शास्त्रे कार्यं तत्सर्वं छन्दसि विकल्पेन भवति 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु. प. ३५) इत्यर्थः । उभयत्रविभाषा चेयम्, 'बहुलं छन्दसि' (२.४.३७) इत्यादिकस्त्वस्या एव प्रपञ्चः ॥

## १०. ह्रस्वं लघु ।

इह सर्पिष्ट्वमित्यत्र 'ह्रस्वात्तादौ तद्धिते' (८.३.१०१) इति षत्वार्थं ह्रस्वसञ्ज्ञया गुरुसञ्ज्ञायाः समावेश इष्यते । 'अततक्षत्' इत्यत्र तु सन्वद्भावनिवृत्त्यर्थं लघुसञ्ज्ञाया गुरुसञ्ज्ञया बाध इष्यते । अतो ह्रस्वप्रदेशेषु संयोगपरस्य मात्रिकस्य ग्रहणं यथा स्यात्, लघुप्रदेशेषु मा भूदिति यथाप्रदेशं सञ्ज्ञाद्वयं कर्तव्यम् ॥

## ११. संयोगे गुरु ।

## १२. दीर्घं च ।

## १३. यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।

'कर्ता' इति । लुट् । 'करिष्यति' इति । लृट् । '[3]अकरिष्यत्' इति । [4]लृङ् । 'ऋद्धनोः स्ये' (७.२.७०) इति । 'यस्मादिति संज्ञिनिर्देशार्थम्' इति । ननु तदादीत्यनेन सञ्ज्ञी निर्दिश्यते, न यस्मादित्यनेन तत्राह—'तदादीति सर्वनाम' इति । सति हि यस्मादित्यस्मिन् तदादीत्यनेन सञ्ज्ञा निर्देष्टुं शक्यते, नान्यथा । सति हि परामर्शनीये तदित्यनेन परामर्शो भवति, अन्यथा तदादीत्यसम्बद्धमेव स्यात् । 'नेर्विशः इत्युपसर्गाद्विधिरस्ति' इति । यद्यपि निरत्र धातुविशेषणम्—नेः परो यो विशिरिति, धातोस्तङ्विधानात् नियमविधिरपि [5]धातोरिव नोपसर्गात्, तथाप्युपसर्गस्यापि तत्रान्वयोऽस्तीति मत्वा एवमुक्तम् ।

'विधिग्रहणं किम्' इति । 'यस्मात् प्रत्यय' इत्युक्ते साकाङ्क्षत्वात् यस्माद्विधीयत इत्यध्याहरिष्यत इति प्रत्ययपरशब्दस्याप्यध्याहारः स्यादित्युत्तरम् । 'स्त्री इयती' इति । इदं परिमाणमस्याः 'किमिदंभ्यां वो घः' (५.२.४०) इयादेशः, 'इदंकिमोरीश्की' (६.३.९०), 'यस्येति च' (६.४.१४०), इति लोपः, 'उगितश्च' (४.१.६) इति ङीप्, स्त्रीशब्दात् सोर्हल्ङ्यादिलोपः । अत्र इयच्छब्दे परतोऽङ्गसञ्ज्ञा स्यात् भसञ्ज्ञा चेति तन्निमित्तो यस्येति लोपः प्रसज्येत । इयादेशे [6]यस्येति लोपः, [7]तस्याभीयस्याप्यसिद्धत्वं न भवति, प्राग्भादसिद्धत्वमिति केषाञ्चिदभ्युपगमात् । स्थानिवद्भावोऽपि नास्ति, पदान्तरनिरपेक्षे हीयतीशब्दे व्युत्पाद्यमाने स्त्रीशब्दोऽनादिष्टादचः पूर्वः ।

---

1. षष्ठ्यन्ते वचनशब्देन इति 2. केनचिद् 3. नास्ति 4. नास्ति 5. धातोरेव 6. ... इत्यधिकम्, 7. तस्याप्यसिद्धत्वे

ननु क्रियमाणे[1] विधिग्रहणे स्यादेव सञ्ज्ञा, अस्त्येव ह्यत्र स्त्रीशब्दात् विभक्तेः प्रत्ययस्य विधिरियत्प्रत्ययश्च परः, नैष दोषः, सति विधिग्रहणे प्रत्ययासत्तेर्यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परतस्तदाद्यङ्गमित्यर्थो भवति। इह च स्त्रीशब्दाद्विहितो लुप्तः, श्रूयमाणश्च न ततो विहितः, तदादिग्रहणमनर्थकम्, यत्तदोर्नित्यसम्बन्धादेव यस्मात् प्रत्ययो विधीयते तदङ्गमित्यर्थलाभात् अत आह—'तदादिवचनम्' इति। स्यादयो विकरणा.। आदिशब्देन शबादेर्ग्रहणम्। असति तदादिग्रहणे यच्छब्दवत्तच्छब्दस्याध्याहारात् यस्मात् प्रत्ययविधिस्तस्यैव सञ्ज्ञा स्यात् न तु तत आरभ्य आ तस्मात् प्रत्ययाद्यः सङ्घातः तस्य। ततश्च 'करिष्यावः, पचावः, दीव्यावः, तुदावः' इत्यादौ 'अतो दीर्घो यञि' (७.३.१०१) इति दीर्घो न स्यात्। स्याद्यन्तस्य समुदायस्यानङ्गत्वात्। ततश्च 'पापावः' इत्यादावेव स्यात्, 'पय गतौ' (धा. पा. ४७६) यङ्लुगन्तस्य 'लोपो व्योर्वलि' (६.१.६६) इति [2]लोपे रूपम्। 'कुण्डानि' इति। यदा नुम् परादिः, तदा 'सुपि च' (७.३.१०२) इति दीर्घः सिध्यति। 'दधीनि' इत्यादावनकारान्तत्वान्न सिध्यति, पूर्वान्तपक्षे[3] सामानीत्यादिवत् सिध्यति। यदा त्वभक्तपक्षः तदैतत्प्रयोजनम् तदादिग्रहणस्य, पूर्वान्तपक्षस्तु तत्र स्थित इत्यप्रयोजनमेतत्।

ननु च 'प्रातिपदिकान्तनुम्विभक्तिषु च' (८.४.११) इति नुम्ग्रहणं कुर्वतः सूत्रकारस्याभक्तो नुमित्यभिप्रायो लक्ष्यते, अन्यथा 'माषवापाणि' इत्यत्र प्रातिपदिकान्तत्वाद्विभक्तिनकारत्वाद्वा णत्वसिद्धेरनर्थकं तत् स्यात्। नैतत् सुष्ठूच्यते, तत्र हि समासप्रातिपदिकान्तो न गृह्यते, किं तर्हि ? पूर्वपदादित्यनुवृत्तेस्तदाक्षिप्तस्योत्तरपदप्रातिपदिकस्यान्तो गृह्यते, समुदायभक्तश्च नुम् उत्तरपदप्रातिपदिकान्तो न भवति। ततश्च यथा 'गर्गाणां भगिनी गर्गभगिनी' इत्यत्र णत्वं न भवति, तथा नुमोऽपि न स्यात्। न तर्हीदानीमिदं भवति—'गर्गभगिणी' इति ? भवति, यदैतद्वाक्यं भवति—गर्गाणां भगो गर्गभगः सोऽस्या अस्तीति। तदा ह्यनुत्तरपदस्थत्वात् पूर्वपदात् सञ्ज्ञायामेवेति नियमाभावः, तद्यथा—'मातृभोगाय हितो मातृभोगीणः' इति। एवमपि 'माषान् वप्तुं शीलमस्याः माषवापिणी'—अत्र न प्राप्नोति, ङीबन्तोत्तरपदस्यान्तो न तु नकारः। नकार एवात्रान्तः, कथम् ? 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या. प. १३८), अतः स्याद्यर्थं क्रियमाणं तदादिग्रहणं नुम्यपीष्टं साधयतीति मत्वा नुम्ग्रहणं कृतम्। यदि तदादीत्युच्यते कर्तेत्यादौ न प्राप्नोति, न ह्यत्र तदादि किञ्चिदस्ति, किं तर्हि ? तदेव, व्यपदेशिवद्भावाद्भविष्यति, वाक्यभेदाद्वा, यस्मात् प्रत्ययविधिस्तदङ्गम्, तदादि च। इह 'प्रकृत्यादि प्रत्ययेऽङ्गम्' इति इयता सिद्धे गुरुनिर्देश एव लिङ्गं वाक्यभेदस्य।

अथ कथं 'भिनत्ति, संचस्करतुः' इत्यत्र सनुम्कस्य ससुट्कस्य च समुदायस्याङ्गसञ्ज्ञा ? कथं च न स्यात् ? इह तस्य वा ग्रहणं भवति ? तदादेर्वा ? न चेदं [4]तन्नापि तदादि। इदमपि तदादि, कथम् ? नैवं विज्ञायते—स आदिरस्य तत्तदादीति। कथं तर्हि तस्यादिस्तदादिरस्येति[5] ? तथापि उष्ट्रमुखवदेकस्यादिशब्दस्य लोपः। एवं हि विज्ञायमाने 'भिनत्ति' इत्यत्र यस्मात् प्रत्ययविधिर्भिदेस्तस्य आदिर्भकारः, स आदिः सनन्तस्य समुदायस्येति सिध्यति। एवं 'सञ्चस्करतुः' इत्यत्रापि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' (व्या. प. २१) इति चात्रोभयत्र सञ्ज्ञासिद्धिः। अथात्र श्नमः पूर्वस्य भिशब्दस्याङ्गसञ्ज्ञा कस्मान्न भवति ? भवतु को दोषः ? गुणस्तावत् 'सार्वधातुकमपित्' (१.२.४) इति ङित्त्वादेव न भविष्यति। इह 'अनक्ति, भनक्ति'—'अतो दीर्घो यञि' (७.३.१०१) इति दीर्घः प्राप्नोति, तिङीति तत्र वर्तते। अथ वा—'यस्मात् प्रत्ययविधिः' इति वचनाद्यस्मिन् प्रत्यये विधीयमाने यत् पञ्चम्या निर्दिष्टं तत्र तदेवाङ्गम्, श्नमि च विधीयमाने ये [6]पञ्चम्या निर्दिष्टा रुधिरादयो न ते तत्र परतः, [7]येऽत्र श्नमि परतोऽतिप्रभृतयो न ते पञ्चम्या निर्दिष्टा इति सञ्ज्ञाभावः।

'इयचर्थम्' इति। 'चतुर्थी तदर्थ' (२.१.३६) इति समासः। अस्ति ह्यत्र चतुर्थ्येकवचनस्य विधिरित्यसति पुनः प्रत्ययग्रहणेऽङ्गशब्दस्य सम्बन्धिशब्दत्वाभावात् वस्तुतोऽङ्गमात्राश्रय इयङ् स्यात्। सति तु सप्तमीनिर्दिष्टप्रत्यय-

1. अपि इत्यधिकम् 2. यलोपे 3. तु इत्यधिकम् 4. तत्रापि, 5. तदादि इत्यधिकम्. 6. पञ्चमी निर्दिष्टाः, 7. ये च तत्र परतोऽभिप्रभृतयो,

ग्रहणेऽङ्गशब्दः सम्बन्धिशब्दो भवति, ततश्चाङ्गस्येयङ् भवति। अचीत्युक्ते यदपेक्षं यदङ्गम्, तत्र तस्याजादाविति वि... दयंशब्दे परत इयङुवङौ न भविष्यतः।

किं पुनरङ्गसञ्ज्ञायाः प्रयोजनम्? 'अङ्गस्य' (६.४.१) इत्यधिकारः। नैतदस्ति, यदेतदङ्गस्येति प्रत्यय इति वक्ष्यामीति। एवमपि 'प्राकरोत्, प्रेहिष्ट'—सोपसर्गस्याडाटौ प्राप्नुतः, नैष दोषः, 'प्रत्ययग्रहणे यस्मात् विहितस्तदादेर्ग्रहणं भवति' (भो.प.७)[1] इति। क्व पुनरेषा परिभाषा? नन्वेषाप्यत्रैव योगविभागेन सिद्धा, 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इत्येतावानेको योगः। प्रत्यये गृह्यमाणे यस्मात् तस्य विधिस्तदादि गृह्यत इत्यर्थः, तेन 'ञित्यादि' (६.१.१९७) इत्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणम्, तेन 'देवदत्तो गार्ग्यः' इति सङ्घातस्य ञित्स्वरो न भवति। 'सुप आत्मनः क्यच्' (३.१.७) [2]इत्यत्र [3]तु सुपा कर्मणो विशेषणात्तदन्तविधौ सिद्धे महान्तं पुत्रमिच्छतीत्यतिप्रसङ्गे तदादिनियमेन व्युदासः। यदि तदादिनियमः क्रियते स्त्रीप्रत्ययेऽपि स्यात्, ततः [4]ष्यङन्तस्य पूर्वपदस्योच्यमानं सम्प्रसारणं 'परमकारीषगन्धीपुत्रः' इत्यत्र न स्यात्—यत्पूर्वपदं न तत् ष्यङन्तम्, यत् ष्यङन्तं न तत् पूर्वपदम्, नैष दोषः, 'नेयङुवङ्स्थानावस्त्री' (१.४.४) इत्यतः 'अस्त्री' इत्यनुवर्तते, तच्च स्वरूपपदार्थकत्वेन [5]प्रकृतमपीहार्थपदार्थकं सम्पद्यते, तदयमर्थो भवति—प्रत्ययग्रहणे तदादि गृह्यते स्त्री चेन्नाभिधीयते। स्त्रीप्रत्यये तदादिनियमो नास्तीत्यर्थः। यद्येवम्, 'परमकारीषगन्ध्यापुत्रः'—अत्रापि प्राप्नोति, प्रधानं या स्त्री तस्यामेव तदादिनियमप्रतिषेधः, अप्रधानस्त्रियां तु तदादिनियमो भवत्येव। तेन [6]यावानंशः स्त्रियं प्राधान्येन प्रतिपादयति, तावतः स्त्रीप्रत्ययान्तस्य ग्रहणं भवति। तद्ग्रहणे तु गतिकारकपूर्वस्यापि ग्रहणं भवतीति 'गतिरनन्तरः' (६.२.४९) इत्यनन्तरग्रहणं ज्ञापयिष्यते॥

## १४. सुप्तिङन्तं पदम्।

'सुप्तिङिति प्रत्याहारग्रहणम्' इति। सुबिति सप्तमीबहुवचनस्य ग्रहणं न भवति, यदि स्यात्, ङिसम्बुद्ध्योः पदत्वाभावादेव नलोपस्याप्रसङ्गात् 'न ङिसम्बुद्ध्योः' (८.२.८) इति प्रतिषेधोऽनर्थकः स्यादिति भावः। सप्तमीबहुवचनस्य च पकारेण प्रत्याहारो न कपः पकारेण, [7]तस्यानन्यार्थत्वात्। न च स्वरार्थः पकारः, यदा ह्यत्र सुप्पकारेण प्रत्याहारस्तदा स्वरविधावपि तथैवेति सुप्त्वादेव स्वरसिद्धेः पित्त्वमनर्थकमेव स्यात्। यदि च सुब्ग्रहणे कपः पकारेण प्रत्याहारोऽभिमतः स्यात् 'सुप्यसर्वनामस्थाने' इत्येव ब्रूयात्, 'स्वादिषु' इति गुरुनिर्देशोऽनर्थकः स्यात्। 'ब्राह्मणाः' इति। पदत्वाद्रुत्वविसर्जनीयौ।

ननु यस्मात् प्रत्ययविधिस्तदादीत्य[8]नुवृत्तस्य सुप्तिङ्भ्यां विशेषणादेव तदन्तस्य ग्रहणं सिद्धम्, नार्थोऽन्तग्रहणेन, तत्राह—'पदसञ्ज्ञायाम्' इति। इहासत्यन्तग्रहणे सुप्तिङामेव संज्ञा स्यात्, ततश्चाग्निष्वित्यादौ 'सात्पदाद्योः' (८.३.१११) इति षत्वनिषेधः स्यादित्याशङ्क्य क्रियमाणमन्तग्रहणमुक्तरयार्थस्य ज्ञापकं सम्पद्यते। 'गौरीब्राह्मणितरा' इति। तरबन्तस्य घसञ्ज्ञायां सत्यां तत्रोत्तरपदे परतो गौरीशब्दस्य पुंवद्भावं बाधित्वा परत्वात् ह्रस्वत्वं स्यात्। तरपि तु परतो ब्राह्मणीशब्दस्य न[9] स्यात्, ततश्च गौरिब्राह्मणीतरेति स्यात्, गौरीब्राह्मणितरेति चेष्यते। वृत्तौ तु समासप्रदर्शनपरं [10]वाक्यमुपात्तम्, न त्वेतत्कार्योदाहरणम्। गौरब्राह्मणितरेति समासे रूपम्॥

## १५. नः क्ये।

'क्ये इति क्यच्क्यङ्क्यषां ग्रहणम्' इति। 'सञ्ज्ञायां समज' (३.३.९९) इत्यस्य तु क्यपो ग्रहणं न भवति, प्रयोजनाभावात्। न तावन्मन्येत्यत्र नलोपः प्रयोजनम्, सत्यपि पदत्वेऽप्रातिपदिकत्वात्, सुबन्तमित्यनुवृत्तेर्वा क्यपि विधानमेतन्न भवति।

1. इति नास्ति 2. इत्यत्रापि अनेन तदादिनियमः। तत्र 3. तु नास्ति, 4. ष्यङः 5. अपि नास्ति 6. यावान् शब्दः 7. तस्य नास्ति। 8. नुवृत्तसुप्तिङ्भ्यां 9. तत् इत्यधिकम् 10. वाक्यमुक्तम्।

ननु क्यजादयः सर्वे सुबन्ताद्विधीयन्त इति प्रत्ययलक्षणेन सिद्धं पदत्वम्, नार्थं एतेन तत्राह—'सिद्धे सति' इति। 'नान्तमेव' इति। क्य एव नान्तमित्येवं तु विपरीतनियमो न भवति, न ङिसम्बुद्ध्योः' (८.२.८) इति निषेधात्। 'वाच्यति' इति। अत्र पदत्वाभावात् कुत्वजश्त्वे न भवतः। ये तु गोसमानाक्षरनान्तादेव क्यज् भवति, नान्येभ्य इत्याहुः, तेषां क्यङ्क्यषोरेव नियमस्य व्यावर्त्यं प्रदर्शनीयम्—तपस्यतीत्यादौ॥

## १६. सिति च।

'भवदीयः' इति। पदत्वाज्जश्त्वम्। 'ऊर्णायुः' इति पदसञ्ज्ञाया निरस्तत्वात् यस्येति लोपाभावः। एवम् 'ऋत्वियः' इति। 'ओर्गुणः' (६.४.१४६) न भवति, चकारोऽनुक्तसमुच्चयार्थः तेन भुवद्धारयतोर्मतोश्छन्दसि 'तसौ मत्वर्थे' (१.४.१९) इति भसञ्ज्ञां बाधित्वा पदसञ्ज्ञा भवति, [1]तेन भुवद्वद्भ्यः, [2]धारयद्वद्भ्यः॥

## १७. स्वादिष्वसर्वनामस्थाने।

'स्वादिष्विति सुशब्दादेकवचनात्' इति। सप्तमीबहुवचनादारभ्य ग्रहणं न भवति; 'असर्वनामस्थाने' इति निषेधात्, यदि हि राजश्वित इत्यादौ सर्वनामस्थाने 'सुबन्तम्' इति प्राप्तायाः सञ्ज्ञायाः निषेधोऽभीष्टः स्यात्, तत्रैव 'असर्वनामस्थाने' इति ब्रूयात्। अथ [3]'राजवान्' इत्यादावन्तर्वर्तिनिषेध इति चेत्, न, लुमता लुप्ते प्रत्ययलक्षणाभावात् 'तसौ मत्वर्थे' (१.४.१९) इति पदसञ्ज्ञाबाधनाय भसञ्ज्ञाविधानाच्च। 'आ कपः' इति। यदि पुनः सप्तमीबहुवचनाद्यन्ता एकविंशतिः प्रत्यया गृह्येरन्, तदा सुब्ग्रहणमेव कुर्यात्, अनुवर्तयेद्वा 'असर्वनामस्थाने' इत्यनेन सम्बन्धात् सप्तम्या विपरिणामात् सिद्धम्। किमर्थं पुनराकपः प्रत्यया गृह्यन्ते, यावता सुबन्तात्तद्धितोत्पत्तिः समर्थाधिकारात्, स्वार्थिका अपि सुबन्तादेव, 'घकालतनेषु' (६.३.१७) इति लिङ्गात्, ततश्च 'राजत्वं राजता' इत्यादावन्तर्वर्तिन्या विभक्त्या सुबन्तं पदमित्येव सिद्धम्? सत्यम्; भसञ्ज्ञार्थं स्वा कपः प्रत्यया गृहीताः। 'राजत्वम्' इत्यादि। सुबन्तत्वेऽपि परत्वादनेन पदत्वं युक्तमित्येषामुपन्यासः।

'राजानौ, राजानः' इति। अत्रापदत्वान्नलोपाभावः, राजेत्यत्र तु प्रत्ययलक्षणेन निषेधो न भवति 'न ङिसम्बुद्ध्योः' (८.२.८) इति लिङ्गान्नतल्लिङ्गमुपपद्यते। हे वर्मन्निति नपुंसके लुमता लुप्ते सर्वनामस्थाने निषेधाभावादस्त्येव पदत्वमिति तत्रार्थवान् प्रतिषेधः। एवं तर्हि नायं प्रसज्यप्रतिषेधः—[4]सर्वनामस्थाने नेति, किं तर्हि? पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति। सर्वनामस्थाने न विधिर्न प्रतिषेधः, यदि केनचित्प्राप्नोति, भवत्येव, पूर्वेण[5] प्राप्नोति, अथ वा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते। कुतः पुनरेतत्? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या. प. १९)। अथ वा—'सर्वनामस्थाने' इत्यत्र यचीत्यपकृष्य सम्बध्यते, तेन यजादौ पदसञ्ज्ञा निषिध्यते, न हलादाविति राजेत्यादौ [6]स्वादौ [7]स्वादिष्विति वा सुबन्त[8]मिति वा भवत्येव। अथ कस्माच्छसादिष्विति नोच्यते, एवं हि 'असर्वनामस्थाने' इति न वक्तव्यं भवति? उत्तरार्थं सुट्यपि नपुंसके भसञ्ज्ञा यथा स्यात्, [9]साम्नी इत्यत्र मा भूत्। भसञ्ज्ञा 'विभाषा ङिश्योः' (६.४.१३६) इति वचनसामर्थ्यादिवाभस्याप्यल्लोपो भविष्यति। इह तर्हि 'सुपदी ब्राह्मणकुले' तत्रायमप्यर्थो यस्येत्यादौ 'श्यां प्रतिषेधः' [10]इति न वक्तव्यं भवति, अभत्वादेव सिद्धम्। इह तर्हि 'सुपदी ब्राह्मणकुले' इति [11]पद्भावो न स्यादभत्वात्, इह च 'सामानि पश्य' इति भत्वादल्लोपः स्यादिति यथान्यासमेवास्तु॥

## १८. यचि भम्।

'यकारादौ' इत्यादि। 'यस्मिन्विधिस्तदादावल्ग्रहणे' (व्या. प. १३७) इति तदादिविधिः। 'गार्ग्यः' इत्यादौ भत्वाद्यस्येति लोपः। 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति। द्वे अप्येते उपसङ्ख्याने छन्दोविषये इत्याहुः।

---

1. नास्ति 2. धारयवद्भ्यः 3. राजन्वान्। 4. सर्वनामस्थानं 5. च इत्यधिकम्। 6. नास्ति 7. स्वादाविति 8. पदम् इत्यधिकम् 9. नास्ति 10. नास्ति 11. पदभावो।

'नभ इव' इति। तृतीयासमर्थाद्वतेर्विधानात् तुल्यार्थोपदर्शनमेतत्. नभसा तुल्यं वर्तत इति विग्रहः। पदनिबन्धनकार्य-निवृत्त्यर्थमेव चैषां भसञ्ज्ञा विधीयते, न तु भत्वनिमित्तं कार्यं यथा स्यादिति, असम्भवात्।

'नभस्वत्, अङ्गिरस्वत्' इति। अत्रापदत्वाद्रुत्वाभावो मनुष्वदित्यत्र पदत्वे रुत्वं स्यात्, न तु पत्वं अपदान्तस्येति वचनात्।

'वृषण्वसुः, वृषणश्वः' इति। पदत्वे सति 'पदान्तस्य' इति प्रतिषेधाण्णत्वं न स्यात्, नलोपश्च स्यात्, भत्वेऽप्यल्लोपो न भवति, अनङ्गत्वात्॥

## १९. तसौ मत्वर्थे।

मत्वर्थीयेनाक्षिप्तायाः प्रकृतेस्तकारसकाराभ्यां विशेषणात्तदन्तविधिरित्याह—[1] तकारसकारान्तम्' इति 'मत्वर्थे प्रत्यये' इति। व्यधिकरणे सप्तम्यौ, मतोरर्थो मत्वर्थस्तत्र यः प्रत्ययो वर्तते तस्मिन्नित्यर्थः। अथ वा समाना-धिकरणे मतुशब्देन साहचर्यात्तदर्थो लक्ष्यते—मतुरर्थो यस्य तस्मिन्नित्यर्थः। 'उदश्वित्वान्' इति। भत्वात् पदत्वाभावाज्[2]जश्त्वं न भवति, 'झयः' (५.४.१११) इति वत्वम्। उदकेन[3] श्वयति वर्धते उदश्वित्, क्विपि 'उदश्वितोऽन्यतरस्याम्' (४.२.१९) इति निपातनात् सम्प्रसारणाभावः, संज्ञायामुद्भावः। 'पयस्वी' इति। 'अस्मायामेधास्रजो विनिः' (५.३.१२१) भत्वाद्रुत्वाभावः।

अथार्थग्रहणं किमर्थम्? न 'मतौ' [4]इत्युच्यते, स्वादिष्विति वर्तते. व्यधिकरणे सप्तम्यौ, मतौ ये स्वादयः। कथं पुनः शब्दे नाम शब्दो वर्ततेऽसम्भवात्, अर्थे वृत्तिर्विज्ञास्यते? यद्येवं लभ्येत, कृतं स्यात्, तत्तु न लभ्यम्, न हि सामानाधिकरण्ये सम्भवति वैयधिकरण्यं शक्यं विज्ञातुम्, ततश्च मतावेव[5] स्यात्—'पयस्वान्, यशस्वान्' इति। इह तु न स्यात्—'पयस्वी, यशस्वी' इति'अतोऽर्थग्रहणं कर्तव्यम्। यद्यर्थग्रहणं क्रियते, मतुपि न प्राप्नोति, तस्यार्थविशेषणत्वात्; सत्यम, अर्थविशेषणं मतुब्, विशेष्याकारोऽपि तत्रास्ति। अस्यास्त्यस्मिन्निति च मतुपोऽर्थ, स च विन्यादीनामिव मतुपोऽ-प्यविशिष्टः, यथा—'देवदत्तशालायामासीना ब्राह्मणा आनीयन्ताम्'इत्युक्ते विशेषणभूतोऽपि देवदत्तः सति ब्राह्मण्ये आनीयते। यत्र उपलक्ष्याकारस्यासम्भवः तत्रैवोपलक्षणस्य कार्यायोगः, तद्यथा—'चित्रगुरानीयताम्' इति, न हि चित्र-गवीणां चित्रा गावः सन्ति॥

## २०. अयस्मयादीनि छन्दसि।

यदि सञ्ज्ञा विधीयेत[6] आनन्तर्याद् भसञ्ज्ञाविधानद्वारेणैव निपातनं स्यात्, पदसञ्ज्ञा न स्यात्, भपदसञ्ज्ञयोः समावेशो न स्यात्। तस्मात् साधुत्वमेव युक्तं विधातुमिति मत्वाह—'अयस्मयादीनि' इत्यादि। साधुत्वे प्रकारविशेषं दर्शयति। 'भपदसञ्ज्ञाऽधिकारे' इत्यादि। द्वारम् = उपायः। 'अयस्मयम्' इति। अयसो विकारः 'द्व्यचश्छन्दसि' (४.३.१५०) इति मयट्॥

## २१. बहुषु बहुवचनम्।

'बहुवचनं विहितम्' इति। ततश्च तस्य विधेयविभक्तिनिर्दिष्टस्यापि प्राप्तत्वादनुवाद्यत्वम्, न तु विधेयत्व-मिति भावः। बहुत्वसङ्ख्यानुभूतविभक्तिर्निर्दिष्टाऽप्यप्राप्तत्वाद्विधीयत इत्याह—'तस्यानेन' इति। इदं चापरमेव ग्रन्थेन दर्शितम्—स्वादिविधिवाक्येन हि भिन्नमेतद्वाक्यम्। तत्रापि विध्यर्थं न तु नियमार्थमिति। यदाह—'बहुवचन

1. तकरान्तमिति 2. तत्वं 3. श्वयेन इत्यधिकम् 4. उच्येत 5. स्वादौ इत्यधिकम् 6. आनन्तर्याद् भसञ्ज्ञा विधीयेत इत्यधिकम्

विहितम्' इति । बहुत्वसङ्ख्या वाच्यत्वेन विधीयते' इति च । यदि पुनरेकवाक्यतया विशिष्टविधिः स्यात्, इतरेतराश्रयं प्राप्नोति—विहितानां जसादीनां [1]बहुवचनसंज्ञा, [2]सञ्ज्ञया च विधानमिति । किं चाव्ययेभ्यो निःसङ्ख्येभ्यः स्वादयो न स्युरतो भिन्नवाक्यत्वमेव युक्तम्, तत्रापि [3]विध्यर्थत्वमेव ।

इह केचिन्मन्यन्ते —'स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः [4]पञ्चकः प्रातिपदिकार्थः' इति । 'आदितस्त्रिकः' इत्यन्ये । तत्र शब्दप्रवृत्तिनिमित्तं स्वार्थः, स चानेकप्रकारः—'स्वरूपं जातिर्गुणः क्रिया द्रव्यं सम्बन्धश्च'इति, 'डित्थो गौः शुक्लः पाचकः यष्टिः पुरुषः दण्डी' इति । जात्यादिशब्देष्वपि जात्यादिमात्रनिष्ठेषु स्वरूपमेव प्रवृत्तिनिमित्तम् । अभिधानाभिधेययोरभेदाध्यासात् शब्दरूपानुरक्तो[5]ऽर्थोऽभिधीयते । अस्य गौरिति नाम, अयं गौरिति च प्रतीतिविशेषो भिद्यते । [6]अत्र हेतुर्वैयधिकरण्यम्, सामानाधिकरण्यं च । तत्र जात्यादिवत् स्वरूपमपि शब्दत एव [7]प्रतिपन्नमप्यर्थस्य विशेषणं मन्यन्ते । उक्तं च—

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥ (वा. प. १.५५) इति ।

तेन स्वरूपमपि स्वार्थो युज्यते ।
स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते ॥ (वा. प. पृ. ४१०)

पर्यवसानभूमिरित्यर्थः । तच्चानेकप्रकारम्—जातिर्गुणः क्रिया द्रव्यं स्वरूपमिति, गौः, शुक्लः, पाकः, डित्थः, 'तूष्णीमि भूवः' (३.४.६३) इति । लिङ्गं स्त्रीत्वादि । सङ्ख्या एकत्वादि, [8]कर्मादयो वक्ष्यमाणाः कारकविशेषाः ।

तदिह द्वितीयं दर्शनं वृत्तिकारेणाश्रितम् । अन्वयव्यतिरेकाभ्यां हि शब्दार्थनिश्चयः, यस्य शब्दस्यान्वये योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थः । 'वृक्षः, वृक्षौ, वृक्षाः' इत्यादौ च तत्तद्वचनान्वये सा सा सङ्ख्या प्रतीयते, व्यतिरेके च व्यतिरिच्यते सत्यपि प्रकृत्यन्वये, तेन मन्यामहे—'वचनार्थः सङ्ख्या' इति । तथा 'वृक्षं, वृक्षेण, वृक्षाय' इत्यादौ तत्तत्विकान्वये स स कर्मादिः प्रतीयते, व्यतिरेके च व्यतिरिच्यते, तेन मन्यामहे—त्रिकार्थः कर्मादिरिति । यद्यपि 'पयो, दधि, मधु'इत्यादावन्तरेण वचनमन्तरेण च त्रिकं [9]स सोऽर्थः प्रतीयते, नैतावता विभक्त्यर्थत्वं हीयते, न हि गर्गा इत्यत्रान्तरेणाऽपि [10]यञमपत्यार्थः प्रतीयते इति गार्ग्य इत्यत्रापि प्रकृतेरिवापत्यमर्थ इति युक्तं वक्तुम् । 'पचति पचतः पचन्ति'इत्यादौ वचनान्वये संख्यान्वयाद् व्यतिरेके च व्यतिरेकात् वचनार्थ एव संख्या, न धात्वर्थः । 'अबिभर्भवान्'इत्यादौ यद्यप्यन्तरेणापि तिङं कर्ता सङ्ख्या च प्रतीयते, तथापि नैतावता सर्वत्र प्रकृत्यर्थत्वं युक्तम् । न हि भित्, छिदित्यादौ अन्तरेणापि प्रत्ययं कर्ता प्रतीयते इति भेत्तेत्यादावपि कर्ता प्रकृत्यर्थो भवति । तदेवं त्रिक एव प्रातिपदिकार्थः ।

धातोश्च क्रियैव वाच्येत्यसत्यस्मिन्ननिर्दिष्टार्थत्वात् स्वार्थे त्रिक एव जसादिबहुवचनं स्यात्', न [11]बहुत्व [12]इति [13]बहुत्वसङ्ख्यावाच्यत्वेन विधीयते । सूत्रेऽप्यन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशः, बहुत्व इत्यर्थः । आश्रयगतस्य बहुत्वस्य गुणे आरोपात् बहुष्विति बहुवचनम् । आरोपस्य प्रयोजनं नानाऽऽधारस्य संख्यारूपस्य बहुत्वस्य ग्रहणं यथा स्यात् । तेनैकाश्रयं वैपुल्यं बहुवचनस्य वाच्यं न भवति—'बहुरोदनः' इति ।

केचिन्मन्यन्ते—संख्याकर्मादयश्च परस्परमनन्विताः, प्रकृत्यर्थेन चान्विता विभक्तिभिरभिधीयन्ते—'वृक्षान् पश्य', कोऽर्थः ? बहवो वृक्षाः कर्मेति, न तु कर्मीभूता वृक्षा बहव इति, नापि बहवः कर्मेति । एवमेकवचनेऽपि 'पशुना यजेत' इति पशुरेकः पशुः करणमित्यर्थः, न तु करणीभूतः पशुरेक इति, नाप्येकः पशुः करणमिति करणत्वैकत्वयोर्युगपदभिधाना-

1. ०सञ्ज्ञया 2. नास्ति 3. विध्यर्थमेव 4. नास्ति 2. अर्थो नास्ति 6. न इत्यधिकम् 7. अपि नास्ति 8. कर्मादि 9. नास्ति 10 यञमपत्यार्थः.. यद्यप्यन्तरेणापि नास्ति 11. नास्ति 12. नास्ति 13. बहुत्वं

विति तान्निराकरोति—[1]'कर्मादयोऽप्यपरे' इत्यादि । 'तदीये बहुत्वे' इति । कर्मादिगतमेव बहुत्वं बहुवचनस्य वाच्यम्, न तु केवलप्रातिपदिकार्थगतमित्यर्थः । प्रकृत्यर्थगतमेव बहुत्वं वाच्यम्, वृक्षशब्दस्यावयवी वाच्यः, न त्ववयवा इति द्रव्यपदार्थपक्षे तावत् वृक्षं पश्येति मूलस्कन्ध[2]फलपलाशादीनां बहुत्वेऽपि तेषामनभिधेयत्वाद् बहुवचनाभाव । आकृतिपक्षेऽपि प्रत्यासत्तेस्तदाधारगतं बहुत्वमाश्रीयते त त्ववयवगतम्, भिन्नवाक्यतया विधिरित्युक्तं तत्प्रयोजनमाह—'यत्र च' इत्यादि। भाष्ये तु पञ्चकपक्षाङ्गीकारेण नियमपक्षः स्थापितः । तत्र हि 'अनिर्दिष्टार्थाः प्रत्ययाः [3]स्वार्थे' (पु.प.१०) इति स्वार्थे जसादि बहुवचनं बहुत्वेऽपि सिद्धम्, तस्यापि स्वार्थत्वात्तत्राप्यर्थ[4]नियमात्—'बहुषु बहुवचनमेव' (१.४.२२) द्वयेकयो द्विवचनैकवचने' (१.४.२२) एवेति । एवं 'कर्मणि द्वितीया' (२.३.२) इत्यादावपि कर्मणि द्वितीयैवेत्येवमादिकोऽर्थनियमो वेदितव्यः । एवं हि प्रत्ययानामनियतत्वाद्[5]स्अव्ययेभ्यो निःसङ्ख्येभ्यो निष्कारकेभ्यश्च[6] स्वादयः सिध्यन्ति। अथ वा प्रत्ययनियमः—'बहुष्वेव बहुवचनम्' (१.४.२२); 'द्वयेकयोरेव द्विवचनैकवचने' (१.४.२२) । तुल्यजातीयस्य च नियमेन व्यावृत्तिः—'बहुष्वेव बहुवचनं न द्वयेकयोः, एकस्मिन्नेवैकवचनं न सङ्ख्यान्तरे, द्वयोरेव द्विवचनं न सङ्ख्यान्तरे' इति । [7]'कर्मणि द्वितीया' (२.३.२) इत्यादावप्येवम्—कर्मण्येव द्वितीया, न कारकान्तर इति । एवमपि ह्यव्ययेभ्यः स्वादयः सिध्यन्ति ॥

## २२. द्वयेकयोर्द्विवचनैकवचने ।

द्विशब्देन साहचर्यादेकशब्दः सङ्ख्यावाची । अयमपि भावप्रधानो निर्देशः, अत एव 'द्वयेकयोः' इति द्विवचनम्, तदाह—'द्वित्वैकत्वयोः' इति । 'एतदपि' इत्यादि । अनेनास्यापि विध्यर्थत्वं दर्शयति । कथं तर्हि 'सामान्यविहितयोः' इति, यावता नियमार्थत्वे एतत् घटते ? उच्यते, साधारणपर्यायः सामान्यशब्दः ससंख्यनिःसंख्यसाधारण्येन विहितयोरित्यर्थः । 'अर्थाभिधानम्' इति । अर्थः=वाच्योऽभिधीयते=कथ्यते येन तदर्थाभिधानम् । द्वयेकयोरित्यत्र 'सङ्ख्याया अल्पीयस्याः' (कात्या. वा. १४१७)इत्येकशब्दस्य पूर्वनिपातोऽस्मादेव निपातनान्न भवति। सङ्ख्येयवचनेष्वेवार्थद्वारकमल्पीयस्त्वमित्यर्थः ॥

## २३. कारके ।

अधिकारोऽनेकप्रकारः । 'सञ्ज्ञा, विशेषणम्, स्थानी, प्रकृतिः, निमित्तम्, आदेशः' इति । 'प्रत्ययः' (३.१.१) 'शेषे' (४.२.९२), 'पूर्वपरयोः', 'ङ्याप्प्रातिपदिकात्' (४.१.१), 'धातोः' (३.१.९१), 'आर्धधातुके मूर्धन्यः' इति तदिह विधेयानिर्देशात् [8]स्वरितत्वाच्चाधिकारत्वे स्थिते प्रकारमाह—'कारक इति विशेषण ... मधिक्रियते' इति । न तावत् सञ्ज्ञात्वेनाधिकारः, सञ्ज्ञाया भाव्यमानत्वात् सप्तम्यनुपपत्तेः । अथ सञ्ज्ञानुरूपः प्रथमानिर्देश एव कस्मान्न कृतः, प्रयुक्तं चैतत् कारकसंशब्दनेषु वक्ष्यमाणानामपादानादीनामेव [9]षण्णां ग्रहणस्येष्टत्वात्, अन्यथा नटस्य शृणोतीति कारकशेषस्यापि प्रसङ्गात् ? उच्यते, सञ्ज्ञापक्षे—अपाये [10]यद् ध्रुवं [11]तत् कारकसञ्ज्ञं भवति, अपादानसञ्ज्ञं चेत्ययमर्थो भवति. एवमन्यत्रापि । ततश्च कारकापादानसञ्ज्ञयोर्युगपद्विधानात् परस्परं निमित्तनिमित्तिभावा[12]भावादकारकस्यापि व्यापारशून्यस्यापादानसञ्ज्ञा प्राप्नोति। विशेषणाधिकारे तु—कारकेषु मध्ये [13]यदपाये ध्रुवं कारकमित्यर्थो लभ्यते, निर्धारणस्य सजातीयविषयत्वादिति व्यापारशून्यस्य [14]सा न प्राप्नोति । अतो विशेषणानुरूप एव निर्देशः कृतः, न तु सञ्ज्ञानुरूपः ।

कारकसञ्ज्ञा त्वन्वर्थत्वात् व्यापारशून्यस्य न भवति । किं च कारकसञ्ज्ञाया अपादानादिसञ्ज्ञाभिः समावेशो न प्राप्नोति, ततश्च 'स्तम्बेरमः' इत्यत्र सप्तम्यां श्रूयमाणायां 'गतिकारकोपपदात्' (६.२.१३९) इति स्वरो न स्यात्। 'कारके'(१.४.२३)इति निर्धारणे सप्तमी, सामान्यापेक्षं चैकवचनम्। कारकशब्दोऽयमस्ति ण्वुलन्तः—करोतीति कारकमिति

1. कर्मादय इत्यादि 2. फल नास्ति 3. स्वार्थाः 4. नियमः 5. अव्ययेभ्यः नास्ति 6. अव्ययेभ्यः इत्यधिकम् 7. 'कर्मणि इत्यादावपि' नास्ति 8. अधिकारे 9. नास्ति 10. यत् नास्ति 11. नास्ति 12. अभावान् नास्ति 13. यत नास्ति 14. नास्ति

अस्त्यव्युत्पन्नः सञ्ज्ञाशब्दो निमित्तपर्यायः, तत्र पूर्वस्य ग्रहणेऽपादानादिषु कारकशब्दो न प्रवर्तेत, यथा कर्तृशब्दः, तेषामस्वतन्त्रत्वात्, स्वातन्त्र्ये वा पक्षे कर्तृसञ्ज्ञा प्रसज्येत, नैष दोषः, सर्वमेव खलु [1]कारकं यथायथमवान्तरव्यापारं निर्वर्तयत् प्रधानक्रियायामुपयुज्यते. [2]सः च सकलकारकजन्या फलभूता विक्लित्त्यादिरूपा क्रिया प्रधानक्रिया । यद्वा—सामान्यभूता क्रिया प्रधानक्रिया फलजनना नाम, सर्वाणि हि कारकाणि फलजननाय प्रवर्तन्ते, अतो यद्यत् फलजननारूपं तत् सर्वेष्वेव कारकेष्वविशिष्टम् । किञ्चित् खलु कारकं केनचिदेव रूपेण फलं जनयतीति फलजनना सर्वेषामभिन्नरूपा । अवान्तरभेदविवक्षायां तु करणादिरूपोन्मेषः ।

न च वैशेषिकाणामिवास्माकमेका क्रिया नानेकत्र समवेता, धात्वर्थो हि क्रिया, न परिस्पन्द एव । धातुना च सकलकारकानुयाय्योदनादिफलावच्छेदेन एकीकृतो व्यापारोऽभिधीयते । तस्यामेकस्यां प्रधानक्रियायामुपयोगो यथायथमवान्तरव्यापारमुखेन, तद्यथा—अपादानस्यावधिभावोपगमनं व्यापारः, सम्प्रदानस्य [3]तु [4]प्रेरणानुमत्यनिराकरणादिः, करणस्य काष्ठादेर्ज्वलनादिः, अधिकरणस्य सम्भवनधारणादिः, कर्मणो निर्वृत्त्यादिः. कर्तुः प्रसिद्ध एव, प्रयोजकस्य प्रेषणादिः । न चैवं सति करणादीनामपि कर्तृसञ्ज्ञाप्रसङ्गः, परतन्त्रत्वात् । प्रधानेन हि कर्त्रा समवाये करणादीनि परतन्त्राणि, व्यवाये स्वतन्त्राणि, तद्यथा—'अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये स्वातन्त्र्यम्'। यद्येवम्, कारकव्यपदेशोऽपि करणाद्यवस्थायां न स्यात् ? करणं कारकमिति अधिकारसामर्थ्यात् । [5]कारकशब्दोपनीतस्वातन्त्र्यमवस्थान्तरगत विज्ञास्यते । अवस्थान्तरे यत् स्वतन्त्रं तत् साधकतमं करणमिति कर्तुरेव त्वेकस्य सांप्रतिकं स्वातन्त्र्यम्, तच्च कर्तृसञ्ज्ञाङ्गतया चोदितम् । यदि तर्हि व्युत्पत्तिपक्षेऽप्यवस्थान्तरगतमेव स्वातन्त्र्यम्, एवं तर्हि करणाद्यवस्थायां निमित्तभाव एवाभ्युपगतो भवति ? यद्येवम्, किं दोषप्रतिविधानव्यसनेन ? निमित्तपर्यायस्यैव ग्रहणमस्त्विति मन्यमान आह—'कारकशब्दश्च' इति । 'कस्य हेतुः' इति । द्रव्यगुणविषयोऽपि हेतुः कारकं प्राप्तमित्यभिप्रायः । कारकशब्दोऽयं क्रियाहेतावेव प्रसिद्ध इत्याह—'क्रियायाः' इति । अनाश्रितव्यापारं निमित्तं हेतुः, आश्रितव्यापारं कारकम्, उक्तं च—

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् । (वा. प. ३.७.२५) इति ।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥ (वा. प. ३.७.२४) इति च ।

कथं तर्हि पूर्वमुक्तम्—अनर्थान्तरमिति, न हि सामान्यविशेषवचनानामनर्थान्तरवाचित्वम् ? सत्यम्, सामान्यशब्दयोरपि अर्थप्रकरणादिना विशेषवृत्तिमभिप्रेत्य तु तथोक्तम् । 'वृक्षस्य पर्णं पतति' इति । पर्णविशेषणत्वेनात्र वृक्षो विवक्षितः, न त्वपायस्य निमित्तत्वेनेत्यपादानसञ्ज्ञा न भवति, न वाऽपायस्याविवक्षितत्वात् । सति ह्यवधौ गतिरपायो भवति, नान्यथा । न चात्र वृक्षोऽवधित्वेन विवक्षितः । तथा हि— वृक्षमजहत्यपि पर्णे वृक्षस्य पर्णं पततीति भवति प्रयोगो यदा वृक्षः छिन्नः पततीति, सत्यम्, अत एवास्मिन्नतृप्तः सन्नाह—'माणवकस्य पितरम्' इति । अत्र पितुः सम्बन्धित्वेन माणवको विवक्षितः, न तु प्रश्नक्रियां प्रति निमित्तत्वेनेति कर्मसञ्ज्ञा न भवति; असति तु कारकाधिकारे तस्यापि स्यात् । शेषलक्षणा तु षष्ठी अकथिते दुह्यादिपरिगणनात् 'राज्ञः पुरुषः' इत्यादौ सावकाशा । यदि तर्हि विशेषणमिदम्, ध्रुवादीनां न सञ्ज्ञा, 'कारकाद्दत्तश्रुतयोरेवाशिषि' (६.२.१४८) इत्यादौ यत्र कारकशब्दः संशब्द्यते तत्रापादानादीनां लक्ष्यमाणानां षण्णामेव ग्रहणमिष्यते, तन्न सिध्यति । सञ्ज्ञापक्षे तु न दोषः, सञ्ज्ञा ह्यावर्तमाना सञ्ज्ञिनं प्रत्याययति । स्यादेतत्—प्रदेशेष्वपि क्रियानिमित्तपर्यायस्य कारकशब्दस्योपादानम्, तच्च निमित्तमपादानाद्येवेति, तदसत्, 'नटस्य शृणोति' इत्यादौ कारकशेषस्य सम्भवादित्यत आह—'कारकसंशब्दनेषु च' इति । कारकग्रहणं प्रदेशेषु स्वर्यते, स्वरितेनाधिकारावगतिर्भवतीति भावः ॥

## २४. ध्रुवमपायेऽपादानम् ।

'ध्रुवम्' इति । 'ध्रु गतिस्थैर्ययोः (धा. पा. १४००) इति अस्मात् कुटादेः पचाद्यचि रूपम् । ये तु ध्रुव गतिस्थैर्ययोः (धा पा. १४०० पा.) इति पठन्ति, तेषामिगुपधलक्षणः [6]कः प्रत्ययः । अपायः विश्लेषः, विभागस्तद्धेतुभूतश्च गतिविशेषोऽ-

1. कारके 2. सा च नास्ति 3. नास्ति 4. अनुमनना० 5. कारकशब्दोपनीतं 6. कप्रत्ययः

वधिसापेक्ष, तत्र विभागस्य द्विष्ठत्वात् न केवलमपयन्नेव तेन युक्तः, किं, तर्हि ? यतोऽपैति सोऽपि युक्त एवेत्याह—'ध्रुवं यदपाययुक्तम्' इति। कथं पुनः सप्तमीनिर्देशेऽप्यपाययुक्तमिति प्रतिपद्येमहीत्यत्राह—'अपाये साध्ये' इति। साध्यत्वेन विषयत्वात् सामर्थ्यलभ्यो योग इति भावः। ध्रुवमित्येकरूपमुच्यते—[1]ध्रुवमस्य शीलम्, ध्रुवमस्य रूपमिति, इह तदपायेन विशेष्यते—[2]अपाये यद् ध्रुवमिति, न तु सार्वत्रिकम्[3], तच्चापाये ध्रुवमुच्यते—[4]यदपायेनानाविश्यते उपयुज्यते चापाये, तच्चार्थादवधिभूतमित्याह—'यदवधिभूतम्' इति। एवं च 'सार्थाद्धीनः, रथात्पतितः, धावतः पतित' इत्यादौ सत्यपि क्रियान्तरावेशाच्चलत्वे तत्तद्धावनादिक्रियानावेशात्तन्निमित्तमपायं प्रत्यौदासीन्यादस्त्येव ध्रुवत्वमिति भवत्येव सञ्ज्ञा। उक्तं च—

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ॥ (वा. प. ३.७.११६) इति

'पततः पतितः' इत्यत्रापि परगतपातापेक्षया ध्रौव्यमेव। तथा हि—

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्य त्वश्वस्य पतने कुड्यादिर्ध्रुव उच्यते ॥ (वा. प. ३.७.१४०)

इह तु परस्परस्मान्मेषावपसर्पत इति

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ (वा. प. ३.७.१४०)
गतिर्विना त्ववधिना नापाय इति कथ्यते ॥ (वा. प. ३.७.१४३)

'जुगुप्सा' इति। प्रश्लेषपूर्वको विश्लेषोऽपायः, स चात्र नास्ति, बुद्धिपरिकल्पितस्तु गौणः, न च मुख्ये सम्भवति गौणस्य ग्रहणं युक्तम्। अत एव 'भीत्रार्थानाम् (१.४.२५) इत्यादेरारम्भ इति वाक्यकारस्याभिप्रायः। अत्र च कारकशेषत्वात् षष्ठी प्राप्नोति—'नटस्य शृणोति' इति यथा। प्रत्याख्यानं तु साधकतममिति तमब्ग्रहणं लिङ्गम्, कारकप्रकरणे यथासम्भवमेव साधकत्वमिति। तदिह—'अधर्माज्जुगुप्सते' इत्यादौ जुगुप्सादिपूर्विकायां निवृत्तौ जुगुप्सादीनां वृत्तिरिति स्थिते य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति—'दुःखहेतुर[5]धर्मो नैनं करिष्यामि' इति, स बुद्ध्या तं प्राप्नोति, प्राप्य च ततो निवर्तते। 'धर्मात् प्रमाद्यति', 'धर्मान्मुह्यति' इति। य एष नास्तिकः पुरुषः, स पश्यति—'नानेन धर्मेण किञ्चिदाप्यते, नैनं करिष्यामि' इति स बुद्ध्या तं प्राप्नोति, प्राप्य च ततो निवर्तते, तत्र 'ध्रुवमपाये' इत्येव सिद्धमिति। तच्चैतत्—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥ (वा. प. ३.७.१३६)

यत्र धातुनाऽपायलक्षणः सञ्ज्ञाविषयो निर्दिश्यते, यथा—'ग्रामादागच्छति' इति, तन्निर्दिष्टविषयम्। यत्र धातुर्धात्वन्तरार्थाङ्गं[6] स्वार्थमाह, यथा—'बलाहकात् विद्योतते विद्युत्' इति, अत्र हि निःसरणाङ्गविद्योतने विद्युतिर्वर्तते—बलाहकान्निःसृत्य विद्योतत इत्येव, 'कुसूलात् पचति' इत्यत्राऽऽदानाङ्गे पाके पचिर्वर्तते—'कुसूलादादाय पचति' इति, तदुपात्तविषयम्। अपेक्षितक्रियं तु—यत्र क्रिया न श्रूयते, प्रमाणान्तरेण तु प्रतीयते, यथा—आगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह—'कुतो भवान्' इति। सोऽपि तदेव प्रत्यक्षसिद्धमा[7]गमनमुपजीवन्नाह—'पाटलिपुत्रात्' इति।

ध्रुवग्रहणं किम् ? 'ग्रामादागच्छति शकटेन'—अत्र शकटस्य मा भूत्। अथ क्रियमाणेऽपि ध्रुवग्रहणे इह कस्मान्न भवति—'धनुषा विध्यति' इति, अत्र हि शराणामपायं प्रति अवधिभावेनैव धनुषः साधकतमत्वम् ? सत्यम्;

1. अस्य शीलम् नास्ति 2. उपाये इति मुद्रितः पाठः 3. इति इत्यधिकम् 4. यदपायेन नाविश्यते 5. अयम् इत्यधिकम् 6. अङ्गत्वार्थमाह 7. आगमम्

उभयप्रसङ्गे परत्वात् करणसञ्ज्ञा भविष्यति । नन्वेवमक्रियमाणेऽपि शकटस्य [1]नैव भविष्यति, एवं सञ्ज्ञान्तरविषये सर्वत्र । 'वृक्षस्य पत्रं पतति' इत्यत्र त्वपायस्याविवक्षितत्वादकारकत्वाच्च न भविष्यति । सञ्ज्ञिनिर्देशार्थं तु न हि 'कारके' इति सप्तम्यन्तेन शक्यः सञ्ज्ञो निर्देष्टुम्, सिद्धं तु निर्धार्यमाणस्य सञ्ज्ञित्वादपायविषयेषु कारकेषु मध्ये यत् कारकं सञ्ज्ञाऽन्तरस्याविषयस्तदपादानमिति, तदेवं ध्रुवग्रहणं चिन्त्यप्रयोजनम् ।।

## २५. भीत्रार्थानां भयहेतुः ।

भयं भीः, त्राणं त्राः, सम्पदादित्वाद्भावे क्विप् । भीत्रौ अर्थौ येषां ते भीत्रार्थाः, षष्ठीप्रयोगापेक्षया कारकापेक्षया चेत्याह—'बिभेत्यर्थानाम्' इत्यादि । अत्र बिभेतित्रायतिशब्दौ तदर्थयोर्वर्तेते, तदर्थोऽर्थो येषामित्यर्थः । त्राणम् बाधकेभ्यो रक्षणम्, बाधकाश्च भयहेतव इति त्रार्थानामपि भयहेतुः कारकं भवत्येव । 'चोरेभ्यः' इति । चोरयतेः पचाद्यचि चोरः । क्वचिच्चौरेभ्य इति पाठः । तत्र स्वार्थिकः प्रज्ञाद्यण् । छत्रादिषु वा चुराशब्दः पठ्यते, स च 'अप्रत्ययात्' (३.३.१०२) इत्यस्य 'ण्यासश्रन्थो युच्' (३.३.२३) इति युचि बाधके प्राप्ते तस्मादेव निपातनादकारप्रत्यये णिलुकि च व्युत्पाद्यते, ततश्चुरा स्तेयं शीलमस्येति णे कृते स एवार्थो भवति । 'बिभेति' इति । 'ञिभी भये' (धा. पा. १०८४) जुहोत्यादिः । 'उद्विजते' इति । 'ओविजी भयचलनयोः' (धा. पा. १२८९) तौदादिकोऽनुदात्तेत् । 'अरण्ये' इति । अत्र तत्स्थेभ्यो वृकादिभ्यो भयम्, नारण्यात् । ननु च ध्रुवमित्यनुवर्तिष्यते, न चारण्यमवधित्वेन विवक्षितम्, परत्वाच्चाधिकरणसञ्ज्ञैव भविष्यति, सत्यम्, पूर्वस्यैवायं प्रपञ्चः, कथम् ? भयादिपूर्विकायां निवृत्तौ भ्यादयो वर्तन्ते—बिभेतीति कोऽर्थः ? भीत्या निवर्तत इत्यर्थः । त्रायत इति कोऽर्थ ? चोरकृताद्वधादेस्त्राणेन निवर्तयतीत्यर्थः । कथं तर्हि चोरमध्यवर्तिनि 'चोरेभ्यो बिभेति' इति प्रयोगः, न ह्यत्र निवृत्तिरस्ति ? अत्रापि भीत्या निवर्तितुमिच्छतीत्यर्थो द्रष्टव्यः । तदेवं बुद्धिपरिकल्पितोऽपायोऽस्तीत्युपात्तविषयमिदमपादानमिति । कृत्स्न एव प्रयोगप्रपञ्चे किमवयवपर्यनुयोगेन ? ।।

## २६. पराजेरसोढः ।

अत्र धातुपाठगतस्य जीत्येतावन्मात्रस्यानुकरणम् । ततः परापूर्वो जिः पराजिरित्युत्तरपदलोपी समासो [2]द्रष्टव्यः । ननु 'प्रकृतिवदनुकरणं भवति' (व्या. प. १५) इत्यधातुरिति प्रातिपदिकसञ्ज्ञायाः प्रतिषेधादसुबन्तत्वात् समासो न प्राप्नोति, न; अप्रतिषेधात्, नायं प्रसज्यप्रतिषेधः—धातोर्नेति, किं तर्हि ? पर्युदासोऽयम्—यदन्यत् धातोरिति, धातोर्न विधिर्न प्रतिषेधः । एवमपीयङादेशः प्राप्नोति, परत्वात् 'घेर्ङिति' (७.३.१११) इति गुणो भविष्यतीति, समुदायस्य वा, समुदायोऽनुकरणम्, क्वस्थस्य समुदायस्य ? प्रयोगस्य । यद्येवम्, 'अध्ययनात् पराजयते'—अत्र प्राप्नोति, न ह्यत्र पराजीति रूपमस्ति, क्व तर्हि स्यात् ? यत्र पराजीति रूपमस्ति—'अध्ययनात् पराजितः' इति । उदाहरणे पराजिर्न्यूनीभावे वर्तते—अध्येतुं ह्रसति ग्लायतीत्यर्थः । अकर्मकश्चायमत्रार्थे, तत्र षष्ठ्यां प्राप्तायां वचनम्, प्रत्युदाहरणे त्वभिभवे वर्तते । 'विपराभ्यां जेः' (१.३.१९) इत्यत्रार्थद्वयेऽपि वर्तमानस्य ग्रहणम् । अयमपि प्रपञ्चो न्यूनीभावपूर्विकायां निवृत्तौ [3]वृत्तेः सिद्धम् । 'अध्ययनात् पराजयते'—कोऽर्थः ? न्यूनीभावेन ग्लान्या ततो निवर्तते इत्यर्थः । तेन प्रत्युदाहरणे परत्वात् कर्मसञ्ज्ञा भविष्यतीति न चोदनीयम् ।।

## २७. वारणार्थानामीप्सितः ।

[4]ईप्सितशब्दोऽयमस्त्यभिप्रेतपर्यायः, [5]तस्य ग्रहणे यवानामात्मीयत्वे गवां च परकीयत्व एव स्यात्, न विपर्यये । न खल्वस्यैतदभिप्रेतं यदुतात्मीया गावः परकीयान् यवान् मा घसन्निति, मा भूवन् यवा [6]वारयितुमीप्सिताः; वार्यमाणानां तु गवामीप्सिताः, न वाऽत्र विशेषः श्रुतः कर्तुरीप्सित इति । इह तर्हि न स्यात्—'अग्नेर्माणवकं वारयति

1. सैव 2. नास्ति 3. वृत्तौ 4. अस्ति च क्रियाशब्दः आप्तुमिष्टमीप्सितमिति तत्र पूर्वग्रहणे त्वधिकम्, 5. तस्य ग्रहणे नास्ति 6. 'वारयितुमीप्सिताः' नास्ति,

कूपादन्धम्' इति, न ह्यग्निकूपौ वारयितुर्वार्यमाणस्य वाऽभिप्रेतौ ? क्रियाशब्दस्य तु ग्रहणे वार्यमाणस्यान्धादेर्गमनादि क्रियया कूपादेराप्यमानत्वात् सिद्धयति, अन्धश्चापश्यन्नपि गन्तव्यं जिगमिषति, अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यात् 'यवेभ्यो गा वारयति' इति। 'वृञ आवरणे' (धा. पा. ११८३) चुरादिः। अथात्र गवामपादानसञ्ज्ञा कस्मान्न भवति ईप्सिततमोऽपीप्सितो भवत्येव, यथा शुक्लतमोऽपि शुक्लः ? परत्वात् कर्मसञ्ज्ञा भविष्यति। कर्मसञ्ज्ञाया अवकाशः वारणार्थेभ्योऽन्यत्र, अपादानसञ्ज्ञायास्तु प्रकर्षरहित[1]मीप्सितम्, ईप्सिततमस्य तूभयप्रसङ्गे परत्वात् कर्मसञ्ज्ञा। अथ प्रपञ्चः, अस्ति ह्यत्रापि बुद्धिव्यवस्थितोऽपायः, कथम् ? पश्यत्ययम्—यदि गावः क्षेत्रे गच्छेयुर्ध्रुवं सस्यविनाशः, सस्य विनाशेऽधर्मश्च राजभयं च, स बुद्धया [2]सम्प्राप्य निवर्तयतीत्यतो न चोदनीयम्—प्रत्युदाहरणे क्षेत्रस्याधिकरणसञ्ज्ञा भविष्यतीति ॥

## २८. अन्तर्धौ येनादर्शनमिच्छति ।

'अन्तर्धौ' इति नेयं 'निमित्तात् कर्मयोगे' (वा. १३८) इति सप्तमी, यथा हि—'वेतनेन धान्यं लुनाति' इत्य वेतनस्य धान्येन [3]योगो नास्ति, तथेहाप्यदर्शनमिच्छतीतीच्छाकर्मणाऽदर्शनेनान्तर्धेर्योगो नास्ति। अथादर्शनस्य यत् कर्म आत्माख्यमात्मनोऽदर्शनमिच्छतीति तेनान्तर्धेर्योगोऽस्ति ? यस्यैवादर्शनं तस्यैवान्तर्धानमित्युच्येत। एवमपि '[4]निमित्तात् कर्म योगे' (वा. १३८) इति किं निमित्तं गृह्यते, कारणम् ? प्रयोजनं वा ? कारणं चेज् 'जाडयेन बद्धः'—अत्रापि प्राप्नोति य एव बद्धयते तत्रैव जाडयमिति, तस्मात् प्रयोजनस्य तत्र ग्रहणम्। यथा - 'चर्मणि द्वीपिनं हन्ति' इति चर्म द्वीपिहननस्य प्रयोजनम्। इह त्वन्तर्धानमदर्शनस्य कारणम्, अन्तर्हितः खल्वसौ न दृश्यते। तस्माद्विषयसप्तम्येषा, सत्सप्तमी वा 'येन' इति कर्तरि तृतीया। ननु [5]च दर्शनेन योगात् 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठया भाव्यम्। 'उभयप्राप्तौ कर्मणि एव' (२.३.६६) इति नियमात् तृतीया भविष्यति। कर्मत्वत्रादर्शनस्यात्मा। नन्वात्मने इति न श्रूयते, मा श्रावि येनादर्शनमिच्छतीत्युक्ते कस्येत्यपेक्षायामात्मन इति गम्यते। 'अन्तर्धिनिमित्तम् इति। अन्तर्धिना कारणेनेत्यर्थः। 'निमित्त कारणहेतुषु सर्वासां प्रायदर्शनम्' इति प्रथमा। अथ वा—बहुव्रीहिरदर्शनस्य समानाधिकरणं विशेषणम् सूत्रेऽनुपात्तोऽपि तच्छब्दो यत्तदोर्नित्यसंबंधाल्लभ्य एवेत्याह—'तत्कारकम्' इति। 'अन्तर्धत्ते' इति। तिरोभवतीत्यर्थः 'निलीयते' इति। 'लीङ् श्लेषणे' (धा. पा ११३९) देवादिकः।

'चौरान्न दिदृक्षते' इति। आत्मानं ते मा द्राक्षुरित्येवमर्थम्। ननु परत्वात् कर्मसञ्ज्ञा भविष्यति, सत्यम्, अयमर्थः प्रपञ्चः, कथम् ? पश्यत्येवम्—यद्युपाध्यायः पश्येद् ध्रुवं मे प्रेषणमुपालम्भो वा भवेदिति, स बुद्धया सम्प्राप्य निवर्तते [6]येनेत्यस्मिन्नसत्यदर्शनमिच्छतः शिष्यस्यैव स्यात्, ध्रुवमित्यनुवर्तिष्यते। एवं तर्हि सूत्रस्यावाचकत्वं मा भूत्। असति ध्रुवे तस्मिन्नन्तर्धौ ध्रुवमपादानसञ्ज्ञं भवति तचवेत् ध्रुवमदर्शनमिच्छतीत्यर्थः स्यात्। न च ध्रुवमिच्छति, यच्चेच्छति न तद् ध्रुवमित्यवाचकं स्यात् ॥

## २९. आख्यातोपयोगे ।

'नियमपूर्वकं विद्याग्रहणम्' इति। तत्रैवोपयोगशब्दस्य रूढत्वात्। यथा तेषां मन्त्राणामुपयोगे द्वादशाहमधः शय्येति नियमो भिक्षाचरणादिः। 'नटस्य शृणोति' इति। किं पुनर्नटः कारकम् ? उताहो न ? यदि कारकम्, कर्मसञ्ज्ञा प्राप्नोति—'अकथितं च' (१.४.५१) इति। अथाकारकम्? उपयोगग्रहणमनर्थकं [7]स्यात्। अस्तु [8]कारकम्, न ह्युपाध्यायान्नटस्य व्यापारे कश्चिदन्यो विशेषः, अन्यदतो नियमात्। दुह्यादिपरिगणनात्तु कर्मसञ्ज्ञा न भवति। क्वचित्तु 'नटात्

1. ईप्सितम्, नास्ति 2. 'प्राप्य' 3. योगोऽस्ति मुद्रितः पाठः 4. 'निमित्तात्कर्मयोगे इति किं', नास्ति 5 चादर्शनमित्यनेन योगात्, 6. येनेत्यस्मिन सत्यदर्शनमिच्छतः 7. स्यात् नास्ति 8. तत् इत्यधिकम्

गाथां शृणोति, [1]'ग्रन्थिकस्य कथां शृणोति' इति पाठः. तत्रापि नटादिनिमित्तं गाथादेः श्रवणं करोतीत्यर्थः, न तु गाथादिविशेषणं नटादिः; अकारकत्वप्रसङ्गात् । ग्रन्थिकः=कथाया वाचयिता । अयमपि प्रपञ्चः, कथम् ? उपाध्यायान्निःसरन्तं शब्दं गृह्णातीति स्फुट एवात्रापायः । इदं तर्हि प्रयोजनम्—"उपयोग:' इति वक्ष्यामि, नटस्य मा भूत्" इति । ननु नटस्य सत्यप्यवधित्वे शेषरूपेण विवक्षणात् षष्ठी भविष्यति, यथा 'न माषाणामश्नीयात्' इति वस्तुतः कर्मत्वं माषाणाम्, सत्यम्, स एव विवक्षानियमः सूत्रकारेण प्रदर्श्यते—'उपयोगेऽवधित्वं विवक्षितम्, अन्यत्र शेषत्वम्' इति ॥

## ३०. जनिकर्तुः प्रकृतिः ।

जनेः कर्ता जनिकर्तेति कर्मणि षष्ठ्याः समासः । अयमेव च निर्देशो ज्ञापयति—'कर्तरि च (२.२.१६) इति प्रतिषेधोऽनित्य इति । कः पुनरसावित्यत आह—'जन्यर्थस्य' इति । एतदुक्तं भवति—जनिशब्दोऽयम् 'इञ्जादिभ्यः' इति जनेर्भाव इञमुत्पाद्य व्युत्पादितः । 'जनिवध्योश्च (७.३.३५) इति वृद्धिप्रतिषेधो [2]जन्यार्थवाची, न तु 'इक्श्तिपौ धातुनिर्देशे' (वा. ३१९) इति [3]इक्प्रत्ययान्तः, 'गमहन'(६.४.९७) इत्युपधाया लोपप्रसङ्गात् । नाप्यागन्तुकेनेकारेण धातोर्निर्देशः. शब्दात्मकस्य धातोः कर्त्रा सम्बन्धायोगात् । अथाप्यर्थद्वारको योगः स्यात् ? एवमपि धातुनिर्देशे तस्यैव प्रयोगे स्यात्, न पर्यायस्य, अङ्गादङ्गात्[4]सम्भवोऽस्तीति । अर्थग्रहणे त्वत्रापि भवतीति । प्रकृतिरित्यस्य विवरणम्—'कारणम्' इति । उपादानकारणमित्यर्थः ।

अन्ये तु ध्रुवग्रहणानुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिग्रहणं कारणमात्रपरिग्रहार्थं वर्णयन्ति । अत एव वृत्तावुक्तम्—'कारणम्' इति, न पुनरुपादानकारणमिति । तेन च 'पुत्रात् प्रमोदो जायते' इत्यादावपि भवतीति । किं पुनः सत् जायते ? उतासत् ? न तावत् सत्, जन्मवैयर्थ्यात् । यदि जन्मनः प्रागेव सत्, किं जन्मना ? अथैवमपि जन्म, जायस्व जायस्वेत्येव घटो [5]जायते । नाप्यसत्, असतः कर्तृत्वायोगात्, शशविषाणादेरपि जन्मप्रसङ्गाच्च । उक्तमत्र—

पूर्वावस्थामनुजहत् संस्पृशन् धर्ममुत्तरम् ।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ (वा. प. ३.७.११८) इति ।

एतच्च 'आन्महतः' (६.३.४६) इत्यत्रोपपादयिष्यामः । किञ्चास्माकमनेन दुस्तर्केण, अस्ति तावत् 'शृङ्गाच्छरो जायते' इति प्रयोगः स उपपादनीय इत्येतावत् । अयमपि प्रपञ्चः । लोके हि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यते, लोकप्रसिद्ध्यनुसारेण शब्दप्रयोगः, अर्थतत्त्वं तु तथा भवत्वन्यथा वा ॥

## ३१. भुवः प्रभवः ।

भवनं भूः, सम्पदादित्वात् क्विप् । अत्रापि प्रशब्दो द्रष्टव्यः । न हि केवलस्य भवत्यर्थस्य प्रभवनेन योगः, किं तर्हि ? सोपसर्गस्य भुवः । 'कर्ता' इति । भवत्यर्थस्य कर्तेत्यर्थः, भुवो वा धातोः[6] । कथं पुनर्धातोर्नाम कर्ता स्यात् धातुर्वै शब्दः, शब्देऽसम्भवेऽर्थे कार्यं विज्ञास्यते । 'तसु उपक्षये' (धाः पा. १२१२) भावे क्तः, 'वि गतौ । धा. प. १०४८)' तस्ता, वितस्तेति अशोष्येत्यर्थः । 'प्रथमत उपलभ्यते' इति । उपलभतेः कर्मव्यापारे प्रभवति, प्रवर्तत इत्यर्थः । प्रकाशत इति यावत् । एतेन जन्यर्थाभावात् पूर्वेणासिद्धं दर्शयति । 'अनेकार्थत्वाद्धातूनाम्' (व्या. प. ११९) अस्मिन्नर्थे वृत्तिः । अयमपि प्रपञ्चः । कथम् ? भजनपूर्वके निःसरणे प्रभवतिर्वर्तते ।

## ३२. कर्मणा यमभिप्रैति स संप्रदानम् ।

'कर्मणा करणभूतेन' इति । कथं पुनरेकमेव वस्तु युगपत् कर्म च करणं च भवति ? क्रियाभेदाद् दानक्रियायां कर्माभिप्रायेण क्रियायां करणम्, दीयमानया हि गवा शिष्य उपाध्यायमभिप्रैति संबध्नाति ईप्सति [वा, अभिप्रपूर्वो ह्रीण् ईप्सतिना समानार्थः । अभिप्रेतमित्युक्ते ईप्सितमिति गम्यते । उक्तं च—

1. ग्रन्थकस्य 2. 'जन्यर्थवाची' 3. 'इक्प्रत्ययः' 4. 'सम्भवामीति' 5. जायेत 6. 'कर्ता' इत्यधिकम्

अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥ (वा. प. ३.७.१२९) इति ।

त्यागो दानम्, त्यागस्याङ्गं शेषभूतं कर्मणा गवादिनेप्सितमाप्तुमिष्टं सम्प्रदानतां लभते, अनिराकरणाद् एवमस्त्वित अनुमानाद् वा, 'देवेभ्यः सुमनसो ददाति, याचकाय भिक्षां ददाति, उपाध्यायाय गां ददाति', न तु निराकृ सम्प्रदानं भवतीति श्लोकार्थः ।

अत्र केचिदाहुः—'कुगतिप्रादयः' (२.२.१८) इत्यत्र वार्तिकम्—'उदात्तवता तिङा गतेः समासवचन ( कात्या. वा. १३४२ ) इति । 'यो जात एव [1]प्रथमो[2]मनस्वान् देवो देवान् क्रतुना पर्यभू (ऋ.२.१२.१), यः 'शम्बरमन्वविन्दत्' (ऋ. २.१२.११) 'यस्मान्न ऋते[3] विजयन्ते' (ऋ.२.१२.९), 'यो वै प्रययतामप्र प्रतिपद्यते' इत्याद्युदाहरणानि । अत्र सर्वत्र 'यद्वृत्तान्नित्यम्' (८.१.६६) इति निपातप्रतिषे तिङन्तमुदात्तवत्, ततश्चायमभिप्रैतीत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति ।

[4]नेति वयम्, तस्य छन्दोविषयत्वात् । यदि 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (१.४.३२) 'अजां नय ग्रामम्' इति । अजेर्नयतिक्रिया [5]कर्मभिः सम्बध्यमानस्य ग्रामस्य [6]सम्प्रदानतां प्राप्नोति ? न प्राप्नोति, किं कारणम् कर्मणेति करणे तृतीयेत्युक्तम् । न च यथा शिष्यस्योपाध्यायसम्बन्धे गौः करणम्, एवमजा ग्रामसम्बन्धे । ईप्सित समानार्थे तु सुतरामप्राप्तिः । तथा हि—'यमभिप्रैति' इत्युक्ते यमिति निर्दिष्टस्य शेषित्वम्, कर्मणेति निर्दिष्टस्य गवा [7]करणस्य शेषत्वं च प्रतीयते, यथा—'कर्त्रभिप्राये क्रियाफले' (१.३.७२) इति कर्तुः शेषित्वम्, क्रियाफलस्य शेषत्व न चात्र शेषशेषिभावः प्रतीयते । किं च 'नीवह्योर्हरतेश्च[8] (१.४.५२.६२) इति द्विकर्मकेषु नयतिः परिगण्यते, अतो ग्रामस्य न भविष्यति ।

अथ किमर्थं महती सञ्ज्ञा क्रियत इत्याह—'अन्वर्थसञ्ज्ञाविज्ञानात्' इति । सम्यक् प्रदीयते यस्मै तत् सम्प्रदान मित्यन्वर्थत्वात् सञ्ज्ञाया ददातिकर्मणा यमभिप्रैति स संप्रदानमित्यर्थः । एवमपि 'रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददाति' इत्य कस्मान्न भवति ? अदानत्वात् । किं पुनर्दानम् ? [9]दानं किञ्चिदुद्दिश्यापुनर्ग्रहणाय [10]स्वद्रव्यत्यागः, यथा—'वृक्षा जलं ददाति, देवेभ्यः सुमनसः, याचकाय भिक्षाम्, उपाध्यायाय गाम्, खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति, न शूद्रा मतिं दद्यात्' इति । करतलप्रहार चपेटिका । रजके तु पुनर्ग्रहणाद्दानाभावः, उपमानात्तु ददातिप्रयोगः, तत्र कार शेषत्वात् 'नटस्य न शृणोति' इतिवत् षष्ठी ।

'कर्मणा' इति किम्, यावता 'उपाध्यायाय गां ददाति' इत्यत्र गोरुपाध्यायस्य वाभिप्रेयमाणत्वम्, गौर्दानक्रियया करणभूतयाभिप्रेयते, गवा तूपाध्यायः, तत्र परत्वाद् गोः कर्मसंज्ञेति पारिशेष्यात् उपाध्यायस्यैव सम्प्रदान सञ्ज्ञा भविष्यति ? नैतदस्ति, सत्यप्युभयोरभिप्रेयमाणत्वेऽन्तरङ्गत्वात् कर्मण एव गवादेः स्यात् । कर्मसञ्ज्ञा तु ददातिक णोऽन्यत्र सावकाशा, कारकप्रकरणे च प्रकर्षो नाश्रीयते, न त्वन्तरङ्गबहिरङ्गभावोऽपि । यंसग्रहणेऽक्रियमाणेऽभिप्रेते सम्प्रदानसञ्ज्ञा स्यात्, [11]श्रुतपदार्थसम्बन्धे [12]सति तेनैव निराकाङ्क्षत्वादध्याहारानुपपत्तेः । सत्यपि वाध्याहारे इत्येवाध्याहारात् ततः 'उपाध्यायाय शिष्येण गौर्दीयते' इत्यत्रार्थे 'शिष्यायोपाध्यायस्य गौर्दीयते' इति स्यात् । [13]कर्म सञ्ज्ञायां हि कर्तृग्रहणं [14]स्वतन्त्रोपलक्षणार्थमिति तेन शिष्यस्य कर्तृत्वाभावेऽपि गोः कर्मसञ्ज्ञा युज्यत एव । तथा 'सार्थाद्धीयते' इति कर्मणि लकारोत्पत्तिः ।

1. प्रथमो महस्वावो देवा क्रतुना" नास्ति, 2. महस्वावो देवाः क्रतुना इति मुद्रितः पाठः 3. वि विजयन्ते इति 4. 'नेति" नास्ति, 5. "क्रियाकर्मभि", 6. "संप्रदानता", 7. "करणत्वं" 8. चापि 9. दान नास्ति, 10. यः इत्यधिकम् 11. सम्बन्धेनैव 12. सति तेनैव नास्ति 13. ग्रहणमपि कर्तव्यम् इत्यधिकम् 14. स्वातन्त्र्योपलक्षणं

अभिप्रग्रहणं किम्, यावता कर्मणा यमेति गच्छति प्राप्नोति सम्बध्नातीत्यर्थः, अभिप्रैतीत्युक्ते स एव ? अभिप्रग्रहणेऽक्रियमाणे कालविवक्षा स्यात्, ततश्च यमेव सम्प्रत्येति तत्रैव स्यात्, यमगात् यं चैष्यति तत्र न स्यात्, अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति। अभिराभिमुख्ये वर्तते, प्रशब्दश्चाविकर्मणि, ततश्चोपसर्गद्वयोपादान-सामर्थ्यात्[1]कालान्तरावच्छिन्ना क्रिया नाश्रीयते। ननु यथा 'तेन दीव्यति' (४.४.२) इत्यादौ सङ्ख्याकालयोरविवक्षा, तथेहापि सङ्ख्यावत्कालस्याप्यविवक्षा सिद्धा सत्यम्, अयमेव न्यायसिद्धोऽर्थ उपसर्गद्वयोपादानेन प्रदर्श्यते। यदा त्वभि-प्रैतीत्यस्य ईप्सतीत्यर्थः, [2]तदाभिप्रग्रहणं कर्तव्यमेव।

'क्रियाग्रहणमपि कर्तव्यम्' इति वार्तिकम्, एतद्व्याचष्टे—'क्रियया' इत्यादि। ननु क्रियामपि लोके कर्मेत्यु-पचरन्ति—'किं कर्म करिष्यसि, कां क्रियाम्' इति, तत्र कर्मणा यमभिप्रैतीत्येव सिद्धम्। एवमपि कर्तव्यम्, 'कृत्रिमा-कृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति' (व्या. प. ६) [3]सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्। क्रियापि कृत्रिमं कर्म, तथा हि—य एव मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्ध्या तावत् कञ्चिदर्थं सम्पश्यति—इदमीदृशमिति, तद्दृष्टं प्रार्थयते-अपि ममेदं स्यादिति, ततस्तदुपायभूतां क्रियां [4]पश्यति—अस्या एतत् फलमिति, ततः प्रार्थयते—कथमियं निष्पद्यतामिति, ततस्तत्साधनानि समवधार्य कर्तुमध्यवस्यति। प्रतीयमानक्रियापेक्षोऽपि कारकभावो भवत्येव, यथा—'प्रविश पिण्डीम्' इत्यत्र भक्षयेति गम्यते। सूत्रकारश्च सूत्रयति—'क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२.३.१४) इति। एवमपि क्रियाग्रहणं कर्तव्यम्, [5]ददातिकर्मत्वात्। 'निगर्हते' इति। नास्तिक्यान्निन्दतीत्यर्थः। 'गर्ह गल्ह कुत्सायाम्' (धा.पा. ६३६, ६३७) अनुदात्तेत्। 'युद्धाय' इति। युद्धविषयं सन्नाहपूर्वकं निश्चयं करोतीत्यर्थ। नह्यतिः स्वरितेत्। 'पत्ये शेते' इति। पतिमुपसृत्य शेत इत्यर्थः। यदि तर्हि क्रिययाऽभिप्रेयमाणस्यापि भवति 'कटं करोति' इत्यादावपि प्राप्नोति, वचनाद्धि कर्मसम्प्रदानसञ्ज्ञयोः पर्यायः स्यात्। नैतत् सार्वत्रिकम्, किं तर्हि ? प्रयोगदर्शनवशेन नियतविषयम्।

'कर्मणः करणसञ्ज्ञा' इत्यादि। एतच्छन्दोविषयम्, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु. प. ३५) इति यथा-प्राप्तमपि प्रयोगो भवति। भाष्ये तु ददातिकर्मणेति नाश्रितम्, प्रयोगाश्च बहवः—'अर्यम्णे चरुं निर्वपेत्' (तै. सं २.३.४.१); [6]'देवेभ्यो' ब्रह्मौदनमपक्षत्' (तै. ६.५.६.१), 'देवेभ्यो हव्यं [7]वहन्तः', (तै. १.१.५.२) 'छन्दांसि वै देवेभ्यो [8]हव्यमूढ्वा', 'यदङ्ग[9]दाशुषे त्वम्' (ऋ. १.१.६), 'शं नः करत्यर्वते' (ऋ. १.४३.६) इत्यादयः, तन्मते क्रियाग्रहणं न कर्तव्यम्। कथं यत्र सम्प्रदानत्वमिष्यते ? तत्र सन्दर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते, ततश्च तैराप्यमाना क्रियापि कृत्रिमं कर्मेति सिद्धं तयाऽभिप्रेयमाणस्य सम्प्रदानत्वम्। यत्र तु नेष्यते तत्र भेदो न विवक्ष्यते, ततश्चौदनाद्येकफलावच्छे-देनैकीकृतया क्रिययाऽऽ[10]प्यमानस्य कर्मत्वमेव भविष्यति—'कटं करोति, ओदनं पचति' इति। गत्यर्थेषु तूभयं विवक्ष्यते—भेदः, अभेदश्च; तत्र भेदविवक्षायां[11] ग्रामं गच्छतीति प्रयोग इति 'गत्यर्थकर्मणि' (२.३.१२) इत्येतदपि न वक्तव्यं भवति॥

## ३३ रुच्यर्थानां प्रीयमाणः।

'रुचिना समानार्थाः' इति। वस्तुकथनमेतत्। विग्रहस्तु रुचिरर्थो येषामिति। ते च रुचिना धातुना समानार्था भवन्ति। 'प्रीयमाणः' इति। 'प्रीञ् तर्पणे' (धा. पा. १४७४) इत्यस्मात् [12]क्रैयादिकात् सकर्मकात् कर्मणि [13]लः। [14]दैवादिकस्तु ङिदकर्मकः, तर्पमाण इत्यर्थः। 'अन्यकर्तृकः' इति। योऽभिलाषस्याश्रयः प्रीयमाणस्ततोऽन्यकर्तृक इत्यर्थः। कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्ता भवति, यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्ता ? नेदं कर्तृलक्षणम्, किं

1. अन्तरा नास्ति 2. प्र नास्ति ३. सम्प्रदर्शन 4. सम्पश्यति 5. अददातिकर्मत्वात् 6. यत् इत्यधिकम् 7. वहानः 8. हव्यं मूर्धा 9. यदङ्गमाशुषे त्वम् इति मुद्रितःपाठः 10. व्याप्यमानस्य 11. ग्रामाय गच्छति अभेदविवक्षायां इत्यधिकम्। 12. क्रैयादिकात् नास्ति 13. लः नास्ति 14. तद्रूदैवादिकस्तु,

तु स्वातन्त्र्यमेव । तच्च क्वचिद्वास्तवम्, क्वचिद्वैवक्षिकम् । तदत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयन्मो-
दकस्तत्र कर्तेति गीयते । न चैवं लषेरपि प्रसङ्गः, 'देवदत्तो मोदकमभिलष्यति' इति । अभिधानशक्तिवैचित्र्यादाश्रय-
कोऽभिलाषो लषेर्वाच्यः, रुचेस्तु विषयकर्तृकः । दृष्टश्चायमभिधानप्रकारनियमोऽन्यत्रापि, तद्यथा—'[1]घटः पश्यति' इ-
दृशेराश्रयकर्तृकं ज्ञानं वाच्यम् । 'घटः प्रकाशते' इत्यत्र प्रकाशेर्विषयकर्तृकम् । विषय एव हि स्पष्टालोकमध्यवर्तित्वादि-
सौकर्येण देवदत्ताश्रये ज्ञाने कर्तेति व्यपदिश्यते, न तु ज्ञानेन कश्चिदतिशयो [2]विषयो जन्यते ।

कोऽयं प्रकाशो नाम, यं प्राकट्यमाचक्षते भाट्टाः, तत्र कारकशेषत्वेन षष्ठीप्रसङ्गे वचनम् । अन्ये तु 'प्रीयमा-
देवदत्तं मोदकः [3]प्रीणयति' इति कर्मसञ्ज्ञां प्राप्तां मन्यन्ते । अपरे त्वेवमाहुः—'देवदत्तो रोचयति मोदकम्' इ-
हेतुत्वे प्राप्ते वचनमिति, 'देवदत्तं हि प्राप्य रोचते मोदको न सर्वान्, [4]नानेच्छा हि प्राणिनः' इति । एवमुत्तरेष्वपि योगे-
द्रष्टव्यम् । उक्तं च—

> हेतुत्वे कर्मसञ्ज्ञायां शेषत्वे [5]वाऽपि कारकम् ।
> रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते ।। (वा. प. ३.७.१३०) इति ।

'पथि' इति । [6]हेतुकर्मसञ्ज्ञावदधिकरणसञ्ज्ञा बाध्येतेति भावः । किं च प्रीयमाणग्रहणादेवा दत्यो रोचत इ-
दीप्तिवाचिनामग्रहणम् ।।

## ३४. श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।

'ज्ञीप्स्यमानः' इति । 'मारणतोषणनिशामनेषु ज्ञा' (धा. पा. ८११) इति घटादिषु पठ्यते, तस्मान्नि-
शामनेऽर्थे हेतुमण्णिचि सनि 'आप्ज्ञप्यृधामीत्' (७.४.५५), अत्र लोपोऽभ्यासस्य' (७.४.५८), कर्मणि लटः शानजादेशः ।
निशामनं चेह ज्ञानमात्रमुच्यते, न चक्षुर्विज्ञानमेव, यदाह—'बोधयितुमभिप्रतः' इति । कथं तर्हि प्रयुज्यते—तज्ज्ञापयत्या-
चार्यः, 'विज्ञापना भर्तृषु सिद्धिमेति' इति ? तस्मान्निशानेष्विति पाठः । 'शो तनूकरणे' (धा. पा. ११४६। ल्युडन्त-
'सञ्ज्ञपितः पशुः' इत्युदाहरणम् । ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगः 'ज्ञप मिच्च' (धा. पा. १६०४) इति
चुरादिणिजन्तस्य । अन्ये तु—'मितां ह्रस्वः' (६.४.९२) इत्यत्र 'वा चित्तविरागे' (६.४.९१) इत्यतो वेत्यनुवर्तते व्यव-
स्थितविभाषाविज्ञानाच्चानिष्टे विषये ह्रस्वाभावमाहुः । 'देवदत्तं प्रति श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः'
इति । श्लाघा स्तुतिः, प्रत्यक्षेण देवदत्तं स्तौतीति यावत् । एवं हि तां देवदत्तः शक्यते ज्ञापयितुम् । अन्ये त्वाहुः—
'देवदत्तायात्मानं परं च श्लाघ्यं कथयतीत्यर्थः' इति । तथा च भट्टिकाव्यम्—

> श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ।। (भ. ८.७३) इति ।

आत्मानं श्लाघ्यं परस्त्रीभ्यः कथयन्नित्यर्थः । एवं 'देवदत्ताय निह्नुते' इति । 'ह्नुङ् अपनयने' (धा पा. १०८२)
देवदत्तं प्रति निह्नुवानस्तां निह्नुतिं तमेव [7]ज्ञापयितुमिच्छतीत्यर्थः । इत्येष एवंशब्दस्यार्थः । निह्नुतिरपलाप-
संनिहितमेव[8] देवदत्तं धनिकादेरपलपतीत्यर्थः । अन्ये तु 'ह्नोतव्यं किञ्चिद्देवदत्तं ज्ञापयतीत्यर्थः' इत्याहुः । 'देवदत्ताय
तिष्ठते' इति । ईदृशोऽहमिति देवदत्तस्य स्थानेन प्रकाशयतीत्यर्थः । 'देवदत्ताय शपते' इति । शपथेन [9]किञ्चित् प्रकाशय-
तीत्यर्थः । 'देवदत्तः श्लाघते' इति । ज्ञीप्स्यमानवचनात् कर्मसञ्ज्ञैव बाध्यते, न कर्तृसञ्ज्ञेत्यर्थः । एवं 'गार्गिकया श्लाघते
सभायाम्' इति करणाधिकरणसञ्ज्ञे न बाध्येते । क्वचित्तु 'देवदत्तं श्लाघते' इति पाठः । तत्रायं भावः—यस्मायाख्यायते स
ज्ञीप्स्यमान इत्याख्यायमाना द्वितीयैव न्याय्येति । ये त्वाख्यायमानं ज्ञीप्स्यमानं वदन्ति तेषां यस्मायाख्यायते ततः षष्ठी
भवति—'देवदत्ताय श्लाघते यज्ञदत्तो विष्णुमित्रस्य' इति ।।

---

1. घटं 2. "विषयेषु" 3. "प्रीणातीति" 4. अनेकरुचयो हि प्राणिन इति 5. चापि इति मु° इ°
पाठः 6. वदधिकरणसञ्ज्ञा, नास्ति 7. "ज्ञपयितुमिच्छतीत्यर्थः', 8. एव नास्ति 9. प्रमाण यतीत्यर्थं

## ३५. धारेरुत्तमर्णः ।

'उत्तममृणं यस्य' इति । उत्तमम्=उत्कृष्टतमम्, उत्कृष्टार्थवृत्तेरुच्छब्दात्तमपि द्रव्यप्रकर्षत्वादामभावः । अतः क्तः, ऋगम् 'ऋगमाधमर्ण्ये' (८.२.६०) इत्यत्र कालान्तरे देयद्रव्यविनिमयोपलक्षणार्थमाधमर्ण्यग्रहणमित्युत्तमर्णेऽपि नत्वं भवति । अत्र बहुव्रीहौ निष्ठायाः पूर्वनिपाते 'जातिकालसुखादिभ्यः परवचनम्' (वा. ११६) इति सुखादेराकृतिगणत्वाद-स्मादेव वा निपातनादृणशब्दस्य परनिपातः । 'शतं धारयति' इति । 'धृङ् अवस्थाने' (धा. पा. १४१२), ध्रियमाणं स्वरूपेणावतिष्ठमानं स्वभावादप्रच्यवमानं शतं प्रयुङ्क्ते इति णिच् । 'ग्रामे' इति । [1]नन्वत्र परत्वादधिकरणसञ्ज्ञैव भविष्यति, उत्तमर्णेऽपि तर्हि हेतुसञ्ज्ञा स्यात् ॥

## ३६. स्पृहेरीप्सितः ।

'चुरादावदन्तः पठ्यते' इति । तेन स्पृहयतीत्यत्र 'अतो लोपस्य' (६.४.४८) स्थानिवद्भावाल्लघूपधगुणो नेति भावः । 'ईप्सितः' इति । 'मतिबुद्धि' (३.२.१८८) इत्यादिना वर्तमाने क्तः । ईप्सितमात्रे इयं सञ्ज्ञा । प्रकर्षविवक्षायां तु परत्वात् कर्मसञ्ज्ञैव भवति—'पुष्पाणि स्पृहयति' इति । यदा त्वीप्सितमीप्सितमं वा शेषत्वेन विवक्ष्यते, तदा षष्ठी भवति ॥

## ३७. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।

'गुणेषु' इति । शौचाचारादिषु । 'दोषाविष्करणम्' इति । दम्भादिदोषाख्यास इत्यर्थः । तत्र क्रुधद्रुहावकर्मकाविति कारकशेषत्वात् 'नटस्य शृणोति' इतिवत् षष्ठ्यां प्राप्तायां वचनम्, इतरयोस्तु सकर्मकत्वात् द्वितीया प्राप्नोति । अत्र च चित्तदोषरूपत्वं यद्यपि क्रोधादीनामविशिष्टम्, तथाप्यन्येषामेवञ्जातीयकानां द्वेषादीनामग्रहणार्थमवान्तरभेद-विवक्षया पृथगिमे निर्दिष्टाः, न तु चित्तदोषार्थानामिति । तेन 'अस्मान् द्वेष्टि' (कौ उ. २.९) इत्यत्र न भवति । अनभिनन्दनं ह्यस्यार्थः । तथा चाचेतनेष्वपि प्रयुज्यते—'औषधं द्वेष्टि' इति । कथं पुनरेकेन क्रुधिना सर्वे क्रुधादयः शक्या विशेषयितुमत आह—'क्रोधस्तावत्' इति । 'भार्यामीर्ष्यति' इत्यत्र केवलं परैर्दृश्यमानां भार्यां न क्षमते, न तु तां प्रति कोपः ॥

## ३८. क्रुधद्रुहोरुपसृष्टयोः कर्म ।

'उपसर्गेण सम्बद्धयोः' इति । 'उपसर्गाः क्रियायोगे' (१.४.५९) उपसृजन्तीत्युपसर्गाः, 'पचाद्यचि' (७.३.५२) 'न्यङ्क्वादित्वात्' कुत्वम् । तेनोपसृष्टयोरित्यस्योपसर्गेण सम्बद्धयोरित्ययमर्थो भवति । स्वनिकायप्रसिद्धिर्वा ॥

## ३९. राधीक्ष्योर्यस्य विप्रश्नः ।

'यस्य' इति कर्मणि षष्ठी, यद्विविधं पृच्छ्यत इत्यर्थः । यत्सम्बन्धीत्यादि । यत्सम्बन्धिनः शुभाशुभस्य विप्रश्न इति । 'देवदत्ताय राध्यति' इति । 'राधोऽकर्मकाद् वृद्धावेव' (धा. पा. ११८०) इति दिवादौ, तत्र वृद्धावित्युपलक्षणमकर्मकाविति वचनात् वृद्धावकर्मकत्वाव्यभिचारात् । एवकारस्तु भिन्नक्रमः—राधोऽकर्मकादेव श्यन् भवति, यथा—वृद्धाविति । तेन सत्यप्येवकारे पर्यालोचनस्य वृत्तिरविरुद्धा । तत्र धात्वर्थेनोपसङ्ग्रहाज्जीवत्यादिवत् [2]राधोऽकर्मकत्वमविरुद्धम् । निमित्तं वेद नैमित्तिकः, 'उञ्छादिषु' (६.१.१६०) वसन्तादिषु (४.२.६३) वा निमित्तशब्दो द्रष्टव्यः । यस्यग्रहणमनर्थकम्, यं प्रतीत्येव, तत्र यं प्रति विप्रश्न इत्यन्वये किं नाम विवक्षितं न सिद्धयति ॥

## ४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।

द्विवचननिर्देशात् प्रत्येकमुपसर्गसम्बन्ध इत्याह—'आङ्पूर्वस्य प्रतिपूर्वस्य च' इति । कः पुनरत्र पूर्वो व्यापार इत्यत्राह—'प्रत्याङ्पूर्वश्च' इत्यादि । 'परेण प्रयुक्तस्य' इति । इदं मे देहीत्येवं प्रार्थितस्येत्यर्थः । 'पूर्वस्याः क्रियायाः' इति ।

1. ननु नास्ति, 2. ०अविरुद्धं नास्ति

सूत्रे तु व्यापाररूपविवक्षया पूर्वस्येति निर्देशः, [1]यत्र हेतुसञ्ज्ञायां प्राप्तायां 'देवदत्तेन प्रतिशृणोति' इति प्रयोगनिवृत्तये वचनमित्याहुः । विवक्षान्तरे च 'देवदत्तो गां प्रतिश्रावयति' इति भवत्येव ॥

## ४१. अनुप्रतिगृणश्च ।

पूर्वेण साहचर्यादत्रापि प्रत्येकमुपसर्गसम्बन्ध इत्याह--'अनुपूर्वस्य प्रतिपूर्वस्य च' इति । कः पुनरत्र पूर्वो व्यापार इत्यत्राह-- 'होता प्रथमम्' इत्यादि । 'अन्यः' इति । अध्वर्युः । कथं पुनर्ज्ञायते--अनुप्रतिपूर्वो गृणातिः शंसितुः प्रोत्साहने वर्तत इत्याह--'अनुगरः प्रतिगरः' इत्यादि । अनुगीर्यते [2]प्रोत्साहयते येन शब्देन सोऽनुगरः । [3]एवं प्रतिगरः ओथामो दैवेत्येवमादिकः शब्दः, तेन हि प्रतिगीर्यते ॥

## ४२. साधकतमं करणम् ।

'षिधू संराद्धौ' (धा. पा. ४८) इत्यस्य हेतुमण्ण्यन्तस्य 'सिद्ध्यतेरपारलौकिके' (६.१.४९) इत्यात्वे 'राध साध संसिद्धौ' (धा. पा. १२६३.६४) इत्यस्य वा ण्यन्तस्य साधकशब्दः क्रियात्मकश्चार्थः । प्रयोज्यः कर्ता, सिध्यतः साध्यवतो वा क्रियात्मनोऽर्थस्य प्रयोजकतमं साधकतमम् । ननु सामग्र्यधीना क्रियासिद्धिर्नो खलु कर्त्रादीनामन्यतमापायेऽ[4]पि क्रिया निष्पद्यते, तत्किमपेक्षः कारकाणां मध्ये [5]एकस्यातिशययोगः स्यात् ? उच्यते, दात्रादेः छेद्यद्रव्यानुप्रवेशो व्यापारः, काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः, तदनन्तरमेव क्रियासिद्धिः, नैवं कारकान्तरेष्वनुप्रवेशः तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः समस्ति, अतः—

> क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
> विवक्ष्यते यदा तत्र [6]करणत्वं तदा स्मृतम् ॥ (वा. प. ३.७.९०)

'विवक्ष्यते' इत्यनेनैतद्दर्शयति—देशकालावस्थाविशेषेण यस्य क्रियां प्रत्युपयोगातिशयेन व्यापारः प्रत्यासीदन् विवक्ष्यते, तदा तस्य करणत्वं भवतीति । यथा स्थाल्यधिकरणत्वेन प्रसिद्धा, तस्या अपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति—'स्थाल्या पच्यते' इति । उक्तं च—

> वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
> स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ (वा. प. ३.७.९१) इति ।

न चैवं कर्तुरपि [7]करणत्वविवक्षा[8]प्रसङ्गः, [9]भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ, न च शतधनो निष्कधनेन सह स्पर्धते ? कथं तर्हि 'अश्वेन दीपिकया रथेन सञ्चरते' इति बहूनां करणत्वम्, यावता तेष्वपि यदासन्नोपकारकम् तदेव करणं युक्तम् ? उच्यते, कारकान्तरापेक्षः करणस्यातिशयः, न स्वकक्षायाम्, तेन सर्वेषां क्रियानिष्पत्तौ सन्निपत्योपकारकत्वात् सिद्धं करणत्वम् ।

'तमब्ग्रहणं किम्' इति । कारकाधिकारात् सिद्धे साधकत्वे पुनः साधकश्रुतिः प्रकर्षार्था भविष्यतीति प्रश्नः 'गङ्गायां घोषः' इति । असति तमब्ग्रहणे[10] आधारो [11]नाम यत्राधारात्मा व्याप्तो भवत्याधेयेन, तेनैव स्यात्—'तिलेषु तैलम्, पयसि सर्पिः, इति, 'गङ्गायां घोषः' इत्यत्र न स्यात् । तमब्ग्रहणं तु ज्ञापयति—इह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते[12], [13]तेनेहापि भवति । यदा च देशधर्मो घोषं प्रत्याधारभावः स्रोतस्युपचर्यते, तदेवं तमब्ग्रहणस्य प्रयोजनम्, यदा तु गङ्गाशब्दस्तीरे वर्तते तदा न प्रयोजनम्, आधेयेन व्याप्तिसम्भवात् मुख्य एवाधारभाव इति ॥

---

1. तत्र 2. प्रोत्साहयते नास्ति. 3. एवं प्रतिगरः नास्ति 4. अपि नास्ति 5. विशिष्यास्यातिशययोगः 6. करणं तत्तदा स्मृतम् इति मुद्रितः पाठः 7. करणत्वे 8. प्रसङ्गः नास्ति 9. अनासन्नसाधनत्वात 10. ... इत्यधिकम् 11. न्याय्यः 12. इति इत्यधिकम्, 13. तेनात्रापि ।

## ४३. दिवः कर्म च ।

ननु च 'अक्षान् दीव्यति' इत्यत्र पातयतीत्यर्थस्तत्र कर्मत्वं सिद्धम्, [1]'अक्षैर्दीव्यति' इति क्रीडतीत्यर्थः तत्र करणत्वं सिद्धम्, किमर्थमिदमित्याशङ्क्याह—'पूर्वेण करणसञ्ज्ञायाम्' इति। अक्षैः क्रीडतीत्यस्यामेव विवक्षायाम् 'अक्षान् दीव्यति' इतीष्यते, अत्र च करणसञ्ज्ञैव प्राप्नोति, अक्षान् पातयतीत्यत्र चार्थेऽक्षैर्दीव्यतीति नेष्यते, अतः साधकतमस्यैव करणसञ्ज्ञायां प्राप्तायामयमारम्भ इत्यर्थः। अथ किमर्थश्चकारः ? करणसञ्ज्ञापि यथा स्यात्, नैतदस्ति प्रयोजनम्, वक्ष्यमाणमन्यतरस्यांग्रहणमिहैव करिष्यामि, तत्राह—'चकारात् करण[2]सञ्ज्ञं च' इति। युगपत्सञ्ज्ञाद्वयं यथा स्यादिति भावः। अन्यतरस्यांग्रहणे तु पर्यायः स्यात्—यदा कर्म न तदा करणम्, यदा करणं न तदा कर्म, चकारात्तु युगपदेव सञ्ज्ञाद्वयं भवतीत्यर्थः। यौगपद्यप्रयोजनं 'मनसा दीव्यति' इति कर्मत्वादण् प्रत्ययः, करणत्वाच्च तृतीया 'मनसः सञ्ज्ञायाम्' (६.३.४) इत्यलुक्—'मनसा देवः'। इह च 'अक्षैर्देवयते देवदत्तो यज्ञदत्तेन' इति, अक्षैरिति तृतीयाप्रयोगेऽपि धातोः सकर्मकत्वात् 'गतिबुद्धि' (१.४.५२) इत्यादिनाऽण्यन्तावस्थायां कर्तुर्यज्ञदत्तस्य कर्मसञ्ज्ञा न भवति, 'अणावकर्मकात्' (१.३.८८) इति परस्मैपदं च। यदि तर्हि समावेशः—'अक्षान् दीव्यति' इति परत्वात् तृतीया प्राप्नोति, पर्याये तु नायं दोषः, कर्मसञ्ज्ञापक्षे करणसञ्ज्ञाया अभावात्। समावेशे तु करणसञ्ज्ञाया अवकाशः—[3]'विदेवना अक्षाः', 'करणाधिकरणयोश्च' (३.३.११७) इति ल्युट्, कर्मसञ्ज्ञाया अवकाशः—'दीव्यन्ते भवताऽक्षाः', 'भावकर्मणोः' (१.३.१३) इति यगात्मनेपदे, अक्षानित्यत्र तूभयसञ्ज्ञाकार्यप्रसङ्गे परत्वात्तृतीया स्यात्, नैष दोषः, 'कार्यकालं हि सञ्ज्ञापरिभाषम्' (व्या. प. ५८), ततश्च 'कर्मणि द्वितीया' (२.३.२) इत्यत्र यदस्योपस्थानं तदनवकाशमिति द्वितीया भविष्यति। अयं तर्हि समावेशे दोषः—'दीव्यन्ते अक्षाः' इति कर्मण्यभिहितेऽपि करणस्यानभिहितत्वात्तृतीया स्यात्, तथा देवना अक्षा इति ल्युटा करणस्याभिधानेऽपि कर्मणोऽनभिधानेन द्वितीया स्यात् ? नैष दोषः, एकैव कारकशक्तिः सञ्ज्ञाद्वययोगिनी। ततश्चैकस्मिन् कारकेऽभिहिते कारकान्तरमप्यभिहितमेव भवति, शक्तेरेकत्वात्॥

## ४४. परिक्रयणे संप्रदानमन्यतरस्याम् ।

परिक्रयणशब्दे धातुगतमेव रेफमाश्रित्य 'रषाभ्याम्' (८.४.२) इत्येव णत्वम्, [4]प्रथमोपनिपतितत्वात्, यथोपसर्गाभावे क्रयणमिति, न तूपसर्गस्थमाश्रित्य 'कृत्यचः' (८.४.२९) इत्यनेन तस्य पश्चादुपनिपतितत्वेन बहिरङ्गत्वात्। 'वेतनादिना' इति। वेतनं भृतिः, नियतकालत्वमेव स्पष्टयति। 'नात्यन्तिकः क्रय एव' इति। परिशब्दः सामीप्यं द्योतयति। क्रयो नामात्यन्तिकं स्वीकरणम्, नियतकालं तु तस्य समीपमेवेति परिशब्दस्यार्थः॥

## ४५. आधारोऽधिकरणम् ।

'आध्रियन्तेऽस्मिन् क्रिया इत्याधारः' इति 'अध्यायन्यायोद्याव' (३.३.१२२) इत्यादिनाऽधिकरणे घञ्। क्रियापेक्षत्वात् कारकभावस्य क्रियाग्रहणम्। यदि क्रियाधारस्याधिकरणसञ्ज्ञा कर्तृकर्मणोरेव स्यात्। कर्तृस्था हि क्रिया भवति कर्मस्था वा। कर्तृसञ्ज्ञायाः कोऽवकाशः ? ये कर्मस्थक्रिया —'पचत्योदनं देवदत्तः इति'। नन्वत्राप्यधिश्रयणादेराधारः कर्तेति स्यादेव प्रसङ्गः ? अयं तर्ह्यवकाशः—'देवदत्ताय रोचते मोदकः' इत्युक्तम्, [5]अत्र 'देवदत्तस्थस्याभिलाषस्य मोदकः कर्तेति। अथाप्यनवकाशा कर्तृसञ्ज्ञा ? एवमपि पर्यायः स्यात्। अथ कर्मसञ्ज्ञायाः कोऽवकाशः ? ये कर्तृस्थक्रियाः—'आदित्यं पश्यति' इति। अतः कर्तृकर्मणोरेवाधिकरणसञ्ज्ञाप्रसङ्ग इत्यत आह—कर्तृकर्मणोः इत्यादि। कथं पुनः साक्षात् क्रियाधारे सम्भवति क्रियाधारभूतकर्तृकर्मव्यवधानेन क्रियाधारस्य गौणस्य ग्रहणं शक्यं विज्ञातुम् ? करणसञ्ज्ञायां तमब्ग्रहणेन ज्ञापितमेतत्—यथाकथंचित् क्रियाधारस्यापि करणसञ्ज्ञा भवतीति। मुख्यस्यापि तु कस्मान्न स्यात् ?

---

1. "अक्षैर्दीव्यतीति सिद्धम्" अयं भागो नास्ति, 2. संज्ञा 3. "देवना" 4. प्रथमोपनिपातित्वात् 5. "ह्यत्र"

[1]इत्येतावदपि न, परत्वात् [2]कर्तृकर्मसञ्ज्ञायाम् बाधितत्वादिति गतमेतत् । 'आस्ते' इति कर्तृस्थायाः क्रियाया उदाहरणम्, पचतीति कर्मस्थायाः ।

त्रिविधं [3]च तदधिकरणम्—'औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं च' इति । 'कटे आस्ते, गुरौ आवसति, तिलेषु तैलम्' इति ॥

## ४६. अधिशीङ्स्थासां कर्म ।

## ४७. अभिनिविशश्च ।

नेरल्पाच्तरस्यापूर्वनिपातात् 'अभिनि' इति समुदायानुकरणमित्याह—'अभिनिपूर्वस्य' इति । अन्यथाऽभिपूर्वस्य निपूर्वस्य चेति ब्रूयात् ॥

## ४८. उपान्वध्याङ्वसः ।

'वसेरश्यर्थस्य' इति । अर्थशब्दो निवृत्तिवचनः, व्यधिकरणे षष्ठ्यौ, अश्यर्थस्य यो वाचकस्तस्येत्यर्थः। भोजननिवृत्तिवाचिन इति यावत् । यद्वा—शीङोऽर्थः[4] श्यर्थः, न श्यर्थः[5] तस्य अस्थानार्थस्येत्यर्थः। स्थानेऽपि हि शीङ् वर्तते—'जलाशयम्' इति । तेन ग्रामे तिष्ठतीत्यत्रार्थे 'ग्राममुपवसति' इति भवति । अस्थानार्थत्वे तु ग्रामे उपवसतीति, स तर्हि प्रतिषेधो वक्तव्य, न वक्तव्यः, कथम् ? नात्रोपपूर्वस्य वसेः ग्रामोऽधिकरणम्, किं तर्हि ? अनुपसर्गस्य—'ग्रामे वसन् त्रिरात्रमुपवसति' । एतदुक्तं भवति-विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रतिपादयितुमिदं प्रयुज्यते—'ग्राम उपवसति' इति । तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवान्तरङ्गः सम्बन्धः, ग्रामादिना तु बहिरङ्ग इत्यप्रयुक्तमपि त्रिरात्रादिकं कर्म भवति ॥

## ४९. कर्तुरीप्सिततमं कर्म ।

'कर्तुः क्रियया' इत्यादि । कर्तुर्यदाप्तुमिष्टतममित्यन्वयः, कर्तुरिति चेप्सितापेक्षया 'क्तस्य च वर्तमाने' (२.३.६७) इति कर्तरि षष्ठी । ईप्सित इति 'मतिबुद्धि' (३.२.१८८) इत्यादिना वर्तमाने क्तः । 'क्रियया' इति करणे तृतीया, कर्ता हि नाम यः क्रियामनुतिष्ठति तेन कर्तुर्यदिष्टतममित्युक्ते तत्क्रियावेशादसौ कर्ता भवति तया करणभूतयेति गम्यते, कर्त्रा यदाप्तुमिष्यते आत्मीयया क्रिययेत्यर्थः । ईप्सितशब्दोऽयमस्त्यभिप्रेते रूढः—ईप्सितोऽभिप्रेत इति । अस्ति क्रियाशब्दः—'आप्लृ व्याप्तौ' (धा. पा. १२६०) सन्, 'आप्ज्ञप्यृधामीत्' (७.४.५५) 'आप्तुमीप्सितम्' इति । तत्र क्रियाशब्दस्येह ग्रहणमिति दर्शितम्—'आप्तुमिष्टतमम्' इति ।

'कर्मणः' इति । अश्वस्य । स हि भक्षणक्रियया माषानाप्तुमिच्छति । यद्येवम्, यथाऽश्वस्य वस्तुतो भक्षणे कर्तृत्वे सत्यपि सम्प्रति बन्धनं प्रति कर्मत्वेन विवक्षितत्वा[6]दकर्तृत्वात् माषाणां कर्मसञ्ज्ञया न भवति, तथा 'सार्थाद्धीयते' इत्यत्रापि 'हीयमानं सार्थो जहाति' इति वस्तुवृत्तेन त्यागेन कर्तुरपि सार्थस्य सम्प्रत्यपादानरूपेण विवक्षितत्वात् अकर्तृत्वात् कर्मणि यगात्मनेपदे न स्य ताम् ।

अत्राहुः—कर्मकर्तर्यत्र यगात्मनेपदे, कथम् ? जहातिरयं गमनायां वर्तते—'देवदत्तं सार्थो जहाति,' अपगमयतीत्यर्थः, एवंत्र च सार्थस्यापगमना यदुत क्षुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणम् । यदा तु क्षुधादिना स्वयमेव

1. इत्येतदपि 2. कर्तृकर्मसञ्ज्ञाभ्याम् 3. "च तत्", नास्ति 4. यस्य स इत्यधिकम्, 5. अश्यर्थ इत्यधिकम् । 6. अकर्तृत्वात् नास्ति ।

पगच्छति, तदा कर्मकर्तृत्वम्, तदायं प्रयोगः। ततश्च हीयत इति सार्थः स्वयमेवापगच्छतीति: पुनः कुतो हीयते ?- इत्यपेक्षायां सार्थेन सम्बन्ध इति।

'तमब्ग्रहणं किम्' इति। ईप्सिततमस्यापीप्सितत्वसम्भवादुदाहरणसिद्धिं मन्यते। 'पयसौदनं भुङ्क्ते' इति। करणसंज्ञा तु दात्रेण लूनातीत्यादौ सावकाशा, न हि दात्रं लवनेप्सितम्। 'तथा युक्तम्' (१.४.५०) इत्यनेनापि न भवति, द्वेष्योदासीनप्राप्ययोस्तत्र ग्रहणात्। सत्यप्यत्र पयसो भुजिक्रियायां प्रकृष्टोपकारकत्वे ईप्सायाः प्रकर्षाभावः। यत्र तर्हि पय एवेप्सिततमम्, तत्र प्राप्नोति, तद्यथा कश्चित् कञ्चिदाह-सिद्धं भुज्यतामिति; स आह-प्रभूतं भुक्तमस्माभिरिति, इतर आह-पयो भविष्यतीति, अपरस्त्वरमाण आह-पयसा खलु भुञ्जीयेति; अत्र प्राप्ताप्राप्तविवेकेन पयस एवेप्सिततमत्वं न त्वोदनस्य, अत्राप्योदनमेवेप्सिततमम्; पयसस्तु संस्कारकत्वात् करणत्वम्। न त्वस्य केवले गुणे आदरः, किं तर्हि ? तत्संस्कृते ओदने, न ह्यसौ केवलस्य पयसः पानेन सन्तुष्यतीति। यदि तमब्ग्रहणं क्रियते, पयसौदनं भुङ्क्त इत्यत्रैव स्यात्, पचत्योदनमित्यादौ न स्यात्, न हीप्सिततमं युक्तम्, असति प्रतियोगिनि वस्तु यत्तुल्यजातीयं तदेव प्रतियोगितां भजते। कारकं चात्र न किञ्चिदिष्टमीप्सितं पयस्त्वीप्स्यमानत्वाद्युज्यते प्रतियोगिता, नैष दोषः; अत्रापि क्रियापेक्षः प्रकर्षः, आदौ हि कर्त्ता फलार्थं क्रियामभीप्सति, अतः फलार्थमिष्यमाणत्वादीप्सिता क्रिया। फलं तु स्वरूपेणेष्यमाणमीप्सिततमं क्रियाया अपि कर्मत्वं सन्दर्शनादिविशेषान्तरस्पर्धया। यत्र तर्हि फलाभावस्तत्र न स्यात्, क्व च फलाभावः ? विकार्ये-काष्ठानि भस्मीकरोतीति, न हि काष्ठानि फलरूपाणि। मा भूवन् तानि स्वरूपेण फलानि, भस्मात्मना तु फलानि ? प्राप्ये तर्हि न स्यात्-आदित्यं पश्यति, हिमवन्तं शृणोतीति, न ह्यत्र क्रियया कश्चिदतिशयो जन्यते। अत्राप्यतिशयो जन्यते-प्राकट्यं नाम ? यो हि यं पश्यति शृणोति वा तस्यासौ प्रकटो भवति, प्रतिपत्त्राद्यतिरिक्तपुरुषापेक्षया तु विशेषो नास्तीत्युच्यते। यद्वा-तमब्ग्रहणेन यत्रापकृष्टेच्छा तदेव व्यावर्त्यते, तेन पश्यतीत्यादावादित्यादीनामपि प्रतियोगिनोऽसत्त्वेनापकर्षाभावाद्भविष्यति, अत्र च लिङ्गम् 'ललाटकुक्कुट्यौ पश्यति' इति।

'कर्मेत्यनुवर्त्तमाने' इति। 'अधिशीङ्स्थासाम्' (१.४ ४६.) इत्यतः। 'आधारनिवृत्त्यर्थम्' इति। प्राच्यं कर्मग्रहणमाधारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः। आधारानुवृत्तौ को दोषः ? तत्राह—'आधारस्यैव हि स्यात्' इति। क्वेत्याह-'गेहम्' इत्यादि। यत्र तु न स्यात् तदाह-'ओदनं पचति' इत्यादि।

एतच्चेप्सिततमं कर्म त्रिविधम्-निर्वर्त्यम् विकार्यम्, प्राप्यमिति। तथायुक्तमपि द्विविधम्-द्वेष्यम्, इतरच्च। 'अकथितं च' (१.४.५१) इत्यपरम्। संज्ञान्तरप्रसङ्गे चान्यत्-'दिवः कर्म च' (१.४.४३) इत्यादि। तदेवं सप्तविधं कर्म। उक्तं च—

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥ इति॥ (वा.प.३.७.४५,४६)

तथा—

यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते।
तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥

प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत् ।
किञ्चिद्‌गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इति ॥ (वा.प.३.७.४९-५१)

तत्र निर्वर्त्यम्-घटं करोतीति; व्यक्त्यभिप्रायेण जन्मसामान्याभिप्रायेण प्रकाशनम् । ननु च यदि घटः? न कर्त्तव्यः; अथ कर्त्तव्यः ? न घटः; इत्यनुपपन्नं घटं करोतीति ? नैष दोषः; तथाविधं वस्तु करोति यस्य निष्पन्नस्य घट इति संज्ञेति-अयमत्रार्थः । एवमोदनं पचतीत्यादावपि । विकार्यम्-काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोतीति । प्राप्यम्-आदित्यं पश्यतीति । न ह्यत्र प्रत्यक्षेण अनुमानेन वा क्रियाजन्यः कश्चिदतिशयो गम्यते, यथा-निर्वर्त्यविकार्ययोः रज्जुं सृजति, काष्ठं दहति, देवदत्तं रोषयतीति । कारकत्वं तु प्राप्यस्याभासोपगमादिभिः, आदित्यो ह्याभासमुपगच्छति, यतो दृश्यते अभिव्यक्तिमुपयाति, यतो व्यक्तमुपलभ्यते सहते च दर्शनम्, यतः शक्यते द्रष्टुं तदेवाभासोपगमः, व्यक्तिः, सोढत्वमिति कर्मणो विशेषाः प्राप्यमाणस्य क्रियासिद्धौ विवक्षिताः ॥

## ५०. तथायुक्तं चानीप्सितम् ।

तथेति पृथक् पदम्, नोपसमस्तम्; लक्षणाभावात् । चकारोऽवधारणे. अनेकार्थत्वान्निपातानाम्, तथेत्यस्य चानन्तरे द्रष्टव्य इत्याह-'तेनैव' इति । 'ईप्सितादन्यत् सर्वमनीप्सितम्' इति ।

यथा अधर्मानृतादिभिरुत्तरपदार्थप्रतिपक्षभूतं यद्वस्तु तत्प्रतिषेधद्वारेणाभिधीयते, तथेहानीप्सितशब्देनेप्सितप्रतिपक्षभूतं न द्वेष्यमेवाभिधीयते, किं तर्हि ? अश्व-लोष्ट-इत्यादिवदीप्सितव्यतिरिक्तं सर्वमिति सर्वशब्दस्यार्थः । 'विषं भक्षयति' इति । न कस्यापि विषमीप्सिततममिति भावः । ननु स एव मनुष्यो व्याध्यादिना सर्वतः पीडितो मरणमेव ज्यायो मन्यते, तस्य विषमीप्सिततममेव; यदिष्टं गुडादिभ्रान्त्या विषे प्रवर्तते तस्यापि तदीप्सिततममेव, यदिष्टं गुडादि, तद्बुद्धिरेव तत्र प्रवर्तते; अतोऽत्र पूर्वेणैव सिद्धमित्युदाहरणान्तरोपन्यासः । 'ग्रामं गच्छन्' इति । नात्र वृक्षमूलानीप्सिततमानि पूर्वमनभिसंहितत्वान्नान्तरीयकं हि तदुपसर्पणम् । न चात्रापि यावद् ग्रामं गच्छन्निति न प्रयुज्यते तावन्नान्तरीयकता न प्रतीयत इति पूर्वेणैव सिद्धम्, यथा-नदी कूलं कषतीत्यत्राचेतनत्वादीप्साभावः, पदान्तरसम्बन्धात् प्रतीयमानो बहिरङ्गत्वात् कर्मसंज्ञां न प्रतिबध्नाति ? भवत्वयं प्रतिपत्तारं प्रति उपपादनप्रकारः, यस्तु प्रयुङ्क्ते स पूर्वमेवेप्साप्रकर्षाभावं जानन् तत्कथं प्रयुक्तमिति पूर्वेणासिद्धिरेव । एवं च नदी कूलमित्यत्रापि अनेनैव कर्मसंज्ञा । तथा यत्र क्रियायामेव तात्पर्यं न फले, नान्तरीयका तु फलसिद्धिः तत्राप्यनेनैव भवति ।

अथ क्रियाफलयोगि कर्मेति कस्मान्नोक्तम् ? यदीप्सिततमं यद् द्वेष्यमितरच्च तत्र सर्वत्रानुगतमेतत्, यद्युत क्रियाफलयोगित्वं कर्तुरपि तर्हि कर्मत्वं स्यात्, कियाफलस्य संयोगस्य तत्रापि भावात् । अथ परसमवेतक्रियाफलयोगीति लक्षणम् ? एवमप्यात्मा ज्ञातव्य इत्यत्र न स्यात्, संविदश्च स्वयं प्रकाशाभिमतायाः कर्मत्वं स्यात् । घटमहं जानामीत्यत्र हि त्रितयमेव भासते-घटः, ज्ञानम्, आत्मा चेति । तत्र ज्ञानं क्रिया, तत्फलं शब्दप्रयोगादिरूपो व्यवहारः, तेन युज्यमानस्य घटस्य यथा कर्मत्वं तथा ज्ञानस्यापि स्यात् । ज्ञानं हि क्रिया भवति व्यवहाररूपस्य फलस्याश्रयभूतम्, तस्यैव ज्ञानस्य यत् स्वरूपं तदपेक्षया यः पर आत्मा तत्र च समवैतीत्यलमियता । 'चोरान्' इत्यत्रापि मर्तुकामो वा मित्रादिरूपेण विपर्यस्यमानो वा चोरानुपसर्पतीति पूर्वेणैव सिद्धय् ॥

## ५१. अकथितं च ।

अकथितशब्दोऽयमस्त्यप्रधाने रूढः, तद्यथा–अकथितोऽहमस्मिन् ग्रामे, अप्रधानभूत इति गम्यते । अस्ति च क्रियाशब्दोऽकीर्तितपर्यायः । 'कथ वाक्यप्रबन्धे' (धा.पा. १८५१), चुरादावदन्तः पठ्यते, तत्र पूर्वस्य ग्रहणे 'पाणिना कांसपात्र्यां दोग्धि पय.' इत्यत्र पाणिकांसपात्र्योरपि स्तात् । करणाधिकरणसंज्ञयोस्तु पचत्यादिरवकाशः, न हि तत्रास्य प्रसङ्गः; 'दुहियाचि' इति परिगणनात्, अतो द्वितीयस्य ग्रहणम्, तदाह–'केनाकथितम् ? अपादानादिभिर्विशेषकथाभिः' इति । किमत्र प्रमाणं तदाह–'केन' इति । करणनिर्देशः । रूढिशब्देषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते; न तत्र करणादि सम्बध्यते, न हि गच्छतीति गौरित्यत्र केनेति प्रश्नो रथेनेति प्रतिवचनं वा भवति । इह 'कारके' (१.४ २३) इत्यनुवर्त्तनात् सत्येव कारकत्वेऽकथितस्य संज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरित्युक्तम् ।

'परिगणनं कर्त्तव्यम्' इति । नटस्य शृणोतीत्यादौ धात्वन्तरप्रयोगे मा भूत् । प्रच्छिभिक्षीत्यत्र 'छे च' (६.१.७३) इति तुक् प्राप्तोऽनित्यत्वादागमशासनस्य स न कृतः, 'सनाद्यन्ता धातवः' (३.१.३२) 'इको यणचि' (६.१.७७) इतिवत् ।

'उपयुज्यते इत्युपयोगः 'इति । असंज्ञायामपि कर्मणि घञ् । 'तस्य निमित्तं गवादि' इति । अनेन 'गां दोग्धि पयः' इत्यादौ पयःप्रभृतेरुपयुज्यमानत्वादीप्सिततमत्वम्, गवादेस्तु तदर्थत्वादुपादानस्यानीप्सिततमत्वं च दर्शयति । तथायुक्तत्वाभावाच्च गवादेस्तथायुक्तमित्यनेनापि न सिध्यति । एतदेव दर्शयति–'तस्यैवम्' इत्यादि । उपयुज्यमानस्य पयःप्रभृतेर्यन्निमित्तं गवादि तस्येत्यर्थः । पाण्यादिकमप्युपयोगनिमित्तमिति तेनापि विनोपयोगस्य पयसोऽसम्भवात् । 'तदर्थमाह' इति । तस्य करणादेः कर्मसंज्ञानिवृत्त्यर्थमित्यर्थः, प्रयोजनवचन एव चार्थशब्दो निवर्तमानतया तु प्रयोजनत्वम्, लुङ्सुखस्वरोपचाराः प्रयोजनमितिवत् । 'अपूर्वविधौ' इति । यत्रान्यो विधिर्नास्ति तत्रेत्यर्थः । पूर्वग्रहणमन्यमात्रोपलक्षणम्, तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोरपि विषये कर्मसंज्ञा न भवति । सूत्रेण कथितमिति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते, यथा 'पराजेरसोढः' (१.४.२६.) इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति–अध्ययनात् पराजेष्यत इति, तद्वदत्रापि साधनमिति । साधनं हि प्रधानभूतां क्रियामपेक्ष्य गुणो भवति ।

'प्रधानं कर्म धर्मादि' इति । तस्य तु प्राधान्यं तदर्थत्वात् प्रवृत्तेः । 'सम्बध्यते' इति । 'सचते' इत्यस्यार्थकथनमेतत्, 'षच समवाये' (धा.पा ९९७) स्वरितेत् । केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति 'षच समवाये' (धा. पा. ९९७) 'रप लप व्यक्तायां वाचि' (धा. पा. ४०१. ४०२) इति । तत्राहुः— 'षच सेवने' (धा. पा. १६३.) इत्यस्यानुदात्तेतोऽनेकार्थत्वात् समवाये प्रवृत्तिरिति, सम्बध्नातेश्च कर्मव्यापारे सचिर्वर्तत इति कर्तृपदस्य कर्मपेदनार्थकथनं नानुपपन्नम्, यथा–राध्यत्योदन इत्यस्य पच्यत इति । 'उक्तम्' इति । आचरितमित्यस्य विवरणम् । 'सूत्रकारेण' इति । कविशब्दो मेधाविमात्रवचनोऽपि प्रकरणात् सूत्रकारे प्रयुक्त इति दर्शयति । 'गां गोग्धि पयः' इति । ननु चात्रायमर्थः–गौः पयस्त्यजति, दोग्धा गवा पयस्त्याजयतीति; तत्र प्रयोजकव्यापारेणाप्यमानत्वात् सिद्धा गोः कर्मसंज्ञा । न च वाच्यम्–'प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादिष्वेवेत्युत्तरसूत्रे नियमादत्र न प्राप्नोति, यथा–पचन्तं देवदत्तं प्रयुङ्क्ते, पाचयति देवदत्तेनेत्यत्र' इति; ण्यन्तेष्वेव स नियमः, अयं तु प्रकृत्यन्तः नैतदस्ति; यथा ण्यन्तेषु धातुषु क्रियाविशिष्टस्य प्रयुक्तिः प्रतीयते–गमयतीति, नैवमत्र निष्क्रियस्यापि गवादेर्वोहननयनादिषु विनियोगात् । तथा ह्यबुहानापि गौर्दुह्यते, अगच्छन्तो भारावयः

शिरसा नीयन्ते, तस्माद्दोग्धीत्येकस्या एव क्रियायाः श्रवणाद्गोपयसोर्भेदेन कर्मत्वं न भवति । णिचि तु सति प्रकृत्यंशस्य प्रत्ययांशस्य च भेदेन द्वे क्रिये वाच्ये इति कर्मभेदोपपत्तिः ।

'गमयति ग्रामं देवदत्तम्' इति । यदा तु दुहेः क्षरणमर्थः–क्षरति गोः क्षीरम्, क्षीरं क्षारयति देवदत्त इ ते, तदा यद्यपि गोरत्रावधिभावो विद्यते, तथाप्यविवक्षिते तस्मिन् निमित्तत्वमात्रापेक्षायामुदाहरणोपपत्तिः। एवं चावधित्वविवक्षायामपादानसंज्ञायां भवत्येव–गोर्दुह्यते पय इति । यदा तु पयस्येव विशेषणं गौः, तदा षष्ठी-गोः पयो दोग्धीति ।

'पौरवं गां याचते' इति । पुरोरपत्यं पौरवः । ननु विहितात्रापादानसंज्ञा पौरवादसौ गामादत्ते, न याचनादेव तत आदत्ते, याचितोऽसौ यदि ददाति तत आदत्ते, ननु मा नामादिताऽऽदित्सते तावत्, तदपि न; यतः स्वभावपरिचिच्छित्सुरनादित्समानोऽपि याचते । 'गामवरुणद्धि व्रजम्' इति । ननु च गां व्रजं प्रवेशयतीत्ययमत्रार्थः, ततश्च सिद्धं व्रजस्य कर्मत्वम् ? अथ व्रजे गामवस्थापयतीत्यर्थः, तर्हि कथितात्राधिकरणसंज्ञा ; यदा तर्ह्यवरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्ष्यते न कर्मत्वं नाधिकरणत्वं तदेदमुदाहरणम् । व्रजेन हेतुनाऽवस्थापयतीत्यर्थः ।

'माणवकं पन्थानं पृच्छति' इति । 'प्रच्छ ज्ञीप्सायाम्' (धा.पा.१४१३) तुदादिः, ग्रहिज्यादिना (६.१.१६) सम्प्रसारणम् । ननु च कथितात्रापादानसंज्ञा, स हि तस्मादुपदेशमादत्ते न प्रश्नमात्रादादत्ते, पृष्टोऽसौ यद्युपदिशति तत आदत्ते । मा नामादिता, आदित्सते तावत् तदपि न, अनादित्समानोऽपि स्वभावपरिज्ञानाय पृच्छति । भिक्षिर्याचिवद्व्याख्येयः । किमर्थं पुनर्याचिभिक्ष्योरुभयोरुपादानम्, न ह्यनयोरर्थे भेदोऽस्ति, अर्थाश्रया चेयं संज्ञा, न दुह्यादिस्वरूपाश्रया । समानार्थेऽपि हि गृह्यते–देवदत्तं शतं प्रार्थयत इति ? उच्यते, अनुनयार्थस्य याचतेर्ग्रहणार्थम् । तेनाविनीतं विनयं याचते, क्रुद्धं प्रसादं याचत इत्यत्रापि भवति । सक्तुपात्तस्य चोरभयरूपानुपत्तेः भिक्षिरपि गृहीतः ।

'वृक्षमवचिनोति फलानि' इति । यद्यप्यवचिन्वद्वृक्षात् फलमादत्ते इत्यपादानसंज्ञाया अयं विषयः, तथापि यदा वृक्षो नावधित्वेन विवक्ष्यते निमित्तरूपेणैव तु विवक्ष्यते, तदेदमुदाहरणम् ।

'ब्रूतेऽनुशास्ति' इति । 'ब्रूञ् व्यक्तायां वाचि' (धा.पा. १०४४) 'शासु अनुशिष्टौ' (धा.पा. १०७५) अदादी, यद्यप्यत्र धर्मेण वचनानुशासनकर्मणा माणवकस्याभिप्रेयमाणत्वम्, तथापि ददातिकर्माभावात् सम्प्रदानसंज्ञाया अप्रसङ्गः । ये तु तत्र ददातिकर्मणेति नाश्रयन्ति, तेषामपि निमित्तत्वमात्रं विवक्षितं नाभिप्रेयमाणत्वमित्युदाहरणोपपत्तिः ।

अथान्येऽपि द्विकर्मकाः—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

'गत्यर्थानाम्' इत्युत्तर (१.४.५२) सूत्रोपलक्षणम् । नी-अजां नयति ग्रामम् । वहि-वहति भारं ग्रामम् । हरति–भारं हरति ग्रामम् । चकारेण जयत्यादयः समुच्चीयन्ते–शतं जयति देवदत्तम्, शतं मुष्णाति देवदत्तम्, शतं दण्डयति देवदत्तम्, कर्षति ग्रामं शाखाम् ।

इदं विचार्यते—द्विकर्मकेभ्यो धातुभ्यः कर्मणि लादय उत्पद्यमानाः किमीप्सिततमे कर्मणि प्रधाने उत्पद्यन्ते ? आहोस्विदनेन यस्य कर्मत्वं तस्मिन् गुणकर्मणीति ? तत्रोक्तम्—

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।

अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ इति ।

अयमर्थः—ये द्विकर्मका धातवस्तेषां प्रधाने कर्मणीप्सिततमे वाच्ये लादीनाहुः = लादयो भवन्तीत्याहुः । लादयः = लकृत्यक्तखलर्थाः । प्रधानाप्रधानयोर्भिन्नकक्षयोर्युगपदभिधानासम्भवे प्रधानस्यैवाभिधानं न्याय्यम्, प्रधानत्वादेवेति भावः । नी—नयते ग्राममजा, नेया, नीता, सुनया । वहि—उह्यते भारो ग्रामम्, वोढव्यः, ऊढः, सुवहः । हृञ्—ह्रियते भारो ग्रामम्, हर्त्तव्यः, हृतः, सुहरः । कृष्—कृष्यते शाखा ग्रामम्, क्रष्टव्या, कृष्टा, सुकर्षा ।

'अप्रधाने दुहादीनाम्' इति । अत्र दण्डिप्रभृतयोऽपि गृह्यन्ते, न तु दुहियाचीति श्लोकपठिता एव । एतेषां दुहादीनामप्रधाने कर्मण्याख्येये लादीनाहुः । एतदपि न्यायसिद्धम्; यतः पयोऽर्थी पूर्वं गवि प्रवर्त्तते, अतः शुद्धस्य दुहेर्गवाभिसम्बन्धः, गोदोहेन तु पयस इत्यन्तरङ्गत्वादकथितकर्मणस्तत्रैव लादयो भवन्ति । एवं सर्वत्र ।

दुहि—गौर्दुह्यते पयः, दोह्या, दुग्धा, सुदोहा । याचि—पौरवो गां याच्यते, याच्यः, याचितः, सुयाचः । रुधि—व्रजोऽवरुध्यते गाम्, अवरोध्यः, अवरुद्धः, स्ववरोधः । प्रच्छि—माणवकः पन्थानं पृच्छ्यते, प्रष्टव्यः, पृष्टः, सुप्रच्छः । भिक्षि—पौरवो गां भिक्ष्यते, भिक्षितव्यः, भिक्षितः, सुभिक्षः । चिञ्—वृक्षोऽवचीयते फलानि, अवचेतव्यः, अवचितः, स्ववचयः । ब्रूञ्—उच्यते माणवको धर्मम्, वक्तव्यः, उक्तः, सुवचः । शासु—अनुशिष्यते माणवको धर्मम्, अनुशासितव्यः, अनुशिष्टः, स्वनुशासः । दण्डि-गर्गाः शतं दण्ड्यन्ते, दण्ड्याः, दण्डिताः, सुदण्डाः । जि—शतं जीयते देवदत्तः, जेतव्यः, जितः, सुजयः । मुषि—मुष्यते देवदत्तः शतम्, मोषितव्यः, मुषितः, सुमोषः ।

'ण्यन्ते कर्तुश्च कर्मणः' इति । अभिधान इति शेषः । अण्यन्तावस्थायां कर्तृर्ण्यन्तावस्थायां कर्मणः सतोऽभिधाने लादीनाहुरित्यर्थः । एतदुक्तं भवति—ये गत्यर्थादयोऽण्यन्तावस्थायामपि सकर्मका ण्यन्तावस्थायामुत्तरसूत्रेण द्विकर्मका जाताः, तेषु ण्यन्तावस्थायां यदुत्तरसूत्रेणोपजातं कर्म तत्र लादयो भवन्तीत्यर्थः । गमयति ग्रामं देवदत्तम्; गम्यते ग्रामं देवदत्तः, गमयितव्यः, गमितः; सुगमः । बुध्यर्थः—बोध्यते माणवको धर्मम्, बोधयितव्यः, बोधितः, सुबोधः । प्रत्यवसानार्थः—भोज्यते माणवक ओदनम्, भोजयितव्यः, भोजितः, सुभोजः । शब्दकर्म—पाठ्यते माणवको वेदम्, पाठितः, पाठयितव्यः सुपाठः । अकर्मकः—आस्यते माणवको मासम्, आसयितव्यः आसितः, स्वासः ।

बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि लादय इति मतान्तरम् । बोध्यते माणवकं धर्मः, भोज्यते माणवकमोदनः, पाठ्यते माणवकं वेद इत्यादि ।

तदयमत्र निर्णयः—नीवहिहृकृषिभ्यः प्रधानकर्मणि लादयः; तत्सम्बन्धस्य पूर्वभावित्वात् । दुह्यादिभ्यो जिदण्डमुषिभ्यश्चाप्रधाने; तत्सम्बन्धस्यानन्तरङ्गत्वात् । बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि प्रधाने वा यथेष्टम्; गत्यर्थाकर्मकयोः हृक्रोश्च ण्यन्तयोः प्रयोज्ये कर्मणीति । प्रयोज्यस्य च प्राधान्येनाभिधीयमानाप्रयोजकव्यापारेणाप्यमानत्वात् प्राधान्यम् । गुणभूतप्रयोज्यव्यापारकर्मणस्तु गुणभाव आर्थेन न्यायेन प्रयोज्यव्या-

पारप्राधान्यम्, तदर्थत्वात् प्रयोजकव्यापारस्य। तत्प्राधान्याच्च तत्कर्मणोऽपि प्राधान्यमित्यन्ये। सर्वथा लादयः प्रयोज्यकर्मणीति स्थितम्।

अकर्मकाणां च धातूनां कालभावाध्वगन्तव्यदेशाः कर्मसंज्ञका इष्यन्ते। उक्तं च–'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्, देशश्चाकर्मकाणां तु कर्मसंज्ञो भवतीति वक्तव्यम्' इति। अध्वगन्तव्येति–गन्तव्योऽध्वा, अध्वा गन्तव्यः, कडारादिष्वध्वशब्दो द्रष्टव्यः। गन्तव्यत्वेन प्रसिद्धस्य नियतपरिमाणस्य क्रोशादेर्ग्रहणार्थं गन्तव्यग्रहणम्, तेनाध्वानं स्वपितीति न भवति। ननु च 'कालाध्वनोः' (२.३.५) इति सिद्धा द्वितीया, किं कर्मसंज्ञया? देशस्य तावद्वक्तव्या। कालाध्वनोरपि लादिविधानार्थं कर्मत्वमेषितव्यम्। आस्यते मासः, आसितः, आसितव्यः, स्वासः। एवं शय्यते क्रोश इत्यादि। भावः–गोदोहमास्ते। यावता कालेन गौर्दुह्यते तावन्तं कालमास्त इत्यर्थः। गोदोहादीनां मासादिवत् कालत्वेनाप्रसिद्धत्वाद्भावस्य पृथग्ग्रहणम्। देशः–कुरून् स्वपिति, कुरवः सुप्यन्त इत्यादि। 'कालाध्वनोरत्यन्तसंयोगे' (२.३.५) इति तु सूत्रमक्रियात्यन्तसंयोगार्थम्–मासं गुडधानाः, सर्वरात्रं कल्याणी, क्रोशं कुटिला नदीति। न तर्हि वक्तव्यम्–कालभावाध्वगन्यव्या इति? न वक्तव्यम् नात्रासिरासनमात्रे वर्त्तते, किं तु तत्पूर्वके व्यापने वर्तते-मासमास्ते। कोऽर्थः? मासमासनेन व्याप्नोतीति। एवं सर्वत्र। एवं च कृत्वा–सकर्मकेष्वपि मासादयः कर्म भवन्ति–मासं वेदमधीते, मासं वेदाध्ययनेन व्याप्नोतीत्यर्थः। अथ 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठी द्विकर्मकेषु किं प्रधाने कर्मणि भवति? आहोस्विद्गुणे भवति? आहोस्विदुभयोः? उभयोरिति प्राप्तं द्वितीयावद्भाष्यकारवचनात्तु गुणकर्मणि विकल्पेन षष्ठी। प्रधानकर्मणि नित्या–नेताऽश्वस्य स्रुघ्नस्य, स्रुघ्नमिति वा।

इहाकथितं कर्मेत्येतावदस्तु, मास्तु पूर्वसूत्रद्वयम्, तद्विषयस्याप्यकथितत्वात्, सत्यम्; नटस्य शृणोतीत्यत्र मा भूदिति दुह्यादिपरिगणनमवश्यं कर्त्तव्यम्, तस्मिंश्च क्रियमाणे ओदनं पचति, वृक्षमूलान्युपसर्पतीत्यत्र न स्यादिति पूर्वमपि योगद्वयमारभ्यत इति॥

## ५२. गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ।

'गमयति माणवकं ग्रामम्' इति। कथमत्र ग्रामस्य कर्मत्वम्, यावता कर्तुरीप्सिततमं कर्मेत्युच्यते, न च सम्प्रति माणवकः कर्त्ता; अनेन कर्मसंज्ञकत्वात्। तत्र यथा माषेष्वश्वं बध्नातीत्यत्र वस्तुतो भक्षणेनेप्सिततमानामपि माषाणां कर्मसंज्ञा न भवति, तत्कस्य हेतोः? अश्वस्य सम्प्रत्यकर्तृत्वात्, तद्वदत्रापि न प्राप्नोति; मा भूण्णिच्युत्पन्ने माणवकः कर्त्ता, प्राक्तदुत्पत्तेः प्रकृत्यर्थे कर्त्ता भवति, तदानीमेव च ग्रामस्याभिसम्बन्धः ग्रामकर्मण्यसौ गमने प्रेष्यते–ग्रामं गच्छेति। अतो यस्यामवस्थायां ग्रामस्य कर्मत्वं न तस्यां माणवकस्य कर्मत्वम्, यस्यां च ण्यन्तावस्थायां माणवकस्य कर्मत्वं न तस्यां ग्रामस्य कर्मत्वम्; पूर्वप्रवृत्तत्वात्। माषेष्वश्वमित्यत्र तु नैवं सम्भवति। 'यापयति' इति। 'या प्रापणे' (धा.पा.१०४९.) इत्यत्र प्राप्त्या गतिर्लक्ष्यत इति यातिर्गत्यर्थः।

'नीवह्योः' इति। नन्वेतयोर्गतिफलं प्रापणमर्थो न गतिः, 'न गतिहिंसार्थेभ्यः' (१.३.१५) इत्यत्र च भाष्यम्–'न वहिर्गत्यर्थः' इति, सत्यम्; गुणभावेनापि गतिः प्रतीयत इति मत्वा प्रतिषेध उक्तः।

'वहेरनियन्तृकस्य' इति। वक्ष्यामीति चोपक्षेपः। वाहयति बलीवर्दान्यवानित्यत्राणौ बलीवर्दाः कर्तारः, ण्यन्ते तु नियन्ता सारथिः कर्त्ता, तत्र प्रतिषेधप्रतिषेधाद्विधिरेव भवति। बुध्यर्थग्रहणेन ज्ञानमात्रवाचिनामेव ग्रहणम्, न तु तद्विशेषवाचिनां स्मरत्यादीनामित्याहुः। वृत्तावपि तथैवोदाहृतम्।

'आदिखाद्योः' इति। अपर आह—सर्वमेव प्रत्यवसानकार्यमदेवं भवति, नायमयमियमेव कर्मसंज्ञेति 'निगरणचलनार्थेभ्यश्च' (१.३.८७) इति पदमपि न भवति, इदमेकमिष्यते—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः'—इदमेषां जग्धमिति।

'भक्षेः' इति। गत्यर्थादिषु प्रायेण हेतुमण्णिच एव सम्भवाद्धेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति चुरादिणिजन्तोऽप्यण्यन्त एवेति भक्षेः प्राप्तिः। 'भक्षयति बलीवर्दान् सस्यम्' इति। क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा भवति, तस्यामवस्थायां कैश्चिच्चैतन्याभ्युपगमात्। स्वामिनो वा हिंसा द्रष्टव्या।

इह कर्मशब्देन क्वचित् क्रिया गृह्यते यथा– 'कर्तरि कर्मव्यतिहारे' (१.३.१४) इति, क्वचित् साधनकर्म– 'वेः शब्दकर्मणः' (१.३.३४) इति, इह शब्दक्रियाणामिति चेत्? 'ह्वयत्यादीनां प्रतिषेधः' (वा.१.४.५२ वा.१)—ह्वयति पुत्रं देवदत्तः, ह्वापयति पुत्रं देवदत्तेन; क्रन्दति पुत्रं देवदत्तः, क्रन्दयति पुत्रं देवदत्तेन; शब्दायते देवदत्तः, शब्दाययते देवदत्तेन। अकर्मकत्वादथात्र प्रसङ्गः, शब्दलक्षणकस्य कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्च। 'शृणोतेश्चोपसंख्यानम्' (१.४.५२.वा.२)—अशब्दक्रियत्वात् शृणोति श्लोकं देवदत्तः, श्रावयति श्लोकं देवदत्तम्; न च बुध्यर्थत्वादत्र सिद्धिः, चेतत्यादयो हि ज्ञानमात्रवचना बुध्यर्थाः। अस्तु तर्हि साधनकर्मणो ग्रहणम्, शब्दकर्मण इति चेत्? 'जल्पतिप्रभृतीनामुपसंख्यानम्' (१.४.५२.वा.३.), जल्पति पुत्रं देवदत्तः, जल्पयति पुत्रं देवदत्तम्; विलपति पुत्रं देवदत्तः, विलापयति पुत्रं देवदत्तम्; आभाषते पुत्रं देवदत्तः, आभाषयति पुत्रं देवदत्तम्। 'दृशेः सर्वत्र' (१.४.५२.वा.४.), यद्यपि क्रियाग्रहणम्, अथापि साधनग्रहणम्, अथाप्युभयग्रहणम्—सर्वथा दृशेरुपसंख्यानम्। पश्यति रूपतर्कं कार्षापणम्। यदा चायं दृशिः चक्षुःसाधनके ज्ञानविशेषे वर्तते तदैतद्वक्तव्यम्; ज्ञानमात्रवचनत्वे तु बुध्यर्थत्वादेव सिद्धम्; तदेवमुभयोरपि पक्षयोर्दोषान्तं भाष्यं नान्यतरः पक्षो निरणायि।

वृत्तिकारस्तु ये शब्दक्रियाः शब्दसाधनकर्माणश्च तानविवादसिद्धानुदाहरति—'अधीते' इत्यादि। 'अध्यापयति' इति। 'क्रीङ्जीनां णौ' (६.१.४८) इत्यात्वम्, अर्तिह्री (७.३.३६.) इत्यादिना पुक्। निर्णयस्तु साधनकर्मणो ग्रहणं कर्मग्रहणात्, अन्यथा 'गतिबुद्धिशब्दप्रत्यवसानार्थकर्मकाणाम्' इत्येव सिद्धेः।

जल्पादीनां तूपसंख्यानं कर्त्तव्यमेव। अन्यस्त्वाह—जल्पति देवदत्त इति। वचनेन बोधयतीत्यर्थः। एवमन्यत्रापि। तत्र बुद्ध्यर्थत्वादेव सिद्धम्। यद्यप्यन्या बुद्धिरन्या बोधना, उपसर्जनीभूतापि तावद्बुद्धिरस्तीति बुद्ध्यर्थत्वमस्त्येव, उपसर्जनीभूतोऽपि च गत्यादिरर्थो गृह्यते, अन्यथा गमयतीत्यादीनामगत्यर्थत्वादेवाप्रसङ्गादणिग्रहणमनर्थकं स्यादिति; अस्तु चेतनविषये, एवमचेतनविषये कथम्? यः कश्चिज्जल्पति तमन्यो जल्पयति, न ह्यत्र प्रबोधनाप्यस्ति।

'अकर्मकाणाम्' इति। कालभावाध्वगन्तव्यदेशव्यतिरिक्तकर्मरहितानामित्यर्थोऽत्र ग्राह्यः, अन्यथा मासमास्ते देवदत्तः, मासमासयति देवदत्तम्, गोदोहमासयति, क्रोशमासयति, कुरूनासयतीत्यत्र न स्यात्; कालादिकर्मणा सकर्मकत्वात्। एवं 'लः कर्मणि च' (३.४.६९) इत्यादावपि यत्राकर्मकग्रहणं तत्र सर्वत्र द्रष्टव्यम्, तेन मासमास्यते देवदत्तेनेत्यादौ भावे लादयः सिद्धा भवन्ति। उक्तञ्च—'सिद्धं तु कालकर्मणामकर्मकवद्वचनात्'

(१.४.५२. वा.९) इति । कालग्रहणमुपलक्षणम् । वत्करणात् स्वाश्रयमपि भवति—मासमास्यते देवदत्तेन—मासकर्मणि लो भवति । स तर्ह्यकर्मकवचनाद्भावे वक्तव्यः ? न वक्तव्यः; अकर्मकाणामित्युच्यते, न च कालादिभिः केचिदकर्मकाः । कालादिभिरप्यकर्मकाः, यदा ते न विवक्ष्यन्ते, तद्यथा—शेते देवदत्तो न भुङ्क्ते इति । नाप्यविवक्षितकर्माणोऽकर्मकाः, किं तर्हि ? येऽत्यन्ताविद्यमानकर्माणो धातवोऽकर्मकाः, नार्थाः । यस्य धातोः स्वरूपावधिकमकर्मकत्वम्, न च कालादिकर्मणा स्वरूपावधिकमकर्मकत्वं कस्यापि सम्भवतीति सामर्थ्यात्तद्व्यतिरिक्तेन कर्मणाऽकर्मकत्वं विज्ञायते । किमर्थं पुनरिदमुच्यते, यावता स्वव्यापारे स्वतन्त्रस्यापि प्रयोज्यस्य प्रयोजकव्यापारे विवक्षिते तेन प्रधानभूतेनाप्यमानत्वादन्तरङ्गत्वेन पूर्वप्रवृत्तामपि कर्तृसंज्ञां बाधित्वा कर्मसंज्ञा भविष्यतीति ? एवं तर्हि सिद्धे सत्यारम्भो नियमार्थः—प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादीनामेव, नान्येषामिति । तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र पूर्वं प्रवृत्ताया एव कर्तृसंज्ञाया अवस्थानात् कर्तरि तृतीया भवति । उक्तं च—

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।

नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ।। इति । (वा.प.३.७.१२७)

कर्तुः स्वधर्मात्तृतीया । अथ कथम्—

'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' (कु.सं. १–५२) इति ?

स्वतन्त्राः कवयः यद्वा—सुतां प्रति किञ्चिदुद्वाहविषये ग्राहयितुं बोधयितुं न शशाकेत्येवं व्याख्येयम्; तत्र बुद्ध्यर्थत्वात् सिद्धम् ।।

## ५३. हृक्रोरन्यतरस्याम् ।

गत्यर्थादयो निवृत्ताः, तेनोभयत्र विभाषेयम् । यदा हरतिर्गतौ वर्तते—हरति भारं देवदत्त इति, अभ्यवहारे वा—अभ्यवहरति माणवकमोदनमिति । करोतिश्चाप्यकर्मकः—ओदनस्य पूर्णाः छात्राः विकुर्वत इति, तदा पूर्वेण प्राप्ते । यदा हरतिः स्तेयादौ वर्तते—हरति सुवर्णं चोर इति, करोतिश्च सकर्मकस्तदाऽप्राप्ते । ननु 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति नियमस्यैव विकल्पो युक्तः, गत्यर्थादिष्वेवेति योऽयं नियमः स 'हृक्रोरन्यतरस्याम्' इति, ततश्च पक्षे नियमाभावात् गत्याद्यर्थादन्यत्र पक्षे कर्मत्वं पक्षान्तरे च कर्तृत्वं भवतु, गत्याद्यर्थत्वे तु नित्यवत् कर्मसंज्ञा प्राप्नोति । एवं तर्हि वार्त्तिककारेण उभयत्रविभाषास्वियं पठिता, तत्सामर्थ्यादनन्तरस्य विधिरिति नाश्रीयते, अविशेषेण हृक्रोर्विकल्पः प्रवर्तते ।

'अभिवादिदृशोः' इति । अभिवादयतेरप्राप्ते विभाषा दृशेर्बुद्ध्यर्थत्वात् 'दृशेः सर्वत्र' (१.४.५२.वा.४.) इति वा प्राप्ते । 'अभिवादयते' इति । 'णिचश्च' (१.३.७४) इत्यात्मनेपदम् । परस्मैपदे तु अभिवादयति गुरुं देवदत्तेनेति कर्तृसंज्ञैव भवति ।

'दर्शयते' इति । कर्मसंज्ञाभावपक्षे कर्मान्तरस्याभावात् 'णेरणौ' (१.३.६७) इत्यात्मनेपदम्, अन्यत्र तु 'णिचश्च' (१.३.७४) इति ।।

## ५४. स्वतन्त्रः कर्ता ।

स्वतन्त्रशब्दोऽयं तन्तुवायवचनोऽप्यस्ति–स्वं तन्त्रमस्य स्वतन्त्रः, विततास्तन्तवः स्वतन्त्रमित्युच्यते; अस्ति च साधारणद्रव्ये पुरुषे वर्तते साधारणं भवेत्तन्त्रम्, स्वं धनं तन्त्रं साधारणमस्य स्वतन्त्रः; अस्ति च प्रधानवचनः- स्व आत्मा तन्त्रं प्रधानमस्य स्वतन्त्र इति । तत्राद्ययोर्ग्रहणे तयोरपादानादिविषये कर्तृसंज्ञा स्यात्, परत्वाद्विशेष-विहितत्वाच्च तन्तुवायादागच्छतीत्यादौ; इह ह न स्यात्–देवदत्तो गच्छतीति, इदमाद्ययोर्ग्रहणे दोषं दृष्ट्वा तृतीय-मर्थमाश्रित्याह–'स्वतन्त्रः' इति । 'प्रधानभूत उच्यते' इति । स्वतन्त्रशब्दस्य तत्रैव प्रसिद्धतरत्वादिति भावः । किञ्च कारकाधिकारात् क्रियाविषयं स्वातन्त्र्यं गृह्यते, न च तन्तुवायस्तन्तुवायतया क्रियायामुपयुज्यते, किं तर्हि ? प्रधानतयैवेति तद्वाचिन एव ग्रहणं युक्तम् । यदि प्रधानभूत उच्यते, एवं सत्यप्रधानापेक्षत्वात् प्रधानभावस्य यत्राधि-करणादीन्यप्रधानानि कारकाणि सन्ति–काष्ठैः स्थाल्यामोदनं पचतीति अत्रैव स्यात्; न त्वास्ते शेते इत्यादावित्या-शङ्क्य प्राधान्येनागुणभावो लक्ष्यत इति दर्शयति–[1]'अगुणीभूतः' इति । तेन यस्य गुणभावो नास्ति, स कर्त्ता । कारकान्तराविवक्षायामपि चागुणभावोऽस्त्येव । कः पुनरत्र कारकाणां गुणगुणिभावः ? यदा एकापायेऽपि क्रिया न निर्वर्तते, उक्तमत्र—

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेकेऽपि दर्शनात् ।
आरादप्युपकारित्वात् स्वातन्त्र्यं कर्तुरिष्यते ॥ इति ॥ (वा.प. ३.७.१०१,१०२)

काष्ठादीनि कर्त्रा प्रवर्तितानि करणादिशक्ति प्रतिलभन्ते, कर्त्ता तु प्रागेव । कर्तृसन्निधौ च करणादीनि न्यग्भवन्ति, तदधीने च तेषां प्रवृत्तिनिवृत्ती । प्रधानकर्तुश्च प्रतिनिधिर्न दृष्टः, करणादीनां तु दृष्टः–व्रीह्यपचारे नीवारैरिज्यते । प्रविवेकः = अभावः । करणाद्यभावेऽप्यास्ते, शेते इत्यादौ केवलः कर्त्ता दृश्यते, न तु कर्तुरभावे करणादीनि दृश्यन्ते ।

'आरादप्युपकारित्वात्' इति । यद्यप्यसौ तटस्थः फलसिद्धावुपकरोति, न तु करणादिवदनुप्रविश्य तथापी-त्यर्थः । एतच्च प्रायेण चेतनेष्वेव सम्भवति, नाचेतनेषु–रथो यातीत्यादौ, नैष दोषः; उक्तलक्षणे कर्त्तरि द्वयं दृष्टम्–प्राधान्यम्, अगुणभावश्च । तत्रागुणभावः अचेतनेषु चेतनेष्वपि सम्भवति । स चायमगुणभावो न प्रतिनियत-विषयः, यस्यैव तु विवक्ष्यते, तस्यैवेत्याह–स्वातन्त्र्येण विवक्ष्यत इति । विवक्ष्यत इत्यस्योदाहरणम्–स्थाली पचतीति ।

अन्ये तु व्याचक्षते–अगुणभावेनाभिधीयमानव्यापारो गुणभूतो गुणभूतधातूपात्तव्यापारः कर्त्तेत्यर्थः । कस्य च व्यापारो धातुनाऽगुणभावेनोपादीयते ? यस्य विवक्ष्यते तस्येति सर्वत्र सिद्धमिति ॥

1. 'अगुणभूतः'–काशिका, न्यासश्च ।

## ५५. तत्प्रयोजको हेतुश्च ।

'तदित्यनेन कर्त्ता सम्बद्धचते' इति । कर्तृसंज्ञाविशिष्टः स्वतन्त्र इत्यर्थः । ननु च प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यं कर्तृसन्निधाविव करणादीनाम्, तत्कथं स्वतन्त्रः परामृश्यते ? कथन्तरां च कर्तृसंज्ञाविशिष्टः ? कथन्तमां च पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति ? प्रयोज्ये तृतीया भवति, पूर्वमेव च स्वतन्त्रस्य कर्तुः सतः प्रयुक्तिरपि किमर्था ? मायं विरंसीदिति प्रयुङ्क्ते इति चेत्, भवत्येवं प्रवृत्तप्रवर्त्तने, यत्र तु बलात्कारेण प्रवर्त्यते तत्र कथम् ? उच्यते; अप्रवृत्तप्रवर्तनेऽपि यावत्स्वार्थादर्शनात् प्रयोज्ये न प्रवर्तते तावत्प्रयोजकः पाचयतीति न व्यपदिश्यते; प्रयोज्यप्रवृत्त्युत्तरकालमेव तु व्यपदिश्यते, तदानीमपि च स्मृत्यारूढा प्रयुक्तिर्विद्यत इति अनवर्तमाना हि प्रसक्तिः प्रयोज्यस्याफलनिष्पत्तेः प्रवृत्तौ हेतुर्न मध्ये विच्छिन्ना । लोडादिवाच्यस्तु प्रैषः प्रयोज्यस्याप्रवृत्तावपि भवति । उक्तञ्च--

> द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड्विधीयते ।
>
> [1]प्रवृत्तस्य यदा प्रैषस्तदा स विषयो णिचः ।। इति । (वा.प. ३.७.१२६)

तदेवं णिज्वाच्या प्रयुक्तिः प्रवृत्तप्रवर्तनारूपेण प्रतीयत इति प्रकृत्यर्थे कर्तुः सतः प्रयोजक इत्यविरुद्धम् । इममेव चार्थं दर्शयितुं तच्छब्दोपादानम्; अन्यथा कस्य प्रयोजक इत्यपेक्षायाम्, प्रकृतत्वादेव स्वतन्त्रस्य प्रयोजक इति लाभादनर्थकं तत् स्यात् । 'तस्य प्रयोजकस्तत्प्रयोजकः' इति । ननु 'तृजकाभ्यां कर्तरि' (२.२.१५), 'कर्तरि च' (२.२ १६) इति प्रतिषेधात् कथमत्र समास इत्यत आह- 'निपातनात्समासः' इति । अत्र विचार्यमस्ति समासप्रकरण एव विचारयिष्यामः ।

'संज्ञासमावेशार्थश्चकारः' इति । असति हि तस्मिन् एकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यात् । 'कुर्वाणं प्रयुङ्क्ते' इति । कुर्वाणदशायां या प्रयुक्तिः स्मृत्यारूढा, सैव णिज्वाच्येत्येवं विग्रहः । 'हेतुत्वात्' इत्यादिना समावेशस्य प्रयोजनं दर्शयति ।।

## ५६. प्राग्रीश्वरान्निपाताः ।

प्राचि काले देशे वा प्राक् । 'अधिरीश्वरे इति वक्ष्यति' इति । ईश्वरप्रकृतिभागस्य पूर्वपदान्तेन रेफेण सहानुकरणं द्रष्टव्यम् । अनुकार्येणार्थेनार्थवत्त्वात् विभक्त्युत्पत्तिः, च वा इत्यत्र निपातत्वे सति 'स्वरादिनिपातमव्ययम्' (१.१.३७) इत्यव्ययसंज्ञा भवति । 'निपाता आद्युदात्ताः' (फि.सू. ४.८०) इति तु स्वरो न भवति, उदाहृतानामनुदात्तानां गणे पाठात् । अन्येषां तु तदपि भवति ।

ननु यथा 'प्रत्ययः' (३.१.१) इत्यादिरधिकारो विनाप्यवधिनिर्देशनाभिमतविषये प्रवर्तते, तथायमपि प्रवर्तिष्यते, 'निपाताः' इत्येवाऽस्तु, नार्थोऽवधिनिर्देशेनेत्यत आह- 'प्राग्वचनम्' इति । प्राग्वचनद्वारेणावधिनिर्देशस्य

---

1. 'सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः'–वा.पा.

प्रयोजनमुक्तम् । अयमर्थः—असत्यवधिनिर्देशे 'निपाताः' इत्यस्य प्रतियोगमनुवृत्तौ सत्यामप्येकसंज्ञाधिकारात् पर्यायः स्यात्, न तु समावेशः; सति तु तस्मिन् ईश्वरात् प्राग्यावन्तः संज्ञिनः सर्वांस्तानैकध्यमिहापेक्ष्य सकृत्संज्ञा विधीयते, प्रतिसूत्रमधिकारात्स्वपरावृत्तिः, तस्याश्च समावेशः प्रयोजनमिति ।

अथ वा प्राग्वचनं किमर्थम्, यावता पञ्चम्यैव प्रागिति दिक्शब्दोऽध्याहरिष्यते, परागित्यस्य त्वध्याहारो न भविष्यति, 'चादयोऽसत्वे' (१.४.५७), 'प्रादयः' (१.४.५८) इत्यनयोर्विधेयासम्भवेनानर्थक्यप्रसङ्गात् ? अत आह—'प्राग्वचनम्' इति । अयं भावः—अध्याहारेण सिद्धे प्राग्ग्रहणसामर्थ्यात्तन्त्रेण द्वौ प्राक्छब्दावुच्चार्येते । तेनायमर्थो भवति—प्राग्रीश्वराद्ये व्यवस्थितास्ते प्राक् निपातसंज्ञा भवन्ति, निपाताः सन्तो गत्यादिसंज्ञा इति । तेन निमित्तमेव निपातसंज्ञा गत्यादिसंज्ञानामिति समावेशसिद्धिरिति ।

रीश्वरादिति सह रेफेणानुकरणे प्रयोजनमाह— 'रीश्वराद्वीश्वरान्मा भूत्' इति । रीश्वरादित्युच्यते, 'अधिरीश्वरे' (१.४.९७) इत्ययमीश्वरशब्दोऽवधिर्यथा स्यात्, 'शकि णमुल्कमुलौ' (३.४.१२) 'ईश्वरे तोसुन्कसुनौ' (३.४.१३.) इत्ययं मा भूदित्येवमर्थमित्यर्थः । यदा संहितया सूत्राणि पठ्यन्ते, तदा रीश्वरशब्दोऽस्तीत्यभिप्रेत्य रीश्वरादित्युक्तम् । ज्ञापकात् सिद्धम्, यदयं 'कृन्मेजन्तः' (१.१.३९) इति कृतो मान्तस्यैजन्तस्य चाऽव्ययसंज्ञां शास्ति, तज्ज्ञापयति—अनन्तर ईश्वरशब्दोऽवधिर्न व्यवहित इति, अन्यथा सेसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वादेवाव्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात् ? नैतदस्ति ज्ञापकम्, कृन्मेजन्तः परोऽपि सः, 'ईश्वरे तोसुन्कसुनौ' (३.४.१३.) इत्यस्मात्परोऽपि कृन्मान्त एजन्तश्चास्ति कृत्यार्थे तवैकेनित्यादेजन्तः, णमुलादिश्च मान्तः, तदर्थमेतत् स्यात् । यत्तर्ह्यव्ययीभावस्याव्ययत्वं शास्ति, तज्ज्ञापयति—अनन्तरस्य ग्रहणमिति; अन्यथा द्वितीये निपातसंज्ञाव्यापारादव्ययीभावस्य निपातत्वादेवाव्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात्, नैतदस्ति; 'समासेष्वव्ययीभावः' तुल्यजातीयव्यावृत्तये नियमार्थमेतत्स्यात्: न त्वनन्तरस्य ग्रहणे ज्ञापकमित्यर्थः । एवं तर्हि लौकिकन्यायादेवानन्तरस्य ग्रहणं भविष्यति, लौकिके ह्योदकान्तात्प्रियं प्राप्तमनुव्रजेदिति य एवानन्तर उदकान्त आ ततोऽनुव्रज्य बान्धवा निवर्तन्ते तद्वदत्रापि ? तत्राह—'लौकिकं चातिवर्तते' इति । लौकिकं न्यायं लोक एवातिवर्तते; यतो द्वितीयमप्युदकान्तं स्नेहातिशयादनुव्रज्य निवर्तन्ते, तस्माद्रीश्वरादित्युच्यते वीश्वरान्मा भूदिति स्थितम् । ननु च 'न लोकाव्यय' (२.३.६९.) इत्यत्र लोकादीनामव्ययत्वादेव षष्ठीप्रतिषेधे सिद्धे पुनरुपादानं ज्ञापकं भविष्यति—अनन्तरस्य ग्रहणमिति, नैतदस्ति; अव्ययसंज्ञाया एवाभावं ज्ञापयेत्, निपातसंज्ञा तु स्यादेव; ततश्च चिकीर्ष्वर्थं इत्यादौ 'निपात एकाजनाङ्' (१.१.१४) इति प्रगृह्यसंज्ञा स्यात् । '[1]प्रोथम्' इति । पर्याप्तमित्यर्थः । 'प्रोथ पर्याप्तौ' (धा.पा.८६७) पचाद्यचि क्रियाविशेषणत्वान्नपुंसकत्वम् ॥

## ५७. चादयोऽसत्त्वे ।

'न चेत्सत्त्वे वर्तते' इति । सत्त्वे तेद्वर्तते तदा संज्ञा न भवतीत्यर्थस्तदाह—'प्रसज्यप्रतिषेधोऽयम्' इति । अथ पर्युदासे को दोषः ? पशुशब्दोऽत्र पठ्यते, स जातिविशिष्टे द्रव्ये वर्तते, तस्य निपातत्वं स्यात्, जातिद्रव्यसमुदायरूपो ह्यर्थः केवलादन्यो भवति; तथा प्रादय इत्यत्र विप्रातीति विप्रः, 'आतश्चोपसर्गे' (३.१.१३६) इति कः । अत्र प्रशब्दः क्रियाविशिष्टे द्रव्ये वर्तते । तत्र क्रियाद्रव्यसमुदायस्य द्रव्यादन्यत्वान्निपातत्वे सत्यव्ययसंज्ञायां तदन्तविधेरभ्युपगमात् विप्रशब्दस्याव्ययसंज्ञा स्यात्,

1. नास्ति—काशिका, न्यासश्च.

प्रसज्यप्रतिषेधे तु यत्र द्रव्यगन्धस्तत्र सर्वत्र प्रतिषेधो भवति। क्व तर्हि वर्तमानः पशुशब्दोऽसत्त्ववचनो भवति? दृश्यर्थे, 'लोकं नयन्ति पशु मन्यमानाः' (ऋ. ३.५३.२३) इत्यत्र दृश्यर्थेन मननं विशेष्यते—दर्शनमेतन्मननम्, सम्यक् मन्यमाना इत्यर्थः। सत्त्वशब्दोऽयं सतो भावः सत्त्वमिति सत्ताजातिवचनो गृह्यत इति भ्रान्तिमपनयति— 'सत्त्वमिति च द्रव्यमुच्यते' इति। इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते। उक्तञ्च—

वस्तूपलक्षणं यत्र सर्वनाम। प्रयुज्यते।

द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति। (वा.प. ३.४.३)

स्वार्थेनेति शेषः। सिद्धरूपो योऽर्थः स्वार्थेन विशेष्यतया विवक्षितस्तद्द्रव्यमित्यर्थः। उक्तञ्च—

'स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदुच्यते' इति।

एवं च कृत्वा—सीदति, निविशते यत्र जात्यादिकं शब्दप्रवृत्तिनिमित्तं विशेषणभावेनेति सत्त्वं द्रव्यम्। सदेरौणादिकस्त्वप्रत्ययः 'ताभ्यामन्यत्रोणादयः' (३.४.७५) इत्यधिकरणसाधनः। 'चण्' इति पठ्यते, स चेत्सं वर्तते, णकारश्चणकच्चिद्यत्रयुक्तमिति विशेषणार्थः। नञो ञकारः 'नलोपो नञः' (६.३.७३) इति विशेषणार्थः। नलोपो नस्येत्युच्यमाने वामनपुत्रः—अत्रापि प्राप्नोति? पाक्षिक एष दोषः; 'अलुगुत्तरपदे' (६.३.१) इति वर्तते, तत्र यदोत्तरपदेनाक्षिप्तं पूर्वपदं नस्य विशेषणम्, तदा पूर्वपदभूतस्य नस्य लोप इत्युच्यमाने नैवात्र प्राप्नोति, नशब्देन पूर्वपदे विशेष्यमाणे तदन्तविधिसद्भावादत्रापि स्यात् अथास्मिन् पक्षे 'नञः' इत्युच्यमानेऽपि स्त्रैणपुत्र इत्यत्र नञः कस्मान्न भवति? अतुल्यत्वात्प्रत्ययस्य ञकारो वृद्धिस्वरयोश्चरितार्थः, निपातस्य त्वचारितार्थः। 'तथा' इति पठ्यते, सोऽव्युत्पन्नः समुच्चये वर्तते, तस्य तु थाल्-न्तस्य लित्स्वरेणाद्युदात्तत्वं सिद्धम्। अव्ययत्वमपि 'तद्धितश्चासर्वविभक्तिः' (१.१.३८) इत्येव सिद्धम्। तदव्युत्पन्नस्यापि विभक्तिप्रतिरूपा इत्येव सिद्धम्; सत्यम्, प्रपञ्चार्थः पाठः। एवं 'वेलायाम्, मात्रायाम्' इत्यादेरपि।

'स्वरप्रतिरूपकाः' इति। ऋति ऋ वा वचनमित्यादयः, तेषां निपातसंज्ञाविधानद्वारेण सद्भाव एव प्रतिपाद्यते, न पुनरेषां निपातत्वे किञ्चित्प्रयोजनमस्तीति॥

## ५८. प्रादयः।

अयं योग उत्तरस्माद्विभज्यते, पूर्वस्माच्च; यदि पुनः 'प्रादय उपसर्गाः क्रियायोगे' इत्युच्यते, नैवं शक्य-मित्याह—'पृथग्योगकरणम्' इति। उत्तरस्या उपसर्गसंज्ञाया एव 'क्रियायोगे' इति विशेषणं यथा स्यात्, निपातसंज्ञायां मा भूदित्येवमर्थमुत्तरस्माद्योगादस्य विभाग इत्यर्थः। अथ वा—चादिष्वेव प्रादीनपि पठित्वा पूर्वस्माद्योगात् किमर्थं विभज्यते, तत्राप्याह—'उपसर्गाः क्रियायोगे' इति। '[1]वादीनाम्' इति। चलोपोऽत्र द्रष्टव्य इति 'च-वादीनाम्' इति। 'परा जयन्ति सेनाः' इति। परा उत्कृष्टाः परदेशस्थिता वा द्रव्यत्वात्तत्र वर्तमानस्य पराशब्दस्य न भवति, यत्र त्वेकवचनं पठ्यते—परा जयति सेनेति, तत्र रूपोदाहरणं द्रष्टव्यम्; 'हल्ङ्याप्' (६.१.६८) इति सुलोपात् पराशब्दस्याद्युदात्तत्वाच्च॥

1. चादीनाम्—काशिका, न्यासश्च.

## ५९. उपसर्गाः क्रियायोगे ।

'क्रियायोगे' इति सहयोगे तृतीया, निपातनात् समासः, 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति बहुलवचनाद्वा । यद्वा–क्रियया करणभूतया प्रादीनां धातुभिर्योगात् करणे तृतीयया एव समासः । 'प्रणयति' इति । 'उपसर्गादसमासेऽपि' (८.४.१४) इति णत्वम् । 'प्रनायकः' इति । नन्वत्रापि गमिक्रियायोगोऽस्त्येव, सत्यम्; प्रादयः पुनरेवमात्मकाः, यदुत श्रुतायां क्रियायां तामेव विशिषन्ति, अश्रुतायां तु ससाधनां क्रियामाक्षिपन्ति । तत्र क्रियायोगग्रहणसामर्थ्याद्यत्क्रियायुक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञा भवतीत्ययमर्थो भवति । अत्र च यत्क्रियायुक्तः प्रादिः स गमिर्न प्रयुज्यते, यश्च प्रयुज्यते न तत्क्रियायुक्त इति नास्ति णत्वप्रसङ्गः ।

'मरुच्छब्दस्य' इति । उपसर्गसंज्ञैवेष्यते, न निपातसंज्ञा । तस्यां हि सत्यां निपाताद्युदात्तत्वम् 'तृतीया कर्मणि' (६.२.४८) इति पूर्वपदप्रकृतिस्वरेण स्यात्, अन्तोदात्तश्च मरुत्तशब्द इष्यते । ननूपसर्गसंज्ञायामपि 'उपसर्गाश्चाभिवर्जम्' (फि.सू.४.८१) इत्याद्युदात्तत्वं स्यादेव, न; नानेनापूर्वमाद्युदात्तत्वं विधीयते, किं तर्हि ? 'निपाताः' (फि.सू.४.८०) इत्येव सिद्धेऽभेः प्रतिषेधार्थमेतत् । किं च निपातसंज्ञायामव्ययसंज्ञा स्यात् । अथ 'उपसर्गे घोः किः' (३.३.९२) 'आतश्चोपसर्गे' (३.१.१३६) इत्येतौ विधी कस्मान्न भवतः ? अनभिधानात् ।

'मरुत्तः' इति । मरुच्छब्दतकारस्य 'अनचि च' (८.४.४७) इति द्विर्वचने 'झरो झरि' (८.४.६५) इति मध्यमस्य मध्यमयोर्मध्यमानां वा लोपे त्रैरूप्यं भवति, कथं पुनरत्र तत्वम्, यावतायमनजन्त इत्यत आह– 'संज्ञाविधानसामर्थ्यात्' इति । उक्तः प्रयोजनान्तराभावः । एवं तु मरुन्नयतीति तकारव्यवायेऽपि णत्वं प्राप्नोति तस्मात्तत्वविधावेवेष्यते ।

'श्रच्छब्दस्य' इति । अङ्विधावेवेष्यते, किप्रत्ययो हि न भवति, तदाह–'आतश्चोपसर्गे' इति । भिदादिपाठात् 'प्रज्ञाश्रद्धार्चा' (५.२.१०१) इति निपातनाद्वा सिद्धम् ॥

## ६०. गतिश्च ।

'गतिरनन्तरः' (६.२.४९) इति पुंल्लिङ्गनिर्देशाद्गम्यत इति गतिः, 'क्तिच्क्तौ च संज्ञायाम्' (३.३.१७४) इति क्तिच्, निपातनाच्च 'न क्तिचि दीर्घश्च' (६.४.३९) इति न भवति । 'प्रकृत्य' इति । अत्र गतित्वात् कृत्स्वरो भवति, समासस्तु प्रादित्वादेव सिद्धः । प्रादिभ्योऽन्यत्र समासोऽपि प्रयोजनम् । 'प्रकृतम्' इति । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरः । 'यत् प्रकरोति' इति । तिङलक्षणस्य 'निपातैर्यद्यदि' (८.१.३०) इति निषेधे तिपः पित्त्वादनुदात्तत्वम्, विकरणस्य प्रत्ययस्वरो धातोः शेषनिघातः, 'तिङि चोदात्तवति' (८.१.७१) इति प्रशब्दस्यानुदात्तत्वम् । एतच्च प्रयोजनचतुष्टयं गतिसंज्ञाप्रकरणे सर्वत्र द्रष्टव्यम् ।

'चकारः संज्ञासमावेशार्थः' इति । अन्यथैकसंज्ञाधिकारादेकत्र संज्ञाद्वयविधानाच्च पर्यायः स्यादिति भावः । 'कारिकाशब्दस्य' इति । कारिका क्रिया मर्यादास्थितिरित्यर्थः । यत्न इत्यपरे, धात्वर्थनिर्देश इति ण्वुल् । वस्तु कर्तरि कारिकाशब्दः कारिका दासीति, यश्च श्लोकवाची–तयोर्ग्रहणं न भवति; क्रियायोगग्रहणेन कारिका-शब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात् । [1]यत्कारिकां करोति' इति । निपातत्वादव्ययत्वे सति विभक्तेर्लुक् ।

1. यत्कारिकाकरोति–काशिका.

'पुनरुत्स्यूतम्' इति । गतित्वात् समासः । 'गतिर्गतौ' इति निघातो भवति' इति । यद्यप्यत्र 'प्रवृद्धादीनां च' (६.२.१४७) इत्युत्तरपदान्तोदात्तत्वेन शेषनिघातः सिद्धः, तथापि परत्वादयमेव निघातो युक्त इति भावः । 'इह च पुनराधेयम्' इति । गतित्वात् समासे कृते कृदुत्तरपदप्रकृतिस्वरेण 'यतोऽनावः' (६.१.२१३) इति धेयशब्द आद्युदात्तः । 'चनोहितः' इति । निपातत्वादाद्युदात्तस्य चनःशब्दस्य 'गतिरनन्तरः' (६.२.४९) इति प्रकृतिस्वरः ॥

## ६१. ऊर्यादिच्विडाचश्च ।

'च्व्यन्ता डाजन्ताश्च' इति । यद्यपि पदसंज्ञायामन्तग्रहणेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' (जै. प. वृ. ५३) इति ज्ञापितम्, तथापि 'क्रियायोगे' (१.४.५९) इत्यनुवृत्तेस्तदन्तग्रहणमिति भावः । न हि प्रत्ययमात्रस्य क्रियायोगः सम्भवति, स्वार्थिकत्वेन स्वयमनर्थकत्वात्, च्वेरश्रावित्वाच्च । 'कृभ्वस्तियोगे' इति । न केवलम्, संज्ञाप्रयोगोऽप्यन्यत्र भवति, न हि भवति उरीसम्पद्यते इति, श्रौषडादीनां स्वाहापर्यन्तानां चादिषु पाठात् अक्रियायोगेऽपि निपातत्वम् । आविःशब्दस्य साक्षात्प्रभृतिषु पाठात् कृञो योगे विकल्पः, कृभ्वस्तियोगे त्वनेन नित्यम् । कथं तर्हि आविश्चक्षुषोऽभवदसाविव रागः', 'अभवन् युगपद्विलोलजिह्वा युगलीढोभयसृक्कधारमाविः' इति ? स्वतन्त्राः कवयः । 'शुक्लीकृत्य' इति । 'अस्य च्वौ' (७.४.३२) इतीत्वम् । पटपटाशब्दः 'वा क्यषः' (१.३ ९०) इत्यत्र व्युत्पादितः ॥

## ६२. अनुकरणं चानितिपरम् ।

'इतिः परो यस्मात्' इति । पञ्चमीसमासस्तु लक्षणाभावान्नाश्रितः । तेनेति खाट्कृत्येत्यत्र इतेः परत्वेऽपि भवति । 'खाडिति कृत्वा निरष्ठीवत्' इति । अत्रासति प्रतिषेधे गतिसंज्ञायां समासः स्यात्, धातोश्चानन्तरः प्रयोग इति रूपमेवैतन्न सिध्येत् । 'ष्ठिवु निरसने' (धा.पा.५६०), 'ष्ठिवुक्लमुचमां शिति' (७.३.७५) इति दीर्घः । भूतकालोपन्यासः किमर्थः ? कस्यचित्कवेरयं प्रयोग उदाहृतः—

'चुम्बनसक्तः सोऽस्याः च्युतमूलं दशनमात्मनो वदने ।
जिह्वामूलस्पृष्टं खाडिति कृत्वा निरष्ठीवत् ॥" (इति)

## ६३. आदरानादरयोः सदसती ।

'[1]प्रीतिसम्भ्रमः' इति । प्रीतिपूर्विका प्रत्युत्थानादिविषया त्वरेत्यर्थः । 'परिभवौदासीन्यम्' इति । अवज्ञया कर्तव्यं प्रत्युत्थानादिकं प्रत्युपेक्षेत्यर्थः । असदनादरग्रहणं किमर्थम् ? असत्कृत्येत्यत्रापि यथा स्यात् । मा भूदसच्छब्दस्य गतिसंज्ञा, सत्कृत्येत्यनेन नञ्समासो भविष्यति ? नैवं शक्यम्; सति शिष्टत्वात् कृदुत्तरपदप्रकृतिस्वरं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यात् । असत्कृतमित्यत्र तु सत्कृतशब्दे

1. प्रीत्यतिशयः— काशिका ।

'गतिरनन्तरः' (६.२.४९) इति स्वरे प्रवृत्ते पश्चान्नञ्समासेऽपि तस्यैव स्वरः। असच्छब्दस्यापि कृतशब्देनापि समासे तस्य निपातत्वादाद्युदात्तस्य गतित्वात्प्रकृतिभावेऽपि स एव स्वर इति नास्ति विशेषः। इह च यदासत्करोतीत्यसच्छब्दस्य निघातो न स्यात्, अव्ययसंज्ञाऽपि तस्य न स्यादित्यसच्छब्दस्यैव गतिनिपातसंज्ञे एषितव्ये। न चात्र सच्छब्देन तदन्तविधिर्लभ्यते; विशेष्यस्याभावात्।

नन्वत्र सच्छब्दस्यैव संज्ञाऽस्तु, कार्यप्रदेशेषु प्रकृतस्य तेन तदन्तविधिर्भविष्यति, अव्ययसंज्ञायां तावदस्त्येव तदन्तविधिः– परमोच्चैरिति, यथा 'कुगतिप्रादयः' (२.२.१८) इत्यत्रापि सुबिति प्रवर्तते, सुपेत्येव निवृत्तम्, तद्गतिना विशेष्यते 'गतिरनन्तरः' (६.२.४९) इत्यत्र पूर्वपदम् 'गतिर्गतौ' (८.१.७०) इत्यत्रापि पदस्येति प्रकृतम्। भवतु तदन्तविधिना कार्यम्, अनादरावगतिस्तु कुतः? असत्यनादरग्रहणे, न सदसदित्यादरनिषेधान्नैव शक्यम्, आदरप्रसङ्ग एव हि स्यात्, गुरुमसत्कृत्येति चाण्डालमसत्कृत्येत्यत्र न स्यात्। यथाऽब्राह्मण इति क्षत्रियादिरेवोच्यते, न लोष्टादिः, अनादरग्रहणे तु सति बहुव्रीहिर्विज्ञायते–अविद्यमानादरोऽनादर इति। बहुव्रीहिश्चात्यन्ताभावे, प्रसक्ताभावे, अप्रसक्ताभावे च भवतीति सर्वत्र संज्ञा सिध्यति, तस्मादनादरग्रहणं कर्त्तव्यम्। असद्ग्रहणं तु शक्यमकर्तुम्। आदरानादरयोः सदित्येवास्तु, तत्र यथा गोष्पदं सेवितेत्यत्रासेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदार्थमसेवितग्रहणम्; एवमनादरेऽपि सच्छब्दो न सम्भवतीत्यसच्छब्दार्थमनादरग्रहणं भविष्यति।

'सत्कृत्वा असत्कृत्वा' इति। शोभनवचनो विद्यमानवचनो वा सच्छब्दः, तद्विपरीतवचनोऽसच्छब्दः॥

## ६४. भूषणेऽलम्।

'अलमिति प्रतिषेधे' इत्यादि। तद्यथा अलं कृत्वा, अलं भोक्तुम्, अलं भङ्क्ते, अलं करोति कन्यामिति॥

## ६५. अन्तरपरिग्रहे।

अन्तर्हत्वा, मध्ये हत्वेत्यर्थः। 'अन्तःशब्दस्य' इत्यादि। उपसर्गसंज्ञायामेवैतन्नोक्तम्–अन्तःशब्दप्रसङ्गेन वक्ष्यामीति। यदा चोपसर्गसंज्ञोच्यते; तदान्तर्णयतीत्यादिवदन्तर्हण्यात् अन्तर्हणनमित्यादावपि 'हन्तेरत्पूर्वस्य' (८.४.२२) इति णत्वं सिद्धम्। अन्तरयणमित्यत्रापि 'कृत्यचः' (८.४.२९) इत्येव सिद्धमिति 'अन्तरदेशे' (८.४.२४), 'अयनं च' (८.४.२५) इति सूत्रद्वयमपि देशप्रतिषेधार्थं द्रष्टव्यम्॥

## ६६. कणेमनसी श्रद्धाप्रतीघाते।

कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते। मनःशब्दोऽपि साहचर्यादभिलाषावृत्तिरेव विज्ञेयः। 'कणेहत्य' इति। अतिशयेनाभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः। तदाह–'तावत्' इति। श्रद्धा प्रतिहन्यत इत्यर्थः। इति यावदस्येत्यपेक्षते। प्रत्युदाहरणे कणेशब्दः सूक्ष्मतण्डुलावयवोऽधिकरणभूते वर्त्तते। मनःशब्दोऽपि चेतसि॥

## ६७. पुरोऽव्ययम्।

'असिप्रत्ययान्तः पुरःशब्दोऽव्ययम्' इति। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (५.३.३९) इत्यसिप्रत्ययः, पूर्वशब्दस्य पुरादेशः, 'तद्धितश्चासर्वविभक्तिः' (१.४.३८) इत्यव्ययसंज्ञा, विसर्जनीयस्थानिकः सकार

उपचारः। 'पुरस्कृत्य' इति। पूर्वस्मिन् देशे कृत्वेत्यर्थः। 'पूः, पुरौ, पुरः कृत्वा' इति। एतदत्र प्रत्युदाहरणम्। इतरयोस्तूपन्यासस्तत्साहचर्यात्पुर इति शसन्तम्, नाव्ययमिति प्रदर्शनार्थः। अत्र 'नमस्पुरसोर्गत्योः' (८.३.४०) इति सत्वं न भवति; समासश्च न भवति॥

## ६८. अस्तं च।

'अस्तं कृत्वा' इति। 'असु क्षेपणे' (धा.पा. १२०९) निष्ठा, 'उदितो वा' (७.२.५६), 'यस्य विभाषा' (७.२.१५) इति इट्प्रतिषेधः। ननु लाक्षणिकत्वादेवात्र न भवति, किमव्ययग्रहणानुवृत्त्या ? एवं तर्ह्यस्तंशब्दो अव्ययमिति ज्ञाप्यते। न ह्ययं चादिषु स्वरादिषु वा पठ्यते॥

## ६९. अच्छ गत्यर्थवदेषु।

अच्छेत्यनुकरणत्वेऽविभक्तिको निर्देशः, 'सुपां सुलुक्' (७.१.३९) इति दिभक्तेर्लुप्तत्वात्। 'अभिशब्दस्यार्थे' इति। आभिमुख्ये। 'अच्छोद्य' इति। यजादित्वात् सम्प्रसारणम्, उदकमच्छं गच्छति, अकलुषमित्यर्थः॥

## ७०. अदोऽनुपदेशे।

'उपदेशः परार्थः' इति। वाक्यप्रयोग इत्यर्थाद्गम्यते। 'अदःकृत्य' इति। एतत्कर्त्तव्यमिति स्वयमालोच्येत्यर्थः॥

## ७१. तिरोऽन्तर्द्धौ।

'तिरोभूय' इति। समासकृत्स्वरौ प्रयोजनम्। 'तिरोभूतम्' इति। भवतेरकर्मकत्वात् कर्तरि क्तः 'गतिरनन्तरः' (६.२.४९) इत्यत्र च कर्मणीति वर्तते, तस्मात् समासथाथादिस्वरावत्र प्रयोजनम्। 'तिरो भूत्वा' इति। पार्श्वतो भूत्वेत्यर्थः॥

## ७२. विभाषा कृञि।

'तिरस्कृत्य' इति। 'तिरसोऽन्यतरस्याम्' (८.३.४२) इति सत्वम्। प्रत्युदाहरणे तु न भवति, तत्र गत्यनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात् सूत्रे विभक्त्यभावः॥

## ७३. उपाजेऽन्वाजे ।

## ७४. साक्षात्प्रभृतीनि च ।

'साक्षात्प्रभृतिषु' इति । असाक्षाद्भूतं यदा साक्षात्क्रियते तदा यथा स्यात्, यदा यत्तु साक्षाद्भूतमेव रूपान्तरेण क्रियते तदा मा भूदित्येवमर्थम् । मिथ्याप्रभृतिष्वपि द्रष्टव्यम् । एतच्चान्तरङ्गत्वाल्लभ्यते, तथा हि–साक्षात्कृतमित्युक्ते श्रुतस्य तस्यैव रूपस्य करणं प्रतीयते, न त्वश्रुतरूपान्तरस्य ।

नन्वसत्यामपि प्रकृतिविवक्षायां तस्यैव रूपस्य करणं प्रतीयते, अथ च च्व्यर्थवृत्तिता नास्ति, तस्माच्च्व्यर्थग्रहणमेव कर्त्तव्यम् । अथ च्व्यन्तेष्वपि साक्षादादिषु अयं विकल्पः कस्मान्न भवति ? अस्तु, अनेन मुक्ते पुनः प्रसङ्गविज्ञानात् 'ऊर्यादिच्विडाचश्च' (१.४.६१) इत्येषा भविष्यति ? नैवं शक्यम्, यदेतल्लवणादीनां मकारान्तत्वनिपातनं तदपि च्व्यन्तेषु स्यात् । एवं लवणादीनां मान्ता लवणादय आदेशाः करिष्यन्ते, तत्र यद्येकदेशविकृतस्यानन्यत्वाल्लवणीशब्दस्यापि पक्षे लवणमादेशः क्रियते न कश्चिद्दोषः; त्रैशब्द्यं हि नः साध्यम्–लवणंकृत्य, लवणं कृत्वा, लवणीकृत्येति, तच्चैवं सति सिद्धम् । वृत्तिकारस्तु 'मकारान्तत्वं निपात्यते' इति वदति, स मन्यते–च्व्यन्तेषु पूर्वविप्रतिषेधेन नित्या संज्ञा भवति, विकल्पेन तु सन्नियुक्तं मान्तत्वं निपातनमिति । अग्नौ, वशेप्रभृतयो विभक्तिप्रतिरूपका निपाताः, प्रादुराविशब्दयोरूर्यादित्वात् प्राप्ते विभाषा ॥

## ७५. अनत्याधान उरसिमनसी ।

उरसिमनसिशब्दौ निपातौ । 'उरसिकृत्य' इति । अभ्युपगम्येत्यर्थः । 'मनसिकृत्य' निश्चित्येत्यर्थः ॥

## ७६. मध्ये पदे निवचने च ।

अविभक्तिको निर्देशः, मध्येपदेशब्दौ निपातौ । 'निवचनं वचनाभावः' इति । तत्र निपातनादेकारान्तत्वं न पुनरेषा सप्तमी । 'वाचं नियम्य' इति । व्याख्यानान्निपातनं चाविशेषेण, न तु संज्ञासन्नियुक्तं निवचने कृत्वेति उदाहृतत्वादित्याहुः ॥

## ७७. नित्यं हस्ते पाणावुपयमने ।

'दारकर्म' इति । अन्ये तु स्वीकरणमात्रमिच्छन्ति–हस्तेकृत्य महास्त्राणीति, हस्तेपाणौशब्दौ निपातौ ॥

## ७८. प्राध्वं बन्धने ।

'मकारान्तमव्ययम्' इति । चादिषु पाठात् । 'आनुकूल्ये वर्तते' इति । तेन बन्धने वर्तमानः प्राध्वंशब्दः इत्ययमर्थो न भवति । कथं तर्हि बन्धने इत्यस्यान्वय इत्यत आह–'तत्' इति ।

'बन्धने' इति । सत्सप्तम्यर्थद्वारकश्च प्राध्वमित्यनेन सम्बन्धः, बन्धने सति यदानुकूल्यं तद्बन्धनहेतुकमिति भावः ।

'प्राध्वं कृत्वा शकटं गतः' इति । प्रस्थितोऽध्वानं प्राध्वः, 'अत्यादयः क्रान्ताद्यर्थे' (वा. ९१) इति समासः, 'उपसर्गादध्वनः' (५.४.८५) इत्यच् लाक्षणिकत्वादेवात्र न भविष्यति; तस्मादव्ययस्यैवायं प्रयोगः, आनुकूल्यं तु बन्धनहेतुकं न विवक्षितमिति व्याचक्षते ॥

## ७०. जीविकोपनिषदावौपम्ये ।

जीविका = जीवनोपायः, 'संज्ञायाम्' (३.३.१०९) इति करणे ण्वुल् । ण्यन्ताद्वा कर्त्तरि उपनिपूर्वात्सदेः 'सत्सूद्विष' (३.२.६१) इति क्विप् 'सदिरप्रतेः' (८.३.६६) इति षत्वम्, उपनिषद् = रहस्यं वेदान्तजन्यं ज्ञानम्, वेदान्तभागो वा । 'औपम्ये' इति । उपमीयतेऽनयेत्युपमा 'आतश्चोपसर्गे' (३.१.१३६) इत्यङ्, तस्या भाव औपम्यम् । विषयसप्तमी चैषा, उपमानोपमेयसम्बन्धनिमित्तादभेदोपचाराद्यावुपमेयनिष्ठौ भवतः, तावौपम्यविषयौ । 'जीविकात्कृत्य, उपनिषत्कृत्य' इति । जीविकामिव कृत्वा, उपनिषदमिव कृत्वेत्यर्थः । यद्यपि गतिसमासो नित्यः, तथापीवशब्दप्रयोगे स्वार्थनिष्ठत्वादीदृशवाक्यं भवत्येव ॥

## ८०. ते प्राग्धातोः ।

नियमार्थमिदम् । स पुनर्नियमः संज्ञानियमो वा स्यात् प्रयोगनियमो वा स्यात् ? तत्र संज्ञानियमे तेशब्देन प्रादय उपनिषत्पर्यन्ताः स्वरूपेण परामृश्यन्ते, न गत्युपसर्गसंज्ञाविशिष्टेन रूपेण; संज्ञयोरनिष्पादनात् । अनेनैकवाक्यतापन्नैः पूर्वसूत्रैस्तयोर्विधानात् । ते प्रादय उपनिषत्पर्यन्ता धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गसंज्ञा भवन्तीत्यर्थः । प्रयोगनियमे तु लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते । ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इत्यर्थः ।

तत्राद्ये पक्षे स्वरूपेण परामर्शः प्रादीनामिव चादीनामपि स्यात्, ततश्च निपातसंज्ञाया अपि नियमः स्यात् । अथापि गत्युपसर्गसंज्ञयोरेव नियमः, एवमप्यनर्थकं वचनम्, प्रयोग एव हि तेषामप्राङ् नेष्यते । न पुनरप्राक् प्रयुज्यमानानां संज्ञायां किञ्चिदनिष्टमापद्यते । 'छन्दसि परेऽपि' (१.४.८१), 'व्यवहिताश्च' (१.४.८२) इति रूपद्वयं चानर्थकम्' परव्यवहितानां संज्ञैव निषिद्धा, न तु प्रयोगः । न च तेनापि संज्ञैव विधीयते, निष्प्रयोजनत्वात् । किञ्च 'अनुकरणं चानितिपरम्' (१.४.६२) इत्यनितिपरग्रहणमनर्थकं स्यात्, 'खाडिति कृत्वा निरष्ठीवत्' इत्यत्र व्यवहितस्यानुकरणस्य गतिसंज्ञैव निषिद्धा, प्रयोगस्तु केन वार्यते ! प्रयोगनियमे तु धातोः प्रागेवानुकरणस्य प्रयोगः स्यात्, न त्वितिशब्देन व्यवहितस्येति अनितिपरमिति वक्तव्यम् । अतः प्रयोगनियम एवायं युक्त इति मत्वाऽऽह—'ते गत्युपसर्गसंज्ञकाः' इति ।

अथास्मिन्नपि पक्षे निपातानामपि तेशब्देन परामर्शः कस्मान्न भवति? व्यवहितत्वात् । कथं तर्ह्युपसर्गाणां परामर्शः, नोपसर्गास्तेन रूपेण परामृश्यन्ते, किं तर्हि ? गतिरूपेण, तेषामपि गतित्वात् । अनेनैवाभिप्रायेण वृत्तावुपसर्गाणां पृथग्ग्रहणम् । चादयस्तु नैवमिति न ते परामृश्यन्ते । ननु यत्र लोके सङ्कीर्णः प्रयोगः—गौर्गवीति,

तत्र साधुपरिज्ञानाय शास्त्रमर्थवत् । यत्र त्वसङ्कीर्ण एव प्रयोगो न तत्र शास्त्रकृत्यमस्ति; न च कश्चित् प्रपचतीति प्रयोक्तव्ये पचतीति प्रेति प्रयुङ्क्ते । यद्यपि लोके प्रयोगो न दृश्यते विपरीतः, छन्दसि तु परव्यवहितप्रयोगदर्शनात् भाषायामपि तथा प्रयोगः शङ्क्येत, दर्शितश्चाद्यत्वेऽपि भाषायामेव गतेराविःशब्दस्य परव्यवहितप्रयोग ऊर्यादिसूत्रे (१.४.६१)। किञ्च 'उदि कूले रुजिवहोः' (३.२.३१) कूलमुद्वह इत्यत्र 'उदि' 'कूल' इति द्वयोरपि सप्तमी-निर्देशादुपपदत्वात्समासे कृते 'उपसर्जनं पूर्वम्' (२.२.३०) इति शास्त्रवशात्पर्यायेण पूर्वनिपातं मन्येरन् इत्युप-सर्जनसन्निपाते पूर्वपरव्यवस्थार्थमिदं वक्तव्यम् । यद्येवम्, 'कर्तृकर्मणोश्च भूकृञोः' (३.३.१२७)–सुखेन कटः क्रियते, सुकटङ्कराणि वीरणानि, दुष्कटङ्कराणि, अत्र सुदुसोः प्राग्धातोः प्रयोगः प्राप्नोति–कटं सुकराणीति । खलः खित्करणमिदानीं किमर्थं स्यात् ? अनव्ययस्य हि मुमुच्यते, खित्करणसामर्थ्यादव्ययस्य भवतु, यदि वा 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या. प. १२६) इति सुकरशब्दे परतः कटस्य भविष्यति; कर्त्तव्योऽत्र यत्नः ।

धातुग्रहणमनर्थकम्, कुतः ? प्रागित्यपेक्षायां यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति विज्ञास्यते; नैवं शक्यम्, इह च कर्तुं प्रेच्छति प्रचिकीर्षतीति सन्वाच्यया इच्छया प्रशब्दस्य योग इति सन एव प्राक् प्रशब्दः प्रयुज्यते, धातु-ग्रहणात्तु धातोरेव चिकीर्षतेः प्राक् प्रयुज्यते ।

'तेग्रहणमुपसर्गार्थम्' इति । ननु यदि गतिसंज्ञारहिताः केवलोपसर्गसंज्ञा एव प्रादयः स्युः, ततोऽसति तेग्रहणे गतीनामनन्तरत्वात्त एव सम्बध्येरन् न तूपसर्गा इति तदर्थं तेग्रहणं कर्त्तव्यम् ? तेऽपि तु गतिसंज्ञकाः, ततश्चानन्तराणां गतीनामपि सम्बन्धे प्रादीनामपि गतित्वादेव ग्रहणं सिद्धय् । स्यादेतत्–असति तेग्रहणे गतिसंज्ञैव केवला येषाम्, तेषामेव स्यात्; नोभयसंज्ञकानां प्रादीनामिति ? न; केवलगतेरभावात् । ननु चायमस्ति 'अनुकरणं चानितिपरम्' (१.४.६२) इति, न; तस्यापि निपातत्वात्, उच्यते; असति तेग्रहणे प्रकृतेष्वपेक्षा चेत् कतिपये सम्बध्येरन्; नोपसर्गपर्यन्ताः । व्याप्तिन्यायात्तु भूयसामपेक्षायां न प्रादिष्वेव पर्यवसाने कारणमस्तीति चादयोऽप्यपेक्ष्येरन् । तेग्रहणे तु सति गतिसञ्ज्ञाया अनन्तरत्वात्तेन रूपेण परामर्शो न कतिपयानामेव भवतीति प्रादीनपि व्याप्नोति, चादींश्च परिसंचष्टे इति तेग्रहणमुपसर्गार्थं भवति । तत्पर्यन्तानां च यथा स्यात् तेषामेव च यथा स्यादित्यर्थः । 'गतयो ह्यनन्तराः' इति । येऽनन्तरास्त एव कतिपये गृह्येरन्, प्रत्यासत्ताविति भावः । व्याप्तौ तु दोषः सुज्ञानत्वान्न कण्ठोक्तः ॥

## ८१. छन्दसि परेऽपि ।

'न च परेषाम्' इति । न च 'गतिर्गतौ' (८.१.७०) इत्यस्यापि सम्भवः, परभूतानामेकाकिनामेव दर्शनादिति मन्यते ॥

## ८२. व्यवहिताश्च ।

दिक्छब्दानामव्यवहिते मुख्या वृत्तिरिति प्राक् परस्ताच्च व्यवहितानां प्रयोगार्थमिदं वचनम् । अत एव भाषायां व्यवहितानामप्रयोगः । कथं तर्हि गतिव्यवाये प्रयोगः–अभ्युद्धरति, समुदाहरतीति ? न तुल्यजातीयं व्यवधायकं भवति, तद्यथा–किमनन्तरे एते ब्राह्मणकुले इति पृष्टः सन्नाह–नानन्तरे, वृषलकुलमनयोर्मध्य इति

विजातीयं व्यवधायकं निर्दिशति, जातेर्वा समाश्रयणान्नास्ति व्यवधायकत्वम् । एवं च गतिरनन्तरग्रहणम्, 'गतिर्गतौ' (८.१.७०) इति वचनम्, 'अभिप्रैति' इति निर्देशश्चोपपन्नो भवति ॥

## ८३. कर्मप्रवचनीयाः ।

वक्ष्यमाणानां संज्ञिनां बहुत्वाद्बहुवचनम्, यथा–निपाताः, कृत्या इति । क्वचित्तु सामान्यविवक्षयैकवचनम्, 'गतिश्च' (१.४.६०), प्रत्ययः' (३.१.१), 'कृत्' इति । महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्–कर्म = क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इति । भूते 'कृत्यल्युटो बहुलम्' (३.३ ११३) इति कर्त्तरि कृत्यः । के च कर्म प्रोक्तवन्तः ? ये प्रयुज्यमाने क्रियापदे– 'अनुभूयते कम्बलः' इत्यादौ क्रियाविशेषं द्योतितवन्तः, न सम्प्रति क्रियाविशेषं द्योतयन्ति, किं तर्हि ? सम्बन्धविशेषम्, तद्यथा–शाकल्यस्य संहितामनुप्रावर्षदिति । न ह्यत्रानुरनुभूयते इत्यादाविव क्रियाविशेषं द्योतयति, क्रियापदाभावात्; नापि षष्ठीवत्सम्बन्धमाचष्टे–संहितामिति; द्वितीयायास्तदर्थत्वात् । नापि क्रियापदमाक्षिपति, यथा–प्रादेशं विपरिलिखतीति, विशब्दो विमानक्रियां प्रादेशं विमाय परिलिखितीति । तथा हि–सति प्रादेशमितिवत् कारकविभक्तिप्रसङ्गः, शेषसम्बन्धस्य वा प्रतीतिप्रसङ्गः । तदेवमनुः संहिताप्रवर्षणयोर्यः शेषसम्बन्धो द्वितीयाभिहितस्तं विशेषेऽवस्थापयति । हेतुहेतुमद्भावेन रूपेण विशिष्टक्रियाजनितत्वेन वा सम्बन्धस्य तत्सन्निधौ सम्प्रत्ययात् संहितामनुनिशम्य प्रावर्षदिति । उक्तञ्च–

> क्रियाया द्योतको नायं [1]न सम्बन्धस्य वाचकः ।
> नापि क्रियापदापेक्षी सम्बन्धस्य तु भेदकः ॥ इति । (वा.प. २.२०४)

क्वचित्तु प्रवृत्तिनिमित्ताभावेऽपि वचनसामर्थ्यादियं संज्ञा प्रवर्तते, यथा–'सुः पूजायाम्' (१.४.९४), 'अतिरतिक्रमणे च' (१.४.९५) इति ॥

## ८४. अनुर्लक्षणे ।

'यावता' इति । यावताशब्दो निपातो नन्वित्यर्थे । अन्येत्यर्थ इत्यन्ये । 'लक्षणेत्थम्भूताख्यानेति सिद्धम्' इति । तत्र चावश्यमनोर्ग्रहणं कर्त्तव्यमित्थम्भूताख्यानादिषु यथा स्यात् । लक्षणग्रहणं च प्रत्याद्यर्थम्, अतोऽर्थान्तरसंज्ञान्तरसाधारणत्वात्तदेवास्तु; इदं तु न कर्त्तव्यमिति भावः । 'हेत्वर्थं तु' इति । तुशब्दः पक्षं व्यावर्त्तयति । हेतुः = करणम्, अर्थः = प्रयोजनं प्रयोजकोऽस्य वचनस्येत्यर्थः । ननु च तत्र चात्र च लक्षणग्रहणमेव क्रियते, तद्यदि हेतुर्लक्षणं न भवति, इहापि न गृह्यते, अथ भवति तत्रापि गृह्येतेति पुनरपि नार्थ एतेन ? तत्राह–'हेतुतृतीयाम्' इति । सत्यम्; लक्ष्यतेऽनेन तल्लक्षणम् = चिह्नं ज्ञापकम्, कारणमपि नियतं कार्यविशेषावगतिहेतुत्वाल्लक्षणं भवत्येव । उक्तं भाष्ये–लक्षणेन हेतुरपि व्याप्तो नावश्यं तदेव लक्षणं येन पुनः पुनर्लक्ष्यते, किं तर्हि ? यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणमिति । किन्तु येन नाप्राप्तिन्यायेन (व्या.पा. ४९) कर्मप्रवचनीययुक्ते द्वितीया (२.३.८) षष्ठ्या एवापवादः । ततश्च लक्षणेत्थम्भूतेत्यनोर्लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशो. यो हेतुर्न

1. सम्बन्धस्य न वाचकः– वा. प.

भवति—वृक्षमनुविद्योतते विद्युदिति, हेतुतृतीयाया अवकाशः—धनेन कुलमिति; हेतुभूते तु लक्षणे उभयप्रसङ्गे परत्वात् तृतीया स्यात्, तामपि बाधित्वा द्वितीयैव यथा स्यात्। पुनः संज्ञाविधाने कक्षान्तरप्राप्तत्वाद्द्वितीयैव तृतीयां बाधते। उक्तञ्च—

हेतुहेतुमतोर्योगपरिच्छेदोऽनुना कृते।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा॥ (वा.प. २. २०३) इति।

'तृतीयार्थे' इत्यनेन तु पुरस्तादपवादन्यायेन (व्या प ९) 'सहयुक्तेऽप्रधाने' (२ ३ १९) इत्यस्यैव बाधः, न हेतुतृतीयाया इति वक्तव्यमेतत्॥

## ८५. तृतीयार्थे।

'नदीमन्ववसिता' इति। सहार्थोऽत्र तृतीयार्थः। अन्ववपूर्वात् 'षिञ् बन्धने' (धा पा. १४७७) इत्यस्मात् कर्त्तरि क्तः॥

## ८६. हीने।

'हीनोत्कृष्टसम्बन्धे संज्ञा' इति। कर्मप्रवचनीयविभक्तिस्तु तेन व्यतिरिच्यमान उत्कृष्ट एव भवति, न हीने, अभिधानशक्तिस्वाभाव्यात् नोभाभ्यामेकयैव द्वितीयया द्विष्ठस्यापि सम्बन्धस्याभिधानात् षष्ठीवत्॥

## ८७. उपोऽधिके च।

अत्राप्यधिकिना विनाधिकस्यासम्भवादधिकाधिकिसम्बन्धे संज्ञा विधीयते। विभक्तिरप्यधिकिन एव भवति, नाधिकात्। 'उपखार्यां द्रोणः' इति। खारशब्दो गौरादिः, खारी तावदस्ति, अधिकोऽपि तस्यां द्रोणोऽस्तीत्यर्थः। 'यस्मादधिकम्' (२.३.९) इति सप्तमी॥

## ८८. अपपरी वर्जने।

प्रकृतेन वाक्ये प्रतिपाद्यमानेनेत्यर्थः। 'परिपरित्रिगर्त्तेभ्यः' इति। 'पञ्चम्यपाङ्परिभिः' (२.३.१०) इति पञ्चमी, 'परेर्वर्जने' (८.१.५) द्विर्वचनम्, कर्मप्रवचनीयेन पञ्चमीसहितेन द्योतितेऽपि वर्जने भवति, उभयोरपि विधानसामर्थ्यात्। 'परिषिञ्चति' इति। परिः सर्वतोभावे, अत्रास्याः संज्ञाया अभावादुपसर्गत्वे सति 'उपसर्गात्सुनोति' (८.३.६५) इति षत्वं भवति, 'शे मुचादीनाम्' (७.१.५९) इति नुम्॥

## ८९. आङ् मर्यादावचने।

मर्या मरणधर्माणो मनुष्याः, औणादिको यप्रत्ययः, तैराधीयते मर्यादा, 'आतश्चोपसर्गे' (३.१.१३६)

इत्यङ्प्रत्ययः । 'अवधिर्मर्यादा' इति । ननु यत्रावधिः कार्येण युज्यते सोऽभिविधिः, यत्र न सा मर्यादा; अवधिस्तु साधारणं, तत्कथमवधिर्मर्यादा ? नायमत्रार्थो योऽवधिः सा मर्यादेति, किं तर्हि ? या मर्यादा सोऽवधिरित्यर्थः। 'वचनग्रहणात्' इति । इह मर्यादायामिति वाच्ये वचनग्रहणं क्रियते, तस्यैतत्प्रयोजनमेवं यथा विज्ञायेत–उच्यतेऽस्मिन्निति वचनम्, मर्यादाया वचनमिति कर्मणि षष्ठ्याः समासः । मर्यादाशब्दो यत्रोच्यते 'आङ्मर्यादाभिविध्योः' (२.१.१३) इति, तस्याङो ग्रहणम्, स चाभिविधिवृत्तिरपीत्यत्राप्यभिविधेर्ग्रहणं भवति ।

यद्वा–वचनग्रहणसामर्थ्यादवान्तरभेदो न विवक्ष्यते, अवधिमात्रं गृह्यते । 'आ मथुरायाः' इति । वृष्टो देव इत्यपेक्ष्यते, 'मन्थ विलोडने' (धा. पा. ४२), औणादिकः कुरच्प्रत्ययः । 'ईषदर्थे क्रियायोगे च मा भूत्' इति। वाक्यस्मरणयोस्त्वङित्वादेवाप्रसङ्गः, तत्रेषदर्थे आ कडारः पञ्चमी न भवति, क्रियायोगे समाहार इति 'गतिर्गतौ' (८.१.७०) इति निघातो भवति ॥

## ९०. लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ।

लक्ष्यते येन तल्लक्षणम् = चिह्नं ज्ञापकम् । अयं प्रकार इत्थम्, प्रथमान्तादिदमस्थमुः, इह त्विदमा प्रत्यवमृश्य सन्निहितस्य कस्यचिदभावात्प्रकारविशेषमात्रवृत्तिरित्थंशब्दः । 'भू प्राप्तौ' (धा पा. १८४४) आत्मनेपदी, 'आ धृषाद्वा' (धा.पा. १८०५ तः अनन्तरम्) इति णिजभावपक्षे गत्यर्थत्वात्कर्तरि क्तः । तत इत्थंशब्दादव्ययादपि वृत्तिविषये सत्त्वधर्मोपादानात्कर्मणि द्वितीया, श्रितादिषु गम्यादीनामिति समासः, कञ्चित् प्रकारं प्राप्त इत्थम्भूतः, इत्थम्भूतस्याख्यानमित्थम्भूताख्यानम् । स्वीक्रियमाणोंऽशो भागः, यस्त्वंशमात्रे प्रयोगः प्रियङ्गोर्भाग इति स भागसादृश्यात् व्याप्तुमिच्छा वीप्सा, सा चाष्टमे स्पष्टयिष्यते, एते लक्षणादयो यथा विभक्तिसमीपादयोऽव्ययार्था नैवं प्रत्यादीनामर्थाः, किं तर्हि ? संज्ञायाः प्रत्यादीनां विषयत्वेन निर्दिष्टा इत्याह–'वीप्सायां च विषयभूतायाम्' इति । एतच्च लिङ्गविपरिणामेन लक्षणादिभिरपि सम्बन्धनीयम् । 'वृक्षं प्रति' इति । अत्र वृक्षो लक्षणं विद्योतनस्य, प्रत्यादयस्तु प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इत्येवं सम्बन्धविशेषेऽवस्थापयति–वृक्षं प्राप्य विद्योतते, वृक्षे प्रदेशे विद्योतत इत्यर्थः । 'साधुः' इति । अत्रापि प्राप्तिक्रियाजनित एव विषयविषयिभावसम्बन्धः, यथा वृक्षे दृष्टे विद्योतनं लक्ष्यते, नैवमत्रासाधुत्वापत्तिरितीत्थम्भूताख्यानग्रहणम् । 'यदत्र माम्' इति । यो मम भागः स दीयतामित्यर्थः । अत्र स्वीकरणक्रियाजनितः स्वस्वामिसम्बन्धः । 'वृक्षं वृक्षम्' इति । वीप्सा द्विर्वचनेन द्योत्यते । परिशब्दस्तु क्रिययैव सम्बध्यते, द्वितीया चेह कर्मणि । कर्मप्रवचनीयसंज्ञा तूपसर्गसंज्ञानिवृत्त्यर्था तेन 'उपसर्गात्सुनोति' (८.३.६५) इति षत्वं न भवति । 'अशब्दसाहचर्यात्' इति । परिशब्दोऽयं दृष्टापचारो वर्जने चावर्जने च कर्मप्रवचनीयः । अपशब्दस्तु वर्जने एव । कर्मप्रवचनीयाधिकारे पञ्चमी विधीयते, तत्र साहचर्यं व्यवस्थाहेतुः ॥

## ९१. अभिरभागे ।

'अभाग इति किम्' इति । अभिधेयं प्रयोजनं च परिज्ञातुं प्रश्नः । अत एवोभयं दर्शयति । भागः स्वीक्रियमाणोंऽशः । 'यदत्र ममाभिष्यात्' इति । ननु अन्वर्थसंज्ञाविज्ञानादेवात्र न भविष्यति, सम्प्रत्येव ह्यसौ विभजनक्रियां द्योतयति ? प्रत्यादीनामपि तर्हि न स्यात् ? वचनाद्भविष्यति । अभेरपि तर्हि प्राप्नोति, तस्मात् 'अभागे' इति वक्तव्यम्, तत्रोपसर्गत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (८.३.८७) इति षत्वम् । अथैवं कस्मान्न कृतम्–'लक्षणे-

त्थम्भूताख्यानवीप्सास्वभिः, प्रतिपरी भागे च, चकाराल्लक्षणादिषु च, अनुर्लक्षणतृतीयार्थयोश्च, चकाराद्भागे लक्षणादिषु च, ततो हीने, उपोऽधिके च'; इत्येवं हि द्विरनोर्ग्रहणम्, अभाग इति च न वक्तव्यं भवति। एवं हि द्विश्चग्रहणं क्रियते इति पदयोः साम्यम्, अक्षरलाघवं तु नादृतम् ॥

## ९२. प्रतिः प्रतिनिधिप्रतिदानयोः।

'मुख्यसदृशः' इति। मुख्यः क्वचित् कार्ये शत्रुवधादौ दृष्टसामर्थ्यः। यस्तु तदभावे तत्कार्यकरणाय प्रतिनिधीयते उपादीयते स प्रतिनिधिः, कर्मणि किप्रत्ययः। 'दत्तस्य' इति उत्तमर्णेन। 'प्रतिनिर्यातनम्' इति। प्रत्यर्पणम्। 'अर्जुनतः प्रति' इति। 'प्रतिनिधिप्रतिदाने च यस्मात्' (२.३.११) इति पञ्चमी, प्रतियोगे पञ्चम्यास्तसिः। 'माषान्' इति। तिलान् गृहीत्वा माषान् ददातीत्यर्थः ॥

## ९३. अधिपरी अनर्थकौ।

ननु चानर्थकयोः क्रियायोगाभावाद्गत्युपसर्गसंज्ञयोः प्राप्त्यभावान्न तद्बाधनार्थं कर्मप्रवचनीयसंज्ञाविधानमुपपद्यते, नापि परिशब्दयोगे पञ्चमीविधानार्थम्, तद्विधौ वर्जनार्थस्य ग्रहणात्। अपादानत्वाच्च सिद्धा पञ्चमी, यथाऽधिशब्दस्य प्रयोगे—कुतोऽध्यागच्छतीति। अत एव द्वितीयाविधानार्थमपि नोपपद्यते; तस्मादनर्थकयोः संज्ञाविधानमनर्थकमित्यत आह—'अनर्थान्तरवाचिनौ' इति। यथा तिष्ठति, नितिष्ठति; परिभवतीत्यादौ धातूपात्तादर्थादर्थान्तरवाचित्वम्, नैवमर्थान्तरवाचित्वम्; किन्त्वागच्छतीति प्रयोगे योऽर्थः स एवाधिपरियोगे ताभ्यामुच्यते। तदत्र विषये धातोरधिपर्योश्च सहाभिधायित्वम्; यथा—गजशब्दे योऽर्थः स एव मतङ्गज इति सर्वैः सहाभिधीयते। एवं वृषशब्दे योऽर्थः स एव वृषभशब्दे। तदेवमनर्थान्तरवाचित्वादनर्थककल्पत्वादनर्थकावित्युक्तम्, न स्वभावात्। तयोश्च गतिसंज्ञाबाधाय कर्मप्रवचनीयसंज्ञा विधेयेति दर्शितं भवति। 'कुतोऽध्यागच्छति' इति। किंशब्दात् 'अपादाने चाहीयरुहोः' (५.४.४५) इति तसिः, तस्य 'तसेश्च' (५.३.८) इति तसिलादेशः, 'गतिर्गतौ' (८.१.७०) इति निघाताभावः ॥

## ९४. सुः पूजायाम्।

'सुसिक्तं भवता' इति। भवच्छब्दात् कर्तरि तृतीया (२.३.१८)। कर्मप्रवचनीययुक्ते द्वितीया (२.३.८) न भवति; 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' (चा.प. ६९) इति। 'सुषिक्तं किं तवात्र' इति। क्षेपोऽयम्, न पूजा ॥

## ९५. अतिरतिक्रमणे च।

## ९६. अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु।

'पदान्तरस्य' इत्यादि। स्वार्थस्तावदव्यभिचारान्न गृह्यते इति पदान्तरस्यार्थः पदार्थः। तत्रापि पदान्तरप्रयोगे सत्यपिः प्रयुज्यमानस्तदर्थे कञ्चिद्विशेषमाधत्ते। यथा—नीलशब्द उत्पले, न तु तस्मिन्नेवान्यूनानतिरिक्ते

वर्तते, तथा सति पर्यायत्वप्रसङ्गेनाप्रयोगार्हत्वात् । अतः पदान्तरस्याप्रयोग एव तदर्थे प्रवृत्तो भवतीति भावः। 'सर्पिषोऽपि स्यात्' इति । प्रार्थनायां लिङ्, तस्या एव दुर्लभविषयतामपिशब्दो द्योतयन् स्यादित्यनेन सम्बध्यते इति षत्वप्रसङ्गः, दुर्लभत्वं च विषयस्यैव भवति, यदि तस्य बिन्दुमात्रमपि न लभ्यत इत्यत्रापिशब्दसामर्थ्याद्बिन्दुरिति गम्यते, तदाह–'मात्राबिन्दुस्तोकमित्यस्यार्थेऽपिशब्दो वर्तते' इति । तदुपजनिते च व्यतिरेके सर्पिष इति षष्ठी। द्वितीया तु न भवति, अपिना योगाभावात् । स हि स्यादित्यनेन सम्बध्यत इत्युक्तम् । 'अधिकार्थवचनेन' इति। यावत्यर्थेऽस्य सामर्थ्यं ततोऽधिकमर्थं ब्रुवन् यत् सेकादौ शक्तिमाविष्करोति तत्सम्भावनमित्यर्थः । 'अपि सिञ्चेत्' इति । सम्भावने लिङ् तस्यैव दुष्करविषयतामपिराह । कामचार इच्छाप्रवृत्तिः । 'अपि सिञ्चेत्' इति । सिञ्च वा मा वा, स्तुहि वा मा वा, यथेष्टं कुर्वित्यर्थः । जाल्मोऽपशब्दः । 'अपि सिञ्चेत्' इति । गर्हार्थे लिङ्। 'उपसर्गसंज्ञाबाधनात्' इति । स्यादित्यत्र 'उपसर्गप्रादुर्भ्याम्' (८.३.८७) इति सिचः 'उपसर्गात्सुनोति' (८.३.६५) इति षत्वप्रसङ्गः ॥

## ९७. अधिरीश्वरे ।

'तदयम्' इति । यथा 'हीने' (१.४.८६) इत्यत्र हीनोत्कृष्टसम्बन्धे संज्ञा, 'उपोऽधिके च' (१.४.८७) इत्यत्राधिकाधिकिसम्बन्धे, तथाऽत्रापीत्यर्थः । विभक्तिस्तु तत्रान्यतरस्मादुच्यते, इह तु न तथेत्याह–'तत्र कदाचित्' इति । 'यस्य चेश्वरवचनम्' (२.३.९) इत्यत्रार्थद्वयम्–ईश्वरशब्दो भावप्रधानः, यस्य स्वामिन ईश्वरत्वमुच्यते तस्मात्स्वामिनः सप्तमीत्येकः, यस्य स्वस्येश्वर उच्यते तस्मात्स्वात्सप्तमीत्यपरः । तत्र यदा स्वाम्यर्थे व्यतिरेकविवक्षा तदा ततः सप्तमी, स्वस्य तु व्यतिरेके तत इति । न पुनरुभाभ्यां युगपद्भवति, एकयैव विभक्त्या द्विष्ठस्यापि सम्बन्धस्याभिधानादिति मत्वा 'कदाचित्' इत्युक्तम् । 'ब्रह्मदत्ते' इति । ब्रह्मदत्तस्य स्वाः पञ्चाला इत्यर्थः । 'अधिपञ्चालेषु' इति । पञ्चालानां ब्रह्मदत्तः स्वामीत्यर्थः ॥

## ९८. विभाषा कृञि ।

'अधिरीश्वरे' (१.४.९७) इत्यनुवृत्तेः प्राप्ते विभाषेयम् । 'यदत्र मामधिकरिष्यति' इति । अधिपूर्वः करोतिर्विनियोगे वर्तते, यथा–अधिकृतोऽयमिह ग्रामे । 'स्वरितेनाधिकारः' (१.३.११) इति च, ईश्वरो भवत्येवमत्र मां विनियोक्ष्यत इत्यर्थः । कर्मणि द्वितीयैषा । यद्येवम्, संज्ञाविधानस्य किं प्रयोजनम् ? तत्राह–'कर्मप्रवचनीयसंज्ञापक्षे' इति । 'निपातैर्यद्यदि' (८.१.३०) इति निघातप्रतिषेधात् स्यप्रत्ययस्वरेण तिङन्तमुदात्तवत् ॥

## ९९. लः परस्मैपदम् ।

'ल इति षष्ठी' इति । अथ प्रथमाबहुवचने को दोषः, 'आमः' (२.४.८१) इति लावस्थायामेव लुप्यमानस्य लिटः संज्ञा स्यात् ततश्चेक्षामित्यत्राम्न स्यात्, न ह्यतो लिट्परः सम्भवति, शेषादेव परस्मैपदमिति नियमात् ? ज्ञापकात् सिद्धम्, यदयमाम्प्रत्ययवदित्याह, तज्ज्ञापयति–भवत्यात्मनेपदिभ्योऽप्यामिति । अयं तर्हि दोषो लकारस्यैव संज्ञा स्यान्न तदादेशानां तिबादीनामिति ? स्थानिवद्भावात्तेषामपि भविष्यति । 'तङानावात्मनेपदम्' (१.४.१००) इत्यत्र तर्हि 'ल' इति प्रथमान्तस्य तङानाभ्यां सम्बन्धो न स्यात्, न हि तङानौ लौ भवतः।

ननु चैवं विज्ञास्यते–तङानभावी लकार एव, तङानावित्युक्त इति । एवमपि गत्यन्तरे सति न क्लिष्टकल्पना युक्ता, तस्मात् 'लः' इति षष्ठी । 'आदेशापेक्षा' इति । न च संज्ञापेक्षा, लकारस्य परस्मैपदमिति संज्ञा भवतीति, पुनः ? सामानाधिकरण्येन प्रायेण संज्ञाविधानात् । किञ्च–जसि यो दोषः, सोऽस्मिन्नपि स्यात्; उभयत्र लकारस्य संज्ञित्वात् । तस्मादादेशापेक्षा षष्ठी । यद्येवम्, अनवकाशा पुरुषसंज्ञा परस्मैपदसंज्ञां शतृक्वसोः सावकाशां बाधेत । जसि तु लकारस्य परस्मैपदसंज्ञा तिङां तु पुरुषसंज्ञेति भिन्नविषयत्वान्नास्ति बाधप्रसङ्गः । यद्यपि जस्पक्षे तिबादीनामादेशानामपि 'स्थानिवदादेशः' (१.१.५६) इत्यनेन परस्मैपदसंज्ञा भविष्यति; तथापि तस्या अनाकडारीयत्वात्समावेशसिद्धिः । षष्ठीपक्षेऽपि ज्ञापकात् सिद्धम्, यदयम् 'सिचि वृद्धिः परस्मैपदेषु' (७.२.१) इत्याह, तज्ज्ञापयति–भवति तिङामप्येषा संज्ञेति । न हि सिज्विषये शतृक्वसू सम्भवतः, सामान्यापेक्षं च ज्ञापकमिति आत्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशसिद्धिः, अन्यथा परस्मैपदेषु सावकाशाः पुरुषसंज्ञाः तङक्ष्वनवकाशयाऽऽत्मनेपदसंज्ञया बाध्येरन् । अथ वा–पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्तेरयमर्थो भवति, लटः परस्मैपदात्मनेपदसंज्ञकाः सन्तस्त्रीणि त्रीणि पदानि भूत्वा प्रथमादिसंज्ञा भवन्तीति, तेन समावेशसिद्धिः ॥

## १००. तङानावात्मनेपदम् ।

अथ कस्माल्लस्येत्यस्यानन्तरमेते संज्ञे न विहिते, एवं हि पुरुषसंज्ञाभिरन्यत्र सिद्धोऽनयोः समावेशो भवति, तत्राह–'पूर्वेण' इति । आत्मनेपदसंज्ञया परस्मैपदसंज्ञाया बाधो यथा स्यादित्येवमर्थमस्मिन् प्रकरणेऽनयोर्विधानमिति भावः । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन ॥

## १०१. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।

'त्रीणि त्रीणि' इति वीप्सायां द्विर्वचनम् । तत्र च समुदायस्यावयवस्य च पृथक्पदत्वमिष्यते, आ पचसि पचसि देवदत्तेत्येकान्तता यथा स्यात्, कुण्डं कण्डं वाग् वाग् अपचन्नपचन्नित्यादौ पूर्वपदेऽप्यनुस्वारादि पदकार्यं यथा स्यादिति; तेन पदच्छेदकाले त्रीणित्रीणीत्येकं पदम्, द्वे वा । इह तिङां षड् त्रिकाः संज्ञास्तु तिस्र इति वैषम्यात् संख्यातानुदेशो न प्राप्नोति । अत्र यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाविधाने प्रयोजनं नास्ति, नैतावता यथाभिमतविषयलाभः, तत्राह–'तिङोऽष्टादश प्रत्ययाः' इति ।

एवं मन्यते–संज्ञा अपि षडेव, कथमेकशेषनिर्देशोऽयम् ? तत्र यदि प्रथमश्च प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमौ, उत्तमश्च उत्तमश्चोत्तमौ; प्रथममध्यमोत्तमा इति कृतैकशेषाणां द्वन्द्वः क्रियेत, ततो नाभिमतसंख्यातानुदेशः स्यात् । तस्मात्कृतद्वन्द्वानामेकशेषः-प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति । न चैवमपि विज्ञायते, किमादित आरभ्य त्रीणि वचनानि गृह्यन्ते ? आहोस्विदिच्छातस्त्रिकपरिग्रह इति ? न हि त्रिकपरिग्रहेऽपि यथासंख्यशास्त्रं क्रमते, किं तर्हि ? विहितेषु संज्ञानां क्रमेण सम्बन्धं विधत्ते । एवं तर्हि लोकत एतत्सिद्धम्, तद्यथा–विहव्यस्य द्वाभ्यां द्वाभ्यामग्निरुपस्थेय इति, न चोच्यते आनुपूर्व्येणेति, अथ च विहव्याख्यस्य सूत्रस्यादित आरभ्य आनुपूर्व्येण द्वाभ्यां द्वाभ्यामृग्भ्यामग्निरुपस्थीयते, न याभ्यां काभ्याञ्चित्; तत्र तिङोऽष्टादश प्रत्यया इत्यनेनादित आरभ्य त्रिकाणामानुपूर्व्येण ग्रहणं नेच्छात इति दर्शयितुं तिङग्रहणेन सन्निवेशोऽस्तीति दर्शितम् । न च 'परस्मैपदसंज्ञकः' इत्यादिना तु कृतद्वन्द्वानामेकशेषो न कृतैकशेषाणां द्वन्द्व इति दर्शितम् । यदि वा परस्मैपदग्रहणमात्मनेपदग्रहणं चानुवर्त्तते, तिङग्रहणं तु शतृक्वसोर्निवृत्त्यर्थम् । तदनुवृत्तौ च द्वौ राशी भवतः, तयोश्च व्यापा–

रभेदेन सूत्रमेतत्प्रवर्त्तते । तत्र चैकैकं त्रयस्त्रिका इति । यथासंख्यसिद्धिः । तत्र न चेत्यादिना राशिद्वयं दर्शितम् । सत्रेत्यादिना तु व्यापारभेदः । अत्रापि महासंज्ञाकरणं पूर्ववत् ॥

## १०२. तान्येकवचनद्विवचनबहुवचनान्येकशः ।

'एकशः' इति । 'संख्यैकवचनाच्च वीप्सायाम्' (५.४.४३) इति प्रथमान्ताच्छस् । प्रकृतत्वादेव त्रीणीत्यस्य सम्बन्धे सिद्धे तानिवचनं पुरुषवचनसंज्ञयोः समावेशार्थम्, अन्यथा ह्येकसंज्ञाधिकारे वचनप्रामाण्यात्पर्यायः स्यात्, ततश्च 'आडुत्तमस्य पिच्च' (३.४.९२) 'नित्यं ङितः' (३.४.९९) इति कार्यं वचनसंज्ञापक्षे उत्तमसंज्ञाया अभावान्न स्यात् । तानीत्यस्मिंस्तु सति तान्येतानि प्रथमादिसंज्ञाविशिष्टानि त्रीणित्रीणीत्येवं परामर्शाल्लब्धप्रथमादिसंज्ञानामेकवचनादिसंज्ञाविधानाद्भवति समावेशः ।

ननु त्रिकाणां पुरुषसंज्ञा एकैकस्य वचनसंज्ञेति विषयभेदान्नायमेकसंज्ञाधिकारविषयः, तन्न; यथा वृद्धिसंज्ञा प्रत्येकमादैचां भवति, तथा पुरुषसंज्ञाऽपि त्रीणि त्रीणीति वचनात् त्रिषु प्रवर्त्तमानापि तिबादिषु प्रत्येकमेव प्रवर्त्तते, न समुदाये; तस्य प्रयोगेऽभावात्, प्रत्येकमेव तेषां धातोरुत्पत्तेः । त्रिग्रहणं तु मर्यादार्थमादित आरभ्य त्रयाणां प्रथमसंज्ञा भवतीति, न पुनः समुदाये संज्ञाप्रवृत्त्यर्थं तानि तिङस्त्रीणित्रीणि पदानि भूत्वेति । तिबादिसूत्रे समाहारद्वन्द्वेऽष्टादशावयवपदानि तिङ्शब्दस्य त्रीणित्रीणीति समानाधिकरणस्यापि पुंल्लिङ्गतापि सूत्रवद्भवति ॥

## १०३. सुपः ।

सुबिति प्रत्याहार ग्रहणं प्रथमैकवचनादारभ्य सुपः पकारात् । कपस्तु पकारेण न भवति, प्राग्दिशीयानां विभक्तिसंज्ञाविधानात्; अन्यथा विभक्तिसंज्ञायामपि इदमेव सुब्ग्रहणमनुवर्त्तेत इति सुप्त्वादेव सिद्धेऽनर्थकं तत्स्यात् । 'तिङां त्रिकेषु' इति । किमर्थं पुनरिदमुक्तम् ? इह कश्चिन्मन्यते–सूत्रे चकारस्याकरणात् संज्ञामात्रमिह सम्बध्यते, नान्यत्किञ्चिदिति तत्र दृष्टान्तप्रदर्शनेन त्रीणित्रीण्येकश इत्यनयोरनुवृत्तिं दर्शयति, यथा तिङां वचनसंज्ञा विहिता तथैव सुपामपीत्यर्थः । तथा च स्वयं चशब्दं पठित्वा व्याचष्टे– 'सुपश्च' इत्यादि ॥

## १०४. विभक्तिश्च ।

चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । तिङां व्यवहितानामपि स्वरितत्वादनुवृत्तिः । तिङां विभक्तित्वे प्रयोजनम्–आतामादौ 'न विभक्तौ तुस्माः' (१.३.४.) इति निषेधः, सुपां तु त्यदाद्यत्वादिकमपि ॥

## १०५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।

'लस्य तिबादयः' (३.४.७७.७८.) इत्यनेनैकवाक्यतामापन्नेनानेन तिबादीनां विशिष्टविधानम्, उत विहितानां तिबादीनां भिन्नेनानेन वाक्येन नियमः ? इति संशये नियम इत्याह–'लस्येत्यधिकृत्य' इति । विशिष्टविधाने

त्वितरेतराश्रयं स्यात्-सतां तिबादीनां प्रथमादिसंज्ञा, संज्ञायां च तिबादयो भाव्यन्त इति । स पुनर्नियम उपपद-नियमो वा स्यात्-युष्मदि मध्यम एव अस्मद्युत्तम एव, शेषे प्रथम एवेति; पुरुषनियमो वा-युष्मद्येव मध्यमः, अस्मद्येवोत्तमः, शेष एव प्रथम इति । तत्राद्ये पक्षे कुर्वंस्त्वं कुर्वाणस्त्वमिति युष्मदि शतृशानचौ च न स्याताम्, तृजादयश्च न स्युः-कर्ता त्वं कारकस्त्वमिति ? नैष दोषः; एतावान् विषयो युष्मदस्मदुपपदं शेषश्च सर्वश्चासौ पुरुषेषु नियतः । उच्यन्ते च तृजादयस्ते वचनाद्भविष्यन्ति । तुल्यजातीयस्य च नियमेन व्यावृत्तिः-युष्मदि मध्यम एव, न प्रथमोत्तमौ; अस्मद्युत्तम एव, न प्रथममध्यमौ; शेषे प्रथम एव, न मध्यमोत्तमाविति । एवं तर्हि तिबा-दिसूत्रे (३.४.७८) विधीयमानत्वात् प्राधान्यात्तेषामेव नियमो युक्तः, शेषग्रहणाच्चोपपदनियमे हि युष्मदस्मदी नियते, पुरुषा अनियताः, शेषश्चानियतः । तत्र प्रथम इत्येतावदप्युच्यमानं नियमार्थं विज्ञायते, तत्र च नियमान्तर-स्यासम्भवात् प्रथम एवेति नियमः, यत्र च प्रथमाप्रथमप्रसङ्गस्तत्रैवैविधो नियमः कर्तव्यः; शेष एव च तथा प्रसङ्ग इति तत्रैव नियमो भविष्यति, किं शेषग्रहणेन ! पुरुषनियमे तु मध्यमोत्तमौ नियतौ युष्मदस्मदी वा नियते, प्रथमश्च तत्र युष्मदस्मदोरपि प्रथमप्रसङ्गे शेष एव प्रथम इत्येवं प्रथमनियमः कर्तव्यः । न चान्तरेण शेषग्रहणमेवं नियमः शक्यते कर्त्तुमिति कर्त्तव्यमेव शेषग्रहणम् । अतः शेषग्रहणम् ।

सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्रयति-'तेषामयं पुरुषनियमः क्रियते' इति । तेषामित्युद्भूतावयवभेदस्तिबादिसमुदाय उच्यते, पुरुषापेक्षयाऽवयवषष्ठी । तेषां तिबादीनामवयवो यो मध्यम-पुरुषस्तस्योपपदनियमः क्रियत इत्यर्थः । सापेक्षस्यापि पुरुषशब्दस्य गमकत्वात् समासः । अथ वा, तेषामिति कर्मणि षष्ठी, पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्त इत्यर्थः । उपोच्चारितं पदमुपपदम्, शाकपार्थि-वादित्वात् (वा. ८३) उत्तरपदलोपी समासः, उपशब्दः सामीप्ये, ततश्च व्यवहिते न भवितव्यमिति शङ्कामपन-यति-'व्यवहिते च' इति । समीप इत्येव सिद्धे उपपदग्रहणादापेक्षिकस्यापि सामीप्यस्य ग्रहणम् । व्यवहितमपि च व्यवहिततरापेक्षया सन्निकृष्टमिति भावः । उपपदग्रहणं तु पूर्वभूतेऽपि युष्मदि यथा स्यात्, अन्यथा 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१.१.६६) इति परभूते एव स्यात् । ननु यथा स्थानिप्रयोगे तत्त्वकाराऽप्रयुज्यमानेऽपि भवति तथा पूर्वप्रयोगेऽपि परभूतस्याप्रयोगात् स्थानिनीति भविष्यति, नैतदस्ति; सप्तमीनिर्देशात् प्रयोगपक्षे परभूत एव स्यात् ।

'समानाभिधेये' इति । अधिकरणशब्दोऽभिधेयवचन इति दर्शयति । पुनः समानाभिधेये लकारेण नियम्य-मानेन वा पुरुषेण । त्रिविधं चाभिधेयं लकाराणाम्-भावः, कर्म, कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना लान्तेन सामानाधिकरण्यासम्भवात् कर्तृकर्मणोरेव ग्रहणमित्याह-'तुल्यकारके' इति । तुल्यमेकं कारकं यस्य तदयो-क्तम्, स्थानिन्यपीति स्थानशब्दः प्रसङ्गवाची, स्थानमस्यास्तीति स्थानी । तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोऽस्ति । उच्यते चेदं स्थानमस्यास्तीति, तत्र सामर्थ्यादवधारणं विज्ञायते-प्रसङ्ग एव यस्य, न तु प्रयोग इति । यद्वा स्वनिकायप्रसिद्धिरेषा-यस्य स्थाने आदेशो विधीयते स स्थानीति । इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्याप्रयुज्यमानेऽपीत्यर्थः । अपिशब्दात् प्रयुज्यमानेऽपि, तदाह-'स्थानिन्यपि' इत्या-दिना । स्थानिन्यपीति कोऽर्थः ? प्रयुज्यमानेऽप्रयुज्यमानेऽपीत्यर्थः । उपपदग्रहणप्राप्तस्य चार्थस्यापिशब्दोऽनुवादः । समानाधि-करण इति किम् ? त्वया गम्यत इत्यत्र मा भूत् ।

क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते, इह च अतित्वं पचति अत्यहं पचतीत्यत्रातिक्रान्तप्रधाने समासे युष्मदस्म-दोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तस्त्वं त्वत्कल्पः पचसि, मत्कल्पः पचामिति कालान्त-

रदृष्टगुणरहितो युष्मदस्मदर्थ एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यत इति मध्यमोत्तमौ भवतः, तत्सदृशपदार्थान्तराभिधाने तु प्रथमः, तथा त्वत्तरः पचसि, मत्तरः पचामि, परमत्वं पचसि, परमाहं पचामीति, कालान्तरादृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव। एवं च युष्मदर्थे मध्यमः, अस्मदर्थे उत्तम इतीयता सिद्धं युष्मदस्मदर्थे चेल्लकार उत्पन्नस्तर्ह्येव मध्यमोत्तमावित्यर्थः, तथा तु न कृतमित्येव। इह चात्वं त्वं सम्पद्यत इति त्वद्भवतीति भवति; प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वात्। एतच्च 'आन्महतः' (६.३.४६) इत्यत्रोपपादयिष्यामः। तथा च मन्त्रे–'यदग्ने स्यामहं त्वं त्वं वास्या अहम्' (ऋ.८.४४.२३) इति; 'अहं त्वं स्यां त्वं वाहं स्याम्' इति प्रकृत्याश्रयः पुरुषो दृश्यते। इह भवान् पचत्विति युष्मदर्थं प्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, न वा युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः। भवदर्थस्तु लिङ्गवान्, न च सम्बोधनैकविषयः। यथैव हि माणवकाधीष्वेत्यभिमुखीभावो गम्यते, एवं त्वमधीष्वेत्यपि। तथा च युष्मदः सर्वत्रैव सम्बोधने प्रथमा आमन्त्रिताद्युदात्तत्व च भवति, पदात्परत्वे च निघात इति केचिदाहुः। उक्तञ्च—

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः॥ (वा.प.३.१०.४)

[1]युष्मदर्थस्य सिद्धत्वान्नियता [2]चाद्युदात्तता।
युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ॥ इति। (वा.प.३.१० ६)

सत्यम्; सम्बोधनैकविषयो युष्मच्छब्दः, प्रथमा तु शुद्धैव; अभिमुखीभावेऽस्यापि प्रातिपदिकार्थं एवान्तर्भावात्, यत्र त्वनन्तर्भावः, तत्र तदभिद्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोऽपि; अन्यथा 'यूवं हि स्थः स्वर्पती' (ऋ.९.१९.२) 'यूयं [3]पात स्वस्तिभिः' (ऋ.७.१.२०) 'हये देवा यूयमिदापयस्थ' (ऋ.२.२९.४) इति पदादावप्यन्तोदात्तत्वं पदात्परत्वेऽप्यनिघातः। तदेवं भवच्छब्दस्यासम्बोधनविषयत्वाल्लिङ्गवत्त्वाच्चायुष्मदर्थत्वान्मध्यमो न भवतीति स्थितम्॥

## १०६. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च।

'प्रहासे गम्यमाने' इति। यत्र भूतार्थाभावाद्वञ्चनैव केवलं तत्र वक्तुरभिप्रायाविष्करणे प्रहासो गम्यते। मन्यतिशब्दस्यैकदेशानुकरणं मन्येति; मन्य उपपदं यस्य स तथोक्तः। लस्य धातोर्विधानात्तदादेशत्वाच्च मध्यमस्य धातुरन्यपदार्थ इत्याह। 'मन्योपपदे धातौ' इति। प्रकृतिभूते सतीत्यर्थः। 'स चैकवत्' इति। अर्थ द्वारकश्चोत्तमस्यैकवद्भावः, एकस्य वाचको भवतीत्यर्थः; द्वयोर्बहुषु मन्तृषु एकवचनमेव भवतीति यावत्। यत्र हि द्वौ मन्तारौ

1. युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ।
युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता॥ –वा.प.
2. वाद्युदात्तता–मुद्रित पाठः चौ. 1965.
3. यांत–मुद्रितपाठः चौ. 1965

बहवो वा, तत्रैकवद्भावो विधेयः; अन्यत्र तु मन्तुरेकत्वादेव सिद्धम्। 'एकवच्च' इति। चशब्दोन्वाचये, तेनैकवद्भावाभावेऽपि एकस्मिन्नपि मन्तरि प्रधानशिष्टौ मध्यमोत्तमौ भवतः।

अन्वाचयमेव दर्शयितुमयत्नसाध्यमेकं मन्तारमुदाहरति-'एहि मन्ये ओदनं भोक्ष्यसे' इति। सत्यप्योदने भोक्तुमागतं श्यालादिकं प्रति एतत्प्रयुज्यत इति परिहासावगतिः। द्विबह्वोस्तूदाहरणे-एहि मन्ये ओदनं भोक्ष्येथे न हि भोक्ष्येथे भुक्तः सोऽतिथिभिः; एहि मन्ये रथेन यास्यथ यातस्तेन पिता इति। 'मध्यमोत्तमयोः प्राप्तयोः' इति। युष्मदस्मदर्थस्य गम्यमानत्वात् प्रत्युदाहरणवत् प्रकृतमुपपदग्रहणं युष्मदा सम्बद्धम्। तच्च तथैवेहाप्यनुवर्त्यमिह मा भूत्-एतु भवान्मन्यते ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरिति। तदशक्यं मन्यतिना सम्बन्धुमिति पुनरिहोपपदग्रहणम्, अन्यथा मन्यतौ परत एव स्यात्। श्यना निर्देशात् 'मन ज्ञाने' (धा. पा. ११७६) इत्यस्य ग्रहणम्, न तु 'मनु अवबोधने' (धा.पा. १४७१) इत्यस्य, एहि मनुषे रथेन यास्यामीति एवं तस्य भवति। प्रत्युदाहरणे अतिथिं प्रति तथाभूतार्थवचनम्॥

## १०७. अस्मद्युत्तमः।

यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते, तदा लकारोऽपि भेदेनोत्पद्यते-त्वं चाहं च पचसि, पचामि चेति। सहविवक्षायां तु द्वयोरपि शक्त्योरेको लकार उत्पद्यते। तत्र युष्मदि मध्यमः, अस्मद्युत्तमो विप्रतिषेधेन-त्वं चाहं च पचावः, अहं च त्वं च वृत्रहन् संयुज्यावः इति। यद्यपि त्यदादीनां यद्यत्परमित्यस्मदः शेषस्तदापि स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति-आवां पचावः॥

## १०८. शेषे प्रथमः।

उपपद इति निवृत्तम्। शेष इति विषयसप्तमी, न पुनः परत इति, तदाह-'शेषे' इति। 'मध्यमोत्तमविषयादन्य उच्यते' इति। अन्यो विषय इत्यर्थः। यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्र शेष इत्यनेन युष्मदस्मदोरभावः शेषः, न पुनरन्यसद्भाव इति दर्शयति। किं सिद्धं भवति? त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्वं चाहं च देवदत्तश्च पचाम इति। अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदायः स युष्मदस्मद्भ्यामन्यः, तथापि युष्मदस्मदी तावत्स्त इति तत्सद्भावनिमित्तौ मध्यमोत्तमौ भवतः। न तु तदभावनिमित्तः प्रथमः। अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः। यदाह-तत्र युष्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति॥

## १०९. परः सन्निकर्षः संहिता।

'परशब्दोऽतिशये वर्तते' इति। यथा परं सुखं परं दुःखमिति, दिगादिषु वर्तमानस्य ग्रहणं न भवति सन्निकर्षस्य दिग्देशकालायोगात्। अर्थान्तरापेक्षमन्यत्वम्, अव्यभिचारिसन्निकर्षः प्रत्यासत्तिरिति, न तु संश्लेषः, तस्य वर्णेष्वसम्भवात्। स हि संयोगश्चेद् द्रव्यधर्मत्वान्न शब्दस्य गुणस्य सम्भवति। समवायश्चेन्न वर्णे वर्णः समवैति; शब्दस्याकाशसमवायित्वात्। येषां तु शब्दो द्रव्यं तेषां न क्वापि शब्दः समवैति। अतिशयोऽपि संयोगसमवाययोः कीदृश इति न विद्मः। प्रत्यासत्तेस्त्वपेक्षाभेदात् सम्भवति प्रकर्षाप्रकर्षयोगः, तस्मात्प्रत्यासत्तिरेव सन्निकर्षः।

ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः स्थानादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य ये निष्पादकास्तेषां व्यापारारम्भः। तत्रावश्यं मध्ये कियत्यपि कालकला भवति, सूक्ष्मत्वात्तु नोपलभ्यते; पद्मपत्रशतव्यक्तिभेदवत्, तत्कथं परः सन्निकर्ष इत्यत्राह—'अर्धमात्राकालव्यवधानम्' इति। सत्यम्, एतावद्वचवधानमवर्जनीयत्वात्सह्यते, अधिकेन तु कालेन व्यवधानं परग्रहणेन व्यावर्त्यत इत्यर्थः। यद्येवम्, द्रुतायामेव वृत्तौ स्यान्न मध्यमायां विलम्बितायां वा, न हि तया तयोः सन्निकर्षो यथा द्रुतायां तुल्यः सन्निकर्षः। सर्वासु वृत्तिषु नैरन्तर्येणोच्चारणाद्वर्णोपलम्भकभेदात्तु वृत्तिविशेषः। द्रुतायां स्वल्प उपलब्धिकालः, मध्यमायामधिकः, विलम्बितायामधिकतरः। द्विविधा हि ध्वनयः—प्राकृताः, वैकृताश्च। प्राकृता वर्णानामुत्पादकाः, वैकृते तु पुनःपुनरुपलम्भः, मध्यवर्ती तु कालः सर्वासु वृत्तिषु तावानेव। यद्वा—यस्यां वृत्तौ यावता कालेन व्यवायोऽवश्यम्भावी, ततोऽधिकेन व्यवायः परग्रहणेन व्यावर्त्यते। पदस्य पदान्तरेण यदानन्तर्यं तत्रैव लोके संहिताशब्दः प्रसिद्धः। तथा च—संहितामधीते न पदानि, पदान्यधीते न संहितामिति वक्तारो भवन्ति। ततश्च कुमार्यावित्यादौ पदावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः॥

## ११०. विरामोऽवसानम्।

'विरतिर्विरामः' इति। विराम इति भावे घञ्। विरामः = वर्णोच्चारणाभावः। अर्थान्तरमाह—'विरम्यतेऽनेनेति वा विरामः' इति। 'कृत्यल्युटो बहुलम्' (३.३.११३) इत्यसंज्ञायामपि 'हलश्च' (३.३.१२१) इति करणे घञ्, पूर्वत्राभावः संज्ञी उत्तरत्रान्त्यो वर्णः, तेन हि विरम्यते। तत्राद्ये पक्षे 'खरवसानयोः' (८.३.१५) इति परसप्तमी, कथं पुनरवसानेन, पौर्वापर्यमभावो हि सः, खरा वा, कथम्? न हि यदा खरस्ति तदा रेफः, यदा रेफस्तदा खर्; वर्णानां क्रमभावित्वात्, उच्चरितप्रध्वंसित्वाच्च। अथ तत्र बुद्धिपरिकल्पितं पौर्वापर्यं तदभावेऽपि समानम्। एवं 'वाऽवसाने' (८.४.५६) इत्यत्रापि। द्वितीये तु पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परतो रेफस्य विसर्जनीयो भवति, अवसाने च रेफे स्थानिनि विसर्जनीय इति स्थान्यादेशस्य विषयता निवक्ष्यते। एवं 'वाऽवसाने' इत्यत्रापि। 'दधिँ, मधुँ' इति। 'अणोऽप्रगृह्यस्यानुनासिकः' (८.४.५७) अत्र 'वाऽवसाने' इति वर्तते। ननु च लोक एवावसानशब्दो विरामे प्रसिद्धः; यद्यप्यवपूर्वः स्यतिरवगतौ वर्तते केनैतदवसीयत इति? पराभवेऽपि अवसितो देवदत्त इति। अवसानशब्दस्तु विराम एव प्रसिद्धः। न च रेफस्यावगतिपराभवयोः करणत्वं सम्भवतीति नार्थः संज्ञाकरणेन, तदाह—'संहितावसानयोर्लोकविदितत्वात् सिद्धम्' इति। संहिताशब्दोऽपि सन्निकर्षमात्रे प्रसिद्धः, न पदयोरेव सन्निकर्ष इति वार्त्तिककारो मन्यते'।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां

प्रथमाध्यायस्य चतुर्थः पादः॥

—०—

## समाप्तश्चायं प्रथमाध्यायः

—०—

## श्रीहरदत्तमिश्रविरचिता काशिकाव्याख्या

# पदमञ्जरी

—०—

## द्वितीयोऽध्यायः

### प्रथमः पादः

## १. समर्थः पदविधिः ।

'परिभाषेयम्' इति । नाधिकारः, पदविधिग्रहणात्, अन्यथा वक्ष्यमाणानां पराङ्गवद्भावादीनां[1] पदविधित्वाव्यभिचारादनर्थकं[2] तत्स्यात् । परितः–सर्वतः–पूर्वत्र, परत्र, व्यवहिते च, [3]अनन्तरे च–भाष्यते कार्यमनयेति करणे 'गुरोश्च हलः' (३.३.१०३) [4]इत्यकारप्रत्ययः । [5]भावसाधन एव वाऽभेदोपचारात्सूत्रे प्रयुज्यते । इदंशब्दस्य सूत्रे प्रयुक्तस्यापि [6]विधेयपरिभाषाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता । '[7]स सर्वः' इति । ननु यः कश्चि[8]त्पदविधिरिति सामान्यनिर्देशेनैव तद्धर्मभूता व्याप्तिरुक्ता, किं सर्वग्रहणेन ? नैतदस्ति; 'यः कश्चिद्ब्राह्मण आनीयताम्' इत्युक्ते क्षत्रियादिनिवृत्तिः प्रतीयते [9]न व्याप्तिः । प्रथमपठितमपि समर्थशब्दमुल्ल[10]ङ्घ्योद्देश्यसमर्पकत्वबलादार्थेन क्रमेण [11]प्रथमे भाविनं [12]पदविधिशब्दं व्याख्यास्यन्विधिशब्दः कर्मसाधन इति दर्शयति–'विधीयत इति विधिः' इति । कार्यमित्यर्थः । 'पदानाम्' इति । शेषलक्षणा षष्ठी । पदानां [13]सतां यत्कार्यं विधीयत [14]इत्यर्थः । यदि तु भावसाधनो विधिशब्द आश्रीयेत–[15]विधानं विधिरिति, ततः पदेषु [16]कृद्योगलक्षणा कर्मणि षष्ठी–[17]पदानामसतां निष्पादनं पदविधि[18]रिति, तत्र समासतद्धितसुब्धातुवृत्तयो न संगृहीताः स्युः । [19]तत्र हि पदानां [20]सतां [21]समासादिकार्यं विधीयते, न पुनः पदत्वम्[22] । ननु च कर्मसाधनपक्षेऽपि विभक्तिविधानमसंगृहीतं स्यात्, पदान्येव हि तत्र विधीयन्ते न तु पदानां सतां किञ्चित् ? उच्यते–'कर्मणि द्वितीया' (२.३.२) इत्यादिना [23]तु नियमः क्रियते, न पदविधिः । [24]अथाप्येकवाक्यतया स्वादिसूत्रेण (४.१.२) [25]विभक्तीनां विधानम् ? एवमपि

---

1. 'भावदीनाम्' इत्यधिकम्–म. 2. 'एव' इत्यधिकम्–ख. 3. नास्ति–ख. 4. इत्यकारः–ख. 5. भावसाधनः–म. ख. 6. विधेयरूप.....समानाधिकरण्यात्–म. 7. स–नास्ति–ख. 8. इत्यनेन परिभाषाधर्मभूता व्याप्तिरुक्ता, किंसर्वग्रहणेनाने न तदपस्तः–ख. 9. न व्याप्तिः–नास्ति–ख. व्याप्तिः–नास्ति–म. 10. उद्देशसमर्पकत्वादर्थेन–ख. म. 11. प्रथमभाविनं–ख. म. 12. पदविधिशब्दस्याख्या स्यात्–ख. म. 13. नास्ति–म. असतां–ख. 14. इत्यपि–ख. 15. विधीनं–ख. म. 16. लयोग–ख. 17. पदानमसता–ख. 18. इति–नास्ति ख. 19. अत्र–ख. म. 20. असतां–ख. नास्ति–म. 21. सप्तादिकार्यं–म. 22. विधीयते–इत्यधिकम्–ख. 23. नास्ति–ख. 24. एकवाक्यतया–ख. म. 25. विभक्तानां–म.

कारकविभक्तिषु ताव[1]त्क्रियाकारकयोरविनाभूतः सम्बन्धः, उपपदविभक्तीनां [2]तु 'अन्तरान्तरेण युक्ते' (२.३.४) [3]इत्यादीनामुपसर्गविभक्तीनां च 'नेर्विशः' (१.३.१७) इत्यादीनामेकवाक्यतायां [4]भिन्नवाक्यतायां च पदविधित्वमस्त्येव, [5]उपपदानामुपसर्गाणां च पदत्वात्। [6]समासादिरित्यादिशब्देन तद्धितवृत्त्यादीनां ग्रहणम्, तद्धिता अपि[7] सुबन्तादुत्पद्यन्ते। 'समर्थानां प्रथमाद्वा' (४.१.८२) इत्यस्य तु समर्थग्रहणस्य प्रयोजनं तत्रैव वक्ष्यामः।

एवम् 'इसुसोः सामर्थ्ये' (८.३.४४) इत्यादीनामपि 'समर्थः शक्तः' इति। तत्रैव समर्थशब्दस्य रूढत्वात्। स्वकार्यनिष्पादनक्षमो हि लोके 'समर्थः' इत्युच्यते। अर्थप्रतिपादनं च शब्दानां [8]स्वकार्यव्युत्पाद्यत्वेन [9]चाधिकृता [10]लौकिकाः वैदिकाश्च[11] यस्य [12]कस्यचित् प्रतिपादने समर्थाः, [13]उच्यते चेदं समर्थं इति, तत्र सामर्थ्याद् [14]विशेषोऽवगम्यते, स तु विशेषः प्रत्यासत्तेरेवंरूप इत्याह[15]—[16]'विग्रहवाक्यार्थाभिधाने' इति। [17]विशेषेण गृह्यते ज्ञायतेऽनेन [18]समासार्थ इति विग्रहः। [19]तादृशं च तद्वाक्यं चेति विशेषणसमासः। यद्वा विशेषेण ग्रहणं विग्रहः, तदर्थं वाक्यं विग्रहवाक्यम्, [20]अश्वघासादिवत् षष्ठीसमासः। अथ वा—अभेदोपचाराद्विग्रहार्थवाक्यं विग्रह इति विशेषणसमासः, तद्यथा—राजपुरुष [21]इत्ययं समासः, [22]तदर्थं विग्रहवाक्यं राजः पुरुष इति, अस्य योऽर्थस्तदभिधाने राजपुरुषशब्दः समर्थः; अतोऽपि तत्प्रतीतेः, स पुना [23]राजविशिष्टः पुरुषः। 'समर्थो वेदितव्यः' इति। साधुत्वेनेति शेषः। [24]यः पदविधिः स विग्रहवाक्यार्थाभिधाने समर्थः सन् साधुर्भवतीत्यस्मिन् पक्षे [25]सूत्रार्थः, नार्थान्तरं साधीयः पश्यामः।

[26]तत्तु सामर्थ्यं प्रयोगतोऽनुसर्तव्यम्। न पुनरियं वृत्तिरस्य वाक्यस्या[27]र्थाभिदानसमर्था, नान्यस्येत्येत[28]त्सूत्राक्षरैर्लभ्यते। अत एवास्मिन् व्याख्यानेऽ[29]परितुष्ट सन् व्याख्यानान्तरमाह—[30]'अथ वा' इति। अत्र पक्षे उपचरितवृत्तिः समर्थशब्दः, तदाह—'समर्थपदाश्रयत्वात्' इति। समर्थानि पदान्याश्रयो यस्य स तथोक्तः। अन्वर्थश्च समर्थशब्दो न [31]रूढ इत्याह—समर्थानां पदानां [32]संबद्धार्थानां संसृष्टानाम्' इति। [33]यः पदानां विधिः स समर्थानां वेदितव्यः। समर्थानामिति कोऽर्थः? संबद्धार्थानां संसृष्टार्थानां [34]वेत्यर्थः। तत्र वाक्ये [35]संबद्धार्थता; व्यपेक्षा हि तत्र सामर्थ्यम्। अन्योन्यापेक्षा [36]व्यपेक्षा। [37]आकाङ्क्षासन्निधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा।

---

1. क्रियाकारकविधौ न भूतः—म. 2. च. ख. 3. इत्यादीनां तिङविभक्तीनां—ख. म. 4. भिन्नतायां—ख. 5. उपपदोपपदत्वम् ख. °उपसर्गाणां नास्ति म. 6. °शब्दात् ख. म. 7. हि इत्यधिकम्. ख. 8. स्वकार्यप्रतिपाद्यत्वेन. ख. 9. चाधिकृतत्वात् ख. चेहा° म. 10. शब्दाः इत्यधिकम्—ख. 11. ते इत्यधिकम्—ख. 12. कस्यचिदर्थस्य ख. कस्यचित् नास्ति म. 13. एवम् इत्यधिकम्—ख. 14. विशेषो गम्यते ख. 15. असामर्थ्यम् इत्यधिकम् ख. 16. विग्रहवाक्यार्थाभिधानम्—ख. 17. विशेषेण ग्रहणं विग्रहः—ख; 18. वृत्त्यर्थः इत्यधिकम् म. 19. तादृशं च . . . . समासः इति भागः नास्ति ख. 20. अश्विघासादि . . . . समासः इति नास्ति ख. 21. इत्यस्य योऽर्थः—ख. 22. 'तदर्थम् . . . . इति' इति नास्ति ख. 23. राजपुरुषः ख. 24. यत्पदविधिः ख. 25. सूत्रविशिष्टार्थः ख. 26. तच्च—ख. 27. अर्थाभिधाने ख. 28. सूत्राकरे गम्यते—ख. 29. अतृप्तः—ख. 30. अर्थवतीत्यत्र पक्षे—ख. 31. रूढिः ख. 32. संबद्धानां संश्लिष्टार्थानाम्—ख. 33. यत्पदानां—ख. 34. चेत्यर्थः—ख. 35. संबन्धार्थता—ख. 36. आकांक्षा—ख. 37. आकांक्षायोग्यतासन्निधिमत्त्वे—ख.

वाक्ये हि 'राज्ञः' इति पदमनियतसम्बन्ध्यपेक्षया[1]उद्भूतसम्बन्धं विशेषणभूतमर्थमाचष्टे, [2]स्वसंनिहितं योग्यं च पुरुषमपेक्षते। समायमिति 'पुरुषः' इत्यनेनापि [3]पुरुषः स्वनिष्ठो[4]ऽभिधीयमानः स्वसंनिहितं राजत्वमवच्छेदकत्वेनापेक्षते–अहमस्येति। [5]अतो विशेषणविशेष्यभावेन सम्बन्धोऽनियतसम्बन्धिविषयत्वाच्चापेक्षया यो यः सन्निहितो योग्यश्च [6]तेन सम्बध्यते–राज्ञः पुरुषश्चाश्वश्च, राज्ञो देवदत्तस्य च पुरुष इति, [7]नार्थान्तरस्य। वृत्तौ [8]तु संसृष्टार्थता। एकार्थीभावो हि तत्र सामर्थ्यम्। वृत्तौ हि [9]राजपदं राजानमभिधाय न तावति पर्यवस्यति, पुरुषमप्याचष्टे, यथा–'गङ्गायां घोषः' इति गङ्गापदं तीरम्। यदि तु तावत्येव पर्यवस्येत् ततो[10] राज्ञः पुरुषोऽश्वश्चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात्। [11]स्वविशेषणसम्बन्धोऽपि स्यात्–ऋद्धस्य राजपुरुष इति। तथा ऋद्धस्य [12]राज्ञः पुरुष इति [13]तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे, न पुरुषमात्रम्। यदि तथा स्यात् [14]ततो यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषो देवदत्तस्य चेत्यपि स्यात्। अतो यस्य विशेषस्य भावादयं विशेषः स [15]एकार्थीभावः।

भाष्योक्ताश्चापरे विशेषाः–'सुब्लोपो व्यवधानं यथेष्टमन्यतरेण [16]अभिसम्बन्धः [17]स्वरभेदश्च [18]सङ्ख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं [19]'च योगस्य' इति। [20]तथा [21]सुपि अलोपश्च भवति वाक्ये–राज्ञः पुरुषः, नीलमुत्पलमिति। समासे तु द्वयोरेकस्मिन् विशिष्टे[22]ऽर्थे वृत्तेः पृथगर्थाभावात् स्वभावत एव विभक्तिर्निवर्तते। [23]सैव च स्वाभाविकी निवृत्तिः शास्त्रेणान्वाख्यायते–'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति प्रत्ययलक्षणेन [24]नलोपादिपदकार्यं यथा स्यादिति। पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति। [25]तथा वर्णेषु व्यवधानं च पृथगर्थत्व [26]एव दृष्टम् राज्ञ ऋद्धस्य पुरुष इति। [27]असत्यदृष्टम्, यथा–[28]राजपुरुषपदे न मध्ये पदान्तरं प्रक्षिप्यते। [29]प्रयोगनियमश्च पृथगर्थत्वेऽदृष्टः–राज्ञः पुरुषः पुरुषो राज्ञ इति। असति तु तत्र न दृष्टः, यथा–[30]पुरुषपदे। वर्णेषु स्वरभेदोऽपि [31]पृथगर्थत्व एव दृष्टः–राज्ञः पुरुष इति। द्वावपि [32]निस्स्वरेणाद्युदात्तौ। [33]अभेदेन दृष्टः, यथा–पुरुष इति। वृत्तौ चैकस्वर्यं दृश्यते। किं च, [34]सङ्ख्याविशेषोऽवगम्यते पृथगर्थेषु–राज्ञः, राज्ञोः राज्ञां पुरुष[35] इति। वृत्तौ तु[36]अभेदैकत्वसङ्ख्या गम्यते, तदेतत् 'अलुगुत्तरपदे' (६.३.१) इत्यत्रोपपादयिष्यामः। व्यक्तं चाभिधानं पृथगर्थेषु तिष्ठति–ब्राह्मणस्य कम्बल [37]इति। वृत्तौ [38]तु अव्यक्तमभिधानं तिष्ठति, ब्राह्मणकम्बल इति सन्देहो भवति–सम्बुद्धिर्वा स्यात्? षष्ठीसमासो वा? इति, न चात्र स्वरान्निर्णयः। वाक्येऽप्यामन्त्रितनिघातः कम्बलशब्दो घृतादित्वादन्तोदात्तः, समासे[39]ऽप्यन्तोदात्तता (६.१.१६९)।

---

1. °सम्बन्धविशेषण°–ख. 2. संनिहितं योग्यी च–ख. 3. पुरुषविशिष्टः–ख. 4. अपि अभिधीयमानसंनिहितशब्दानामवच्छेदकत्वेन–ख. 5. तेन–ख. 6. तेन तेन–ख. 7. 'नार्थान्तरस्य' नास्ति–ख. 8. तु नास्ति–ख. 9. राजशब्दो–ख. 10. यथा वाक्ये इत्यधिकम्–ख. 11. 'स्व' नास्ति–ख; 12. राजपुरुषः–ख. 13. यथा–ख. 14. ततो-नास्ति–ख. 15. एवार्थः–ख. 16. अपि सम्बन्धः–ख. 17. स्वरश्च–ख. 18. संख्याविशेषः–ख 19. वियोगः–ख. 20 तद्यथा–ख. 21. सुबलोपः भवति–ख. 22. अर्थवृत्तौ–ख. 23. 'तथा च' इत्यधिकम्–ख. 24. नलोपादिकार्यं–ख. 25. यथा–ख. 26. 'एव' नास्ति–ख. 27. असति तत्र न दृष्टम्–ख. 28. राजपुरुषपदयोः–ख. 29. प्रयोगानियमत्वं पृथगर्थत्वे दृष्टं–ख. 30. पदे–ख. 31. पृथगर्थेषु–ख. 32. निजस्वरेण–ख. 33. अभेदे च न दृष्टः–ख. 34. पृथक् इत्यधिकं–ख. 35. 'राजपुरुषः' इत्यधिकम्–ख. 36. तदभेदैकत्व°–ख. 37. 'ब्राह्मणकम्बलः' इत्यधिकम्–ख. 38. चः–ख. 39. 'अपि' नास्ति–ख.

उपसर्जनविशेषणं [1]च व्याख्यातम् । योगश्च भवति पृथगर्थेषु–राज्ञो गौश्चाश्वश्च कम्बलश्चेति । वृत्तौ त्वेकार्थ्याद्भेदनिबन्धनस्य समुच्चयस्य[2]अभावाच्चशब्दो निवर्तते–राज्ञो गवाश्वकम्बला इति । तदेतैर्विशेषैर्विज्ञायते सम्भिन्नोभयरूपः पांसूदकवदविभागापन्नो वृत्तावर्थ इति । तेन राज्ञः पुरुषमानय, राजपुरुषमानयेति च यद्यप्येक एवानीयत इति कार्ययोगिनोऽभेदः, [3]तथाप्यभिधानप्रकारो भिद्यते, यथा–ब्राह्मणाः शतं [4]भोज्यन्ताम्, ब्राह्मणानां शतं भोज्यतामिति[5]। तदेवं वृत्तिवाक्ययोरर्थो भिद्यत इति स्थितम् । एवं च तत्र तत्र वावचनं[6] चिन्त्यप्रयोजनम् । [7]भिन्नार्थया वृत्त्या वाक्यस्य बाधाऽप्रसङ्गात् ।

अन्ये तु जहत्स्वार्था वृत्तिरिति [8]वदन्तो वृत्तिपदानामानर्थक्यमेवाहुः, तत्तु न रोचयामहे । किं राजपुरुष इत्यत्र [9]राजार्थो न गम्यते ? ओमिति चेत्, पुरुषमात्रानयनं प्राप्नोति । अथ गम्यते ? किंनिबन्धना [10]तस्यावगतिः ? न तावत् समासस्य तत्र शक्तिः कल्प्या; राजशब्दनिबन्धनायामपि तस्यामनर्थाभावात् । न च वाक्ये [11]राजपदं व्युत्पन्नं पुनः समासे[12] व्युत्पत्तिमपेक्षते, तावत्येव च प्रतिपद्यते [13]राजार्थः । अतो [14]न जहत्स्वार्था वृत्तिः, [15]अर्थाभिधानप्रकारभेद इत्येतदेव [16]साम्प्रतम् ।

तत्र [17]सम्बद्धार्थानां संसृष्टार्थानामिति [18]सामर्थ्यद्वयमपि स्थितं [19]परिभाषाप्रवृत्तौ हेतुर्नान्यतरत् । [20]यतो मा भूद्व्यपेक्षामात्राश्रयेण सापेक्षस्यापि वृत्तिः । यद्येवं, पराङ्गवद्भावे विभक्तिविधाने च सा न [21]प्रवर्तेत; [22]तत्रैकार्थीभावस्यासम्भवात् । मा [23]प्रवर्तिष्ट, पराङ्गवद्भावे तन्निमित्तग्रहणं नोदयिष्यति । विभक्तिविधानेऽपि क्रियाकारकयोः व्यपेक्षाऽविनाभाविनी क्वचिद्युक्तग्रहणम्, क्वचिद्योगग्रहणम्, क्वचित् तृतीयया योगस्याक्षेप इति न क्वापि दोषः । अत एवानन्तरमपि पराङ्गवद्भावमुल्लङ्घ्य समासमुदाहरति–'वक्ष्यति' इति ।

'समर्थग्रहणं किम्' इति । सूत्रं किमर्थमित्यर्थः । न हि केवलेन पदविधिग्रहणेन किंचित् क्रियते । 'पश्य' इत्यादि । [24]ननु च श्रितादिभिर्द्वितीयां विशेषयिष्यामः–श्रितादियोगे या द्वितीयेति । एवमपि सापेक्षस्य प्रसङ्गः–महत् कष्टं श्रित इति, भवति [25]ह्यत्र श्रितादिनिमित्ता द्वितीया, [26]समर्थग्रहणे तु सति न भवति । यद्यप्यत्र वाक्यावस्थायां [27]व्यपेक्षालक्षणसामर्थ्यमस्ति, वृत्त्यवस्थायां तु [28]नैकार्थीभावः सम्भवतीत्यवोचाम । कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य [29]वृत्तिः ? नात्र गुरुणा देवदत्तस्य [30]सम्बन्धः; किं तर्हि ? समुदायेन, [31]गुरुद्वारकश्च कुलेन सम्बन्धः इत्यर्थाद् गुरुणाऽपि योगो भवति । उक्तं च––

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
[32]संस्पृश्यावयवांस्तेऽपि युज्यन्ते तद्वता सह ॥ (वा.प. ३.१४.४८) इति ।

---

1. 'च' नास्ति–ख. 2. 'अद्योत्यस्य' इत्यधिकम्–ख. 3. तथापि–ख. म. 4. भोक्ष्यन्ताम्–ख. 5. इति इत्यधिकम्–ख. 6. 'अपि' इत्यधिकम्; चिन्त्यम् । प्रयोजनभिन्नार्थतया–ख. 7. निर्णीतार्थतया–ख. 8. पदान्तो वर्ति°–ख. 9. शब्दार्थः–ख. 10. तस्य गतिः–ख. 11. राजपदे व्युत्पन्नः–ख. 12. 'अपि' इत्यधिकम्–ख. 13. राजार्थम्–ख. 14. अजहत्स्वार्था वृत्तयः–ख. 15. अथ च इत्यधिकम्–ख. 16. संप्रति–ख. 17. सम्बन्धार्थानां संसृष्टानाम्–ख. 18. सामर्थ्यद्वयमिलितं–ख. 19. परिभाषाप्रवृत्तो–ख. 20. यतः नास्ति–ख. 21. प्रवर्ततै–म. ख. 22. तत्र तत्रैकार्थानामवस्थासंभवात्–ख. 23. प्रवर्तताम्–ख. 24. 'ननु च.....द्वितीया इति' इति भागः नास्ति ख. 25. त्वत्र–ख. 26. समर्थग्रहणात्–ख. 27. °समर्थम्°–ख. 28. एकाप्याभावे हि विशेषणे संबोधनं संभवति–ख. 29. वृत्तिभावगुरुणा–ख. 30. संबन्धे–ख. 31. 'अत्र गुरुकुलेन' इत्यधिकम्–ख. 32. संसृष्टा°–ख.

अथ वा [1]परिपूर्णार्थस्यान्येन सहैकार्थीभावः स्वार्थपरिपूर्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति भवति तदपेक्षस्यापि वृत्तिः। उक्तं च--

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते।
स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥ (वा.प. ३.१४.४७) इति।

किं [2]त्वं करिष्यसीत्यादि अत्र शक्यं वक्तुम्। 'तत्कृतार्थेन' इति। [3]तच्छब्दः प्रकृतपरामर्शाय तृतीयान्तं समस्यते--तदर्थेन यः कृतो गुणस्तद्वचनेनेति। अत्र च यस्य समासः शङ्क्यते--शङ्कुलयेति, न तदर्थेन कृतं खण्डनम्, [4]यदर्थेन च कृतं खण्डनमुपलेनेति, न तस्य समासः [5]शङ्क्यत इति न भविष्यतीति। तस्मान्महत्या शङ्कुलया खण्ड इति सापेक्षम् [6]उदाहर्तव्यम्। 'गच्छ त्वं यूपाय' इति। 'गत्यर्थकर्मणि' (२.३.१२) इति चतुर्थी। यद्वा--'क्रियार्थोपपदस्य च कर्मणि' (२.३.१४) इति, [7]यूपमाहर्तुं गच्छेति, अत्रापि [8]एतदर्थत्वादेव दारुणो न भविष्यतीति सापेक्षं प्रत्युदाहर्तव्यम्--महते यूपाय दार्विति।

'यणादेशो नित्यश्च तुग्भवति' इति। द्वावप्येतौ वर्णविधी, नित्यस्तुक् च 'दीर्घात्' (६.१.७५) [9]इत्ययमेव, [10]यस्तु 'पदान्ताद्वा' (६.१.७६) इति विकल्पितस्तुक् स पदविधित्वादत्र न भवति।

[11]अन्ये तु यणादेशोऽनित्यश्च तुग्भवतीत्यकारप्रश्लेषं वर्णयन्तः 'पदान्ताद्वा' (६.१.७६) इति विकल्पितः-तुग्भवतीति व्याचक्षते। [12]नन्वसौ पदविधिर्नेति ? आह-तत्रान्तग्रहणं न कर्तव्यम्, प्रकृतेन दीर्घेण पदस्य विशेषणादेव दीर्घान्तस्य पदस्येति सिद्धम्। एवं सिद्धे[13]ऽन्तग्रहणस्य[14] एतत् [15]प्रयोजनम्--पदान्तस्य दीर्घस्य [16]वर्णस्य विधिः तुग् यथा स्यात्, दीर्घान्तस्य पदस्य[17] मा भूदिति ॥

## २. सुबामन्त्रिते पराङ्गवत्स्वरे।

'परस्याङ्गवत्' इति। [18]तस्यैव पदस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति, तद्ग्रहणेन गृह्यत इत्यर्थः। 'तादात्म्यातिदेशोऽयम्' इति। अङ्गशब्दस्यावयववचनत्वात् तस्यामन्त्रितस्यात्मा तदात्मा, तस्य भावस्तादात्म्यम्, तत्स्वभावत्वमित्यर्थः। एतदेव स्पष्टयति--'सुबन्तम्' इति। अनुप्रविशति अन्तर्भवति. सुबामन्त्रितसमुदाय एकस्मिन्नामन्त्रिते सम्पन्ने यः स्वरः शक्यते कर्तुं स कर्तव्य इत्यर्थः। कः पुनरसौ ? आद्युदात्तत्वम् समुदायस्य च पदात् परत्वे निघातः। 'कुण्डेनाटन्' इति। नन्वत्र सति तावत् पराङ्गवद्भावे समुदायस्याद्युदात्तत्वं शेषनिघातश्च, असत्यपि कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' (फि.सू. २६) इत्याद्युदात्तः, पदात् परमामन्त्रितं निहन्यते। यदा तर्ह्यटन्नित्येतत्पादादौ वर्तते तदा नास्ति निघात इति द्वयोराद्युदात्तत्वं स्यात्। किं च पुंल्लिङ्गोऽपि कुण्डशब्दोऽस्ति--'पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः' (मनु. ३.१७४) इति।

---

1. 'अपरपरिपूर्णे स्वार्थे स्यान्नैव एकार्थीभावः' इत्यधिकम्--ख. 2. च--ख. 3. तच्छब्दस्य कृतपरामर्शाय--ख. 4. यदार्थेन--ख. 5. शक्यते--ख. 6. प्रत्युदाहर्तव्यम्--ख. 7. 'स्यानिवत्' इत्यधिकम्--ख. 8. अतदर्थत्वात्--ख. 9. इत्यनेनैव--ख. एव नास्ति--म. 10. यत्तु पक्षे--ख. 11. अन्यत्तु--ख.म. 12. तस्यसौ--ख. 13. 'सति' इत्यधिकम्--ख. 14. 'एव' इत्यधिकम्--ख. 15. 'ततः' इत्यधिकम्--ख. म. 16. 'वर्णस्य' नास्ति--ख. 17. विधिः--ख.म. 18. एषा पंक्तिः नास्ति--ख.

कुण्डीति च जानपदादिसूत्रेण ङीषि भवति। 'परशुना वृश्चन्' इति। 'आङ्परयोः खनिशृभ्यां डिच्च' (द.उ. १.११८) इति कुप्रत्ययान्तत्वादन्तोदात्तः परशुशब्दः, मद्रशब्दः 'मदेश्च' (द.उ.८.३१.) इति रक्प्रत्ययान्तः, कश्मीरशब्दो घृतादित्वादन्तोदात्तः, 'सुबन्तस्य पराङ्गवद्भावे तन्निमित्तग्रहणम्' (कात्या. वा. १२२६) तस्यामन्त्रितवाच्यस्यार्थस्य यन्निमित्तं तदभिधाय्येव सुबन्तं पराङ्गवदित्यर्थः। उदाहरणेषु तृतीयान्तस्य तावन्निमित्तत्वमस्त्येव, षष्ठ्यन्तस्याप्यस्ति, भृत्यनिमित्ता हि राजता, देशनिमित्ता वा। एवं गोषु स्वामिन्नित्यत्रापि भवति। तन्निमित्तत्वाभावे तु न भवति। 'मरुत्वां इन्द्र वृषभो रणाय' (ऋ. ३.४७.१), 'मरुद्भिरिन्द्र सख्यं तेऽस्तु' (ऋ. ८.९६.७), 'मायाभिरिन्द्र मायिनम्' (ऋ. १.११.७), 'एतेनाग्ने ब्रह्मणा वावृधस्व' (ऋ. १.३१.१८), क्षत्त्रेणाग्ने स्वायुःसम्भरस्व' (तै. सं. ४.१.७.२), 'मित्रेणाग्ने मित्रधेये यतस्व' (तै.स. ४.१.७.२)।

'सुबिति किम्?' इति। तन्निमित्तग्रहणादेव तिङन्तस्य सिद्धो निरास इति प्रश्नः। 'पीडचे पीडचमान' इति। न हि सूत्रकारो वार्तिककारवचनेनातिव्याप्ति[1]निवारणं मन्यते इति भावः। 'पीड अवगाहने' (धा.पा. १५४४) चुरादिणिच्, उभयत्र कर्मणि लट्, एकत्रोत्तमैकवचनमिट्, अपरत्र शानच्, यकि णिलोपः 'तास्यनुदात्तेत्' (६.१.१८६) इति [2]इटोऽनुदात्तत्वम्, यकः प्रत्ययस्वरः, 'एकादेश उदात्तेनोदात्तः' (८.२.५) इत्येकार उदात्तः, पीडयमानेत्यत्रामन्त्रितनिघातः। ननु च समर्थग्रहणानुवृत्त्यैवात्र न भविष्यति, अस्त्यत्रापि सामर्थ्यम् कथम्? सम्बोधनपदं क्रियाया एव विशेषकम्, तथा च—व्रजानि देवदत्तेत्यत्रामन्त्रितनिघातो भवति। उक्तं च—

सम्बोधनपदं [3]यच्च तत्क्रियाया विशेषकम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति॥ (वा.प. २.५) इति।

अथ वा,-हेतुहेतुमद्भावलक्षणोऽत्र सम्बन्धः, हे पीडचमान [4]त्वत्पीडयाहमपि 'पीडच इति। 'गेहे गार्ग्यः' इति। गेहशब्द उञ्छादित्वादन्तोदात्तः। एकस्यामासनादिकायां क्रियायां द्वयोरपि कारकत्वात् तद्द्वारेणास्ति सामर्थ्यम्। 'परग्रहणं किम्' इति। सन्निधानादामन्त्रितस्यैव भविष्यतीति प्रश्नः। 'पूर्वस्य मा भूत्' इति। निमित्तभाव एवामन्त्रितस्योपक्षीणतया पूर्वस्यापि स्यादिति भावः। एवं च पूर्वस्यामन्त्रितत्वमतन्त्रम्। गार्ग्यः कुण्डेनाटन्नित्यादावपि भवति सन्निधानात्। आमन्त्रितत्वम्[5]अपि तन्त्रमिति चेत् यद्येवं, परमेव सन्निहितमिति न पूर्वं प्रत्यङ्गत्वप्रसङ्गः। देवदत्तः कुण्डेनाटन्नित्यत्र पूर्वं प्रत्यङ्गत्वे सति समुदायस्याद्युदात्तत्वं शेषनिघातः। [6]अटन्नित्यामन्त्रितनिघात इति स्वरः। परग्रहणे तु सति [7]देवदत्तशब्दस्यामन्त्रिताद्युदात्तत्वम्। तथा कुण्डेनाटन्नित्यस्यापि निघातस्तु न भवति; 'आमन्त्रितं पूर्वमविद्यमानवत्' (८.१.७२) इति देवदत्तशब्दस्याविद्यमानवत्त्वात्। छन्दसि तु परमपि पूर्वस्याङ्गवदिष्यते 'आ ते पितर्मरुतां सुम्नमेतु' (ऋ. २.२३.१)। पितरित्यनेन सह मरुतामित्यस्यापि निघातः। 'यथा मृत्पिण्डीभूतः' इति। यथा लभेतेत्यन्वयः। अमृत्पिण्ड मृत्पिण्डः [8]संपन्नो मृत्पिण्डीभूतः। तत्र सुबन्तस्य मृत्पिण्डात्मना परिणामसम्भवादेकीभावप्रतिपादनपरमेतत्। मृत्पिण्ड इवैकतामापन्न इत्यर्थः।

यद्वा, पिण्डीशब्दोऽ[9]प्यस्ति—प्रविश पिण्डमिति, तस्यायं प्रयोगः। भूतशब्द उपमार्थः—पितृभूत इति यथा। किमर्थं पुनरेवंभूतस्य स्वरप्राप्तये यत्न इत्यत आह—'उभयोरपि' इति। असत्यङ्गग्रहणे कार्यव्यपदेशशास्त्राणामन्यतमातिदेशः स्यात्। यथा परस्य [10]कार्यमामन्त्रितस्य स्वरः आमन्त्रितव्यपदेशः स्वरशास्त्रं वा, तथा सुबन्तस्यापि

1. निराकर्तां—ख. 2. तिङः—म. ख. 3. 'यद्यत्' इति मुद्रितः पाठः. 4. त्वदीयया—ख. 5. सुपि—ख. 6. अनन्त्रं—ख.म. 7. 'देवदत्तस्य'—ख. म. 8. संपन्नः नास्ति—म. 9. अपि उपमानार्थः—म. 10. कार्यं नास्ति—म.

तद्भवतीति । [1]एवं चोभयोराद्युदात्तत्वं स्यात् । ननु च पदात्परस्य निघातादुभयोरनुदात्तत्वं मा भूदिति, वाच्यम्; सत्यम्, आमन्त्रितस्यापादादित्वे [2]सति, पादादित्वे तदुक्तम् । 'वत्करणं किम्' इति । परत्र परशब्दप्रयोगादेव वत्यर्थो लप्स्यत इति प्रश्नः । 'स्वाश्रयमपि यथा स्यात्' इति । नानेन क्वाचित्कत्वमस्योच्यते । एवं हि विषयविभागो न ज्ञायते-क्वाङ्गवद्भवति ? क्व नेति ? नापि कादाचित्कत्वम्-कदाचिदङ्गवत्, कदाचिन्नेति । एवं हि सर्वत्र विकल्पः स्यात् । तस्मादयमत्रार्थः-असति [3]वद्ग्रहणे आस् कुण्डेनाटन् इति स्थिते, 'अटन्' इत्यस्य [4]निघाते प्राप्ते कुण्डेनेत्यस्यानुप्रवेशात् कुण्डेनाटन् इत्येकमामन्त्रितं सम्पन्नम् । न च तदेकान्तरमिति प्रतिषेधाभावान्निघात एव स्यात् । [5]वत्करणे तु सति अटन्नित्यस्य तावदेकान्तरत्वान्निघातप्रतिषेधे आद्युदात्तत्वं प्राप्तम् । तस्यां [6]दशायां कुण्डेनेत्यस्यानुप्रवेशात् समुदायस्याद्युदात्तत्वं भवति । तदेवं समुदायस्यानेकान्तरत्वेऽपि अटन्नित्यस्य यदेकान्तरत्वं वत्करणेन लब्धं तेनैव समुदायस्य निघातनिवृत्तिराद्युदात्तत्वं च भवति ।

'कूपे सिञ्चन्' इति । अत्र पराङ्गवद्भावे सति ऐकपद्यात् षत्वप्रसङ्गः[7], स्वाश्रयं पदादित्वं भविष्यति । सर्वातिदेशेषु ह्यविरुद्धं स्वाश्रयं भवति । किं च नात्रातिदेशिकं सकारस्य किंचिच्छास्त्रीयं कार्यमस्ति, अतोऽपि स्वाश्रयं भवत्येव, यथा-नमते दण्डः स्वयमेवेत्यत्र यक्प्रतिषेधे शप् । इदं तर्हि-'चर्म नमन्', अत्र पराङ्गवद्भावे [8]सति समानपदस्थत्वाण्णत्वं स्यात् । सत्यपि समानपदत्वे, 'पूर्वपदात् सञ्ज्ञायामगः' (८.४.३) इति नियमादसञ्ज्ञायां न भविष्यति । नायं नियमस्य विषयः, पूर्वपदशब्दो हि समासावयवे रूढः । तेन समास एव नियमः । अथ तु-'पूर्वं पदं पूर्वपदं पूर्वपदादित्यविशेषेण नियमो व्याख्यायेत, ततः स्वरग्रहणं शक्यमकर्तुम् । अक्रियमाणे च तस्मिन् सामानाधिकरण्योपसंख्यानमित्येतदपि शक्यमकर्तुम् । कथं परस्याङ्गवद्भावे कृते चिणो लुङ्न्यायेन (६.४.१०४) विषयभेदाल्लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावो भविष्यति ? सति तु स्वरग्रहणे स्वरादन्यत्र [9]पराङ्गवद्भावे पराङ्गवद्भावो [10]न सिध्यतीति [11]कर्तव्यम् । नन्वसति स्वरग्रहणे परशुना वृश्चन्नित्यत्र वृश्चन्निति प्रातिपदिकम्; न च प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधः, 'न ङिसम्बुद्ध्योः' (८.२.८) इति निषेधाल्लिङ्गात् । तत्र पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति [12]सुब्लुक् प्रसज्येत; स्वरग्रहणे तु सति सुब्लुकि कर्तव्ये पराङ्गवद्भावाभावः ? नैतदस्ति; पराङ्गवदित्यामन्त्रितं संनिधानात् परशब्देन गृह्यते; तस्य रूपस्य सुबन्तैकान्तत्वात् सुबन्तकार्य एव पराङ्गवद्भावः, न प्रातिपदिककार्ये । 'उच्चैरधीयान' इति । उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ, अधिकरणशक्तिप्राधान्याच्च [13]तस्मिन्निमित्तं च ॥

## ३. प्राक्कडारात् समासः

'यथाऽसादृश्ये' (२.१.७) इति [14]अनन्तरसूत्रातिक्रमे न किंचित् कारणम् । ननु 'प्रत्ययः' (३.१.१) इत्यादिवत् समास इत्येव स्वरितत्वादधिकारोऽस्तु, किं प्राग्वचनेन ? तत्राह-'प्राग्वचनम्' इति । प्राक्कडारादित्यवधिनिर्देश इत्यर्थः । 'सञ्ज्ञासमावेशार्थम्' इति । अन्यथैकसञ्ज्ञाधिकारात् पर्यायः स्यात् । अवधिनिर्देशे तु सति तत्सामर्थ्यात् प्राग्ग्रहणमावर्तते । तेन प्राक् समाससञ्ज्ञा भवन्ति, समासाः सन्तोऽव्ययीभावादिसञ्ज्ञा इति

1. ततः-म. 2. सति नास्ति-म. 3. वत्करणे-ख.म. 4. घाते-म.ख. 5. संनिघाते-म.ख. 6. 'च' इत्यधिकम्-म. 7. 'न प्रसंगः' इत्यधिकम्-ख. 8. सर्वसमानपदस्थ-म. 9. पराङ्गवद्भावे नास्ति-म. 10. असिद्धत्वात्-म. 11. 'तत्' इत्यधिकम्-म. 12. 'सुप्' नास्ति-म.ख. 13. तन्निमित्तत्वं-म.ख. 14. अनन्तरसूत्रातिक्रमेण-म.

समावेशसिद्धिः। अथ वा–कडारादिति पञ्चम्यैव प्रागिति दिक्शब्दोऽध्याहरिष्यते। न च [1]प्रागित्यस्याध्याहारप्रसङ्गः, तदध्याहारे हि 'दिक्समासे बहुव्रीहौ' (१.१.२८), 'तृतीयासमासे' (१.१.३०), 'द्वन्द्वे च' (१.१.३१) समास इत्याद्यनुपपन्नं स्यात्। कडारात् प्राङ्निर्दिष्टानां समाससञ्ज्ञाया अभावात्। तस्मात् प्रागित्येवाध्याहरिष्यते, नार्थः प्राग्वचनेन, तत्राह–'प्राग्वचनम्' इति ॥

## ४. सह सुपा।

सहवचननं किमर्थम्, यावता [2]तृतीयैव सहार्थमाक्षेप्स्यति, यथा–'वृद्धो यूना' (१.२.६५) इति? सहभूतयोः समाससञ्ज्ञा यथा स्यात् एकैकस्य मा भूत्; अन्यथा पुत्रेण सहागतः [3]पितेत्यत्र यथा [4]द्वयोरप्यागमनेन सम्बन्धः, एवं समाससञ्ज्ञाऽपि प्रत्येकमेव स्यात्, सहग्रहणे तु [5]सहभूतयोरेका सञ्ज्ञा भवति। किं च स्यात् यद्येकैककस्य सञ्ज्ञा स्यात्? इह ऋक्पाद इति समासान्तः प्रसज्येत, द्वौ च स्वरौ स्याताम्। 'कृत्तद्धितसमासाश्च' (१.२.४६) इत्यत्र तु [6]समासश्च समासश्चेत्येकशेषो व्याख्यास्यते, तेन समाससमूहस्य सञ्ज्ञाविधिर्नियमार्थं इति वाक्यस्य न भविष्यति, अन्यथा त्वेकैकस्य समासस्य प्रत्ययान्तत्वाद्विध्यर्थं समासग्रहणं स्यात्। 'समासाच्च तद्विषयात्' (५.३.१०६) इत्यत्रापि प्रातिपदिकादित्यनुवर्तते, समूहस्य च प्रातिपदिकत्वम्, न त्वेकैकस्य समासस्येति समासादित्येकत्वाविवक्षया समूहादेव सिद्धः प्रत्ययः।

तदेवं समुदायस्य यथा स्यादेकैकस्य मा भूदिति सहग्रहणम्। नैतदस्ति प्रयोजनम्, 'समासः' इति महती सञ्ज्ञा क्रियते–अन्वर्थसञ्ज्ञा यथा विज्ञायेत। यस्मिन् समुदाये [7]पदद्वयं परस्परं समस्यते स समासः। 'हलश्च' (३.३.१२१) इत्यधिकरणे घञ्। तस्मादनर्थकं सहग्रहणम्, तत्राह–'सहग्रहणं योगविभागार्थम्' इति। सहेत्येको योगः, सुबित्येव, सुप् सह समस्यते, केन? पदविधित्वात् समर्थेन। 'अनुव्यचलत्' इति। तत्र सुबित्येकत्वस्य विवक्षितत्वाद्धि पूर्वं समासः, पश्चादनोः,त त्र नित्यसमासत्वाद्धि शाकलाभावः। समासान्तोदात्तत्वं तु न भवति; 'तिङ्ङतिङः' (८.१.२८) इति निघातात्। अनोः 'गतिर्गतौ' (८.१.७०) इति निघातः। वेर्यणादेशे 'उदात्तस्वरितयोः' (८.२.४.) इत्यटः स्वरितत्वम्। अन्ये [8]तु–सतिशिष्टं समासान्तोदात्तत्वं भवतीत्याहुः। विभक्तिस्तु सत्यपि समासत्वेन प्रातिपदिकत्वे न भवति; तिङन्तत्वस्योक्तत्वात्। यद्वा वचनग्रहणमुक्तेष्वप्येकत्वादिषु यथा स्यादिति प्रथमैकवचनम्, हल्ङ्यादिलोपः। एवं चैकपद्यादामनुव्यचलद्देवदत्तेति 'आम एकान्तरमामन्त्रितमतन्तिके' (८.१.५५) इति निघातप्रतिषेधो भवति। योगविभागश्चेष्टसिद्ध्यर्थं इत्यतिप्रसङ्गो नोद्भावनीयः ॥

## ५. अव्ययीभावः।

इह लघ्वर्थं सञ्ज्ञाकरणमित्येकाक्षरा सञ्ज्ञा कार्या, किमर्थं महती क्रियते इत्याह–'अन्वर्थसञ्ज्ञा चेयम्' इति। अनव्ययमव्ययं भवतीत्यव्ययीभावः। 'भवतेर्ण उपसङ्ख्यानम्' इति णप्रत्ययः। [9]अन्वर्थत्वे किं सिध्यतीत्यत

1. पराग्–ख. 2. 'सुपेति' इत्यधिकम्–ख. म. 3. पिता नास्ति–म. 4. द्वयोः नास्ति–म. 5. सहानुभूतयोः–म. 6. समासत्वं–म. 7. पदद्वयं नास्ति–म. 8. तु नास्ति–म. 9. अन्यथा तेन–म.

आह–'तेन' इति। पूर्वपदग्रहणमव्ययस्योपलक्षणार्थम्। सूपप्रति, [1]शाकप्रतीत्यादौ उत्तरपदार्थप्राधान्या[2]न्न स्यात् तस्मादव्ययीभावेऽव्ययार्थः प्रधानमिति सूच्यते। एवं ह्य[3]व्ययानव्ययसमुदायोऽव्ययधर्मलाभादव्ययं भवतीति। किं सिद्धं भवति ? समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थप्राधान्येऽव्ययीभावस्यातिप्रसङ्गः परिहृतो भवति। पारेगङ्गम्, द्विमुनि[4], उन्मत्तगङ्गमित्यादौ च वचनादव्ययीभावः। एवं चानव्ययमव्ययं भवतीत्यन्वर्थतयैवाव्ययकार्यस्यापि लाभात् 'अव्ययीभावश्च' (१.१.४१) इत्येतदपि न वक्तव्यम्। 'लुङ्मुखस्वरोपचाराः प्रयोजनम्' (कात्या वा. २६४) इति [5]परिगणनं वक्ष्यामि इत्येवमर्थं तदिति चेत्, [6]न; अत्रैव [7]परिगणव्यान्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमीयताम्॥

## ६. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु।

श्रुतत्वादव्ययस्यैव विभक्त्यादयो विशेषणानि, न समासस्येत्याह–'विभक्त्यादिषु' इति। 'समस्यते' इति। यद्यपि 'समास' इति सञ्ज्ञामात्रं विधीयते, तथाप्ययमबुधबोधनाय भिन्नयोः [8]शब्दयोः [9]संश्लेषः प्रक्रियायां क्रियत इति 'समस्यते' इत्युक्तम्। 'वचनग्रहणं प्रत्येकमभिसम्बध्यते' इति। तच्च कर्मसाधनं विभक्त्यादिभिः समानाधिकरणम्। विभक्त्यादिषु वाच्येषु यदव्ययं वर्तते–विभक्त्यादीनर्थान् यदव्ययं [10]वक्ति, द्योतयतीत्यर्थः। विभक्तिशब्देन कारकशक्तिरभिधीयते–विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा। 'स्त्रीष्वधिकृत्य' इति। स्त्रीषु कथा प्रवर्त्यत इत्यन्वयः। अधिकृत्येति, प्रस्तुत्येत्यर्थः। सन्निधानाच्च स्त्रिय एव प्रस्तुत्येति गम्यते, स्त्रीविषया कथा प्रवर्त्यत इत्यर्थः। प्रायेण तु प्रवर्तते इति पाठः। तत्र भिन्नकर्तृकत्वात् क्त्वाप्रत्ययस्यानुपपत्तिः, पुरुषाः प्रस्तुवन्ति कथा प्रवर्तत इति। [11]अत्राहुः– अधिकृत्य या कथा सा स्त्रीषु प्रवर्तत इत्यर्थः। तत्र [12]प्रस्तावने कथने च कर्तुरेकत्वात् सिद्धः क्त्वाप्रत्यय इति। अन्ये त्वाहुः– कृत्यस्य कथा [13]कृत्यकथेत्यर्थः, सा स्त्रीषु अधिप्रवर्तते स्त्रीष्वधीति च प्रक्रियावाक्यम्, न त्वेतत् प्रयोगार्हम्; समासस्य नित्यत्वात्। 'अधिस्त्रि' इति। 'अव्ययीभावश्च' (१.१.४१) इति नपुंसकत्वात् 'ह्रस्वो नपुंसके' (१.२.४७) इति ह्रस्वः। 'सप्तम्यर्थे यदव्ययम्' इति। विभक्तिवचनतां दर्शयति। 'उपकुम्भम्' इति। कुम्भस्योपेति प्रक्रियावाक्यं षष्ठ्यन्तेन समासः। 'दुःशकम्, दुर्यवनम्' इति। [14]मनुष्यजातिवचनौ शकयवनशब्दौ, किमर्थं पुन[15]र्वृद्धिग्रहणम्, अर्थाभावइत्येव सिद्धम् ? न सिध्यति, येन समस्यते तदर्थस्याभावोऽर्थाभावः, न चात्र [16]शकानामभावः, किं तर्हि ? तदीयाया ऋद्धेः। अर्थाभाव इत्यर्थग्रहणं यत्र धर्मिस्वरूपस्यैवाभावस्तत्र यथा स्यात्, धर्ममात्रप्रतिषेधे मा भूत्, [17]तद्यथा–ब्राह्मणेन ब्राह्मण्यामुत्पादितत्वेन कस्यचिद्ब्राह्मणत्वं [18]प्रसज्य प्रतिषेधति–नायं ब्राह्मणो यस्तिष्ठन् मूत्रयति। इतरेतराभावे च मा भूत्–गौरश्वो न भवतीति, अत्रापि वस्त्वन्तरं प्रतिषिध्यते, न [19]धर्मिस्वरूपम्। [20]अतिशीतमित्यर्थाभावः। कालानवच्छिन्नोऽभाव [21]आश्रीयते, इह तु संप्रत्यभाव इत्यस्ययस्य भेदेनोपादानम्।

---

1. अक्षपरि–म. 2. 'न स्यात्' नास्ति–म. 3. पूर्वंव्यय°–म. 4. 'त्रिमुनि'–इत्यधिकम्–म.
5. परिगणयिष्यामि–म. 6. न नास्ति–म. 7. परिगणनीयाव्ययत्वेन–म. 8. 'शब्दयो' नास्ति–म.
9. श्लेषप्रक्रिया–म. 10. व्यनक्ति–म. 11. तत्राहुः–म. 12. प्रस्तावे–म. 13. कर्तव्यकथा–इति मुद्रितः पाठः–म. 14. मनुष्यजातिविशेषवचनौ–म, मनुष्यजातिविशेषवाचिनौ–ख. 15. वृद्धिग्रहणेन–म.
16. शकयवाना°–ख 17. यथा–घ. 18. प्रसज्यप्रतिषेधे–ख. म. 19. धर्मस्वरूपम्–म.
20. अतिशीतमित्यर्थाभावे–म. 21. प्रतीयते–म.

'अतितैसृकम्' इति । [1]तिसृका नाम ग्रामः, 'तिसृभावे सञ्ज्ञायां कन्युपसङ्ख्यानम्' (वा. ८३७) तत्र भवं तैसृकम् [2]आच्छादनम् । तच्च [3]कालविशेष उपभोग्यम् । उष्णे शीते वा अतिशब्दो नेदानीमित्यस्यार्थे[4] वर्तते । उपभोगक्रिया च वृत्तौ [5]स्वभावादेवान्तर्भवति, यथा—दध्युपसिक्त ओदनो दध्योदन इति। तद्द्वारेण पूर्वोत्तरपदयोः सामर्थ्यम्, नेदानीमुपभोगार्हं तैसृकमाच्छादनमित्यर्थः। आच्छादनापेक्षस्यापि तैसृकशब्दस्य गमकत्वात् समासः । नात्र तैसृकस्य कालानवच्छिन्नो भावः, नापि संप्रति तस्याभावः, किं तर्हि? तदुपभोगस्येत्यर्थाभावादत्ययाच्चासंप्रतिर्भिद्यते । 'तत्पाणिनि' इति । तच्छब्दो [6]निपातोऽप्यस्ति ।

'प्रत्यर्थम्' इति । अर्थमर्थं प्रतीति वाक्यमप्यत्र भवति, भाष्यप्रयोगात् । यदि वा नात्राव्ययं वीप्सावृत्ति, किं तर्हि ? कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति । वीप्सा तु द्विर्वचनद्योत्या । अनुपूर्वस्य भाव आनुपूर्व्यम्-ब्राह्मणादित्वात् ष्यञ्, ष्यञः षित्करणात् स्त्रियामपि भवति [7]तस्य प्रयोगः । [8]एवं 'ज्येष्ठानुपूर्व्येण' इति ।

'सचक्रम्' इति । सहशब्दस्य समासः, 'अव्ययीभावे चाकाले' (६.३.८१) इति सभावः, [9]एवमुत्तरेष्वप्युदाहरणेषु । 'गुणभूतेऽपि' इत्यादि । यदि सादृश्ये इति नोच्यते, पूर्वपदार्थप्रधानोऽव्ययीभाव, इति यदा सादृश्यं विशेष्यत्वात् प्रधानं तदैव स्यात्— सादृश्यं किख्येति, गुणभूते न स्यात् । 'सदृशः किख्या' इति । सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयति । 'सकिखि' इति । पूर्ववद्ध्रस्वः । अपचितपरिमाणः शृगालः किखी। अप्रसिद्धोदाहरणम्, चिरन्तनप्रयोगात् ।

सम्पत्तिशब्दस्य समृद्धौ रूढत्वात् पुनरुपादानं व्यर्थमित्याशङ्क्याह—'सम्पत्तिरनुरूप आत्मभावः' इति। 'सब्रह्म बाभ्रवाणाम्' इति । तेषामनुरूपो ब्रह्मभाव इत्यर्थः ।

'सतृणम्' इति । न चात्र तृणभक्षणं वास्तवमित्याह—'न किञ्चित्' इति । तृणभक्षणमधिकोऽर्थः, तद्वचनेन किंचिदभ्यवहार्यं [10]न परित्यजतीत्ययमर्थः [11]प्रतिपद्यते—तृणानि भक्षयन् कथमन्यत् परित्यजेदिति ।

'परिग्रहापेक्षया' इति । इदानीमेतावान् प्रदेशोऽध्येतव्यः इति यावतः प्रदेशस्य [12]परिग्रहस्तदपेक्षया समाप्तिः अन्तः, स चासकलेऽप्यध्ययने भवतीति भावः । 'साग्नि' इति । अग्न्यादयः शब्दाः तदर्थे [13]ग्रन्था वर्तन्ते, तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तः [14]न तु ततः परेणाध्ययनं नास्ति; ततश्च न साकल्यमित्याह—'इयम्' इति ॥

## ७. यथाऽसादृश्ये ।

सादृश्ये समासस्य पूर्वेणैव सिद्धत्वादसन्देहार्थं सादृश्ये यथेत्यवचनाच्च नञोऽत्र प्रश्लेषः ।

---

1. तैसृकम् आच्छादनम् इत्यधिकम्–ख. 2. आच्छादनम्–नास्ति–म. 3. विशिष्टकाले–ख. 4. च कृते इत्यधिकम्–म. 5. स्वभावाद्–म.ख. 6. निपातनम्–म. 7. तत्तस्य–ख. 8. एवं–नास्ति–घ. 9. एवमुत्तरेषु . . . . तदैव स्यात् इति भागः नास्ति–ख.म. 10. न नास्ति–ख. 11. प्रतिपाद्यते–घ. 12. परिग्रहः कृतः–ख.म. 13. ग्रन्थे–ख. 14. ननु–म.

'असादृश्ये इति किम्' इति। सूत्रं किमर्थमित्यर्थः। 'यथा देवदत्तः' इति। देवदत्तस्य यज्ञदत्तं प्रत्युपमानत्वं यथाशब्दो द्योतयति। तत्रोपमानस्योपमेयापेक्षत्वेऽपि यथादेवदत्तशब्दयोः सामर्थ्यात् परस्परेण समासप्रसङ्ग इति भावः। अथ पूर्वेणात्र सादृश्य इति वा, यथार्थ इति वा कस्मान्न भवतीत्याह–'पूर्वेणैव' इति॥

## ८. यावदवधारणे।

'यावन्ति [1]पात्राणि' इति। यावदित्यव्ययं चास्ति, तद्धितान्तं च विद्यते, अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः॥

## ९. सुप्प्रतिना मात्रार्थे।

'अस्त्यत्र किंचित् सूपः' इति किंचिदित्यव्ययं सूप इति पुंल्लिङ्गेन समानाधिकरणम्।

'सुबिति वर्तमाने' इति। 'सुबामन्त्रिते' (२.१.२) इत्यतः। 'अव्ययनिवृत्त्यर्थम्' इति। पूर्वं हि सुब्ग्रहणमव्ययग्रहणेन सम्बद्धम्, तथा च पूर्वसूत्रेऽव्ययस्यैव ग्रहणादनव्ययेन सह विग्रहः कृतः। स्वरादीनां च बोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनान्मा[2]त्रावति वृत्तिरविरुद्धेत्यव्ययस्यैव समासः स्यात्॥

## १०. अक्षशलाकासङ्ख्याः परिणा।

'अक्षशलाकासङ्ख्याशब्दाः' इति। [3]अक्षशलाकाशब्दौ सङ्ख्यावाचिनश्च शब्दा [4]इत्यर्थः। क्वचित्तु–अक्षशब्दः शलाकाशब्दः, सङ्ख्याशब्दाश्चेति[5] पाठः। 'कितवव्यवहारे' इति। कितवाः द्यूतकाराः, तेषां व्यवहारेऽक्षशलाकानां पातनं तत्रैवायं समास इष्यते, एतच्चाभिधानस्वाभाव्याल्लभ्यते। 'सर्वे उत्तानाः' इति। शलाकानामपि [6]प्रकृतत्वात् सर्वेच सर्वाश्च सर्वे, उत्तानाश्च उत्तानाश्च उत्तानाः, अवाञ्चश्चावाच्यश्चा[7]वाञ्चः, 'पुमान् स्त्रिया' (१.२.६७) इति पुंसः शेषः। 'तस्यैवास्य' इति। पातयितुरित्यर्थः। विपातः पराजयः। अन्यथापाते सति, जये यादृशः पातः सर्वे उत्तानाः पतन्त्यवाञ्चो वेति ततोऽन्यादृशेषु केषुचिदुत्तानेषु, केषुचिदवाक्षु पतत्स्वित्यर्थः। 'अक्षेण' इति। वृत्तापेक्षया कर्तरि तृतीया। 'परमेण' इति। अतिशयेनातः परमित्यर्थः। 'पञ्चपरि' इति न भवतीति यावत्।

अस्योपपादनं श्लोकेन क्रियते। 'पञ्चसु त्वेकरूपेषु' इति। अत्रापि पुंसः शेषः। 'एकरूपासु' इति प्रायेण [8]पाठः। तत्र शलाकानामेव ग्रहणम्। 'जय एव भविष्यति' इति। लूढोऽर्थो मृग्यः, यतः पञ्चस्वेकरूपेषु जय एव भवति, तेन परमेण चतुःपरीत्यन्वयः।

---

1. अमत्राणि–ख. 2. मात्रार्थवृत्ति°–ख. 3. °शब्दैः–म. 4. इति–ख. 5. एवं इत्यधिकम्–ख. 6. अधिकृतत्वात्–ख. 7. 'अवाञ्चः' नास्ति–ख. 8. पाठः इति नास्ति–म.

'अक्षादयस्तृतीयान्ताः' इति। अन्यथा वृत्तावयं समास इष्यते, तत्र चाक्षादीनां कर्तृत्वात् तृतीयैव युक्तेति भावः। 'पूर्वोक्तस्य' इति। पूर्ववृत्तस्येत्यर्थः। अनेकार्थत्वाद्धातूनां वचिरिह वर्तने वर्तते, तदेव [1]यथा न तथेति तच्छब्देन परामृश्यते। पूर्वजये वृत्तस्याक्षादेः यथा तद्वृत्तमभूत्, यदि संप्रति तथा न भवति एवं [2]समास भवतीत्यर्थः। 'पूर्वोक्तस्य' इति [3]सामान्यापेक्षमेकवचनम्। जयकालेऽक्षादीनां यदेकरूपं [4]वर्तनं तद्विपरीते वर्तने परि द्योत्ये समास इति यावत्। [5]'एकत्वेऽक्षशलाकयोः' इति। अक्षशलाकाशब्दयोरेकवचनान्तयोः समास इत्यर्थः। इदमप्यभिधानस्वाभाव्यादेव लभ्यते, अन्यथा 'राजपुरुषः' इत्यादाविवाभेदैकत्वमवगम्येत, न तु शुद्धमेकत्वम्। प्रायेण तु 'कितवव्यवहारे च एकत्वेऽक्षशलाकयोः' इति श्लोकरूपेण पठ्यते, तत्रार्थान्तरं मृग्यं, संहिताकार्य-प्रसङ्गश्च।

'कितवव्यवहारे' इति किम्? अक्षेणेदं न तथा वृत्तं यथा [6]पूर्वशकटे। एकत्व इति किम्? अक्षाभ्यामक्षाभ्यामिदं न तथा वृत्तम्। अक्षादय इति किम्? प्रसङ्गेनेदं न तथा वृत्तं यथा [7]पूर्वजये, परिणेति वचनात् सुबन्तमात्रेण न भवति।

## ११. विभाषा।

## १२. अपपरिबहिरञ्चवः पञ्चम्या।

ननु बहिःशब्देन योगे न केनचित् पञ्चमी विधीयते, तत्कथं तस्य पञ्चम्यन्तेन समासः? [8]'बहिर्गतो ग्रामात्' इत्यत्र स्वसामर्थ्यान्नैव समासेन भवितव्यमत आह– 'बहिःशब्देन' इति। न च वचनसामर्थ्याद्बहिःशब्दस्य पञ्चम्यन्तेन[9] समासो भवत्विति वाच्यम्। पञ्चमीग्रहणात्। इह [10]हि अपपरिशब्दौ परस्परसाहचर्यात् वर्जनार्थौ गृह्येते, तौ च कर्मप्रवचनीयौ, तद्योगे च पञ्चम्येव विहिता। अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव गृह्यते, तद्योगेऽप्यञ्चूत्तरपदलक्षणा पञ्चम्येवास्ति। तदेतत् पञ्चमीग्रहणं ज्ञापयति–षष्ठीविषये बहिर्योगे पञ्चमी भवतीति॥

## १३. आङ् मर्यादाभिविध्योः।

'मर्यादाभिविध्योः' इति शक्यमकर्तुम्, कथम्? पञ्चम्येति वर्तते, आङा च [11]कर्मप्रवचनीयेनैव योगे पञ्चमी विहिता, एतयोश्चैवार्थयोराङः कर्मप्रवचनीयसञ्ज्ञा,–'आङ् मर्यादावचने' (१.४.८९) इति। तत्र हि वचनग्रहणं मर्यादोक्तिमात्रे यथा स्यादित्यभिविधावपि भवति। तत्रैव [12]वाऽभिविधिग्रहणमेवास्तु॥

## १४. लक्षणेनाभिप्रती आभिमुख्ये।

'अभ्यग्नि, प्रत्यग्नि'[13] इति। अग्निं प्रतीति विग्रहः, 'अभिरभागे' (१.४.९१) 'लक्षणेत्थंभूत' (१.४.९०) इति चाभिप्रत्योः कर्मप्रवचनीयत्वाद्द्वितीया। तत्राग्निर्लक्षणम्, तेन हि शलभानां पातो लक्ष्यते, अभीप्रती च लक्ष्यलक्षणभावं [14]द्योतयित्वाऽऽभिमुख्यमपि द्योतयतः।

1. च इत्यधिकम् ख–म. 2. समासे ख–म. 3. च इत्यधिकम्–म. 4. वर्तते–म. 5. एकत्वे नास्ति–ख. 6. पूर्वं शकटे–ख. 7. सर्वजये–ख–म. 8. बहिर्–ख–म. 9. सह इत्यधिकम्–ख. 10. हि नास्ति–म. 11. कर्मप्रवचनीयेन–ख. म. 12. 'वा' नास्ति–म. 13. अग्निमभि–म. 14. द्योतयन्तौ–म.

'स्रुघ्नं प्रतिगतः' इति । स्रुघ्नादागत[1]स्तमेव प्रतिगतः प्रतिनिवृत्त इत्यर्थः । अत्र प्रतिगमनं प्रति कर्मत्वेन विवक्षितत्वात् स्रुघ्नो [2]लक्षणं न भवति । 'येनाग्निस्तेन गतः' इति । येन देशेनाग्निर्गतस्तेने[3]ति प्रतीतिर्भवति, गमनस्याग्निर्लक्षणमाभिमुख्यं चास्ति, 'येन-तेन [4]शब्देन सह समासः स्यात् । 'अभ्यङ्काः, प्रत्यङ्काः' इति । अभिनवोऽङ्क आसाम्, प्रतिनवोऽङ्क आसामिति बहुव्रीहिः । अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति । ननु च सति सम्भवे[5]ऽव्ययार्थे प्रधानेऽव्ययीभाव इत्युक्तम्, कथमत्र प्रसङ्गः ? एवं तर्ह्येतज्ज्ञापयति–भवत्यत्र प्रकरणे बहुव्रीहिविषयेऽव्ययीभाव इति । [6]तेन 'सङ्ख्या वंश्येन' (२.१.१९) द्विमुनि व्याकरणमित्येतत् सिद्धं भवति ॥

## १५. अनुर्यत्समया ।

यत्समयेति षष्ठीसमासोऽयम् । कथं पुनः समयाशब्देन योगे षष्ठी, यावता 'अभितः परितः समया' (वा. ११९) इति द्वितीयया [7]भवितव्यम् ? नैष दोषः; समयाशब्दस्य मुख्योऽर्थः [8]सामीप्यम्, तद्योगे द्वितीया । इह तु समयाशब्दवाचिन्यनुशब्दे समयाशब्दो वर्तते, तदाह–'अनुर्यत्समया' । [9]'समयावाची' इति । यस्य समयेति कोऽर्थः ? समयावाचीत्यर्थः, तदिह मुख्येनार्थेनायोगाद् द्वितीया न भवति, षष्ठ्येव तु भवति, तस्याश्च समासः । न च पूरणगुणेति प्रतिषेधः; [10]अनव्ययत्वात् । सामीप्ये हि वर्तमानः समयाशब्दोऽसत्त्ववाचित्वादव्ययम् । इह [11]त्वनुशब्दार्थे वर्तते, तत्र यथा 'अभिरभागे' (१.४.९१) इयदावनुकरणस्याव्ययसञ्ज्ञा न भवति, तथास्यापि । एवं च यत्समयेत्यविभक्तिकः सौत्रो निर्देशः । वृत्तावपि [12]यत्समयेति [13]सूत्रानुकरणेन विभक्त्यभावः । 'तेन' इति । तद्वाचिना शब्देनेत्यर्थः । 'अनुवनम्' इति । वनस्य अन्विति सामीप्यसम्बन्धे षष्ठीसमासः, अस्यार्थमाह–'वनं समया' इति ॥

## १६. यस्य चायामः ।

'लक्षणेनेति वर्तते' इति । अन्यथा आयामो गङ्गायाः [14]इत्यस्यार्थेऽनुगङ्गमिति स्यात् । अत्राप्यायामवाचित्वादनुरेवायामशब्देनोच्यते, इत्याह–'अनुर्यस्यायामवाची' इति । 'अनुगङ्गं वाराणसी' इति । षष्ठ्यन्तेन गङ्गाशब्देन समासः । 'गङ्गाया अनु' इति । आयामो लक्षणत्वं चामुना द्योत्यते, लक्षणस्य लक्ष्यापेक्षत्वाल्लक्ष्यं समासार्थ इत्यर्थादुपमानोपमेयभावे समास इति वाराणस्या [15]सामानाधिकरण्यम्–गङ्गाया इवायामो यस्याः, गङ्गेवायता वाराणसीत्यर्थः । तद्वदत्यन्तायतेत्यर्थ इति केचित् । तथा च 'अनुगङ्गमेतत्सूत्रम्' इत्येकशेषसूत्रे भागवृत्तिकारः प्रयुङ्क्ते । नेति वयम् । किं प्रागायता वाराणसी ? उत उदगायता ? इति सन्देहे इदमुच्यते–अनुगङ्गं वाराणसीति, यथोदगायता गङ्गा तथोदगायता वाराणसीत्यर्थः । गंगायामानुसारेण वाराणस्यायाम इत्यर्थः । 'यमुनायामेन मथुरायामो लक्ष्यते' इति । न यमुना स्वरूपेण लक्षणम्, किं तर्हि ? आयामेन, मथुराऽपि न स्वरूपेण [16]लक्ष्यम्, किं तर्हि ? आयामेन । तत्र प्राप्ताप्राप्तविवेकेनेदमुच्यते–यमुनायामेन मथुराऽऽयामो लक्ष्यत इति ॥

---

1. तेन–म. 2. तल्लक्षणं–ख. म. 3. गतः इत्यधिकम्–ख. म. 4. 'शब्दयोः अग्निशब्देन' इत्यधिकम्–ख. म. 5. अव्ययार्थप्राधान्येऽपि–ख. म. 6. तेन नास्ति–म. 7. भाव्यम्–ख. म. 8. समीपं–ख. 9. समीपवाची–काशिका 10. अनव्ययात्–ख. 11. त्वनुशब्दे–ख. 12. यस्य समया–ख. 13. सूत्रानुसारेण–ख. 14. इत्यत्र–ख. इत्यत्रापि–म. 15. सामानाधिकरणं–म. 16. लक्ष्या–म.

## १७. तिष्ठद्गुप्रभृतीनि च ।

'समुदाया एव निपात्यन्ते' इति । गणे तथा पाठ एव तेषां निपातनम् । तेन शतृशानजाद्यपि भवति । 'सुपो धातु प्रातिपदिकयोः' (२.४.७१) इति च प्रक्रियाकार्यं [1]न कर्तव्यमिति भावः । 'अव्ययीभाव-सञ्ज्ञानि भवन्ति' इति । समाससञ्ज्ञापि विधेया, अन्तोदात्तत्वं च । 'प्रातिपदिकसञ्ज्ञा च यथा स्यात्' इति। 'तिष्ठद्गु कालविशेषः' इति । कालविशेष इत्येतदुत्तरैरपि सम्बध्यते, अत एवान्ते [2]वक्ष्यति–'एते कालशब्दा:' इति । एतावान् कालविशेष इत्यस्याधिकार इत्यर्थः । 'विभक्त्यन्तरेण न सम्बध्यन्ते' इति । अव्यतिरिक्त एव प्रातिपदिकार्थे प्रयोग एषां कर्तव्यः । नान्यत्रेत्यर्थः । 'अन्यपदार्थे च [3]वर्तन्ते' इति । तिष्ठद्गु, वहद्गु, आयतीगव-मित्यतैरप्यस्य सम्बन्धः, अन्यथा कालशब्दत्वायोगात् । 'चकारोऽवधारणार्थः' इति । [4]अनेकार्थत्वान्निपातानाम्। 'अपरः समासो न भवति' इति । वृत्त्यन्तरं न भवतीत्यर्थः । 'आतिष्ठद्गु जपन् सन्ध्याम्' इति तु पञ्चम्या 'अव्ययात्' (२.४.८२) इति लुक्, न समासः ।

'तिष्ठद्गु, वहद्गु' इति । लटः शत्रादेशो निपातनात्, 'गोस्त्रियोः' (१.२.४८) इति ह्रस्वः। आयतीगवमित्यत्र तु [5]पुंवद्भावाभावः शत्रादेशः समासान्तश्च । खलेयवम्, खलेबुसमिति सप्तम्या अलुक्। लूयमानयवादिषु शानजादेशः ।

'समभूमि, समपदाति' इति । समत्वं भूमेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः । क्वचित् 'समंभूमि, समंपदाति' इति पाठः । तत्र पूर्वपदस्य मुमागमः । अन्ये तु–'संभूमि, संपदाति' इति पठन्ति, तत्र [6]सगस्यान्तलोपः, संशब्दस्य वा समासः [7]सुषामादौ शोभनत्वं समस्य विगतत्वं दुष्टत्वं निर्गतत्वमपगतत्वं समस्येति विग्रहः । आयती-समा, आयतीसमम्, शत्रादेशः, पूर्ववत् [8]पुंवद्भावश्च । समा-संवत्सरः । एवं 'पापसमम्, पुण्यसमम्' इति। प्राह्णादिषु चतुर्षु प्रगतत्वमह्न इत्यादि विग्रहः । [9]सङ्गतं प्रतिगतमस्य सम्प्रति । [10]विपरीतम् असम्प्रति । 'इच् कर्म-व्यतीहारे' इति । अयमेव द्विदण्ड्यादिष्वपि विधीयत इति तत्राप्यव्ययीभावः । 'दण्डादण्डि' इति । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं [11]प्रवृत्तम्, 'तत्र तेनेदमिति सरूपे' (२.२.२७) [12]इति बहुव्रीहिः । 'अन्येषामपि दृश्यते' (६.३.१३७) इति पूर्वपदस्य दीर्घः । इच अव्ययीभावत्वेनाव्ययत्वात् सुपो लुक् ॥

## १८. पारे मध्ये षष्ठ्या वा ।

[13]'वावचनात्' इति । ननु महाविभाषयैवापवादेऽव्ययीभावे विकल्पिते पक्षे षष्ठीसमासो[14]ऽपि भविष्यति, सोऽपि विकल्पित इति वाक्यमपि भविष्यति ? उच्यते–इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य

---

1. न भवति इति शेषः–म. 2. वक्ष्यते–ख. 3. अवतिष्ठते–म. 4. एषापंक्तिः नास्ति–ख.
5. पुंवद्भावः–म. 6. समासान्तलोपः–म. 7. सुखमादौ–म. 8. पुंवद्भावाभावः–म. 9. संगतत्वं–ख.
10. विपरीतम् ....तत्राप्यव्ययीभावः–इति नास्ति–ख. 11. प्रवृद्धम्–म. 12. इत्ययमेव–ख.
13. वावचनभावात्–म. 14. अपि नास्ति–म.

बाधिका प्राप्नोतीति विकल्पेन वाक्यमेव पक्षेऽभ्यनुज्ञायते। तत्रापवादविकल्पो[1] वाक्यस्यैव प्रापक इत्युत्सर्गस्य[2] नित्यो [3]बाधकः स्यात्, वावचनात् सोऽपि पक्षेऽभ्यनुज्ञायत इति त्रैरूप्यसिद्धिः। एतदेव वावचनं ज्ञापकम्–यत्रो त्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न भवतीति। तेन [4]'पूर्वं कायस्ये'त्यत्रैकदेशि-समासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्य अपत्यं दाक्षि'रित्यत्र इञा मुक्तेऽण्न [5]भवति। एकारान्तत्वनिपातनं यत्र सप्तम्यर्थो न सम्भवति–पारेगङ्गादानयेति, तदर्थम्। सम्भवे तु 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इति बहुलवचनादलुका सिद्धम्॥

## १९. सङ्ख्या वंश्येन।

'एकलक्षण' इति। एकस्वभावः सन्तानः [6]सम्बन्धः। सन्तानिनामेकलक्षणत्वात् सन्तानस्यैकलक्षणत्वम्। 'द्वौ मुनी' इति। पाणिनिकात्यायनौ। 'त्रिमुनि' इति। तौ च भाष्यकारश्च। जन्मना त्वेकलक्षणस्योदाहरणम्– 'एकविंशति [7]भारद्वाजम्' इति।

यदा तु विद्यया सहेति 'लक्षणेनाभिप्रती' (२.१.१४) इत्यत्र प्रकारान्तरेणाप्ययमर्थः साधितः॥

## २०. नदीभिश्च।

'नदीवचनैः शब्दैः' इति। नदीभिरिति बहुवचननिर्देशात् [8]स्वरूपस्य सञ्ज्ञा नद्याश्च ग्रहणम् [9]इति भावः। 'समाहारे चायमिष्यते' इति। अन्यथा पुरस्तादपवादन्यायेन (व्या.प. १) 'पूर्वकालैक' (२.१.४९) [10]इत्यस्यायं बाधकः स्यात्। समाहारे तु परत्वाद्द्विगुरेव स्यात्, ततश्चैकनदीत्यत्राव्ययीभावे सति [11]तन्निबन्धनः, 'नदीपौर्णमास्याग्रहायणीभ्यः' (५.४.११०) इति टच् प्राप्नोति नपुंसकत्वं च, न ह्यत्र [12]विशेषवाचिनामेव ग्रहणमिति प्रमाणमस्ति[13]। यस्तु 'गोदावर्याश्च नद्याश्च' [14]इत्यच् समासान्तः, स पञ्चनदमित्यादौ [15]अव्ययीभाव एव भवति, एकनदीत्यत्र [16]तत्पुरुषे न भवति। समाहारविवक्षायां च एकापूपीवदेकनदमित्यपि भवति। तथाऽन्य-पदार्थेऽ[17]प्यव्ययीभावः स्यात्–[18]द्वीरावतीको देश इति। न चात्र परत्वाद्बहुव्रीहिः, अशेषत्वात्, न ह्यसति समाहारग्रहणेऽयं शेषो भवति। तस्मात् सुष्ठूक्तम्– 'समाहारे चायमिष्यते' इति। [19]एतच्चाभिधानस्वा-भाव्याल्लभ्यते॥

## २१. अन्यपदार्थे च सञ्ज्ञायाम्।

## २२. तत्पुरुषः।

'उत्तरपदार्थप्रधानः' इति। पूर्वकायः, अर्धपिप्पलीत्यादौ त्वधिकारवशात् तत्पुरुष [20]इति सञ्ज्ञा॥

---

1. अपि इत्यधिकम्–म. 2. एव इत्यधिकम्–म. 3. बोधः–ख.म. 4. सर्वं–म. 5. 'अण्' नास्ति–म. 6. प्रबन्धः–ख.म. 7. भरद्वाजम्–म. 8. स्वरूपे इति–म. 9. एव इत्य-धिकम्–म. 10. इत्यस्यैव–म. 11. तन्निबन्धनेन–ख.म. 12. नदीविशेष°–म. 13. 'इतिभावः' इत्यधिकम्–ख.म. 14. इत्यत्र–म. 15. °शब्देन–म. 16. तत्पुरुष इति–म. 17. अप्ययमव्ययी-भावः–ख. 18. द्वारवती–म. द्विगोदावरीको–ख. 19. पंक्तिरेषा न विद्यते–म. 20. नास्ति–ख.

## २३. द्विगुश्च ।

'समासान्ताः' इति । यद्यपि 'राजाहःसखिभ्यष्टच्' (५.४.९१), 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः' (५.४.८६) इति [1]टजचौ तत्पुरुषनिबन्धनौ, तथापि प्रकृतिभेदाद्भेदविवक्षायां बहुवचनम् । 'पञ्चराजम्' इति । उत्तरपदस्यानकारान्तत्वात् स्त्रीत्वाभावः । [2]समासार्थोत्तरपदस्यान्ताः समासान्ताः इति तु पक्षे पात्रादित्वात् । क्वचित् '[3]पञ्चराजी' इति स्त्रीलिङ्गस्य पाठः, स भाष्यविरोधादपपाठः । 'द्व्यहः' इति । 'अह्नष्टखोरेव' (६.४.१४५) इति टिलोपः, 'रात्राह्नाहाः पुंसि' (२.४.२९) । 'पञ्चगवम्' इति । 'गोरतद्धितलुकि' (५.४.९२) इति टच्, पूर्ववत् स्त्रीत्वाभावः ॥

## २४. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।

श्रितादिषु गत्यर्थत्वात् कर्तरि क्तः । पतिरपि सकर्मकः, 'नेज्जिह्मायन्तो नरकं पताम' (ऋ.खि.पृ.१५६, नि. १.११) इति यथा । [4]अत्यासः व्यतिक्रमः, गतिविशेष एव । प्राप्तिरप्यत्र गतिरेव, न फलम् । एवमापत्तिरपि । इह श्रितपतितगतैरयं समासो न विधेयः, कथम् ? यः कष्टं श्रितः, कष्टं तेन श्रितं भवति तत्र बहुव्रीहिणा सिद्धम्, नार्थभेदः, न [5]रूपभेदः, न स्वरभेदः । तत्पुरुषेऽपि '[6]अहीने द्वितीया' (६.२.४७) इति । श्रितपतितगतेभ्यः पूर्वपदप्रकृतिस्वर एव भवति । अतीतादिभिस्तु स्वरसिद्धये विधेयः, तथा हि—तैस्तत्पुरुषे थाथादिस्वरेण भाव्यम्, नाहीनस्वरेण, 'अतीतात्यस्तयोरहीने' इति निषेधात्, प्राप्तापन्नयोरस्त्वहीने द्वितीयानुपसर्गं इति वचनात् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यम्, तस्माच्छ्रितादिभिरयं समासो न विधेयः । तत्रायमप्यर्थः 'अहीने द्वितीया' (६.२.४७) इत्येतदपि न वक्तव्यं भवति । जातिस्वरप्रसङ्गस्तु, यदा जातिकालसुखादिभ्यः परे श्रितादयो भवन्ति, तदा पूर्वपदप्रकृतिस्वरं बाधित्वा, 'जातिकालसुखादिभ्योऽनाच्छादनात्' (६.२.१७०) इत्यन्तोदात्तत्वप्रसङ्गः । ननु च तत्पुरुषारम्भेऽपि बहुव्रीह्यर्थविवक्षायां न दण्डवारितो बहुव्रीहिरिति जातिस्वरः स्यादेव ? एवमप्यस्ति भेदः, तत्पुरुषे 'अहीने द्वितीया' (६.२.४७) इति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ 'जातिकाल' इत्यन्तोदात्तत्वमिति द्वौ स्वरौ भवतः, अनारम्भे तु जातिस्वर एव स्यादिति । एवं तर्हि यथैतद्वा जात इति तद्वा जातश्रितपतितगतेष्विति वक्तव्यम् ? एवमपि 'अहीने द्वितीया' (६.२.४७) इत्येतदपि न वक्तव्यमित्यस्त्येव लाघवम् । एतावांस्तु विशेषः—तत्पुरुषारम्भे तत्र पूर्वपदप्रकृतिस्वरत्वम्, बहुव्रीहौ तु जातिस्वर इति द्वयोः समासयोः [8]द्वैस्वर्यम्, अनारम्भे तु बहुव्रीहावेव द्वैस्वर्यमिति ?

अत्रोच्यते—जातिकालसुखादिव्यतिरिक्तैः सह बहुव्रीहौ श्रितादीनां निष्ठेति पूर्वनिपातप्रसङ्गाद्रूपभेदः, तथा सर्वत्र कबपि प्राप्नोति । नन्वसौ 'शेषाद्विभाषा' (५.४.१५४) इति विकल्पितः, स च तत्पुरुषारम्भेऽपि भवत्येव, बहुव्रीहेरप्यभ्युपगमात् ? एवमपि बहुव्रीहावपि द्वैस्वर्याभ्युपगमात् पूर्वपदप्रकृतिस्वरपक्षेऽपि बहुव्रीहित्वानपायात् पक्षे कपः प्रसङ्गः; तत्पुरुषारम्भे तु तत्रैव 'अहीने द्वितीया' (६.२.४७) इति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ तु जातिस्वर एव नित्यमित्यन्तोदात्तादेव कन्न पूर्वपदप्रकृतिस्वरावित्यस्त्येव विशेषः । तथार्थभेदोऽपि 'गत्यर्थाकर्मक' (३.४.७२) इति कर्तरि क्तो धात्वर्थस्य सर्वात्मनाऽनिष्ठितत्वेऽपि भवति—आरूढो वृक्षं देवदत्त

---

1. राजशब्दे–म. 2. °उत्तरपदान्ताः–ख. 3. पंचराजा–ख. 4. अभ्यासः–म. 5. सुपा भेदः–म. 6. 'अहीने....एव भवति' इति भागो नास्ति–म. 7. कृतेऽपि–म. 8. द्वैस्वर्ये–म.

इति वृक्षस्य एवोच्यते। कर्मणि तु भवन् सर्वात्मना निष्ठितत्वे भवति—आरूढो वृक्षो देवदत्तेनेति, तथेहापि कष्टं श्रित इति कष्टमनुभवन्नेवमुच्यते, कष्टं श्रितमनेनेत्यनुभूतकष्टः [1]श्रितशब्दविवक्षितस्यार्थस्य साक्षादवगति-र्भवति तत्पुरुषे। बहुव्रीहौ त्वर्थात्, तद्यथा—राज्ञः सखेत्युक्ते नूनं राजाऽप्यस्य सखेति स एष [2]सूक्ष्मदृशामेव विषयः।

'गमिगाम्यादीनाम्' इति। उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम्। 'ग्रामं गमी' इति। 'गमेरिनि' (द.उ. ६.५७) इति औणादिक इनिप्रत्ययः, 'भविष्यति गम्यादयः' (३.३.३) इति भविष्यति काले। 'ग्रामं गामी' इति। 'आवश्यके णिनिः' (३.३. १७०)। 'गत्यर्थकर्मणि' (२.३.१२) इत्यत्र द्वितीया-ग्रहणमपवादविषयेऽपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवति। 'ओदनं बुभुक्षुः' इति। भुजेः सन्, 'सनाशं-सभिक्ष उः' (३.२.१६८)। 'न लोकाव्यय' (२.३.६९) इति षष्ठीनिषेधः[3]॥

## २५. स्वयं क्तेन।

'स्वयं धौतौ' इति। 'धावु गतिशुद्ध्योः' (धा. पा. ६०१), 'उदितो वा' (७.२.५६) इति क्त्वायां विकल्पितेट्त्वात् 'यस्य विभाषा' (७.२.१५) इतीट्प्रतिषेधः। 'च्छ्वोः शूडनुनासिके च' (६.४.१९) इत्यूठ्, 'एत्येधत्यूठ्सु' (६. १. ८९) इति वृद्धिः। 'स्वयंविलीनम्' इति। 'लीङ श्लेषणे' (धा.पा. ११३९), 'स्वादय ओदितः' ओदितश्च' (८.२. ४५) इति निष्ठानत्वम्, '[4]कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्' (व्या.प. १२६) विलीनशब्दः क्तान्तः। 'ऐकपद्यमैकस्वर्यं समासत्वात्' इति। समसनं समासः, सञ्ज्ञा वा, ततो हेतोरित्यर्थः॥

## २६. खट्वा क्षेपे।

'खट्वारोहणं च' इत्यादि। विनिन्दितो मार्गः विमार्गः। भूमिशयनार्हो ब्रह्मचारी, वेदाध्ययनकाले तेनाधीत्य स्नात्वा गुरुभिरनुज्ञातेन [5]खट्वाऽऽरोढव्या। यस्त्वन्यथा खट्वारोहणं [6]तद्विमार्गप्रस्थानम्। तच्चो-दाहरणमन्यस्याप्येवंविधस्योपलक्षणम्, तेन खट्वामारोहतु मा वाऽरुक्षत् [7]विमार्गप्रस्थितः खट्वारूढ इत्युच्यत इत्यर्थः॥

## २७. सामि।

'तस्यासत्त्ववाचित्वात्' इति। द्रव्याधारा हि कर्मशक्तिः, अतो द्रव्यवाचिन एव द्वितीया भवति, ना-द्रव्यवाचिन इत्यर्थः॥

1. तथापि पतितस्य—म. 2. सूक्ष्मदृशां विषयः—म. 3. तथा इत्यधिकम्—म. 4. कृद्ग्रहणेन—म. 5. खट्वारोहः—म. 6. तस्य विमार्ग°—म. 7. विमार्गप्रस्थायी—म.

## २८. काला: ।

इह 'काला अत्यन्तसंयोगे' [1]इत्येको योगः कर्तव्यः, [2]तत्र 'क्तेन' (३.१.२५) इत्यस्य निवृत्तत्वात् सर्वत्र समासः सिध्यति, किमर्थं योगविभागे [3]क्तान्तेन समासो विधीयत इत्यत आह—'अत्यंतसंयोगार्थं वचनम्' इति । अत्यन्तसंयोगमेव दर्शयति—'षण्मुहूर्ता:' इति । 'चराचरा:' इति । चरेः पचाद्यचि 'चरिचलिपतिवदीनामुपसङ्ख्यानमाक् चाभ्यासस्य' (वा.६५८) इति द्विर्वचनमागागमश्चाभ्यासस्ये[4]ति । चरन्तोऽनवस्थिता इत्यर्थः । 'कदाचिदहः' इति । उत्तरायणे । 'कदाचिद्रात्रिम्' इति । दक्षिणायने । ततः तैश्च षड्भिर्मुहूर्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः । 'मासप्रमितः' इति । माङ आदिकर्मणि कर्तरि क्तः, मासं परिच्छेत्तुमारब्धवानित्यर्थः 'प्रतिपच्चन्द्रमाः' इति । न च तेन [5]मासस्यात्यन्तसंयोग इति भावः ।।

## २९. अत्यन्तसंयोगे च ।

## ३०. तृतीया तत्कृतार्थेन गुणवचनेन ।

तृतीयायाश्छान्दसे लुकि 'गुणवचनेन' इत्यनेन सामानाधिकरण्यम् । अर्थेनेति पृथक् पदम्, अत एव 'गुणवचनेनार्थशब्देन च' इति । 'कीदृशेन गुणवचनेन ? तत्कृतेन' इति । तदति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्शः, स च शब्दः । न च शब्देन गुणवचनस्य करणं सम्भवतीत्यतः सामर्थ्यात् तदर्थकृतेनेति विज्ञायत इत्याह—'तृतीयान्तार्थकृतेन' इति । 'यावत्' इति । यावच्छब्दो निपातस्तात्पर्यपर्यायतां दर्शयति । अर्थद्वारकं चेदं गुणवचनस्य विशेषणम्, अर्थ एव हि तृतीयार्थेन क्रियते, न गुणवचनः शब्दः । वचनग्रहणं किम्, यावताऽर्थेन समासासम्भवात् गुणवचनेनैव भविष्यति ? एवं यथा विज्ञायेत—गुणमुक्तवान् गुणवचनः, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भूते कर्तरि ल्युट्, गुणमुक्तवता संप्रति [6]गुणोपसर्जनद्रव्यवचनेनेत्यर्थः । तेन घृतेन पाटवमिति गुणमात्रनिष्ठे न भवति । गुणश्चात्र 'सत्त्वे निविशतेऽपैति' इति लक्षितो गृह्यते, न तु यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति तच्छब्दप्रवृत्तिनिमित्तम्; तृतीयान्तार्थकृते [7]सर्वत्रैव तस्य भावात् । 'शङ्कुलाखण्डः, किरिकाणः' इति । 'खडि [8]भेदने' (धा.पा. २८३), 'कण निमीलने' (धा.पा. ४४९) इत्याभ्यां घञि व्युत्पादितावेतौ क्रियारूपापन्ने गुणे वर्तित्वान्मतुब्लोपादभेदोपचाराद्वा [9]तद्वति द्रव्ये वर्तेते इति गुणवचनौ भवतः । 'धान्येनार्थः' इति । अर्थ्यत इत्यर्थः प्रयोजनम्, अर्थनं वार्थः प्रार्थना, अभिलाषः । सर्वत्र करणे तृतीयायाः समासः ।

'अक्ष्णा काणः' इति । नात्राक्ष्णां कृतं काणत्वम्, किं तर्हि ? अन्येनैव केनापि क्रियाविना, अक्ष्णा तु केवलं काणो लक्ष्यत इति तत्कृतत्वाभावः । किं च दध्ना पटुरित्यत्र मा भूदित्येवमर्थमपि तत्कृतग्रहणं कर्तव्यम् । ननु यदि दधिकृतं पाटवं विवक्षितं—दध्ना कृतः पटुरिति, ततो भवितव्यमेव समासेन; अथ भोजनाद्यपेक्षो दध्नः करणभावः—दध्ना भुङ्क्ते पटुरिति, ततो[10]ऽसामर्थ्यादेव न भविष्यति ? इहापि तर्हि न स्यात्—कुङ्कुमेन

1. इत्येव—म. 2. तत्र च तत्र च—म. 3. 'च' इत्यधिकम्—म. 4. इति नास्ति—म.
5. प्रतिमासस्य—ख. 6. [6]द्रव्यवाचिना—म. 7. सर्वत्र तस्यैव—ख. 8. भेदे—म. 9. तद्वृत्तिद्रव्ये—म.
10. असमर्थादेव—म.

लोहितं कोपेन लोहितं मुखमिति, अत्रापि हि करोतिक्रियया करणस्य सम्बन्धः-कुङ्कुमेन कृतं लोहितमिति। क्व तर्हि स्यात्? शङ्कुलया खण्ड इत्यादावेव तु स्यात्, यत्र पूर्वोत्तरपदयोः क्रियाकारकलक्षणः सम्बन्धः। तस्माद्यत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्याद्भोजनाविद्वाक्के सामर्थ्ये मा भूदिति तत्कृत-ग्रहणम्। 'गुणवचनेनेति किम्' इति। जातिवचनेषु जातेर्नित्यत्वात् तत्कृतस्यासम्भवः। क्रियावचने त्विष्यत एव। 'कर्तकरणे कृता बहुलम्' (२.१.३२) इति द्रव्यवाचिष्वपि तत्कृतस्यासंभव एव। न [1]ह्याकाशस्य तत्त्वं केनचित् क्रियते, अतो गुणवचनेनैव भविष्यतीति प्रश्नः। 'गोभिर्वपावान्' इति। गोसम्बन्धिद्रव्याद्युपयोगादेव तस्य वपावत्त्वं पीवरत्वमित्यस्ति तत्कृतत्वम्, न त्वसौ गुणवचनः॥

## ३१. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः।

[2]पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमर्थनिर्देशार्थम्। तच्चानन्तरेणोनशब्देनैव सम्बध्यते, न पूर्वादिभिः; समसदृशशब्दयोः पृथगुपादानात्। 'एतदेव' इत्यादि। समसदृशशब्दाभ्यामन्यत्रेदं, तद्योगे तुल्यार्थैरिति तृतीयास्ति। इह तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते, ततस्तस्याः समासे मातुः सदृशो मातृसदृश इति सिद्धम्, किमर्थमिह सदृशग्रहणम्? 'तत्पुरुषे तुल्यार्थतृतीया' (६.२.२) इति [3]पूर्वपदप्रकृतिस्वरो यथा स्यात्, सिद्धोऽत्र-प्रकृतिस्वरः-'सदृशप्रतिरूपयोः सादृश्ये' (६.२.११) इति। तच्च तत्र सदृशग्रहणमवश्यं कर्तव्यम्, यदा षष्ठीसमासस्तदान्तोदात्तत्वं मा भूदिति। ननु चेदानीमनभिधानात् षष्ठीसमासो न भविष्यति? नैवं शक्यम्; अलुक्समासे हि दोषः स्यात्, 'षष्ठ्या आक्रोशे' (६.३.२१) दास्याः सदृशः, वृषल्याः सदृश इति, तस्मात्तत्कर्तव्यम्, इदं तु न कर्तव्यम्? इदमपि कर्तव्यम्, हेतुतृतीयार्थं विद्यया हेतुना सदृशो विद्यासदृश इति, न ह्यत्र 'तुल्यार्थैः' इति षष्ठी भवति, [4]प्रतियोगिन्येव हि सा विधीयते। एवमपि न कर्तव्यम्-तत्कृतत्वात् पूर्वेणैव सिद्धम्, यो हि विद्यया सदृशः, विद्याकृतं हि तत्सादृश्यम्, तत्र पूर्वेणैव सिद्धम्। 'मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्' गुडसंमिश्रा धाना इत्येवमर्थम्? ज्ञापकात् सिद्धम्, यदयं 'मिश्रं चानुपसर्गमसन्धौ' (६.२.१५४) इत्यनुपसर्गग्रहणं करोति, तज्ज्ञापयति—मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति।

'पूर्वादिषु' इति। अवरशब्दोऽपि सूत्रे पठितव्य इत्यर्थः।

## ३२. कर्तृकरणे कृता बहुलम्।

'कर्तृकरणे' इति प्रथमाद्विवचनम्। वृत्तौ वस्तुव्याख्यानं कृतम्'-कर्तरि करणे च या तृतीया' इति। तथा चोत्तरत्र वक्ष्यति—'कर्तृकरणे कृत्यैः सहाधिकार्थवचने समस्येते' इति। 'सर्वोपाधि व्यभिचारार्थम्' इति। अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः।

'पादहारकः' इति। ह्रियत इति हारक इति 'कृत्यल्युटो बहुलम्' (३.३.११३) इति कर्मणि ण्वुल्, [5]पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः। 'गलेचोपकः' इति। 'चुप मन्दायां गतौ' (धा.पा. ४०३); हेतुमण्णिजन्तात्

1. ह्याकाशादितत्त्वं-ख. 2. सूत्रार्थशब्देन-म. 3. प्रसतिस्वरो-म. 4. योगिनी-म.
5. °त्यपादाने-म.

कर्मणि ण्वुल्, 'अमूर्धमस्तकात्' (६.३.१२) इत्यलुक्। कृद्ग्रहणमनर्थकम्; अन्यस्याभावात्। इह कर्तृकरणे क्रियाया एव भवतः, क्रिया च धातुवाच्या, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च। तत्र सुपेत्यधिकारात् तिङन्ते न प्रसङ्गः। तद्धितनिवृत्त्यर्थं तु—[1]इह काष्ठैः पचतितराम् काष्ठैः पचतिरूपम्, काष्ठैः पचतिदेश्यम्, हस्तेन कृतपूर्वी, दध्ना भुक्तपूर्वी, घृतेनेष्टीति ॥

## ३३. कृत्यैरधिकार्थवचने।

'स्तुतिनिन्दाप्रयुक्तम्' इति। स्तुत्या निन्दया च प्रवर्तितं स्तोतुं निन्दितुं च कृतमित्यर्थः। 'अध्यारोपितार्थवचनम्' इति। [2]असन्नेवारोपितोऽ[3]ध्यारोपितः। 'काकपेया' इति। एवं नाम पूर्णतोया नदी यत्तटस्थैः काकैरपि शक्या पातुम् इति स्तुतिः; एवं नामाल्पतोया यत् काकैरपि शक्या पातुमिति निन्दा; उभयत्र शक्यार्थे कृत्यः। 'श्वलेह्यः' इति। एवं नामासन्नतोयः कूपस्तटस्थैरपि श्वभिः शक्यो लेढुमिति स्तुतिः; एवं नामाशुचिः कूपः यज्जलं श्वान एव लेढुमर्हन्तीति निन्दा; अर्हार्थे कृत्यः। 'बाष्पच्छेद्यानि' इति। एवं नाम कोमलानि तृणानि यद् बाष्पेणापि छेत्तुं शक्यानीति स्तुतिः, एवं नाम [4]क्वथितानि तृणानि यद्बाष्पेणापि छेत्तुं शक्यानीति निन्दा। 'कण्टकसञ्चेयः' इति। एवं नाम क्लिन्न ओदनो यत्कण्टकैः शक्यः संचेतुमिति स्तुतिः; एवं नामाल्प ओदनो यत्कण्टकैः संचीयत इति निन्दा। 'पूर्वस्यैवायं प्रपञ्चः' इति। यद्यपि स्तुतिनिन्दापरत्वात् क्रियोपादानस्य कर्तृकरणयो गौणत्वम्, तथापि बहुलवचनात् पूर्वेणैव सिद्धम्, तथा च काकपीता नदीत्यत्राकृत्यैरपि [5]अधिकार्थवचनैः समासो दृश्यते, अतः प्रपञ्च एवायम्, नाप्राप्तविधिः, नापि नियम इत्यर्थः ॥

## ३४. अन्नेन व्यञ्जनम्।

'दध्योदनः' इति। ननु च नेह क्रिया श्रूयते, न चान्तरेण क्रियां द्रव्याणां [6]परस्परेण सम्बन्ध इत्यसामर्थ्यादत्र समासो न प्राप्नोति, अथासत्यपि सामर्थ्ये वचनात् समासः? इहापि तर्हि स्यात्—किं दध्ना ओदनो भुज्यतामिति, तत्राह—'वृत्तौ क्रियाया अन्तर्भावात्' इति। स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकस्य सम्बन्धस्य सद्भावात् सामर्थ्यमित्यर्थः ॥

## ३५. भक्ष्येण मिश्रीकरणम्।

'खरविशदम्' इति। खरम् = कठिनम्, विभक्तावयवम्, खरं च तद्विशदं च खरविशदम्, हनुचलनेनादनीयमित्यर्थः। एवम्भूतं यदभ्यवहार्यं तद्भक्ष्यमित्युच्यते; तवैव यदन्तस्य एरजन्तस्य च भक्षयते रूढत्वात्। भक्षयतिस्त्वन्यत्रापि भवति—अब्भक्षः, वायुभक्ष इति। गौणोऽत्र भक्षयति[7]रित्यन्ये ॥

1. इह नास्ति—म. 2. अग्रेसरम्—म. 3. अध्याहारः—म. 4. क्वचित् तानि—ख.म. 5. अधिकार्थवचने—ख. 6. परस्परसम्बन्धः—म. 7. इत्यन्ये नास्ति—म.

## ३६. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ।

'अर्थः परामृश्यते' इति । यद्यपि चतुर्थीति चतुर्थ्यन्तः शब्दः सन्निहितः, तथापि शब्दं प्रति तादर्थ्यासम्भवात् तदर्थ एव परामृश्यत इत्यर्थः । 'इत्येतैः [1]शब्दैः सह' इति । तत्र तदर्थेन सुबन्तेनेत्यर्थद्वारकं विशेषणम्, स्वरूपेण सुबन्तस्य [2]तादर्थ्यासंभवात् । द्वितीयस्त्वर्थशब्दः पृथगेव निमित्तम् । 'प्रकृतिविकारभावे समास इष्यते' इति । ज्ञापकात् । यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति—विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यत इति, अन्यथा कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत्स्यात् । हितसुखग्रहणं तु 'हितयोगे चतुर्थी वक्तव्या' (वा. १२३), 'चतुर्थी चाशिषि' (२.३.७३) इत्यतादर्थ्येऽपि चतुर्थीसम्भवान्न ज्ञापकम् । यदि 'विकृतिः प्रकृत्या' (कात्या.वा.१२७२) समस्यते—अश्वेभ्यो घासः, अश्वेभ्यः सुरा अश्वसुरम्, 'विभाषा सेना' (२.४.२५) इति नपुंसकत्वम्, हस्तिभ्यो विधा हस्तिविधा, विधा = अन्नविशेषः; अत्र न प्राप्नोति ? अश्वघासादयः षष्ठीसमासा भविष्यन्ति । ननु स्वरे विशेषो भवति । चतुर्थीसमासे हि सति 'चतुर्थी तदर्थे' इति पूर्वपदप्रकृतिस्वरेण भाव्यम्, षष्ठीसमासे तु समासान्तोदात्तत्वेन ? नैषोऽस्ति विशेषः; चतुर्थीसमासेऽपि नैव पूर्वपदप्रकृतिस्वरेण भाव्यम्, ज्ञापकात्, यदयं 'क्ते च' (६.२.४५) इति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह, तज्ज्ञापयति—[3]प्रकृतिविकारभावाभाव एष स्वरो न भवतीति; अन्यथा गोरक्षितमित्यत्रापि 'चतुर्थी तदर्थे' इत्येव सिद्धरनर्थकं तत् स्यात् । नैतदस्ति ज्ञापकम्; हितार्थमेतत् स्यात्,—गोहितमित्यत्र हि तादर्थ्यं नास्ति । एवमपि 'हिते च' इति वक्तव्ये 'क्ते च' (६.२.४५) इति सामान्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ मा भूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः ।

अथ रन्धनाय स्थालीत्यत्र [4]षष्ठीसमासः कस्मान्न भवति ? कश्चिदाह—भवत्येव, तद्यथा—गोग्रासः, लीलाम्बुजम्, क्रीडासरः, वासभवनम् नाटचशालेति । अपर आह—रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति । उभावपि प्रतिब्रूमः—येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यताम्, साकारि ज्ञापनार्थं बलिरक्षितग्रहणम्, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण [5]प्रकृतिविकारभाव एव व्यवस्थास्यते । किं चैवं सति [6]सूत्रमेवैतदनर्थकम्, यूपदार्वादावपि षष्ठीसमास एवास्तु, 'चतुर्थी तदर्थे' इत्येतत्तु 'षष्ठी तदर्थे' इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम् । नन्वर्थभेदो भवति–षष्ठीसमासे सम्बन्धमात्रं गम्यते, चतुर्थीसमासे तु तादर्थ्यं सम्बन्धविशेषः ? नैषोऽस्ति विशेषः; आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः । यद्येवम्, केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते, किं च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यविसायः [7]सर्वत्रैव तथास्तु, नार्थोऽनेन ? उच्यते—हितशब्देन तावत् षष्ठी समासो न भवति, तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः । ततश्च 'क्ते च' (६.२.४५) इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं [8]गोहितमित्याद्यर्थम् । एवं च गोरक्षितमित्यत्र न स्यात्, चतुर्थ्या असम्भवात् । 'षष्ठी तदर्थे' इत्यस्य चाप्रसङ्गः, [9]प्रकृतिविकाराभावादिति [10]रक्षितेनापि चतुर्थीसमास एव विधेयः । अर्थशब्देनापि योगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या [11]सम्भवितव्यमिति तेनापि चतुर्थीसमास एव [12]कर्तव्यः । बलिसुखग्रहणमपि

1. शब्दैः नास्ति–घ. 2. तदर्थासम्भवात्–ख.म. 3. प्रकृति....भावः–नास्ति–म. 4. समासः–म. 5. प्रकृतिविकारभूत–म. 6. सूत्रं नास्ति–म. 7. सविशेषः–म. 8. हितम्–म. 9. विकारभावाभावात्–घ. 10. रक्षितेऽपि–म. 11. भवितव्यम्–म. 12. वक्तव्यः–म.

कर्तव्यम्, तादर्थ्यस्य नियमेन प्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेव सूत्रम्। प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्।

'अर्थेन नित्यसमासवचनम्' इति। अन्यथा महाविभाषाधिकारात् ब्राह्मणायार्थं इति वाक्यमपि स्यात्। 'सर्वलिङ्गता च' इति। परलिङ्गताया अपवादः, अभिधेयवशेन च सर्वलिङ्गता न सर्वत्रेति दर्शयति। 'ब्राह्मणार्थं पयः' इत्यादि। [1]सर्थबिति चेत्, इत्सञ्ज्ञाभावः, इयङ्वङ्प्रसङ्गश्च। स्यादेतत्–तदर्थं विकृतेः प्रकृताविित्यत्र तदर्थे सर्थबिति [2]सूत्रं कर्तव्यम्, चतुर्थी [3]वर्तते, चतुर्थीसमर्थात् तदर्थेऽभिधेये सर्थप्रत्ययो भवति, सकारः [4]पदसञ्ज्ञार्थः–राजार्थः, [5]गवार्थः, पित्त्वादनुदात्तत्वम्, एवं चार्थं इति पूर्वपदप्रकृतिस्वरो न विधेयः, प्रत्ययत्वाच्च न तेन विग्रहः, तद्धितत्वाच्चाभिधेयवल्लिङ्गता सिध्यतीति ? तन्न, सकारस्येत्सञ्ज्ञाभावप्रसङ्गात्। अथ 'आदिर्ञिटुडवः' (१.३.५), 'षः प्रत्ययस्य' (१.३.६) इति द्विषकारकनिर्देशाश्रयणेनेत्सञ्ज्ञा स्यात् ? एवमपि वुञ्छणादिषु तृणादिभ्यः से प्रसङ्गः श्र्यर्थं भ्वर्थमित्यत्र च इयङुवङौ स्याताम्, बहुव्रीहावात्वकपोः प्रसङ्गः। स्यादेतत्–यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति शक्यते वक्तुम्, अतो ब्राह्मणोऽर्थोऽस्येति विगृह्य बहुव्रीहिः करिष्यते, तेन चतुर्थ्यन्तेन विग्रहाभावः पूर्वपदप्रकृतिस्वरत्वमिभिधेयवल्लिङ्गता च सिध्यतीति ? तन्न, महदर्थमित्यत्रात्वकपोः प्रसङ्गात्। तदर्थस्यार्थादेशः, उदभावप्रसङ्गः। स्यादेतत्––'चतुर्थी तदर्थ' इत्यनेन समासं विधायार्थ इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थशब्द [6]आदेशो विधीयते, विभाषाधिकाराच्च 'यूपार्थं दारु, यूपदारु' इत्युभयं [7]भविष्यति, ततो बलिरक्षितयोरपि विभाषार्थशब्द आदेशो भवति––'कुबेरार्थो बलिः, कुबेरबलिः' इत्यादि। किमर्थमिदम्, [8]पूर्वेणैव सिद्धम् ? ज्ञापकार्थम्, एतज्ज्ञापयति–प्रकृतिविकाराभावादन्यत्र नित्योऽर्थादेश इति। तेन रन्धनार्था स्थालीत्यादि [9]भवति, न तु रन्धनस्थालीत्यादि। अश्वघासादयस्तु पूर्ववत्। [10]अत्र समासे कृते उत्तरपदस्य विधीयमानेनार्थशब्देन विग्रहो न भविष्यति, यस्यावस्थानेऽर्थादेशस्तल्लिङ्गता स्थानिवद्भावेन भविष्यति, अर्थ इति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति, तन्न; 'उदकार्थो वीवधः' इति वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन [11]मन्थौदनादिसूत्रेणोदभावप्रसङ्गात्। अतश्चतुर्थीसमास एव विधेयः। तथा च 'अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या' (कात्या वा. १२७३.७४) ? न वक्तव्या, ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' (चां. प. ७३) इति सर्वलिङ्गता च [12]सिद्धा।

तदेतत् प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा॥

## ३७. पञ्चमी भयेन।

'भयेन' इति स्वरूपग्रहणादव्याप्तिरिति मत्वाऽऽह–'भयभीतभीतिभीभिरिति वक्तव्यम्' इति। एवं सूत्रन्यासः कर्तव्यः इत्यर्थः। व्याख्यानात्त्वर्थग्रहणे 'वृकेभ्यस्त्रासः' [13]इत्यादावपि प्रसङ्ग इति भावः। स तर्हि तथा न्यासः

1. सर्वमिति–म. 2. इति–ख. 3. च इत्यधिकम्–ख.म. 4. पदज्ञानार्थः–म. 5. वागर्थः–इत्यधिकम्–ख. 6. आदेशाः विधीयन्ते-ख.म. 7. भवति–ख.म. 8. 'न' इत्यधिकम्–म. 9. भविष्यति–ख. 10. अत्र समासे....स्थानिवद्भावेन भविष्यति–इति भागः नास्ति–ख. 11. मन्थोदक°–ख. 12. सिध्यति–ख. 13. इत्यादावति–म.

कर्तव्यः ? नेत्याह—'पूर्वस्यैव बहुलग्रहणस्य' इति । यथा हि 'पावहारकः' इत्यादौ बहुलग्रहणात्, सर्वोपाधिव्यभिचारार्थाद्भवति, एवमत्रापि भविष्यतीत्यर्थः । 'अधर्मजुगुप्सुः' इति । 'जुगुप्साविराम' (वा.५८) इत्यधर्मस्यापादानसञ्ज्ञा ॥

## ३८. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।

अल्पशब्दात् 'बह्वल्पार्थात्' (५.४.४२) इति शस् । '[1]शसि बह्वल्पार्थस्य' (वा.७२९) इति पुंवद्भावः । कारकत्वं तु समसनक्रियायां कर्मत्वात् । अत एव पञ्चमी समस्यत इति कर्मणि लकारः तत्र तु बह्वल्पार्थान्मङ्गले वचनमिति वक्ष्यति । तस्मादत्त एव निपातनादत्र शसिति युक्तम् । 'अल्पा पञ्चमी' इति । अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः ॥

## ३९. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।

## ४०. सप्तमी शौण्डैः ।

अत्र साहचर्याद् धूर्तादिष्वजहत्स्वार्थ एव शौण्डशब्दः प्रयुज्यते, यथा—छत्रिणो गच्छन्तीति । अत्र च प्रमाणं बहुवचननिर्देशः, अतोऽन्तरेणाप्यादिशब्दं तदर्थो गम्यते इत्याह—'शौण्डादिभिः' इति । गणपाठसामर्थ्यात्तु बहुवचननिर्देशोऽर्थनिर्देशार्थः । बहुवचनान्तस्य वा समासार्थं इति [2]न भवति । ननु चाक्षशौण्ड इत्यादौ क्रियाया [3]अश्रवणादधिकरणत्वं नोपपद्यते, न चान्यत् सप्तम्या निमित्तमस्ति । न चैतदेव ज्ञापकं शक्यमाश्रयितुम्, शौण्डो देवदत्त इत्यादावपि प्रसङ्गात्, अत आह—'वृत्तौ' इति । अन्तःशब्दोऽत्र पठ्यते, तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति, वनेऽन्तर्वनान्तः । अस्य विकल्पितत्वादव्ययीभावोऽपि भवति, अन्तर्वणम्. 'प्रनिरन्तः' (८.४.५) इति णत्वम् । अधिशब्दः पठ्यते, तस्याधिकरणप्राधान्येऽव्ययीभावः—अधिस्त्रीति । 'आधेयप्राधान्ये ह्ययं तत्पुरुषः—ब्राह्मणाधीनमिति । 'अध्युत्तरपदात् खः' (५.४.७) इति खः[5] । ब्राह्मणेष्वधीति [6]वाक्यम् ॥

## ४१. सिद्धशुष्कपक्वबन्धैश्च ।

'साङ्काश्यसिद्धः, काम्पिल्यसिद्धः' इति । सङ्काशेन निर्वृत्तं वनं साङ्काश्यम् । [7]कम्पिलेन निर्वृत्तं काम्पिल्यम् । चातुरर्थिकः सङ्काशादिभ्यो ण्यः । तत्र तपसा सिद्ध इत्यर्थः ॥

## ४२. ध्वाङ्क्षेण क्षेपे ।

'स्वं रूपं शब्दस्य' (१.१.६८) इति वचनात् पर्यायाणां न प्राप्नोतीत्यत आह—'ध्वाङ्क्षेणेत्यर्थग्रहणम्' इति । व्याख्यानाच्चैतदवसीयते । 'तीर्थे ध्वाङ्क्ष इव' इति । उपमानोपमेयभावे सति क्षेपो गम्यते, नान्यथेतीवशब्दः

2. एषा पंक्तिः न विद्यते–ख. 2. न नास्ति–म. 3. आश्रयणत्वात्–म. 4. आधेयप्राधान्यत्वेन–ख. म. 5. इति इत्यधिकम्–ख. 6. वाक्यविग्रहः–ख. 7. 'कंपिलेन निर्वृत्तम्' नास्ति–म.

प्रयुक्तः। यथा तीर्थे ध्वाङ्क्षा न चिरं स्थातारो भवन्ति, एवं कार्येष्वनवस्थितस्तीर्थध्वाङ्क्ष [1]इत्यर्थः। तदाह—'अनवस्थित इत्यर्थः' इति। वृत्तौ त्विवार्थस्यान्तर्भावादिवशब्दस्याप्रयोगः॥

## ४३. कृत्यैर्ऋणे।

'यत्प्रत्ययान्तेनैवेष्यते' इति। 'अल्पशः' (२.१.३८) इत्यनुवृत्तेरेतल्लभ्यते। कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम्।

'ऋणग्रहणं [2]च नियोगोपलक्षणार्थम्' इति। नियोगः अवश्यंभावः। ऋणमवश्यदेयमिति नियोगसाहचर्यान्नियोगमात्रमुपलक्षयति। तेन [3]किं सिद्धं भवतीत्याह—'इहापि' इति। 'पूर्वाह्णेगेयम्' इति। 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्युक्तम्। यथा ऋणमवश्यं देयम्, एवमिदमपि पूर्वाह्णेऽवश्यं गेयमिति नियोगोऽस्ति॥

## ४४. सञ्ज्ञायाम्।

## ४५. क्तेनाहोरात्रावयवाः।

'दिवा वृत्तम्' इति। ऐकपद्यमैकस्वर्यं च न भवति। ननु च दिवाशब्दोऽधिकरणशक्तिप्रधानः, तत्राभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमैवास्माद्भवति, अतः सप्तम्यभावादेवात्राप्रसङ्गः। नैषोऽस्ति नियमः—अधिकरणशक्तिप्रधान इति; 'दिवामन्या रात्रिः' इत्यपि [4]दर्शनात्। कथं 'रात्रिवृत्तमनुयोक्तुमुद्यतम्' (कु.सं. ८.१०.) इति? 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति [5]मन्यते। एवं चान्यजन्मकृतमित्याद्यपि भवति॥

## ४६. तत्र।

'तत्रेत्येतत् सप्तम्यन्तम्' इति। तत्रभवानित्यादौ विभक्त्यन्तरेऽपि [6]दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति मन्यते॥

## ४७. क्षेपे।

'अवतप्तेनकुलस्थितं तवैतत्' इति चिरन्तनप्रयोगः, तस्यार्थमाह—'चापलमनत्तवेत्यर्थः' इति। यथा अवतप्ते प्रदेशे नकुला न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एवमुच्यत इत्यर्थः। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या.प. १२६) इति नकुलस्थितशब्देन समासः, पूर्ववदलुक्॥

---

1. इति—म. 2. तु—ख. 3. किं नास्ति—म. 4. दर्शने—म. 5. मन्यन्ते—म. 6. दर्शनाधिकरण°—म.

## ४८. पात्रेसमितादयश्च ।

'युक्तारोह्यादिपरिग्रहार्थम्' इति । युक्तारोह्यादयश्चेत्यत्रैषामपि परिग्रहो यथा स्याद् [1]इत्यर्थः । 'पात्र एव समिताः' इति । भोजनसमय एव सङ्गता इत्यर्थः । 'पात्रेबहुलाः' इति । भोजनसमय एव सङ्गीभवन्ति, नान्यकार्य इत्यर्थः । 'उदुम्बरमशकादिषु' इति । [2]यस्तत्रैव तृप्तो नास्मात् परमस्तीति मन्यते, सोऽयमदृष्टविस्तारः पुरुष उदुम्बरमशकादिरुच्यत इत्यर्थः । 'प्रतिषिद्धसेवनेन' इति शत्रुषु भार्यायां वा पुरुषायितव्यम्, मातरि पुरुषायितं प्रतिषिद्धम् । 'निरीहतया' इति । पिण्डी ओदनपिण्डः, [3]तत्रैव शूरो नान्यत्रेति निरीहता । 'परमपात्रेसमिताः' इति । एवंरूपं वृत्यन्तरं न भवति, [4]परमाः पात्रेसमिता इति वाक्यमेव भवतीत्यर्थः ॥

## ४९. पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।

[5]'भिन्नप्रवृत्तिनिमित्तस्य' इत्यादि । भिन्नग्रहणं पर्यायनिवृत्त्यर्थम् । एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम् । क्वचिद् 'भिन्ननिमित्तप्रयुक्तस्य' इति पाठः, भिन्नेन निमित्तेन [6]प्रवृत्तिनिमित्तेन प्रवर्तितस्येत्यर्थः । 'विशेषणं विशेष्येण' (२.१.५७) इति सिद्धे पूर्वकालादीनां पूर्वनिपातार्थं वचनम्, एकशब्दस्य तु 'दिक्संख्ये संज्ञायाम्' ((२.१.५०) इति नियमात् प्राप्त्यर्थमेव । 'पूर्वकाल इत्यर्थग्रहणम्' इति । पूर्वः कालोऽस्य पूर्वकालः, पूर्वमनुष्ठित इत्यर्थः । स च चरमानुष्ठितमपेक्ष्य भवतीत्यर्थात्तेनैव समासो विज्ञायत इत्याह––'अपरकालेन' इति । 'स्नातानुलिप्त' इति । पूर्वं स्नातः पश्चादनुलिप्त इत्यर्थः । अत्र क्रियाशब्दत्वात् पाचकपाठकादिवत् [7]पूर्वनिपातः पर्यायात् स्यात् । 'एकशाटी' इति । शाटशब्दाज्जातिलक्षणो ङीष्, 'एकतद्धिते च' (६.३.६२) इति ह्रस्वः । [8]'सर्वमनुष्यः' इति । अत्र विशेषणमित्यपि समासे न दोषः । तस्मात् क्रियावाचिनां गुणवाचिनां वा समासो [9]दर्शनीयः । एवं जरदादिष्वपि ।

'एकस्याः शाटी' इति । अत्र भवितव्यमेव षष्ठीसमासेन, तस्मादेकस्याः शौक्ल्यमिति [10]प्रत्युदाहर्तव्यम् । अत्र हि गुणेन नेति प्रतिषेधः ॥

## ५०. दिक्सङ्ख्ये सञ्ज्ञायाम् ।

'विशेषणं विशेष्येण' (२.१.५७) इति सिद्धे नियमार्थमेतत्–संज्ञायामेव, नान्यत्रेति । पूर्वसूत्रमित्यादौ त्वदिग्वाचित्वात् समासः ॥

## ५१. तद्धितार्थोत्तरपदसमाहारे च ।

'विशेषणं विशेष्येण' (२.१.५७) इति सिद्धस्य पूर्वेणानियमावप्राप्तविधिरयम् । [11]अगृह्यमाणविषयत्वाद्वायमपि नियमः शक्यते वक्तुम्––अयं नियमः पूर्वो विधिरिति । एकापि सप्तमी विषयभेदाद्भिद्यत

---

1. इत्येवमर्थं–ख. 2. यत्सूत्र एव–म. 3. तत्र–ख. 4. परमपात्रेसमिताः–म. 5. सर्वभिन्न°–म. 6. प्रवृत्तिनिमित्तेन नास्ति–म. 7. पूर्वपर्यायात्–ख. म. 8. पर्वमनुष्यः–म. 9. दर्शयितव्यः–म. 10. प्रत्युदाहार्यम्–म. 11. विशेषत्वात्–ख. म.

इत्याह--'तद्धितार्थे विषयभूत' इत्यादिना। तद्धितार्थेऽभिधेय इत्येवं तु विज्ञायमाने पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्; तदर्थस्य समासेनैवोक्तत्वादिति भावः। अस्मिन् पक्षेऽर्थग्रहणं चिन्त्यप्रयोजनम्। तद्धिते विषय इत्येवास्तु। तद्धिते परत इति तु विज्ञायमाने इतरेतराश्रयं प्राप्नोति–समासात् तद्धितो विधेयः, तद्धिते च समास इति। किं च--'तद्धितार्थेऽभिधेये' इत्यस्मिन् पक्षे न दोषः, [1]'द्विगोर्लुगनपत्ये' (४.१.८८) इति लुग्वचनं ज्ञापकमुत्पद्यते--द्विगोस्तद्धित इति सर्वतद्धितसाधारणो द्विगुः, तत्रावश्यं विशेषाभिधानाय तद्धित उत्पद्यत इत्यपि शक्यं [2]विज्ञातुम्। अथैवं कस्मान्न विज्ञायते---तद्धितार्थे द्विगुर्भवति, तद्धितो यथा स्यादिति द्विगुर्भवतीति, यथा--दारार्थं घटामहे, दारा यथा स्युरिति घटामह इति? नैवं शक्यं विज्ञातुम्; एवं हि विज्ञायमाने तद्धितोत्पत्तये विधीयमाना समाससञ्ज्ञा विषयान्तरे न स्यात्। एवं तस्यैव समासस्य विधीयमाना द्विगुसञ्ज्ञापि, ततश्च पञ्चारत्निरित्यत्र इगन्ते द्विगाविति स्वरो न स्यात्, तस्य तु समाहारद्विगुरवकाशः, यथा---स्वरे विधीयमानः पराङ्गवद्भावः षत्वणत्वयोर्न भवति, तथात्रापि। 'पौर्वशालः' इति। पूर्वायां शालायां भव इति तद्धितार्थे [3]विवक्षिते समासः, ततस्तद्धितः।

'पूर्वशालाप्रियः' इति। पूर्वा शाला प्रियाऽस्येति त्रिपदे बहुव्रीहौ [4]प्रियशब्दे उत्तरपदे परतः, पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं शालाशब्दस्य भवति, [5]असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमवतिष्ठेत।

'समाहारे दिक्शब्दो न सम्भवति' इति। स हि समूहरूपत्वाद् भेदनिबन्धनः, सङ्ख्यैव च भेदमाचष्टे, दिक्शब्दस्तु प्रत्यर्थनियतः। विभक्तिरपि समासे निवर्तते। ननु यथा 'काकसमूहः' इत्यत्र विभक्त्यभावेऽपि भेदावगतिस्तथात्रापि भविष्यति, तस्मात् प्रयोगाभावादित्येवात्र हेतुर्वक्तव्यः।

'पाञ्चनापितिः' इति। पञ्चानां नापितानामपत्यमिति समासे, 'अत इञ्' (४.१.९५)। 'पञ्चकपालः' इति। पञ्चसु कपालेषु संस्कृतः इति समासे 'संस्कृतं भक्षाः' (४.२.१६) इत्यणः 'द्विगोर्लुगनपत्ये' (४.१.८८) इति लुक्। 'पञ्चगवधनः' इति। पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ कृते धनशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे 'गोरतद्धितलुकि' (५.४.९२) इति टच्। अयमुत्तरपदे तत्पुरुषो महाविभाषाधिकाराद्विकल्पेन प्राप्नोति, नित्यो वक्तव्यः, अन्यथा पञ्चगोधन इत्यपि स्यात्। उक्तं च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' (कात्या.वा. १२८७) इति। वाक् च दृषच्च प्रिये अस्य वाग्दृषद्प्रिय इति त्रिपदबहुव्रीहौ पूर्वयोर्द्वन्द्वः, स च नित्य इष्यते---नित्यं समासान्तो यथा स्यादिति।

'पञ्चपूली' इति। पञ्चानां पूलानां समाहार इति विग्रहः, न तु पञ्चपूलाः समाहृता इति। भावसाधनो हि समाहारशब्दः--समाहारणं समाहारः विप्रकीर्णानामेकत्र राशीकरणम्। [6]पञ्चग्रामः, षण्णगरी, त्रिपुरीत्यत्र एकस्मिन् [7]क्षणे क्रियायां समन्वयाद्भिन्नदेशानामपि बुद्ध्या राशीकरणं [8]भवति। अथ कर्मसाधने को दोषः? इह [9]पञ्चकुमारीति, कुमार्यर्थप्राधान्यात् समासशास्त्रे चाप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनत्वाभावात् 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इति ह्रस्वो न स्यात्, काममत्र नपुंसकह्रस्वत्वं सिद्धम्।

---

1. 'द्विगोर्लुक्....विज्ञातुम्' नास्ति–म; 2. वक्तुम्–ख. 3. अपि इत्यधिकम्–म. 4. कृते इत्यधिकम्–म. 5. असति—तिष्ठेत इतिभागः नास्ति–म. 6. पञ्चग्रामी–म. 7. गुणे–ख. म. 8. न इत्यधिकम्–म. 9. पञ्चकुमारीः समाहृत्य–ख.

इह [1]पञ्च खट्वाः समाहृताः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे ह्रस्वाभावात् 'द्विगोः' (४.१.२१) इति ङीब् न स्यात्। भावसाधने तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यं षष्ठ्यैव योग इत्येकविभक्तित्वात् सिद्धमुपसर्जनत्वम्। तस्माद्भावसाधनः।

'द्विगुरेकवचनम्' (२.४.१) इत्येतत्तु 'स नपुंसकम्' (२.४.१७) इति वक्ष्यामीत्यारभ्यते, कथं पञ्चपूलीमानयेत्युक्ते पूलानामानयनम्, नान्तरेण द्रव्यानयनं [2]भावानयनं सम्भवति, यथा नान्तरेण पात्रानयनमग्नेरानयनं सम्भवति ? एवमपि समाहारग्रहणमनर्थकम्, भावसाधनो हि समाहारशब्दः समूहपर्यायः, समूहश्च तद्धितार्थस्तत्र 'तद्धितार्थ' इत्येव सिद्धम्। यद्येवम्, तद्धितोत्पत्तिः प्राप्नोति ? उत्पद्यतां तद्धितः, 'द्विगो' (४.१.८८) इति लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति, पञ्चपूली—'अपरिमाणबिस्ताचित' (४.१.२२) इति ङीप्प्रतिषेधः प्राप्नोति, पञ्चगवम्, 'गोरतद्धितलुकि' (५.४.९२) इति टच् न प्राप्नोति ? नैष दोषः; अपरिमाणेत्यत्र न तद्धितलुकीत्यपास्य 'समाहार' इति वक्तव्यम्, तन्नियमार्थम्—अविशेषेण द्विगोर्ङीब् भवति, अपरिमाणान्ताद्बिस्ताचितकम्बल्यान्ताच्च समाहार एवेति, पञ्चानामश्वानां समाहारः पञ्चाश्वी। क्व मा भूत् ? 'पञ्चभिरश्वैः क्रीता पञ्चाश्वा। 'गोरतद्धितलुकि' (५.४.९२) इत्यत्राप्यतद्धितलुकीत्यपास्य 'द्विगोः समाहारे' इति वक्तव्यम्, तन्नियमार्थम्—गोशब्दान्तस्य तत्पुरुषस्याविशेषेण टज् भवति, द्विगोस्तु समाहार एवेति। [3]पञ्चानां गवां समाहारः, पञ्चगवम्। क्व मा भूत् ? पञ्चभिर्गोभिः क्रीतः पञ्चगुः पटः। एवमपि पञ्चकुमारीत्यत्र 'लुक् तद्धितलुकि' (१.२.४९) इति स्त्रीप्रत्ययस्य लुक् प्राप्नोति। तस्मात् तद्धितनिवृत्त्यर्थम्[4]। [5]समाहारग्रहणात्तु समासस्यैव समाहारो वाच्यः, न तद्धितस्येति व्याख्यानात् तद्धितो नोत्पद्यत इति सिद्धमिष्टम्। इह पञ्च गावोऽस्य सन्ति पञ्चगुः पुरुष इति मत्वर्थस्य तद्धितार्थत्वादयं समासः प्राप्नोति, न बहुव्रीहिः; अशेषत्वात्। तस्य तु चित्रग्वादिरवकाशः, यत्र दिक्सङ्ख्ये न स्तः। सति चास्मिन् समासे मतुपः श्रवणं स्यात्। अप्राग्दीव्यतीयत्वाद् द्विगोर्लुगपि नास्ति। तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः॥

## ५२. सङ्ख्यापूर्वो द्विगुः।

[6]क्वचिदनन्तरोऽपेक्ष्यते, यत्रैतदुच्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति; क्वचित् समुदायः, यथा—'न षट्स्वस्रादिभ्यः' (४.१.१०) इत्यत्र वक्ष्यते—तस्मान्नोभावितिति, तदिह समुदायोऽपेक्ष्यते ? अनन्तरो वा ? इति संशयेऽनन्तर इत्याह—'तद्धितार्थ' इत्यादि। अयं भावः—समुदायापेक्षायां [7]सङ्ख्यापूर्वपदसमानाधिकरणसमासमात्रपरिग्रहे द्विमुनि व्याकरणस्येत्यव्ययीभावस्यापि स्यादितीगन्ते द्विगाविति स्वरप्रसङ्गः। समानाधिकरणतत्पुरुषापेक्षायामपि एकशाटीत्यत्रापि स्यात्। सङ्ख्याशब्दोपादानविहिततत्पुरुषपरिग्रहेऽपि 'दिक्सङ्ख्ये सञ्ज्ञायाम्' (२.१.५०) इत्यस्यापि ग्रहणात् सप्तर्षय इत्यत्र द्विगुस्वरप्रसङ्गः। योगविभागश्चानर्थकः, 'दिक्सङ्ख्ये सञ्ज्ञायां तद्धितार्थोत्तरपदसमाहारे' इत्येकयोगः कर्तव्यः स्यादिति। कथम् 'एकापूपि' इति ? अत्र हि एकश्चासावपूपश्चेति पूर्वकालेति समासे कृते द्विगुत्वे सति 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' (कात्या.वा. १५५६) इति 'द्विगोः' (४.१.२१) इतीकारः सिध्यति, नान्यथा। न चैकशाटीतिव[8]ज्जातिङीषन्तेन समासः शक्यते कर्तुम्, केवलस्यापूपशब्दस्य पुंल्लिङ्गत्वात् ? उच्यते—अत्रानन्तरसूत्रेण

1. तु इत्यधिकम्–ख.म. 2. भावस्यानयनं–ख. 3. पंचानां—समाहारः नास्ति–म. 4. समाहारग्रहणम् इत्यधिकम्–ख. 5. पृथक् समाहार°–ख. म. 6. इह इत्यधिकम्–ख. 7. °मात्रपरिग्रहात्–ख. म. 8. जातीलक्षणङीषन्तेन–ख. म.

समाहार एव समासः। नन्वनेकविषयः समाहारो नैकस्य सम्भवति, [1]कथम्? इहैकमप्यपूपं कश्चित् कृपणो ददनेकं मन्यते, तथा [2]दानश्रद्धातिशयादपूपमहत्त्वाद्वाऽनेकस्मिन्[3] यः [4]सङ्भ्रमस्तमेकस्मिन्नपि करोति। अनेन प्रतिग्रहीता कृपणो व्याख्यातः, तत्रारोपितबहुत्वाश्रयः समाहार इति सिद्धम्॥

## ५३. कुत्सितानि कुत्सनैः।

'कुत्सितानि' इति। 'कुत्स अवक्षेपणे' (धा. पा. १६९७), मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः। बहुवचननिर्देशादुभयत्रार्थग्रहणं न स्वरूपग्रहणमित्याह—'कुत्सितवाचीनि' इति। 'वैयाकरणखसूचिः' इति। सूचयतेः 'इच्च' इतीकारः। यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयति खं निरीक्षते—अहो निर्मलं गगनमिति, स एवमुच्यते। अत्र व्याकरणस्य वेदाङ्गस्याध्ययनं प्रशस्तमपि [5]प्रतिभानाभावेन निष्फलत्वात् कुत्स्यते। 'याज्ञिककितवः' इति। किं तवास्तीति धनमात्रप्रश्नेन जात्यादिनिरपेक्षो द्यूते प्रवर्तमानः कितवः। इह तु कितव इव कितवः, यो याज्ञिको [6]याज्यस्य धनसत्तामेवापेक्षते न यागार्हताम् स याज्ञिककितव [7]इत्युच्यते, तदाह—'अयाज्ययाजकस्तृष्णापरः' इति। 'मीमांसकदुर्दुरूढः' इति। 'दुल उत्क्षेपे' (धा.पा. १६००), दुःपूर्वः औणादिकः कूटप्रत्ययः। 'बहुलमन्यत्रापि' (द.उ. ८.४०) इति णिलुक्, लरयोरेकविषयत्वस्मरणाद् दुर्दुरूढ इति भवति।

'वैयाकरणश्चौरः' इति। कथमेतत् प्रत्युदाहरणम्, यावता चौरत्वेन गर्ह्यमाणत्वाद्भवत्येव [8]वैयाकरणकुत्सा, तत्राह—'न ह्यत्र' इति। प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तकुत्सायां समासेन भवितव्यम्, अत्र च वैयाकरणः कुत्स्यते चौरत्वेन, न तु वैयाकरणत्वम्। 'कुत्सितो ब्राह्मणः' इति। अत्र 'विशेषणं विशेष्येण' (२.१.५७) इति भवितव्यमेव समासेन। यदि नेष्यते, बहुलग्रहणं शरणम्॥

## ५४. पापाणके कुत्सितैः।

## ५५. उपमानानि सामान्यवचनैः।

'उपमीयतेऽनेनेत्युपमानम्' इति। उपपूर्वान्माङः करणे ल्युटि समास इति दर्शयति। भाष्ये तु मानस्य समीपमुपमानमित्यर्थकथनमात्रम्। अव्ययीभावे उपमानानीति रूपासिद्धिप्रसङ्गादिति भावः। उपपूर्वकश्च माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानम्, तद्यथा—गौरिव गवय [9]इति; गौः करणम्, पुरुषः परिच्छेत्ता, स हि गोः सादृश्येन गवयं परिच्छिनत्ति—गोसदृशो गवय इति। 'सामान्य वचनैः' इति। समानशब्दः साधारणपर्यायः, ततश्चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। साधारणो धर्मः सामान्यम्, तच्च[10] उपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वात् तयोरेव साधारणो धर्मो विज्ञायत इत्याह—'उपमानोपमेययोः'

1. 'ननु च संभवति' इत्यधिकम्—म. 2. दाने श्रद्धा°—म. 3. इव इत्यधिकम्—ख. 4. संभ्रमः—म. 5. भानाभावेन—म. 6. यागे—म. 7. इत्युच्यते—म. 8. वैयाकरणस्य—म. 9. इत्यत्र—ख.म. 10. इह इत्यधिकम्—ख.

इत्यादि। 'तद्विशिष्टोपमेयवचनैः' इति। तेन साधारणेन धर्मेण विशिष्टं यदुपमेयं तद्वचनैः[1], न [2]तु साधारण-धर्ममात्रवचनैरित्यर्थः। वचनग्रहणाच्चायमर्थो लभ्यते, सामान्यमुक्तवन्तः सामान्यवचनाः। ये सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः, यथा—गुणमुक्तवान् गुणवचन इति। तच्च सामान्यवदुपमानशब्दस्य सम्बन्धिशब्दत्वात्तदाक्षिप्तमुपमेयमेव विज्ञायत इति सुष्ठूक्तम्—'तद्विशिष्टोपमेयवचनैः' इति। 'शस्त्रीश्यामा' इति। अत्र [3]श्यामगुणविशिष्टत्वेन प्रसिद्धत्वादुपमानं शस्त्री, उपमेया देवदत्ता, तयोः साधारणो धर्मः श्यामत्वम्, तदभिधाय तद्विशिष्टायां [4]श्यामाशब्दः पर्यवस्यतीति भवति [5]सामान्यवचनः।

ननु च समानाधिकरणेनेति वर्तते, इह च शस्त्रीशब्दः शस्त्र्यां वर्तते, श्यामाशब्दस्तु देवदत्तायाम्, यदाह—'उपमावाचीनि सुबन्तानि तद्विशिष्टोपमेयवचनैः' इति, तथा विग्रहवाक्ये इवशब्दः प्रयुक्तः—शस्त्रीव श्यामेति? सत्यम्; वचनसामर्थ्यात्तु वैयधिकरण्येऽपि समासः। यद्येवम्, मृगीव चपला मृगचपला, हंसीव गद्गदा हंसगद्गदा, 'पुंवत् कर्मधारय°' (६.३.४२) इति [6]सामानाधिकरण्यलक्षणः पुंवद्भावो न प्राप्नोति? नैष दोषः; जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमकिञ्चित्करम्, तत्र कुक्कुटाण्डम्, मृगक्षीरमित्यादिवदिदमपि सिद्धम्। ननु चान्यदेव चापलं स्त्रियाः, अन्यदेव पुंसः? सत्यम्; जातिमात्रोपादानेऽपि प्रकरणादिवशात् स्त्रीत्वं [7]प्रत्यायिष्यते, तच्च बहिरङ्गत्वान्न स्त्रीप्रत्ययस्य निमित्तम्? अन्यथा पुंवद्भावेन निवृत्तौ [8]स्त्रीप्रत्ययस्य तदापि कथं विशेषावगतिः। अस्त्येवम् यदि तु मृगीव चपलेति स्त्रीप्रत्ययान्तस्य समासः क्रियते, तदा मृगीचपलेति प्राप्नोति, न हि तेन समासो दण्डवारितः, समानाधिकरणाधिकारश्च बाध्येत। एवं तर्हि समानाधिकरणसमास एवायम्—शस्त्री चासौ श्यामा चेति, कथं पुनर्देवदत्तायां शस्त्रीशब्दः, जातिवचनो ह्यसौ सादृश्यनिमित्ताद-भेदोपचारात्, यथा—गौर्वाहीक इति। यद्येवं, [9]शस्त्रशब्दोऽप्युपमेये सङ्क्रान्त इत्युपमानवाचित्वं नोपपद्यते? सत्यम्; पूर्वावस्थाश्रयेण तूपमानत्वं द्रष्टव्यम्। [10]इवशब्दप्रयोगस्तू[11]पमानप्रदर्शनार्थः, न प्रक्रिया-वाक्याङ्गमिति न कश्चिद्दोषः। ननु श्यामगुणत्वेन साधर्म्येण शस्त्रीशब्दो देवदत्तायां प्रयुज्यत इति श्याम-शब्दो न प्रयोगार्हः, तन्न; बहवो हि शस्त्र्यां गुणाः—'तीक्ष्णा सूक्ष्मा पृथुः श्यामा' इति, तत्रासति [12]श्यामगुणेन शस्त्रीत्वमारोपितमिति। ननु सदपि श्यामपदं देवदत्तामुपस्थाप्य चरितार्थमिति नैव [13]शस्त्रीगुणो निर्दिश्यते, नैतदस्ति; नैवमत्र वचनं [14]व्यज्यते—या श्यामा सा शस्त्रीवेति। कथं तर्हि शस्त्रीव श्यामा देवदत्तेति? अस्यां तु [15]वचनव्यक्ताविवशब्देन तावद् [16]उपमेयनिष्ठत्वेन प्रतीयते, उपमेयनिष्ठो गुण उपमानं स्पृशत्येव। अथ वा—चन्द्रमुखीत्यादावनिर्दिष्टोऽपि गुणः प्रियदर्शनत्वादिः प्रसिद्धिवशादुपमाननिमित्तत्वेन प्रतीयते, तदोप-मेयेऽपि तावच्छ्रुतः कथमुपमानं न स्प्रक्ष्यति! शाला इव तण्डुलाः। दीर्घत्वादिना [17]धर्मेण॥

## ५६. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।

उपमितमित्यत्र भूतकालो न [18]विवक्ष्यत इत्याह—'उपमेयमुपमितम्' इति। 'सामर्थ्यात्' इति। उपमेयमुपमानापेक्षमित्येतत्सामर्थ्येन चेत् सामान्यवाचीति यदा प्रकरणादिवशान्नियतः साधारणगुणः प्रतीयते तदा

1. इति इत्यधिकम्—म. 2. ते तथोक्तसामान्य°-ख.म. 3. श्यामगुणत्वेन—म. 4. देव-दत्तायां—ख.म. 5. सामान्यवचनम्—म. 6. °लक्षणम्—म. 7. प्रत्यायिष्यते—म. 8. स्त्रीप्रत्ययवृत्तत्व-मपि—ख.म. 9. शस्त्रशब्दो इति मुद्रितः पाठः 10. तत्र इत्यधिकम्—म. 11. तूपमानवाचित्व-प्रदर्शनार्थं—ख.म. 12. 'श्यामापदे कथमिदं प्रतीयते' इत्यधिकम्—म. 13. शस्त्रीगतगुणः—ख.म. 14. युज्यते—म. 15. वचनव्यक्ताक्षेप—म. 16. उपमेयनिष्ठार्थः—म. 17. धर्मे—म. 18. विवक्षितः—ख.म.

समासः, यदा तु गुणान्तरव्यवच्छेदाय विशिष्टः साधारणगुणवचनः शब्दः प्रयुज्यते तदा न समास इत्यर्थः। 'पुरुषोऽयं व्याघ्र इव' इति। उपमान प्रदर्शनमेतत्, अत्र हि वैयधिकरण्यात् समासस्याप्रसङ्गः। यदा तु व्याघ्रशब्दस्ता[1]द्धर्म्यात् पुरुषे वर्तते तदा [2]सामानाधिकरण्ये सति समासः। अत एवोक्तम्—'विशेषणं विशेष्येणेति प्राप्ते' इति। 'पुरुषोऽयं व्याघ्र इव शूरः' इति। ननु सामान्यशब्दप्रयोगे सति तदपेक्षत्वात् सामर्थ्यादेव न भविष्यति, एवं तर्ह्येतज्ज्ञापयति—भवति प्रधानस्य सापेक्षस्यापि वृत्तिः (जै.प.१०१) इति। तेन राजपुरुषोऽभिरूप औपगवः शोभनः इत्यादि सिद्धं भवति। न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदम्। प्राधान्यादेवानेकोपकार्यत्वसम्भवात् पुरुषव्याघ्रोऽभिरूप इति भवत्येव। शौर्यं ह्यत्र [3]समानधर्मः, नाभिरूप्यम्। अत एव 'सामान्याप्रयोगे' इत्युक्तम्, न तु 'गुणाप्रयोगे' इति।

## ५७. विशेषणं विशेष्येण बहुलम्।

'भेदकम्' इति। असिश्छिनत्तीतिवत् करणस्य [4]कर्तृत्वविवक्षायां ण्वुल्। 'विशेषणम्' इति। 'शिष्लृ शेषणे' (धा.पा. १४५१) विपूर्वः, विशेष्यतेऽनेनेति विशेषणम्, करणे ल्युट्। यत् साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्यवस्थापयति तत्पदं विशेषणं भेदकमिति [5]चोच्यते। व्यवस्थाप्यमानं विशेष्यं भेद्यमिति च। ननु च विशेषणं विशेष्यमिति च सम्बन्धिशब्दावेतौ, ततश्च विशेषणमित्युक्ते गम्यत एव–विशेष्येणेति, एवं विशेष्येणेत्युक्ते गम्यते–विशेषणमिति तत् किमर्थमुभयमुपादीयते? यत्र पूर्वोत्तरपदयोर्द्वयोरपि प्रत्येकं विशेषणविशेष्यभावः [6]तत्रैव यथा स्यात्, यथा–नीलोत्पलमिति। अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले व्यवस्थाप्यते, उत्पलार्थो हि [7]रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यवस्थाप्यत इति भवति प्रत्येकमुभयभावः।

यत्र तु स नास्ति न तत्र समासो भवति, यथा प्रत्युदाहरणे–तक्षकः सर्प इति, न हि तक्षकः सर्पत्वं व्यभिचरति। [8]ननु व्यभिचरति, क्रियानिमित्तकोऽपि तक्षकशब्दोऽस्ति—तक्ष्णोतीति तक्षक इति? सत्यमस्ति; न त्वसौ नामधेयेन गाहते तुल्यकक्षताम्, प्रागेव रूढौ [9]प्रतिभा क्रियाशब्दे विलम्बिता। इह तु शिंशपा वृक्ष इति, शिंशपाशब्दस्य फलेऽपि दर्शनात् वृक्षव्यभिचाराद्भवत्येव समासः; न चात्र वृक्षप्रतीतिपूर्विका फले प्रतीतिर्येन बहिरङ्गा स्यात्। यथैव हि पञ्चालादयः शब्दाः जनपदिनां जनपदस्य च साधारण्येनान्योन्ययोगमपेक्षन्ते तद्वदेतेऽपि। यथोवाच भगवान्—'लुब्योगाप्रख्यानात्' (१.२.५४) इति। इह तर्हि कथम् 'अथ जयाय नु मेरुमहीभृतः' (कि.५.१) इति, न[10] मेरुर्महीभृत्त्वं व्यभिचरति? निरङ्कुशाः कवयः।

यदि तर्हि यत्र प्रत्येकमुभयभावस्तत्र समासः, उभयोरपि विशेषणत्वमिति प्रथमानिर्दिष्टत्वादुपसर्जनत्वे सति पूर्वनिपातानियमः स्यात्—नीलोत्पलम्, उत्पलनीलमिति, नैष दोषः; 'उपसर्जनम्' इत्यन्वर्थसञ्ज्ञेयमप्रधानमुपसर्जनमिति? अर्थतश्चाप्राधान्यम्। तदिह[11] द्रव्यगुणोपनिपाते द्रव्यं प्रधानम्, अप्रधानं गुणः। [12]द्रव्यं हि

1. साधर्म्यात्–ख. म. 2. सामानाधियोगे–ख. 3. सामान्यधर्मः–म. 4. वृत्तिविवक्षायां–म. 5. चोद्यते–ख.म. 6. तत्र यथा–म. 7. रक्तादिसाधारणप्रतिपन्नः–म. 8. कथं न–म. 9. प्रमिति–म. 10. हि इत्यधिकम्–ख.म. 11. अत्र इत्यधिकम्–म. 12. 'द्रव्यं हि—न द्रव्यवचनस्य' इति नास्ति–म.

क्रियासिद्धौ साक्षादुपयुज्यते, गुजस्तु द्रव्यावच्छेदद्वारेण । अतो गुणवचनस्यैव पूर्वनिपातः, न द्रव्यवचनस्य । ननूत्पलशब्दोऽपि जातिशब्दः[1], न द्रव्यशब्दः, यदि तु जातिविशिष्टे द्रव्ये पर्यवसानात् द्रव्यशब्दत्वम्, हन्तैवं नीलशब्दोऽपि गुणविशिष्टे द्रव्ये पर्यवस्यन् द्रव्यशब्दः स्यात् ? अत्रोच्यते—उत्पत्तेः प्रभृत्या विनाशाज्जातिर्द्रव्यं न जहाति, शब्देन च द्रव्याव्यतिरेकेण जातिः प्रत्याय्यते—शावलेयो बाहुलेयो गौरिति, न तु भवति शावलेयस्य गौरिति । तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयत इति जातिशब्दो [2]द्रव्यत्वेन व्यवस्थाप्यते । गुणाः पुनः सत्येव द्रव्ये कदाचिदुपयन्ति. कदाचिदपयन्ति—पटस्य शुक्ल इति, व्यतिरिक्ता अपि द्रव्यात् स्वशब्दैः प्रत्याय्यन्त इति [3]न गुणात्मकं द्रव्यं भवतीति न गुणशब्दो [4]द्रव्यशब्दत्वे व्यवस्थातुमर्हति । अत एव 'श्वेतं छागमालभेत' इति चोदनायां श्वेताभावे कृष्णश्छाग आलभ्यते, न तु छागाभावे पिष्टपिण्डीमालभ्य कृती भवति । क्रियाद्रव्ययोरुपनिपातेऽप्येवमेव द्रष्टव्यम्—याचकब्राह्मण इति ।

यत्र तु गुणशब्दयोः, क्रियाशब्दयोः, गुणक्रियाशब्दयोश्चोपनिपातः, तत्रानियम एव भवति—खञ्जकुब्जः, कुब्जखञ्जः, पाचकपाठकः, पाठकपाचकः, खञ्जपाचकः, पाचकखञ्ज इति । 'शिंशपा वृक्षः' इति । द्रव्यशब्दयोरेवोपनिपातेऽपि वृक्षत्वस्य व्यापकत्वात् महाविषयत्वात् दूरात् प्रथमत एवोपलम्भाच्च प्राधान्यम्, शिंशपात्वस्य तु विपर्ययादप्राधान्यमिति न तत्राप्यनियमः ।

'विशेषणमिति किम्' इति । विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव विशेषणमिति लप्स्यत इति प्रश्नः । 'तक्षकः सर्पः' इति । ननु तक्षकशब्दोऽपि विशेषणं भवत्येव ? एवं मन्यते—विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव पूर्वपदस्य विशेषणत्वे लब्धे पुनर्विशेषणग्रहणमुत्तरपदस्य विशेषणत्वप्रतिपत्त्यर्थम्—विशेष्येण [5]विशेषणं समस्यते, तच्चेद्विशेष्यं विशेषणमिति । न चात्रोत्तरपदं विशेषणम्; तक्षकस्य सर्पत्वाव्यभिचारादिति । 'लोहितस्तक्षकः' इति । नात्र तक्षको विशेष्यः, तस्य लोहितत्वाव्यभिचारात् । यद्येवम्, लोहितो विशेषणं न स्यात्, तस्यापि विशेष्यापेक्षत्वात् ? एवं तर्हि 'पाठक्रमादर्थक्रमो बलीयान्' इति तक्षको लोहितः इति पाठो द्रष्टव्यः, अत्र हि तक्षको विशेषणं भवति; लोहितत्वस्य तक्षकत्वव्यभिचारात् । यद्येवम्, लोहितत्वस्य विशेष्यत्वमपि स्यात् ? अस्त्येव तस्य विशेष्यत्वम्, पूर्वपदस्य तु विशेष्यत्वाभावात् प्रत्युदाहरणत्वम् । एवं च कृत्वा तक्षकः सर्प इत्येतदेवास्मिन्नपि प्रश्ने प्रत्युदाहरणं भवति । विस्पष्टार्थं तूभयोः [6]उपादानम् ॥

## ५८. पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ।

'पूर्वस्यैवायं प्रपञ्चः' इति । [7]गुणक्रियाशब्देन सह समासे पूर्वादीनां पूर्वनिपातनियमार्थं तु न भवति, बहुलग्रहणेनैव सिद्धत्वादिति मन्यते ॥

## ५९. श्रेण्यादयः कृतादिभिः ।

एकेन शिल्पेन पण्येन वा ये जीवन्ति, तेषां [8]समूहः श्रेणिः । तत्र पृथक्स्थितानां श्रेणिकरणे यथा स्यात्, श्रेणिस्थानामेव तु दण्डादिरूपेण करणे मा भूदित्याह—'श्रेण्यादिषु च्व्यर्थवचनम्' इति । 'श्रेण्यादयः पठ्यन्ते'

1. स्यात् इत्यधिकम्—ख. 2. द्रव्यशब्दत्वेन—ख.म. 3. न नास्ति—म. 4. द्रव्यशब्दव्यवस्थापनम्—म. 5. सुबन्तं—म. 6. प्रत्युदाहरणयोः—ख.म. 7. गुणक्रियाशब्दैः—म. 8. सङ्घः—म.

इति । तेन तत्रादिशब्दो [1]व्यवस्थावाची । 'कृतादिराकृतिगणः' इति । प्रयोगदर्शनेनाकृतिग्राह्यो गणः आकृतिगणः। अत्रादिशब्दः प्रकारे । 'च्व्यन्तानाम्' इत्यादि । परत्वादिति भावः । आकृतिगणेऽप्युदाहरणरूपेण कतिपयान्पठति। 'कृत मित मत' इत्यादि ॥

## ६०. क्तेन नञ्विशिष्टेनानञ् ।

विशिष्टशब्दो[2]ऽयमधिके वर्तते । तच्चाधिक्यं क्वचित् सावधारणम्, तद्यथा—देवदत्तो यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेनैव विशिष्टः, अन्ये गुणाः समा इति गम्यते । क्वचिन्निरवधारणम्, तद्यथा—देवदत्तो यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेन तावद्विशिष्टः, अन्ये गुणाः समा भूयांसो वा नैतन्निरूप्यते । वाक्यस्यैकरूपत्वेऽर्थप्रकरणादिना विशेषनिर्णयः । तत्र निरवधारणपक्षे—सिद्धं च तदभुक्तं चेत्यत्रापि स्यात्, क्तान्तयोः प्रकृतिभेदेऽपि नञ् [3]तावदधिक इति विशिष्टग्रहणं चानर्थकं स्यात्, क्तेन सनञा नञित्येव वाच्यं स्यात्, अतः सावधारणपक्षमाश्रित्याह—'नञैव विशेषो यस्य' इति । प्रकृत्यादिकमित्यादिशब्देन प्रत्ययोपसर्गयोर्ग्रहणं तत्र सिद्धं च तदभुक्तं चेति [4]प्रकृतिरतुल्या । कर्तव्यमकृतमिति प्रत्ययः । प्रकृतं चानपकृतं चेत्युपसर्गः । एवं च पूर्वपदमपि क्तान्तमेव लभ्यत इत्याह—'अनञ्क्तान्तम्' इति । अनञिति शक्यमकर्तुम्, न हि पूर्वपदे सनञि उत्तरपदे नञधिको भवति । 'कृतं च तदकृतं च' इति । अवयवधर्मेणायं [5]समुदायस्य व्यपदेशः, एकमेव च [6]वस्त्वेकदेशकरणात् कृतं च भवत्येकदेशाकरणादकृतं चेति नात्र कश्चिद्विरोधः । यदि तर्हि सावधारणपक्ष आश्रीयते, एवं सति यस्य नुडपरोऽधिक इडागमो वा, तेन सह समासो न स्यादित्यत आह—'नुडिटौ' इति । नुडिड्ग्रहणमागमोपलक्षणम्, न्यायस्य तुल्यत्वात् तेन छन्नाच्छन्नमिति तुगधिकस्यापि ग्रहणम् । 'अशितानशितेन' इति । 'अश भोजने' (धा.पा.१५२३), 'तस्मान्नुडचि' (६.३.७४) 'क्लिष्टाक्लिशितेन' इति । 'क्लिशः क्त्वानिष्ठयोः' (७.२.५०) इति पक्षे इट्; तत्र नुट् प्रत्ययान्तभक्तः, इट्प्रत्ययभक्तस्तुक् नञ्भक्त इति सर्वेषामुत्तरपदेऽन्तर्भावः । इह तु छाताच्छितमिति 'शाच्छोरन्यतरस्याम्' (७.४.४१) इतीत्वे कृते तेनाधिक्यात् समासो न प्राप्नोति ? अत्र केचिदाहुः—'नुडिड्ग्रहणमर्थाभेदकस्य विकारमात्रस्योपलक्षणम्, तेनेहापि समासो भवतीति । त्रातात्राणमित्यत्र तु निष्ठानत्वस्यासिद्धत्वाद् [7]भेदकत्वाभावः, गौणत्वात् सामानाधिकरण्यस्य पूर्वेण न प्राप्नोतीत्यारम्भः । पूर्वनिपातनियमार्थश्च—कृताकृतमित्येव यथा स्यात्, अकृतमिति मा भूत् ।

'कृतापकृतम्' इति । एकदेशस्येष्टस्य करणादेकदेशस्य चानिष्टस्य करणादेकमेव वस्तु कृतं च भवत्यपकृतं च । भुक्तं च तदत्यवहृतत्वात्, विभुक्तं चाशोभनत्वात्, 'भुक्तविभुक्तम्' विशब्दोऽत्राशोभनत्वं द्योतयति, विरूपवत् । एवं 'पीतविपीतम्' । गमनं गतम्, प्रत्यागमनम् प्रत्यागतम्, तत् क्षुण्णभुवा प्रत्यागमनेन सह चरितं गमनं 'गतप्रत्यागतम्', यातं च तदनुयातं च तदानीमेव पुनर्गमनात् 'यातानुयातम्' । 'क्रयाक्रयिका' इति । 'अल्पे' (५.३.८५) इति [8]कप्रत्ययः, तदन्तश्च स्वभावात् स्त्रियां वर्तते । 'क्रयाक्रयिका' इति 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घः । महान् क्रयः क्रयशब्देनोच्यते गोबलीवर्दन्यायेन । एवं 'पुटापुटिका, फलाफलिका, [9]मानोन्मानिका' इति ।

---

1. व्यवस्थावाचकः–म. 2. अयमाधिक्ये–ख. म. 3. तावद् नास्ति–ख. 4. प्रकृतिरनल्पा–म. 5. समुदायस्थात्–म. 6. वस्त्वेकादेशकरणात्–ख. 7. भेदकाभावः–म. 8. प्रत्ययः–म. 9. मानामानिका–ख.

'शाकपार्थिवादीनाम्' इति । 'सिद्ध्ये' इति शेषः । पृथोरपत्यं पार्थवः, केचित् पार्थिव इति पठन्ति । पृथिव्या ईश्वरः पार्थिवः, 'तस्येश्वर' (५.१.४२) इत्यञ्, तस्याभ्यवहार्येषु शाकं प्रियत्वात् प्रधानम्, तत्र साहचर्यादेव तद्व्यपदेशत्वलाभादुत्तरपदलोपो न वक्तव्यः । समासस्तु वक्तव्यः, गौणत्वात् सामानाधिकरण्यस्य ॥

## ६१. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ।

'पूज्यमानैरिति वचनात्' इति । पूज्यमानस्य पूजापेक्षत्वादिति भावः । अत एव सदिति स्वरूपग्रहणं न शतृशानचोः; न हि तौ पूजामाहतुः । 'उत्कृष्टो गौः' इति । उद्धृत इत्यर्थः । महाजनः, महोदधिरित्यादौ पूजाभावेऽपि 'विशेषणं विशेष्येण' (२.१.५७) इति समासः । वचनं तु गुणक्रियाशब्दैरपि समासे सदादीनामेव [1]पूर्वनिपातनियमार्थम् ॥

## ६२. वृन्दारकनागकुञ्जरैः पूज्यमानम् ।

वृन्दारकशब्दो देवजातिवचनः, इतरौ हस्तिजातिवचनौ, [2]तत्रोपमानत्वे सति [3]पूजावचनता सम्भवति । तत्र व्याघ्रादेराकृतिगणत्वात् सिद्धे समासे पूजायामेव यथा स्यान्निन्दायां मा भूदित्येवमर्थं वचनम् । इह मा भूत्—माणवकोऽयं नागो यस्मान्मूर्ख इति । सामान्यप्रयोगेऽपि यथा [4]स्यादित्यन्ये ।

'सुषीमः' इति । सञ्ज्ञेयं नागविशेषस्य । यद्येवम्, 'विशेषणं विशेष्येण' (२.१.५७) इत्यधिकारादेवात्र न भविष्यति, न ह्यनागः सुषीमोऽस्ति ? सत्यम्; [5]प्रत्युदाहरणदिगियं दर्शिता, माणवकोऽयं नाग इति प्रत्युदाहरणम् ॥

## ६३. कतरकतमौ जातिपरिप्रश्ने ।

'कतरकठः' इति । 'गोत्रं च चरणैः सह') ४.१.६३; म.भा. २.२२५) इति जातिः । 'तथा च प्रत्युदाहरणम्' इति । पूर्वं [6]वृत्तिषूपन्यस्तमुपपन्नं भवतीति शेषः ॥

## ६४. किं क्षेपे ।

## ६५. पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ।

'उभयव्यञ्जना' इति । व्यज्यतेऽनेन स्त्रीत्वादिकमिति व्यञ्जनम्—स्तनादि, उभयोः स्त्रीपुंसयोः व्यञ्जनं यस्याः सा तथोक्ता, नपुंसके पोटेत्यर्थः ।

---

1. पूर्वनियमार्थम् -म. 2. तेन–म. 3. पूजावचना भवन्ति–ख.म. 4. पुंस्त्वम् इत्यधिकम्–म.
5. प्रत्युदाहरणीयदिगियं–ख.म. 6. वृत्तिषु पूर्वैरुपन्यस्तम्–म.

पोटाशब्दस्तु तत्रापि स्त्रीत्वयुक्तः प्रवर्तते ।
शब्दानां चित्रशक्तित्वात् षण्डशब्दो यथा पुमान् ॥

'धूर्तग्रहणमकुत्सार्थम्' इति । कुत्सायां तु 'कुत्सितानि कुत्सनैः' (२.१.५३) इति सिद्धमिति भावः। तत्र 'कठधूर्तः' इति । यः कठः स धूर्त इत्यर्थः, न तु कठत्वं कुत्स्यते ॥

## ६६. प्रशंसावचनैश्च ।

'रूढिशब्दाः प्रशंसावचना गृह्यन्ते' इति । प्रशंसयेति वक्तव्ये वचनग्रहणादिह ग्रहणं रूढिशब्दानां प्रशंसामात्रवाचिनाम् । तेन [1]ये यौगिकाः प्रशस्तशोभनरमणीयादयः, ये च विशेषवचनाः शुचिमृद्वादयः, ये च जातिशब्दाः सन्तः परत्र प्रयोगात् प्रशंसां गमयन्ति—सिंहो माणवक इति, ते सर्वे व्युदस्ता भवन्ति । 'मतल्लिकादयः' इति । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' [2]इत्यमरः (१.३.३६)। [3]'आविष्टलिङ्गत्वात्' इति । नियतलिङ्गत्वादित्यर्थः । 'स्वलिङ्गोपादानाः' इति । स्वस्यैव लिङ्गस्योपादानं येषु ते तथोक्ताः । 'प्रशंसावचनपोटायुवति' इत्येकयोगे कर्तव्ये योगविभागश्चिन्त्यप्रयोजनः ॥

## ६७. युवा खलतिपलितवलिनजरतीभिः ।

सञ्ज्ञायूनो ग्रहणे गार्ग्यायणः खलतिरित्यादावेव तु स्यान्न च तस्य जरतीशब्देन सामानाधिकरण्यम्। न च गार्ग्यायणी युवतिरस्ति; स्त्रियां युवसञ्ज्ञाप्रतिषेधात्, अतो युवेति स्वरूपग्रहणमित्याह—'युवशब्दः' इति। 'खलत्यादिभिः समानाधिकरणैः' इति । कथं पुनर्युवशब्दस्य जरतीशब्देन सामानाधिकरण्यम्, पुंलिङ्गस्य स्त्रीलिङ्गेनेति, तत्राह—'स्त्रीलिङ्गनिर्देशः' इति । अस्यां हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणादुपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यम्, असत्यां तु नोपपद्यते इत्यर्थापत्त्या परिभाषा ज्ञायते । 'युवखलती' इति । 'कृदिकारादक्तिनः' (ग.सू. ५०), 'सर्वतोऽक्तिन्नर्थादित्येके' (ग.सू. ५१) इति ङीष् । वलिशब्दः पामादिः । 'युवजरन्' इति । जरद्भिरित्यपि पाठः केनचिदाचार्येण बोधित इति पुंलिंगेनापि समासो भवतीति भावः । 'युवतिर्जरती' इति । कथं विरुद्धवाचिनोः सामानाधिकरण्यम्, अन्योन्यधर्मोपलम्भात् तद्रूपत्वारोपात् भविष्यति । यद्येवम्, विभिन्नलिङ्गयोरप्येवमेव सामानाधिकरण्यसम्भवात् कथं परिभाषा [4]ज्ञाप्यत इति चिन्त्यम् । युवशब्दस्य [5]पूर्वनिपातनियमार्थं वचनम्, अनियमो हि गुणशब्दत्वात् स्यात् ॥

## ६८. कृत्यतुल्याख्या अजात्या ।

'तुल्यपर्यायाश्च' इति । आख्याग्रहणं स्वरूपनिराकरणार्थमिति भावः । भोज्योष्णादावनियमे प्राप्ते पूर्वनिपातनियमार्थं वचनम् । 'तुल्यमहान्' इति । 'सन्महत्' (२.१.६१) इत्यस्याकृत्यतुल्याख्येषु सावकाशत्वात् कृत्यतुल्याख्येषु परत्वादयमेव समासो युक्त इति भावः । 'भोज्य ओदनः' इति । प्रतिषेधसामर्थ्याद्विशेषणमित्यपि न भवति ॥

---

1. ये नास्ति–ख. 2. इत्यमरकोशः–ख. 3. आविष्ट....इत्यर्थः–इति नास्ति–म.
4. ज्ञेया–म. 5. पूर्वनिपात°–म.

## ६९. वर्णो वर्णेन ।

'विशेषणं विशेष्येण' (२.१.५७) इति वर्तते, तत्र द्वयोः स्वरूपग्रहणेन विशेषणता भवेत् । 'वर्णश्चासौ वर्णः' इति । किं व्यावृत्तम् ? किमन्वितम् ? अथैकत्र विशेषाणां रूपस्यान्यत्र च ग्रहः ? शुक्लश्चासौ वर्ण इति न स्यात्, वर्णो विशेषणं शुक्लस्य वर्णत्वाव्यभिचारात्, तस्मादुभयत्र विशेषग्रहणमित्याह––'वर्णविशेषवाचि' इत्यादि । 'कृष्णसारङ्गः' इत्यादि । नानावर्णसमाहारः सारङ्गः, तथा शबलः, तस्य वर्णान्तरसमाहारेऽपि भावात् कार्ष्ण्यान्वयो नियतो न स्यादिति कृष्णो विशेषणम् । एवं लोहितशब्देऽपि द्रष्टव्यम् । ननु च कृष्णशब्दोऽत्रावयवे वर्तते, न समुदाये; तस्य सारङ्गत्वात्, तत्कथमवयववृत्तेः कृष्णशब्दस्य समुदायवृत्तिना सारङ्गशब्देन सामानाधिकरण्यमत आह––'अवयवद्वारेण' इत्यादि । कृष्णावयवसम्बन्धात् समुदाय एव कृष्ण [1]उच्यते इत्यर्थः । अत एवात्र गौणं सामानाधिकरण्यमिति सूत्रारम्भः । ननु 'तृतीया तत्कृतार्थेन' (२.१.३०) इत्येवात्र सिद्धः समासः, कथम् ? सारङ्गशब्दो गुणवचनः सारङ्गत्वं कृष्णावयवकृतमित्यस्त्येव सिद्धिः; तत्रायमप्यर्थः––'वर्णो वर्णेष्वनेते' (६.२.३) इति पूर्वपदप्रकृतिस्वरो न वक्तव्यो भवति, तत्पुरुषे तुल्यार्थतृतीयेत्येव सिद्धत्वात्, तदवश्यं वक्तव्यमेतत्प्रतिषेधार्थम्, इह मा भूत्––कृष्णैतो लोहितैत इति । इदं तु न वक्तव्यम् ? इदमपि वक्तव्यम्, इहापि यथा स्यात्––शुक्लबभ्रुः, [2]कृष्णशुक्ला, हरितशुक्लः, बभ्रुकपिलः, यस्य कश्चिदवयवः शुक्लः, कश्चिद्बभ्रुः स समुदायोऽवयवशब्दाभ्यां तथोच्यत इति नात्र तत्कृतत्वसम्भवः । अत्र कृष्णसारङ्ग इत्यादौ यत्रैकोऽवयवशब्दः, अपरः समुदायशब्दः, तत्रावयवस्याप्रधानत्वादुपसर्जनत्वात् पूर्वनिपातः । द्वयोस्त्ववयवशब्दयोः पर्याय इति द्रष्टव्यम् । इह यस्मिन् प्रयोगे वीरैः पुरुषैस्तद्वान् ग्रामः प्रतिपादयितुमिष्टस्तत्र प्रथममेवान्यपदार्थविवक्षा कार्या––वीराः पुरुषाः अस्मिन् सन्तीति वीरपुरुषको ग्राम इति बहुव्रीहिरेव नित्यं यथा स्यात्; अन्यथा पूर्वमनपेक्षितेऽन्यपदार्थे वीराः पुरुषाः वीरपुरुषा इति कर्मधारये कृते पश्चादन्यपदार्थविवक्षायां मत्वर्थीये सति वीरपुरुषवान् ग्रामः इत्याद्यनिष्टमपि कदाचिदनुषज्येत । सर्वशब्दस्य त्वकारान्तैः कर्मधारयोऽपीष्यते । तस्माच्च मत्वर्थविवक्षायाम् 'अत इनिठनौ' (५.२.११५) इति ठनं बाधित्वा इनिरेव भवतीति वक्तव्यम् । सर्वं धनं सर्वधनं तदस्यास्तीति सर्वधनी, सर्वबीजी, सर्वकेशी । [3]यत्र कर्मधारयो जातिविशेषवचनः, तत्र कर्मधारयान्मत्वर्थीयो भवति––कृष्णसर्पवान् वल्मीकः, लोहितशालिमान् ग्रामः, गौरखरवदरण्यम्, गौरमृगवदिति । न हि बहुव्रीहिणा तज्जात्या तद्वत्त्वं शक्यं प्रतिपादयितुम् ॥

## ७०. कुमारः श्रमणादिभिः ।

कुमारशब्दस्य [4]पूर्वनिपातनियमार्थं वचनम् ॥

## ७१. चतुष्पादो गर्भिण्या ।

'चतुष्पाजातिः' इति । केचिदाहुः––पोटादिसूत्राज्जातिग्रहणमनुवर्त्यमिति । अन्ये त्वाहुः––ये शब्दान्तरनिरपेक्षा[5]श्चतुष्पाज्जातिवचनाः, ते एवान्तरङ्गत्वाद्गृह्यन्ते, न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसंनिधानाच्चतुष्पाद्विषया इति । गर्भिणीशब्दस्य परनिपातार्थं वचनम् ॥

---

1. उच्यते–म. 2. हरितबभ्रुः इत्यधिकम्–ख. 3. 'यत्र....प्रतिपादयितुम्' इति भागः नास्ति–ख.
4. पूर्वनिपातपक्षार्थम्–म. 5. चतुष्पादजातिवाचिनः–ख चतुष्पाद्वानः इति पाठान्तरम्.

## ७२. मयूरव्यंसकादयश्च ।

'मयूरव्यंसकः' इति । व्यंसकः धूर्तः, मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात् पूर्वनिपाते प्राप्ते वचनम् । एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम् । अन्ये त्वाहुः--मयूर इव व्यंसकः, छात्र इव व्यंसकः, कम्बोज इव मुण्डः, यवन इव मुण्डः; उपमानसमासोऽयम्, 'उपमानानि सामान्यवचनैः (२.१.५५) इत्येव सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति, स ह्युपमानशब्देन विहिते समासे विधीयत इति । 'पुनर्दाय' इति । 'पुनश्चनसौ छन्दसि' (कात्या. वा. ११३३) इति गतिसञ्ज्ञा वार्तिककारीयेति ।

गणकारेणेदं पठितम्, एहि इडेति यस्मिन् कर्मणि तद् एहीडम्, एवम्--एहियवम् । एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा । एवम्--अपेहिवाणिजा, प्रेहिवाणिजा । एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । इहवितर्का । लोण्मध्यमैकवचनम् । [1]प्रोह करटमिति यस्यां सा प्रोहकरटा; एवं प्रोहकर्दमादय आहरवसनान्ताः । 'कृती च्छेदने' (धा.पा.१४३५) तदेवं वचनम्, मुचादित्वान्नुम् । कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । उद्धर उत्सृजेति यस्यां सोद्धरोत्सृजा । 'आख्यातमाख्यातेन' (ग.सू.२०) इति सिद्धेऽसातत्यार्थं वचनम् । एवम्--उद्धमविधमा, उत्पचविपचा, उत्पतनिपता । उदक् च अवाक् च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितं चोपचितं च आचोपचम् (आचितोपचितम्) । निश्चितं च प्रचितं च निश्चप्रचम्--सर्वं एते निपात्यन्ते । न किंचन विद्यते यस्य सोऽकिञ्चनः । स्नात्वाकालकादिषु समासान्तोदात्तत्वं ल्यबभावश्च निपातनात् । प्रतीयमानक्रियापेक्षं च समासकर्तृकत्वम्--स्नात्वाकालकः सम्पन्न इति ।

'जहि कर्मणा' इति । जहीति लोण्मध्यमैकवचनम्; तदेतत् कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत् कर्ता विधीयते । जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । अश्नीत पिबतेत्येवं यत्र सततमभिधीयते सा अश्नीतपिबता । एवं पचतभृज्जता, 'भ्रस्ज पाके' (धा.पा. १२८४) । भिन्धि लवणमिति यस्यामभिधीयते सा भिन्धिलवणा । एवं पचलवणा । 'अविहितलक्षणस्तत्पुरुषः' इति । यस्य तत्पुरुषस्य लक्षणं न कृतम्, प्राप्तप्रयोगश्च भवति, स मयूरव्यंसकादेराकृतिगणत्वादत्रैव द्रष्टव्य इत्यर्थः ।।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
द्वितीयाध्यायस्य प्रथमः पादः ।।

--:०:--

1. प्रोहकटा इति काशिका.

# अथ द्वितीयाध्यायस्य

## द्वितीयः पादः

### १. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।

'एकदेशोऽस्यास्तीत्येकदेशी' इति । 'एकगोपूर्वात्' (५.२.११८) इति ठञ् प्राप्नोति, अत एव निर्देशादिनिर्द्रष्टव्यः । एकदण्डीत्ययं त्वपशब्दः एको दण्डो यस्येति बहुव्रीहिणैव गतत्वान्मत्वर्थ एव दुर्लभः, किं पुनरिनिष्ठञा बाधितः ? एकदेशशब्दस्तु कर्मधारय एवावयववचन इति न तत्र बहुव्रीहिणा गतत्वम्, यथा—कृष्णसर्पवानिति । 'सामर्थ्यादेकदेशवचनाः' इति । एकदेशमपेक्ष्यैकदेशी भवति, नान्यथेत्येतत्सामर्थ्यम् । 'एकाधिकरणग्रहणमेकदेशिनो विशेषणम्' इति । सत्सप्तम्यन्तवैयधिकरण्येनेति भावः, तदाह—'एकं चेत्' इति । [1]एकत्वसंख्याविशिष्टमित्यर्थः । समानाभिधेयवचन एकाधिकरणशब्दो न भवति, अवयवावयविशब्दयोः सामानाधिकरण्यानुपपत्तेः, सामानाधिकरण्येनेति [2]प्रकृतत्वाच्च । स्यादेतत्—'समुदायेषु हि [3]प्रवृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते' (शा.प. ८६) इति न्यायेन सामान्याधिकरण्ये सति पूर्वश्चासौ कायश्चेति विशेषणमित्येव सिद्धः समासः, नार्थ एतेन, एवं च कृत्वा परवल्लिङ्गमित्यत्र तत्पुरुषग्रहणं न कर्तव्यं भवति, कथम् ? उत्तरपदार्थप्रधानत्वादेव सिद्धमिति, तत्राह—'षष्ठीसमासापवादो[4]ऽयं योगः' इति । सिद्धं तु कथंचित् पूर्वकाय इति, कायपूर्व इत्यस्य निवृत्त्यर्थमेव [5]तु सूत्रं कर्तव्यमित्यर्थः । 'पूर्वं कायस्य' इति । यद्यपि दिशि दृष्टः शब्दो दिक्शब्द इत्याश्रयणात् संप्रत्यदिग्वृत्तिनापि योगे पञ्चमी भवति, [6]'तस्य परमाम्रेडितम्' (८.१.२) इति लिङ्गावयववृत्तिभिर्योगे षष्ठी भवति ।

'पूर्वं नाभेः कायस्य' इति । नाभेरिति दिग्योगलक्षणा पञ्चमी, कायसम्बन्धी नाभ्यपेक्षया पूर्वो भाग इत्यर्थः । तत्र नाभिरेकदेशी न भवतीति न तेन समासो भवति । यस्त्वेकदेशी कायस्तेन समासो भवत्येव—पूर्वकायो नाभेरिति, पूर्वशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वादिति केचिदाहुः । अन्ये तु—यत्रार्थप्रकरणादिनाऽवधिर्गम्यते तत्रैव समासः, न शब्दोपादाने इत्याहुः । 'पूर्वं छात्राणाम्' इति । नेयं निर्धारणे षष्ठी, किं तर्हि ? [7]समुदायः छात्राणामित्यनेनोच्यत इति बहुवचनम्, यथा—छात्राणां पञ्चम इति, ततश्च छात्राणामेकदेशित्वमस्त्येव, किं तु बहुत्वसङ्ख्याविशिष्टानामिति समासाभावः । 'सङ्ख्याविसायपूर्वस्य' इत्यादि । न ह्यन्यथा सायपूर्वत्वमह्नस्योपपद्यते इति भावः । केचित्तु—सर्वैकदेशवाचिना कालवाचिनः समासो भवति, न [8]त्वहन्शब्दस्यैवेति ज्ञापकशरीरं वर्णयन्ति, तेन मध्यरात्र इत्यपि सिद्धं भवति ॥

---

1. एकत्वसंध–म. 2. प्रकृतत्वाद्वा–म. 3. दृष्टाः इति मुद्रितः पाठः. 4. अयं नास्ति–म. 5. तु नास्ति–म. 6. तथापि इत्यधिकम्–इ.म. 7. समुदायिसमुदायसम्बन्धे उद्गतावयवस्तु समुदायः'–इत्यधिकम्–इ. 8. तच्छब्दस्य–म.

## २. अर्धं नपुंसकम् ।

'आविष्टलिङ्गः' इति । नियतलिङ्ग इत्यर्थः । 'तस्येदं ग्रहणम्' इति । तत्रैवार्थे नपुंसकत्वस्याव्यभिचारात् । अवयववाची ह्यभिधेयवशेन त्रिलिङ्गः—अपूपार्धं मया भक्षितम्, दन्तार्धमास्यात् पतितम्, ग्रामार्धः, नगरार्धः, सर्पिषार्धया व्यनक्तीति । 'तस्यार्धाः शस्त्वार्धाः परिशिष्य मध्ये निविदं दधाति' इति । भाष्ये त्ववयववाची पुंल्लिङ्ग इत्युपलक्षणम् । क्वचित्तु समप्रविभागे स्त्रीलिङ्गता दृश्यते—एकान्तृचेर्द्धा युग्मासु इति युग्मासु ऋक्षु अर्द्धाः शस्त्वा निविदं दध्यादित्यर्थः । तस्यार्धत्वेन निर्वाहः । अर्धमिति नपुंसकनिर्देशः शब्दरूपापेक्षयापि संभाव्येत, यथा 'स्वमज्ञातिधनाख्यायाम्' (१.१.३५), 'बन्धुनि बहुव्रीहौ' (६.१.१४.) इति, तस्मान्नपुंसकमित्युक्तम् । 'अर्धपिप्पली' इति । [1]पिप्पलीशब्दस्य 'एकविभक्ति च' (१.२.४४) इत्युपसर्जनसञ्ज्ञा न भवति; एकविभक्तावषष्ठ्यन्तमिति वचनात् । 'अर्धं पिप्पलीनाम्' इति । न तर्हीदानीमिदं भवति—अर्धानि पिप्पलीनामर्धपिपल्य इति; नैतदस्मिन् विग्रहे भवति, खण्डसमुदाये भवति—अर्धपिप्पली च [2]अर्धपिप्पली च [3]अर्धपिप्पल्य इति । 'देवदत्तशब्देन समासो न भवति' इति । देवदत्तोऽत्र स्वामी, न त्वेकदेशी । यस्तु एकदेशी पशुः, तेन भवत्येव समासः—अर्धपशुर्देवदत्तस्येति, देवदत्तस्वामिकं पशोरर्धमित्यर्थः । तत्र समुदायेन सम्बन्धान्नास्ति सापेक्षत्वम् । ⁄

अथं योगः शक्योऽवक्तुम् । कथमर्धपिप्पली ? सामानाधिकरण्ये भविष्यति—अर्धं चासौ पिप्पली चेति । ननु च यद्यर्धं न पिप्पली, अथ पिप्पली नार्धम्, अर्धं पिप्पली चेति विप्रतिषिद्धम् ? नास्ति विप्रतिषेधः; 'समुदाये हि दृष्टाः शब्दाः अवयवेष्वपि वर्तन्ते' (शा.प.८६) किं च समप्रविभागादन्यत्रार्धचन्द्रादावयमेव गतिप्रकारः, समप्रविभागेऽपि तथास्तु । इदं तर्हि प्रयोजनम्—समप्रविभागे षष्ठीसमासो मा भूदिति ? इष्यते षष्ठीसमासोऽपि, तथा च भगवान् पिङ्गलनागः प्रयुङ्क्ते—'स्वरार्धं चार्यार्धम्' (छं.शा.४.१४) इति । एवं तर्हि गौणत्वात् सामानाधिकरण्यस्य विशेषणसमासो न किल स्यादित्ययमारम्भः ॥

## ३. द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।

'अन्यतरस्यांग्रहणात् सोऽपि भवति' इति । ननु च पूरणप्रत्ययान्ता एवैते द्वितीयादयः, तत्र पूरणगुणसुहितेत्यादिना प्रतिषेधेन भवितव्यम्, यदाऽपि 'पूरणाद्भागे तीयादन्' (५.३.४८) इति स्वार्थिकोऽन्प्रत्ययः क्रियते, तदाऽपि 'पूरणगुणसुहितार्थ' (२.२.११) इत्यर्थशब्दस्य प्रत्येकमभिसम्बन्धात् पूरणार्थग्रहणम्, न तु तदधिकारविहित[4]प्रत्ययग्रहणमिति भवितव्यमेव प्रतिषेधेन, तत्कथं सोऽपि भवतीत्याह—'पूरणगुण' इत्यादि । वाक्यस्य महाविभाषयैव सिद्धत्वात् षष्ठीसमासप्राप्त्यर्थमेवान्यतरस्यांग्रहणमिति भावः । पूर्वं तु षष्ठीसमासापवादो योग इत्याद्यप्राप्त्यभिप्रायेणोक्तम् । यद्वा—सत्यस्मिन् योगे षष्ठीसमासप्रतिषेधस्यास्य च षष्ठीसमास[5]बोधकत्वमविशिष्टमिति मत्वा तथोक्तम् ।

---

1. पिप्पलीशब्दस्य....अर्धपिप्पल्यः इति–इति भागो नास्ति–म. 2. समुच्चये इत्यधिकम्–म. 3. अर्धपिप्पल्यः नास्ति–म. 4. °प्रत्ययादिग्रहणम्–म. 5. °प्रतिबाधक°–इ.म.

अयमपि योगः शक्योऽवक्तुम्, कथम्? समुदायावयवयोरौपचारिके सामानाधिकरण्ये सति [1]द्वितीयभिक्षादिसिद्धम्, मुख्यार्थवृत्तौ षष्ठीसमासे तु भिक्षाद्वितीयमित्यादि भविष्यतीति। नैतत् सुष्ठूच्यते, अनेनैव खल्वन्यतरस्यांग्रहणेन षष्ठीसमासः प्राप्यते, कथमस्मिन् योगेऽसति [2]भविष्यति!॥

## ४. प्राप्तापन्ने च द्वितीयया।

'प्राप्तजीविकः' इति। 'एकविभक्ति' (१.२.४४) इत्युपसर्जनत्वाद् ह्रस्वत्वम्। प्राप्ता जीविका येनेति कर्मणि क्तान्तेन [3]बहुव्रीहावप्येतत् सिद्धम्, समासान्तोदात्तत्वार्थं तु[4] वचनम्। इह प्राप्तसुखः, प्राप्तदुःख इत्यादिपु[5] 'जातिकालसुखादिभ्यः' (६.२.१७०) [6]इति प्राप्तापन्नयोः परनिपातप्रसङ्गश्च। इह लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्याप्ययं समासो भवति--प्राप्ता जीविकां प्राप्तजीविका इति पुंवद्भावो[7] वक्तव्यः। भाष्ये त्वकारः पूर्वपदस्य विधीयत इत्युक्तम्। [8]चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते, सौत्रत्वाच्च निर्देशस्य [9]प्रकृतिभावाभावः, प्राप्तापन्ने द्वितीयान्तेन [10]सह समस्येते अ च अत्वं च भवति प्राप्तापन्नयोरित्यर्थः॥

## ५. कालाः परिमाणिना।

'सामर्थ्यात् परिमाणवचनाः' इति। परिमाणमपेक्ष्य [11]परिमाणो भवति, नान्यथेत्येतत् सामर्थ्यम्। तत्र च यद्यपि कालः प्रस्थादिवत्सर्वतो मानं न भवति, तथापि परिच्छेदहेतुत्वात् परिमाणमित्युच्यते। 'मासो जातस्य' इति। कस्य पुनरयं मासः परिच्छेदकः; न तावज्जातस्य, तस्य हि दिष्ट्यादि परिमाणं न तु मासः; नापि [12]जननक्रिया, तस्या [13]एकक्षणभावित्वान्मासेन सम्बन्धाभावात्? [14]उच्यते—जननक्रियावधिर्मासि न परिच्छिद्यते। मासो जातस्येति, कोऽर्थः? [15]जननक्रियाया ऊर्ध्वमस्य मासो [16]जातः, अतीते मासेऽस्य जननमिति यावत्। अनेन प्रकारेण मासो जातस्य परिमाणम्, यथा--मासे देयमृणमिति ऋणदानस्यावधिर्मासेन परिच्छिद्यते। 'मासजातः' इति। यथा गावोऽस्य सन्तीति गोमानिति वाक्ये षष्ठीनिर्दिष्टस्यापि [17]तद्वतो वृत्तौ प्राधान्यम्, तत्कस्य हेतोः? अभिहितः षष्ठ्यर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति; यथा--चित्रा गावोऽस्य चित्रगुः पुरुष इति [18]बहुव्रीहाविति, तद्वदत्रापि वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो जातस्य वृत्तौ प्राधान्यं द्रष्टव्यम्। तथा च मासजातो दृश्यतामिति क्रियायोगो जातस्यैव भवति, न पुनरर्धपिप्पल्यादिवत् [19]पूर्वपदार्थस्य। 'द्व्यहजातः' इति। द्वयोरह्नोः समाहारः 'राजाहःसखिभ्यष्टच्' (५.४.९१) 'न सङ्ख्यादेः समाहारे' (५.४.८९) इत्यह्नादेशस्य प्रतिषेधः। कथं तर्हि द्व्यहजात इति, [20]द्वे अहनी अस्य जातस्येति त्रयाणां पदानां युगपदनेन समासे कृते जातशब्दे उत्तरपदे परतः पूर्वयोर्द्विगुर्भविष्यति? ननु च [21]'सुपसुपा' (२.१.४) इत्येकत्वसङ्ख्याया विवक्षितत्वात् [22]द्वयोर्द्वयोः समासः

---

1. द्वितीयभिक्षाभिप्रायेण उक्तम्–म. 2. न इत्यधिकम्–म. 3. बहुव्रीहाविति–म. 4. तु इत्यधिकम्–इ. 5. तु इत्यधिकम्–म. 6. इति नास्ति–म. 7. न इत्यधिकम्–म. 8. कथम् इत्यधिकम्–म. 9. अप्रकृतिभावः–म. 10. सह नास्ति–म. 11. परिमाणे–म. 12. जननक्रियायाः–म. 13. एकक्षणाभावित्वात्–म. 14. उच्यते–म. 15. जननात्–म. 16. गतः–म. 17. तद्वताम्–म. 18. बहुव्रीहौ–म. 19. पूर्वपाठार्थस्य–म. 20. उत्तरपदेन परिमाणिना द्विगोः समासः इत्यधिकम्–म. 21. समुपेत्य.म. 22. द्वयोः समासः–म.

न बहूनां युगपत् ? [1]उच्यते—वक्तव्यमेवैतद् उत्तरपदेन परिमाणिना [2]द्वयोः समासवचनमिति; परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः। [3]अत्र द्वयोर्युगपदिति गम्यते, तस्माद्वचनाद् [4]बहुनामप्ययं समासो भवति। एवं द्वौ मासौ जातस्य द्विमासजातः[5], त्रिपदे तत्पुरुषे जातशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति कालान्ते द्विगावपि पूर्वपदप्रकृतिस्वरो भवति। द्वयोर्मासयोः समाहारः द्विमासम् पात्रादि, द्विमासं जातस्येति विगृह्य समासे क्रियमाणे सति शिष्टत्वात् समासान्तोदात्तत्वं स्यात्। इह मासौ जातस्य, मासा जातस्येति द्विवचनबहुवचनान्तानामयं समासो भवति[6]। वृत्तौ विभक्तौ निवृत्तायां द्वित्वबहुत्वावगतौ प्रमाणाभावादभेदैकत्वसङ्ख्याऽप्यत्र न भवति, [7]शुद्धमेव त्वेकत्वं गम्यते। यत्र द्वयोर्बहुषु वाऽनुस्यूत [8]एकः शब्दार्थः, तत्रैवाभेदैकत्वसङ्ख्या, [9]मासशब्दस्त्वव्यक्तपरिमाणमर्थमाचष्ट इति द्वित्वबहुत्वावगतौ विभक्तिमपेक्षते, स्वतस्त्वेकत्वसंख्या[10]साधारणः॥

## ६. नञ्।

[11]विभक्ति[12]ञकारयोर्विशेषाभावात् ञकारोच्चारणम्। [13]सुपानशब्दस्य विशेषणात् पामादिलक्षणस्य [14]नस्यासुबन्तत्वादेवाग्रहणं सिद्धम्। इहाब्राह्मणादिशब्दैः [15]क्षत्रियाद्यभिधानमिष्यते, तत्र जातिमात्रपरे ब्राह्मणशब्दे न विद्यते ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिरित्यन्यपदार्थप्रधानः समासो भवति। तत्र नाप्राप्ते बहुव्रीहावारम्भादनेन तस्य बाधनादब्राह्मणको देश इत्यपि न सिध्यति; न हि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वयं समासः, न तद्वन्निष्ठेष्विति नियामकमस्ति। इह [16]च 'अवर्षा हेमन्तः' इति हेमन्तस्य [17]यद्वचनं तत्समासस्य प्राप्नोति, [18]लिङ्गे तु 'परवल्लिङ्गम्' (२.४.२६) इति वचनाद् [19]दोषाभावः। इह च असोऽसर्वस्मै [20]इत्युत्तरपदार्थस्योपसर्जनत्वात् [21]त्यदादिकार्यं सर्वादिकार्यं च न स्यात्। यदा [22]त्वसत्सामान्यवर्तमानो नञ् [23]ब्राह्मणादिभिर्विशेष्यते, ब्राह्मणत्वेन [24]असत्क्रियान्तरेण तु [25]सन् क्षत्रियादिकोऽब्राह्मण इति, तदा पूर्वपदार्थप्रधानम्; तत्र नञर्थस्य प्राधान्यात् सङ्ख्यायोगः [26]समासस्य न स्यात्, वाचनिकी तु परवल्लिङ्गता भवतु।

स्यादेतत्—[27]शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये न नञाचष्टे, [28]समासे तु सत्त्वरूपम्, तेन सिद्धः सङ्ख्यायोगः[29] ? एवमप्यपवादेनानेनाव्ययीभावस्य बाधाद् [30]अमक्षिकमिति न सिध्यति, तस्य तु निर्मक्षिकमित्यादिरवकाशः, [31]असोऽसर्वस्मै इति च पूर्ववत् स्मायाद्यसिद्धिः। अस्तु तर्ह्यत्रोत्तरपदार्थप्रधानः ? यद्येवम्, [32]ब्राह्मणमात्रस्यानयनं प्राप्नोति ? यद्युत्तरपदार्थप्रधानता तत्र हेतुः, इहापि तर्हि 'राजपुरुषमानय' [33]इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति ? [34]अस्त्यत्र विशेषः, राजा विशेषकः [35]प्रयुज्यते। इहापि तर्हि नञ् विशेषकः

---

1. उपपद्यते–म. 2. द्विगोः–म. 3. अर्थात्–म. 4. बहूनामपि समासो–म. 5. इति इत्यधिकम्–म. 6. इति इत्यधिकम्–म. 7. इत्यमेव–म. 8. एकशब्दार्थः–म. 9. मासशब्दःसूक्त°–म. 10. °साधारणम्–म. 11. इह इत्यधिकम्–म. 12. °नञ्कारयोः–म. 13. सुपाम°–म. 14. न स्यात्–म. 15. क्षत्रियादेरेव–म. 16. वा–म. 17. यद्वचनम्–म. 18. लिङ्गेषु–म. 19. विशेषाभावः–म. 20 इति नास्ति–म. 21. तदादि°–म. 22. °सामान्ये–म. 23. ब्राह्मणेन–म. 24. असद्रूपान्तरेण–म. 25. सत्क्षत्रियादिको–म. 26. समासः स्यात्–म. 27. °अर्थवाक्ये–म. 28. समासेन–म. 29. इति इत्यधिकम्–म. 30. अमक्षिकमित्यादि–इ. म. 31. असः अतस्मात्–म. 32. अब्राह्मणमानय इत्युक्तौ–इत्यधिकम्–म. 33. इति–म. 34. अस्तु–इ.म.. 35. प्रमुच्यते–म.

प्रयुज्यते ? कथं नञ् नाम स्यात्, अनियतगुणस्य गुणविशेषप्रतिपादनाय हि विशेषणं प्रवर्तते, न तदुपघाताय। नञा च ब्राह्मणार्थः सर्वात्मना प्रतिषिध्यमानः प्रतिषिध्यत इति कथमसतः प्राधान्यं स्यात्! तस्मादुत्तरपदार्थ-प्राधान्यमिच्छताऽस्मिन् विषये नञनर्थकः, अन्वाख्यानसामर्थ्यात्तु साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्येति वाच्यम्, ततश्च ब्राह्मणमात्रस्यानयनं प्राप्नोति ? नैष दोषः; निवृत्तपदार्थकोऽत्र ब्राह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यते, कोऽर्थः ? केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मणमाचष्टे; नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते। तदेवं मुख्यो ब्राह्मणशब्दस्यार्थो निवृत्तः जातश्चामुख्यः क्षत्रियादिरिति न ब्राह्मणमात्रानयनम्, नापि न कस्यचिदानयनमिति सिद्धम्। उक्तं च--

प्राक् समासात् पदार्थानां निवृत्तिर्द्योत्यते नञा।
स्वभावतो निवृत्तानां [1]रूपभेदादलक्षिता॥ (वा.प. ३.१४.२५२) इति।

स्यादेतत्--अर्थप्रत्यायनाय शब्दः प्रयुज्यते ब्राह्मणार्थश्चेन्नि[2]वृत्तः, [3]किं मुधा ब्राह्मणपदं प्रयुज्यते[4] ? तन्न; असति ब्राह्मणपदे नेत्येतावत्युच्यमाने कस्यार्थोऽत्र निवर्तयितुमिष्ट इति न ज्ञायते। ब्राह्मणपदे तु सति तदर्थस्य क्षत्रियादौ मुख्यः सत्ताविरहः प्रतीयते।

[5]अन्यद्दर्शनम्--सर्व एते शब्दा [6]गुणसमुदाये वर्तन्ते। [7]स्मर्यन्ते च--

तपः श्रुतं च योनिश्चेत्येतद् [8]ब्राह्मण्यकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥ (म.भार. १.४११)

तथा च श्रुतिः--

[9]षड् व्याधयो यं पुरुषं तपन्ति जैह्वो हार्द औदरो रैतसश्च।
तप्तश्च घर्मः शिशिरश्च शीतः ब्राह्मणस्तं स्मरार्थं गरुत्मन्॥ इति॥

गौरः शुच्याचारः पिङ्गलकेश इत्यादयश्च धर्माः, तदेषां समुदाये ब्राह्मणशब्दः, एवं क्षत्रियादिशब्देष्वपि द्रष्टव्यम्। एवं स्थिते 'समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' (शा.प. ८६) इति न्याया[10]ज्जातिभिन्ने गुणभिन्ने वा यदा ब्राह्मणशब्दो वर्तते तदा स्वाभाविकी जातिगुणनिवृत्ति[11]र्नञा द्योत्यते, अवशिष्टांशसद्भावप्रति-पादनाय ब्राह्मणशब्दप्रयोगः। यद्येवम्, द्वयोरपि भिन्नविषयत्वप्रसङ्गः, कथम् ? [12]यस्यांशस्य सद्भावं ब्राह्मणशब्द आह, न तस्याभावं नञाह; यस्याभावं नञाह, न तस्य सद्भावं ब्राह्मणशब्द आह ? नैष दोषः; द्वावप्येतौ

---

1. रूपभेदादवलक्षिता--म. 2. च--म. 3. किमर्थम्--म. 4. इति इत्यधिकम्--म. 5. अन्य-दर्शनम्--म. 6. गुणसमुदायेषु--म. 7. स्मर्यते--म. 8. ब्राह्मणकारकम्--म. 9. 'षड्ग्रामोऽयं पुरुषं भवन्ति लभ्यो हार्दरादौ भरश्च। पूतश्च घर्मः शिशिरश्च शीतः स ब्राह्मणस्तं स्माहन् गरुत्मन्'--म. 10. जाति-हीने वा--म. 11. च इत्यधिकम्--म. 12. तस्याभावं, तनुत्वाभावं नञाह न तस्य सद्भावं ब्राह्मणशब्दः आह--म.

समुदायावलम्बिनौ कृतवत्, तद्यथैकदेशकरणाकरणाभ्यामेकमेव वस्तु कृतं चाकृतं च भवति, तथेहाप्येकदेश-विभागात् समुदाय एव निवृत्त [1]उच्यते, [2]एकदेशसद्भावाच्च स एव सन्नभिधीयत इति सर्वमनवद्यम् ।

इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते, मुख्यं तु प्रतिषिध्यते, क्षत्रियादाविव ब्राह्मण्यमित्येकवचनमेव भवति द्व्यादिसङ्ख्या प्रतीयते । तदेवमुत्तरपदार्थप्रधान इति स्थितम् । अत्र च लिङ्गम्—'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' (६.१.१३२) इत्यत्रानञ्समासग्रहणम् । अन्यथैतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो निधीयमानो नैषो ददाति, असो ददातीत्यत्र कथं प्राप्नुयात् । [3]इह न ब्राह्मणस्य भाव इति भावेन नञा च युगपत् सम्बन्धे विवक्षिते त्वतलौ च प्राप्नुतः, समासश्च; तत्र यदि परत्वात् त्वतलौ कृत्वा पश्चात् पुनःप्रसङ्गविज्ञानान्नञ्समासः क्रियते, ततः 'तत्पुरुषे तुल्यार्थ' (६.२.२) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तं पदं स्यात्, प्रत्ययस्वरो नञ्स्वरश्चेष्यत इति समासे कृते त्वतलौ कार्यौ । आह च—त्वतलाभ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थमिति । तत्र भावप्रत्ययस्तावत् प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यान्न भवति, नञ्समासस्तु प्रधानस्य सापेक्षत्वाद्भवति ॥

## ७. ईषदकृता ।

'ईषद् गुणवचनेनेति वक्तव्यम्' इति । अकृतेत्यपनीय सूत्रे गुणवचनग्रहणं कर्तव्यमित्यर्थः । अकृतेति चोच्यमान ईषद्गार्ग्य इत्यादावतिव्याप्तिः, ईषदुन्नत इत्यादावव्याप्तिः स्यादिति भावः । 'ईषद्गार्ग्यः' इति । ननु च गार्ग्यो भवति वा न वा न पुनरीषद्गार्ग्यः कश्चित् ? उच्यते; गार्ग्यत्वेन सह य एकार्थसमवेताः क्रिया-गुणास्तदपेक्षया जातेः प्रकर्षादियोगः—गार्ग्यतरः, गार्ग्यकल्पः, ईषद्गार्ग्यः, गार्ग्यपाश इति; यथा—गोतरः, गोकल्पः, गोपाश इति ॥

## ८. षष्ठी ।

'कृद्योगा च' इत्यादि । 'कर्तृकर्मणोः कृति' (२.३.६५) इति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । 'इध्मप्रव्रश्चनः' इति । 'ओव्रश्चू च्छेदने' (धा.पा. १२९२) करणे ल्युट् । 'पलाशशातनः' इति । पलाशानि शात्यन्ते पात्यन्ते येन दण्डादिना स पलाशशातनः । 'किमर्थमिदमुच्यते' इति । सूत्रेण सिद्धि मन्वानस्य प्रश्नः । 'प्रतिपदविधाना च' इत्यादि । यदा तस्य वक्तव्यस्यारम्भः तदेदमपि वक्तव्यम् । तस्य त्वनारम्भस्तां तत्रैव वक्ष्यामः । 'अपकर्षः' इति । अपवाद इत्यर्थः ॥

## ९. याजकादिभिश्च ।

'प्रतिप्रसवार्थम्' इति । अन्येन निवर्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानम् = प्रतिप्रसवः । 'तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्' इति क्वचिद्वृत्तौ पठ्यते, तस्यार्थः—तच्छब्देन सन्निधानाद्गुणा एव परामृश्यन्ते,

1. उच्यते–म. 2. एकदेशे–म. 3. इह इत्यारभ्य....सापेक्षत्वाद्भवति–इति भागो नास्ति–म.

तस्मिन् स्वात्मनि ये गुणाः स्थितास्तैः षष्ठी समस्यते। न च स्वात्मन्यवस्थानं कस्यचित् सम्भवति, भेदनिबन्धनो ह्याधाराधेयभावः, विशेषतो गुणानां द्रव्याश्रितत्वात्। तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते। गन्धादयो हि गुणाः स्वशब्दैः द्रव्यात् पृथक्कृता एव च प्रत्याय्यन्ते—चन्दनस्य गन्ध इति, न तु कदाचित् द्रव्येणैकत्वमापन्नाः, न हि भवति चन्दनं गन्ध इति। शुक्लादयस्तु कदाचित् द्रव्यात् पृथग्भूताः प्रत्याय्यन्ते—पटस्य शुक्ल इति; कदाचिद्द्रव्यस्योपरञ्जकास्तेनैकत्वमापन्नाः—शुक्लः पट इति। तत्र ये गुणा द्रव्यात् पृथग्भूता एव स्वशब्देन प्रत्याय्यन्ते तत्परिग्रहाय 'तस्थैः' इत्युक्तम्। बलाकायाः शौक्ल्यमित्यत्र तु यद्यपि शौक्ल्यशब्देन द्रव्यात् पृथग्भूतस्यैवाभिधानम्, तथापि तदेव शौक्ल्यं शुक्लः पट इत्यत्र द्रव्येणैकतामापन्नं प्रत्याय्यते। अर्थस्य तत्स्थत्वमाश्रीयते, इति शब्दभेदेऽप्यर्थः स एवेति नास्ति शौक्ल्यस्य तत्स्थत्वमिति समासाभावः। रूपवान् पट इत्यत्र भेदाश्रयेणैव मत्वर्थीयेनाभेदोऽध्यवसीयते इति तत्स्थमेव रूपमिति भवत्येव समासः। अयमपि 'गुणेन न' इति प्रतिषेधस्य पुरस्तादपकर्षः। 'चन्दनगन्धः' इति। 'गन्धं विक्रीणीते' इति चन्दनगन्धादौ गन्धशब्दो जातिनिमित्तकः, न गुणशब्दः, मालतीकुसुमादिष्वदर्शनादिति तत्स्थ एव गन्धः। भाष्ये तु 'न तु तद्विशेषणैः' इति पठितम्, तेषां गुणानां यानि विशेषणानि तैः सह समासो न भवति—घृतस्य तीव्रो गन्धः, चन्दनस्य मृदुः स्पर्श इति तीव्रमृदुशब्दाभ्यां समासो न भवति। तदिदमन्यथासिद्धमिति वृत्तिकारेण उपेक्षितम्, कथम्? घृतस्य गन्धेन सम्बन्धः, न तद्विशेषणेन तीव्रेण। यदापि प्रकरणादिवशात् तीव्रशब्द एव विशेषे गन्धे वर्तते, तदुपजनित एव व्यतिरेके घृतस्येति षष्ठी, तथापि तीव्रं घृतमिति दर्शनात् तत्स्थत्वाभावादेव समासाप्रसङ्गः॥

## १०. न निर्धारणे।

'जातिगुणक्रियाभिः' इति। उपलक्षणमेतत्; कतरो भवतोर्देवदत्त इति। सञ्ज्ञायामपि निर्धारणदर्शनात्। 'क्षत्रियो मनुष्याणां शूरतमः' इति। अत्र क्षत्रियशब्देन समासप्रसङ्गः; तदपेक्षया हि मनुष्याणामिति षष्ठी, न शूरतमापेक्षया, गुणशब्दत्वाच्च न तेन समासप्रसङ्गः। 'कृष्णा गवाम्' इति। नात्रायमर्थः—गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमेति, एवं हि कृष्णाशब्दस्य गवामित्यनेन सम्बन्धः। न च तस्य समासप्रसङ्गः, गुणेन नेति प्रतिषेधात्। तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः। 'धावन्नध्वगानाम्' इति। अत्र धावच्छब्देन समासाप्रसङ्गः, सत्सञ्ज्ञकत्वात्। शीघ्रतमशब्दस्तु गुणशब्दो न वेति चिन्त्यम्।

'प्रतिपदविधाना च' इति। शेषलक्षणां मुक्त्वा सर्वान्या प्रतिपदविधाना षष्ठी। कथं गृहस्वामी, विद्यादायादः, पृथिवीश्वर इति, नावता 'स्वामीश्वर' (२.३.३९) इत्यादिना प्रतिपदमत्र षष्ठी? नानेन षष्ठी विधीयते, किं तर्हि? सप्तमी। सा तु षष्ठीं मा बाधिष्टेति चकारेण शेषलक्षणैवाभ्यनुज्ञायते। अत एव 'न निर्धारणे' इति सूत्रारम्भः। 'यतश्च निर्धारणम्' (२.३.४१) इत्यत्रापि हि चकारेण शेषलक्षणैव षष्ठी प्रतिप्रसूयते; अन्यथा साऽपि प्रतिपदविधानैव स्यादिति किं 'न निर्धारणे' इत्यनेन। 'सर्पिषो ज्ञानम्' इति। 'ज्ञोऽविदर्थस्य करणे' (२.३.५१) इति षष्ठी। अत्राहुः—'ज्ञोऽविदर्थस्य करणे' (२ ३.५१) [1]इति षष्ठीप्रकरणे 'शेषे' इति वर्तते, तत्र न माषाणामश्नीयादितिवत् 'षष्ठी शेषे' (२.३ ५०) इत्यनेनैव सिद्धा षष्ठी, प्रकरणं तु नियमार्थम्। षष्ठी भवत्येव श्रूयत एव, न तस्याः समासो भवतीत्यर्थः। समासे 'सुपो धातुप्रातिपदिकयोः' (२ ४ ७१) इति [2]सुब्लुक् स्यात्। तस्मात् प्रतिपदविधाना चेति न वक्तव्यम्, एवं च कृत्वा

1. इत्यधिकः शेषे—म. 2. सुब्लुक् नास्ति—म.

'कृद्योगा च' इत्यपि न वक्तव्यम्, 'कर्तृकर्मणोः कृति' (२.३.६५) इत्यत्र 'शेषे' इति निवृत्तमिति [1]वक्ष्यते, [2]कर्तृकर्मविवक्षायामप्राप्तैव [3]षष्ठी तेन विधीयत इति कुतः समासनिवृत्तिरिति ॥

## ११. पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।

'प्रत्येकम्' इति । पूरणादिभिः [4]इत्यर्थः । [5]'सरूपविधिः' इति । पूरणादीनामर्थपर्यन्तानां ग्रहण-मित्यर्थः । अत एव गुणशब्देन नादेङां ग्रहणम्, किं तर्हि ? '°सत्त्वे निविशतेऽपैति' (मुग्धबोधम्) इत्यं लक्षणलक्षितस्य गुणस्य ग्रहणम्; नापि नञो गुणप्रतिषेधे यस्य गुणस्य हि भावादिवत् [7]प्रवृत्तिनिमित्तस्य ग्रहणम्, सामान्यादेः [8]अपि प्रसङ्गात्; नापि लौकप्रसिद्धस्य शुक्लादेरेव ग्रहणम्, कण्टकस्य तैक्ष्ण्यमिति [9]अपीष्टत्वात्, गुणशब्देन च केवलगुणवाचिनो गुणोपसर्जनद्रव्यवाचिनश्च व्याप्तिन्यायाश्रयेण गृह्यन्ते । तत्र गुण-गुण्यपेक्षत्वात् केवलगुणवचनैर्गुणेन समासनिषेधः--[10]कण्टकस्य तैक्ष्ण्यमिति । गुणवचनैस्तु तत्सम्बन्धिनो निषेध-ब्राह्मणस्य शुक्ला दन्ता इति, न चात्र दन्तापेक्षया ब्राह्मणस्येति षष्ठी, ततश्च शुक्लेनासम्बन्धादप्रसङ्ग एव समासस्य । यदा तर्ह्यर्थात् प्रकरणाद्वा दन्ताद्यर्थ एव शुक्लादिशब्दस्य [11]वृत्तिर्विज्ञाता भवति, तदा तत्सम्बन्धे षष्ठीत्यस्ति समासप्रसङ्गः, 'शतसहस्रान्ताच्च निष्कात्' (५.२.११९), 'क्रोशशतयोजनशतयोरुपसङ्ख्यानम्' (वा.५२०) '[12]खारीशतमपि न ददाति' इत्यादि [13]मुनित्रयप्रयोगाद् गोविंशतिरित्यादौ सङ्ख्यया समासो निषिध्यते । सञ्ज्ञाप्रमाणत्वादुत्तरपदार्थप्राधान्यमित्यादि[14]प्रयोगदर्शनादनित्यो गुणेन निषेध इति कारपत्य बुद्धिमान्द्यं यत्नगौरवमित्यादि[15]सिद्धिः ।

'फलानां [16]सुहितः' इति । करणस्यैव शेषत्वविवक्षया षष्ठी, शेषत्वविवक्षैव च नियता [17]सुहितार्थे करणस्येत्याहुः । कृद्योगलक्षणाया एव षष्ठ्या निष्ठायोगे [18]विशेषः 'ब्राह्मणस्य कुर्वन्' इति । नेयं घटापेक्षा षष्ठी--ब्राह्मणस्य घटं कुर्वन्निति, एवं ह्यसामर्थ्यादेव समासस्याप्रसङ्गः; किं तर्हि ? कुर्वन्निति किङ्कर उच्यते, स हि कुर्वन् भवति, ततो यथा ब्राह्मणस्य पाचक इति साक्षादेव पाचकेन सम्बन्धो न [19]पुनरोदनद्वारेण, तथे-हापि द्रष्टव्यम् । चोरस्य द्विषन्निति च सत उदाहरणम्, अत्र 'द्विषः शतुर्वा वचनम्' (वा.१४९) इति षष्ठी [20]षष्ठी भवति । 'ब्राह्मणस्य कृत्वा' इति । ब्राह्मणार्थं कृत्वेत्यर्थः । सम्बन्धसामान्यरूपेण विवक्षितत्वात् षष्ठी । पुरा सूर्यस्योदेतोः इति चोदाहरणम्, अत्र ह्यव्ययप्रतिषेधे 'तोसुनोरप्रतिषेधः' इति कर्तर्येव षष्ठी अस्ति । वृक्षस्योपरीत्यादिकमप्युदाहरणम् । 'तव्यता सानुबन्धकेन' इति । [21]'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्'

---

1. वक्ष्यति-म. 2. कर्तृकर्मरूप°-म. 3. प्राप्ता इत्यधिकम्-म. 4. त्रिभिः इत्यधिकम्-म. 5. स्वरूप°-म. 6. चतुर्थ्याम्-म. 7. सत्त्वनिमित्त°-म. 8. इत्यापि-म. 9. स्पष्टत्वात्-म. 10. कण्टकस्य तैक्ष्ण्यम्-इति भागः नास्ति-इ. कामस्य कार्ष्ण्यम्-म. 11. वृत्तिर्निज्ञाता-म. 12. खारी-पतनमपि-म. 13. मुनित्रयवचनात-म. 14. °प्रयोगात्-म. 15. °सिद्धेः-इ. 16. सुहित-म. 17. सुहितार्थकरणे स्यात्-म. 18. निषेधः-म. मुद्रितः पाठश्च. 19. पुनरोदनादिद्वारेण-म. 20. कर्तरि इत्यधिकम्-म. 21. निरनुबन्धकग्रहणे--अन्तस्वरितमेतत्--इति भागो नास्ति-म.

°सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

(व्या.प.५३) इति भावः। 'ब्राह्मणकर्तव्यम्' इति। कर्तरि षष्ठ्याः समासः कृदुत्तरपदप्रकृतिस्वरेणान्तस्वरितमेतत्, निरनुबन्धकेन तु समासे उत्तरपदं मध्योदात्तं स्यात्, सोऽयं स्वरार्थस्तव्येन निषेधः। 'शुकस्य माराविकस्य' इति। मा रावीत्याहेति माराविकः। 'तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्' (वा.४८२) इति ठक्, शब्देन क्रियायाः प्रतिषेधको माराविकः, सञ्ज्ञैषा शुकविशेषस्य, क्वचित् तु मारादिदस्येति पाठः, तत्र माराविशब्दं ददातीति माराविदः, स एवार्थः। 'किं च स्यात्' इति। भवितव्यमेवात्र विशेषणसमासेन, तत् षष्ठीसमास एवास्तु, को दोष इति प्रश्नः। [1]'पूर्वनिपातानियमः स्यात्' इति[2]। द्वयोरपि प्रथमानिर्दिष्टत्वेनोपसर्जनत्वादिति भावः। ननु[3] विशेषणसमासेऽपि द्वयोरपि यत्र विशेषणविशेष्यभावस्तत्रेत्युक्तम्, अतस्तेनापि समासे विशेषणमिति प्रथमानिर्देशो द्वयोरपि तुल्यः। अथ तत्राप्रधानमुपसर्जन[4]मार्थं चा प्राधान्यमिति [5]द्रव्यगुणादिषु तेन प्रकारेण व्यवस्था, षष्ठीसमासेऽपि तथैव व्यवस्था भविष्यति। तस्माद्यत्तत्र प्रत्युदाहरणम्––तक्षकः सर्प इति, तयोः षष्ठ्यन्तयोः समासप्रसङ्ग एव दोषः, [6]'तन्निवृत्तये च प्रतिषेधः' इति वाच्यम्। तदिह 'किं च स्यात्' इत्यादिकमेवानुपपन्नम्, [7]उदाहरणं तूपपन्नम् यदि माराविकशब्दः सञ्ज्ञा। अथ सोऽपि योगवृत्तिः, तर्हि तदप्यनुपपन्नम्। एवं पाटलिपुत्रकेऽपि द्रष्टव्यम्॥

## १२. क्तेन च पूजायाम्।

'तस्य' इति। मत्यादिसूत्रविहितस्य सर्वस्यैव क्तस्य ग्रहणं न तु पूजायामेव विहितस्येत्यर्थः। कथं तर्हि पूजाग्रहणमित्याह––'पूजाग्रहणम्' इति। [8]विवक्षितस्य क्तस्य तटस्थमुपलक्षणं पूजाग्रहणम्, [9]गृहस्येव काकः, न तु [10]समासनिषेधार्थमित्यर्थः। तेन मतिवुद्ध्योरपि विहितस्य ग्रहणं भवतीति भावः। 'पूजायां विहितः' इति। वर्तमानादिति शेषः। 'राज्ञाम्' इति। 'क्तस्य च वर्तमाने' (२.३.६७) इति षष्ठी। कथं राजसम्मतः, राजाभिमत इति, अस्ति हि भट्टिकाव्ये प्रयोगः [11]कलहं स राममहितः कृतवान्' (भ.१०.२) इति, 'मह-पूजायाम्' (धा.पा ७३०) रामस्य महित इत्यर्थः? कश्चिदाह––यदा वर्तमाने क्तस्तदा षष्ठीसमासनिषेधश्च[12], यदा, यदा भूते क्तः तदा कर्तरि तृतीयैव भवति, यथा––'पूजितो यः सुरैरपि' इति, तस्याः 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समास इति। स्यादेवं यदि भूते क्तो लभ्यः, न; नाप्राप्ते [13]तस्मिन्नारभ्यमाणः 'मतिवुद्धिपूजार्थेभ्यश्च' (३.२.१८८) इति वर्तमाने क्तस्तस्य बाधको भवति, यथा [14]च वडवाया वृषे वाच्य इति अपत्ये [15]प्राप्तष्ठक् ततोऽपकृष्य विधीयते, अपत्ये त्वणेव भवतीति [16]वक्ष्यति। एवं च 'पूजितो यः सुरैरपि' इत्यचिकित्स्योऽपशब्दः। त्वया ज्ञातो मया ज्ञात इति तु भवत्येव; [17]तेनेत्यधिकारे उपज्ञात इति [18]निर्देशात्।

अपर आह––'क्तेन च पूजायाम्' (२.२.१२) इत्यादिषु [19]कारकषष्ठ्या एव [20]निषेधः। तदेव तु [21]कर्त्रादिकारकं यदा शेषरूपेण विवक्ष्यते तदा भवत्येव समास इति। तत्र स्वरे विशेषः, कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः[22] समासे समासान्तोदात्तत्वमिति। एवं तु यत् 'जनिकर्तुः प्रकृतिः' (१.४.३०),

1. पूर्वनिपातनियमः–म. 2. षष्ठी इत्यधिकम्–म. 3. च इत्यधिकम्–म. 4. °मर्थतः तत्प्राधान्यम्–म. 5. द्रव्दगुणादिशव्देषु तत्र उक्तेन–म. 6. तन्निवृत्तयैव–म. 7. प्रत्युदाहरणम्–म. 8. पूजाग्रहणं तूपलक्षणम् इत्यधिकम्–म. 9. ग्रहणस्येवकारः–म. 10. समासनिषेधाङ्गम्–म. 11. कानह इति मुद्रितः पाठः 12. च नास्ति–म. 13. तु इत्यधिकम्–म. 14. च नास्ति म. 15. 'प्राप्त... विधीयते' नास्ति–म. 16. विवक्षति'–म. 17. तेन नास्ति–म. 18. निर्देशतः–म. 19. षष्ठ्या एव–म. 20. समासनिषेधः–म. 21. कर्मादिकरणकारकं–म. 22. तु इत्यधिकम्–म.

'तत्प्रयोजको हेतुश्च' (१.४.५५) इत्यादावुच्यते—'निपातनात् समासः' इति, तदनुपपन्नम्, शेषषष्ठ्या एव समासस्य सिद्धत्वात्। अथ येऽमी नवीना वैयाकरणा आरभन्ते तदपार्थकमापद्येत। तस्मादाप्तप्रयोगस्य यथाकथंचिन्निर्वाहः, न तु यथारुचि पद्प्रयोग इति धीरा मन्यते॥

## १३. अधिकरणवाचिना च।

'अधिकरण' [1]इत्येव सिद्धे वाचिग्रहणं [2]चिन्त्यप्रयोजनम्, कथम्? 'किंवृत्ते लिप्सायाम्' (३.३.६), 'यद्वृत्तान्नित्यम्' (८.१.६६) इति, नायमधिकरणे क्तः, [3]क्व तर्हि? भावे। किमो वृत्तं यस्मिन् यदो वृत्तं यस्मिन्निति [4]व्यधिकरणपदो बहुव्रीहिः॥

## १४. कर्मणि च।

'उभयप्राप्तौ कर्मणि' इति। अनेकार्थत्वान्निपातानामितीत्यर्थे चशब्दोऽयम्, तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः। यदि च या काचन कर्मणि षष्ठी गृह्येत 'कर्तरि च' (२.२.१६) इति [5]निषेधं न कुर्यात्; अनेनैव सिद्धत्वात्। 'साधु पयसः पानम्' इति। कर्मणि च येन संस्पर्शादिति [6]नित्यसमासार्थवचनमिति वक्ष्यति, तत्र पयः पानं सुखमित्युदाहरिष्यते। इदं तु शरीरसुखस्य [7]अविवक्षायां रोगाद्यभिभूतोऽशक्तुवन्नेव यदा साधु पिबति, तदा द्रष्टव्यम्॥

## १५. तृजकाभ्यां कर्तरि।

'कर्तृग्रहणं षष्ठीविशेषणम्' इति। अथ कस्माद्विपर्ययो नाश्रीयते—इह तृजकविशेषणं [8]कर्तृग्रहणमुत्तरत्र षष्ठीविशेषणमिति पूर्वं तृज्ग्रहणमुत्तरार्थमिति न वक्तव्यं भवति? उच्यते; 'नित्यं क्रीडाजीविकयोः' (२.२.१७) इत्यत्र तृज्ग्रहणस्याननुवृत्तिः शङ्क्येत 'कर्तरि च' (२.२.१६) इत्यत्र सम्बन्धासम्भवात्, न हि तृच्प्रयोगे कर्तरि षष्ठी सम्भवतीति। ननु च 'तृज्क्रीडाजीवकयोर्नास्तीत्यक एवोदाह्रियते' इति वक्ष्यति, एवं तर्हि तथानाश्रितमित्येव। 'भवत शायिका' इति। 'पर्यायार्हर्णोत्पत्तिषु ण्वुल्' (३.३.१११)। '[9]तृच्प्रयोगे कर्तरि षष्ठी नास्ति' इति तेनैव कर्तुरभिहितत्वात्।

'इक्षु भक्षिकाम्' इति। कर्मरि षष्ठ्याः समासः। 'मे' इति। 'धारेरुत्तमर्णः' (१.४.३५) इति सम्प्रदाने चतुर्थी॥

## १६. कर्तरि च।

सम्भवे [10]व्यभिचारे च सति विशेषणविशेष्यभावो भवतीत्याह—'सामर्थ्यात्' इति। 'सम्बन्धिशब्दस्य' इति। भावः 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' (व्या.प.१०८) इति भावः। अन्यस्त्वाह—होतृशब्दसाहचर्यादिति;

1. च इत्यधिकम्–इ.म. 2. नित्यप्रयोजनम्–म. 3. किं–म. 4. व्याधिकरणपक्षे–म. 5. प्रतिषेधम्–म. 6. नित्यसमासार्थं वचनम्–म. 7. अविवक्षया–म. 8. उत्तरसूत्रे इत्यधिकम्–म. 9. एवं च तत्प्रयोगेण–म. 10. इत्यभिचारे–म.

तत्र, न हि तत्र बह्वृचो होता गृह्यते। स एव सम्बन्धिशब्दः [1]"क्षीरहोता" इत्यादौ क्षीरस्य क्षेप्तेत्येव गम्यते ॥

## १७. नित्यं क्रीडाजीविकयोः ।

'नेति निवृत्तम्' इति। नित्यग्रहणात्, महाविभाषाधिकाराद् [2]विकल्पेनैव पाक्षिकस्य प्रतिषेधस्य सिद्धत्वान्नित्यः प्रतिषेधो [3]भविष्यति, किं नित्यग्रहणेन। 'तृच् क्रीडाजीविकयोर्नास्ति' इति। [4]'वामनस्तु 'अके जीविकार्थे' (६.२.७३) इत्यत्र 'अक इति किं रमणीयकर्ता' इति जीविकायां तृचं प्रत्युदाहरिष्यति। स मन्यते—मा भूत् क्रीडायां तृच्, लक्षणाभावात्, जीविकायां तु 'ण्वुल्तृचौ' (३.१.१३३) इति ण्वुलिव तृच् कस्मान्न स्यादिति। अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति, किन्त्वन्यतरत्रैवेत्यर्थः। 'अक एवोदाह्रियते' इति। उभयत्रेत्यर्थः। 'उद्दालकपुष्पभञ्जिका' इत्यादौ। 'सञ्ज्ञायाम्' (२.१.४४) इति ण्वुल्। नित्यग्रहणमुत्तरार्थम्। न हि वाक्येन क्रीडाजीविकयोरवगतिरस्ति, क्रियाकारकसम्बन्धमात्रावगमात् ॥

## १८. कुगतिप्रादयः ।

'कुशब्दोऽव्ययं गृह्यते' इति स्वरादिष्वपठितोऽप्ययं [5]पठितव्य इति भावः। नित्यसमासविषयस्यास्य पूर्वपदप्रकृतिस्वराणामव्ययत्वम्, यथा वक्ष्यति—'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (वा.७०६) इति। 'न द्रव्यवचनः' इति। पृथिव्यादिद्रव्ये यो वर्तते स न गृह्यत इत्यर्थः। 'दुर्निन्दायाम्' इति। प्रशस्ते द्वेषान्निन्दा भवति, पापं तु वस्तुस्थित्या गर्हितमिति द्वयोरप्युपादानम्।

'प्रायिकम्'[6] इति। अन्यथेषदर्थे चेति कोः कादेशविधानमनुपपन्नं स्यात्। 'दुष्कृतम्' इति। दुर्निन्दायामिति विषयनिर्देशो गतित्वेन प्राप्तस्यापि समासस्य नियामकः स्यादिति मन्यते। यदा तु प्रादिग्रहणप्राप्तस्यैव[7] नियामकस्तदा गतित्वादेवात्र सिद्धः समासः। दुरत्र कृच्छ्रार्थोऽनभिधानात् [8]कृतेः खल् न भवति, दुष्कर इत्यादावुपपदसमासः। 'आमन्द्रैरिन्द्र हरिभिः' (शां.श्रौ.सू. १२.९.११) इत्याङो मन्द्रं प्रत्यगतित्वात् [9]अनीप्सितार्थत्वाच्च समासाभाव इत्येकस्वर्यं न भवति। 'सुष्टुतम्' इति। सुशब्दोऽतिशये, न पूजायाम्। अत एवोपसर्गनिबन्धनं षत्वम्। 'अतिस्तुतम्' इति। 'अतिरतिक्रमणे च' (१.४.९५) इति कर्मप्रवचनीयत्वात् षत्वाभावः।

'प्रादयो गताद्यर्थे' इति। [10]वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्त इति।

'पर्यध्ययनः' इति। परिश्रान्तोऽध्ययनार्थमित्यर्थः।

---

1. क्षीरं होता–म. 2. विधिविकल्पेनैव–म. 3. भवति–म. 4. वामनस्तु–नास्ति–म. 5. 'पठितव्यः' नास्ति–म. 6. चैतत् इत्यधिकम्–म. 7. स इत्यधिकम्–म. 8. भूते–म. 9. अनिष्टत्वाच्च–म. 10. निवृत्त°–म.

'वाससी इव' इति। 'वसेर्णित्' (द.उ. ९.७७) इत्यसुन्प्रत्ययान्तो वासःशब्दः, वस्त्रशब्दः ष्ट्रन्प्रत्ययान्तः, द्वावपि नित्याद्युदात्तौ।

'प्रादिप्रसङ्गे' इति। सूत्रे प्रादिग्रहणमगत्यर्थमिति कर्मप्रवचनीयानां प्रतिषेध उच्यते, प्रत्यादिविषयश्चायं निषेधः। स्वत्योस्तु समासो भवत्येव। 'वृक्षं प्रति' इति। कर्मप्रवचनीयेन योगात् द्वितीयावत् समासस्यापि प्रसङ्गः, उदात्तवता तिङा गतेः समासवचनम्––यो जात एव पर्यभूषत्, यः शम्बरमन्वविन्दत्, योऽन्तरिक्षं विममे, यौ प्रजवं याताम्, अपथेन प्रतिपद्यते॥

## १९. उपपदमतिङ्।

'एधानाहारको व्रजति' इति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३.३.१०) इति ण्वुल्। 'अतिङिति किम्' इति। येनाभिप्रायेण पृष्टं तमाविष्करोति।

'ननु च' इति। 'एतज्ज्ञापयति' इति। स्यादेतत्––मुख्यस्य तिङन्तस्य प्रतिषेधोऽनर्थक इति। यस्तेन समानार्थः सुबन्तस्तस्य प्रतिषेधो विज्ञायते। तत्र[1] यद्यपि कालकारकसङ्ख्योपग्रहयुक्तः पूर्वापरीभूतः क्रियारूपस्तिङन्तार्थप्रधानोऽर्थो न सुबन्तस्य [2]सम्भवति, तथापि क्रियावाचित्वमात्रेण तदर्थत्वमाश्रीयते, क्रियावाच्युपपदं न समस्यत इत्यर्थः। तेन [3]कारको गतः, कारकस्य [4]व्रज्येति गतव्रज्याशब्दयोः कारकशब्देन समासो [5]न भवति, अन्यथा हि [6]'क्रियार्थायाम्' इति सप्तमीनिर्देशेनोपपदत्वादनयोरपि समासः स्यादिति ? तन्न, अनुपपदत्वात्। क्रियायां क्रियार्थायामिति सप्तमीनिर्देशेन क्रियावाचिन उपपदत्वम्, धातुरेवात्र [7]क्रियावचनः तदाश्रयश्च ण्वुल्प्रत्ययः। गतशब्दस्तु क्रियोपसर्जनं कर्तारमाह, व्रज्याशब्दोऽपि यस्तस्य सिद्धता नाम धर्मः, तत्र घञादयो भवन्तीति धात्वर्थस्य सिद्धतायां वर्तन्ते, अतो यत्क्रियावाचित्वादुपपदं न तत् सुबन्तम्, यत् सुबन्तं न तत् क्रियावाचि नाप्युपपदमिति नार्थ एवमनातिङ्ग्रहणेन।

'एतयोर्योगयोः' इति। ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तः, यत्रातिङ्ग्रहणमस्ति, न [8]पूर्वम्? एवं मन्यते––योगविभागेनातिङ्ग्रहणं पूर्वसूत्रेणापि सम्बन्धनीयमिति। यद्येवम्, कुशब्दे प्रादिषु चातिप्रसङ्गः, तत्रापि प्राक् सुबुत्पत्तेः समासः स्यात्? एवं तर्हि [9]पूर्वसूत्रे गतिग्रहणं [10]पृथक्कृत्य तेनैवातिङ्ग्रहणं सम्बन्धनीयम्।

'गतिकारकोपपदानाम्, [11]अस्यायमर्थः––गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासस्तेनतेव लक्षणेन स उत्तरपदात् सुबुत्पत्तेः प्रागेव [12]कार्यः, पूर्वपदं तु सुबन्तमेव समस्यत इति। गतीनां तावत्––व्याजिघ्रतीति व्याघ्री, 'पाघ्राध्माधेट्दृशः शः' (३.१.१३७) इति प्राप्तस्य जिघ्रतेः 'सञ्ज्ञायां प्रतिषेधो वक्तव्यः'

---

1. च इत्यधिकम्–म. 2. प्रतिषेधोऽनर्थकः इति यस्तेन समानार्थसुबन्तस्य प्रतिषेधो विज्ञायते तत्र च–इत्यधिकम्–म. 3. हारकः 4 प्रयुज्या–म. 5. न नास्ति–म. 6. क्रियाम्–म. 7. क्रियावाचिनः–म. 8. पूर्वत्र–म. 9. पूर्वत्र–म. 10. पृथगित्यनेनैव–म. 11. इति इत्यधिकम्–म. 12. कर्तव्यः–म.

कात्या.वा. १९६७) इति निषेधात् 'आतश्चोपसर्गे' (३.३.१०६) इति कः, व्याङोघ्रशब्देन गतिसमासः, स यद्युत्तरपदे सुबन्ते जाते पश्चात् स्यात्, ततः सुबुत्पत्तये सङ्ख्याकर्मादियोगो विवक्षितव्यः, तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधाय शब्द इति [1]त्यागात्, ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् घ्रशब्दमात्रस्य [2]अजातिवाचित्वात् [3]आप् स्यात्, [4]ततश्च व्याङोघ्राशब्देन समासः, ततो व्याघ्राशब्दस्य [5]जातित्वेऽपि [6]अनकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्, प्राक्सुबुत्पत्तेः समासो भवन् [7]तिङ्योगमपि नापेक्षत इत्यन्तरङ्गत्वात् स एव तावद्भवति, पश्चात् स्त्रीप्रत्ययो भवन् ङीषेव भवति, पूर्वपदस्य तु सुबन्तत्वात् पदकार्याणि भवन्ति, निर्गत इति णत्वम्, संय्यन्तेति परसवर्णविकल्प इत्यादीनि। कारकाणाम्—अभ्रलिप्ताऽभ्रलिप्तो 'कर्तृकरणे कृता बहुलम्' (२ १.३२) इति समासः, यद्युत्तरपदस्य सुबन्तत्वं स्यात् पूर्ववट्टाप् स्यात्, ततः 'क्रीतात् करणपूर्वात्' (४.१.५०) 'क्तादल्पाख्यायाम्' (४.१.५१) इति ङीष् न स्यात्, 'अतः' इत्यधिकारात्, वचनसामर्थ्याद्वा,[8] पूर्वशब्दं व्यवस्थावचनमाश्रित्य वाक्यावस्थायामेव स्यात्, 'अतः' इत्यधिकारो वा व्यवच्छिद्येत। प्राक् सुबुत्पत्तेः समासे पूर्ववत् सिद्धमिष्टम्। अत्रापि पूर्वपदस्य सुबन्तत्वात् चर्मक्रीतीत्यादौ नलोपादिकार्याणि भवन्ति। उपपदानाम्—कच्छेन [9]पिबतीति 'सुपिस्थः' (३.२.४) इत्यत्र सुपीति योगविभागात् कः, कच्छपी, [10]व्याघ्रीतुल्यम्, माषान् वपति 'सुप्यजातौ णिनिस्ताच्छील्ये' (३.२ ७८), माषवापिणी, ङीपः प्राक् समासे [11]प्रातिपदिकस्यान्तो नकार इति णत्वं भवति। सुबन्तस्य तु समासे ङीप् समासस्यान्तो न तु नकार इति न स्यात्। अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मकारादौ नलोपादिपदकार्यं भवत्येव। अत्रोपपदग्रहणं गतिकारकव्यतिरिक्तोपपदपरिग्रहार्थम्—[12]मृषावापिणी, ईषद्दर्शाया अपत्यं ऐषद्दर्शेयः। अत्र दर्शशब्देन समासे सति समुदायात् 'स्त्रीभ्यो ढक्' (४.१.१२०) बाधित्वा दर्शाशब्दात् स्त्रीप्रत्ययलक्षणो ढक् स्यात्, स्त्रीप्रत्यये तदादिनियमाभावेऽपि दर्शाशब्दादपि कदाचित् स्यादित्येषा दिक्।

जातान्यस्याः परिभाषायाः प्रयोजनानि। कथं पुनरतिङ्ग्रहणेनायमर्थः साधयितुं शक्यः, यावता प्रथमान्तमतिङ्ग्रहणं [13]प्रथमान्तस्यैव [14]सुब्ग्रहणस्य निवृत्तिं सूचयेदिति पूर्वपदे पदकार्याणि न स्युः, उत्तरपदे चोक्तमिष्टं न सिध्यति, तदेतत् क्रियमाणमतिङ्ग्रहणं विपर्ययमेव साधयति, तदपि गत्युपपदयोरेव कारकेषु तु 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्यादावस्याः कथाया अप्रसङ्ग एव? उच्यते—योगविभागेनातिङ्ग्रहणं गतिनापि सम्बध्यत इत्युक्तम्, एवं स्थिते योगद्वयविहितसमासमतिङ्ग्रहणेन विशेषयिष्यामः—गतिः समस्यते अतिङ समासो भवति, उपपदं [15]समस्यते अतिङ च समासो भवतीति। [16]तदेवं 'माङि लुङ्' (३.३.१७५), मा कार्षीदित्यादौ तिङन्तेन समासो मा भूदित्येवमर्थं क्रियमाणमतिङ्ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं साधयतीति गत्युपपदयोस्तावत् सिद्धमिष्टम्। वृत्तावपि 'सुप् सुपेति न सम्बध्यते' (२.१ ४) इति समुदायस्य निवृत्तिर्विवक्षिता। न केवलस्य सुब्ग्रहणस्य। प्रत्युदाहरणमपि दिङ्मात्रं प्रदर्शितम्। न हि तत्र तिङन्तेन समासः, किं तर्हि? तिङन्तस्य सुबन्तेन, 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्यत्रापि कृतेति न वक्तव्यम्, कथम्? कर्तृकरणयोः क्रियापेक्षत्वात् क्रियावचनेन तावत् समासः, धातुश्च क्रियावचनः, धातोश्च द्वये प्रत्ययाः—कृतः, तिङश्च, तत्र सुबधिकारात् तिङन्तेनाप्रसङ्गः, तदेतत् कृद्ग्रहणं कृदन्तावस्थायामेव यथा स्यादित्येवमर्थमिति के चित्।

---

1. न्यायात्–म. 2. अजातिमात्रत्वात्–म. 3. टाप्–म. 4. 'ततश्च व्याङो' नास्ति–म. 5. जातिवाचित्वेऽपि–म. 6. अनीकारान्तत्वात्–म. 7. लिङ्गयोगमपि–म; मुद्रितः पाठोऽपि. 8. 'प्रातिपदिकार्थं बाधितत्वाद् वा' इत्यधिकम्–म. 9. पिबन्ति–म. 10. व्याघ्रतुल्यम्–म. 11. समासप्राति°–म. 12. माषवापिणी–म. 13. प्रथमान्ते स्यात्–म. 14. सुबुत्पत्त्यैव–म. 15. सममेव–म. 16. 'तदेवं—सम्बध्यते' इति भागः नास्ति–म.

नेति वयम् । काष्ठैः पचतितराम्, दध्ना भुक्तपूर्वीत्यादौ तद्धितान्तेन समासो मा भूदित्येवमर्थं कृद्ग्रहणं कर्तव्यं कष्टश्रितादिषु प्राक् सुबुत्पत्तेः समासो न साधित इति कष्टश्रितेत्यादि न सिध्यति । एवं तर्हि 'गतिकारकोपपदानात्' (व्या.प. १३८) इति परिभाषा पूर्वाचार्यैः पठिता सूत्रकारेणाप्यतिङ्ग्रहणेन तद्देश आश्रिता । तत्र सामान्यापेक्षं ज्ञापकमिति कृत्स्नमेव परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम् ।

तदेतत् प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः ।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

## २०. अमैवाव्ययेन ।

'स्वादुङ्कारम्' इति । 'स्वादुमि णमुल्' (३.४.२६), स्वादुमीत्यत एव निपातनात् पूर्वपदस्य मान्तत्वम् । स्वादुमीत्यर्थग्रहणम्, तेन सम्पन्नङ्कारमित्यत्रापि भवति । ननु 'सिद्धे विधिरारभ्यमाणो नियमाय भवति' (कात. प. ६२), एवकारः किमर्थः ? इष्टतोऽवधारणार्थः, एवं यथा विज्ञायेत—अमैवाव्ययेनेति, मैवं विज्ञायि—अमाव्ययेनैवेति । अनव्ययस्यासम्भवादेवायं नियमो न भविष्यति । ननु चायमस्ति स्वशयं ब्राह्मणकुलमिति—'अधिकरणे शेतेः' (३.२.१५) इत्यच्, 'अतोऽम्' (७.१.२४) इति सोरम्भावः, अनेनाव्ययेन समासो मा भूदित्येवमर्थो नियमः स्यात्, न; अत्र ह्यन्तरङ्गत्वादनुत्पन्न एव सावुपपदसमासेन भाव्यम्, पश्चात्, सुपेति विधानवेलायामनव्ययस्यामोऽसम्भवान्नियमान्तरेण वचनस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यत आह—'एवकारकरणम्' इति । अमैव यदुपपदं तत्समस्यते, तदेव समस्यत इत्यक्षरार्थः, न पुनरमैव समस्यत इति । तत्र अमैव यदुपपदमित्यत्र तुल्यविधानमिति वाक्यशेषः । किं चामैव तुल्यविधानं येन वाक्येनामेव केवलो विधीयते, न प्रत्ययान्तरसहितस्तेन वाक्येन यदुपपदं विधीयते तत्र सप्तमीनिर्देशात् तदमैव तुल्यविधानम् । नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते—अमैव यत्तुल्यविधानं न तु प्रत्ययान्तरोत्पत्तौ निमित्तमिति तदपेक्षयाऽनुपपदत्वात् अव्ययान्तरेण समासो नाशङ्कनीयः । 'अग्रे भोजम्' इति । 'विभाषाग्रेप्रथमपूर्वेषु' (३.४.२४) इति क्त्वाणमुलौ । अव्ययग्रहणं किम् ? असत्यव्ययग्रहणे 'अमैव तुल्यविधानं तदेवोपपदं समस्यते' इत्युच्यमाने कुम्भकारादावपि न स्यात् । अथ पूर्वसूत्रस्यानवकाशत्वादमैव तुल्यविधानस्योपपदस्याव्ययविषयत्वात् तद्विषय एव नियमो विज्ञास्यत [1]इत्युच्यते ? एवं त्वमैव नियमः स्यात्—अमन्तेनोपपदस्य यः समासः, सोऽमैव तुल्यविधानस्येति, तत्र को दोषः ? अग्रेभोजमित्यत्रैव न स्यात्, अग्रेभुक्त्वा, कालो भोक्तुमित्यत्र तु स्यादेव; अव्ययग्रहणे तु सति अव्ययेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति विज्ञानान्न कश्चिद्दोषः ॥

## २१. तृतीयाप्रभृतीन्यन्यतरस्याम् ।

'[2]तृतीयाप्रभृतीनि' इति । 'यत्पुनरमा चान्येन [3]तस्याप्राप्ते' इति । उपपदविशेषणार्थं एवकारोऽत्र नानुवर्तत इति भावः । 'उच्चैः कारम्' इति । यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, 'आदिर्णमुल्यन्यतरस्याम्' (६.१.१९४) इत्याद्युदात्तत्वम् । यदा तु [4]न समासः, तदा 'उच्चैः' (१.२.२९) [5]इत्यन्तोदात्तम्, स्वरादिषु तथा पाठात् । [6]कारमित्याद्युदात्तम् ॥

---

1. इत्युच्येत–म. 2. तृतीयाप्रभृतीनि इति–नास्ति–म. 3. तस्य नास्ति–म. 4. न नास्ति–म.
5. इत्यन्तोदात्तत्वम्–म. 6. कारक°–म.

## २२. क्त्वा च ।

क्त्वेति तृतीयान्तम् । 'आतः' (३.४.११०) ? इत्याकारलोपः, यथा—'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (७.१.३७)) इति 'क्त्वि स्कन्दिस्यन्द्योः' (६.४.३१) इति ॥

## २३. शेषो वहुव्रीहिः ।

'उपयुक्तादन्यः' इति । 'शिष असर्वोपयोगे' (धा.पा. १८१७) इत्यस्मात् कर्मणि घञ् । 'कश्च शेषः' इति । ननु चोपयुक्तादन्यः शेषः इत्युक्तम्, सत्यम्, सर्वेषामेव पदानां सामान्यविशेषरूपेण [1]उपयोगात् सर्वेषु [2]च [3]पूर्वोत्तरान्यपदार्थेषु यथायोगं तत्पुरुषाव्ययीभावयोर्विधानादुपयुक्तादन्यो न सम्भवतीति पुनः प्रश्नः । उक्तं च— "[4]शेषग्रहं पदतश्चेन्नाभावादर्थतश्चेद विशिष्टम्' (कात्या.वा. १३४७–४८) इति । 'यत्रान्यः समासो नोक्तः' इति । येषां पदानां यस्मिन्नर्थे[5]ऽव्ययीभावादिकः समासो न विहितः स शेष इत्यर्थः । अथैवं कस्मान्न विज्ञायते— सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य [6]शृङ्गग्राहिकया समासो नोक्तः, यथा—प्रथमायाः; स शेष इति ? कण्ठेकाल इत्यादावप्रथमान्तानामपि समासस्येष्टत्वात् । शेषग्रहणं प्राक्कडारात् परं कार्यमित्यस्मिन् पक्षे कर्तव्यम्, एकसञ्ज्ञाधिकारपक्षे न कर्तव्यमित्याकडारसूत्र एव प्रतिपादितम् ॥

## २४. अनेकमन्यपदार्थे ।

'अनेकं सुबन्तं सह समस्यते' इति । परस्परमित्यर्थः । [7]तदनेन सुबित्येतदत्रानुवर्तते, न सुपेत्येतत्, उत्तरपदस्याप्यनेकमित्यनेनैव [8]प्रतिपादितत्वादिति दर्शयति । 'सर्वेषु विभक्त्यर्थेषु' इति । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्य प्राधान्यात् तस्यैवान्यपदार्थग्रहणेन ग्रहणमिति भावः । अत एव प्राप्तोदकोऽयं ग्राम इति ग्रामशब्दानुप्रयोगः, अन्यथा यावानेवार्थो ग्रामपदस्य [9]तावतोऽभिधाने गतार्थत्वान्न स्यात्, यथा—द्वन्द्वे चशब्दस्य । यदा तु समासेन विभक्त्यर्थ एव सम्बन्धादिरभीप्स्यते तदा विभक्तिर्मानुप्रयोजि, द्रव्यस्यानभिहितत्वात् तद्वाचिनोऽनुप्रयोगः कस्मान्न स्यात्, यदि विभक्त्यर्थोऽभिधीयते, कथं ग्रामादिभिः [10]सामानाधिकरण्यं तल्लिङ्गसङ्ख्यायोगे वा बहुव्रीहिर्भवति—प्राप्तोदको ग्रामः, उद्धृतौदना स्थाली इति ? उच्यते—विभक्त्यर्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वादभेदोपचारात् सामानाधिकरण्यमाश्रयतश्च लिङ्गवचनानि भविष्यन्ति शुक्लादिवत्, यथा— शुक्लं वस्त्रम्, शुक्ला पटी, शुक्लः कम्बलः, शुक्लैः शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदाचिद्गुण उच्यते, कदाचिद् गुणी; तथा बहुव्रीहावपि प्राप्नोति । नैषोऽस्ति नियमः—गुणशब्देन कदाचिद्गुणमात्रमभिधीयत इति, [11]पट्वादिष्वदर्शनात्, न हि भवति देवदत्तस्य पटुरिति; तद्वत् [12]इहापि गुणिनिष्ठता भविष्यति । एवमपि बहुव्रीहिणा यथा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्ति, तथा लिङ्गसङ्ख्ययोरप्यभिधानात् तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति ? नैष दोषः; स्वार्थिकाष्टाबादयः, स्त्रियां [13]यद् वर्तन्ते तस्मात् स्वार्थिकाष्टाबादयो भवन्तीति तेन बहुव्रीहिणाऽभिहितेऽपि स्त्रीत्वे भविष्यन्ति । एवं च कृत्वा 'अनो बहुव्रीहेः' (४.१.१२)

---

1. उपयुक्तत्वात्—म. 2. च नास्ति–म. 3. पूर्वोत्तरेषु–म. 4. शेषग्रहं इति मुद्रितः–पाठः शेषग्रहणं–म. 5. अव्ययीभावसंज्ञकः–म. 6. शृङ्गग्रहग्रा°–म. 7. एतेन–म. 8. प्रत्यायितत्वात्–म. 9. तावता विधानेन–म. 10. सामान्याधिकरण्यात्–म. 11. पाठादिषु–म. 12. अत्रापि–म. 13. यद् नास्ति–म.

इत्याद्युपपन्नं भवति। समासेन च बाह्यक्रियापेक्षा या [1]कर्मादिशक्तिः, तद्रहितसमासप्रातिपदिकार्थ [2]एव एकत्वादेरुक्तत्वादिति कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भविष्यन्ति—चित्रगुं पश्य, चित्रगुणा कृतं। एवमपि प्रथमा न प्राप्नोति, समासेन सङ्ख्याया अभिधानात् ? वचनाग्रहणादेकः, द्वौ, बहव [3]इतिवत्। अथ वा—लिङ्गमात्रं सङ्ख्यामात्रं बहुव्रीहिणा[4]भिहितं न विशेषस्तत्रावश्यं विशेषार्थिना तद्वाची शब्दः प्रयोक्तव्यः। एवं च कृत्वा सह [5]प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाभिधीयमानेऽपि न कश्चिद्दोषः। कथं सामान्यपरेण विशेषस्यानुप्रयोगः ? सामान्यस्य [6]तर्हि न प्राप्नोति—[7]देवदत्तः कश्चिदिति, सामान्यमपि विशेषः; [8]विशेषेण विशेषान्तरं व्यावर्त्यते तद्वत् सामान्येन [9]विशेषो व्यावर्त्यते, अन्यथा सन्देहः स्यात्—सामान्यं विवक्षितम् ? विशेषो वा ? इति।

'प्राप्तोदको ग्रामः' इत्यादीनि द्वितीयाद्यर्थेषु यथाक्रममुदाहरणानि। ऊढो रथो [10]येन, उपहृतः [11]यस्मै, उद्धृत ओदनः यस्याः, चित्रा गावो यस्य, वीराः पुरुषा यस्मिन्निति विग्रहाः। 'प्रथमार्थे तु न स्यात्' इति। अनभिधानात्, एवमनन्तरादिषु[12] न भवति—चित्रा गावो यस्यानन्तरा इति। 'अनेकमिति किम्' इति। 'सुप् सुपा' (२.१.४) इत्यधिकारादेव [13]तत्पुरुषवद्बहुव्रीहिरप्येकस्य न भविष्यतीति प्रश्नः। 'बहूनामपि न स्यात्' इति। अन्यथा सुप्सुपेति [14]सङ्ख्याया विवक्षितत्वाद्यथा तत्पुरुषो बहूनां न भवति—महत्कष्टं श्रितः, तथा बहुव्रीहिरपि न स्यादिति भावः। [15]ज्ञापकात् सिद्धम्, यदयं तद्धितार्थेत्युत्तरपदं [16]द्विगुं शास्ति तज्ज्ञापयति 'बहूनामपि समासः' इति। यद्येवम्, तत्पुरुषेऽपि प्रसङ्गः, [17]अत्र चित्रगुरित्यत्रोत्तरपदस्याप्युपसर्जनसञ्ज्ञा प्राप्नोति कस्मान्न भवति, सत्यनेकग्रहणे सुपेत्यस्य निर्वर्तितत्वादुत्तरपदमपि तेनैव प्रत्याय्यते, तदपि समासशास्त्रे प्रथमानिर्दिष्टं भवति, नान्यथा ? एवं मन्यते—चित्रगुस्तिष्ठति, चित्रगुं पश्येति प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगे [18]वर्तिपदयोः नित्यप्रथमान्तत्वादेकविभक्तीत्येव सिद्धमुपसर्जनत्वमिति।

'सुसूक्ष्मजटकेशेन' इति। सुष्ठु सूक्ष्मा जटाः केशा अस्येति चतुर्णां बहुव्रीहौ 'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्' (६.३.६३) इति बहुलवचनाद्ह्रस्वत्वम्, यद्वा सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाः केशा अस्येति [19]पुनर्बहुव्रीहिः। एवं सुष्ठु गजाजिनं वास आच्छादनं यस्य तेन सुगजाजिनवाससा, तृतीयान्तो बाहुल्येन श्लोके तथा पठितत्वात्।

'सुसूक्ष्मजटकेशेन सुगजाजिनवाससा।
समन्तशितिरन्ध्रेण [20]द्वयोर्वृत्तौ न सिध्यति ॥ (म.भा १.४२०)

इति भाष्ये श्लोकः पठितः, तत्र तु श्लोकपूरणार्थं तृतीयानिर्देशः। अन्यग्रहणं बहुव्रीहितत्पुरुषयोः [21]विषयविभागार्थम्, असति तस्मिन् 'कण्ठेकालः' इत्यादौ व्यधिकरणपदे सावकाशं बहुव्रीहिं स्वपदार्थे

1. कर्मादिका शक्तिः–म. 2. एकत्वादयः उक्ताः–म. 3. इत्यादिवत्–म. 4. सिद्ध... 5. सहेत्यर्थेन–म. 6. एव इत्यधिकम्–म. 7. चित्रगुः इत्यधिकम्–म. 8. विशेषेण नाति... 9. अपि इत्यधिकम्–म. 10. अनेन–म. 11. अस्मै–म. 12. अपि इत्यधिकम्–म. 13. तत्पु... दिवत्–म. 14. सुप्सुपेति–म. 15. ज्ञापनसिद्धम्–म. 16. द्विगुं नास्ति–म. 17. अ... 18. अपि इत्यधिकम्–म. 19. पुनर् नास्ति–म. 20. द्वयोर्भागार्थम्–म. 21. विषयविभागार्थ... द्वयोः भागार्थं तर्हि–म.

[1]नीलोत्पलं सर इत्यादौ समानाधिकरणे [2]तत्पुरुषो बाधेत। अन्यग्रहणे तु [3]सति स्वपदार्थे सावकशं तत्पुरुषं परत्वाद्बहुव्रीहिः [4]बाधते इति न कश्चिद्दोषः।

पदग्रहणं किम्? पदार्थे यथा स्याद्वाक्यार्थे मा भूत्। कश्चित् [5]कांचनद्यां सिष्णासुमाह—नद्यां ग्राहाः सन्तीति, एतानि पदानि, 'तस्मात्तत्र मा स्नासीः' इति [6]वाक्यार्थं गमयन्तीति बहुव्रीहिसञ्ज्ञा प्राप्नोति। अर्थग्रहणं किम्, [7]यावता पदे पदान्तरस्य [8]वृत्त्यसम्भवादेव [9]पदार्थे भविष्यति? कृत्स्ने पदार्थे यथा स्यात्, अन्यथा प्राधान्याद्विभक्त्यर्थ एव स्यान्न प्रकृत्यर्थे [10]द्रव्ये। तत्र यदुक्तम्—अभेदोपचाराद्धर्मिणोऽभिधाने सिद्धेऽपि शुक्लादिवद्धर्ममात्रस्यापि कदाचिदभिधानं प्राप्नोति, तदनेनापाक्रियते। [11]पट्वादिशब्दवन्नित्यं [12]धर्मिनिष्ठो बहुव्रीहिरिति [13]प्रतिपादनेन बहुव्रीहिः समानाधिकरणानामित्यादिरभिधानसिद्धस्यार्थस्य[14] प्रपञ्चः।

'उच्चैर्मुखः' इति। [15]उच्चैसोऽधिकरणप्रधानत्वाद्वैयधिकरण्याद्वचनम्।

'सप्तम्युपमान' इति। सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य शब्दान्तरेण समासः तत्रस्योत्तरपदस्य [16]लोप इत्यर्थः। 'कण्ठेस्थ' इति। 'सुपि स्थः' (३.२.४) इति कः। 'अमूर्धमस्तकात्' (६.३.१२) इत्यलुक्। 'कण्ठे स्थितः' इति पाठे तु सप्तमीति योगविभागात् समासः। समानाधिकरणत्वात् [17]समासे सिद्धे वचनमुत्तरपदलोपार्थम्। तेन वैयधिकरण्येऽप्यत्र गमकत्वमस्तीति प्रदर्श्यते। 'उष्ट्रमुखमिव' इति। अवयवधर्मेण समुदायव्यपदेशाद् [18]उष्ट्रस्योपमानतेत्युपमानपूर्वपदमुष्ट्रमुखशब्दः, अत्रोपमानोपमेययोः [19]वैयधिकरण्यवद्वचनमुत्तरपदलोपार्थं च। 'उष्ट्रमुखः' इति। उष्ट्रो मुखमस्येति विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमुपपद्यत इति सामर्थ्यात् [20]सादृश्यावगतिः, मुखेन च मुखस्य सादृश्यं प्रसिद्धमित्युष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवति। तस्मादुत्तरपदलोपो न वक्तव्यः।

'समुदायविकारषष्ठ्या' इति। समुदायावयवसम्बन्धे [21]प्रकृतिविकारसम्बन्धे [22]च या षष्ठी तदन्तात् परं यदुत्तरपदं तदन्तस्य समासस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः। 'केशचूडः' इति। इदमपि केशसमाहारे केशशब्दस्य वृत्तेः सिद्धम्। एवं स्वर्णविकारे [23]स्वर्णशब्दस्य वृत्तेः स्वर्णालङ्कार इति सिद्धम्। वचनं तु केशसमाहारचूडः, [24]स्वर्णविकारालङ्कार इत्युत्तरपदस्य श्रवणं मा भूदिति।

'प्रादिभ्यः [25]धातुजस्य' इति। इदं न वक्तव्यमेव, प्रादयो हि ससाधनां क्रियां प्राहुः—यथा निष्कौशाम्बिः, [26]निर्वाराणसिः, प्राचार्य इति। एव नञोऽस्त्यर्थानामित्येतदपि।

---

1. वन्यपदार्थेऽपि नीलं स्यात्–म. 2. न इत्यधिकम्–म. 3. सति नास्ति–म. 4. बाधकः–म. 5. क्वचित्–म. 6. वाक्यं–म. 7. यावता नास्मि–म. 8. अवृत्तासंभवात्–म. 9. अर्थेन–म. 10. द्रव्ये नास्ति–म. 11. यद्वादिशब्दवत्–म. 12. धर्मनिष्ठे–म. 13. 'प्रतिपादने न बहुव्रीहिः' नास्ति–म. 14. अर्थस्य नास्ति–म. 15. उच्चैः शब्दस्य–म. 16. लोपश्च–म. 17. समासे सिद्धे नास्ति–म. 18. उष्ट्रस्याप्युपमानार्थादिःयुपमाने–म. 19. वैयधिकरण्यात्–. 20. सादृश्याद् गतिः–म. 21. तथाधिकारिसम्बन्धे–. 22. षष्ठीपदम्–म. 23. स्वर्णशब्दस्य–म. 24. स्वर्ण नास्ति–म. 25. धातुकस्य–म. 26. निर्वाराणसिः नास्ति–म.

'सुबधिकारे' इति। अस्तीति तिङन्तमिति मत्वा वचनं[1] निपातत्वात् सिद्धम्। 'उपसर्गविभक्तिप्रतिरूपका निपाता' स्वरादिषु चास्तिशब्दः पठ्यते। इह किं सब्रह्मचारीति? बहुव्रीहिरयम्। के सब्रह्मचारिणस्तव, किं सब्रह्मचारी त्वमिति पूर्वपदप्रकृतिस्वरो ह्यत्रेष्यते, तत्र [2]'कठश्चब्रह्मचार्यहम्' इति [3]सम्भावितं प्रविवचनम्। यत्तु कठोऽहमिति न तत्साक्षात् प्रतिवचनम्, किं तर्हि? [4]आर्थिकम्। अहं तावत् कठ इत्युक्ते गम्यत एतन्न तु तेऽपि कठा इति। कठस्य हि कठा एव सब्रह्मचारिणो [5]भवन्ति, नान्ये। समाने ब्रह्मणि [6]व्रतचारी एव सब्रह्मचारी भवति। के सब्रह्मचारिणस्तवेति वाक्येन तु प्रश्ने कठा इति [7]प्रतिवचनम्। समासेन तु प्रश्ने कठा इति प्रतिवचनं कदाचिदपि न भवति, वर्तिपदार्थानामुपसर्जनत्वात्, कि सब्रह्मचारीति समासेन [8]सब्रह्मचारिणामभिधानात्। इह द्वौ द्रोणावर्धद्रोणाश्चार्धतृतीया द्रोणा इति? [9]अर्धस्तृतीयो येषामिति बहुव्रीहावद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनं द्रोणशब्दश्च द्रोणयोरर्धद्रोणेऽपि लक्षणया वर्तत इति सामानाधिकरण्यं च भवति॥

## २५. सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये।

'उपदशाः' इति। 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' (५.४.७३) इति डच्। टिलोपः। दशानां समीपे ये भवन्ति ते उच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं[10] समासः। उपशब्दोऽयमाराच्छब्देनैकार्थत्वात् समीपे समीपिनि च वर्तते। तत्र समीपिप्राधान्ये[11]ऽयं बहुव्रीहिः। सामीप्यप्राधान्ये 'अव्ययं विभक्तिसमीप०' (२.१.६) इत्यव्ययीभावः। [12]'उपदशं दन्तोष्ठा' इति। अत्र धर्मधर्मिणोरभेदोपचारात् सामानाधिकरण्यम्। 'उपविंशाः' इति। 'ति विंशतेर्डिति' (६.४.१४२) इति [13]लोपः। आसन्ना दशानामासन्नदशाः, तेऽपि नवैकादश वा। अधिकदशास्त्वेकादश। द्वौ वा त्रयो वा द्वित्राः, वार्थेऽयं समासः। वार्थश्च यदि विकल्पः स्यात्, ततो [14]यदि द्वौ भवतस्तदा बहुवचनं न स्यात्। तस्मात् संशयोऽत्र वार्थः, स चानियतसङ्ख्याविमर्शः, तत्र तु त्रयोऽपि सर्वदा परिस्फुरन्तीति तदपेक्षं बहुवचनम्। अथ वा—पञ्चैवात्र सर्वदा भवन्ति, कथम्? [15]विमर्शज्ञानमुभयपक्षालम्बि एकं च तत्र, यथा—द्वौ वा त्रयो वा पुरुषा आनीयन्तामित्यत्र पुरुषशब्दे तिङन्ते च बहुवचनमेव भवति, कस्य हेतोः? मिश्रितेषु तयोर्वृत्तेः। एवं द्वित्रिपदमपि [16]मिश्रितेषु वर्तते इति सैषा पञ्चाधिष्ठाना [17]वाक्, अतो बहुवचनमेव भवति। आनयनादिकार्यं तु द्वयोस्त्रयाणां वा यथारुचि भवति। वाक्यवदेव समासस्य [18]चैषा हि आपत्, अतस्तेषु मिश्रितेषु [19]वृत्तिः, तेन द्वौ वा[20] पुरुषा आनीयन्तामिति वाक्ये द्विशब्दात् द्विवचनमेव भवति। 'त्रिचतुराः' इति। 'चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानम्' (वा. ६३९) इत्यच्। 'द्विदशाः' इति। अत्र [21]द्विशब्देन दशत्वावृत्तिगता द्वित्वसङ्ख्या प्रतिपाद्यते, न दशत्वसङ्ख्या, एकत्वात्। नापि सङ्ख्यायुक्ताः, बहुत्वात्। [22]तत्र वाक्ये सुचमन्तरेणाभ्यावृत्तेरनवगमात् सुच् भवति, ततश्चास्वपदविग्रहः

---

1. अपि इत्यधिकम्–म. 2. ब्रह्मवीर्यहम्–म. 3. समीचीनं–म. 4. अर्थात्–म. 5. भवन्ति–नास्ति–म. 6. हि इत्यधिकम्–म. 7. वचनम्–म. 8. समासो न–म. 9. अर्धतृतीयं–म. 10. अनेकार्थत्वात् इत्यधिकम्–म 11. स्वयं–म. 12 उपदशं दन्तोष्ठम्–म. उदाहरणमिदं नास्ति काशिकायाम् 13 हि इत्यधिकम्–म 14. यदा–म. 15. विमर्शज्ञानम् ...बहुवचनमेव भवति इति भागो नास्ति–म. 16. निमित्तेषु–म. 17. वाग्वृत्तिः–म. 18. चैवमभिदादुत्तमम्–म. 19. वृत्तिः नास्ति–म. 20. त्रयो वा इत्यधिकम्–म. 21. द्विशब्देन–म. 22. तद्वाक्य सुबन्तमन्तरेण–म,

क्रियते—द्विर्दश द्विदशा इति। वृत्तौ तु स्वभावादेव सुचमन्तरेणाभ्यावृत्तिसङ्ख्यां द्विशब्द एवाहेति सङ्ख्यावाचित्वात् समस्यते।

नन्वत्र वार्थः सुजर्थश्चान्यपदार्थे इति पूर्वेणैव सिद्धम्, [1]तन्न; सुचः स्वार्थिकत्वात् तदर्थोऽपि पदार्थ एव। मत्वर्थे पूर्वयोग; अमत्वार्थार्थोऽयमारम्भः। ननु [2]प्राप्तोदकादि प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु यथाभिधानं भवतीत्युक्तम्, एवं तर्हि प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः। अथ प्रथमार्थं वर्जयित्वेत्येतदनादृत्य यथाभिधानं भवतीत्युच्यते, एवं तर्हि तस्यैव प्रपञ्चः सङ्ख्यायाः समासः, अव्ययानां तु [3]चतुर्दशादिभिः सङ्ख्येयवाचिभिः समासो विधेय एव। [4]केचित्तु ये विंशत्यादयः सङ्ख्याने वर्तन्ते तैः पूर्वेणैव सिद्धम्—अधिका विंशतिर्येषां त इमे अधिकविंशाः, विंशतिसङ्ख्या आसन्ना येषां ते आसन्नविंशा इति, तत्र 'सर्वनामसङ्ख्ययोः' (वा.११३) इति विंशतिशब्दस्य पूर्वनिपातः प्राप्नोति, तस्माद्विंशत्याद्यर्थमप्यव्ययादीनां ग्रहणं कर्तव्यमेव॥

## २६. दिङ्नामान्यन्तराले।

'दक्षिणपूर्वा' इति। अन्तरालस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धे वचनमिदं त्वमर्थेऽपि यथा स्यात् प्रथमार्थेऽपि यथा स्याद्वैयधिकरण्येऽपि [5]यथा स्यात्। किञ्च 'विभाषा दिक्समासे बहुव्रीहौ' (१.१.२८) इत्यत्र दिशां प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणं [6]यथा स्यात्, या पूर्वा सोत्तरास्य [7]उन्मुग्धस्य तस्मै उत्तरपूर्वाय देहीत्यत्र मा भूदित्येवमर्थः। अतस्तदर्थोऽप्ययमारम्भः। कबभावार्थं च 'शेषाद्विभाषा' (५.४.१५४) इत्यत्र शेषाधिकारविहितस्य बहुव्रीहेर्ग्रहणम्। 'अनेकमन्यपदार्थे' (२.२.२४) इत्यत्रैव शेषग्रहणमनुवर्तते, तेनात्र कप्न भवति। 'सर्वनाम्नो वृत्तिमात्रे' (वा.१०४) इति मात्रग्रहणात् 'विभाषा दिक्समासे' १ १.२८) इति यदा सर्वनामसञ्ज्ञा नास्ति तदापि भवति॥

## २७. तत्र तेनेदमिति सरूपे।

'इति करणः' इत्यादि। ततः समासाल्लौकिकस्य यदि विवक्षा भवति—एवमर्थं समासो भवति, नान्यार्थमित्येवमर्थं सूचयितुमितिशब्द इत्यर्थः, तेन किं सिद्धं भवतीत्याह—'लौकिकमर्थम्' इति। कः पुनरसौ-लौकिकोऽर्थ इत्याह—'ततश्च' इत्यादि। एतदेव विवृणोति—'यत्तत्र' इत्यादि। गृह्यतेऽस्मिन्निति ग्रहणम्=केशादि, प्रहरणं दण्डादि, कर्मव्यतीहारः परस्परग्रहणं परस्परप्रहरणं च। 'स चाव्ययम्' इति। तिष्ठद्गुप्रभृतिषु पाठेन [8]अव्ययत्वात्। नन्वत्र युद्धस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धम्, न; वैयधिकरण्यादेकशेषप्रसङ्गाच्च। तथा हि— [9]ग्रहणप्रहरणे च केशादिनां सहविवक्षितत्वात् [10]एकविभक्तित्वाच्चैकशेषः प्राप्तोऽनेन वचनेन बाध्यते। कथम्? न समूहविवक्षायां बहुव्रीहिसञ्ज्ञा, समूहवचैकशेषे नोपपद्यते। ननु चासत्यस्मिन् पूर्वयोगेनैव परत्वादेकशेषो बाधिष्यते? न शक्यते बाधितुम्; अन्तरङ्ग एकशेषः, बहुव्रीहिश्चान्यपदार्थापेक्षत्वाद्बहिरङ्गः॥

---

1. तन्न नास्ति–म. 2. प्राप्तोदकादिषु–म. 3. चतुर्णाम्–म. 4. ये तु–म. 5. तथा–म. 6. यथा स्यात् नास्ति–म. 7. उन्मुखस्य–म. 8. अव्ययीभावत्वात्–म. 9. ग्रहणे प्रहरणे च–म. 10. एकविभक्तिविषया–म.

## २८. तेन सहेति तुल्ययोगे ।

'तुल्ययोगे' इति । तुल्ययोगः समानसम्बन्धः । 'सपुत्रः' इति । 'वोपसर्जनस्य' (६.३.८२) इति सभावः । नन्वत्र पिता प्रधानमन्यपदार्थोऽभिधेयः, सत्यम्; व्यधिकरणयोः प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः कबभावार्थं च । उक्तश्चात्र कबभावः । 'दशभिः पुत्रैः' इति । इत्थम्भूतेत्यर्थः । 'प्रायिकम्' इति । ज्ञापकात्, यदयं 'विभाषा साकाङ्क्षे' (३.२ ११४), 'छन्दस्यनेकमपि साकाङ्क्षम्' (८.१.३५), 'पूर्वादिनिः' (५.२.८६) 'सपूर्वाच्च' (५.२.८७), 'सपूर्वायाः प्रथमायाः' (८.१.२६) 'विभाषा सपूर्वस्य' (४.१.३४) इति विद्यमानार्थेऽपि [1]समासं निर्दिशति, तज्ज्ञापयति— [2]प्रायिकं विशेषणमिति ॥

## २९. चार्थे द्वन्द्वः ।

'समुच्चय' इत्यादि । यदा परस्परनिरपेक्षाः पदार्था एकस्मिन् प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः, यथा—*अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदीति । दुर्मदी यथा सुराया न तृप्यति तथा यमो गवादीन् नयमान इत्यर्थः । अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः, गम्यमानत्वाच्च चशब्दस्याप्रयोगः । एवं राज्ञो गौश्चाश्वश्चेति द्रव्ये द्रव्ययोः, रक्तः शुक्लश्चेति द्रव्ये गुणयोः, रक्तः पटः कृष्णं चेति [3]गुणे द्रव्ययोः समुच्चय इत्यादि द्रष्टव्यम् । यदा [4]अनेकस्य प्राधान्यात् तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः, यथा—भिक्षामट गां चानयेति । अत्र ह्यदर्शनादनानयन्नपि गामटत्येव भिक्षाम्, अनटंस्तु भिक्षां न गामानयति, अटन्नपि नान्विष्य गामानयति । इतरेतरयोगस्तु [5]परस्परापेक्षाणामवयवभेदानुपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति, यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति । तथैकापायेऽपि तद्गुणवतोऽद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने भवतः, तादृशानामेव [6]अवयवतिरोधानसंहतिरूपेणान्वये तत्समाहारः, यथा —छत्रोपानहमिति, संहतिप्रधानत्वात् त्वेकवचनम् । 'तत्र' इत्यादि । स्यादेतत्—समुच्चये परस्परानपेक्षत्वे [7]अपि गवादीनामेकक्रियाद्वारकं [8]सामर्थ्यं दध्योदनादिवद[9]स्त्येवेति, तन्न युक्तम्, दध्योदनादावेकत्वात् क्रियायाः । इह तु कर्मभेदात् क्रिया भिद्यते, तथा च 'समुच्चयेऽन्यतरस्याम्' (३.४.३) इत्यत्र भ्राष्ट्रमट मठमटेत्यादिके [10]कर्मभेदनिबन्धनं क्रियाभेदमाश्रित्योदाहरिष्यते । अन्वाचये त्वप्रधानमेव चार्थे वर्तते, न प्रधानमित्यनेकस्य पदस्य चार्थे वृत्त्यभावादपि समासाभावः । इह पटुश्चासौ [11]खञ्जश्चेत्येकस्मिन् धर्मिण्यनेकधर्मसमुच्चयार्थसद्भावात् समानाधिकरणयोरपि द्वन्द्वसञ्ज्ञाप्रसङ्गः, ततश्च 'द्वन्द्वे घि' (२.२.३२) इति नियमः स्यात्, विशेषणमित्यादिना

---

1. समस्य–म. 2. प्रातिपदिकम्–म. 3. गुणद्रव्ययोः–म. 4. त्वेकस्य–म. 5. परस्परापेक्षणमेव–म. 6. अवयवतिरोधानेन–म. 7. अपि नास्ति–म. 8. सामर्थ्यं–नास्ति–म. 9. सामर्थ्यम् इत्यधिकम्–म. 10. अटनभेदम्–म. 11. खलश्च–म.

*अहरहर्नयमानो गामश्वं पुरुषं जगत् ।
वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः (तै आ. ६.५ ४)

तु तत्पुरुषप्रकरणे [1]खञ्जपटुरित्यपि सिध्यति ? नैष दोषः; एकसञ्ज्ञाधिकाराद्विशेषविहितत्वात् तत्पुरुषसञ्ज्ञैव भविष्यति, अन्यथा नीलं च तदुत्पलं चेत्यादावपि [2]द्वन्द्वः स्यात्। यद्वा—'शेष' इति वर्तते, अतो विशेषणमित्यत्रो-पयुक्तत्वान्न भविष्यति। सामानाधिकरण्याभावे तु द्वन्द्व एव[3]—पटुखञ्जावागताविति।

'प्लक्षन्यग्रोधौ' इति। चशब्दस्याव्ययत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य स्वभावादेव लिङ्गसङ्ख्या-योगः। कथं पुनरत्र द्विवचनम्, यावता शब्दपौर्वापर्यादर्थाभिधानेऽपि पौर्वापर्यम्, ततश्च [4]प्लक्षशब्दः सहार्थेन निवृत्तः न्यग्रोधशब्द उपस्थितः, एक एवार्थस्तस्य [5]एकत्वादेकवचनमेव प्राप्नोति, तथा च 'आद्यन्तौ टकितौ' (१.१.४६) इति क्रमेण [6]प्रतीतिमङ्गीकृत्य यथासङ्ख्यमित्यस्य प्रवृत्तिः, न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति, यथा वा वाक्ये प्लक्षश्च न्यग्रोधश्चेति, अत्र न्यग्रोधार्थप्रतीतिदशायां प्लक्षार्थस्य [7]अप्रतीतिरेव कारणम् ? अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः। किमिदं युगपदधिकरणवचन इति ? [8]अधिकरणं वर्तिपदार्थः, [9]अधिकरणे युगपद्वचनं युगपदधिकरणवचनम्, तत्र द्वन्द्वो भवति। केन पुनर्युगपद् [10]द्वयोर्वचनम् ? एकैकेन [11]पदेन। एतदुक्तं भवति—यावतां पदानां द्वन्द्वो यदि तावतामन्योऽन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति। अत्र हि द्विवचनबहुवचनान्यथा[12]नुपपत्तिरेव प्रमाणम्; विग्रहे चापि दर्शनात्। विग्रहे खल्वपि युगपद्वचनता दृश्यते—'प्रमित्रयोर्वरुणयोः' (ऋ. ७.६६ १) 'द्यावाचिदस्मै पृथिवी[13]नमेते' (ऋ.२.१२.१३) इति। किं पुनः समासे, यत्र चान्या चान्या च शक्तिः प्रादुर्भवति! कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानम्, तेन वा तस्य ? साहचर्यादिति। यद्वा [14]तद्वा निमित्तं भवतु, यद्यपि च लोकव्यवहारे केवलस्य प्लक्षशब्दस्य न्यग्रोधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वम्, द्वन्द्वावयवानां त्वनेकार्थाभिधायित्वं न केवलानामित्यदोषः। नियत-विषयाश्चापि शब्दार्था भवन्ति, यथा—भ्रातृशब्दस्यैकशेष एव स्वसरि वृत्ति, पुत्रशब्दस्य दुहितरि। एतेनैतदपि निरस्तम्—एकेनोक्तत्वात् तस्यार्थस्य परस्य प्रयोगो नोपपद्यत इति।

कथं द्वन्द्वावयवानामेव परस्परसंनिधानादेषा शक्तिः वह्निसंनिधाविव [15]घृते द्रवता, नो खलु [16]वह्नि-विगतौ भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोपि द्व्यर्थः। बहुत्वाद्बहुवचनं प्राप्नोति ? नात्र चत्वारोऽर्थाः, किं तर्हि ? [17]याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपि। स्यादेतत्—[18]उभयोरत्र पर्यायत्वे यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति [19]द्विर्वचने प्रतीतिः, एवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, [20]तन्न; युगपदुत्पादात्। तद्यथा द्वयोरक्ष्णोर्युगपद्विस्फारितयोः पुरोवर्तिन्यर्थद्वये युगपदेका प्रतीतिर्जन्यते। तथेहापि द्रष्टव्यम्। ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दः, यदा न्यग्रोधशब्दो न तदा प्लक्षशब्द इति कथमत्र युगपद्व्यापारः ? [21]स्मृतिस्थयोर्युगपद्-व्यापारादवदोषः। पदानि हि श्रुतमात्राणि स्वं स्वमर्थं स्मारयन्ति, पश्चादाकाङ्क्षासंनिधियोग्यत्वेषु परामृष्टेषु स्मृतिस्थान्यभिदधति, [22]तस्मामेव स्मृतौ युगपदारोहात् संभवत्येव युगपद्व्यापारः। या च सा पदार्थानां स्मृतिः स क्रमभाविनीति [23]तत्क्रमेणैव यथासङ्ख्यादिव्यवस्था युगपदभिधानेप्युपपद्यते। तदेवं युगपदधिकरणवचने द्वन्द्व

1. करणं खञ्जवदनियम.–म. 2. अशेषत्वात् द्वन्द्व एव–म. 3. भवति इत्यधिकम्–म. 4. वृक्ष°–म. 5. एकत्वे-म. 6. प्रसंगीकृत्य–म. 7. अनवगतिरेव–म. 8. अधिकरणवर्ति-पदार्थः–म. 9. अधिकरणयोः–म 10. द्वयोरर्थयो-इ. म. 11. प्रातिपदिकेन–म. 12. °उपपत्तिः–म. 13. संनमेते–म 14. तद्वा–नास्ति–म. 15. ताम्रस्य–म. 16. वह्निगमे सा भवति–म. 17. याभ्यामेवापरोऽपि स्यात्–म. 18. उभयोरेव उभयार्थत्वे–म. 19 द्विर्वचनप्रतीतेः आवृत्तिः–म. 20. इति वा अत्रन–म. 21. स्मृतिस्थयोः नास्ति–म. 22. तस्यां च–म. 23. तत्कर्मणा–म.

इति स्थितम्। इह एकविंशतिः [1]द्वाविंशतिरिति, यद्ययं द्वन्द्वः स्यात् [2]एकं च विंशतिश्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसकम्' (२.४.१७) इति नपुंसकप्रसङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात्, समासः क्रियते ? नैवं शक्यम् 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु सङ्ख्या' (६.२.३४,३५) इति पूर्वपदप्रकृतिस्वरो न स्यात्। तस्माद्द्वन्द्व एवायम्। स [3]समाहारे नेतरेतरयोगे, अनभिधानात्, नपुंसकत्वं तु 'लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य' (चा प.७३) इति न भवति॥

## ३०. उपसर्जनं पूर्वम्।

'अनियमो हि स्यात्' इति[4]। यद्यपि विपरीतप्रयोगो लोके न दृष्टः परपुरुषापराधात्तु वाक्यवत् सम्भाव्येतेत्यर्थः। इह राज्ञः पुरुषस्य पुत्रो राजपुरुषपुत्र इति षष्ठीसमासशास्त्रे द्वयोरपि प्रथमानिर्दिष्टत्वेऽपि [5]उपसर्जनसञ्ज्ञान्वर्थत्वादप्रधानस्यैव भवति, पुरुषश्चात्र राजापेक्षया प्रधानमिति पूर्वनिपातनियमः॥

## ३१. राजदन्तादिषु परम्।

'[6]न केवलम्' इत्यादि। [7]अत्र विहितपूर्वनिपातस्येति पाठे विहितः पूर्वनिपातो यस्य तस्येत्यर्थः। प्रायेण तु विहितस्येति पाठः। [8]तत्रापवाद इति शेषः। अन्यस्यापि घ्यादेर्यः पूर्वनिपातो यथालक्षणं विहितस्तस्याप्यपवाद इत्यर्थः। 'अग्रेवणम्' इति। 'वनं पुरगा' (८.४.४) इत्यादिना णत्वम्। तदेव तर्हि णत्वविधानं परनिपातस्य ज्ञापकं भविष्यति ? तन्न, 'उपसर्जनं पूर्वम्' (२.२.३०) इति नियमो न प्रवर्तत इत्येतावतोऽप्यर्थस्य ज्ञापकत्वेन तदुपपन्नम्, [9]तस्मात् कथं नियमेन परनिपातः स्यात् ? इह [10]च निपातनादलुगिव णत्वमपि न भविष्यति [11]इति तत्राग्रेग्रहणं शक्यमकर्तुम्। 'पूर्वकालल्य' इति। 'पूर्वकालैक' (२.१.४९) इति प्रथमानिर्देशादुपसर्जनस्य [12]इत्यर्थः। [13]उलूखलमुसलादिद्वन्द्वेषु क्वचिदल्पाक्षरत्वात् क्वचित् [14]घ्यन्तत्वात् क्वचिदजाद्यदन्तत्वात् पूर्वनिपातप्रसङ्गः, क्वचिदनियमः। 'दृषदुपलम्' इति। प्रमादपाठः, अल्पाच्तरत्वात्। 'अक्षिभ्रुवं दारगवम्' इति। अचतुरादिसूत्रेऽच्समासान्तो [15]निपातितः, तेन [16]परनिपातस्यापि सिद्धत्वादिह पाठः शक्योऽकर्तुम्॥

## ३२. द्वन्द्वे घि।

'द्वन्द्वेऽनेकमिति' प्रथमानिर्देशात् सर्वेषामेव[17] उपसर्जनत्वादनियमे प्राप्ते वचनम् 'अनेकप्राप्तौ' इति। आकृतौ पदार्थे समुदाये [18]सकृल्लक्षणं प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या। तत्रैकस्यैव पूर्वनिपातेन जातौ लक्षणं प्रवृत्तमेवेति न [19]पुनः प्रवर्तते। [20]नन्वाकृतिपक्षेऽपि पटुगुप्तौ [21]मृदुगुप्तावित्यादिषु बहुषु व्यक्तिषु यथा युगपत् प्रवर्तते,

---

1 द्वाविंशतिः–म. 2. एकं च विंशतिश्च ...°अन्धकवृष्णिषु संख्या इति भागो नास्ति–म. 3. समाहार एव–म. 4. संभवतात् तिङः इति अधिकम्–म. 5. उपसर्जनसंज्ञाया अन्वर्थत्वादप्रधानस्य भवति–म 6. न नास्ति–म. 7. राजनकेवन्तामित्यादि इत्यधिकम्–म. 8. इष्यादेः–म. 9. तत्–म. 10. तु–म. 11. इति नास्ति–म. 12. इत्यर्थः नास्ति–म. 13. °द्वन्द्वे––म. 14. घ्यन्तत्वात् नास्ति–म. 15. निपातः–म. 16. एव परनिपातस्यापि–म. 17. द्वन्द्वे इत्यधिकम्–म. 18. सकृल्लक्ष्ये लक्षणं प्रवृत्तं तेन–म. 19. पुनः पुनः–म. 20. नत्वा कृति°–म. 21. यथा इत्यधिकम्–म.

तथात्रापि प्रवर्ततांम् ? एवं मन्यते––एकस्य युगपदवध्यवधिमद्भावो विरोधान्न सम्भवति । न [1]चान्तमपेक्ष्योभयोः पूर्वत्वमन्यतरेण व्यवधानादिति, अत्र च यदा पटुमृद्वोर्द्वन्द्वं कृत्वा [2]पश्चाच्छुक्लशब्दस्य द्वन्द्वः क्रियते तदाल्पाच्तरत्वात्तस्य पूर्वनिपाते शुक्लमृदुपटवः, शुक्लपटुमृदव [3]इति च भवति । 'विस्पष्टपटुः' इति । [4]विस्पष्टशब्दः प्रवृत्तिनिमित्तस्य पाटवस्य विशेषणमिति विस्पष्टं पटुरिति विगृह्य 'सुप्सुपा' (२.१.४) इति समासः ॥

## ३३. अजाद्यदन्तम् ।

अजादीति पृथक्पदम्, विशेषणसमासो वा । 'अश्वेन्द्ररथाः' इति । रथशब्दस्य पश्चात् समासे रथाश्वेन्द्रा इत्यपि भवति । 'द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' इति । 'द्वन्द्वे घि' (२.२.३२) इत्यस्यावकाशः–पटौ पटुगुप्तौ 'अजाद्यदन्तम्' इत्यस्यावकाशः––उष्ट्रखरम्, इन्द्राग्नी इत्यत्रोभयप्राप्तौ परत्वात् 'अजाद्यदन्तम्' इत्येतद्भवति विप्रतिषेधेनेति ॥

## ३४. अल्पाच्तरम् ।

अत एव निपातनात् स्वार्थे तरप्, कुत्वाभावश्च । यदि तु प्रकर्षे तरप् चेत् तदा 'धवखदिरपलाशाः' इत्यादौ बहुषु सन्निहितेषु द्विवचनोपपदत्वाभावादस्याप्रवृत्तावनियमः स्यात् । द्वयोरेव तु स्यात्––प्लक्षन्यग्रोधाविति । 'शङ्खदुन्दुभिवीणाः' इति । तूर्याङ्गानामित्येकवद्भावो न भवति; तूर्यशिल्पोपजीविनामेव तत्र ग्रहणात् । नियतद्रव्यविवक्षायां जातिपरत्वाभावात् । 'जातिरप्राणिनाम्' (२.४.६) इत्येतदपि न भवति । शङ्खवीणाभ्यां दुन्दुभेर्द्वन्द्वे दुन्दुभिशङ्खवीणा इत्यपि भवति । एवं मृदङ्गश्च शङ्खपणवौ च मृदङ्गशङ्खपणवाः, धनपतिश्च रामकेशवौ च प्रासादो धनपतिरामकेशवानामित्यादि भवति । तथा होता च पोता च नेष्टा चोद्गाता चेति बहूनां युगपद्द्वन्द्वे तृतीयस्योत्तरपदमनन्तरमिति [5]तस्यैवानङ भवति, नेतरयोः––होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वे त्रयाणामप्यानङ भवति––होतापोतानेष्टोद्गातार इति । एवमन्यत्रापि द्वन्द्वक्रियायामानुपूर्व्यविशेषाद् रूपविशेषो वेदितव्यः । [6]पूर्वाभ्यामल्पाच्तरमित्येतत् पूर्वानुसारेण गम्यमानत्वात् वृत्तौ न पठितम् । 'द्वन्द्वे घि' (२.२.३२) इत्यस्यावकाशः––पटुगुप्तौ, 'अल्पाच्तरम्' इत्यस्यावकाशः––प्लक्षन्यग्रोधौ, वागग्नी इत्यत्रोभयप्राप्तौ अल्पाच्तरमित्येतद्भवति । अजाद्यदन्तमित्यस्यावकाशः––उष्ट्रखरम्, अल्पाच्तरमित्यस्य स एव; [7]वागिन्द्रावित्यत्रोभयप्राप्तौ 'अल्पाच्तरम्' इत्येतद्भवति ।

'ऋतुनक्षत्राणाम्' इति । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतम्, न क्षत्राणामुदयकृतम् । '[8]मातापितरौ' इति । 'आचार्यः श्रेष्ठो गुरूणाम्, माता इत्येके' इति स्मृतिः । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति च ।

---

1. चास्यन्त्यमपेक्ष्य–म. 2. पश्चाच्छब्दे–म. 3. इतीव–म. 4. विशब्दप्रवृत्ति°–म.
5. तस्यैव नास्ति–म. 6. उभाभ्याम्–म. 7. चान्द्रोऽपि–म. 8. इतरौ इत्यधिकम्–म.

'श्रद्धामेधे' इति। सत्यां श्रद्धायामर्थक्रियाकारिणी मेधा इत्यभ्यर्हितत्वं श्रद्धायाः। 'दीक्षातपसी' इति। दीक्षार्थं तप [1]इत्यभ्यर्हितत्वं दीक्षायाः। लघ्वक्षरादपि तपसो विप्रतिषेधादभ्यर्हितमित्येतदेव भवति।

'समानाक्षराणामित्यत्र नास्ति' इति। तेन ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं न कृतमिति भावः। वर्णानामुत्पत्तिकृतमानुपूर्व्यं श्रूयत [2]एव—'मुखतो ब्राह्मणमसृजद्बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रम्' (ऋ. १०. ९७) ? इति।

'सङ्ख्याया अल्पीयस्याः' इति। द्वन्द्वे चाद्वन्द्वे चेत्याहुः। अल्पीयस इति पाठे अल्पीयसोऽर्थस्य वाचिकाया इत्यर्थः। 'नवतिशतम्' इति। द्वन्द्वः 'द्व्येकयोः' (१.४.२२) इति तु [3]सौत्रो निर्देशः॥

## ३५. सप्तमीविशेषणे बहुव्रीहौ।

'कण्ठेकालः' इति। यदा कण्ठे किंचिदस्तीति [4]निर्ज्ञाते काल इति विशेषणं प्रयुज्यते तदा सप्तमीग्रहणेन प्रयोजनम्, अन्यदा तु विशेषणत्वादेव सिद्धम्। [5]'संप्रधारणायाम्' इति। इदमस्तु इदमेवेति [6]निरूपणा = संप्रधारणा। 'परत्वात्' इति। शब्दपरविप्रतिषेधादित्यर्थः। एवमर्थमेव च 'सङ्ख्यासर्वनाम्नोः' इति नोक्तम्। 'गड्वादिभ्यः' इति। गड्वादयः प्रयोगतो द्रष्टव्याः॥

## ३६. निष्ठा।

'अवमुक्तोपानत्कः' इति। उरःप्रभृतित्वात् कप्। 'ननु च' इत्यादि। 'यथा चित्रगुः' इति। गुणद्रव्यशब्दयोरुपनिपाते गुणशब्दस्य विशेषणत्वम्, क्रियाद्रव्यशब्दयोरपि क्रियाया एव विशेषणत्वम्। ततश्च पूर्वनिपातः सिद्धमिति भावः। 'विवक्षानिबन्धनत्वात्' इति। यदा कृतं किंचिदनेनेति निर्ज्ञाते कट इति प्रयुज्यते तदा कटो विशेषणमिति मन्यते। 'कटे कटेन कृतमिति वा विग्रहीतव्यम्' इति। एवं विग्रहे कृतस्य [7]विशेषणत्वशङ्कैव नास्तीति भावः। क्वचित्तु वाशब्दो न पठ्यते, तत्र विवक्षानिबन्धनत्वादित्युक्ते तामेव विवक्षां [8]वर्णयतीति इति [9]व्याख्येयम्।

'जातिकालसुखादिभ्यः परवचनम्' इति। ज्ञापकात् सिद्धम्, 'जातिकालसुखादिभ्योऽनाच्छादनात्' (६.२.१७०) इत्याह, तज्ज्ञापयति—'जातिकालसुखादिभ्यः परा निष्ठा निपतति' (कात्या. वा. १४२२) इति। 'शार्ङ्गजग्धी' इति। शार्ङ्गं जग्धमनयेति बहुव्रीहिः। 'क्तादल्पाख्यायाम्' (४.१.५१), 'अस्वाङ्गपूर्व-

---

1. अभ्यर्हिता दीक्षा—म. 2. हि—म. 3. सौत्रे—म. 4. निर्णीते कल्पे—म. 5. 'सर्वनामसंख्ययोः इति यत्र गुणशब्देन समासः, सोऽस्य द्रव्यवचनेन तु समासे विशेषणत्वादिति सिद्धम्' इति अधिकम्—म. 6. निरूपेण—म. 7. विशेषणानां च—म. 8. दर्शयति—म. 9. व्याख्यातव्यम्—म.

पदाद वा' (४.१.५३) इति ङीष्। अत्राहुः--निष्ठाशब्देन या विहिता निष्ठा तस्या [1]ग्रहणम्। तेन [2]सुस्थितम्, चारुहसितमित्यादौ 'नपुंसके भावे क्तः' (३.३.११४) इत्यस्य परनिपात इति ॥

## ३७. वाऽऽहिताग्न्यादिषु।

## ३८. कडाराः कर्मधारये।

बहुवचननिर्देशादाद्यर्थोऽवगम्यत इत्याह--कडारादय इति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
द्वितीयाध्यायस्य द्वितीयः पादः ॥

--:०:--

1. इह इत्यधिकम्—म. 2. सुस्मितम्—म.

# अथ द्वितीयाध्यायस्य

## तृतीयः पादः

### १. अनभिहिते ।

अनभिहितशब्दोऽयमनेकार्थः, तथा हि—अभिपूर्वस्य दधातेर्हिनोतेश्चैतद्रूपं सम्भवति; अभिपूर्वस्य दधातिर्बन्धनेऽपि दृष्टः—अश्वाभिधानीमादत्त इति, उच्चारणेऽपि—अभिहितः श्लोक इति, प्रतिपादनेऽपि—अभिहितो[1]ऽयमिति; हिनोतिरपि गतौ वृद्धौ च वर्तते, इह तु वक्ष्यमाणानां [2]कर्मादीनां बन्धनाद्यर्थचतुष्टयासम्भवात् प्रतिपादनवचनोऽभिहितशब्द इत्याह—'अनभिहिते अनिर्दिष्टे अनुक्ते' इति। [3]वचिरत्र प्रतिपादनवचनः। उक्तार्थानामप्रयोग इति यथा सामान्येन 'अभिहिते' इत्येतात्युच्यमाने कटं करोति, भीष्ममुदारं दर्शनीयमित्यत्र कटशब्दाद्विशेष्यवाचिन उत्पद्यमानया द्वितीययाऽनवयवेन कटगतस्य कर्मत्वस्याभिहितत्वाद्भीष्मादिभ्यो द्वितीया न [4]स्यादिति मन्यमानः पृच्छति—'केनानभिहिते' इति। इतरोऽपि विदिताभिप्राय आह—'तिङ्कृत्तद्धितसमासैः' इति। बहुषु प्रयुक्तेषु केषांचिद्वर्जनेन केषांचित् कार्यान्वयप्रतिपादनम् = परिसङ्ख्यानम्, प्रत्युदाहरणेषु सर्वत्र द्वितीया न भवति।

'कटं करोति भीष्मम्' इति। कटः कृतो भीष्म उदारो दर्शनीय इति करोतेरुत्पद्यमानः क्तप्रत्ययोऽनवयवेन सर्वकर्माभिधत्ते तद्वद् द्वितीयापीति यो मन्दधीर्मन्यते त प्रतीदं परिगणनम्, सूक्ष्मदृशस्तु प्रति न वक्तव्यमेव। तथा हि प्रातिपदिकादुत्पद्यमाना द्वितीया यदाकारविशिष्टोऽर्थः, [5]प्रातिपदिकेनाभिधीयते [6]तदाकारविशिष्टस्यैव कर्मभावमाचष्टे। कटशब्देन कटत्वजातिविशिष्टोऽर्थोऽभिधीयते, न भीष्माद्याकारविशिष्ट इति तत्प्रतिपादनाय यथा भीष्मादिशब्दप्रयोगो भवति तथा तदाकारविशिष्टस्य कर्मत्वाभिधानाय द्वितीया भविष्यति। क्तप्रत्ययस्तु प्रकृत्यर्थस्य न कर्मतामाचष्टे, किं तु प्रकृत्यर्थं प्रति यस्य कर्मभावः तमिति युक्तं यदनवयवेन सर्वकर्माभिधत्ते। ननु च कर्मादयो विभक्त्यर्थास्तेषां च तिङादिभिरभिहितवचनमनर्थकम्, अन्यत्रापि विहितस्याभावादभिहिते, यत्राप्यनभिहिताधिकारो न क्रियते तत्रापि शब्दान्तरप्रतिपादितेऽर्थे नैव विहितं भवति, तद्यथा—बहुपटुरिति बहुचोक्तत्वादीपदसमाप्तेः सत्यपि सम्भवे कल्पबादयो न भवन्ति, द्विर्दश द्विदशाः—समासेनोक्तत्वात् सुजर्थस्य सुज् न भवति, पटुगुप्तौ—द्वन्द्वेनोक्तत्वाच्चार्थस्य चशब्दो न प्रयुज्यते; तद्वदत्रापि तिङादिभिरभिहितत्वादेव द्वितीयादयो न भविष्यन्ति।

---

1. अर्थः–म. 2. कर्मादीनाम्–म. 3. विचिरत्रं–म. 4. स्यादिति–न भवति इति भागो नास्ति–म. 5. प्रातिपदिकेन नास्ति–म. 6. तदाकार....अर्थोऽभिधीयते इति नास्ति–म.

नन्वभिहितार्थस्यापि प्रयोगो दृष्टः—अपूपौ द्वाविति, सत्यम्; अयं तु न्यायः यदुताभिहिते विहितं न स्यात्, न हि व्यसनितया शब्दः प्रयुज्यते, अपि त्वर्थाभिधानाय, स चेदर्थः शब्दान्तरेणाभिहितः किमिति शब्दान्तरं प्रयुज्यते, अक्षिनिकोचादिभिरप्यवगतेऽर्थे शब्दो नैव प्रयुज्यते, किं पुनः शब्देनैवाभिहिते। अपूपौ द्वावित्यादौ तु द्वावानय कौ द्वौ [1]ताविति सामान्योपक्रमे वाक्यमिति यथाकथंचिदुपपादनीयम्, तस्मान्नार्थं एतेनेत्याशङ्क्य सङ्ख्याऽपि विभक्त्यर्थं इति दर्शयन्नाह—'बहुषु बहुवचनमित्येवमादिना' इति।

अयमर्थः—'त्रिकः प्रातिपदिकार्थः' इत्यस्मिन् दर्शने कर्मादिवदेकत्वादिसङ्ख्या विभक्त्यर्थः, तत्र [2]कर्मादीनां युगपद्विभक्तिभिरभिधीयमानानां परस्परं विशेषणविशेष्यभावमापन्नानां केवलप्रातिपदिकार्थगतानामभिधानं वृक्ष [3]एको वृक्षः, कर्म पशुरेकः पशुः करणमिति[4] वाभिधानम्, पश्चाच्चैक[5]क्रियान्वयबलेन परस्परसम्बन्ध इति [6]प्राभाकरा मन्यन्ते।

भाट्टास्तु [7]परस्परासम्बद्धस्य स्वतन्त्रस्यानेकार्थस्य अक्षाः, पादाः, माषा इत्यादावभिधानदर्शनेऽपि [8]एकशेषमन्तरेणादर्शनात् यजेतेत्यादौ च [9]कृतिकार्ययोर्युगपल्लिङाभिधीयमानयोरपि विशेषणविशेष्यभावस्य प्राभाकरैरप्यभ्युपगमात् तद्वदेव विशिष्टाभिधानं मन्यन्ते।

अस्माकमप्ययमेव पक्षः। तत्र[10] कर्मादयो विशेषणम्, एकत्वादयो विशेष्याः, कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति। विपर्ययो वा—[11]एकत्वादिविशिष्टं यत्कर्म तत्र द्वितीयेति। तत्र यद्यपि कर्मादिप्राधान्यपक्षे तिङादिभिः प्रधानभूतानां कर्मादीनामभिहितत्वादप्रसङ्गः, द्वितीयादीनां सङ्ख्याप्राधान्यपक्षे कर्मादिष्वभिहितेष्वपि [12]प्रधानभूतसङ्ख्याभिधानाय द्वितीयादयः स्युरेव। प्राभाकरे तु पक्षे कर्माद्यंशाभिधानेऽपि [13]सङ्ख्यांशस्यानभिहितस्याभिधानाय द्वितीयादयः [14]स्युः इति। 'अनभिहितकर्माश्रयेषु' इति। अनभिहितानि कर्मादीन्याश्रयो येषां तेष्वित्यर्थः। एतेन कर्मणीत्यादिसप्तमीनिर्देश एकत्वादीनामाधारतया, न पुनरभिधेयतयेति दर्शितम्। 'अनभिहित' इति। यदि प्रसज्यप्रतिषेधः स्यात् [15]ततो द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहितेऽपि विभक्त्यभावप्रसङ्गः, प्रासाद आस्ते इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्चान्यतरेण सदिप्रत्ययेन घञाभिहितम्—प्रसीदन्त्यस्मिन् प्रासाद इति, तत्राभिहिते न भवतीत्युच्यमाने सप्तमी न स्यात्। पर्युदासे त्वासिप्रत्ययेन यदनभिधानं तदाश्रया सप्तमी सिध्यति। ननु च प्रासादाख्यस्य द्रव्यस्य कारकत्वादभिहितत्वादन्यत्वं नास्ति? नैष दोषः; शक्तिः कारकम्, तत्र सदिक्रियाशक्त्यभिधानेऽप्यासिक्रियाशक्तेरनभिधानम्। नन्वेवं प्रसज्यप्रतिषेधेऽपि या शक्तिरभिहिता तत्र मा भूद्विभक्तिः, या त्वनभिहिता तत्र भविष्यति? उच्यते—अनभिहिते कर्म[16]णीत्येकत्वादीनामाधारनिर्देशः, संख्या [17]न द्रव्यधर्मः, अतोऽनभिहिते कर्मणि [18]इत्यादिभिरपि शक्तिद्वारेण द्रव्यमेवोच्यते-अनभिहिता या कर्मादिशक्तिस्तदाधारभूतं यद् द्रव्यं तस्यैकत्वादिषु विभक्तय इति। एवं च यदि प्रसज्यप्रतिषेधः स्यात् ततोऽभिहितशक्तिद्वारेण द्रव्यस्याभिहितत्वात् प्रतिषेधः स्यात्, पर्युदासे तु [19]अनभिहितशक्तिद्वारे विधिरिति

---

1. अपूपौ इत्यधिकम्—म. 2. 'वक्तव्यंकत्वादीनाम्' इत्यधिकम्—म. 3. एकः इत्यधिकम्—म. 4. पुनः करणभूतपशुरेकः इति वा एक पशुकरणं इत्यधिकम्—म. 5. °क्रियासमन्वयबलेन—म. 6. प्रभाकराः—म. 7. परस्परासम्बन्धस्य—म. 8. एकशेषं मतान्तरेण दर्शनाम्—म. 9. कृतिकार्ययोगौ—म. 10. च इत्यधिकम्—म. 11. एकत्वादेः—म. 12. प्रभातभूतसंख्या नास्ति—म. 13. संख्याशब्दानभिहितस्य—म. 14. स्युरेव—म. 15. ततद्द्वयोः—म. 16. °आधारानिर्देशः—म. 17. च—म. 18. इत्येवमादिभिः—म. 19. °शक्तिद्वारेण—म.

स्पष्ट एव फलभेदः । यत्र तर्हि शक्तिभेदो नास्ति तत्र कथम्—आसने आस्ते, शयने शेते इति ? [1]अत्राप्यासन-शयनादिशब्दैः आसनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिहितमिति तस्य शक्त्युद्भवप्रतिपादनाय विभक्ति भविष्यति ।

यदि तर्हि पर्युदासोऽयमिति निर्णीयते, इह पक्त्वा भुज्यते ओदन इति भुजिप्रत्ययेनाप्यभिहिते[2] ओदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीया प्राप्नोति, भावे हि क्त्वाप्रत्ययः; प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधान-माश्रित्य प्रतिषेधः सिध्यति ? उच्यते—नात्रौदनस्य युगपदुभाभ्यां शाब्द एवान्वयः किं तर्हि ? भुजिनैव, सन्निधानात्तु पचिनान्वयः । केवलशब्दव्यापारनिरूपणे तु किमिष्टकाः पक्त्वौदनो भुज्यते, उतौदनमेवेति न ज्ञायते, अतः शब्दव्यापारापेक्षयाभिधानमेवेति द्वितीया न भविष्यति । अनभिहितवचनमनर्थकम्; प्रथमाविधानस्यानव-काशत्वात् । कृतः कट इत्यादिषु द्वितीयादयो मा भूवन्निति सूत्रारम्भः । यदि चात्रापि स्युः, [3]का इदानीं प्रथमा स्यात् । [4]नन्वनवकाशत्वात् प्रथमा [5]भवन्ती कृतः कटः इत्यादावेव [6]भवतीति न पुनः कटं करोतीत्यादावपीति कुतोऽयं नियमः ? कृतः कट इत्यादौ यद्यपि कृतशब्दसंनिधाने कटस्य कर्मता प्रतीयते, तथापि तत्र वाक्यार्थत्वा-दव्यतिरिक्त एव प्रातिपदिकार्थ [7]इति प्रथमा भविष्यति, यथा—वीरः पुरुष इति । कटं करोतीत्यत्र तु कटशब्देनैव कर्मशक्तिमानर्थोऽभिधीयत इति व्यतिरिक्तत्वात् प्रातिपदिकार्थस्य प्रथमा न भविष्यति । नन्वकारकेषु सावकाशा प्रथमा, यथा—वृक्ष[8] इति ? तन्न; अत्राप्यस्तीति प्रतीतेः कर्तृत्वात् तृतीयाप्रसङ्गः । यत्र ह्यन्यत् क्रियापदं न [9]श्रूयते तत्रान्तरङ्गत्वादस्तीति गम्यते, लब्धसत्ताकस्य हि विशेषणान्तरयोगो [10]भविष्यति । अथापि यत्र विशेषणान्तर-निवृत्तौ तात्पर्यम्, न क्रियासम्बन्धे, [11]यथा—नीलमुत्पलं न रक्तम्, राज्ञोऽयं पुरुषो न देवदत्तस्येति, न ह्यत्र नीलमुत्पलमस्ति, राज्ञः पुरुषोऽस्तीति प्रतीतिः, अतोऽस्त्येवाकारकमवकाश इत्युच्येत ? एवमपि विप्रतिषेधात् [12]प्रथमा भविष्यति । द्वितीयादीनामवकाशो यत्र प्रातिपदिकार्थस्य व्यतिरेकः,—कटं करोतीति, प्रथमायास्त्वकार-कमवकाशः—नीलमुत्पलमिति; कृतः कटः [13]इत्यत्रोभयप्रसङ्गे परत्वात् प्रथमैव भविष्यति । ननु तामपि बाधित्वा परत्वात् षष्ठी प्राप्नोति, शेषलक्षणा षष्ठी प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगादशेषत्वान्न भविष्यति । इह तर्हि कर्तव्यः कट इति [14]कृत्प्रयोगे प्रथमां बाधित्वा 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठी स्यात्, तत्प्रतिषेधार्थमनभिहिताधिकारः कर्तव्यः । तदेवं सङ्ख्याविभक्त्यर्थं इत्यस्मिन् पक्षे कर्तव्यं सूत्रमिति स्थितम् ॥

## २. कर्मणि द्वितीया ।

'द्वितीयादयः शब्दाः' इति । [15]स्वनिकायप्रसिद्धिरेषेत्यर्थः ।

[16]'उभसर्वतसोः' इति । उभयसर्वशब्दयोस्तसिलन्तयोः प्रयोग इत्यर्थः । उभयशब्दैकदेशे उभशब्दोऽनु-कृतः; उभशब्दस्य तसिलन्तस्याभावात् तस्य द्विवचनटाब्विषयत्वात् । धिगित्यविभक्तिको निर्देशः । 'आम्रेडितान्तेषु' इति । कृतद्विर्वचनेष्वित्यर्थः । 'उभयतः सर्वतः' इति । पञ्चम्यास्तसिल् । 'धिक्' इति । निन्दार्थोऽयम् ।

1. इत्यत्र°–म. 2. अपि इत्यधिकम्–म. 3. क्व–म. 4. न त्वनवकाशत्वात्–म. 5. तस्मात् इत्यधिकम्–म. 6. भवति–ट. 7. 'इति प्रथमा–व्यतिरिक्तत्वात्' इति भागो नास्ति–म. 8. प्लक्षः इत्यधिकम्–म. 9. प्रयुज्यते–म. 10. भवति–म. 11. यदा–म. 12. न इत्यधिकम्–म. 13. °प्रसंगपरत्वात्–इ. म. 14. नत्प्रयोगे–म. 15. °सिद्धिरेव–म. 16. इह इत्यधिकम्–म.

'उपर्युपरि' इति । 'उपर्यध्यधसः सामीप्ये' (८.१ ७) इति द्विर्वचनम् । ततोऽन्यत्रापीत्युक्तम् । तानेवान्यान् परिगणयति—'अभितः' इत्यादि 'अभितो ग्रामम्' इति । उभयत इत्यर्थः । 'परितः' इति । सर्वत इत्यर्थः । 'पर्यभिभ्यां च' (५.३.९) इति तसिल् । आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितःशब्दोऽस्ति, सोऽपि गृह्यते । समयानिकषाशब्दौ समीपवचनौ गृह्येते । हाशब्दः शोकाविवृत्तिः हा कन्ये इत्यादौ कारकविभक्तित्वादन्तरङ्गत्वात् सम्बोधनविभक्तिर्भवति 'बुभुक्षितं न प्रतिभाति' इति । प्रतिरत्र [1]क्रियाविशेषकत्वात् [2]उपसर्गो न कर्मप्रवचनीय इति पठ्यते ।।

## ३. तृतीया च होश्छन्दसि ।

'यवाग्वाग्निहोत्रम्' इति । क्व पुनरग्निहोत्रशब्दो वर्तते ? हविषि, तेष्वग्निहोत्रमधिश्रयेत् अग्निहोत्रं [3]शरशरायत्, तदाहुः 'यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत' इत्यादिषु दर्शनात् । जुहोतिरपि प्रक्षेपे । एकस्मिन्नेव प्रयोगे यवागूशब्दात् तृतीया, अग्निहोत्रशब्दाद्द्वितीया, यवाग्वाख्यं हविर्देवतोद्देशेन प्रक्षिपतीत्यर्थः ।

अयं योगः शक्योऽवक्तुम्, कथम् ? अग्निहोत्रशब्दो ज्योतिष्यपि वर्तते—'अग्निहोत्रं प्रज्वलितम्' इति । जुहोतिरपि प्रीणने । तद्यदा यवागूशब्दात् तृतीया तदा यवाग्वाग्निहोत्रं प्रीणयतीत्यर्थः, यदा तु द्वितीया तदा यवाग्वाख्यं द्रव्यमग्निहोत्रं हविरग्नौ प्रक्षिपतीत्यर्थः ।

मीमांसकास्त्वाहुः—अग्निहोत्रशब्दः कर्मनामधेयमिति, दृश्यते च—स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ इत्यादि । तस्य वा एतस्य अग्निहोत्रस्य सप्त च शतानि च, एतद्वा अग्निहोत्रमन्येद्युर्हूयते [4]अजरामर्यं वा एतद् [5]यदग्निहोत्रम् इति च त इत्याहुः । करणत्वात् तृतीयायां प्राप्तायां पक्षे [6]द्वितीयार्थं वचनम् । [7]इदं च सूत्रानुगुणं न भवति, कर्मणीति हि वर्तते ।।

## ४. अन्तरान्तरेण युक्ते ।

'अन्तरान्तरेणशब्दौ' इत्यादि । ननु यथा नौर्नावि बद्धा नेतरेतरत्राणाय भवति तादृगेतत्, द्वयोरपि निपातत्वव्यभिचारात्, [8]सत्यम्; साहचर्यात् [9]साजात्यं लक्ष्यते, [10]सजातीयविजातीयभावे सजातीयप्रत्ययो भवति, तद्यथा—गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्भवति, न त्वाचार्यपरशुरामयोः । यद्वा—अन्तराशब्देनातृतीयान्तेन साहचर्यादन्तरेणेत्यस्याप्यतृतीयान्तस्य ग्रहणम्, स च निपात एव । तथान्तरेणशब्देनाटाबन्तेन साहचर्यादन्तराशब्दस्यापि [11]अटाबन्तस्यैव ग्रहणम्, स च निपात एव । 'षष्ठ्यपवादो योगः' इति । असत्यस्मिन् योगे शेषत्वात् षष्ठी प्राप्नोति । सति त्वस्मिन्नुपयुक्तत्वात् षष्ठी न भवति [12]इत्यपवादत्वमेतत् । 'मध्यमाधेय' इति । आधेयपरतन्त्रमित्यर्थः । सप्तम्यन्तस्य मध्यशब्दस्यार्थे वर्तत इति यावत् । 'अन्तरा त्वां च मां च कमण्डलुः' इति ।

---

1. क्रियाविशेषत्वात्–म. 2. उपसर्जने तु–म. 3. शराशरायत्–म. 4. अजराजर्यम्–म. 5. सत्रम् इत्यधिकम्–म. 6. द्वितीयाद्यर्थवचनम्–म. 7. तत्र–म. 8. तत्र इत्यधिकम्–म. 9. सजातीयत्वं–म. 10. °विजातीयसम्भवे–म. 11. अटाबन्तस्य–म. 12. इत्यपवादत्वम्–म.

तव च मम च मध्ये कमण्डलुरित्यर्थः । अत्र [1]यथा [2]मध्यस्यावध्यपेक्षायामवधिभूताभ्यां युष्मदस्मद्भ्यां योगः, तथाऽऽधारस्याधेयपरतन्त्रत्वादाधेयेन कमण्डलुनापि योगात्ततोऽपि द्वितीया प्राप्नोति, नैष दोषः, कमण्डलुरित्यत्र तिष्ठत्यस्तीति वा क्रियापदानुषङ्गात् कमण्डलुः [3]कर्ता, स च तिङाऽभिहित इति प्रथमैव भविष्यति, कारकविभक्तित्वात् । तदेतत् 'सहयुक्तेऽप्रधाने' (२.३.१९) इत्यत्रोपपादयिष्यामः । [4]निपातयोर्ग्रहणादिह न भवति, किं तेन तयोरन्तरेण ज्ञातेन ! विशेषवचनोऽयम्--'अन्तरायां पुरि वसति' इति [5]स्रुघ्नस्य प्राकार इति, नात्र स्रुघ्नस्यान्तराशब्दार्थेन योगः, किं तर्हि ? प्राकारेण ॥

## ५. कालाध्वनोरत्यन्तसंयोगे ।

'मासमधीते' इति । ननु कर्मत्वादेवात्र द्वितीया सिद्धा, कथम्[6] ? 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम्' (वा.१.४.५१-भाष्यम्) । अवश्यं [7]कर्मसञ्ज्ञैवाश्रयणीया--आस्यते मासः, आसितव्यः, आसित[8] इति कर्मणि लकृत्यक्तखलर्था यथा स्युरिति, सत्यम्; इदमप्यवश्यं [9]वक्तव्यम्--द्रव्यगुणाभ्यामत्यन्त[10]संयोगे द्वितीया यथा स्यादिति । तत्र क्रियात्यन्तसंयोगेऽपि परत्वादनेनैव युक्ता द्वितीया । मासस्येति 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (२.३.६४) इति षष्ठी ॥

## ६. अपवर्गे तृतीया ।

'अपवर्गः फलप्राप्तौ सत्यां [11]क्रियापरिसमाप्तिः' इति । तत्रैवापवर्गशब्दो लोके प्रसिद्ध इति भावः। [12]'कर्तृव्यावृत्तौ' इति । अशक्त्यादिना [13]कर्तृरुपरमादित्यर्थः, तत्र मध्ये क्रिया विच्छिन्नेति [14]प्रवृत्त्यपायः, न त्वपवृक्तेति ॥

## ७. सप्तमीपञ्चम्यौ कारकमध्ये ।

'कारकध्ये' इति । मध्यस्यावधिद्वयापेक्षत्वात् [15]द्विवचनान्तेन समासः, कालाध्वनोश्च एतद्विशेषणमित्याह--'कारकयोर्मध्ये यौ कालाध्वानौ' इति । 'अद्य भुक्त्वा' इत्यादि । ननु चात्र देवदत्तः एकः कर्ता, तत्कथं कारकयोर्मध्ये काल इत्याह--[16]'कर्तृशक्त्योः' इति । स्यादेवं यदि द्रव्यं कारकं स्यात्, शक्तिस्तु कारकम्, सेह भिद्यते--एका अद्य भुजेः साधनम्, अपरा द्व्यहभुजेः, तेनानयोर्मध्ये काल [17]इत्यर्थः । 'कर्तृकर्मणोः' इति । इष्वनस्यतीतीष्वासः पुरुषः स कर्ता, इष्वसनें व्यधने स्थाने वा कर्म लक्ष्यम् । 'कर्मापादानयोः' इति । कर्म तदेव सामर्थ्यात् गम्यमानं धनुरपादानं यतः शरा अपयन्ति । 'कर्माधिकरणयोर्वा' इति । कम तदेवाधिकरणमिह [18]इति निर्दिष्टः प्रदेशः । इह कालाध्वानौ द्वौ, सप्तमीपञ्चम्यौ[19] द्वे, ततश्च सङ्ख्यातानुदेशः प्राप्नोति--कालात् सप्तमी,

---

1. यथा नास्ति-म. 2. मध्यस्यावक्षेपत्वात्-म. 3. कर्तव्यः-म. 4. निपातयोगग्रहणात्-म. 5. 'स्रुघ्नस्य....नात्र' इति भागो नास्ति-म. 6. कर्मत्वम् इत्यधिकम्-म. 7. च इत्यधिकम्-म. 8. स्वासः इत्यधिकम्-ट. 9. कर्तव्यम्-म. 10. °संयोगद्वितीया-म. 11. परिसमाप्तिः-म. 12. कर्तृव्यावृत्ते-म. 13. कर्तुरुपहतत्वात्-म. 14. प्रत्यय.-म. 15. द्विवचनान्तस्य-म. 16. कर्तृशक्त्योः--मध्येकाले इति भागो नास्ति-म. 17. इत्याह-ट. 18. इति निर्दिष्टम्-म. 19. अपि इत्यधिकम्-म.ट.

अध्वनः पञ्चमीति, अत आह—'सङ्ख्यातानुदेशः' इत्यादि। '[1]अस्वरितत्वात्' इति। स्वरितेन लिङ्गेन यथासङ्ख्यमित्येतत् तत्रैव प्रतिपादितम् ॥

## ८. कर्मप्रवचनीययुक्ते द्वितीया ।

## ९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।

यस्मादधिकं तदस्मिन्नधिकमिति च [2]निर्देशादधिकशब्दयोगे पर्यायेण सप्तमीपञ्चम्यौ भवतः। 'उपखार्यां द्रोणः' इति। 'उपोऽधिके च' (१.४.८७) इति कर्मप्रवचनीयसञ्ज्ञा। 'यस्य चेश्वरवचनम्' इत्यादि। द्वयमनेनोच्यते, द्वयोरपि भवति, तत्रापि पर्यायेणेति तत्र द्वयोरपि तावद्भवति, कथम्? ईश्वर उच्यते येन तदीश्वरवचनमैश्वर्यम्, अथ वा [3]ईश्वरशब्दो भावप्रधानः ईश्वरः तस्योक्तिरीश्वरवचनम्, यस्य स्वामिन ईश्वरत्वमुच्यते ततः सप्तमीत्यर्थः। अथ वा—यस्येति स्वं निर्दिश्यते, यस्य स्वस्येश्वर उच्यते ततः स्वात् सप्तमीत्यर्थः। पर्यायेण [4]वा भवति; शेषविषये कर्मप्रवचनीयविभक्त्यारम्भादेकत उत्पन्नया विभक्त्या द्विष्ठस्यापि सम्बन्धस्याभिधानात्। 'अधिब्रह्मदत्तः' इति। 'सप्तमी शौण्डैः' (२.१.४०) इति समासपक्षे ब्रह्मदत्ताधीना इति भवति विभक्त्यर्थवृत्तित्वेऽधिब्रह्मदत्तमित्यव्ययीभावः। अयं योगः शक्योऽवक्तुम्, [5]स्वामिन्याधारे पञ्चालाः स्थिताः, स्वेष्वाधारेषु ब्रह्मदत्तः स्थितः, [6]तत्र यदा यदधिकरणम् [7]तत्र सप्तमी भविष्यति, एवं च कृत्वा 'अधिरीश्वरे' (१.४.९७) इति कर्मप्रवचनीयसञ्ज्ञा[8] न वक्तव्या, ऐश्वर्यविषयश्चाधिः क्रियया नैव युज्यते। अतो गत्युपसर्गत्वबाधार्थाऽपि न युज्यते ॥

## १०. पञ्चम्यपाङ्परिभिः ।

## ११. प्रतिनिधिप्रतिदाने च यस्मात् ।

यस्मादित्यनेनैव सूत्रेण पञ्चमी। 'मुख्यसदृशः प्रतिनिधिः' इति। मुख्यः क्वचित् कार्ये रूढः, यश्च तदभावे तत्कार्ये प्रतिनिधीयते स [9]तत्प्रतिनिधिः। कर्मणि 'उपसर्गे घोः किः' (३.३.९२)। एवं प्रतिदानमित्यपि, कर्मण्येव ल्युट्। [10]'दत्तस्य' इति। अथात्रानेनैव सूत्रेण पञ्चमी प्राप्नोति, यथा—यस्मादिति, एवं तर्हि कर्मणि षष्ठी। ननु न दत्तमेव प्रत्यर्प्यते, किं तर्हि? द्रव्यान्तरम्, [11]सत्यम्; तुल्यमूल्यत्वात्तदेव प्रत्यर्पितमिति प्रतिपत्तिः; प्रतिनिर्यातनम् = प्रत्यर्पणम्, अत्र भावे ल्युट्। 'यस्मात् प्रतिनिधिः' इति। सूत्रवदेव पञ्चमी। एवं [12]यतश्चेत्यत्रापि। 'अर्जुनतः प्रति' इति। प्रतियोगे पञ्चम्यास्तसिः। अर्जुनो युद्धादौ प्रसिद्धः, तत्सदृशोऽभिमन्युरित्यर्थः। 'माषान्' इत्यादि। ये पूर्वं गृहीतास्तिलास्तेभ्यो माषाः प्रतिदानम्। 'सम्बन्धिसम्बन्धात्' इति।

---

1. स्वरितत्वात्–म. 2. निर्देशादधिशब्देन–म. 3. ईश्वरयोरपि भवति इत्यधिकम्–म. 4 वा नास्ति–म. 5. कथम् इत्यधिकम्–म. 6. इति इत्यधिकम्–म. 7. तदा इत्यधिकम्–म. 8. अपि इत्यधिकम्–म. 9. तत् नास्ति–म. 10. ततस्यैव–इ. म. 11. सत्यम् नास्ति–म. 12. यतस्य–म.

प्रतिनिधिर्मुख्यमपेक्ष्य भवति, प्रतिदानमपि पूर्वदत्तम्, ततश्च यस्य कर्मप्रवचनीयस्य प्रतिनिधिप्रतिदानाभ्यां योगस्तस्य ताभ्यामपि मुख्यपूर्वदत्ताभ्यां तद्द्वारको योगोऽस्तीत्यर्थः ॥

## १२. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।

'चेष्टाक्रियाणाम्' इति । वस्तुव्याख्यानमेतत्, सूत्रे तु [1]सप्तमी चेष्टायामिति । 'परिस्पन्दनक्रियाणाम्' इति । परिस्पन्दन एव चेष्टाशब्दः प्रसिद्ध इति भावः । 'स्वं रूपम्' इति वचनात् स्वरूपग्रहणाशङ्कायामाह—'आप्त्यर्थग्रहणम्' इति । सप्तमीनिर्देशादिति भावः । सप्तमीनिर्देशे ह्यनध्वनि कर्मणीत्यन्वयः । [2]नानध्वनः प्रकृतेरिति अर्थ एव कर्म नाध्वशब्दः, [3]तेनाध्वपर्यायेभ्योऽपि चतुर्थी न भवति । द्वितीया तु 'कर्मणि द्वितीया' (२.३.२) इति भवति ।

'आस्थितः सम्प्राप्तः' इति गन्त्राधिष्ठित इत्यर्थः । 'यत्र तु' इति । यदोत्पथेन पन्था एवाक्रमितुमिष्यते तदा भवत्येव चतुर्थीत्यर्थः । इह कस्मान्न भवति—अजां नयति ग्राममिति ? अगत्यर्थत्वात् । प्रतीता ह्यत्र गतिं त्वसौ नयतेरर्थः, प्रापणवाचित्वात् । इह तर्हि स्त्रियं गच्छतीति चतुर्थी प्राप्नोति ? [4]सिद्धं त्वसंप्राप्तवचनात्, असंप्राप्तं [5]वस्तु गमनेन संप्रेप्स्यते तस्मिन्नकर्मणीति वक्तव्यम्, स्त्री तु संप्राप्तैव[6] इति चतुर्थ्यभावः । बाधनश्चानपवादः । संप्राप्तो ह्यध्वा, यदा त्वसंप्राप्तः संप्रेप्स्यते तदा भवितव्यमेव चतुर्थ्येत्युक्तं पुरस्तात् ।

'न चतुर्थ्येव' इति । नञः काक्वा प्रयोगाद् [7]विकल्पेतेत्यनेनान्वयः । कर्मणि चतुर्थ्यां विकल्पितायां 'तथायुक्ते कर्मणि द्वितीया' इत्येव द्वितीया भविष्यतीति भावः । 'ग्रामाय गन्ता' इति । द्वितीया तावत् कृद्योगे षष्ठीं बाधते, तथा च तुल्यकक्षा चतुर्थी द्वन्द्वेन प्रतिपाद्यत इति चतुर्थ्यपि कृद्योगे भवतीति भावः ।

अयं योगः शक्योऽवक्तुं, कथम् ? संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म । तत्र यदा गमनस्य संदर्शनादीनां च स्वरूपभेदो विवक्ष्यते तदा संदर्शनादिकर्मणा गमनेनाभिप्रेयमाणस्य ग्रामस्य संप्रदानत्वाच्चतुर्थी । अभेदविवक्षायां तु गमनस्य कर्मत्वाभावाद् ग्रामः कर्मैव भवतीति द्वितीया सिद्धा नार्थ एतेनेति भाष्यकारस्य पक्षः । तत्र कृत्प्रयोगे षष्ठ्येव भवति ॥

## १३. चतुर्थी संप्रदाने ।

'तादर्थ्ये' इति । तच्छब्देन कार्यं प्रति निर्दिश्यते, तस्मै इदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजकं [8]कारणमभिधीयते । तदर्थस्य भावस्तादर्थ्यमिति ष्यञा कार्यकारणसम्बन्धोऽभिधीयते, 'समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेन' (सी.प. १३०) इति वचनात् । तत्र द्विष्ठत्वेऽपि सम्बन्धस्य षष्ठीवद्विशेषणादेव चतुर्थी भवति—यूपाय दार्विति । हेतुतृतीयापि विशेष्यान्न भवति । हेतुहेतुमद्भावस्यापि चतुर्थ्यैव प्रत्यायितत्वात् । षष्ठीविषये च हेतुतृतीया । इह तु प्रातिपदिकार्थस्याव्यतिरेकात् प्रथमैव भवति । यदि तर्हि तादर्थ्यं उपसङ्ख्यानं

---

1. सति इत्यधिकम्–म. 2. वाध्वनः प्रकृतेः–म. 3. °पर्यायियोगेऽपि–म. 4. विरुद्धं न संप्राप्तवचनात्–म. 5. यद्वस्तु–ट. 6. एव नास्ति–म. 7. विकल्प्येत–ट. 8. कर्म–म.

क्रियते, नार्थः सम्प्रदाने चतुर्थ्या, योऽपि ह्युपाध्यायाय गौर्दीयते उपाध्यायार्थः स भवति। अवश्यं संप्रदानग्रहणं कर्तव्यम् 'रुच्यर्थानां प्रीयमाणः' (१.४.३३) इत्याद्यर्थम्।

'क्लृपि सम्पद्यमाने' इति। संपत्तिरभूतप्रादुर्भावरूपोत्पत्तिरिह गृह्यते, तत्र यद्रूपमुपजायते ततो विकाराच्चतुर्थी। 'मूत्राय कल्पते यवागूः' इति। प्रकृतिविकारयोर्भेदविवक्षायां चतुर्थी। अभेदविवक्षायां तु मूत्रं संपद्यते यवागूरिति प्रथमैव भवतीति केचिदाहुः। अन्ये त्वभेदविवक्षायामेव [1]चतुर्थीमिच्छन्ति। यदा तु 'जनिकर्तुः प्रकृतिः' (१.४.३०) इत्यपादानत्वं विवक्ष्यते, तदा विकाराच्चतुर्थी न भवतीति केचिदाहुः—मूत्रं सम्पद्यते यवाग्वा इति। अन्ये तत्रापि चतुर्थीमिच्छन्ति—मूत्राय सम्पद्यते यवाग्वा इति।

'उत्पातेन' इति। प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः। 'अरोचकिने' इति। अरुचिः = अरोचकम्, 'रोगाख्यायां ण्वुल्' (३.३.१०८) इति ण्वुल्, बहुलवचनादस्त्रीलिङ्गता॥

## १४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः।

'क्रिया क्रियार्थोपपदं यस्य' इति। ननु नास्मिन्नर्थेऽक्षराणि सन्ति तत्राह—'तुमुन्ण्वुलौ' इत्यादि। परिभाषितमुपपदं [2]क्रियार्थमन्यत्र संभवतीत्ययमेव विषयो [3]गृह्यते। अत्र च विषये क्रियैव क्रियार्थोपपदं तेनायमर्थो लभ्यत इति भावः। 'यत्र गम्यते चार्थो न च प्रयुज्यते शब्दः स स्थानी' इति स्वनिकायप्रसिद्धिमाश्रित्याह—'स्थानिनोऽप्रयुज्यमानस्य' इति। 'एधेभ्यो व्रजति' इति। ननु चात्र 'तादर्थ्ये' इत्येव चतुर्थी सिद्धा, इहापि तर्हि प्राप्नोति—एधानाहर्तुं व्रजतीति? [4]हरणार्था व्रजिक्रिया, न पुनरेधार्था [5]चेदुदाहरणेऽपि तर्ह्येवमेव। एतावांस्तु विशेषः—[6]प्रत्युदाहरणे शब्दः प्रयुज्यते, उदाहरणे तु नेति प्रतीयमाना च क्रिया कारकव्यपदेशस्य निमित्तम्। तत्र यथा प्रत्युदाहरणे आहरणापेक्षया द्वितीया सम्भवत्येवमुदाहरणेऽपि प्रतीयमानहरणापेक्षया द्वितीयैव स्यादित्ययमारम्भः। 'भक्षिरत्र स्थानी' इति। प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। 'न तु क्रियार्थोपपदः' इति। यद्यपि पिण्डीभक्षणार्थं गृहप्रवेशनं तथापि पारिभाषिकमुपपदं न भवतीति भावः। 'शकटेन' इति। ननु 'मध्येऽपवादाः' (व्या.प. १०) इति द्वितीयामेव चतुर्थी बाधिष्यते, न करणतृतीयाम्। एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता। इदं त्वत्र प्रत्युदाहरणं द्रष्टव्यम्—ब्राह्मणस्यैधेभ्यो व्रजतीति। असति कर्मग्रहणे इतरोपपदविभक्तिवदियमपि शेषविषयैव स्यात्॥

## १५. तुमर्थाच्च भाववचनात्।

'तुमुना समानार्थस्तुमर्थः' इति। वस्तुव्याख्यानमेतत्, विग्रहस्तु तुमर्थोऽस्येति तुम्शब्देन तुमर्थो लक्ष्यते। 'तुमर्थभाववचनप्रत्ययान्तात्' इति। तुमर्थो भाववचनः प्रत्ययोऽन्तेऽस्य तत्तथोक्तम्। 'तस्येदं ग्रहणम्' इति। स एव हि तुमर्थो [7]भाववचनः, नान्यः। 'पाकाय व्रजति' इति। नन्वत्र [8]तादर्थ्येव सिद्धम्; न चैवं पाचको

---

1. चतुर्थ्यामिह वृत्तिः–म. 2. क्रियार्थमेतत्–म. 3. लक्ष्यते–म. 4. अथात्र इत्यधिकम्–म. आहरणार्था–ट. 5. चेत नास्ति–म. 6. 'प्रत्युदाहरणे शब्दः' नास्ति–म. 7. भाववचनः नास्ति–म. 8. तादर्थ्यादेवं–इ.

व्रजतीत्यभाववचनादपि प्रसङ्गः, अत्र कर्ता प्रधानं न च तं प्रति तादर्थ्यमस्ति, किं तु प्रकृत्यर्थं प्रति; एवं तर्हि भाववचनेनैव तादर्थ्यस्य द्योतितत्वाच्चतुर्थी न सिध्यतीति सूत्रारम्भः। न ह्येतल्लक्षणनेत्रो ज्ञातुमर्हति घञादीनां चतुर्थीसापेक्षाणामेव तादर्थ्यप्रकाशने शक्तिरिति।

तुमर्थग्रहणं शक्यमकर्तुम्, कथम्? पाकः, त्यागः, राग इति क्रियार्थोपपदग्रहणमनुवर्तिष्यते। [1]नन्वेतत् षष्ठीनिर्दिष्टम्, पञ्चमीनिर्दिष्टेन चेहार्थः; अर्थाद्विपरिणामो भविष्यति, भाववचनादित्यनेन सम्बन्धात् न वै भाववचनस्य क्रियार्थोपपदत्वं सम्भवति, किं तर्हि? धातोः। धातोर्भाववचनस्यासम्भवादेवं विज्ञास्यते--क्रियार्थोपपदाद्धातोर्यो विहितो भाववचन इति॥

## १६. नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च।

'अलमिति पर्याप्त्यर्थग्रहणम्' इति। अलमित्यर्थग्रहणं तत्रापि [2]पर्याप्तिग्रहणमित्यर्थः। तत्र तावदर्थग्रहणं तस्मै प्रभवतीति निर्देशात्, इह चालं कुरुते कन्यामिति 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' (चां.प.६१) इति द्वितीया भविष्यति। एवमलमोदनेनेत्यत्रापि करणे तृतीया, ओदनेन न किंचित् साध्यमित्यर्थावगमात्, तेन भूषणप्रतिषेधयोरग्रहणात् पर्याप्तेरेव ग्रहणम्। 'चकारः पुनः' इत्यादि। अन्यथा स्वस्तियोगे चतुर्थ्या अवकाशः-- स्वस्ति जाल्माय, जाल्मत्वादाशीरभावात् भूतकथनमेतत्, कुशलार्थैराशिषि चतुर्थी चेत्यस्यावकाशः--अन्ये कुशलार्थाः, कुशलं देवदत्तस्य, कुशलं देवदत्ताय; स्वस्ति गोभ्यो भूयात्, उभयप्रसङ्गे परत्वात् पक्षे षष्ठी स्यात्॥

## १७. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु।

'मन्यतेः कर्म मन्यकर्म' इति। 'मन ज्ञाने' (धा.पा. ११७६) इत्यस्य दैवादिकस्य धातोः श्यना उपलक्षणम्, न तु प्रयोगस्थस्य श्यनन्तस्यानुकरणमित्यर्थः। तेन श्यनोऽभावेऽपि भवति--'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थत्' इति। श्यना तु तानादिकस्य 'मनु अवबोधने' (धा.पा.१४७१) इत्यस्यैव निरासः। 'अनादरः तिरस्कारः' इति। न त्वादराभावमात्रम्, कथम्? [3]अनृतादिवन्नञः प्रतिपक्षवाचित्वादिति भावः। 'मन्यकर्मणि प्रकृष्टकुत्सितग्रहणम्' (कात्या.वा.१४६५) इति वार्तिकम्, यद्वाचिनश्चतुर्थी विधीयते ततः प्रकर्षेण यदि कुत्सा प्रतिपादयितुमिष्यते तदा चतुर्थी भवति, न तु सामान्यविवक्षायाम्। तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं संगच्छत इति मत्वाह--'न त्वा तृणाय' इति। 'मन्यकर्मण्यनादर उपमाने विभाषा प्राणिषु' इति आपिशलिरधीते स्म, न तत्र प्रतिषेधापेक्षा, तथा च भट्टिप्रयोगो [4]निदर्शनीयः॥

'अश्मानं दृषदम्' इत्यादि। तद्व्याख्यानमेतत्। 'यस्य माता न पश्यति' इति। दर्शनयोग्यम्।

'व्यवस्थितविभाषा च' इति। ननु येषु प्राणिषु नेष्यते, ते नावादयो भविष्यन्तीति किं व्यवस्थितविभाषया? वृत्तिकार एवात्र साक्षात् प्रयोजनं वक्ष्यति।

---

1. 'नन्वेतत्--भाववचनः' इति भागो नास्ति--म. 2. पर्याप्त्यर्थग्रहणम् इति भावः--म. 3. अधर्मवृत्तादिवत्--म. 4. दर्शितः--म.

'न त्वा नावम्' इति । नावा तार्यमुदकं नाव्यं तद्यदेव तीर्णं तदैव नावमपि सन्तीर्णां त्वां नाहं नावं मन्ये, प्रयोजनस्य निष्पन्नत्वादिति [1]भावः । एवं यावन्न भुक्तं श्राद्धमित्यत्रापि द्रष्टव्यम् । 'प्राणिषु तूभयम्' इति । विषयविभागेन । 'एतदपि' इति । एतदेव साक्षात् प्रयोजनमन्यत्र नावादित्वादेव सिद्धेः [2]इत्यवोचाम ॥

## १८. कर्तृकरणयोस्तृतीया ।

'प्रकृत्याभिरूपः' इति । क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठी [3]प्राप्नोति ।

'प्रयेण याज्ञिकः' इति । प्रायशब्दो बह्वर्थः । बहवो याज्ञिका इत्यर्थः । 'गार्ग्योऽस्मि' इति । प्रथमा षष्ठी वा प्राप्नोति । 'समेन' इति । अत्र द्वितीया प्राप्नोति । 'द्विद्रोणेन' इति । द्वयोर्द्रोणयोः समाहारः द्विद्रोणं पात्रादिः, द्वौ द्रोणौ कृत्वेत्यर्थः, अत्रापि द्वितीया प्राप्नोति । 'पञ्चकेन' इति । पञ्च परिमाणमस्य पञ्चकः सङ्घः, तत्र सङ्घसङ्घिनोरभेदविवक्षायां पशूनित्यनेनैतत् समानाधिकरणमित्यत्रापि द्वितीयैव प्राप्नोति । 'साहस्रेण' इति । सहस्रपरिमाणः सङ्घः साहस्रः । सर्वमन्यत् पूर्ववत् । इत्युपसङ्ख्यानमारभमाणस्याभिप्रायः ।

प्रत्याख्यानं तु---इह तावत् प्रकृत्याभिरूप इति गम्यमानापि क्रिया करणादिव्यपदेशस्य निमित्तम् । इह च करोतिक्रिया गम्यते, करणान्तरव्युदासाय च प्रकृतेः करणत्वं विवक्षितं स्वभावेनायमभिरूपः कृतः, न वस्त्रालङ्कारादिनेत्यर्थः । प्रायेणेत्ययमर्थः---अस्मिन् ग्रामे ये विप्राः सन्ति ते बाहुल्येन यज्ञमधीयत इति तत्र याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यस्य करणत्वं सङ्घीभूय यज्ञमधीयत इत्यर्थः । इह तर्हि कथं विशिष्टवेषं कंचित् दृष्ट्वाध्यवस्यति---प्रायेणायं याज्ञिक इति ? अत्राप्ययमर्थः---अस्मिंस्तावद्याज्ञिकानामाचारादिबाहुल्यमुपलभ्यते, अतोऽनेनाचारादिबाहुल्येन याज्ञिकोऽयं [4]जनैर्ज्ञायत इति । तत्र प्रतीयमानज्ञानं प्रति करणत्वम् । केचित्---प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो [5]ज्ञातमित्यस्यार्थे वर्तते इत्याहुः । दृश्यते च [6]प्रायेण सामग्र्यविधौ गुणानामिति, प्रायेण निष्क्रामति चक्रपाणाविति च । 'गोत्रेण' इति । अनेनाहं ज्ञाये इति ज्ञानक्रियायामस्मीति भवनक्रियायां वा गोत्रस्य करणत्वम् । 'समेन' इति । पथो गमने करणत्वं समेन पथेत्यर्थः । 'द्विद्रोणेन' इति । द्विद्रोणाद्यर्थे मूल्ये द्विद्रोणादिशब्दस्तस्य च क्रयं प्रति कारणत्वम्, द्विद्रोणादीनां च [7]मूल्यम्, तेन द्विद्रोणाद्येव क्रीयते इत्यर्थभेदोऽपि नास्ति ॥

## १९. सहयुक्तेऽप्रधाने ।

क्रियागुणद्रव्यैर्द्वयोः सम्बन्धे सति सहशब्दस्य प्रयोगो भवति, अतः 'पुत्रेण सहागतः पिता' इत्यादीनि क्रियादिसम्बन्धे यथाक्रममुदाहरणान्युपन्यस्तानि । नन्वत्र सर्वतः सहार्थस्वभावादेव पितुः पुत्रस्य वा गमनादिना सम्बन्धः प्रतीयते, तत्कुतः पितुः प्राधान्यम् ? केचिदाहुः---यस्य क्रियादिसम्बन्धो विशिष्टकालः प्रज्ञातः स यदान्यस्याप्रज्ञातविशिष्टकाल[8]क्रियासम्बन्धस्य तत्प्रतिपादनार्थमुपादीयते, यथा---अयं पुरुषः [9]कदागतः इत्यपेक्षायाम्

---

1. अर्थः--म. 2. इत्यर्थः--म. 3. अत्र इत्यधिकम्--म. 4. जनैः नास्ति--म. 5. नूनमित्यस्यार्थोऽवगतः--म. 6. 'प्रायेण सामग्र्यविधौ गुण्यनाम्' नास्ति--म. 7. यत् इत्यधिकम्--म. 8. °क्रियासम्बन्धार्थस्य--म. 9. कुत आगतः--म.

'राज्ञा सहागतः' इति पुरुषागमनं विशिष्टकालमुपपादयितुं वाक्यं प्रवर्तत इति पुरुषस्य प्राधान्यम्, राज्ञस्तूपलक्षणत्वेनोपात्तत्वादप्राधान्यमिति। एवं तु 'भृत्यैः सह राजागतः' इत्यत्र न स्यात्, न हि भृत्यागमनं प्रसिद्धकालं येन तत्कालत्वं राजागमनस्य प्रतिपाद्येत। यत्र चोभयोरप्यज्ञातक्रियादिसम्बन्धस्तत्रापि न स्यात्--पुत्रेण [1]सहागतः पितेति। तस्माद्वक्तव्यमप्राधान्यमत आह--'पितुरत्र' इत्यादि। पूर्वं प्रज्ञातोऽप्रज्ञातो वा यस्य क्रियादिसम्बन्धः शब्देनोच्यते तस्य प्राधान्यम्। [2]यस्य तु सहार्थान्यथानुपपत्त्या प्रतीयते तस्याप्राधान्यम्।

कस्य पुनः शब्देनोच्यते? कस्य वा प्रतीयते? यस्य विवक्ष्यते। एतदुक्तं भवति--द्वयोस्तावत् [3]क्रियासम्बन्धे सति सहशब्दस्य प्रयोगः, तत्र यदा द्वयोरपि क्रियादिसम्बन्धः शब्देनोच्यते--सहागतौ पितापुत्राविति, तदा द्वयोरपि प्राधान्यान्न भवति[4]; यदा त्वेकस्य क्रियादिसम्बन्धं शब्देन प्रतिपिपादयिषत्यपरस्य सहार्थान्यथानुपपत्त्या तदा तस्याप्राधान्यात् तद्वाचिनस्तृतीयेति। एवं च कुत्वा सह शाखया प्रस्तरं प्रहरतीति यद्यपि प्रस्तरस्य प्रहरणसम्बन्धः प्रज्ञातः, सूक्तवाक्येन प्रस्तरं प्रहरतीति, शाखायास्त्वज्ञातः, तथाप्युक्तेन न्यायेन शाखाशब्दात् तृतीया सिध्यतीति विभक्तिव्यत्यासो न वाच्यः। ननु पुत्रेण सहागत इत्यादौ पितुरेव कर्तुः क्तादिभिरभिधानम्, न त्वप्रधानस्य पुत्रादेस्तस्यापि तु साहचर्यसामर्थ्यात् कर्तृत्वं प्रतीयत इत्यनभिहिते [5]कर्तृकरणयोरिति, तृतीया सिद्धा। इह तर्हि पुत्रेण सहागमनं पितुरिति '[6]कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठी प्राप्नोति, इह च तिलैः सह माषान् वपति, तिलान् माषान् वपतीत्यर्थप्रतीतेर्द्वितीया प्राप्नोति, इह च पुत्रेण सह स्थूलः, पुत्रेण सह गोमानिति द्रव्यगुणसम्बन्धप्रतिपादन एव तात्पर्यमिति [7]क्रियासम्बन्धस्यैवाभावात् कर्तृसम्बन्धोऽपि नास्तीत्यारभ्यमेवावश्यं सूत्रम्। 'सहार्थेन योगे विधानात्' इति। युक्तग्रहणादर्थग्रहणं लभ्यते, अन्यथा 'सहे प्रधाने' इत्येव वाच्यं स्यात्। विनापि सहशब्देन 'वृद्धो यूना' (१.२.६५) इति निपातनादिति क्वचित् पठ्यते।

इहाप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते, पितुस्तृतीया मा भूदिति; [8]तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वात् प्रथमा भविष्यति, नार्थोऽप्रधानवचनेनेति मन्यमानः पृच्छति--'अप्रधान इति किम्' इति। 'शिष्येण सहोपाध्यायस्य गौः' इति। यथात्राप्रधाने षष्ठीविषये तृतीया,[9] एवं प्रधानेऽपि स्यादिति मन्यते। अत्राहुः—यथा ग्रामं न गच्छतीत्यादौ ग्रामगमनयोः पूर्वमभिसम्बन्धः पश्चान्नञा प्रतिषिध्यते, एवमुपाध्यायस्य पूर्वं गवा सम्बन्धः, पश्चात् तत्सम्बन्धविशिष्टस्य गोः सहार्थेन योगः, अन्यथा कस्य सहत्वं प्रतिपाद्येत, अतो गवा सम्बन्धस्यान्तरङ्गत्वादुपाध्यायात् षष्ठी भविष्यतीति नार्थ एतेन॥

## २०. येनाङ्गविकारः।

अङ्गशब्दोऽवयववाची प्रसिद्धः; ततश्चायं सूत्रार्थः स्यात्--येन गुणेनाङ्गस्याक्ष्यादेर्विकारस्ततस्तृतीयेति, ततश्चाक्षि काणमस्येत्यादावेव तु स्यात्, काणादेर्गुणवचनादेव च स्यात्; अक्ष्णा काण इत्यादावक्ष्यादेर्न स्यादित्यालोच्यान्यथा व्याचष्टे--'अङ्गशब्दोऽत्र' इत्यादि। अर्श आद्यच्प्रत्ययान्तः शरीरवचनोऽङ्गशब्दः सूत्रे उपात्त इत्यर्थः। 'येन' इति च यदपेक्षमङ्गिनोऽङ्गित्वं स हेतुत्वेन निर्दिश्यते, हेतुत्वेनेतिवदन्येनेति हेतौ तृतीयेति दर्शयति।

1. समागतः–म. 2. यत्र–म. 3. क्रियादिसम्बन्धे–म. 4. तृतीया इत्यधिकम्–ट.म. 5. कर्तरि इत्यधिकम्–ट.म. 6. 'कर्तृकरणयोः कृति' नास्ति–म. 7. क्रियासम्बन्धस्य–म. 8. तत्र- नास्ति–म. 9. भवति इत्यधिकम्–म.

'विकृतेन' इति । सामर्थ्यादेवैतल्लभ्यते, न ह्यविकृतमङ्गमङ्गिनो विकारं प्रति हेतुः । 'अक्ष्णा काणः' इति । कथं पुनः पुरुषः काणः, यावताक्षिधर्मः काणता, तेनाक्ष्येव काणं भवति न पुरुषः ? इत्याह—'अवयवधर्मेण' इति । तदेवं यदङ्गगतो विकारोऽवयवधर्मः समुदाय आरोपादङ्गिनः प्रतिपाद्यते, तत्र यदङ्गगतो विकारः ततस्तृतीया भवति । [1]कथं पुनरक्षिशब्दः प्रयुज्यते, यावता काणशब्दोऽक्षिगतमेव विकारमाचष्टे, तत्र काणो देवदत्त इत्युक्ते नैव सन्देहो भवति—किं स्वयमेव काणः, किं वाक्ष्णः काणतयेति, नाप्येवं सन्देहः—किमक्ष्णः काणतयासौ काणः, किं वा पादस्येति, तदनर्थकोऽक्षिशब्दस्य प्रयोगः ? एवं पादेन खञ्जः, पाणिना कुणिरित्यादौ पादादीनाम् ? उच्यते—अक्ष्याद्युपक्रमे वाक्येऽक्ष्णेत्युक्ते न ज्ञायते किं निरूपयति ? किं वा काण इति ? तत्र निरूपयत्यादि-निवृत्तये काणशब्दप्रयोगः, यथा—द्वावानय कौ तौ द्वावित्युक्ते ब्राह्मणाविति ।

'अङ्गविकार इति किम्' इति । अङ्गग्रहणं प्रति प्रश्नः । क्वचित्तु तथैव पाठः । 'अक्षि काणमस्य' इति । नन्वत्र परत्वात् प्रथमा भविष्यति, न; असत्यङ्गग्रहणेऽत्रैव स्यात्, मुख्यो ह्यत्र विकारः । उदाहरणे तु गौणः, अवयवधर्मस्यावयविन्यारोपात् ॥

## २१. इत्थम्भूतलक्षणे ।

इदंशब्दात् सन्निहितवाचिनः 'प्रकारवचने थाल्' (५.३.२३) 'इदमस्थमुः' (५.३.२४) इति थमुप्रत्यये कृते इत्थमिति भवति । न चात्र किंचित् सन्निहितमस्तीतीत्थंशब्दः सन्निहितपरित्यागेन प्रकारविशेष-माचष्टे, 'भू प्राप्तावात्मनेपदी च' (धा.पा.१८४४), 'आधृषाद्वा' (धा.पा.१८५१ इत्यनन्तरमधिकारः) इति णिजभावपक्षे गत्यर्थत्वात् कर्तरि क्तप्रत्ययस्तदाह—'कंचित्' इति । 'तस्य' इति कर्मणि षष्ठी । लक्ष्यते येनेति लक्षणम् । येन श्वेतच्छत्रादिना राजत्वादिप्रकारविशेषापन्नतयाऽन्यो लक्ष्यते तदित्थम्भूतलक्षणम् । 'तत्र' [2]इति । वर्तमानादित्यर्थः । 'कमण्डलुना छात्रमद्राक्षीत्' इति । छात्रो नाध्यायप्रोगच्छतोश्छात्रस्य हस्ते कमण्डलुः भवति, कमण्डलुना छात्रोऽयमिति ज्ञातवानित्यर्थः । यद्येवम्, ईदृशे ज्ञाने कमण्डलोः करणत्वादेव तृतीया सिध्यति ? एवं तर्हि यदायं प्रमाता प्रमितिदशायामेवात्मनः प्रमितिविशेषं प्रतिपादयितुं वाक्यं प्रयुङ्क्ते—'कमण्डलुनायं छात्रः' इति, तदा ज्ञानक्रियाया अप्रतिभासादप्रतिपाद्यत्वाच्च करणत्वासम्भवः । उदाहरणं त्वेवं व्याख्येयम्—कमण्डलुना छात्र इत्येवं रूपं ज्ञानमभूदिति । कोऽर्थः ? अद्राक्षीदिति निर्दिष्टस्य द्रष्टुर्ज्ञानविशेषोऽत्र कथ्यते, न प्रयोक्तुरित्यर्थः ।

इह कमण्डलुपाणिश्छात्र इति बहुव्रीहौ कृते कमण्डलुशब्दात् तृतीया प्राप्नोति; न च प्रत्ययलक्षणेना-प्रत्यय इति प्रातिपदिकसञ्ज्ञाप्रतिषेधः 'न ङिसम्बुद्ध्योः' (८.२.८) इति लिङ्गात्; न च 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति संप्रत्युत्पन्नायास्तृतीयाया लुग्लभ्यते, तस्याः समासप्रातिपदिकं प्रत्यनवयवत्वादित्यत आह—'इह न भवति' इति । 'समासेऽन्तर्भूतत्वात्' इति । समासार्थं प्रति गुणभूतत्वादित्यर्थः । इत्थंभूतस्य लक्षणं यत् प्रधानं तत्र तृतीया । बहुव्रीहौ तु वर्तिपदानां स्वार्थोपसर्जनान्यपदार्थाभिधायित्वान्नास्ति प्राधान्यम् ॥

## २२. सञ्ज्ञोऽन्यतरस्यां कर्मणि ।

'संजानीते' इति । 'संप्रतिभ्यामनाध्याने' (१.३.४६) इत्यात्मनेपदम्, 'ज्ञाजनोर्जा' (७.३.७९) इति जादेशः । आध्याने तु 'अधीगर्थदयेशाम्' (२.३.५२) इति षष्ठी भवति—'मातुः साञ्जानाति' इति ।

1. किमर्थम्—म. 2. 'इति—तृतीया सिध्यति' इति भागो नास्ति—म.

[1]कृत्प्रयोगे त्वनाध्यानेऽपि परत्वात् 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठी भवति—'मातुः संज्ञाता' इति ॥

## २३. हेतौ ।

'तत्प्रयोजको हेतुश्च' (१.४.५५.) इति शास्त्रीयस्य हेतोश्चकारेण कर्तृसञ्ज्ञाविधानात् कर्तृकरणयोरित्येव तृतीयायाः सिद्धत्वाल्लौकिको हेतुर्गृह्यत इत्याह—'फलसाधनयोग्यः' इत्यादि । लोके ह्यङ्कुरादिकार्योत्पादने योग्यतामात्रप्रयुक्तोऽनाश्रितव्यापारो द्रव्यगुणक्रियाविषयो बीजादिर्हेतुः । उक्तं च—

'द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्' वा.प. ३.७.२५) इति ।

'अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते' ॥ (वा.प. ३.७.२४) इति च ।

उदाहरणेषु क्रियाया अभावात् करणत्वमनाशङ्कनीयम् । 'यूपाय दारु' इत्यत्र तादर्थ्यं विवक्षितम् । न तु सदपि हेतुत्वमिति दारुशब्दात् प्रथमैव भवति ॥

## २४. अकर्तर्यृणे पञ्चमी ।

'बन्धितः' इति । बन्धेर्ण्यन्तस्य निष्ठान्तस्य रूपम् । 'शतमृणं च भवति' इति । उत्तमर्णाय धार्यमाणत्वात् । 'प्रयोजकत्वाच्च कर्तृसंज्ञकम्' इति । 'तत्प्रयोजको हेतुश्च' (१.४.५५) इति चकारेण कर्तृसञ्ज्ञाविधानात् । ननु च पूर्वसूत्रे लौकिकस्य हेतोर्ग्रहणम्, अयं तु शास्त्रीयः, शास्त्रीयस्यापि लौकिकत्वमस्त्येव । अथ वा—कस्य हेतोः पूर्वसूत्रे शास्त्रीयस्याग्रहणम्—कर्तरि सिद्धा तृतीयेति ? न त्वेवम्, पञ्चम्या असिद्धत्वादिहार्थमेव सामान्यग्रहणं स्यात् ॥

## २५. विभाषा गुणेऽस्त्रियाम् ।

'सत्त्वे निविशतेऽपैति' इति लक्षितस्य गुणस्य ग्रहणम्; तदनुरूपत्वात् उदाहरणप्रत्युदाहरणयोरिति केचित् । अन्ये तु 'पर्वतो वह्निमान् [2]धूमवत्त्वात्' इत्यादौ [3]अनेनैव पञ्चमीमिच्छन्तः परतन्त्रमात्रस्य ग्रहणं वर्णयन्ति, यथा—'यस्य हि गुणस्य भावात्' इति । 'विभाषा गुणे' इति योगविभागात् 'नास्तीह पटोऽनुपलब्धेः' इति स्त्रियामपि क्वचिद्भवति । केचित्त्वपादानपञ्चमीमेतामिच्छन्ति, तथा च 'नास्तीह घटोऽनुपलब्धितः' इति 'अपादाने चाहीयरुहोः' (५.४.४५) इति [4]तसिलपि भवति, योगविभागवादिनां त्वाद्यादित्वात् तसिः ॥

## २६. षष्ठी हेतुप्रयोगे ।

'हेतुशब्दस्य' इति । प्रयोगस्य शब्दधर्मत्वादेवमुक्तम्, न त्वनेनार्थग्रहणं व्यावर्त्यते; [5]पर्यायप्रयोगेऽपि 'निमित्तकारणहेतुषु' (वा. १२६) इति वक्ष्यमाणेन षष्ठ्या इष्टत्वात् । हेतुशब्दस्य प्रयोगे सति हेतुहेतुमद्भावलक्षणस्यैव सम्बन्धविशेषस्य नियमेन प्रतीतौ 'हेतौ' इति तृतीयापवादो योगः ॥

---

1. कृत्संयोगे—म. 2. धूमत्वात्—म. 3. अपि इत्यधिकम्—म. 4. तसिरपि—म.
5. 'पर्यायप्रयोगे—तृतीयावादो योगः' इति भागो नास्ति—म.

## २७. सर्वनाम्नस्तृतीया च ।

'सर्वनाम्नः' इति प्रयोगापेक्षा षष्ठी । 'सर्वनाम्नो हेतुशब्दस्य च प्रयोगे' इति । पञ्चम्यां तु हेतुशब्दाद्यं विधिर्न स्यात् । कथं तर्हि सर्वनाम्नस्तृतीया भवतीति ? अत्रापि सर्वनाम्नः प्रयोग इत्यर्थो द्रष्टव्यः ।

'निमित्तकारणहेतुषु' इति । यद्यप्यस्मिन् सूत्र इदं वृत्तिकारेण पठितम्, भाष्यकारेण तु 'हेतौ' इत्यत्र पठितत्वादसर्वनाम्नोऽपि [1]एतद्विभक्तिविधानं [2]गम्यते, तत्र च प्रायग्रहणादेवासर्वनाम्नः प्रथमाद्वितीये न भवतः, अन्यास्तु यथादर्शनं भवन्ति––अन्नेन कारणेन वसति, अन्नाय कारणाय वसति, अन्नात् कारणात्, अन्नस्य कारणस्य, अन्ने कारणे इति ।

'पर्यायोपादनं तु' इति । ननु विपरीतमिदं स्वरूपविधौ पर्यायोपादानं कर्तव्यम्, अर्थग्रहणे तु न कर्तव्यमिति; [3]किं चार्थग्रहणे सत्येकशेषप्रसङ्गः, विरूपाणामपि समानार्थानामेकशेषवचनात् ? एवं मन्यते––यथा आकृतिगणेषु केचिदुपलक्षणार्थं पठ्यन्ते, एवमिहापि स्वरूपपरा एव निमित्तादिशब्दा उपलक्षणार्थाः––[4]एवमर्थानां शब्दानामिति ॥

## २८. अपादाने पञ्चमी ।

'प्रासादात्' इति । अत्र ल्यबन्तस्याप्रयोगेऽप्यर्थो गम्यत इति द्वितीया प्राप्नोति ।

'आसनात्' इति । सप्तम्यत्र प्राप्नोति । प्रत्याख्यानं तु प्रेक्षणम् = चक्षुषा पदार्थानां ज्ञानम्, तैजसं चक्षुर्बहिर्निःसृत्य विषयान् गृह्णाति, निःसरणाङ्के च प्रेक्षणे धातुर्वर्तते, तत्राङ्गभूत[5]निःसरणं प्रति प्रासाद उपात्तविषयमपादानं भवति––'प्रासादात् प्रेक्षते' [6]इति, कोऽर्थः ? प्रासादप्रदेशात् चाक्षुषं तेजो निःसार्य पदार्थान् गृह्णातीति ।

'प्रश्नाख्यानयोश्च' इति । विशिष्टे प्रश्नाख्याने गृह्येते यत्र लोके पञ्चमी प्रयुज्यते । इह न भवति––कस्यायमर्थो[7] राज्ञोऽर्थ[8] इति । 'कुतो भवान्' इति । क्रियाया अभावादनपादानत्वात् फलवद्वचनप्रत्यक्षादिप्रमाणसिद्धामागमनादिक्रियामपेक्ष्येदं प्रयुज्यते, तत्र प्रयोक्तुराख्यातुश्च मनसि विपरिवर्तमानमनागमनं प्रत्यपेक्षितक्रियमपादानम्––[9]'पाटलिपुत्रात्' इति[10] ।

'यतश्च' इति । यदवधित्वेनाश्रित्याध्वकालयोः परिच्छेदस्तत इत्यर्थः । गवीधुमन्नाम नगरम् । सांकाश्यं तपोवनम् ।

[11]कृत्तिकायुक्ता पौर्णमासी कार्तिकी, पौर्णमास्याम् 'लुबविशेषे' (४.२.४) इति लुब्न भवति 'सास्मिन् पौर्णमासी' (४.२.२१) इत्यधिकारे 'विभाषा फाल्गुनी[12]श्रवणाकार्तिकीचैत्रीभ्यः' (४ २.२३)

1. एतद्विधानं–म; 2. मन्यते–म. 3. 'किंचार्थग्रहणे—उपलक्षणार्थाः' इति भागो नास्ति–म. 4. कर्तव्याताम् शब्दानाम्–म. 5. निःसारणं–म. 6. 'इति' नास्ति–म. 7. 8. अश्वः–म. 9. 'कुतः' इत्यधिकम्–म. 10. 'प्रात्याख्यानं' इत्यधिकम्–म.ट. 11. कृत्तिकाभिर्युक्ता–म. 12. °श्रावण–म.

इति निर्देशात् । अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण्, 'आग्रहायण्यश्वत्थाट्ठञ्' (४.२.२२) इति निपातनाण्णत्वम् । 'तद्युक्तात्' इति । तेन पञ्चम्यन्तार्थेनार्थद्वारेण युक्तात् काले वर्तमानान्मासादिशब्दादित्यर्थः । यद्वा—तया पञ्चम्या युक्तो योऽर्थः कार्तिक्यादिस्ततः परो यः कालो मासादिस्तत्र वर्तमानादित्यर्थः । अर्थतश्च परत्वं न शब्दत इति व्यवहितेऽपि भवति, कार्तिक्याग्रहायण्योर्मध्यवर्ती मासः कार्तिक्याः परो भवति ।

'अध्वनः' इति । तद्युक्तादित्यपेक्ष्यते । प्रत्याख्यानं तु—वाक्यैकदेशस्यात्र प्रयोगः । तदयमर्थः—गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः सांकाश्यम्, चतुर्षु योजनेषु गतेषु सत्सु सांकाश्यमिति, गतानीति च कर्मणि निष्ठा, यदा जनैर्योजनानि गतानि भवन्ति ततस्तैः सांकाश्यं प्राप्यत इत्यर्थः । यद्वा—अध्ववर्तिनां निःसरणं गमनं वाध्वन्यारोप्य निःसृत्य गतानीति ल्यपः कर्तरि क्तस्य च प्रयोगः, तस्य प्रयोगमाननिःसरणक्रियापेक्षयापादानत्वम्, गतानीति च प्रातिपदिकार्थस्याव्यभिरेकात् प्रथमा, गतेषु सत्स्विति 'यस्य च भावेन भावलक्षणम्' (२.३.३७) इति सप्तमी, आग्रहायणी मास इति कार्तिक्याः परत्र मासे गते सति आग्रहायणी भवतीत्यर्थः । तत्र दिग्योगलक्षणा पञ्चमी, सप्तमी पूर्ववत् ॥

## २९. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।

'अन्य इत्यर्थग्रहणम्' इति । व्याख्यानात् । 'निर्दिश्यमानप्रतियोगी' इति । यथा देवदत्तयज्ञदत्तयोः प्रकृतयोराह—देवदत्तः शूरः, इतरः कातर इति; तस्यान्यार्थान्तर्भावोऽस्तीति[1] चिन्त्यम् । 'ऋते यज्ञदत्तात्' इति । कथं यत्किंचिद्राजसूयमृते सोममिति ? छान्दसत्वात् कथं 'न मामृते राम रमेत वाली' इति ? 'क्व कर्म प्रक्रान्तं फलति पुरुषाराधनमृते' इति च ? निरङ्कुशाः कवयः ।

'शब्दग्रहणम्' इति । सति हि तस्मिन् दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदलोपी समासो [2]लभ्यते, तेन यदा कदाचिद्दिशि दृष्टेन संप्रति देशकालवर्तिनापि योगे भवति—ग्रामात् पूर्वो देश, चैत्रात् पूर्वः फाल्गुन इति । अवयववाचिभिस्तु योगे न भवति—'पूर्वं कायस्येति, 'तस्य परमाम्रेडितम्' (८.१.२) इति निर्देशात् । 'ननु चायमपि' इति । सत्यपि देवदत्तेनेत्यादावदिक्शब्दार्थमञ्चूत्तरपदग्रहणं न भवति, दिक्शब्दैः साहचर्यादिक्शब्दस्यैव ग्रहणादिति भावः । 'दक्षिणा' इति । 'दक्षिणादाच्' (५.३.३६), 'आहि च दूरे' (५.३.३७), 'उत्तराच्च' (५.३.३८) इत्याजाही प्रत्ययौ ॥

## ३०. षष्ठ्यतसर्थप्रत्ययेन ।

अत्र तस्यतेनेञ्पूर्वस्य विवक्ष्यतसिति रूपसम्भवेऽपि प्रत्यक्षश्रुतत्वात् प्रत्ययाप्रत्ययपरिभाषया च प्रत्ययस्यैव ग्रहणमिति सिद्धं, नार्थः प्रत्ययग्रहणेन । 'पुरस्तात्' इति । 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' (५.३.३९), 'अस्ताति च' (५.३.४०) इति पूर्वशब्दस्य पुरादेशः । 'उपर्युपरिष्टात्' इति । ऊर्ध्वशब्दस्योपशब्द आदेशो रिल्रिष्टातिलौ प्रत्ययौ भवतः 'ततः [3]पश्चाद्धस्ती' इति भाष्यकारप्रयोगात् पञ्चमी ॥

---

1. 'वा न' इत्यधिकम्—म.ट. 2. लक्ष्यते—म.ट. 3. 'व्रजति इत्यधिकम्—म.

## ३१. एनपा द्वितीया ।

'तत्रागारं धनपति गृहादुत्तरेणास्मदीयम्' (मे. सं. २.८) इत्यधिकारात् परेण वासरूपविधिनाऽवश्यं भवति, ततः परेण नायमनुवर्तत इत्यादीनां चिन्त्यं साधुत्वम् ॥

## ३२. पृतग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।

अन्यतरस्यांग्रहणेन पक्षे यथाप्राप्तस्याभ्यनुज्ञानात् तृतीयया मुक्ते शेषत्वात् पक्षे षष्ठी प्राप्नोति । अथ स्यादनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणं समुच्चयार्थम्, न विकल्पार्थमिति ? एवमप्यनन्तरा द्वितीया समुच्चीयेत । अथापि योगविभागेनास्या अपि सिद्धिः, एवमपि तदनन्तरा षष्ठी समुच्चीयेत न कथंचन पञ्चमी, सा चेष्यते, तत्कथमित्याह—'पञ्चमीग्रहणम्' इति । 'इह' [1]इति । न पूर्वयोर्योगयोः मण्डूकगतयोऽधिकारा भवन्ति, यद्यनुवृत्तिसामर्थ्यात् पञ्चमी, अन्यतरस्यांग्रहणं तर्हि किमर्थम् ? समुच्चयार्थम् । तत्र किं समुच्चीयते ? इत्यपेक्षायाम् 'पञ्चमीग्रहणमिहानुवर्तते' इत्युच्यते । 'योगविभागः कर्तव्यः' इति । असत्यपि मुनित्रयवचने प्रयोगबाहुल्यादेवं व्याख्यातम् ॥

## ३३. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।

'यदा धर्ममात्रम्' इति । यद्योगाद्द्रव्यं स्तोकादिव्यपदेशमासादयति ते गुणा धर्माः, उभयवचना ह्येते द्रव्यमाहुर्गुणं च शुक्लादिवत् । यदा गुणवचनास्तदा [2]असत्त्ववचनतेत्यर्थः । 'क्रियाविशेषणे कर्मणि' इति । आख्यातेन हि क्रिया साध्यमानावस्थोच्यते—चलति, चलनं करोतीति । [3]अतस्तद्विशेषणं स्तोकादि कर्म भवति—स्तोकं चलनं करोतीति । एवं तु विशेष्यवचनः स्तोकशब्दो द्रव्यवचन इति नात्र प्रसङ्गः । यत्र च फलान्तरं साध्यं प्रति धात्वर्थः करणतया विवक्ष्यते तत्र विशेषणत्वं न स्यात्—[4]शोभनं ज्योतिष्टोमेन स्वर्गकामो यजेतेति । अत्र हि यथा फलभावनायां करणभूतस्य यागस्याभिधायकात् ज्योतिष्टोमशब्दात् तृतीया भवति, तथा तद्विशेषणाच्छोभनशब्दादपि स्यात् । अन्यस्त्वाह—संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियायाः कर्मत्वात् तद्विशेषणस्य कर्मत्वं स्यादिति तस्यापि संदर्शनादीनां क्रियायाश्चाभेदविवक्षायां कर्मत्वं न स्यात्, न हि तत्र क्रियायाः कर्मत्वमस्ति ॥

## ३४. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।

पक्षे पञ्चम्यर्थे वचनम्, षष्ठी तु शेषत्वादेव सिद्धा । यद्येवम्, अन्यतरस्यांग्रहणमनर्थकं षष्ठीमात्रवचने वैयर्थ्यादिद प्रकृता पञ्चमी विधायिष्यते, तत्राह—'अन्यतरस्यांग्रहणम्' इति । वचनसामर्थ्याद्धि प्रकृतविधाने विज्ञायमाने तृतीयाया अपि विधिः स्यात् । ननु [5]कृतमप्यन्यतरस्यांग्रहणं विकल्पार्थं समुच्चयार्थं वा; विकल्पार्थं

---

1. अपि इत्यधिकम्–म. 2. असत्त्ववचनाः–म. 3. 'अतस्तद्विशेषणं—चलनं करोति इति'-इति भागो नास्ति–म. 4. 'शोभनं इत्यारभ्य–तद्विशेषणस्य कर्मत्वं स्यात्' इति भागो नास्ति–म. 5. तत्-इत्यधिकम्–म.

तावत् षष्ठ्या मुक्ते स्वादिसूत्रेणाप्राप्ताः सर्वा एव विभक्तयः स्युः, समुच्चयार्थेऽपि प्रकृता तृतीया कस्मान्न समुच्चीयते ? उच्यते—'पृथग्विनानानाभिः' (२.३.३२) इत्यत्र तावत् 'अन्यतरस्यांग्रहणेन पञ्चमी समुच्चीयते' इत्युक्तम्, अत इहाप्येकप्रघट्टकत्वात् सैव समुच्चीयते। अत एतदपि न चोदनीयम्—'अन्यतरस्यांग्रहणे प्रकृते पुनरन्यतरस्यांग्रहणं किमर्थम्' इति, तत्रापि हि पक्षे तृतीया स्यात् ॥

## ३५. दूरान्तिकार्थेभ्यो द्वितीया च।

'प्रातिपदिकार्थे विधानम्' इति। अर्थान्तरस्यानिर्देशादिति भावः। नन्वनिर्देशेऽप्यर्थान्तरस्य शेषविषये पूर्वविभक्तिविषये च विधानमेतद्युक्तम्, [1]प्रथमाविषये तु परत्वात् सैव प्राप्नोति ? नैष दोषः; उत्तरत्राप्येतदनुवर्तते, तेनोत्तरविभक्तिविषयेऽपि सर्वत्र यथाभिधानं भवति। तथा च दूरादावसथान्मूत्रमित्यधिकरणेऽपि भवति—आवसथस्य दूर इत्यर्थः। प्रातिपदिकार्थे विधानमित्येतत्तदाहृतविषयं द्रष्टव्यम्। तथा च—'सत्त्ववचनेभ्यो यथायथं विभक्तयो भवन्ति' इति वक्ष्यति, प्रातिपदिकार्थ एव तु विधाने यथायथमित्यनुपपन्नम्, प्रथमैव भवतीति वाच्यं स्यात् ॥

## ३६. सप्तम्यधिकरणे च।

'क्तस्येन्विषयस्य' इति। इन्नन्तः शब्दो [2]विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। 'अधीती व्याकरणे' इति। अधीतमनेनेति विगृह्य श्राद्धमनेन भुक्तमित्यतोऽनेनेति वर्तमाने 'इष्टादिभ्यश्च' (५.२.८८) इतीनिप्रत्यये कृते तद्धितार्थेन कर्त्रा सहैकीभूतस्याधीतस्य [3]निष्कृष्य व्याकरणादिना सम्बन्धाभावात् क्तप्रत्ययेनानभिहिते व्याकरणादौ गुणभूतयापि प्रकृतिवाच्ययाऽध्ययनक्रिययाऽधीतवान् व्याकरणमितिवत् कर्मतया सम्बन्ध्यमाने कृतपूर्वी कटमितिवत् द्वितीयायां प्राप्तायां सप्तमी विधीयते। इह मासमधीती व्याकरण इति कालकर्मणोर्बहिरङ्गत्वात् सप्तम्यभावः।

'साधुर्देवदत्तो मातरि' इति। अत्र साधुत्वासाधुत्वयोः मातापितृविषयत्वेऽपि क्रियाया अभावादधिकरणत्वाभावाद्वचनम्। 'साधुनिपुणाभ्याम्' (२.३.४३) इत्येव सिद्धेऽनर्चार्थमत्र साधुग्रहणम्, तेन तत्त्वकथनेऽपि भवति। अर्चाग्रहणं तत्र निपुणार्थम्। कथं तर्हि [4]तत्र प्रत्युदाहरिष्यते—अर्चायामिति किम्, साधुर्भृत्यो राज्ञ इति ? उच्यते—राज्ञो भृत्येन सह शाब्दोऽन्वयः, न साधुना—राज्ञो [5]भृत्यः स साधुरिति। तत्र राजनि वाऽत्र वेति नैतच्छब्देन स्पृश्यते, प्रत्यासत्त्या तु राजविषयमेव साधुत्वं गम्यते इत्येतावता तत् प्रत्युदाहरणं द्रष्टव्यम्।

'कारकार्हाणाम्' इति कारकशब्दो [6]भावसाधनः, कारकत्वार्हाणामित्यर्थः। 'ऋद्धेषु' इति। ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः; लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनम्। 'दरिद्रेष्वासीनेषु' इति दरिद्रा भोक्तुं नार्हन्तीत्यकारकार्हाः।

1. 'प्रथमाविषये तु....विषयेऽपि सर्वत्र' इति भागो नास्ति—म. 2. विषये कृते इत्यधिकम्—म. 3. निर्बूष्य—म. 4. 'तत्र' नास्ति—म. 5. 'यः' इत्यधिकम्—म. 6. भावप्रधानः—म.

'तद्विपर्यासे च' इति । कारकार्हाणामकारकत्वेऽकारकार्हाणां च काकरत्व इत्यर्थः ।

'निमित्तात् कर्मयोगे' इति । यत् क्रियाप्रयोजनं यदर्थः क्रियारम्भस्तत्फलमिह निमित्तम्, तद्वाचिनः सप्तमी भवति । यदि तस्य निमित्तस्य कर्मणा कर्तुरीप्सिततमेन सह समवायादिलक्षणः सम्बन्धो भवतीत्यर्थः[1] । तत्र हेतुतृतीयायां प्राप्तायां वचनम्, तत्र हन्तिकर्मणा द्वीप्याविना चर्मादेर्निमित्तस्य समवायः सम्बन्धः । 'चमरीम्' इति । चमरशब्दाज्जातिलक्षणो ङीष् । पुष्कलकः शङ्कुः, स सीम्नि सीमाज्ञानार्थं हतो निखात इत्यर्थः, तेन च निहन्यमानेन शङ्कुना सीम्नः [2]संयोगः सम्बन्धः । कर्मसम्बन्ध इति किम् ? वेतनेन धान्यं लुनाति ॥

## ३७. यस्य च भावेन भावलक्षणम् ।

इह भूयो दर्शनाश्रयो [3]लक्ष्यलक्षणभावः, यथा—अग्निधूमयोः, ततश्चोदित आदित्ये तमो नष्टम्, उदिते चन्द्रमसि समुद्रः प्रवृद्ध इत्यादावेव स्यात्; इह त्वग्निषु हूयमानेषु गत [4]इत्यग्निहवनं यदा गमनेन सह पुनःपुनर्न दृष्टचरं तदा न तत्तस्य लक्षणमितीह न स्यादित्याशङ्क्याह—'प्रसिद्धा च क्रिया' इति । प्रसिद्धिरेव क्रियायाः [5]क्रियां प्रति लक्षणत्वे उपयुज्यते, न [6]पुनर्दर्शनम् । एतदुक्तं भवति—निर्ज्ञातकाला क्रिया अनिर्ज्ञातायाः क्रियायाः सकृदपि कालपरिच्छेदहेतुत्वेनोपात्ता भवत्येव लक्षणमिति ॥

## ३८. षष्ठी चानादरे ।

'अनादरे' इति पूर्वेण [7]सप्तमी एतच्च भावलक्षणभावस्य विशेषणम्, यश्चानादरे सति भावलक्षणः, सोऽनादराधिको भवतीत्याह—'अनादराधिके' इति । अनादरविशिष्टेऽनाद्रियमाण इत्यर्थः । 'रुदतः प्राव्राजीत्' इति । पित्रादिकस्य [8]रोदनमनादृत्य प्रव्रज्यां कृतवानित्यर्थः ॥

## ३९. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।

'गवां दायादः' इति । दीयत इति [9]दायः अंशः, दायमादत्ते इति सोपसर्गादपि[10] दायाद इति निपातनात् कः । गवामित्येतत् समुदायस्य विशेषणमवयवमपि [11]दायांशं स्पृशतीति गवात्मकस्य दायस्यादातेत्ययमर्थो भवति । 'गवां प्रसूतः' इति । गा एवानुभवितुं जात इत्यर्थः ॥

## ४०. आयुक्तकुशलाभ्यां चासेवायाम् ।

'आयुक्तो गौः शकटे' इति । आङीषदर्थे । ईषद्युक्त इत्यर्थः ॥

---

1. 'चर्मणि द्विपिनं हन्ति इत्यर्थः' इत्यधिकम्—म. 2. संयोगलक्षणः—म. 3. 'लक्ष्यते, लक्षण-भावदर्शनं एतदुक्तं भाविनि जातिकालक्रिया अनिर्ज्ञातकालायाः क्रियायाः लक्ष्यलक्षणभावः'—म. 4. इहाग्निभवनं—म. 5. क्रियान्तरं प्रति—म. 6. पुनःपुनर्दर्शनम्—म. 7. सत्सप्तमी—म. 8. रोदनमप्यनादृत्य—म. 9. दायांशः—म. 10. दादाद्यं, दाद्यं इत्यधिकम्—म.ट. 11. दायः—म.

## ४१. यतश्च निर्धारणम् ।

'जातिगुणक्रियाभिः' इति । प्रदर्शनमेतत् । अमीषां छात्राणां देवदत्तः पटुरिति सञ्ज्ञयापि निर्धारणदर्शनात् ॥

## ४२. पञ्चमी विभक्ते ।

'विभक्तमस्यास्ति' इति । [1]निर्धार्यमाणात् । एतदुक्तं भवति—निर्धार्यमाणस्य [2]निर्धारणाश्रयस्य च विभागे सति निर्धारणं भवति, ततश्च सर्वत्रैव निर्धारणाश्रये विभक्तमस्तीति सामर्थ्यादवधारणमाश्रीयते—यस्मिन्निर्धारणाश्रये विभाग एव, न [3]केनचिदात्मभाव इति । तेन गवां कृष्णेत्यादौ यद्यपि गोमण्डलात् कृष्णा गौः पृथक् क्रियते, तथापि गवात्मनान्तर्भावोऽस्तीति न भवति । उदाहरणे तु माथुराणां पाटलिपुत्रेषु प्राणित्वेनान्तर्भावेऽपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद् [4]विभाग एव भवति । प्रत्याख्यातं चैतत्सूत्रमपादानप्रकरणे—

> बुद्ध्या समीहितैकत्वात् पञ्चालान् [5]कुरुभिः पृथक् ।
> यदा विभजते वक्ता तदाऽपायः प्रतीयते ॥ (वा.प. ३.७.४) इति[6] ॥

## ४३. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।

साधुशब्दः 'कृवापाजिमि' (द.उ.१.८६) इत्युणन्तः, 'पुण कर्मणि शुभे' (धा.पा.१३३३) इत्यस्मान्निपूर्वात् '[7]इगुपध' (३.१.१३५) इति के, निपुण इति भवति । 'अर्च पूजायाम्' (धा.पा.२०४) इत्यस्माद्भौवादिकात् 'गुरोश्च हलः' (३.३.१०३) इत्यकारः, चौरादिकात्तु युचा भाव्यम् । अप्रतेरित्यत्र प्रयोग इत्यध्याहार्यम्, तदाह—'न चेत् प्रतिः प्रयुज्यते' इति ।

'साधुर्भृत्यो राज्ञः' इति । पूर्वमेवैतद्दूषितमुपपादितं च । 'निपुणः पुत्रो [8]मातुः' इति तु तत्त्वकथने न्याय्यं प्रत्युदाहरणम् ॥

## ४४. प्रसितोत्सुकाभ्यां तृतीया च ।

'षिञ् बन्धने' (धा.पा. १२४८) प्रकर्षेण बद्धः प्रसितः, तदाह—यस्तत्र नित्यमवबद्ध इति । नित्यमित्यनेन प्रशब्दस्यार्थमाचष्टे । [9]अवबद्ध इवावबद्धः, यो हि यत्र प्रसक्तः, स तत्रावबद्ध इव भवति [10]इति

---

1. विधीयमानात्–म. 2. निर्धारणाश्रयस्य नास्ति–म. 3. केनचिदात्मनोऽन्तर्भावः–म. 4. विभाव–म. 5. 'कुरुभिः यदा पुनर' इति वाक्यपदीये. 6. साधुः इत्यधिकम्–म. 7. इगुपधलक्षणः–म. 8. मा भूत्–म. 9. अवे बद्धः–म. 10. 'इति भावः' नास्ति–म.इ.

भावः । [1]तेन प्रकर्षेण सितः [2]शुक्लतर इत्यस्य ग्रहणं न भवतीति प्रदर्शितं भवति । 'केशेषु प्रसितः' इति । तत्पर इत्यर्थः ॥

## ४५. नक्षत्रे च लुपि ।

नक्षत्रे प्रकृत्यर्थे सति यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययस्यार्थः तत्र वर्तमानादिति सूत्राक्षरान्वयः । [3]यच्चोच्यते—'नक्षत्रे लुपि' इति पञ्चम्यर्थे सप्तमी लुबन्तान्नक्षत्रवाचिन इत्यर्थ इति, तत्र 'उत्तराभ्यां फल्गुनीभ्यां नोत्तरा गच्छेत्' इति विशेषणान्न स्यात्, तस्यालुबन्तत्वात्, कथं तर्हि लुबन्तान्नक्षत्राभिधायिनः शब्दादिति वृत्तिः ? प्रायोवृत्त्यैतदुक्तम्—लुबन्तार्थाभिधायी प्रायेण लुबन्तो भवति । लुबर्थाभिधायिनः शब्दमात्रादित्यर्थः । 'लुबन्तात्' इति । लुबन्ते समाप्तावस्येति बहुव्रीहिः, स्थानिद्वारकं [4]च लुपोऽन्त्यावयवत्वं द्रष्टव्यम् ।

'अधिकरण इति वर्तते' इति । एवं च [5]पुष्यं प्रतीक्षते, [6]पुष्याय स्पृहयति, [7]पुष्यस्य समीपे इत्यादावपि न भवति ॥

## ४६. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।

'प्रातिपदिकार्थः सत्ता' इति । अत्र जिघृक्षितस्येदं लक्षणम्, न प्रातिपदिकार्थमात्रस्य; गौः, शुक्लः, पाचकः, डित्थ इत्यादावसम्भवात् । योऽर्थः [8]सन्नेव केवलं न जात्यादिरूपो न लिङ्गसंख्याकारकशक्तियोगी, स इह प्रातिपदिकार्थत्वेन विवक्षितः, यथा—अव्ययार्थ इत्यर्थः । अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुम्, न पुनरीदृशस्तादृश इति । गौः शुक्ल इत्यादौ तु सत्त्वरूपेऽर्थे लिङ्गग्रहणादेव सिध्यतीति भावः ।

अन्ये त्वाहुः—अन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीतः, यमर्थं प्रातिपदिकं न व्यभिचरति येन विना प्रातिपदिकस्याप्रयोगः, स सर्वः प्रातिपदिकार्थः । सत्ताग्रहणं तूपलक्षणम्; तेन सत्ता गोत्वं शौक्ल्यं शुक्लो गुणः पाचको डित्थः, गौः शुक्लः इत्यादिकमप्युदाहरणमिति । नन्वत्र सर्वत्र लिङ्गग्रहणादेव सिद्धम्, न; मात्रग्रहणं क्रियते, तच्चावधारणार्थम्, पयोमात्रं [9]व्रतयतीतिवत् । ततश्च स्त्री पुमान् नपुंसकम् [10]इत्यादावेव [11]तु स्यात्—[12]यत्र लिङ्गमेवार्थः, सत्तेत्यादौ तु जात्याद्यधिकार्थसद्भावान्न स्यात् । अथ कन्यामात्रं वरयतीतिवन्मात्रशब्दस्य व्याप्तिवचनत्वाल्लिङ्गमात्रे प्रथमा लिङ्गमस्तीत्येव प्रथमा भवतीति व्याख्यानादधिकार्थसद्भावेऽपि प्रथमा भवतीति ? उच्यते—हन्तैवं वृक्षं पश्येत्यादौ कर्मादिसद्भावेऽपि लिङ्गमस्तीत्येव प्रथमा स्यात्; कर्मण्येव द्वितीयेत्येस्मिन् प्रत्ययनियमपक्षे कर्मादीनां द्वितीयादिष्वनियतत्वात् ! 'वचनमेकत्वादि' इति । [13]पूर्वाचार्यप्रसिद्धेरिति भावः ।

---

1. एतेन—म. 2. प्रसितः इत्यधिकम्—म. 3. यत्तूच्यते—म. 4. वा—म. 5. पुष्यं—म. 6. पुष्याय—म. 7. पुष्यस्य—म. 8. सन्निवर्तकं बलं—म. 9. इतीयति—म. 10. स्त्रीत्वं पुंस्त्वं नपुंसकम्—इत्यधिकम्—म. 11. इदं—म. 12. 'यत्र लिंगमेव......इत्येव प्रथमा स्यात्' इति भागो नास्ति—म. 13. °प्रसिद्धिः—म.

'उच्चैः' इति। अत्र प्रथमायां सत्यां ग्राम [1]उच्चैस्तव स्वमित्यादौ 'सपूर्वायाः प्रथमाया विभाषा' (८.१.२६) इति तेमयादिविकल्पो भवति, पदत्वं तु षष्ठ्यापि सिद्धम्, यस्मिन्ह्यर्थे द्वितीयादयो न विहिताः स शेषः। नन्वसङ्ख्यत्वादव्ययार्थस्य कथं षष्ठी स्यात्? [2]एकत्वाद्यर्थनियमे षष्ठ्याः सङ्ख्यायामनियतत्वात्, प्रत्ययनियमेऽपि तुल्यजातीयापेक्षत्वान्नियमस्यैकत्वादिभिः परस्परमेव व्यावर्तनात्। [3]विधिवाक्यपक्षे तु स्वादिसूत्रेण [4]भिन्नवाक्यस्य 'बहुषु बहुवचनम्' (१.४.२१) इत्यादेः सङ्ख्यासम्भवे विध्यर्थत्वात्।

ननु ङ्याप्प्रातिपदिकात् स्वादयो विधास्यन्ते, तत्रार्थे प्रथमेत्युक्ते कस्यार्थ इत्यपेक्षायां यस्मात् स्वादिर्विहितस्तदर्थ इति विज्ञास्यते, नार्थः प्रातिपदिकग्रहणेन, तत्रायमप्यर्थः—लिङ्गग्रहणं न कर्तव्यं भवति कुमारी सीमेत्यादावप्यत [5]एव सिद्धम्। प्रातिपदिकग्रहणे तु क्रियमाणे सीमादिशब्दानां स्त्रीयुक्तार्थाव्यभिचारेऽपि प्रत्ययान्तत्वेनाप्रातिपदिकत्वात् तदर्थे [6]प्रथमासिध्यर्थं लिङ्गग्रहणं कर्तव्यं स्यात्? उच्यते—प्रातिपदिकग्रहणं तावदर्थपदेनासम्बद्धमित्यत्रैव वक्ष्यते, लिङ्गग्रहणमनेकलिङ्गार्थम्—तटः, तटम्, तटी; कुमारः, कुमारी, कुण्डम्, कुण्डः, कुण्डिका; अन्यथा येनार्थेन [7]विना प्रकृतेरप्रयोगस्तदर्थमात्रे विधीयमाना प्रथमा नानालिङ्गेभ्यः [8]तत्तद्विशेषमन्तरेण प्रयुज्यमानेभ्यो न स्यात्। [9]अथ [10]मात्रग्रहणमकृत्वा व्याप्तिवचनं वाङ्गीकृत्याधिकार्थसद्भावेऽपि[11] प्रकृत्यर्थस्यान्वय इति स्यात्? यद्येवम्, वृक्षं पश्येत्यादौ कर्माद्याधिक्येऽपि स्यात् प्रत्ययनियमपक्षे, तदिह वृत्तौ कुमारी, कुण्डमित्युदाहरणम्, वृक्षशब्दस्त्वर्थाद्युदाहृतः। ननु मा भून्मात्रग्रहणम्, मा च भूल्लिङ्गग्रहणम्, मा च कारि 'सम्बोधने च' (२.३.४७) इति सूत्रम्, सर्वत्रार्थ इत्येव प्रथमा भविष्यति; न चैवं कर्मादिष्वपि प्रसङ्गः, कर्मणि द्वितीयेवेत्येवमर्थनियस्माश्रयणात्? एवमपि 'राज्ञः पुरुषः' इति षष्ठ्यर्थेऽपि स्यात्, शेषलक्षणा हि षष्ठी, उपयुक्तादन्यश्च शेषः, तत्र यदि प्रकृत्यर्थस्याधिक्येऽपि प्रथमा स्यात्। ततस्तस्यापि प्रथमाविधावुपयुक्तत्वात् षष्ठी न स्यात्। अथ वचनसामर्थ्यात् स्वस्वामिभावादौ षष्ठी भवन्ती लिङ्गाधिकेऽपि स्यात्। अतो मात्रग्रहणं तावत् कर्तव्यम्, तस्मिंश्च क्रियमाणे लिङ्गग्रहणं, 'सम्बोधने च' (२.३.४७) इति सूत्रं च[12] न कर्तव्यम्, तदाधिक्येऽपि यथा स्यादिति।

'परिमाणग्रहणं किम्' इति। अर्थ इति वा लिङ्ग इति वा [13]सिद्धिं मन्यते। 'द्रोणः, खारी' इति। अयं भावः—येनार्थेन विना प्रकृतेरप्रयोगस्तस्मिन्नर्थे प्रथमा। द्रोणादयश्च लौहं दारुमयं [14]परिमाणमेवार्थं न व्यभिचरन्ति। यदा तु द्रोणादिपरिमिते व्रीह्यादौ वर्तन्ते तदा तस्य व्यभिचारित्वान्न स्यात्। न च लिङ्गग्रहणादपि सिद्धिः—तदाधिक्यमात्रे हि तेन स्यादिति। परिमाणग्रहणं चोन्मानादीनामुपलक्षणम्, तेन घृतं पलमित्यादावपि भवति। अथ लवणेन संसृष्टः, [15]लवणः सूपः, लवणं शाकमित्यत्र कथं प्रथमा, लवणशब्दो हि लवणजातीयमेव द्रव्यं न व्यभिचरति, व्यभिचरति तु संसृष्टम्? उच्यते—साधारणशब्दोऽयम्, लवणजातीयस्य संसृष्टस्य चाक्षादिशब्दवत्। एवं च 'लवणाल्लुक्' (४.४.२४) इति वचनाद्विज्ञायते। तत्र यथा दधिदाधिकशब्दयोः प्रथमा भवत्येवमत्रापि भविष्यति। इह तर्हि कथं शुक्लः पट इति, शुक्लशब्दो गुणमेव न व्यभिचरति, व्यभिचरति तु तद्वन्तम्,

---

1. उच्चैः स्वं स्वं–म. 2. उच्यते–इ. 3. विपक्षे–म. 4. 'सह' इत्यधिकम्–इ.
5. अर्थः इत्येव–म. 6. °विध्यर्थम्–म. 7. अप्रकृतेभ्यः–म. इत्यधिकम्–म. 8. तत्तल्लिङ्ग°–म.
9. कथमत्र–म. 10. मात्राग्रहणत्वात्–म. 11. च–म. 12. प्राप्तिः इत्यधिकम्–इ. 13. सिद्धम्–म.
14. परिमाणरूपमेवार्थं–इ.म. 15. सूपः इत्यधिकम्–म.

पटस्य शुक्ल इति [1]दर्शनात् ? अत्रापि 'गुणवचनेभ्यो मतुपो लुग् वाच्यः' (वा. ५७४) इति वचनात् साधारणशब्दतैव । इह तर्हि कथं गौर्वाहीक इति, गोशब्दो हि सास्नादिमन्तमेव न व्यभिचरति, व्यभिचरति तु वाहीकम् ? अत्रापि वाहीके सास्नादिमद्रूपारोपाद्गोशब्दः प्रयुज्यते, तत्र यथा सास्नादिमद्वृत्तेर्भवत्येवं वाहीकवृत्तेरपि भविष्यति । यद्येवम्, द्रोणः खारीत्यादावप्येवमेव भविष्यति, [2]लवणादिशब्दवत् साधारणशब्दाः स्युः, गौर्वाहीक इत्यादिवद्गौणा वा, गङ्गायां घोष इतिवल्लाक्षणिका वा; नान्या गतिरस्ति, सर्वथा सिद्धा प्रथमा । किं च परिमेयवृत्तिभ्यो द्वितीयादयो यथा भवन्ति तथा प्रथमाऽपि [3]भवति । अथ प्रस्थेन परिमिता व्रीहय इत्येवं प्रातिपदिकार्थव्यतिरेकेऽपि यथा स्यादिति परिमाणग्रहणम् । यद्येवम्, प्रस्थेनेति तृतीया न स्यात्, शेषविवक्षायां [4]च षष्ठी न स्यात्, प्रास्थिक इति तद्धितश्च न स्यात्, तदेतत् परिमाणग्रहणं[5] चिन्त्यप्रयोजनम् ।

'उक्तेष्वपि' इति । अन्यथानभिहिताधिकारात् 'बहुषु बहुवचनम्' (१.४.२१) इत्यादिना [6]अस्यैकवाक्यत्वात् तिङ्कृत्तद्धितसमासैरिति परिगणनस्य प्रत्याख्यातत्वादेकादिशब्दैरेकत्वादीनामभिहितत्वात्[7] उक्तार्थत्वाद्वा न स्यादिति भावः । 'एकः, द्वौ, बहवः' इति । अथ कथमेकं पश्य, एकेन कृतमित्यादौ द्वितीयादयो भवन्ति, न हि तत्र कश्चिद्व्यत्ययोऽस्ति ? उच्यते—तत्रार्थद्वयमस्ति—कर्मादयः, एकत्वादयश्च । तत्रैकत्वादीनामभिधानेऽपि कर्मादिप्रतिपादनाय द्वितीयादयो भविष्यन्ति, इह त्वनभिहितार्थान्तराभावान्न स्यात् । नन्वत्राप्येकादिभिः शब्दैरेकत्वादिविशिष्टं द्रव्यमभिधीयते, तत्रैकत्वादिगुणस्य निष्कृष्याभिधानाय प्रथमा भविष्यति, यथा गुणोपसर्जनद्रव्यवचनात् शुक्लादिशब्दात् प्रवृत्तिनिमित्तभूतस्य गुणस्य निष्कृष्याभिधाने भावप्रत्ययः—पटस्य शौक्ल्यमिति । तदेवं वचनग्रहणमपि शक्यमकर्तुम् ।

'प्रातिपदिकग्रहणं किम्' इति । उक्तोऽत्र प्रष्टुरभिप्रायः । 'निपातस्यानर्थकस्य' इति । अन्यथार्थाभावान्न स्यादिति भावः । 'प्रलम्बते' इति । किं पुनरत्र प्रथमया प्रार्थ्यते ? पदत्वम्; [8]षष्ठ्यामप्येतत् सिद्धम्, तथा हि—कर्मादिषु द्वितीयादयो विहिताः, प्रकृत्यर्थमात्रे प्रथमा, तत्र प्रकृत्यर्थाभावे स्वस्वामिभावादिसम्बन्धसद्भावे चोपयुक्तादन्यत्वात् सिद्धा षष्ठी । न च तस्या एकत्वादिषु [9]नियमः, उक्तोत्तरत्वात् । तदेवमर्थलिङ्गमात्रे प्रथमेत्येतावदेवावश्यं कर्तव्यम् । [10]मात्रग्रहणमपि न कर्तव्यम् । [11]कर्माद्याधिक्ये कस्मान्न भवति ? ज्ञापकात्, यदयम् 'सम्बोधने च' (२.३.४७) इत्याह । यदि ह्याधिक्येऽपि स्यात्तदनर्थकं स्यात् । उत्तरार्थे हि 'सम्बोधने सामन्त्रितम्' इत्येव वक्तव्यं किं योगविभागेन ? इहावधारणार्थान्मात्रग्रहणात् 'सम्बोधने च' इति ज्ञापकाद्वाऽऽधिक्ये प्रथमया न [12]भवितव्यम्, ततश्च 'वीरः पुरुषः' इत्यादौ [13]पदसामानाधिकरण्ये विशेषणविशेष्यभावस्याधिकार्यस्य प्रतीतेः प्रथमा न प्राप्नोति, न; वाक्यार्थत्वात् । यदत्राधिक्यं स वाक्यार्थः, पूर्वं स्वार्थमात्रनिष्ठाभ्यामुभाभ्यां प्रथमा विधीयते, पश्चात्स्वाकाङ्क्षावशेनान्योन्यान्वये विशेषावगतिरुपजायमाना बहिरङ्गत्वात् प्रथमप्रवृत्तं [14]संस्कारं न बाधत इत्यर्थः ।

---

1. अपि इत्यधिकम्—म. 2. द्रोणादिशब्दाः इत्यधिकम्—म. 3. भविष्यति—म. 4. हि—म. 5. चित्परिमाणम् इत्यधिकम्—म. 6. अस्य प्रकरणस्य—इ. 7. 'अनभिहिताधिकारस्य प्रत्याख्यातत्वात्' इत्यधिकम्—इ. बहूक्तार्थ°—म. 8. 'षष्ठ्यामपि...सिद्धम्' नास्ति—म. 9. इष्टनियमः—म. 10. भावमात्रग्रहणम्—म. 11. कर्ताद्याधिक्ये—म. 12. भाव्यम्—म. 13. पुरुषपद°—म. 14. तदन्तरङ्गम्—इ. अन्तरंगपूर्वंकृतम्—म.

अपर आह—अभिहिते प्रथमेति लक्षणं कर्तव्यम्, तिङादिभिरभिहते कर्त्रादौ वृक्षस्तिष्ठति, कृतः कटः शत्यः, प्राप्तोदको ग्राम इत्यादौ प्रथमा भवतीत्यर्थः, तत्र वीरः पुरुषः इत्यादावाधिक्येऽप्यभिहितत्वात् प्रथमेति। अत्र को दोषः ? यत्र क्रिया नास्ति तत्र न स्यात्—वृक्षः, प्लक्षः। तत्रापि क्रियाऽस्ति, कथम्? वृक्षः प्लक्षः, अस्तीति गम्यते। इह तर्हि प्रासाद आस्त इति सदिक्रियायाः, आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्च सदिप्रत्ययेन घञाभिहितं प्रसीदत्यस्मिन् प्रासाद इति आसिप्रत्ययेन तिङानभिहितम्, तत्र सदिप्रत्ययेन यदभिधानं तदाश्रया प्रथमा प्राप्नोति। यत्र च विशेषणसम्बन्धे तात्पर्यम्—नीलमुत्पलं न रक्तमिति, तत्रापि न स्यात्, क्रियाया अभावात्।

अन्यस्त्वाह—तिङसमानाधिकरणे प्रथमेति लक्षणं तिङन्तेन यत् समानाभिधेयं देवदत्तः पचतीति, तत्र प्रथमा; प्रासाद आस्त इत्यत्र तु वैयधिकरण्यात् तदभावः, वीरः पुरुष इत्यादौ च आधिक्येऽपि [1]तिङसामानाधिकरण्यं प्रति योग्यत्वाद्भवतीति। अत्र को दोषः ? इह देवदत्तः पचतीति देवदत्तः पच् लट् इति स्थिते यावत् तिङामुत्पत्तिर्नास्ति तावत् तिङसामानाधिकरण्याभावात् प्रथमैवेति नियमस्याप्रवृत्तौ देवदत्तशब्दादविशेषेण विहिताः स्वादयः स्थिता इति शतृशानचोर्निमित्तस्याप्रथमासामानाधिकरण्यस्य विद्यमानत्वात् तावेव स्याताम्, तिङां त्वभावः स्यात्। न च तिङविधेरानर्थक्यम्; तिङादिषु सावकाशत्वात्। प्रथमैवेति नियमस्यापि स एव विषयः स्यादिति दोषः। पक्षे चायं दोषः, कतरस्मिन् पक्षे ? 'लटः शतृशानचावप्रथमासमानाधिकरणे' (३.२.१२४) इत्यत्र द्वौ पक्षौ—अप्रथमेति पर्युदासः, प्रसज्यप्रतिषेधो वेति। [2]तत्र 'कर्मणि द्वितीया' (२.३.२) इत्यादौ प्रकरणे द्वैतं भवति—विभक्तिनियमः स्यात् अर्थनियमो वेति; तद्यदार्थनियमः पर्युदासश्चाश्रीयते तदायं दोषः। कथम् ? 'कर्मणि द्वितीया' (२.३.२) एवेत्यस्मिन् नियमे द्वितीयादीनामनियतत्वात्, [3]प्रातिपदिकार्थमात्रेऽभावात् तदाश्रयौ शतृशानचौ प्राप्नुतः, प्रसज्यप्रतिषेधे तु प्रथमया अपि तत्र भावात् तदाश्रयः प्रतिषेधः प्रवर्तत इति न दोषः; शतृशानचोरभावात् तिङक्षु सत्सु तत्सामानाधिकरण्यात् प्रथमैवेति नियमेन द्वितीयादीनां [4]व्यावर्तितत्वात्। यदा तु द्वितीयादीनां कर्मादिषु नियमः—कर्मण्येव द्वितीयेति, तदा तदभावे तासामभावादनियताया प्रथमायाः सन्निधानात् पर्युदासे प्रसज्यप्रतिषेधे च नास्ति शतृशानचोः प्रसङ्गः; तदभावे च तिङक्षु सत्सु तत्सामानाधिकरण्यात् तत्रैव प्रथमा भवतीति नियमेन कर्मादिषु प्रथमाव्यावृत्तिरिति न दोषः।

ननु च विभक्तिनियमे कर्माद्यभावेन यद्यपि द्वितीयादीनां तत्राभावस्तथापि शेषषष्ठी प्राप्नोति, तथा हि—यदि तिङसामानाधिकरण्य एव प्रथमेत्यस्मान्नियमात् प्रागेव द्वितीयादिवत् षष्ठ्यपि नियता स्यात् ? स्यात् तदा प्रसङ्गस्तस्याः। सा तु शेषलक्षणा। यत्र च विभक्त्यन्तरस्य नियमो न कृतः स शेषः, ततश्च तिङसामानाधिकरण्यात् प्राक् शेषत्वात् षष्ठी प्राप्नोतीति तत्सामानाधिकरण्यात् शतृशानचावेव स्याताम्। पर्युदासे प्रसज्यप्रतिषेधे तु न दोषः, प्रथमाया अपि भावात् ? सत्यम्; द्वयोरपि पक्षयोः पर्युदासे भवत्येव दोषः। भाष्ये तु विभक्तिनियमे पर्युदासेऽपि न दोष इत्यनास्थावादः पाक्षिक एष दोष इत्यत्रैव तात्पर्यम्। क्षन्तव्यं च किंचिदुद्प्रत्याभिधानम् [5]इत्युपरम्यते॥

1. तिङसामान्त°-ट. 2. तथा-म. 3. 'प्रातिपदिकार्थमात्रे—तत्सामान्याधिकरण्याद्' इति भागो नास्ति-म. 4. व्यावर्तनात्-म. 5. सूरिभिः इत्यधिकम्-म.

## ४७. सम्बोधने च ।

'आभिमुख्यकरणम्' इति । यद्वस्तु येनाकारेण सिद्धं तस्य तेनाकारेणाभिमुखीकरणं सम्बोधनम्, न त्वेकश्रुतिविधाविव कस्यचिदर्थस्यानुष्ठेयताप्रत्यायनम्; वाक्यार्थो हि सः। अभिमुखीकरणं तु न वाक्यार्थः, येन वीरः पुरुष इत्यादिवद्यदत्राधिक्यं स वाक्यार्थ इति प्रथमा सिद्ध्येत् । यस्य पदान्तरसंप्रयोगे सत्येव प्रतीतिः स वाक्यार्थः । इह तु देवदत्तेत्येतावत्युक्ते आभिमुख्यकरणं गम्यते, अतः पदार्थ एवात्राधिक्यमिति षष्ठ्यां प्राप्तायामिदं वचनं तदाह––'तदधिके प्रातिपदिकार्थे' इति । असिद्धेन चाकारेणाभिमुखीकरणं न संभवति––'राजा भव युध्यस्व स्वाहेन्द्रशत्रुर्वर्धस्व' इति । हे पचन्, हे पचमानेत्यादौ शतृशानचोः सम्बोधने विधानेऽपि विभक्तिरहितयोस्तयोः कर्त्राद्यभिधान एव सामर्थ्यम्, यथा लोटो द्विर्वचननिरपेक्षस्येत्यनेन प्रथमा भवति । यद्वा––अभिहितः सोऽर्थः [1]अन्तर्भूतः प्रातिपदिकार्थः संपन्न इति पूर्वेण भविष्यति, योगविभाग उत्तरार्थः ॥

## ४८. साऽऽमन्त्रितम् ।

'तदन्तं यच्छब्दरूपम्' इति । महासञ्ज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्–आमन्त्रणमामन्त्रितमिति । अभेदोपचारात् तत्साधने शब्दे वर्तते विभक्त्यन्तेन [2]केवलया विभक्त्येति सञ्ज्ञाविधौ प्रत्ययग्रहणे [3]तदन्तस्य ग्रहणमिति भावः । उदाहरणेषु 'आमन्त्रितस्य च' (६.१.१९८) इत्याद्युदात्तत्वं भवति, सेति वचनं प्रातिपदिकार्थसूत्रेणापि सम्बोधने विहिता या प्रथमा तदन्तस्यापि सञ्ज्ञा यथा स्यात्––[4]हेपचन् ! हे पचमान !; असति तु तस्मिन् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' (व्या.प. १९) इत्यनन्तरसूत्रविहिताया एव स्यात् ॥

## ४९. एकवचनं सम्बुद्धिः ।

'हेपटो' इति । सम्बुद्धौ च 'ह्रस्वस्य गुणः' (७.३.१०८) इति गुणः, सुः सम्बुद्धिः इति वक्तव्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य सञ्ज्ञार्थम्; अन्यथा प्रक्रमाभेदाय तदन्तस्य स्यात् ॥

## ५०. षष्ठी शेषे ।

उपयुक्तादन्यः शेषः, कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्ता इत्याह––'कर्मादिभ्योऽन्यः' इति । ननु न कर्मादिभ्योऽन्यः प्रातिपदिकार्थस्य व्यतिरेकः संभवति, कथम् ? क्रियामन्तरेण सम्बन्धानुपपत्तेः, सर्वत्र तस्यास्तन्निमित्तानां कर्मादीनां चावश्यम्भावात् । तथा हि––राज्ञः पुरुष इति राजा कर्ता; राजा द्रव्यं पुरुषाय ददातीत्यर्थसंप्रत्ययात् । 'वृक्षस्य शाखा' इति । लोकप्रसिद्ध्या [5]वृक्षोऽधिकरणम्, तार्किकप्रक्रियया तु शाखा । देवदत्तस्य गौरित्यादौ तु [6]प्रतिग्रहणादौ कर्तृत्वं प्रतीयते––देवदत्तः प्रतिग्रहीता क्रेता विनिमाताऽपहर्ता वेति; उच्यते––नटस्य शृणोतीत्यत्र तावत् क्रियाकारकसम्बन्धरूप एव शेषः, कथम् ? 'आख्यातोपयोगे' (१.४.२९)

---

1. नास्ति–म. 2. 'चामन्त्र्यते न' इत्यधिकम्–ट. 3. अपि इत्यधिकम्–म. 4. पचन् नास्ति–इ. 5. वृक्षे–इ. 6. 'प्रतिग्रहणादौ' नास्ति–म.

इत्युपयोगग्रहणान्नटस्यापादानसञ्ज्ञा नास्ति, दुह्यादिपरिगणनाच्चाकथितत्वेऽपि कर्मसञ्ज्ञा नास्ति, तदयं नटः कारकमेव शेषः। यच्चोक्तम्—क्रियायास्तन्निमित्तानां च सर्वत्र भावान्नान्यः प्रातिपदिकार्थस्य व्यतिरेक इति, तन्न; [1]प्रतिग्रहक्रयादिजन्यस्य सर्वलोकप्रसिद्धस्य स्वस्वामिभावादिसम्बन्धस्यापि दुरपलापत्वात्। यदि च [2]परस्परमुपकार्योपकारकभावे सम्बन्धानुपपत्तेः क्रियाकारकसम्बन्धोऽपि सर्वत्र वस्तुस्थित्याऽस्तीत्युच्यते, अस्तु तथा, न कश्चिद्दोषः, न हि यद्यद्वस्तुस्थित्याऽस्ति तत्तदभिधातव्यम्, यदेव तु विवक्षितं तदेव स्वनिमित्तां विभक्तिं प्रसूते। तत्र स्वस्वामिभावादिसम्बन्धविवक्षायां [3]सन्नपि क्रियाकारकसम्बन्धो न [4]विवक्ष्यत इति द्वितीयाद्यभावे षष्ठी भविष्यति। एवं च मातुः स्मरति, न माषाणामश्नीयात्, अनुकरोति भगवतो नारायणस्येत्यादौ श्रूयमाणेऽपि क्रियाशब्दे मातृसम्बद्धं स्मरणमिति सम्बन्धमात्रं विवक्षितम्, कर्मत्वं तु तदप्यविवक्षितमिति षष्ठी भवति। उक्तं च—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते॥ (वा.प.३.७.१५६) इति।

'षष्ठी शेषे' इति चेद्विशेष्यस्य प्रतिषेधः स्वस्वामिभावादिसम्बन्धः षष्ठ्यर्थः, [5]स च द्विष्ठः। तत्र यद्यप्येकस्मादप्युत्पद्यमानयाऽसि [6]षष्ठ्या द्विष्ठस्यापि सम्बन्धस्याभिधानादुभाभ्यां षष्ठी न भवति, तथापि कदाचिद्विशेष्यादपि प्राप्नोति, प्रथमा च न प्राप्नोति; सम्बन्धस्याधिकस्य [7]भावात्, न वा वाक्यार्थत्वात्। यदत्र पुरुषस्याधिक्यं स वाक्यार्थः, राज्ञ इत्येतत्पदसन्निधानात् पुरुषस्य सम्बन्धः प्रतीयते, पुरुषप्रातिपदिकं तु स्वार्थमात्रे वर्तते इति तत्र प्रथमा न भविष्यति, षष्ठी च न भविष्यतीति। एतदुक्तं भवति—राज्ञ इति केवलपद उच्चार्यमाणे सम्बन्धिस्वमनियतप्रतियोगिकमवगम्यते, पुरुषपदसन्निधौ तु सविशेषस्य प्रतीतिरित्येतावत्, ततश्चानियतं स्वमपेक्ष्य प्रथममेव सम्बन्धाश्रया षष्ठी भवति। ननु च षष्ठ्युच्चारणानुच्चारणकृतो [8]यो विशेषोऽङ्ग भवान् पुरुषपदादपि [9]षष्ठीमुच्चारयतु गंस्यते स विशेषः? नैतत् सुष्ठूच्यते, न हि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते, किं तर्हि? विद्यमान एवार्थः प्रतिपिपादयिषितश्च वाचकपदप्रयोगे हेतुर्भवति। तत्र गुणस्य [10]परोपकारकत्वेन विवक्षितत्वात् तदन्ते षष्ठी भवति, पुरुषस्य तूपकार्यत्वात्स्वनिष्ठत्वेन विवक्षितत्वात्प्रथमा भवति। तत्र च सम्बन्धो गुणे पदं निधाय प्रधानमपि स्पृशति, गुणश्च प्रधानोपकाराय प्रवृत्तो[11]ऽन्यथानुपपत्ते रूपान्तरमाश्रयति। प्रधानं तु स्वनिष्ठत्वेन न रूपान्तरं भजते, उक्तं च—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानः सन् प्रधानेऽ[12]प्युपभुज्यते॥ (वा.प. ३.७.१५७) इति।

यदा तु पुरुषस्याप्राधान्यं राज्ञश्च प्राधान्यं विवक्ष्यते, तदा पुरुषस्य राजेत्यपि भवत्येव; यदा च राज्ञः पुरुषस्य गृहमिति तत्पुरुषस्य गृहादिसम्बन्धो विवक्ष्यते तदैकस्यापि वस्तुनो भिन्नविषयो गुणप्रधानभावो न विरुध्यते

1. क्रियाप्रतिग्रह°–म. 2. °कार्योपकारकभावाभावे–म. 3. संपन्नक्रिया°–म. 4. विवक्षितः–म. 5. 'स च द्विष्ठः' इति नास्ति–म. 6. नास्ति–म. 7. सद्भावात्–म. 8. अयं–म. 9. षष्ठीमुच्चारयितुं–म. 10. परोपकारित्वेन–म. 11. तदनुपपत्तेः–म. 12. °प्युपयुज्यते इति मुद्रितः पाठः,

इति द्वाभ्यामपि षष्ठी भवति । राज्ञ इति हि षष्ठ्या राजपुरुषयोरेव सम्बन्धोऽभिहितः, न पुरुषस्य गृहस्य च । इह पञ्चके प्रातिपदिकार्थे 'कर्मणि द्वितीया' (२.३.२) इत्यादौ चार्थनियमपक्षे शेषग्रहणं शक्यमकर्तुम्, कथम् ? कर्मादयो नियताः, शेषोऽनियतः, ततश्च स्वादिसूत्रेण द्वितीयादिषु षष्ठ्यां च [1]शेषे प्राप्तेषु षष्ठीत्येतावदप्युच्यमानं नियमार्थं सम्पद्यते—षष्ठ्येव भवतीति । यत्र च षष्ठी च प्रत्ययान्तरं च प्राप्नोति, तत्रैवंविधो नियम इत्यर्थाच्छेष एव भविष्यतीति उत्तरार्थमेव तदवश्यं शेषग्रहणं [2]कर्तव्यम् । त्रिकपक्षे तु स्वार्थे षष्ठी मा भूदिति द्वितीयादीनामिव कर्मादिः शेषो वाच्यत्वेन विधातव्यः । तथा प्रत्ययनियमपक्षे कर्मादीनामनियतत्वात् तेष्वपि षष्ठ्यां प्राप्तायां शेष एव षष्ठी न कर्मादिष्विति षष्ठीनियमार्थं शेषग्रहणं कर्तव्यम् ।।

## ५१. ज्ञोऽविदर्थस्य करणे ।

असंदेहार्थं विदर्थस्य ज्ञः करण इत्येव वक्तव्ये तदकरणादविदर्थस्येति पदच्छेदः, लुग्विकरणश्च विविगृह्यते तदर्थ एव जानातेर्वृत्तिसम्भवात्, तदाह—'अविदर्थस्याज्ञानार्थस्य' इति । 'सर्पिषो जानीते' इति । 'अपह्नवे ज्ञः' (१.३.४४), 'अकर्मकाच्च' (१.३.२६) इत्यात्मनेपदम् । 'प्रवृत्तिवचने' इति । ज्ञानपूर्विकायां प्रवृत्तौ वर्तमान इत्यर्थः । 'सर्पिषि रक्तः' इति । रागो मिथ्याज्ञानस्य हेतुः, द्रौपद्यां रक्तो हि कीचको रहसि भीमसेनमालिङ्ग्यावोचत्—अहो उत्तमाङ्गना[3]मीदृशी सुखस्पर्शेति । '[4]प्रतिहतो वा' इति । प्रतिघातो द्वेषस्य हेतुः, द्वेषश्च मिथ्याज्ञानस्य हेतुः, यो हि परिहासशीलेन [5]केनचित् पूयादिकमशुचि द्रव्यं निर्दिश्योक्तः—सर्पिरेतत् पिबेति, स तत्र प्रतिहतस्तत आरभ्य सर्पिर्द्वेष्टि, द्विषतश्चातस्मिन्नपि [6]तज्ज्ञानमुत्पद्यते । यदि सर्वमेव ग्राह्यम्, तदात्मना सर्पिः स्वभावतया प्रतिपद्यते, एवं [7]सत्यविदर्थत्वं नोपपद्यते तत्राह—'मिथ्याज्ञानमेव' इति । ज्ञानकार्याकरणादिति भावः । अविप्लुत विषयपरिच्छेदो हि ज्ञानकार्यम्, तच्च मिथ्याज्ञानेन न क्रियते, अस्मिन् पक्षे उदकादिकर्मणा सकर्मकत्वात् 'अकर्मकाच्च' (१.३.२६) इत्यात्मनेपदानुपपत्तेः परस्मैपदमुदाहार्यं [8]मन्यते ।।

## ५२. अधीगर्थदयेशां कर्मणि ।

'इक् स्मरणे' (धा.पा.१०४७), ककारोऽत्रैव विशेषणार्थः, अधिपूर्वस्यैवोच्चारणमेवमेवायं प्रयोक्तव्य इति ज्ञापनार्थम् । 'शेषत्वेन विवक्षिते' इति । ननु शेषत्वेन विवक्षिते पूर्वेणैव सिद्धा षष्ठी, यथा—न माषाणामश्नीयात्, अनुकरोति भगवतो नारायणस्येति ? सत्यम्, प्रकरणं तु नियमार्थम्—अस्मिन् विषये षष्ठी भवत्येव श्रूयत एव न लुप्यत इति । किं कृतं भवति ? समासो निवर्तितो भवति—मातुः स्मरणमिति । एवं पूर्वसूत्रे परत्र च प्रकरणे सर्वत्र द्रष्टव्यम् । समासे [9]सति 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति षष्ठी लुप्येत, तेन प्रतिपदविधानषष्ठी न समस्यत इति सिद्धं भवति । कथं तर्हि विशेषस्मृतेः संशय इति समासः ? उच्यते, शेषषष्ठ्या एव समासनिषेधः, इह [10]तु 'कर्तृकर्मणोः कृति' (२.३.६५) इति कर्मरूपविवक्षायामेव षष्ठी समासो भविष्यति । कः पुनरत्र विशेषः—शेषषष्ठ्याः समासः स्यात्, कारकषष्ठ्या वा ? अयमस्ति विशेषः—कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः समासे तु समासान्तोदात्तत्वं स्यात्, अन्तोदात्तसमासनिवृत्तये

---

1. शेषेषु प्राप्तेषु—म. 2. कर्तव्यम्–नास्ति–म. 3. ईदृशः सुखस्पर्शः—म. 4. प्रतिहितः इति मुद्रितः पाठः 5. केन केनचित्—इ. 6. तत्तज्—म. 7. सत्यपि तदर्थो नोपपद्यते—म. 8. मन्यन्ते—म. 9. हि इत्यधिकम्—म. 10. तु नास्ति—म.

प्रकरणम् । यत्र च कारकषष्ठी प्रतिषिध्यते, यथा--मातुः स्मृतमिति, तत्र समासोऽपि मा भूत् । एवं चात्र प्रकरणे येऽनुपात्ताः, यानि चात्र प्रत्युदाहरणानि, तेषूभयेष्वपि निष्ठायोगे शेषषष्ठ्याः समासः, अन्यत्र कारकषष्ठ्या अपीति वेदितव्यम् ।

'गुणैः' इति । गुणेषु शेषत्वेन विवक्षितेषु अस्य नियमस्याभावात् समासो भवत्येवेत्यर्थः । इयमेवास्मिन् प्रकरणे [1]प्रत्युदाहरणगतिरिति ॥

## ५३. कृञः प्रतियत्ने ।

'एधोदकस्य' इति । 'जातिरप्राणिनाम्' (२.४.६) इत्येकवद्भावः । 'उपस्कुरुते' इति । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात् प्रतियत्न' (६.१.१३९) इत्यादिना सुट् ॥

## ५४. रुजार्थानां भाववचनानामज्वरेः ।

'रुजो भङ्गे' (धा.पा. १४१६) भिदादिपाठादस्मादेव निपातनाद्वाऽङ । 'भाववचनानाम्' इति। नायमर्थो भाववाचिनामिति, धातूनां भाववाचित्वाव्यभिचारात् । किं तर्हि ? भावशब्देन घञादिवाच्यः सिद्धरूपो भाव उच्यते । वचन इति कर्तरि ल्युट् । तत्र प्रकृत्यर्थो न [2]विवक्ष्यते, न हि रुजार्थानां भावो वक्ता प्रतिपादयितोच्चारयिता वोपपद्यते । तस्मात् प्रत्ययार्थ एव [3]कर्ता विवक्षितः---भावो वचनः कर्ता येषामित्यर्थः, तदाह--'भावकर्तृकाणाम्' इति । 'चोरस्यामयति' इति । 'अम रोगे' (धा.पा. १७२०) चुरादिः, 'नान्ये मितोऽहेतौ' (धा.पा. १६३० इत्यस्य अनन्तरम्) इति चुरादौ वचनात् 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (धा.८१७ इत्यस्यानन्तरम्) इति मित्त्वं न भवति । 'ज्ञप मिच्च' (धा.पा. १६२४) इत्यारभ्य 'नान्ये मितोऽहेतौ' इतः प्राक् पठितास्त एव चुरादिषु मितो भवन्ति, नाऽन्य इत्यर्थः । 'आमयः' इति । आङ्पूर्वस्य मीनातेरच्, 'मीनातिमिनोति' (६.१.५०) इत्यात्वस्य 'निमिमीलियां खलचोः' (वा. ६६६) इति प्रतिषेधः ।

'नदीकूलं रुजति' इति । अत्र नदी कर्त्री, न भावः । ननु रुजाशब्दो व्याधौ रूढ इति [4]नात्र प्रसङ्गः? एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता, इदं तु प्रत्युदाहरणम्--श्लेष्मा पुरुषं रुजतीति, व्याधिना कासादिना ग्राहयतीत्यर्थः । 'ज्वरयति' इति । 'ज्वर रोगे' (धा.पा. ७७६) घटादिः । 'सन्तापयति' इति । 'हेतुमति च' (३.१.२६) इति णिच्, सन्तापोऽत्र भावः, कर्ता [5]च ॥

## ५५. आशिषि नाथः ।

'नाथते' इति । 'आशिषि नाथः' इत्युपसङ्ख्यानादात्मनेपदम्, तच्चानुदात्तेत्वादेव सिद्धे नियमार्थम्--आशिष्येव नाथ इति, तेन प्रत्युदाहरणे परस्मैपदम् ॥

---

1. प्रत्युदाहरणेषु का गतिः--म. 2. विहितः--म. 3. कर्तृविवक्षितः--म. 4. नास्ति अत्र--म. 5. च नास्ति--ट.

## ५६. जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।

'न दैवादिकस्य' इति । 'जासि' इति निर्देशात् 'हिंसायाम्' इति वचनाच्च निप्राभ्यां यथासंभवमुपसृष्टो हनो निप्रहणः, 'हन्तेरत्पूर्वस्य' (८.४.२२) इति णत्वम् । 'प्रणिहन्ति' इति । 'नेर्गदनदपत०' (८.४.१७) इत्यादिना णत्वम् । [1]'नट अवस्यन्दने' (धा.पा. १५४५) चुरादिः, 'नट नृत्तौ' (धा.पा. १७९१) इत्यस्य तु घटादिपठितस्याग्रहणम्, विकृतनिर्देशात् । 'निपातनाद्वृद्धिः' इति । घटादिपाठस्तु 'घटादयः षितः' इत्यातिदेशिकोऽङ् यथा स्यात् 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६.४–९३) इति दीर्घश्च यथा स्यादित्येवमर्थः ॥

## ५७. व्यवहृपणोः समर्थयोः ।

[2]'समर्थयोः' इति । संशब्दो वृत्तौ समानार्थः । समशब्दस्य वा निपातनात् पररूपमिति भावः । सम्बद्धार्थयोरिति तु न विज्ञायते, व्याख्यानात् । संभवति हि व्यवहृपणोः[3] हेतुहेतुमद्भावः सम्बन्धः । 'शतस्य व्यवहरति' इति । शतं क्रयविक्रयरूपेण विनियुङ्क्ते, दीव्यति वेत्यर्थः । 'शलाकां व्यवहरति' गणयतीत्यर्थः ॥

## ५८. दिवस्तदर्थस्य ।

अत्र 'शेषे' इति नानुवर्तते, उत्तरसूत्रद्वयारम्भसामर्थ्यात् । अथ पूर्वसूत्र एव दिविरपि कस्मान्न पठितः, एवं हि तदर्थस्येति न वक्तव्यं भवति ? तत्राह—'योगविभागः' इति ॥

## ५९. विभाषोपसर्गे ।

'शलाकां प्रतिदीव्यति' इति । अत्र विजिगीषादौ दिविर्वर्तते, न व्यवहारे ॥

## ६०. द्वितीया ब्राह्मणे ।

मन्त्रव्यतिरिक्तो वेदभागः ब्राह्मणम् । '[4]गामस्य तदहः सभायाम्' इति । [5]गामस्य सभायामित्यन्वयः । तदहरित्येतदुदाहरणम्, 'स्वमोर्नपुंसकात्' (७.१.२३) इति लुक्, 'अहन्' (८.२.६८) इति रुत्वम् ।

'अनुपसर्गस्य नित्यं षष्ठ्यां प्राप्तायाम्' इति । 'दिवस्तदर्थस्य' (२.३.५८) इत्यनेन, अथ सोपसर्गस्यापि पूर्वेण[6] षष्ठ्यामपि प्राप्तायां नित्यद्वितीयार्थं कस्मान्न भवतीत्याह—'सोपसर्गस्य' इत्यादि ॥

---

1. नट......इत्येवमर्थः इति भागः नास्ति–म. 2. समानार्थयोः–म. 3. ०भावलक्षणः–म.
4. ग्रामस्य–इ. 5. ग्रामस्य–इ. 6. विभाषा इत्यधिकम्–म.

## ६१. प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।

'इष्यतेर्दैवादिकस्य' इति । 'इषु गतौ' (धा.पा.११२७) इत्यस्य श्यना निर्देश इच्छतीष्णात्योरिच्छाभीक्ष्ण्यार्थयोर्निवृत्त्यर्थः । 'तद्विषय एव' इति । लोण्[1]मध्यमैकवचनान्तः । 'देवतासंप्रदाने' इति । देवता संप्रदानं यस्यार्थस्य तत्र वर्तमानयोः कर्मणि कारक इत्यन्वयः । हविषः हविर्विशेषवाचिन इत्यर्थः । 'प्रेष्य' इति । 'ब्रूहिप्रेष्य' (८.२.९१) इत्यादिना प्लुतः । 'अग्नये [2]गोमयानि प्रेष्य' इति । गोमयं हविष्ट्वेन क्वापि न चोदितम् । 'हविषः प्रस्थितस्य' इति । प्रस्थितशब्देन यद्विशेष्यते तस्येत्यर्थः । इदं च भाषायामपि भवति; उत्तरत्र छन्दोग्रहणात् ॥

## ६२. चतुर्थ्यर्थे बहुलं छन्दसि ।

'या खर्वेण' इति । रजस्वलायाः खर्वपानादिप्रतिषेधार्थोऽयमर्थवादः । तर्हि वक्तव्यम्—षष्ठ्यर्थे चतुर्थीति ? न [3]वक्तव्यम्, योगविभागात् सिद्धम् । चतुर्थ्यर्थे इति नायं समासः, किं तर्हि ? चतुर्थी अर्थे इति योगो विभक्तव्यः, षष्ठी [4]इत्यनुवर्तते—अर्थे षष्ठी भवति, चतुर्थी चेति, तत्र स्वार्थ एव षष्ठीचतुर्थ्योर्विधानमनर्थकमित्यन्योन्यसन्निधानादन्योऽन्यार्थे विभक्तिद्वयं विज्ञायते ॥

## ६३. यजेश्च करणे ।

## ६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।

कृत्वसुचोऽर्थो लक्ष्यते, कृत्वोऽर्थो येषां ते कृत्वोऽर्थाः । 'पञ्चकृत्वः' इति । 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५.४.१७) 'द्विः' इति । 'द्वित्रिचतुर्भ्यः सुच्' (५.४.१८), अर्थग्रहणमेतदर्थम् ॥

## ६५. कर्तृकर्मणोः कृति ।

'इह क्रियायाः साधनं भवति' इति । कर्तृकर्मभ्यां क्रिया सन्निधाप्यते, धातुरेव क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च । तत्र तिङ्प्रयोगे 'न लोकाव्यय०' (२.३.६९) इति लप्रतिषेधेन भाव्यम् । स चावश्यं लप्रतिषेधः कर्तव्यः, ये कृतो लादेशास्तदर्थम्—ओदनं पचन्, ओदनं पचमानः, 'पपिः सोमं ददिर्गाः' (ऋ. ६.२३.४) इति, इह तु नार्थः कृद्ग्रहणेनेति मत्वा पृच्छति—'कृतीति किम्' इति । 'कृतपूर्वी कटम्' इति । ननु कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात् तेनैव कर्मणोऽभिहितत्वान्नैव द्वितीयया भाव्यम्, एवं च तदपवादः षष्ठ्यपि न प्राप्नोति; इहाप्यनभिहिताधिकारात्, कृतशब्दस्य च कटापेक्षस्य समासो

1. मध्यमपुरुषैकवचनान्तः–म. 2. गोमयं–इ. 3. विभक्तव्यम्–म. 4. च इत्यधिकम्–म.

दुर्लभः, एतेन तद्धितो व्याख्यातः, तस्मादयमसाधुरेव प्रयोगः ? सत्यम्, [1]विशेषविवक्षायां नैव समासतद्धितौ भवतः, यदा तु कृतं पूर्वमनेनेति कर्मसामान्ये भावे वा क्त उत्पद्यते तदा सापेक्षत्वाभावात् समासः, केन ? 'सुप्सुपा' (२.१.४) इति, ततः 'पूर्वादिनिः' (५.२.८६), 'सपूर्वाच्च' (५.२.८७) इति इनिः प्रत्ययः। न च कटस्य [2]क्तेनाभिधानं करोतेरुत्पद्यमानः [3]क्तप्रत्ययः कर्मसामान्यमेवाह, विशेषकर्मसम्बन्धात्तु तस्याभिधानम्, न चात्र [4]'तद्धितेनैकार्थीभूतस्य[5] निष्कृष्य कटेन [6]सम्बन्धः संभवति, क्रियया तु गुणभूतया कारकाणां सम्बन्धो भवति, यथा—कटं कृतवानिति। कृतपूर्वीशब्दश्चायं पूर्वं कृतमनेनेत्यस्मिन्नर्थे व्युत्पादितः पूर्वं कृतवानित्यनेन समानार्थः सम्पद्यते, तत्र करोतिक्रियापेक्षमस्ति कटस्य कर्मत्वम्, अनभिहितं च तदिति कृद्ग्रहणे षष्ठी स्यात्। यत्र च निष्ठान्तेन शब्देन कर्तृकर्मणोः सम्बन्धस्तत्रैव निष्ठाश्रयः प्रतिषेधः, यथा—कटं कृतवान्, कृतः कटो देवदत्तेनेति, इह तु कृतस्य कटेन सम्बन्धो न भवतीत्युक्तमेव। अथ तु वस्तुतो निष्ठान्ते पदे धातुवाच्यक्रियापेक्षे ये कर्तृकर्मणी तयोः प्रतिषेधः, तथा सति नेदं कृद्ग्रहणस्य प्रयोजनम्, तेनैतदपि निरस्तम्।

असति कृद्ग्रहणे, कटं कारयति, पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति णिच्प्रकृतेः पचेरर्थं प्रति कर्तृकर्मणोः षष्ठीप्रसङ्गः। सति तु कृद्ग्रहणे, णिचोऽकृत्त्वान्न भवतीति कथमिव निरस्तम् 'न लोक' (२.३.६९) इत्यत्र नैवं ज्ञायते—लप्रकृतिभूतस्य धातोर्ये कर्तृकर्मणी इति, किं तर्हि ? लान्ते पदे या क्रियोच्यते प्राधान्येन गुणभावेन वा, तत्र ये कर्तृकर्मणी तयोः षष्ठी न भवतीति तेनेदमप्यप्रयोजनम्।

अथ स्यात्—'न लोकाव्यय°' (२.३.६९) इत्यत्राव्ययविशेषणार्थं कृद्ग्रहणम्, तेन 'उच्चैः कटानां स्रष्टा' इत्यत्राकृतोऽप्यव्ययस्य प्रयोगे निषेधाभाव इति, तदपि न; अव्ययेन कर्तृकर्मणी विशेषयिष्यामः—अव्ययस्य ये कर्तृकर्मणी तयोः षष्ठी नेति, न चाकृत [7]उच्चैसः कर्तृकर्मणी सम्भवतः। इह तर्हि करोतीति कृविति कृच्छब्देन कर्तोच्यते, तत्र कर्तृकर्मणोरित्येव षष्ठ्यामपि सिद्धायां पुनर्विधानं गुणभूतेऽपि कर्तरि यथा स्यात्—भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति, भिदेर्ण्यन्तात् पर्यायादिना ण्वुच्, अत्र ण्यर्थस्य प्राधान्यात् प्रयोजककर्ता प्रधानम्, प्रयोज्यकर्ता तु प्रकृत्यर्थस्य [8]गुणभावाद्गुणभूत इति प्रधानेतरसन्निधौ प्रधानादेव स्यात्, कृद्ग्रहणादप्रधानादपि भवति, एतदपि नास्ति प्रयोजनम्; [9]तृतीयावत् सिद्धम्, तद्यथा—पाचित ओदनो देवदत्तेन यज्ञदत्तेनेत्यादौ प्रधानाप्रधानयोर्द्वयोरपि कर्त्रोस्तृतीया भवति, तत्कस्य हेतोः ? [10]एकशब्दवाच्यत्वाभावेन विरोधाभावात् तथा षष्ठ्यपि भविष्यति।

इह तर्हि प्रयोजनम्, 'उभयप्राप्तौ कर्मणि' (२.३.६६) इति बहुव्रीहिर्यथा स्यात्, अन्यथाऽन्यपदार्थस्यानुपात्तत्वात् तत्पुरुषः स्यात्, तत्र चानिष्टं वक्ष्यते। यद्येवम्, उत्तरत्रैव कृद्ग्रहणं कर्तव्यम्, अथ वा—अनुपात्तेऽप्यन्यपदार्थे व्याख्यानाद्बहुव्रीहिर्भविष्यति, यथा—'एकचो द्वे प्रथमस्य' (६.१.१) इति, तदेतत्कृद्ग्रहणं चिन्त्यप्रयोजनम्।

---

1. विशेषकर्मविवक्षायाम्—म. 2. क्तेन विधानम्—म. 3. क्तप्रत्ययः नास्ति—म. 4. तद्धितार्थेन—म. 5. कृतशब्दस्य इत्यधिकम्—म.ट. 6. सह इत्यधिकम्—म. 7. अव्ययस्य इत्यधिकम्—म. 8. गुणाभावात् गुणभूतप्रधानेतर° म. ट. इ. 9. तृतीयासिद्धत्वात्—म. 10. 'एकशब्द...बहुव्रीहिणा स्यात्' इति भागो नास्ति—म.

केचिदाहुः--इहैव तद्धितनिवृत्त्यर्थं कृद्ग्रहणमिति प्रजानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः, 'प्रज्ञादिभ्यश्च' (५.४.३८) इति स्वार्थिकेऽणि कृते व्याकरणं प्राज्ञः इत्यत्र षष्ठी न भवति। ननु क्रियमाणेऽपि कृद्ग्रहणे कस्मादेवात्र न भवति, यावता भवत्येव कृतोऽत्र प्रयोगः, न ह्येतच्छक्यं वक्तुम्--प्रत्ययार्थेनैकार्थीभूतस्य कृदन्तस्य निष्कृष्य व्याकरणेन सम्बन्धो न संभवतीति प्रत्ययस्य स्वार्थिकत्वेनार्थान्तराभावात्? नैष दोषः; कृद्ग्रहणसामर्थ्यात् कृदन्तेनैव योगे षष्ठी विज्ञास्यते, इह तु कृता तद्धितेन चैकरूपः सम्बन्ध इति न भविष्यतीत्यलमतिक्षोदेन।

'शेष इति निवृत्तम्' इति। तेनाप्राप्ता षष्ठी विधीयत इत्यस्याः समासो भवतीति कृद्योगा च षष्ठी समस्यत इति न वक्तव्यं भवति॥

## ६६. उभयप्राप्तौ कर्मणि।

उभयशब्देन प्रकृतत्वात् कर्तृकर्मणी सम्बध्येते। 'उभयप्राप्ताविति बहुव्रीहिः' इति। न तत्पुरुषः। उभयोः कर्तृकर्मणोः षष्ठीप्राप्तौ सत्यामिति। अत्र प्रयोजनं वक्ष्यति--'कर्मण्येव' इति। विपरीतस्तु नियमो न भवति--उभयप्राप्तावेव कर्मणीति। एवं हि पूर्वसूत्रे कर्मग्रहणमनर्थकं स्यात्, अनेनैव विशिष्टविधानमाश्रयणीयं स्यादिति भावः। 'आश्चर्यः' इति। सकर्मकेभ्यो भावे कृति विहिते कर्मणि कर्तरि च षष्ठी प्राप्ता नियमेन कर्तुरपनीयते। प्राप्तिग्रहणाच्च प्राप्तिमात्रे नियम इति [1]कर्तृकर्मणोः प्रयोगेऽपि कर्तरि [2]तृतीया भवति, 'अन्तर्धौ येनादर्शनमिच्छति' (१.४.२८) इति, अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः। अत्र च 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' (व्या.प. १९) इति कर्तृकर्मणोरिति प्राप्तिर्नियम्यते, शेषषष्ठी तु कर्तर्यपि भवत्येव। नियमस्य प्रयोजनं पक्षे तृतीयाश्रवणम्। कर्मापि यदा शेषत्वेन विवक्ष्यते तदा तत्रापि शेषषष्ठी भवत्येव। तस्याश्च 'कर्मणि च' (२.२.१४) इति निषेधाभावात् [3]समासेऽपि भवति। निषेधस्य तु प्रयोजनं कृत्स्वरो मा भूदिति। एतदपि सूचितम्--पूर्वेण षष्ठी[4]प्राप्तौ नियम्यत इति। आश्चर्यमिदमित्येतावदेकं वाक्यम्, किं तदित्याह--'ओदनस्य' इति। अत्र पाके ओदनस्य [5]कर्तव्यम्, प्रादुर्भावे च ब्राह्मणानां कर्तृत्वमित्यनेकत्वात् कृदुभयप्राप्तिर्भवति।

'भेदिका' इति। पर्यायादिषु ण्वुच्। 'चिकीर्षा' इति। 'अ प्रत्ययात्' (३.३.१०२)। अत्रोभयप्राप्ति कर्तरि तृतीया न भवति। षष्ठी तु शेषविवक्षयापि सिध्यति। समासोऽप्यत्र भवति--धर्मजिज्ञासा देवदत्तस्य, शिष्यस्याचार्यशुश्रूषेति।

'शेषे विभाषा' इति। तत्र यदा नियमेन कर्तरि तृतीया तदा 'कर्मणि च' (२.२.१४) इति निषेधात् पाणिनिना सूत्रकृतिः, आचार्येण शब्दानुशासनमित्यसाधुः समासः; पाणिनेः सूत्रकृतिः, आचार्यस्य शब्दानुशासनमिति तु साधुः॥

1. कर्मणि इत्यधिकम्--म. 2. तृतीया नास्ति--म; 3. समासोऽपि--म.ट. 4. प्राप्ता--म.ट. 5. कर्मत्वम्--म.ट.

## ६७. क्तस्य च वर्तमाने ।

'राज्ञां मतः' इति । 'मतिबुद्धिपूजार्थेभ्यश्च' (३.२.१८८) इति वर्तमाने क्तः । 'शेषविज्ञानात्' इति । उपसङ्ख्यानं प्रत्याचष्टे, सदप्यत्र [1]छात्रस्य कर्तृत्वमविवक्षायां तिरोधीयते, सम्बन्धित्वमात्रमेव तु विवक्षिष्यते, ततश्च न माषाणामश्नीयादितिवत् सिद्धा षष्ठीत्यर्थः । 'तथा च' इति । उपसङ्ख्याने त्वेतन्न सिध्यतीति भावः ॥

## ६८. अधिकरणवाचिनश्च ।

'तस्य च प्रयोगे षष्ठी विभक्तिर्भवति' इति । यथासम्भवं यत्र कर्तैव सम्भवति तत्र कर्तरि—इदमेषामासितमिति, सकर्मकेभ्यस्त्वधिकरणे क्ते विहिते द्वयोरपि कर्तृकर्मणोरनभिहितत्वात् द्वयोरपि षष्ठी भवति—इदमेषां [2]भुक्तमोदनस्येति । 'उभयप्राप्तौ कर्मणि' (२.३.६६) इत्ययं तु नियमः, 'कर्तृकर्मणो कृति' (२.३.६५) इत्यस्या एव [3]प्राप्तेः । वाचिग्रहणं किम् ? 'अधिकरणे' इत्युच्यमाने [4]क्तोपलक्षणं विज्ञायेत, ततश्चार्थान्तरवृत्तेरपि [5]ध्रौव्यादेरुत्पन्नस्य क्तस्य प्रयोगे षष्ठी स्यात्, वाचिग्रहणे तु सति यदाधिकरणं वक्ति तदैव षष्ठी भवति, [6]पदार्थान्तरे तदा कर्तरि तृतीया [7]कर्मणि द्वितीया भवति—इहैभिरासितं ग्रामे गत इति; इह [8]गत्यर्थे चातुरूप्यं भवति—इदमेषां गतमित्यधिकरणे, इदमेते गता इति कर्तरि, [9]इहैभिर्गतमिति नपुंसके भावे, कर्तृविवक्षायां इदमेषां गतमिति तत्रैव शेषविवक्षायाम् ॥

## ६९. न लोकाव्ययनिष्ठाखलर्थतृनाम् ।

जिघृक्षितरूपविनाशप्रसङ्गात् [10]तृनामित्यत्र णत्वाभावः । 'उ उक' इति । अनेन [11]उकारप्रश्लेषं दर्शयति । तत्र [12]लश्चेति पूर्वद्वन्द्वे उकारस्य पूर्वनिपातः स्यात्, परनिपातेऽपि लवुकेति स्यात्; तस्मात् [13]परयो द्वन्द्वं कृत्वा पश्चाल्लशब्दस्य द्वन्द्वः कार्यः, उकारेण च [14]कृतो विशेषणात् तदन्तविधिः, व्यपदेशिवद्भावात् केवलस्यापि ग्रहणम् । 'शतृशानचौ' इति । [15]तेन शानजर्थं तृन्निति प्रत्याहारो नाश्रयणीय इति भावः । 'किकिनौ च' इति । ननु लग्रहणेन लकारास्तदादेशाश्च ग्रहीतुं युक्ताः—कटं कारयाञ्चकार, ओदनं [16]पाचयति; किकिनोस्त्वयुक्तं ग्रहणम्, अलत्वादलादेशत्वाच्च, नैष दोषः; 'किकिनौ लिट् च' (३.२.१७१) इत्यनेन लिट्त्वातिदेशः क्रियते, न लिट्सञ्ज्ञा । तत्र 'कारयाम्' '[17]पचानः' इत्यादौ लिटि तदादेशे च दृष्टः प्रतिषेधः किकिनोरपि भविष्यति । उदाहरणेषु सर्वत्र कारकषष्ठ्याः प्रतिषेधः । शेषषष्ठी तु भवत्येव—ब्राह्मणस्य कुर्वन्, ओदनस्य पचन्, 'अपां पेरुरसि' (तै.सं. १.३.८.१), 'नरकस्य जिष्णवो गुणैः' तानि द्विषद्वीर्यनिराकरिष्णुः इति ।

---

1. छात्रस्य नास्ति—म. 2. भुक्तमोदनमस्य—म. 3. प्राप्तौ—म. 4. क्तेये लक्षणं विहितं द्वयोरपि ज्ञायते—म. 5. ध्रौव्याद्यर्थेभ्यः इत्यत्र—म. 6. यदार्थान्तरे—म. 7. कर्मणीव—म. 8. गत्यर्थेषु—म. 9. इहैव निर्गतम्—म. 10. शृणामि—म. 11. उकारप्रश्लेषे—ह. 12. उश्च—म.ट. 13. परेषां—म. 14. ततो विशेषणकृदन्तविधिः—म. 15. 'तेन....°देशत्वाच्च' इति भागो नास्ति—म. 16. पाचयन्ति—ट. 17. पेचानः—ह.

'आगामुकम्' इति। 'लषपतपद' (३.२.१५४) इत्यादिनोकञ्, रक्षांसि वाराणसीं प्रत्यागमनशील्यानि भवन्ति, शापाविमोक्षार्थमित्यर्थः।

'दास्याः कामुकः' इति। द्वितीयानिवृत्त्यर्थं वचनम्, षष्ठी तु शेषविज्ञानादेव सिद्धा।

'पुरा सूर्यस्य' इति। 'भावलक्षणे' (३.४.१६) इत्यादिना तोसुन्। 'विसृपः' इति। 'सृपितृदोः कसुन्' (३.४.१७) 'पूङ्यजोः शानन्' (३.२.१२८) 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३.२.१२९) 'इङ्धार्योः शत्रकृच्छ्रिणि' (३.२.१३०) इत्येतेषु [1]'ल' इति नानुवर्तत इति स्थापयिष्यते, तेन लग्रहणे सिद्धिरिति मत्वाऽऽह—'तृन्निति प्रत्याहारग्रहणम्' इति।

'द्विषः शतुर्वा वचनम्' इति। 'द्विषोऽमित्रे' (३.२.१३१) इति योऽयं शतृप्रत्ययः, तत्प्रयोगे विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः। प्रत्याख्यानं तु शेषविवक्षायां [2]षष्ठ्यन्यत्र द्वितीयेति, सता च समासप्रतिषेधात् तथा [3]कृत्स्वरार्थं कारकषष्ठी विधेयेत्यपि नास्ति॥

## ७०. अकेनोर्भविष्यदाधमर्ण्ययोः।

अकस्य भविष्यति काले इनस्तु आधमर्ण्ये चेति। सङ्ख्यातानुदेशस्तु व्याख्यानान्न भवतीति भाव। 'ग्रामं गमी' इति। 'भविष्यति गम्यादयः' (३.३.३)। ननु च नात्र षष्ठ्याः प्रसङ्गः, कथम्? गत्यर्थकर्मणि त्यत्रोक्तम्—[4]'द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात्—[5]'ग्रामस्य गन्ता' इति, सत्यम्; [6]श्रौते तावत् प्रतिषेधे लभ्यमाने किं द्वितीयाग्रहणसामर्थ्याश्रयणेनेति मन्यते॥

## ७१. कृत्यानां कर्तरि वा।

'कर्तरीति किम्' इति। 'तयोरेव कृत्यक्तखलर्थाः' (३.४.७०) इति वचनादकर्मकेभ्यो [7]भावे सकर्मकेभ्यश्च कर्मणि कृत्यानां विधानात् कर्तुरेव तैरनभिधानं सम्भवतीति कर्तृकर्मणोर्द्वयोरधिकारेऽपि कर्तर्येव षष्ठी भविष्यतीति प्रश्नः। 'गेयः' इति। 'भव्यगेयप्रवचनीय०' (३.४.६८) इत्यादिना कर्तरि यत्प्रत्ययः। 'साम्नाम्' इति। कर्मणि नित्यमेव षष्ठी [8]भवति।

'उभयप्राप्तौ कृत्ये' इति। उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृत्ये तत्र द्वयोरपि कर्तृकर्मणोः षष्ठी न भवतीत्यर्थः। 'कृष्टव्या' इति। कृषेर्द्विकर्मकत्वात् प्रधाने कर्मणि कृत्यप्रत्ययः, न त्वप्रधान इति तस्मिन् कर्मणि कर्तरि च प्राप्ता षष्ठी न भवति। एतच्च योगविभागाल्लभ्यते, कथम्? कृत्यानाम् इत्येको योगः, अत्रोभयप्राप्तौ नेति च वर्तते, अस्यार्थः युगपदुभयप्राप्तीनां कृत्यानां प्रयोगे षष्ठी न भवतीत्यर्थः; ततः कर्तरि वा, अत्र षष्ठीत्येवानुवर्तते, अन्यत्तु निवृत्तम्॥

---

1. लटः—म. 2. तु इत्यधिकम्—म. 3. कृतस्वरार्थं—ट. 4. द्वितीयायाः ग्रहणम्—म. ट. 5. ग्रामं गन्ता—म. 6. सौत्र एव प्रतिषेधे क्रियमाणे—म. 7. धातुभ्यः इत्यधिकम्—ट. 8. भविष्यति—म.

## ७२. तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ।

'[1]शेषविषये विधानात्' इति । शेष इत्यधिक्रियत इति भावः । बहुवचननिर्देशादेव स्वरूपग्रहणाभावे सिद्धेऽर्थग्रहणं पदान्तरनिरपेक्षा ये [2]तुल्यानाहुस्तत्परिग्रहार्थम् । तेन द्योतका इवादयो निर्वर्तिता भवन्ति—गौरिव गवयः, यथा गौस्तथा गवय इति ।

'तुला देवदत्तस्य' इति । तुलोपमाशब्दौ कर्मसाधनौ तुल्यार्थौ तत्र प्रतिषेध्या तृतीया, षष्ठी तु भवत्येव । इह 'स्फुटोपमं भूतिसितेन शम्भुना' (शिशु. १.४) इति शम्भुना स्फुटोपमा यस्येत्युपमाशब्द... योगे करणे तृतीया भवति, भावसाधनत्वात् तस्य, यथा—उपमीयतेऽनेनेत्यादौ; इतरथा हि तृतीयानुकृष्यते... तस्यानन्तरसूत्रे श्रुतत्वादन्यतरस्यांग्रहणे तु सति तस्य प्रयोजनान्तराभावात् तदेव चकारेणानुकृष्यते ॥

## ७३. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।

आयुष्यादीनां सुखपर्यन्तानां द्वन्द्वं कृत्वार्थशब्देन [3]बहुव्रीहिविधानादर्थशब्देनायुष्यादिभिः प्रत्येकं सम्बन्धः । तत्र मद्रभद्रशब्दयोः पर्यायत्वात् सूत्रे भद्रशब्दो न पठितव्य इति केचिदाहुः । अन्ये त्वर्थशब्दोऽपि पृथगेव निगमत्तम्, [4]व्याख्यानाच्च सर्वत्रार्थग्रहणं वर्णयन्ति । वृत्तावपि क्वचिदर्थशब्दोऽप्युदाह्रियते ।

'हितं देवदत्तस्य' इति । 'हितयोगे चतुर्थी वक्तव्या' (वा. १२३) इत्यस्यानाशिषि चरितार्थत्वादाशिषि हितयोगेऽप्यनेन विकल्पेन भाव्यम्, अन्यथाऽत्र हितग्रहणमनर्थकमिति [5]मन्यते ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां

द्वितीयाध्यायस्य तृतीयः पादः ॥

—:o:—

1. शेषविषयविधानम्—म. 2. तुल्यताम्—म. 3. बहुव्रीहिः, क्वचिद् विधानार्थं शब्दस्य—ग. 4. व्यासवचनात्—म. 5. मन्यन्ते—इ.

# अथ द्वितीयाध्यायस्य

## चतुर्थः पादः

### १. द्विगुरेकवचनम् ।

[1]अत्र यदि पारिभाषिकमेकवचनं गृह्येत [2]अनुप्रयोगत एकवचनं न स्यात्—पञ्चपूलीयं शोभनेति। तस्याद्विगुत्वात् 'द्विगोः' (४.१.२१) इति पञ्चम्या [3]च निर्देशः स्यात्, अतोऽन्वर्थस्यैकवचनस्येदं ग्रहणमिति [4]मत्वाऽऽह—'एकस्य वचनमेकवचनम्' इति। वक्तीति वचनम्, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति कर्तरि ल्युट्, एकस्यार्थस्य वचनमेकवचनमिति कर्मणि षष्ठ्याः समासः। तत्र चैकस्यार्थस्य वाचकं भवतीति सामान्येनोपक्रमः, पश्चात् किं तदित्यपेक्षायां द्विगुरित्यस्य पुंल्लिङ्गस्य सम्बन्ध इत्येकवचनमिति नपुंसकोपपत्तिः। एतदेव व्यनक्ति—'एकस्यार्थस्य' इति। एवं च द्विगुरेकार्थस्य वाचको भवति। यदि द्विग्वर्थ एको भवति, न च वस्तुतोऽनेकार्थस्य वचनशतेनाप्येकार्थत्वमापादयितुं शक्यमिति सामर्थ्यादतिदेशो विज्ञायते, तदाह—'तदनेन प्रकारेण' इति। तदिति वाक्योपन्यासे किमुक्तं भवतीत्याह—'द्विग्वर्थ एकवद्भवति' इति। 'समाहारद्विगोश्चेदं ग्रहणम्' इति। तद्धितार्थे यो द्विगुः तस्यैकवद्भावो मा [5]भूदित्येवमर्थं पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इति। अथ क्रियमाणेऽपि समाहारग्रहणे इह कस्मान्न भवति—पञ्चपूली च पञ्चपूली च पञ्चपूल्य इति, शिष्यमाणस्य द्विगुत्वात् [6]तदर्थस्यैकवद्भावः प्राप्नोति? न वा; बहिरङ्गत्वात्, बहिरङ्गोऽयं द्विग्वर्थः, सत्येव द्विगावेकशेषात् प्रागभावादेकशेषे सति पश्चादुपजायमानत्वादन्तरङ्गे [7]प्राथमकल्पिके द्विग्वर्थे चरितार्थ एकवद्भावोऽत्र न भविष्यति। यद्येवम्, पञ्चगवः पटा इत्यत्राप्येवमेव भविष्यति? सत्यम्; यदा पटाः [8]प्रत्येकं पञ्चभिर्गोभिः क्रीताः, यदा तु बहवः पटाः संहताः पञ्चभिर्गोभिः क्रीयन्ते तदाऽयमेक[9]शेषस्याविषयः। यदि तर्हि समाहारद्विगोर्ग्रहणम्, नार्थोऽनेन, कथम्? समाहरणं समाहारः समूहः, तस्यैकत्वाद्यूथं वनम् [10]इत्यादिवदेकवचनं भविष्यति।

यदि तर्हि समाह्रियत इति समाहार इति कर्मसाधनः समाहारशब्दः, तदाऽपेक्षितपरस्पराः पञ्चपूलाः समासार्थ इति बहुवचनप्रसङ्गेऽतिदेश आरभ्यते, तदाह—प्रत्यधिकरणं वचनोत्पत्तेः सङ्ख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानमिति। अधिकरणं द्रव्यम्, सङ्ख्यावाची पञ्चादिशब्दः, यत् सङ्ख्याविशिष्टं द्रव्यमभिधीयते, तदभिधानयोग्यं [11]वचनमुत्पद्यते। पञ्चपूलीशब्देन पञ्चपूलाः समाह्रियमाणा उच्यन्ते, अतः समासार्थस्य

---

1. स द्विगुः इत्यधिकम्—म. 2. अनुप्रयोगेऽपि—म. 3. इव इत्यधिकम्—इ. 4. मत्वा नास्ति—म. 5. °इत्येवमर्थे—घ. 6. कृदर्थस्य—म.घ. 7. प्रथमकल्पिके—म. 8. प्रत्येकं नास्ति—घ. 9. शेषस्य विषयः—म. 10. इत्यादिवदेव—म. 11. वचनमुच्यते—इ.

पञ्चादिभिः सामानाधिकरण्यात् द्विवचनबहुवचनप्रसङ्गे एकवचनं विधीयत इत्यर्थः। सङ्ख्यासामानाधिकरण्यादित्यनेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति, भावसाधने तु वैयधिकरण्यं पञ्चानां पूलानाम्[1]। न वा समाहारैकत्वादिति, अयमर्थः---तिरोहितावयवभेदः समूहरूपः समाहारो द्विग्वर्थस्तस्यैकत्वाद्वनाविवदेकवचनसिद्धेर्नात्र सूत्रेण प्रयोजनम्। अवश्यं च [2]तद्भावसाधनः समाहार आश्रयणीयः; अन्यथा [3]पञ्चानां खट्वानां समाहारः पञ्चखट्वीत्यत्र वा टाबन्त इति स्त्रीत्वपक्षे खट्वाशब्दस्यानुपसर्जनत्वात् ह्रस्वो न स्यात्। अनुपसर्जनत्वं चाप्रथमानिर्दिष्टत्वादनेकविभक्तित्वाच्च। भावसाधने तु पञ्चानां खट्वानां समाहारः, [4]समाहारं समाहारेणेति [5]समासार्थस्य नानाविभक्तियोगेऽपि खट्वाशब्दस्य नित्यं षष्ठ्यन्तत्वात् 'एकविभक्ति च' (१.२.४४) इत्युपसर्जनत्वाद् ह्रस्वत्वं सिध्यति, एकवचनमित्येतदुत्तरार्थं [6]कर्तव्यमेव। 'पञ्चपूली' इति। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति [7]स्त्रीलिङ्गत्वात् 'द्विगो.' (४.१ २१) इति ङीप्॥

## २. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्।

इह यस्य द्वन्द्वस्य कश्चिदवयवः प्राण्यङ्गवाची, कश्चित्तूर्याङ्गवाची, कश्चित्सेनाङ्गवाची; यथा---पाणिमार्दङ्गिकाश्वारोहा इति, स व्यतिकीर्णावयवोऽपि प्राण्यङ्गादीनां द्वन्द्वो भवत्येवेत्येकवद्भावः प्राप्नोति, तत्राह---'अङ्गशब्दस्य' इत्यादि। ननु पूर्वपक्षेऽपि प्रत्येकमेव [8]परिसमाप्तिरङ्गशब्दस्य, न हि प्राणितूर्यसेनानामेकमङ्गं सम्भवति ? एवं [9]तर्ह्यङ्गानामेव रूपस्य [10]बहुवचनान्तस्य सतोऽङ्गशब्दस्य प्रत्येकं [11]सम्बन्धः, न तु प्रत्येकपरिसमाप्तस्य पश्चाद्बहुवचनसम्बन्धः[12]। 'त्रीणि वाक्यानि सम्पद्यन्ते' इति। सूत्रं तु तेषामेव ग्रहणकवाक्यमिति भावः। तत्र प्रथमेन वाक्येन प्राण्यङ्गानां [13]प्राण्यङ्गयोरेव द्वन्द्वः कृतस्तस्यैकवद्भावो विधीयते, द्वितीयेन तूर्याङ्गानां तूर्याङ्गैरेव, तृतीयेनसेनाङ्गनां सेनाङ्गैरेवेति न [14]सङ्करप्रसङ्गः। तथा तूर्याङ्गानामिति द्वन्द्व एकवद्भवतीत्यपेक्षते, अत्राङ्गशब्द उपकारकवचनः, पूर्वत्रोत्तरत्र चावयववचनः सेनाङ्गानां चेति पूर्ववदपेक्षा। 'पाणिपादम्' इति। अत्र 'जातिरप्राणिनाम्' (२.४.६) इत्येव सिद्धे व्यतिकरनिरासार्थं वचनम्। 'मार्दङ्गिकपाणविकम्' इति। [15]'शिल्पम्' (४.४.५५) इति ठक्। 'वीणावादक' इति। 'नित्यं क्रीडाजीविकयोः' इति समासः, विपञ्ची परिवादिनी, तज्जीविकः, परिवादकः। पणवमृदङ्गमित्यादौ तु 'जातिरप्राणिनाम्' (२.४.६) इत्येव सिद्धम्। 'रथिकाश्वारोहम्' इति। [16]कथं 'रथवाजिपत्तिकरिणीसमाकुलम्' (शिशु. १३.१७) इति, यावतैकवद्भावे सति नपुंसकह्रस्वत्वेन भाव्यम् ? निरङ्कुशाः कवयः। रथवाजिपत्तिसहिताः करिण्यो, रथवाजिपत्तिकरिण्यः, ताभिः समाकुलमिति वा समर्थनीयम्।

द्वन्द्वश्चेत्यारभ्य 'विभाषा समीपे' (२.४.१६) [17]इत्यन्तस्य प्रकरणस्यानारम्भणीयतां शङ्कते---'इतरेतरयोगे' इत्यादि। 'सिद्धमेवैकवचनम्' इति। ततश्चानारम्भणीयं प्रकरणमिति भावः। परिहरति---'इदं तु'

1. 'समाहारः। तत्र च पक्षे च न कर्तव्यमेव, तदाह'---इत्यधिकम्–म.ट.घ. 2. तदभावसाधनः–ट. 3. पञ्चखट्वाः समाहृताः पंचखट्वी–घ. 4. समाहारं नास्ति–म. 5. समाहारस्य–घ. 6. अवश्यम् इत्यधिकम्–म. कर्तव्यं नास्ति–ट; अवश्यं च तत्र–घ; 7. स्त्रीलिंगतः–म; 8. °रङ्गशब्देन–म. 9. °मेवं–घ. 10. बहुवचनान्तस्य नास्ति–म; 11. अभिसम्बन्धः–म.घ. 12. इत्ययमर्थः इत्यधिकम्–म.घ. 13. प्राण्यंगैरेव–ट. 14. भवति इत्यधिकम्–म. 15. 'मृदंगवादनं शिल्पमित्यत्रार्थे' इत्यधिकम्–घ. 16. अथ–घ. 17. इत्यंगस्य–म.

इति । कः पुनरसौ विषयविभाग [1]इत्याह---[2]'प्राणङ्गादीनाम्' इति । कथं पुनः प्राण्यङ्गादीनां द्वन्द्व एकवचनो भवतीत्यस्य वचनस्य प्राण्यङ्गादीनां समाहार एवेत्यर्थो भवतीति ? वचनव्यक्तिभेदात् । एवं ह्यत्र वचनं व्यज्यते---य एकवचनो द्वन्द्वः [3]स एषां भवतीति, न [4]पुनः प्राण्यङ्गादीनाम् यो द्वन्द्व इत्यनूद्य तस्यैकवचनता विधीयते । [5]एकवचनान्तश्च द्वन्द्वः समाहारद्वन्द्वः, स प्राण्यङ्गादीनामपि 'चार्थे द्वन्द्वः' (२.२ २९) इत्येव सिद्ध इति स एवैषामिति नियमः सम्पद्यते, दधिपयआदिष्वपि येषां [6]ब्रह्मप्रजापत्यादीनामनेन प्रकरणेन नियमस्याप्राप्तिस्तेषां तावत् 'चार्थे द्वन्द्वः' (२.२.२९) इत्यनेन प्राप्तो द्वन्द्वः प्रतिषिध्यते । य एकवचनो द्वन्द्वः स एषां न भवतीति वचनव्यक्त्याश्रयेण येषामपि दधिपयसी इत्यादीनां 'जातिरप्राणिनाम्' (२.४.६) इति नियमस्य प्राप्तिस्तेषाम् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति यद्यपि नियमस्य प्रतिषेधो युक्तः, तथापि ब्रह्मप्रजापत्यादिभिः साहचर्यादेकवचनो द्वन्द्व इत्येतावन्मात्रस्यापेक्षणात् समाहारद्वन्द्व एव प्रतिषिध्यते, न नियमः । वृक्षादिविभाषाप्रयोजनं [7]तु तत्रैव वक्ष्यामः ।

अथैवं कस्मान्न विज्ञायते---इतरेतरयोगपक्षेऽप्राप्त एकवद्भावो विधीयत इति ? उच्यते---यदीतरेतरयोगविहितद्वन्द्वस्यैकवद्भावो विधीयेत [8]'द्वन्द्वाच्चुदषहान्त' (५ ४.१०६) [9]इत्यादिना समाहारनिबन्धनं कार्यं न स्यात् । दधिपयआदिषु तु यस्य द्वन्द्वस्य [10]एकवचनप्राप्तिस्तस्य प्रतिषिध्येतेति समाहारद्वन्द्वस्यैकवचनतायां प्रतिषिद्धायामपि द्वित्वबहुत्वाभावात् द्विवचनबहुवचने न स्यातामतो नियम एवाङ्गीकर्तव्यः । अत्र च व्याख्यानमेव शरणम् । अथ नियमोऽपि भवन्नेवमेव कस्माद्भवति---प्राण्यङ्गादीनां समाहार एवेति ? न पुनः---प्राण्यङ्गादीनामेव समाहार इति ? उच्यते---एवं हि विज्ञायमाने दधिपयआदिषु येषामनेन प्रकरणेन नियमो न प्राप्नोति तेषु प्रतिषेधोऽनर्थकः स्यात्, तिष्यपुनर्वस्वोः [11]इति बहुवचनग्रहणमनर्थकं स्यात् । तद्धितसमाहारद्वन्द्वपक्षे तिष्यपुनर्वस्विदमित्यत्रैकवचनस्य प्रसङ्गे द्विवचनं मा भूदित्येवमर्थम् । यदि च त्वदुक्तो नियमः स्यात् तिष्यपुनर्वस्वोरत्र प्रकरणेऽसङ्कीर्तितयोः समाहारद्वन्द्वाभावादनर्थकं तत्स्यात्, अतो वृत्तिकारोक्तमेव नियमस्वरूपमिति[12] निरवद्यम् ॥

## ३. अनुवादे चरणानाम् ।

चरणशब्दः [13]कठकालापादिषु [14]शाखाभेदेषु मुख्यः, तदध्यायिषु [15]पुरुषादिषु गौणः । उभयेषां चैषां 'गोत्रं च चरणैः सह' (म.भा. २.२२५) (काशि. ४.१.६३) इति जातिसञ्ज्ञा, तत्र शाखाभेदवाचिनः 'जातिरप्राणिनाम्' (२.४.६) इत्येकवद्भावस्य सिद्धत्वात् गौणोऽपि पुरुषवृत्तिरेव गृह्यत इत्याह---'चरणशब्दः शाखानिमित्तकः' इति । शाखाध्ययननिमित्तक इत्यर्थः । गौण इति क्वचित् पठ्यते, क्वचिन्न । 'प्रमाणान्तरावगतस्य' इति । शब्दादन्यत् प्रमाणं प्रमाणान्तरं प्रत्यक्षादि । 'सङ्कीर्तनमात्रम्' इति । मात्रशब्दोऽवगतिव्युदासाय ।

---

1. इत्यत आह--घ. 2. प्राण्यंगानाम्--म. 3. 'स एषां भवति न पुनः' इति नास्ति--म. 4. पुनः पुनः--म; 5. एकवचनश्च--ट. 6. ब्रह्म नास्ति--म. 7. तु नास्ति--म; 8. ०षहान्तात् समासः--घ. 9. इदं वाक्यं नास्ति--म; इत्यादिसमाहारकार्यं--घ. 10. पदवचनताप्राप्तिः--घ. 11. इत्यत्र--घ; 12. सर्वं इत्यधिकम्--घ; 13. कालककालापिकलापादिषु--म. 14. 'शाखा...... पुरुषवृत्तिरेव गृह्यते' इति भागः नास्ति--म. 15. पुरुषेषु--घ.

नन्वर्थप्रतिपादनाय [1]प्रयोगः, स चेदर्थः प्रमाणान्तरेणावगतः, किमिति शब्दः प्रयुज्यते ? कार्यान्तरविधानार्थम् । यदा हि कठकालापेषूदितेषु[2] [3]आवाभ्यां तत्र गन्तव्यमिति संवादः कृतो भवति, स च विस्मृत्योवास्ते तदा तं प्रतीदमुच्यते—[4]'ननूदस्थात् कठकालापं किमास्यते इति । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वात् णिनिः, 'कठचरकाल्लुक्' (४.३.१०७), [5]कलापिशब्दात् 'कलापिनोऽण्' (४.३.१०८), 'नान्तस्य टिलोपे सब्रह्मचारि' इत्यादिना (वा. ७९८) टिलोपः, [6]उभयत्राध्येत्रणो लुक् । एतेन कौथुमो व्याख्यातः । 'यदा तु प्रथमत एव [7]शब्दोपदेशः' इति । प्रमाणान्तरेणानवगतस्य शब्देनाद्यं प्रत्यायनमित्यर्थः । 'उदगुः' इति । 'आतः' (३.४.११०) इति झेर्जुस्, 'उस्यपदान्तात्' (६.१.९६) इति पररूपत्वम् । 'अद्यतनी' इति लुङः पूर्वाचार्यसञ्ज्ञा । 'अनन्दिषुः' इति । 'टुनदि समृद्धौ' (धा.पा. ६७), 'सिजभ्यस्त' (३.४.१०९) इति जुस् ॥

## ४. अध्वर्युक्रतुरनपुंसकम् ।

अध्वर्युशब्द ऋत्विग्विशेषे [8]प्रसिद्धः, न च तेन क्रतोर्विशेषणमुपपद्यते, न हि सोऽस्ति क्रतुर्यत्राध्वर्योरनन्वयः, [9]नापि सोऽस्ति यत्राध्वर्योरेवान्वय इति मुख्यार्थासम्भवादौपचारिकग्रहणमित्याह—'अध्वर्युवेदे' इति । यजुर्वेद इत्यर्थः । तत्र ह्याध्वर्यवं विधीयते । कर्मस्वरूपस्येतिकर्तव्यतायाः फलस्य [10]चोपदेशः = विधानम् । 'अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिङ्गानाम्' इति । कथं तर्हि सूत्रे सामानाधिकरण्यमित्याह—'अध्वर्युक्रतुः' इति । तादृशावयवत्वात् द्वन्द्व एव तथोक्त [11]इत्यर्थः । यदि पुनरनपुंसकमित्यनेन मुख्यया वृत्त्या द्वन्द्व एवोच्येत, [12]'स नपुंसकम्' (२.४.१७) इत्यस्यायमपवादो विज्ञायेत । [13]न वाऽबाधेनोपपत्तौ सत्यां बाधो न्याय्यः । अर्कश्चाश्वमेधश्च अर्काश्वमेधम् । सायाह्नश्चातिरात्रश्च सायाह्नातिरात्रम् ।

'इषुवज्रौ' इति । सामवेदे एषां विधानम् । राजसूयवाजपेयशब्दावर्धर्चादिषु पठितौ, [14]ततस्तौ नपुंसकलिङ्गौ[15] प्रत्युदाहरणम् ॥

## ५. अध्ययनतोऽविप्रकृष्टाख्यानाम् ।

आख्यायतेऽनेनेत्याख्येति, शब्दमात्रमिहाख्याशब्देनोच्यते, न रूढिशब्द एव । असन्देहार्थं विप्रकृष्टाख्यानामध्ययनत [16]इत्यकरणात् [17]अविप्रकृष्टेति पदच्छेदः । आख्यानं च न स्वरूपेणाविप्रकर्षः, किं तु प्रवृत्तिनिमित्तद्वारेण, तच्चेहाध्ययनम्, तदाह—'अध्ययनतः' इति । अधीतिः = अध्ययनम्, अध्ययनेनाध्ययनतः, आद्यादित्वात् तसिः, प्रवृत्तिनिमित्तभूतस्या[18]ध्ययनस्याविप्रकृष्टत्वात् तद्द्वारेणाविप्रकृष्टा आख्या येषां तेऽध्ययनतोऽविप्रकृष्टाख्याः । एतदेवाह—'अध्ययनेन निमित्तेन' इत्यादि । 'पदकक्रमकम्' इति । पदान्यधीते पदकः, 'क्रमादिभ्यो वुन्' (४.२.६१), एवं क्रमकः । वृत्तिः संहिता, तामधीते वार्तिकः, 'उक्थादित्वाद् ठक्'

---

1. शब्दप्रयोगः—घ; 2. प्रतिष्ठितेषु इत्यधिकम्—घ. 3. चाभ्यां—म. 4. 'ननूदस्थात्.... ध्येत्रणो लुक्' इति भागः नास्ति—म. 5. 'तदधीते तद्वेद इत्यणः प्रोक्तात् लुक्' इत्यधिकम्—घ. 6. उभयत्र नास्ति—घ. 7. उपदेशः—म.ट. 8. रूढः—म. 9. 'नापि...अन्वयः' नास्ति—म. 10. चोपदेशे—म. 11. इत्यादि—म. 12. तदा इत्यधिकम्—ट.घ. 13. न च बाधेन—घ; 14. यदा-घ. 15. तदा इत्यधिकम्—घ. 16. इत्याकरणात्—म. 17. अविप्रकृष्टाख्यानात्—म.घ. 18. अध्यापनस्य—इ.

(४.२.६०), अत्र प्रवृत्तिनिमित्तस्याध्ययनस्याविप्रकर्षं दर्शयति,—'संपाठः' इति। सम्पठनं सम्पाठः, अध्ययनमित्यर्थः। 'प्रत्यासन्नः' इति। पदान्यधीत्य क्रमोऽध्येतव्य इति कृत्वा। एवं [1]क्रमकवार्तिकमित्यत्रापि नानधीत्य संहितां क्रमोऽध्येतुं शक्य इति प्रत्यासत्तिर्विज्ञेया॥

## ६. जातिरप्राणिनाम्।

जातिवाच्यवयवत्वाज्जातिर्द्वन्द्व इति गौणो निर्देशः। 'आराशस्त्रि' इति। आरा = प्रतोदः। 'धानाशष्कुलि' इति। [2]षण्णां रसानां कुलं शष्कुली, [3]गौरादिपाठाद्रूपसिद्धिः।

'नन्दकपाञ्चजन्यौ' इति। सञ्ज्ञाशब्दावेतौ, 'खड्गोऽस्य नन्दकः, शङ्खः पाञ्चजन्यः प्रकीर्तितः' (अमर १.१.२८)।

'जातिपरत्वे च' इति। जातिप्राधान्ये इत्यर्थः। 'न नियतद्रव्यविवक्षायाम्' इति। यदा क्वचिद्देशादौ नियतानां द्रव्यविशेषाणां विवक्षा तदा जातिशब्दत्वेऽप्येकवद्भावो न भवतीत्यर्थः। 'बदरामलकानि' इति। फलजातिवाचिनावेतौ॥

## ७. विशिष्टलिङ्गो नदी देशोऽग्रामाः।

विशिष्टलिङ्गानामित्यस्य विवरणम्—'भिन्नलिङ्गानाम्' इति। विपूर्वः शिषिर्भिदिना समानार्थः। तथा च भेदकं विशेषणं, भेद्यं विशेष्यमित्युच्यते। 'क्तेन नञ्विशिष्टेन' (२.१.६०) इत्यत्रापि भेदद्वारेणैवाधिक्यमर्थो व्याख्यातः—यस्य हि नञ् भेदकः स नञाधिको भवति। 'नदीवाचिनाम्' इत्यादि। कथं तर्हि सूत्रे विशिष्टलिङ्गादिशब्दानां [4]सामानाधिकरण्यमित्याह—'नद्यवयव' इत्यादिना। अग्रामावयवोऽग्राम इत्यपि द्रष्टव्यम्। अग्रामा इति चैकवचनस्थाने बहुवचनम्। 'असमासनिर्देश [5]एवायम्' इति। समासे हि व्यतिकीर्णावयवो [6]द्वन्द्व एकवत् स्यात्। गङ्गाकुरुक्षेत्रे इति समासो हि भवन्नितरेतरयोगे चेद्द्विवचनप्रसङ्गः, समाहारे चेन्नपुंसकत्वप्रसङ्ग इति भावः। 'उध्यैरावति' इति। 'उज्झ उत्सर्गे' (धा.पा. १३०४), भिद्योध्यौ नदे। 'देशः खल्वपि' इति। उदाह्रियत इति शेषः।

'जाम्बवशालूकिन्यौ' इति। जाम्बवं नगरम्, शालूकिनी ग्रामः, तत्रोभयतश्च ग्रामाणामिति [7]प्रतिषेध एव भवति। ग्रामोभयावयवस्तु द्वन्द्वो नोदाहृतः।

'जनपदो हि देशः' इति। जना यत्र सञ्चरन्ति स देश इत्यर्थः अवश्यं जनपदो देश इत्यङ्गीकर्तव्यमित्याह—'तथा च' इति। ग्रामे नाध्येयम्।

---

1. क्रमकम्–म. 2. षड्रसानां–इ. 3. 'गौरादिपाठात्....देशादौ नियतानाम्'–इति भागो नास्ति–म. 4. द्वन्द्वे इत्यधिकम्–म; द्वन्द्वेन–घ. 5. श्चायम्–इ. 6. अपि इत्यधिकम्–म.घ. 7. प्रतिषेधप्रतिषेधः–इ.

अभक्ष्या ग्रामकुक्कुटा इत्यादौ ग्रामग्रहणेन नगरमपि गृह्यते, तद्वदिहापि नगरावयवस्यापि [1]द्वन्द्वस्यात्र प्रतिषेधः स्यात्, ज्ञापकात् सिद्धम्, यदयम्, 'प्राचां ग्रामनगराणाम्' (७.३.१४) इति ग्रामग्रहणे नगरग्रहणं करोति, तज्ज्ञापयति---इह शास्त्रे ग्रामग्रहणे [2]न नगरं गृह्यत इति ? नैतत्सुष्ठूच्यते, वक्ष्यति हि तत्र 'ग्रामत्वादेव सिद्धे नगरग्रहणं प्रवृत्तिभेदज्ञापनार्थम्, ग्रामग्रहणमङ्गविशेषणम्---पूर्वेषुकामशमी, नगरग्रहणं तूत्तरपदविशेषणम्--- [3]पूर्वपाटलिपुत्रकः' इति, 'वाहीकग्रामेभ्यश्च' (४.२.११७), 'उदीच्यग्रामाच्च' (४.२.१०९) इत्यादौ ग्रामग्रहणेन नगरग्रहणं न स्यात्, तस्मादाह---'अग्राम इत्यत्र नगरप्रतिषेधः' इति। ग्रामाश्रयस्य प्रतिषेधस्य प्रतिषेध इत्यर्थः।

'उभयतश्च' इति। ग्रामनगरात्मके उभयस्मिन् सति ग्रामाश्रयः प्रतिषेध एव वक्तव्यः, न पुनर्नगराश्रयः प्रतिषेध इत्यर्थः॥

## ८. क्षुद्रजन्तवः।

क्षुद्रशब्दोऽयमस्त्येव कृपणे---क्षुद्रोऽयं पुरुष इति, अस्त्यङ्गहीने शीलहीने च---'क्षुद्राभ्यो वा' (४.१.१३१) इति, अस्ति परिमाणापचये---क्षुद्रास्तण्डुला इति; इह तु जन्तुशब्दसमभिव्याहारादन्तिमस्य ग्रहणमित्याह---'अपचितपरिमाणः क्षुद्रः' इति। अल्पशरीर इत्यर्थः।

अपचयस्यापेक्षिकत्वादनवस्था मा भूदिति स्मृतिमुपन्यस्यति---'क्षुद्रजन्तुरनस्थिः स्यात्' इति। यस्यास्थीनि न विद्यन्ते सोऽनास्थः। स्मृत्यन्तरमाह---[4]"अथ वा' इति। क्षोत्तव्यः क्षुद्रः, अर्हार्थेऽपि 'स्फायितञ्चि' (द.उ. ८.३१) इत्यादिना रक् प्रत्ययः, यः क्षुद्यमानोऽपि न म्रियते, यथा---जलूका, स क्षुद्रजन्तुः; यस्तु म्रियते स पापनिमित्तत्वान्न क्षोदार्हः। 'क्षुद्र एव यः' इति व्युत्पत्तिवशादेवायं प्रसिद्ध इत्यर्थः। स्मृत्यन्तरमाह--- 'शतं वा' इति। प्रसृतिरञ्जलेरर्धं येषां शतं प्रसृतौ भवति, शतेनार्धाञ्जलिः पूर्यत इत्यर्थः। स्मृत्यन्तरमाह---'केचिदा नकुलादपि' इति। नकुलपर्यन्ताः क्षुद्रजन्तव इत्यर्थः।

'इतरासां तद्विरोधात्' इति। अनस्थ्यादिभिः स्मृतिभिर्ये प्रयोगा उपदर्शिता [5]न ते सर्वे ताभिः सङ्गृह्यन्त इत्ययमत्र विरोधः॥

## ९. येषां च विरोधः शाश्वतिकः।

'विरोधो वैरम्' इति। न सहानवस्थानादिः। छायातपादिष्वादावपि प्रसङ्गात्। पूर्वसूत्राच्चानुवृत्तेन जन्तुग्रहणेन विरोधस्य विशेषणात्। जन्तूनां हि विरोधो वैरमेव भवति। 'शाश्वतिको नित्यः' इति। शश्वदिति त्रैकाल्यमाह---'तत्र भवः' (४.३.५३) इति कालाट्ठञि (४.३.११) तान्तावपि निपातनादिकादेशः, अव्ययानां भमात्रे टिलोपाभावश्च। गोपालस्यापत्यानि गोपालयः, अत्र कादाचित्को विरोधः। 'चकारः पुनः' इत्यादि।

---

1. 'द्वन्द्वस्य प्रतिषेधः-म. 2. नगरं न गृह्यते-घ. 3. °पाटलः-म. 4. 'अथवा इति .... केचिदानकुलात्' इति भागःनास्ति-म. 5. न ते अनया बाध्यन्ते। किं तु संगृह्यते, ये च इत्यधिकम्-घ.

पशुशकुनिद्वन्द्वावकाशः—महाजोरभ्रं महाजोरभ्राः, हंसचक्रवाकम्, हंसचक्रवाकाः, विरोधिनामेकवद्भावावकाशः—श्रमणब्राह्मणम्, मार्जारमूषिकम्; अश्वमहिषम्, काकोलूकमित्यत्रोभयप्रसङ्गे परत्वात् पशुशकुनिविभाषा स्यात्, चकारादयमेव भवति ॥

## १०. शूद्राणामनिरवसितानाम् ।

शूद्रशब्दोऽत्र त्रैवर्णिकव्यतिरिक्तजातिमात्रवचनः, न [1]वृषलपर्यायः, [2]निवरसितप्रतिषेधात् । 'निवरसित' इति । निरवपूर्वात् स्यतेः कर्मणि क्तः । तत्र प्रकृत्यर्थमाह—'निरवसानं बहिष्करणम्' इति । अनेकार्थत्वाद्धातूनामुपसर्गवशाद्वेति भावः । पात्राद्बहिष्करणमिह विवक्षितमित्याह—'यैः' इति । 'संस्कारेणापि' इति । 'भस्मना शुध्यते कांस्यम्[3]' इत्यादिना स्मृतिकारैरुक्तेन न शुध्यति, तेन तत्र भोक्तुं न लभन्त इति ततो बहिष्कृता भवन्ति ॥

## ११. गवाश्वप्रभृतीनि च ।

'द्वन्द्वरूपाणि' इति अन्वयात्प्रभृतीनीति नपुंसकोपपत्तिः । गवाश्वप्रभृतीनि कृतैकवद्भावान्येव पठ्यन्ते, तेषामनेन साधुत्वमात्रं विधीयते, न त्वेकवद्भाव इत्याह—'गवाश्वप्रभृतीनि' इति । गवाश्वादीनां चतुर्णां पशुद्वन्द्वे विभाषायां प्राप्तायां वचनम् । एवमुष्ट्रखरम्, उष्ट्रशशमिति । दर्भशरादीनां तृणोलपपर्यन्तानां तृणद्वन्द्वे विभाषायां प्राप्तायां दासीदासादीनाम् 'पुमान् स्त्रिया' (१.२.६७) इत्येकशेषाभावोऽपि निपातनात् । [4]शाटीपटिकमित्यादीनामप्राणिजाति[5]वचनानाम[6]बहुप्रकृत्यर्थः पाठः । अन्येषां कुब्जवामनादीनामप्राप्ते वचनम् ।

'यथोच्चारितं द्वन्द्ववृत्तम्' इति । गणे यादृशाः कृतावङादेशाः पठिताः तादृशानामेव द्वन्द्ववृत्तं द्वन्द्वकार्यमेकवद्भावलक्षणं भवति । 'रूपान्तरेषु' इति । 'अवङ स्फोटायनस्य' (६.१.१२३) इति विकल्पितत्वादवङ [7]नास्ति तदेत्यर्थः । एतेन गणपाठे रूपमेषां विवक्षितम्, न पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्युक्तं भवति ॥

## १२. विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।

अत्र वृक्षादिभिः [8]प्रत्येकं द्वन्द्वो विशेष्यते । न चैको वृक्षशब्दो द्वन्द्वः । न च द्वयोः सहप्रयोगः एकशेषात् । न च पर्यायाणामपि [9]'सहयोगः, 'विरूपाणामपि समानार्थानाम्' एकशेषवचनात्, नापि विशेषयोः सहप्रयोगः—वृक्षश्च धवश्चेति, वृक्षशब्देनैवाशेषविशेषाक्षेपात् धवादिशब्दप्रयोगस्य निष्फलत्वात् । कथं तर्हि [10]'गोबलीवर्दौ' इत्यादौ सामान्यविशेषयोः सह प्रयोगः ? बलीवर्दशब्दसन्निधौ गोशब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वयोरपि

---

1. तु इत्यधिकम्–घ; 2. अनिरवसित°–घ.
3. भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।
रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥ (वृ.चाण. ६.३)
4. शाटीपटीकम्–ट. 5. °वाचिनाम्–म. 6. °बहुत्व°–म. 7. अवङ इत्यधिकं–म.प.
8. शब्दैः इत्यधिकम्–घ. 9. सहप्रयोगः–घ. 10. गोबलीवर्दन्यायः–घ.

विशेषवचनत्वादिति चेत्, इहापि तर्हि धवपदसन्निधौ वृक्षशब्दस्य तद्व्यतिरिक्तविषयतया द्वन्द्वप्रसङ्गः ; किं च वाक्येऽपि कथं सहप्रयोगः—ब्राह्मणा आगता वसिष्ठोऽप्यायात इति ? प्राधान्यख्यापनार्थमुक्तार्थस्यापि [1]प्रयोग इति चेत्, द्वन्द्वेऽपि तर्हि प्राप्नोति। तस्मादनभिधानमेवाश्रयणीयम्, न हि वृक्षधवमिति लोकेऽभिधानमस्ति, अतो वृक्षविशेषवाचिनां ग्रहणम्। एवं मृगादिष्वपि द्रष्टव्यम्।

'इत्येतेषां द्वन्द्वः' इति। एतेषामित्येकापि षष्ठी विषयभेदाद्भिद्यते—वृक्षादीञ्छकुनिपर्यन्तान् प्रत्यवयवषष्ठी, अश्ववडवादीन् प्रति निर्धारणषष्ठी। येऽत्राप्राणिनस्तेषां 'जातिरप्राणिनाम्' (२.४.६) इति [2]नित्यं समाहारद्वन्द्वे प्राप्ते उभयत्र विधीयते। यो विभाषाप्राप्तैकवचनो द्वन्द्वः स एषां भवतीति वचनव्यक्त्याश्रयणेन तेषामेव वृक्षादीनामन्यैः सह द्वन्द्वे यथाप्राप्तं नित्यो विकल्पितो वा एकवद्भावो भवति—व्रीहिकुशप्लक्षमिति, 'जातिरप्राणिनाम्' (२.४.६) इति नित्यः, [3]प्लक्षशब्दस्पर्शा इत्यत्राद्रव्यवाचित्वात् 'जातिरप्राणिनाम्' इत्यस्याप्रवृत्तौ 'चार्थे द्वन्द्वः' (२.२.२९) इत्युभयत्र प्राप्तो भवति। पशुग्रहणं[4] हस्त्यश्वादिषु [5]परत्वात् सेनाङ्गलक्षणस्य नित्यविधेर्बाधनार्थम्।

[6]मृगशकुनिग्रहणं किमर्थम्, न ह्येतेषामनेन प्रकरणेन नित्य एकवद्भावः प्राप्तः, यद्बाधनाय विकल्पोऽभ्यनुज्ञायते, अन्यत्र प्राप्त्यभावादेषामुभयत्रैव द्वन्द्व इति नियमो न संभवति ? अथैषामेवोभयत्र द्वन्द्व इति नियमः स्यात्, क्व तर्ह्येषां स्यात् ? [7]क्वचिदिति चेत्, यद्येवं 'चार्थे द्वन्द्वः' (२.२.२९) इति सामान्यलक्षणमनवकाशं स्यात्, विशिष्टविधानमेव[8] तदानीमाश्रयणीयं स्यात्, प्राण्यङ्गादीनां समाहारे दधिपय आदीनामितरेतरयोगे वृक्षादीनामुभयत्रेति ? अथैषामेवोभयत्रेत्यनेनान्येषामुभयत्रापि द्वन्द्वो वार्यते, [9]अन्यतरत्र तु भवत्येव। एवमपि क्वान्यत्रेति न ज्ञायते, 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' (व्या.प. ९१) इति चानुपपन्नं स्यात् ? उच्यते—यत्तुल्यजातीयानामेवायं विकल्पस्तत्रैव नियमः प्रवर्तते—मृगविशेषवाचिनां मृगविशेषवाचिभिरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहान्यतरत्रेति। नन्वेवमपि न ज्ञायते—क्वान्यतरत्रेति, स्यादेतदेवम्, यद्युभयेषां द्वन्द्व इति श्रुतं स्यात्। [10]इह तु विभाषैकवचनो द्वन्द्व इति श्रूयते, ततश्च यो विभाषा प्राप्त एकवचनो द्वन्द्वः स मृगविशेषवाचिनां मृगविशेषवाचिभिरेव नान्यैरिति वचनव्यक्तौ व्यक्तमेव ज्ञायते—अन्यैः सहेतरेतरयोगद्वन्द्व इति। अथास्यां वचनव्यक्तौ विभाषाग्रहणं किमर्थम्, [11]यावता विभाषैकवचनान्तो द्वन्द्वः प्राप्तस्तत्रैतावदेवास्तु—य एकवचनो द्वन्द्वः स एषामेभिरेवेति ? उच्यते—असति विभाषाग्रहणे वचनव्यक्त्यन्तरमपि संभाव्येत—एषामेभिः सहैकवचन एव द्वन्द्व इति, यथा प्राण्यङ्गादिषु। सति तु [12]तस्य नियमस्यासम्भवादभिमतो नियमः सम्पद्यते। एवं पूर्वापरम्, अधरोत्तरमित्यत्रापि नियमस्वरूपं विज्ञेयम्।

'पशुद्वन्द्व' इत्येव सिद्धेऽश्ववडवग्रहणं प्रतिपदविधानार्थम्। तत्र प्रतिपदविधानादश्ववडवमि[13]त्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ' (२.४.२७) इत्येतद् बाधित्वा 'स नपुंसकम्' (२.४.१७) इत्येतदेव भवति,

---

1. सहप्रयोगः—घ. 2. 'न द्वन्द्वः समाहार एव' इत्यधिकम्—म. 3. प्लक्षशब्दस्पर्शम्—घ. 4. तु इत्यधिकम्—घ. 5. परत्वात् नास्ति—घ. 6. मृगशकुनि—भावः प्राप्तः—म. 7. न इत्यधिकम्—घ. 8. हि इत्यधिकम्—घ. 9. अन्यत्र—घ. 10. 'इह तु....व्यक्तमेव ज्ञायते' इति भागो नास्ति—म.ट. 11. यावता नास्ति—ट; °एकवचनः घ. 12. तस्मिन् इत्यधिकम्—म.घ. 13. एकवद्भावपक्षे—'विधीयमानत्वं नपुंसकत्वम्' इति भागो नास्ति—ट.

[1]तच्छब्देन हि एकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितं भवति। 'पूर्ववदश्ववडवौ' (२.४.२७) इत्येतत्तु एकवद्भावपक्षे प्रवर्तते—'अश्ववडवौ, अश्ववडवान्' इति। एतदेवाभिप्रेत्य वृत्तिकारस्तत्र वक्ष्यति—अश्ववडवयोर्विभाषैकवद्भाव उक्त इत्यादि।

'बहुप्रकृतिः' इति। बहवो बहुत्वसङ्ख्यायुक्ता वर्तिपदार्थाः प्रकृतिः कारणं यस्य द्वन्द्वार्थस्य स बहुप्रकृतिः, तदर्थाभिधायित्वाद् द्वन्द्वोऽपि बहुप्रकृतिः। नेदं स्वतन्त्रं लक्षणम्, स्वातन्त्र्ये [2]नित्यं चेद्वनस्पत्यादीनामपि एतत्सूत्रविहितं विकल्पं बाधित्वा बहुप्रकृतित्वे नित्य एकवद्भावः स्यात्, विकल्पे फलादीनामपि 'जातिरप्राणिनाम्' (२.४.६) इत्यादिलक्षणान्तरेण प्राप्तं नित्यमेकवद्भावं बाधित्वा बहुप्रकृतित्वे विकल्पः स्यात्। अतो लक्षणान्तरस्य शेषोऽयम्। तत्रापि यदि 'विभाषा वृक्ष' (२.४.१२) इत्यत्र पठितत्वादस्यैव [3]शेषत्वं स्यात् ततो वनस्पत्यादिष्वबहुप्रकृतित्वे [4]एतद्विकल्पाभावेऽपि 'जातिरप्राणिनाम्' (२.४.६) इति नित्यो विधिः स्यात्, फलादिषु तु न दोषः, एतद्विकल्पप्राप्त्यभावाल्लक्षणान्तरप्राप्तेरेव नियमनात्, तस्मात् सर्वस्यैव [5]प्रकरणस्यायं शेषस्तदेतदाह—'एषां बहुप्रकृतिरेव' इति। एषां फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेव एकवद्भवतीत्यर्थः। 'बदरामलके' इति। अत्र 'जातिरप्राणिनाम्' (२.४.६) इति न भवति। 'रथिकाश्वारोहौ' इति। अत्र सेनाङ्गलक्षणः। 'प्लक्षन्यग्रोधौ' इति। अत्रायं विकल्पः, 'जातिरप्राणिनाम्' (२.४.६) [6]नित्यस्तु न भवति। अवनस्पतीनां तु वृक्षविशेषाणामबहुप्रकृतित्वेऽप्ययं विकल्पो भवत्येव। आम्रपलाशम्, आम्रपलाशौ। अन्ये तु वनस्पतिग्रहणं वृक्षमात्रोपलक्षणं मन्यन्ते। 'रुरुपृषतौ, हंसचक्रवाकौ' इति। अत्राप्यस्य विकल्पस्याभावः। 'यूकालिक्षे' इति। 'क्षुद्रजन्तवः' (२.४.८) इत्यस्याभावः। 'व्रीहियवौ' कुशकाशावित्यत्र [7]तूभयोः॥

## १३. विप्रतिषिद्धं चानधिकरणवाचि।

'परस्परविरुद्धम्' इति। सहानवस्थानादिलक्षणो विरोधः। विप्रतिषिद्धार्थानाम् इत्यादि। सूत्रे [8]तु तद्वाच्यवयवत्वात् द्वन्द्वरूपमेव तथोक्तमिति भावः। 'अद्रव्यवाचिनाम्' इति। [9]एतेनाधिकरणशब्दो [10]द्रव्ये वर्तते, नाधार इति दर्शयति। न हि द्वन्द्वावयवानामाधारे वृत्तिः सम्भवति; विभक्त्यर्थत्वादाधारस्येति भावः। अयमपि नियमार्थः प्रारम्भः; नियमस्वरूपं च—य एकवचनो द्वन्द्वः विभाषाप्राप्तः स यदि विप्रतिषिद्धवाचिनां भवति [11]अद्रव्यवाचिनामेव, द्रव्यवाचिनां तु [12]इतरेतरयोग इति॥

## १४. न दधिपयआदीनि।

'यथायथम्' इति।

> व्यञ्जनत्वाद्विकल्पस्य प्राप्तिस्तत्राऽदितस्त्रिषु
> पूर्वसूत्रविकल्पस्य शुक्लकृष्णादिति त्विह।
> यद्येवम् प्रतिषिद्धेऽस्मिन् विकल्पे जातिलक्षणः
> नित्यः स्यादेकवद्भावः ? परिहारोऽत्र [13]वक्ष्यते॥

1. तु शब्देन—म. 2. हि इत्यधिकम्—घ. 3. शेषः—घ. 4. एतद् नास्ति—घ. 5. प्रकरणस्यायम् अर्थ शेषः—ट.घ. 6. इति इत्यधिकम्—म.घ. 7. न त्वस्य जातिलक्षणस्य विधेरभावः—म.घ. 8. 'तु तद्वाच्यत्वात्—दर्शयति' इति भागो नास्ति—म. 9. एतेषाम्—घ. 10. अत्र इत्यधिकम्—घ. 11. तदा इत्यधिकम्—घ. 12. 'इतरेतरयोगे द्वन्द्वः'—म.घ. 13. कथ्यते—घ.

स्त्रियां यदुक्तं तन्नेति । यथा [1]षट्स्वभिधास्यते तथात्राप्येकवद्भावमात्रमेव निषिध्यते । किं च, ब्रह्मप्रजापत्यादिष्वत्र पठितेषु समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वो [2]व्यवस्थाप्यते, तत्साहचर्यादेतेष्वपि चतुर्षु तदेव युक्तम् ॥

## १५. अधिकरणैतावत्त्वे च ।

[3]वृत्तिर्वर्तः = समासः, सोऽस्यास्तीति समासावयवभूतं वर्तिपदम्, तस्यार्थोऽधिकरणमित्युच्यते, कथं पुनस्त दधिकरणमित्याह—'स हि' इति । नियमस्य चात्र प्रतिषेधः प्राण्यङ्गादीनां समाहार एवेति नियमो वर्तिपदार्थ-स्येयत्तायां गम्यमानायां न भवतीति, न पुनः पूर्वसूत्रवत् समाहारद्वन्द्वस्य प्रतिषेधः । यद्येवम्, प्रतिषिद्धेऽपि नियमे 'दश दन्तोष्ठाः' [4]इत्यधिकरणैतावत्त्वेऽपि 'चार्थे द्वन्द्वः' (२.२.२९) इत्यनेन समाहारेऽर्थे द्वन्द्वः स्यादेव, ये चात्र प्रकरणेऽसङ्कीर्तितास्तेषु [5]नियमस्याप्रसङ्गादसत्यस्मिन् प्रतिषेधे 'चार्थे द्वन्द्वः' इत्यनेन समाहारे द्वन्द्वः स्यादेव—दशब्राह्मणक्षत्रिया इति, अतः प्रकृतानामन्येषां च सर्वेषामेकवचनो द्वन्द्वो न भवति, 'अधिकरणैतावत्त्वे' इति समाहारद्वन्द्व एव प्रतिषेध्यः ? उच्यते—'अधिकरणं वर्तिपदार्थः' इत्युक्तम्, न च समाहारद्वन्द्वे वर्तिपदार्थ-स्यैतावत्त्वं शक्यं प्रतिपादयितुम्, दशादिशब्दप्रयोगेऽपि हि तस्यैव द्वन्द्वार्थस्य समाहारस्य सङ्ख्याविशेषोऽवगम्यते, न वर्तिपदार्थस्य, [6]यथा द्विगौ दश पञ्चपूल्य इति । अतो वर्तिपदार्थस्य सङ्ख्याविशेषं प्रतिपिपादयिषताऽवश्य-मितरेतरयोगद्वन्द्वो विधेय इति दश ब्राह्मणक्षत्रिया इत्यादौ [7]तावददोषः । यद्येवम्, अनेनैव न्यायेन 'दश दन्तोष्ठाः' इत्यादावपि समाहार द्वन्द्वो न भविष्यतीति नार्थः प्रतिषेधेन ? मैवम्, असत्यस्मिन् प्रतिषेधे प्राण्यङ्गादीनां समाहार एवेति नियमादितरेतरयोगद्वन्द्वो न स्यात् । न च समाहार द्वन्द्वे दशादिप्रयोगेऽपि वर्तिपदार्थस्य सङ्ख्या-विशेषः प्रतिपादयितुं [8]शक्य इति अधिकरणैतावत्त्वे प्रतिपिपादयिषिते द्वन्द्व एव न स्यादित्यारभ्यः प्रतिषेधः । 'दश दन्तोष्ठाः' इति । अत्र दशशब्दस्य प्रत्येकं सम्बन्धाद्वर्तिपदार्थस्येयत्ता गम्यते, समुदायसम्बन्धेऽपि दन्तोष्ठात्मक-वर्तिपदार्थगतैव सङ्ख्या ॥

## १६. विभाषा समीपे ।

'अधिकरणैतावत्त्वे' (२.४.१५) इत्यधिकारात् [9]समीपरूप एतस्मिन्निति गम्यते । वृत्तौ स्वयंमात्रं दर्शितम् । 'अधिकरणैतावत्त्वस्य समीपे' इति । अत्र च भावप्रधानः समीपशब्दः, अधिकरणैतावत्त्वस्य [10]सामीप्ये परिच्छित्ताविस्यर्थः । अत्र [11]विस्पष्ट एव नियमस्य प्रतिषेधः, न हि विभाषा द्वन्द्वः प्रतिषेध्यः ।

'अव्ययीभावो[12] विहितः' इति । 'अव्ययं विभक्ति' (२.१.६) इत्यादिना । यद्यप्यत्र सङ्ख्ययेति नास्ति, सङ्ख्यया[13] तु भवत्येव । 'बहुव्रीहिः' इति । 'संख्ययाव्ययासन्न' (२.२.२५) इत्यादिना ।

---

1. यत् इत्यधिकम्—घ. 2. अस्य इत्यधिकम्—घ. 3. 'अधिकरणं वर्तिरक्षरार्थः' इति । वर्तनं वर्तः, भावे घञ् ।—म. 4. इत्यादावधिकरणे बाधकत्वेऽपि—म. 5. नियमस्याप्रसंगादेव—म. 6. यथा—पंच-पूल्यः इति नास्ति—म. 7. तावद् नास्ति—घ. 8. सत्यः—म. शक्यते—घ. 9. समीपएतत्—घ. 10. सामीप्येन—ट.घ. 11. विशिष्टः—म. 12. अपि इत्यधिकम्—म. 13. अपि इत्यधिकम्—म.

'तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते' इति एकार्थस्यैकार्थ इति [1]भावः। ऐकार्थ्यं च [2]तस्य सामीप्यप्रधानत्वात्। [3]यद्यप्यव्ययीभावोऽव्ययत्वान्निःसङ्ख्यः [4]तत्रापि [5]भेदाभावरूपमैकार्थ्यमस्त्येव। सामानाधिकरण्यं च [6]सामीप्यतद्वतोरभेदाश्रयेण प्रतिपाद्यम्। अधिकरणैतावत्त्वमपि समाहारसमाहारिणो[7]र्भेदाविवक्षयैवोपपाद्यम्। 'इतरत्र बहुव्रीहिः' इति। बह्वर्थस्य बह्वर्थं इति भावः। बह्वर्थत्वं च तस्य [8]समीपिप्रधानत्वात्। ननु द्वन्द्वस्यैकवद्भावादनुप्रयोगस्याप्येकवचनता सिद्धा, किमेतया क्लिष्टकल्पनया? उच्यते--अव्ययीभावस्यैवानुप्रयोगे तस्याव्ययत्वाद्बहुत्वाभावाद्बहुवचनं न स्यात्, सत्यपि वा तस्मिन्नम्भावे कृते उपदशा इति न स्यात्। बहुव्रीहेश्चानुप्रयोगे उपदशस्य पाणिपादस्येति षष्ठी स्यात्, उपदशम्पाणिपादस्येति चेष्यते; [9]अतो यथोक्तमेव साधीयः॥

## १७. स नपुंसकम्।

परवल्लिङ्गतापवादो योगः। सग्रहणं व्यवहितस्य द्विगोरपि यथा स्यात्, [10]अन्यथाऽव्यवहितस्य द्वन्द्वस्यैव स्यात्, नैतदस्ति; एकवचनमित्येतावन्मात्रमेवापेक्षिष्यामहे, नैकवचनविशेषं द्वन्द्वम्। एवं तर्हि योऽत्र प्रकरणेऽसङ्कीर्तितः समाहारद्वन्द्वस्तस्यापि यथा स्यात्? अन्यथा प्रकृतस्यैव द्वन्द्वस्य द्विगोश्च स्यात्। ननु प्रकरणमपि नापेक्षिष्यते, यद्येवम्, एकसङ्ख्य इत्यादावेकार्थस्य स्यात्, अतोऽवश्यापेक्ष्यं प्रकरणम्। तस्मिंश्चापेक्ष्यमाणे प्राण्यङ्गादि[11]सम्बन्धादिरूपेण द्वन्द्वः प्रकृत इति तस्यैव स्यात्। स इत्येतस्मिंस्तु सति अपेक्ष्यमाणेऽपि [12]प्रकरणे प्राण्यङ्गादिसम्बन्धपरित्यागेन योऽत्र प्रकरणे संकीर्तितो द्वन्द्वो द्विगुश्च 'स नपुंसकम्' इति सर्वस्य समाहारद्वन्द्वस्य नपुंसकत्वं लभ्यते, एकादौ चातिप्रसङ्गो न भवति। तथा च 'युवोरनाकौ' (७.१.१) इत्यादावुच्यते--युवोरिति समाहारद्वन्द्वे सनपुंसक प्रसङ्गः। अतो यावान् कश्चन समाहारद्वन्द्वः प्राण्यङ्गादिसम्बन्धी, अन्यो वा, सर्वस्यास्य नपुंसकत्वं विधीयत इति सिद्धम्।

'अकारान्तोत्तरपदः' इति। अत इत्यधिकारे 'द्विगोः' (४.१.२१) इति ङीब्विधानं लिङ्गम्। 'पञ्चखट्वी' इति। स्त्रीत्वपक्षे उपसर्जनह्रस्वत्वम्।

'अनो न लोपश्च' इति। 'उत्तरपदत्वे [13]चापदादिविधौ' (भो.प.सू. ४४) इति प्रत्ययलक्षणप्रतिषेधात्पदत्वाभावात् न लोपवचनम्।

'पात्रादिभ्यः' इति। तादर्थ्ये एषा चतुर्थी पात्राद्यन्तानां द्विगूनां सिद्धय इत्यर्थः। पात्रादिराकृतिगणः[14]॥

---

1. भावः नास्ति–म. 2. तस्य नास्ति–घ. 3. यद्यप्यव्ययीभावे–घ. 4. तथापि–घ.
5. °रूपमेवैकार्थ्यम्–घ. 6. सामीप्यं–घ. 7. अभेदविवक्षयैव–घ. 8. समीपिप्राधान्यात्–घ.
9. इति–घ. 10. अन्यथानन्तरस्य–म. 11. °सम्बन्धिना रूपेण–घ. 12. प्रकरणे नास्ति–म.
13. चापदादौ–घ. 14. अयम् इत्यधिकम्–म.

## १८. अव्ययीभावश्च ।

'पूर्वपदार्थप्रधानस्य' इति । अधिस्त्रीत्यादौ पूर्वपदार्थस्यालिङ्गत्वादलिङ्गतैव प्राप्नोति । 'अन्यपदार्थप्रधानस्य' इति । उन्मत्तगङ्गमित्यादेः । 'पुण्याहम्' इति । कर्मधारये 'राजाहःसखिभ्यष्टच्' (५.४.९१), 'रात्राह्नाहाः पुंसि' (२.४.२९) [1]इत्यस्यापवादः । '[2]सुदिनम्' इति । सुदिनशब्दः प्रशस्तवचनः । सुदिनासु समासु कार्यमेतदिति यथा । 'त्रिपथम्' इति । षष्ठीसमासः । [3]द्विगोः पात्रादित्वात् सिद्धम् । विरूपः पन्थाः विपथम्, प्रादिसमासः ।

'क्रियाविशेषणानां च' इति । क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते वचनम् ॥

## १९. तत्पुरुषोऽनञ्कर्मधारयः ।

असन्देहार्थं नञ्कर्मधारयस्तत्पुरुष इत्यन्यासादनञ्कर्मधारय इति [4]पदच्छेदः । अत्र कर्मधारय शब्दो [5]भावप्रधानः, नञ्च कर्मधारयश्च नञ्कर्मधारयौ, तौ न विद्येते यस्मिंस्तत्पुरुषे सोऽनञ्कर्मधारय इति बहुव्रीहिः । तत्पुरुषे तु अस्मिन् नञ्मात्रस्य तत्पुरुषस्याभावात्तद्युक्ततत्पुरुषो नञ्शब्देन लक्षणीयः स्यात्, लिङ्गवचनयोश्चान्यतरस्य व्यत्ययो वाच्यः स्यात्, अतो बहुव्रीहिरेव न्याय्यः । वृत्तौ वस्तुमात्रं दर्शितम्—'नञ्समासं कर्मधारयं च वर्जयित्वा' इति । 'विभाषा सेना' इति । अनन्तरेषु [6]सूत्रेष्वस्य नातीवोपयोगः, 'सञ्ज्ञायां कन्था' (२.४.२०) इत्यत्र तावदनादिः सञ्ज्ञा गृह्यते, न वा [7]तत्पुरुषो नञ्समासः, कर्मधारयो वा उशीनरेषु [8]सञ्ज्ञा अस्ति, उपज्ञोपक्रममित्यत्रापि षष्ठीतत्पुरुषाद्विना [9]तदादित्वासम्प्रत्ययः । 'छाया बाहुल्ये' (२.४.२२) इत्यत्रापि [10]पूर्वपदार्थधर्मो बाहुल्यं षष्ठीतत्पुरुषमन्तरेण न गम्यते । सभाराजेत्यत्र तु राजाऽमनुष्यपूर्वेति वचनान्नञ्समासस्य कर्मधारयस्य च [11]सभान्तस्याप्रसङ्गः । [12]द्वन्द्वस्य तु प्राप्नोति—ईश्वरश्च सभा च ईश्वरसभे इति, अतस्तत्रापि तत्पुरुष इत्यस्यांशस्योपयोगोऽस्त्येव । 'अशाला च' (२.४.२४) [13]इत्यत्र [14]समूहवचनः सभाशब्दः, समूहस्य च समूह्यपेक्षा स्फुटतरेति [15]षष्ठीतत्पुरुषस्यैव भविष्यति, नान्यस्य, ब्राह्मणश्च सभा च ब्राह्मणसभे, असभा, परमसभेति । अतः 'विभाषा सेना' (२.४.२५) इत्यत्रैवास्य साक्षादुपयोग इति भावः ॥

## २०. सञ्ज्ञायां कन्थोशीनरेषु ।

तत्पुरुषस्य कन्थया विशेषणात् तदन्तविधिरित्याह—'कन्थान्तस्तत्पुरुषः' इति । 'सौशमिकन्थम्' इति । सुशमस्यापत्यानि सौशमयः ॥

---

1. इत्यर्थमेतदिति यथा–घ. 2. 'सुदिनम्......इति यथा' इति भागो नास्ति–घ. 3. द्विगौ तु–घ. 4. पदविच्छेदः–घ. 5. भाववचनः–म. 6. योगेषु–म. 7. असौ इत्यधिकम्–घ. 8. संज्ञा नामास्ति–घ. 9. तदादित्वसंप्रत्ययः–घ. 10. °धर्मे–म. 11. °असंभवः–ट.घ. 12. द्वन्द्वस्तु–घ. 13. च इत्यधिकम्–ट.घ; 14. सहवचनः–घ. 15. षष्ठीतत्पुरुषस्य भविष्यति–घ.

## २१. उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।

'उपज्ञायत इति उपज्ञा' इति । कर्मणि 'आतश्चोपसर्गे' (३.१.१३६) इत्यङ् प्रत्ययः । 'उपक्रम्यत इत्युपक्रमः' इति कर्मण्येव घञ् । 'नोदात्तोपदेशस्य' (७.३.३४) इति वृद्धिप्रतिषेधः । 'उपज्ञा चोपक्रमश्च' इति समाहारद्वन्द्वः । 'तदन्तस्तत्पुरुषः' इति । सूत्रे तु उपज्ञोपक्रमं तत्पुरुषरूपमित्येवं सामानाधिकरण्येन विशेषणम् । तयोरुपज्ञोपक्रमयोरित्यादेर्विवरणम्—'यदि' इति । आदिः प्राथम्यम् । 'पाणिन्युपज्ञम्' इति कर्तरि षष्ठ्याः समासः । पूर्वाणि व्याकरणानि [1]अद्यतनादिकालभावायुक्तानि, तद्रहितं तु व्याकरणं पाणिनिप्रभृति प्रवृत्तमित्यस्ति [2]तदादित्वस्याख्यानम् ।

'व्याडचुपज्ञम्' इति । अडः वृश्चिकलाङ्गूलम्, तेन च तैक्ष्ण्यं लक्ष्यते, विगताडो व्यडः, तस्यापत्यं [3]व्याडिराचार्यः । स्वागतादिपाठात् 'न य्वाभ्याम्[4]' (७.३.३) इत्येष विधिर्न भवति । द्रुषिति सङ्केतः, यथाऽत्र वृत्करणम् । नन्दो राजा । मानानि प्रस्थादीनि ।

'वाल्मीकिश्लोकाः' इति षष्ठीसमासः । अस्त्यत्र तदादित्वस्याचिख्यासा, वाल्मीकिः प्रथमं श्लोकान् ददर्शेति प्रसिद्धेः । देवदत्तो यज्ञदत्तेनोपज्ञायते यज्ञदत्तेनोपक्रम्यते इति क्रियासम्बन्धमात्रमत्र विवक्षितम् ॥

## २२. छाया बाहुल्ये ।

'पूर्वपदार्थधर्मो बाहुल्यम्' इति । कथम् ? बाहुल्य इति निमित्तसप्तमी । बाहुल्ये सति या छाया तद्वाची यश्छायाशब्दस्तदन्तस्तत्पुरुष इति सूत्रेऽक्षरान्वयः । तत्र कस्य बाहुल्यमि[5]त्यपेक्षायामावारकद्रव्यनिमित्तकत्वाच्छायायास्तद्बाहुल्य इति गम्यते । तेन यानि बहूनि संभूयोपलम्भयोग्यामुपजीव्यां वा छायामारभन्ते तेष्वयं विधिः ॥

## २३. सभा राजाऽमनुष्यपूर्वा ।

इह सभाशब्दः शालावचनः । 'इह कस्मान्न भवति' इति । 'स्वं रूपम्' (१.१.६८) इति वचनाद्विहैव भवितुं युक्तमिति प्रश्नः । 'पर्यायवचनस्यैव' इति । न स्वरूपस्य, नापि विशेषाणां [7]चन्द्रगुप्तादीनामित्यर्थः । एतदेवाप्तोक्तेन द्रढयति—'तदुक्तम्' इति । कथं पुनरेतल्लभ्यते ? द्वावत्र नञौ—अराजपूर्वा, अमनुष्यपूर्वा चेति । तत्र 'नञिवयुक्तन्यायेन' (व्या.प. ६५) [8]राजशब्दसदृशाः पर्याया एव गृह्यन्ते, अमनुष्यशब्दो रूढिशब्दोऽपि । कथं तर्हि 'अमनुष्यकर्तृके च' (३.२.५३) इत्यत्र पित्तघ्नं घृतमित्युदाहरिष्यते ? व्याख्यानात्तत्र मनुष्यान्यमात्रस्य ग्रहणं न रूढिः [9]इत्यर्थः ॥

---

1. °कालपरिभाषा°—म. 2. °स्याख्यानत्वम्—म. 3. व्याडिरार्यः—घ. 4. पदान्ताभ्याम् इत्यधिकम्—म. 5. °माचारक°—म. 6. 'छायायाः—उपजीव्यां वा' इति भागः नास्ति—घ. 7. °ईश्वरादीनाम्—म. 8. राजसदृशशब्दाः—घ. 9. इत्यदोषः—म.

## २४. अशाला च ।

सभाशब्दोऽयं शालावचनः, [1]सङ्घवचनश्च, तत्र शालाप्रतिषेधादितरस्य ग्रहणमित्याह––'सङ्घातवचनः' इत्यादि । तत्र पूर्वसूत्रेण राजामनुष्यपूर्वत्वे [2]शालावचनस्यापि भविष्यति, अशालावचनस्य त्वनेन राजामनुष्यपूर्वत्वाभावेऽपि [3]इति ॥

## २५. विभाषा सेनासुराच्छायाशालानिशानाम् ।

तत्पुरुष इति प्रकृतं षष्ठीबहुवचनान्तं विपरिणम्यते, नपुंसकमिति च भावप्रधानं सम्पद्यते । सेनाद्यन्तानां तत्पुरुषाणां नपुंसकत्वमित्यक्षरार्थः । वृत्तौ तु वस्तुमात्रं दर्शितम् । यद्वा––प्रथमास्थाने षष्ठी । 'कुडयच्छायम्' इति । बाहुल्याभावेऽनेन विकल्पः, बाहुल्ये नित्यार्थम् 'छाया बाहुल्ये (२.४.२२) इत्युक्तम् । 'श्वनिशम्' इति । यस्यां निशायां श्वान उपवसन्ति सा श्वनिशमित्युच्यते । सा पुनः कृष्णचतुर्दशी; तस्यां हि श्वान उपवसन्तीति प्रसिद्धिः ॥

## २६. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।

किमर्थमिदम्[4] ? इह द्वन्द्वे त्रीणि दर्शनानि––अवयवार्था एवापेक्षितपरस्पराः द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदायो नामेत्येकम्; अवयवार्थव्यतिरिक्त एव समुदायो द्वन्द्वार्थः, [5]स चावयवलिङ्गेन लिङ्गवानिति द्वितीयम्; स एव स्वयं लिङ्गशून्य इति तृतीयम् । तत्र [6]पूर्वके दर्शनद्वये विभिन्नलिङ्गावयवद्वन्द्वे युगपदुभयलिङ्गतानुपपत्तेः पर्यायेण लिङ्गद्वयप्रसङ्गे परस्यैव लिङ्गं भवतीति नियमार्थं भवति । तृतीये तु समासार्थस्यालिङ्गस्य परवल्लिङ्गता भवतीति [7]विध्यर्थः । तत्पुरुषोऽपि द्विविधः––पूर्वपदार्थप्रधानोऽर्धपिप्पल्यादिः, उत्तरपदार्थप्रधानो राजकुमार्यादिः । तत्रोत्तरपदार्थप्रधाने प्राधान्यादेव परवल्लिङ्गस्य सिद्धत्वात् [8]पूर्वपदार्थप्रधाने विध्यर्थं भवति । तत्र वृत्तिकारेण विधिपक्ष आश्रितस्तदाह––'परस्य यल्लिङ्गं तद्भवति' इति । एवं हि सूत्रस्यैकरूपा वचनव्यक्तिर्भवति, इतरथा तत्पुरुषे विधिरूपा, द्वन्द्वे नियमरूपेति वचनव्यक्तिभेदः स्यादिति भावः । 'द्वन्द्वस्य तत्पुरुषस्य च' इति । एतेन 'द्वन्द्वतत्पुरुषयोः' इति षष्ठीयमिति दर्शयति । सप्तम्यां त्वयमर्थो भवति––द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवतीति । तत्र कार्यिणोऽनुपादानात् परशब्दस्य च सम्बन्धिशब्दत्वात् तदाक्षिप्तस्य [9]पूर्वपदस्य लिङ्गविधिर्भवति ।

यद्वा––द्वन्द्वे तत्पुरुषे च विषये परस्यैव लिङ्गं भवतीत्यक्षरार्थः । तत्रापि पूर्वपदस्यैव लिङ्गविधिः । अत्र पक्षे मयूरीकुक्कुटावित्यत्रोत्तरपदार्थलिङ्गे [10]पूर्वपदार्थस्यातिदिष्टे स्त्रीप्रत्ययस्य निवृत्तिः प्राप्नोति, कुक्कुटमयूर्यौ, राजकुमारी, अर्धपिप्पलीत्यादौ पूर्वपदे स्त्रीप्रत्ययप्रसङ्गः । किं पुनरस्मिन् पक्षे किंचिदिष्टं सिध्यति ? आहोस्विद् [11]दोषान्तमेव ? सिध्यतीत्याह । इह पूर्वकायः अर्धद्रोण इति, यत्र पूर्वपदं नपुंसकमुत्तरपदं च पुंल्लिङ्गम्, तत्र परस्य लिङ्गे पूर्वस्यातिदिष्टे समासस्यापि तदेव भवति, न च [12]पूर्ववदिह किंचिदनिष्टमापद्यते । द्वन्द्वेऽपि

1. नास्ति–म. 2. अपि इत्यधिकम्–म. 3. 'भवति' इत्यधिकम्–घ. 4. आरभ्यते इत्यधिकम्–म. 5. सर्वावयवलिंगेन–म. 6. पूर्वपक्षे–म. 7. विध्यर्थम्–ट. 8. तत्पूर्व°–म. 9. सर्वपादस्य–म. 10. °स्यातिदेशे–म. 11. दोषान्तरमेव–म.घ. 12. पूर्वपदे–घ.

पूर्वके दर्शनद्वये गुणकर्मणी द्रव्यगुणावित्यादौ यत्र पुंनपुंसकाभ्यां भिन्नलिङ्गे पूर्वोत्तरपदे, यत्र वाऽवर्णान्तं स्त्रीप्रत्ययान्तं वा [1]पदं न भवति—गतिस्थाने, योषित्पुरुषौ, तित्तिरिबलाके इति, तत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे द्वन्द्वस्य पर्यायेण द्वयोरपि लिङ्गे प्रवृत्तेऽपि सर्वमिष्टं सिध्यति, पूर्ववदेव न किंचिदनिष्टमापद्यते। 'व्यतिरिक्तो द्वन्द्वार्थः स्वयं लिङ्गशून्यः' इत्यत्र तु पक्षे द्वन्द्वार्थस्यालिङ्गत्वं तदवस्थमेवेति [2]दोषान्तमेव। 'द्वन्द्वस्य तत्पुरुषस्य च' इति। द्वन्द्वार्थस्य तत्पुरुषार्थस्य चेत्यर्थः। तेनानुप्रयोगेऽपि तदेव लिङ्गं भवति। यदि तर्हि षष्ठ्याश्रयणेन समासार्थस्य परवल्लिङ्गमतिदिश्यते, 'पूर्ववदश्ववडवौ' (२.४.२७) इत्यत्रापि पूर्वपदार्थलिङ्गं [3]समासार्थेऽतिदिश्यते, ततश्चोत्तरपदार्थस्य स्त्रीत्वं स्थितमेवेति टापः श्रवणप्रसङ्गः। सप्तमीपक्षे तु 'पूर्ववदश्ववडवौ' (२.४.२७) इत्यत्रापि पूर्वपदार्थलिङ्गमुत्तरपदार्थस्यातिदिश्यत इति वडवाशब्दस्य पुंस्त्वातिदेशात् स्त्रीत्वाभावे टापो निवृत्तिः सिध्यति। निपातनात् सिद्धम्। किं निपातनम्? न तावद् 'पूर्ववदश्ववडवौ' इति निपात[4]नमाश्रयितुमुचितम्, वचनान्तरेऽनतिदेशप्रसङ्गात् अश्ववडवान्, अश्ववडवैरिति। एवं तर्ह्यश्ववडवपूर्वापराधरोत्तराणामित्यत्र टापोऽनुच्चारणान्निपातनादश्ववडवयोर्द्वन्द्वे टाब्निवर्तिष्यते।

अपर आह—'चार्थे द्वन्द्वः' (२.२.२९) इत्यत्र 'अनेकम्' (२.२.२४) इत्यधिकारात् सर्वेषामेव वर्तिपदार्थानां प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इति ह्रस्वत्वं भविष्यति। इहापि तर्हि प्राप्नोति—कुक्कुटमयूर्याविति? अस्तु, का रूपसिद्धिः? परवल्लिङ्गमिति [5]शब्दशब्दार्थौ। कोऽर्थः? लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च [6]तन्त्रेणैकशेषेण वोच्यते। तदयमर्थो भवति—द्वन्द्वार्थस्य तत्पुरुषार्थस्य परस्येव लिङ्गं भवति। तदभिधायी प्रत्ययश्च परस्यैव भवति ताभ्यामिति। तत्र च यत्र "द्रव्यगुणौ" "गुणकर्मणी"—'अर्धद्रोण' इत्यादौ लिङ्गाभिधायी प्रत्ययो न संभवति तत्रार्थ एवातिदिश्यते, उभयसम्भवे तूभयम्, यथा कुक्कुटमयूर्याविति, ततश्चौपदेशिकस्य ह्रस्वत्वेऽप्यातिदेशिकस्य श्रवणं भविष्यति; तस्य चानुपसर्जनत्वात् तदन्तस्य चाप्रातिपदिकत्वात् पुनर्ह्रस्वत्वाभावः। इह तर्हि दत्तागार्ग्यायण्यौ, दत्ताकारीषगन्ध्ये इति ह्रस्वत्वे [7]कृते समासात् पुनः ष्फङ्यङौ प्राप्नुतः? स्ताम्, 'भस्याऽढे तद्धिते' (वा. ७३१) इति पूर्वोत्पन्नयोर्निवृत्तिर्भविष्यति। यत्र तर्हि पुंवद्भावो नास्ति अभत्वात्, यथा—दत्ता च युवती च दत्तायुवती इति, तत्र द्वयोः स्त्रीप्रत्यययोः श्रवणप्रसङ्गः, तस्मादुपसर्जनह्रस्वत्वं द्वन्द्वे न भवति। अन्वर्थाह्युपसर्जनसञ्ज्ञाऽप्रधानस्य विधीयते। द्वन्द्वे चावयवार्थानामेव कार्यान्वयादप्राधान्याभावः। परवल्लिङ्गमिति चार्थ एवातिदिश्यते, अश्ववडवाविति च निपातनात् [8]इत्येतदेव [9]सम्प्रति।

'द्विगुप्राप्तापन्न' इत्यादि। स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः, [10]तत्पुरुषग्रहणं न करिष्यते, परवल्लिङ्गं द्वन्द्वस्येत्येव। कथं पूर्वकायः, अर्धपिप्पलीति? एकदेशिसमासो नारप्स्यते, कर्मधारय एवात्र भविष्यति—पूर्वश्चासौ कायश्च, अर्धं चासौ पिप्पली चेति। पूर्वादयः शब्दा एकदेशे वर्तन्ते, कायावयस्तु समुदाये, कथमेषां सामानाधिकरण्यम्? अवयवेन समुदायोपचारात्। [11]तदेवं कर्मधारये कृते प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भविष्यति, नार्थस्तत्पुरुषग्रहणेन, नाप्येकदेशिसमासेन। षष्ठीसमासप्रसङ्ग इति चेन्न; इष्टत्वादनभिधानाच्च। तत्रैतत् स्यात्—यद्यपि पूर्वकाय इत्यादीनि रूपाणि कर्मधारयेणापि सिध्यन्ति, तथापि मुख्यार्थवृत्तिषु

1. पूर्वपदं—म.ट. 2. दोषान्तरमेव—घ. 3. समासार्थस्य—घ. 4. °तुं युक्तम्—म. 5. शब्दार्थे—म. 6. 'तन्त्रेण—अर्धद्रोण इत्यादौ' इति भागो नास्ति—म. 7. कृते नास्ति—घ. 8. 'सिद्धम्' इत्यधिकम्—घ. 9. सांप्रतम्—घ. 10. इह इत्यधिकम्—घ. 11. तदेवं नास्ति—म.

कायादिशब्देषु यथा पूर्वं कायस्येत्येवमादि वाक्यं भवति, तथा कायपूर्वं इत्यादिषष्ठीसमासोऽपि स्यात्, अतस्तन्निवृत्तये एकदेशिसमास [1]आरब्ध इति ? तच्च नैवम्, इष्टत्वादनभिधानाच्च। तत्र तावत् 'द्वितीयतृतीय' (२.२.३) इत्यत्रान्यतरस्यांग्रहणात् सूत्रकारस्य षष्ठीसमास इष्टः भिक्षाद्वितीयमिति 'अर्धं नपुंसकम्' (२.२.२) इत्यत्रापि भाष्यकार आह––इष्यतेऽत्र षष्ठीसमासोऽपि, तद्यथा––'अपूपार्धं मया भक्षितम्' (म.भा. १.४७९) इति। अस्ति च पैङ्गले सूत्रे प्रयोगः––'स्वरार्धं चार्यार्धम्' (छं.शा. ४.१४) इति। पूर्वापरेत्यत्र त्वनभिधानात् षष्ठीसमासो न भविष्यति ॥

## २७. पूर्ववदश्ववडवौ ।

'अश्ववडवयोः' इति। 'विभाषा वृक्ष॰' (२.४.१२) इत्यत्र 'पशुद्वन्द्व' इत्येव सिद्धेऽश्ववडवग्रहणं प्रतिपदविधानार्थम्, तत्र प्रतिपदविधानादश्ववडवमित्येकवद्भावपक्षे इमं विधिं बाधित्वा 'स नपुंसकम्' (२.४.१७) इत्येतदेव भवति। तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमप्येकवद्भाववदेव प्रतिपदविहितं भवति। यस्तु पूर्ववदित्यतिदेशः स एकवद्भावाभावपक्षे चरितार्थः, तदाह––'तत्रैकवद्भावादन्यत्र' इति। 'न निपातनम्' इति। निपातने हि पूर्ववदिति वचनमनर्थकम्, अश्ववडवावित्येव ब्रूयात्, तेन किं सिद्धं भवतीत्याह––'तत्र' इति। अतन्त्रम् अप्रधानम्, अविवक्षितमित्यर्थः। निपातने तु तद्विवक्षितं स्यात्, यथोच्चारितरूपविषयत्वा[2]न्निपातस्य ॥

## २८. हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।

'हेमन्तशिशिरौ' इति। अत्र नपुंसकत्वं प्राप्तं शिशिरशब्दस्य नपुंसकत्वात्। केचित्तु 'हेमन्तः शिशिरोऽस्त्रियाम्' (अमर. १.३.१८) इत्युभयलिङ्गं मन्यन्ते, तेषामत्र हेमन्तशिशिरावित्यनर्थकम्। 'अहोरात्रे' इति। अत्र 'रात्राह्नाहाः पुंसि' (२.४.२९) इति पुंस्त्वं प्राप्तम्। 'लिङ्गव्यत्यय उक्तः' इति। 'व्यत्ययो बहुलम्' (३.१.८५) इत्यनेन ॥

## २९. रात्राह्नाहाः पुंसि ।

'इत्येते पुंसि भाष्यन्ते' इति। केचिदाहुः––रात्र्यादीनामेवानेन पुंस्त्वं विधीयते, तदन्तस्य तु परवल्लिङ्गमित्येव सिद्धमिति। एवं तु समाहारे 'स नपुंसकम्' (२.४.१७) इत्येतदेव स्यात्, परवल्लिङ्गापवादत्वात् तस्य, तस्माद्रात्राद्यन्तस्य समासस्यैवेदं लिङ्गविधानं युक्तम्। एवं हि समाहारेऽपि परत्वादिदमेव प्रवर्तते। 'इत्येते पुंसि भाष्यन्ते' इत्यत्र त्वेतदन्ता इत्यर्थो द्रष्टव्यः। '[3]त्रिरात्रः' इति। समाहारे द्विगुः, 'अहः सर्वैकदेश' (५.४.८७) इत्यच् समासान्तः। 'पूर्वाह्णः' इति। अह्नः पूर्वो भागः, एकदेशिसमासः। 'राजाहःसखिभ्यष्टच्' (५.४.९१) 'अह्नोऽह्न एतेभ्यः' (५.४.८८) इत्यह्नादेशः, 'अह्नोऽदन्तात्' (८.४.७) इति णत्वम्। 'द्व्यहः' इति। 'न सङ्ख्यादेः समाहारे' (५.४.८९) इत्यह्नादेशाभावः, 'अह्नष्टखोरेव' (६.४.१४५) इति टिलोपः।

1. आरब्धव्यः–म. 2. निपातनस्य–इ. 3. द्विरात्रः इत्यधिकम्–घ.

'अनुवाकादयः पुंसि' इति। वाक्यविशेषस्य ताः सञ्ज्ञाः कर्मणि घञन्ता इति नपुंसकत्वे प्राप्ते वचनम् ॥

## ३०. अपथं नपुंसकम् ।

'पथः सङ्ख्याव्ययादेः' (वा. १६१) इत्यस्यापरकालभावित्वादयमारम्भः। 'अपथम्' इति। 'पथो विभाषा' (५.४.७२) इति यदा समासान्तप्रतिषेधो न भवति तदा 'ऋक्पूरब्धूः' (५.४.७४) इत्यकारः [1]समासान्तः। समासान्तनिर्देशाच्च तदभावपक्षे पुंस्त्वमेव भवति—अपन्था इति। 'तत्पुरुषे इति वर्तते' इति। एतदर्थमेव 'स नपुंसकम्' (२.४.१७) इत्यस्यानन्तरं[2] न कृतम् ॥

## ३१. अर्धर्चाः पुंसि च ।

साहचर्याच्छत्रिन्यायेन कार्षापणादीनामप्यर्धर्चशब्देन ग्रहण मित्याह—'अर्धर्चादयः' इति। बहुवचनमत्र प्रमाणम्। 'शब्दरूपाश्रया चेयं द्विलिङ्गता' इति। अस्मिन् शब्दरूपे लिङ्गद्वयं भवतीत्येतावदत्र विवक्षितम्, न पुनरस्य शब्दस्य यावानर्थस्तत्र सर्वत्र लिङ्गद्वयं भवतीत्येवमपीत्यर्थः। किमेवं सति सिद्धं भवतीत्याह—'क्वचित्' इति। अर्थभेदेन व्यवस्थयापि भवल्लिङ्गद्वयं तत्रैव शब्दे सम्प्रवृत्तमिति भावः। अत्रोदाहरणमाह—'यथा' इति। 'शङ्खः पद्मश्च विज्ञेयौ धनदस्य महानिधी'।

'क्रियाशब्दस्य' इति। तद्यथा—भूतं काण्डम्, भूता शाला, भूतो घट इति। 'यौगिकस्याभिधेयवल्लिङ्गम्' इति। यद्यपि लवणवृत्तेरपि सैन्धवशब्दस्य योगोऽपि निमित्तम्, तथापि रूढिशक्तिरपि तत्र निमित्तम्। अतो यौगिकस्येति केवलयोगनिमित्तस्येत्यर्थः। अभिधेयवल्लिङ्गमिति, यथा—सिन्धौ भवं सैन्धवं जलम्, सैन्धवो मत्स्यः, सैन्धवी शफरीति। 'उत्कर्षे पुंल्लिङ्गः' इति। चन्दनसारः, खदिरसार इति। 'धर्म इत्यपूर्वे पुंल्लिङ्गः' इति। यागादिक्रियाजन्यः स्वर्गादिफलानुगुणः कर्तर्युत्पन्नः संस्कारविशेषः अपूर्वम्। भाट्टास्तु अपूर्वसाधने यागादावेव धर्मशब्दं पुंल्लिगं मन्यन्ते—'चोदनालक्षणोऽर्थो धर्मः' (जै.पू.मी. १.१.२), 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति। शाबरेऽप्युक्तम्—'यो यागमनुतिष्ठति तं धार्मिक इत्याचक्षते' इति ॥

## ३२. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।

'अन्वादेशोऽनुकथनम्' इति। शब्दार्थकथनमेतत्, यादृशस्त्वत्राभिप्रेतस्तादृशं पश्चाद्वक्ष्यति। 'आभ्यां छात्राभ्याम्' इति। आदेश एषः। 'अथो आभ्याम्' इति। एषोऽन्वादेशः। अथोशब्देन चात्रान्वादेशोऽभिव्यज्यते।

ननु तृतीयादावयमादेशः, तत्र च टायामोसि चैनादेशो वक्ष्यते, अन्याः सर्वा हलादयः, तत्र हलिलोपेनैव (७.२.११३) आभ्यामित्यादिरूपं सिद्धम्; नार्थ आदेशवचनेन, तत्राह—'आदेशवचनम्' इति।

1. समासान्तः नास्ति—ङ. 2. इदं इत्यधिकम्—घ.

अज्ञाताद्यर्थविवक्षायामकचि कृते 'हलि लोपः' (७.२.११३) इत्यत्र 'अनाप्यकः' (७.२.११२) इत्यतोऽक इत्यधिकारादिद्रूपलोपो न स्यात्, सत्यपि च तस्मिन्नाभ्यामित्यादिरूपं न सिध्येत्; तस्मात् साकच्कार्थमादेशवचनम्। साकच्कार्थे चास्मिन् शित्करणं सर्वादेशार्थम्, न त्वन्त्यस्य। विकारवचनानर्थक्यात्। यदि ह्ययमन्त्यस्य विकारः स्याद्वचनमिदमनर्थकं स्यात्; त्यदाद्यत्वेनैव सिद्धेः। अर्थवद्वादेशप्रतिषेधार्थम्। अन्त्यस्यापि विकारवचनमर्थवदेव, [1]येऽन्य आदेशा आभ्यामित्यादौ दीर्घादयस्ते मा भूवन्नित्यकारस्याप्यकारवचनं स्यात्, यथा 'मो राजि समः क्वौ' (८.३.२५) इति मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। ननु च कृतेऽप्यकचि अनेनादेशे सत्याभ्यामित्यादिरूपस्य साधारण्यादज्ञाताद्यर्थगतिः प्रकरणाधीना। यद्येवम्, अनुत्पत्तिरेवाकचोऽस्तु, प्रकरणादिनैवाज्ञाताद्यर्थः प्रतिपत्स्यते, अतोऽनुदात्तत्वमेव विधेयम्, नादेशः? उच्यते—असत्यादेशे प्रकरणादिकमन्तरेणाकचैव कश्चिदज्ञातादिकं प्रतिपादयेत्, मैवं प्रतिपीपददित्यादेशवचनम्। उत्तरार्थं च। अनुदात्तवचनं किमर्थम्, यावता 'ऊडिदंपदादि' (६.१.१७१) इति विभक्तेरुदात्तत्वं शेषनिघातेनैव सिद्धम्। अनुदात्तवचनं विभक्त्यन्तस्यानुदात्तार्थम्, शेषनिघातेन हि प्रकृतेरेवानुदात्तत्वं सिध्यति। कथं पुनरिदमस्तृतीयादावशादेशो भवति, स चानुदात्त इत्यनेन विभक्त्यन्तस्यानुदात्तत्वं विधातुं शक्यम्? नानेन विभक्त्यन्तस्यानुदात्तत्वं विधीयते, किं त्वनेन प्रकृतेरनुदात्तत्वे कृते 'ऊडिदंपदादि' (६.१.१७१) इत्यत्रान्तोदात्तादित्यधिकारादसति विभक्तेरुदात्तत्वे 'अनुदात्तौ सुप्पितौ' (३.१.४) इत्यनुदात्तत्वादाभ्यामित्यादि पदं कृत्स्नमेवानुदात्तं भवति। यद्यन्वादेशोऽनुकथनम्, इहापि प्राप्नोति—देवदत्तं भोजय, इमं च यज्ञदत्तमिति, अस्ति ह्यत्रान्वादेशः, तत्र 'द्वितीयाटौस्स्वेनः' (२.४.३४) इत्येनादेशः प्राप्नोति? इत्यत आह—'नेह' इति। 'एकस्यैवाभिधेयस्य' इत्यादि। तत्रैवान्वादेशशब्दः प्रसिद्धतर इति भावः॥

## ३३. एतदस्त्रतसोस्त्रतसौ चानुदात्तौ।

'पुनर्वचनमनुदात्तार्थम्' इति। पाञ्चमिकोऽशादेश उदात्तः स्यात्, अनुदात्तश्चेष्यते इत्यनुदात्तार्थं पुनर्वचनम्। त्रतसोरिति वचनं निमित्तभावार्थम्, अन्यथा 'त्रतसौ चानुदात्तौ' इत्यन्वाचयो विज्ञायेत—यत्र त्रतसौ पश्यसि तत्र तावनुदात्ताविति। किमर्थं पुनस्त्रतसोरनुदात्तत्वम् [2]इष्यते, यावताऽत्रात इत्यादौ त्रतसोः कृतयोः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यशनुदात्तः करिष्यते? यद्येवं [3]लभ्यते, कृतं स्यात्; तत्तु न लभ्यम्। इह हि त्रतसोः कृतयोः लित्स्वरश्च प्राप्नोति, अनेन चानुदात्तोऽशादेशः, तत्र येन नाप्राप्तिन्यायेन (व्या पा. ४९) अपवादत्वान्नित्यत्वाच्चानुदात्तेऽशादेशे कृते तद्विधानसामर्थ्यादपवादस्य लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात्, यथा—गोष्पदप्रमित्यत्र णमुल उलोपेन सह विधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति। तस्मात् 'त्रतसौ चानुदात्तौ' इति वक्तव्यम्॥

## ३४. द्वितीयाटौस्स्वेनः।

अनन्तरत्वादेतद एवैनादेशः प्राप्नोति, इदमोऽपीष्यते, तदिदमो ग्रहणं कर्तव्यम्? न कर्तव्यम्, 'इदमोऽन्वादेशे' (२.४.३२) इत्यत इदम इत्यनुवर्तिष्यते, 'एतदस्त्रतसोरित्यत्रापि सम्बन्धात् तस्यापि त्रतसोरादेश-

---

1. ये एते–घ. 2. मुच्यते–घ. 3. लभ्येत–घ. 4. यदि तदनुवर्तते इत्यधिकम्–घ.

प्रसङ्गस्तत्राह—'इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः' इति। इदमप्यत्र वक्तव्यम्—इदमो हप्रत्ययेन बाधितत्वात् त्रलोऽसम्भवात् त्रतसोरित्यत्रासम्बन्ध इति। यदि परमनुवृत्तिसामर्थ्यात् तस्याप्यादेशेन भाव्यम्, न चासति श्रुते तद्विधानमुपपद्यत इति त्रलः सत्ता [1]परिकल्प्यते ? तदपि न; उत्तरार्थमप्यनुवृत्तिसम्भवादिति।

'एनदिति नपुंसकैकवचने वक्तव्यम्' इति। [2]एनादेशे कृते 'अतोऽम्' (७.१.२४) इत्यम्भावे सत्येन-मिति प्राप्नोत्यत एनदादेशो वक्तव्यः। यद्येवम्, अयमेव सर्वत्रास्तु, नार्थ एनादेशेन, कथम्—एनम् एनौ एनान्, एनेन एनयोरिति ? त्यदाद्यत्वे कृते भविष्यति, नपुंसकैकवचने तु नित्यत्वात् 'स्वमोर्नपुंसकात्' (७.१.२३) इति लुकि कृते 'एनत्' इति स्यादिति सिद्धम्, इह त्वेनं श्रित इति द्वितीयासमासे यद्यपि एनादेशोऽप्यन्येनदादेशः, उभाभ्यामपि न भाव्यम्, कथम् ? 'अन्तरङ्गानपि विधीन बहिरङ्गो लुग् बाधते' (व्या.प. १२८), तस्मादेत-च्छ्रित इति भवति। 'एकमेव विधानम्' इति। 'अयं दण्डः' इत्यनेन दण्डस्य सत्तामात्रमुपलक्ष्यते, न तु किंचिद्विधीयते। एवमीषदर्थ इत्यादिना आकारस्य स्वरूपमात्रं निर्दिश्यते, न तु किंचिद्विधीयते॥

## ३५. आर्धधातुके।

'वध्यात्' इति। आशिषि लिङ, 'लिङाशिषि' (३.४.११६) इत्यार्धधातुकसञ्ज्ञा। 'हन्यात्' इति। विध्यादिलिङ। 'विषयसप्तमी चेयम्' इति। सामान्यनिर्देशोऽयम्। तत्र व्यापित्वान्नित्यत्वाच्च न तेन सह देशकालकृतं पौर्वापर्यं सम्भवति, तस्माद्विषयसप्तमी। यदि तु व्यक्तिनिर्देशेन परसप्तमी स्यात्, भव्यमित्यादि न [3]स्यात्। तथा हि—हलन्तत्वादस्यादीनाम् 'ऋहलोर्ण्यत्' (३.१.१२४) इति ण्यति कृते तत्र परत आदेशे-भाव्यम्। तत्र द्वयोर्वृद्धौ कृतायां तृतीयस्य च युकि—भाव्यम्, [4]प्रवैयम्, आख्याय्यमिति प्रसज्येत। इह च 'ब्रुवो वचिः' (२.४.५३), ब्रुवोऽजन्तत्वाद्यति कृते वच्यादेशे च वच्यमिति प्राप्नोति, विषयसप्तम्यां तु [5]'न दोष' इत्याह—'तेन' इति। 'यथाप्राप्तम्' इति। यो यतः प्राप्नोति स ततो भवतीत्यर्थः। 'असिद्धवदत्राभात्' (६.४.२२) इत्यस्य भावाभाव[6]व्यवस्थार्थम्। अत्र चाङ्गाधिकारे च द्विरार्धधातुकाधिकारः क्रियते। यदि ह्येतेऽप्यादेशास्तत्रैव विधीयेरन्, जक्षतुः, अधिजगे, अध्यगीष्ट, बभूव, चिख्यतुरिति घसाद्यादेशानामसिद्धत्वादु-पधालोपाल्लोपे त्ववुग्यणो न स्युः। यदि त्वतो लोपादयः [7]अप्यत्र विधीयेरन्, गतः गतवानित्यनुनासिक-लोपस्यासिद्धत्वात् 'अतो लोपः' (६.४.४८) स्यादित्येषा दिक्॥

## ३६. अदो जग्धिर्ल्यप्ति किति।

'ल्यप्' इति पृथक्पदं लुप्तसप्तमीकम्। इह पदद्वयापेक्षं, समासमपेक्षमाणो ल्यप् बहिरङ्गः, क्त्वा-प्रत्ययमात्रापेक्षस्तु जग्ध्यादेशोऽन्तरङ्गः; तत्र क्त्वावस्थायामेव जग्धौ [8]कृते 'प्रजग्ध्य' इति सिद्धम्। नार्थो ल्यब्ग्रहणेन। एवं तर्हि ल्यब्विषयेऽप्यन्तरङ्गत्वात् ति कितीत्येव सिद्धे, जग्धौ ल्यबिति यदुच्यते, तज्ज्ञापयति—अन्तरङ्गाणामपि विधीनां [9]ल्यपा भवति बाधनम् (पु.पा. ५४) इति। विधाय, विहाय, प्रधाय, प्रहाय, प्रखन्य, प्रस्थाय, प्रकम्य, आपृच्छ्य, प्रदीव्य, प्रपठ्येत्येषु विधिषु 'दधातेर्हिः' (७.४.४२)

1. कल्प्यते–घ. 2. एतादेशे–इ. 3. सिध्येत्–घ. 4. प्रवेयम्–घ. 5. नैष–ट.
6. व्यवस्थित्यर्थम्–घ. 7. अप्यत्रैव–ट.घ. 8. प्रवृत्ते–घ. 9. हि प्रभृतीनां इत्यधिकम्–ट.घ.

'जहातेश्च क्त्वि' (७.४.४३), 'दो दद् घोः' (७.४.४६) 'जनसनखनां सञ्झलोः' (६.४.४२) 'द्यतिस्यतिमास्थामित्ति किति' (७.४.४०) 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५), 'च्छ्वोः शूडनुनासिके च' (६.४.१९), 'आर्धधातुकस्येड्वलादेः' (७.२.३५) इत्येते विषयः क्त्वावस्थायामेव प्राप्ता बहिरङ्गेन ल्यपा बाध्यन्ते ।

एष एवार्थः श्लोकान्तरेण भाष्ये कथितः—'[1]जग्धिविधिर्ल्यपि यत्तदकस्मात्', अकस्मादिति । निष्प्रयोजनमित्यर्थः । 'सिद्धमदस्ति कितीति विधानात्' अदो जग्धिविधानमित्यर्थः । ज्ञापकार्थं ल्यपि जग्धिविधानमित्याह—'हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि' । ल्यब्भरतीति, ल्यबादेशो हरति—व्यपनयति बाधते इत्यर्थः । 'उ' इति निपातोऽवधारणे । तदेवास्य प्रयोजनमित्यर्थः ॥

## ३७. लुङ्सनोर्घस्लृ ।

ननु 'सृघस्यदः क्मरच्' (३.२.१६०) इति वचनात् घसिः प्रकृत्यन्तरमस्ति ? सत्यम्; अदेरात्सीत्, अत्सिषतीत्यनिष्टं रूपं मा भूदिति योगारम्भः । 'प्रात्तीति प्रघसः' इति । पचाद्यच् । अस्याऽपि सूत्रवदेव प्रयोजनम् ॥

## ३८. घञपोश्च ।

## ३९. बहुलं छन्दसि ।

'घस्ताम्' इति । लुङि 'मन्त्रे घसह्वर०' (२.४.८०) इत्यादिना च्लेर्लुक्, 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५) इत्यडभावः । 'सग्धिः' इति । '[2]घसिभसोः' (६.४.१००) इत्युपधालोपः, 'झलो झलि' (८.२.२६), समाना ग्धिरिति 'समानस्य छन्दसि' (६.३.८४) इति सभावः ।

'अन्यतरस्यां ग्रहणमेव कस्मान्न क्रियते' इति । कः पुनरेवं सति गुण इत्याह—'तदेव' इति । प्रकृत्यन्तरस्य सद्भावादस्य प्रयोजनं मृग्यम् ॥

## ४०. लिट्यन्यतरस्याम् ।

प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थमिदम् । तेन यत्र लिङ्गं वचनं वा नास्ति, तत्र तस्य प्रयोगो न भवति । तत्र लृदित्करणं लुङि प्रयोगस्य लिङ्गम्, घसिश्च सान्तेष्वित्यनुदात्तपाठो वलादावार्धधातुके, 'सृघस्यदः क्मरच्' (३.२.१६०) इति वचनं क्मरचि । भ्वादौ परस्मैपदिषु पाठात् परस्मैपदे प्रयोगः ॥

---

1. 'जग्धिविधिर्ल्यपि यत्तदकस्मात् सिद्धमदस्ति कितीति विधानात् ।
   हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि ॥"
2. क्ङिति इत्यधिकम्—घ.

## ४१. वेञो वयिः ।

## ४२. हनो वध लिङि ।

'अकारान्तश्चायमादेशः' इति । कुत एतत् ? शैलीयमाचार्यस्य यत्र व्यञ्जनान्त आदेशस्तत्रेकारमुच्चारयति, यथा जग्ध्यादौ । तस्मादिकाराकरणादकारान्तोऽयमादेशः । 'हलन्तलक्षणा वृद्धिर्न भवति' इति। उत्तरसूत्रेण वधादेशे कृत इति भावः ॥

## ४३. लुङि च ।

## ४४. आत्मनेपदेष्वन्यतरस्याम् ।

'आहसत' इति । 'आङो यमहनः' (१.३.२८) इत्यात्मनेपदम् । 'आत्मनेपदेष्वनतः' (७.१.५), 'हनः सिच्' (१.२.१४) इति सिचः किस्वात् 'अनुदात्तोपदेश' (६.४.३७) इत्यनुनासिकलोपः ॥

## ४५. इणो गा लुङि ।

'अगुः' इति । 'गातिस्था०' (२.४.७७) इति सिचो लुक्, 'आतः' (३.४.११०) इति झेर्जुस्, 'उस्यपदान्तात्' (६.१.९६) । 'इण्वदिक इति वक्तव्यम्' इति । यद्यस्यैवायं प्रकरणस्य शेषः स्यात्, 'इणिकोर्लुङि—इति सूत्रन्यासः कर्तव्यः' इत्यवक्ष्यत्; यतस्तु खलु पृथक् 'इण्वदिक' इत्याह, तेन मन्यामहे—सर्वस्य शास्त्रस्य शेषोऽयमिति । तेन 'इणो यण्' (६.४.८१), 'एतिस्तु शासु०' (३.१.१०९) इत्याद्यपि भवति—अधियन्ति, अधीत्येति ॥

## ४६. णौ गमिरबोधने ।

## ४७. सनि च ।

## ४८. इङश्च ।

## ४९. गाङ् लिटि ।

द्विलकारकोऽयं निर्देशः—लिटि लकारादाविति । तेन प्रागेवादेशेभ्यो लावस्थायामेवादेशो भवति । किं सिद्धं भवति ? अधिजगे—'द्विर्वचनेऽचि' (१.१.५९) इति स्थानिवद्भावो न भवति । ङित्करणमनर्थकं स्थानिवद्भावादेव सिद्धमात्मनेपदमित्याशङ्क्याह—'गाङ्यनुबन्धकरणम्' इति । 'गाङिति ग्रहणं यथा स्यात्' इति। ननु चैतदपि स्थानिवद्भावादेव सिद्धम् ? नेत्याह—'न हि' इति । 'गाङकुटादिभ्यः०' (१.२.१) इत्युच्यमाने

'कै गै रै शब्दे' (धा.पा. ९१६.९१७.९०९) 'इणो गा लुङि' (२.४.४५) इत्येतयोरपि ग्रहणं प्राप्नोति, ततश्चागासीन्नटः, अगातासां ग्रामौ देवदत्तेनेत्यत्रापि घुमास्थादि (६.४.६६) सूत्रेणेत्वं प्रसज्येत ।

अपर आह—यत्र सानुबन्धकात् षष्ठ्युच्चार्यते, तत्राकृतायामेवेत्सञ्ज्ञायामादेशः प्रवर्तते, सत्यामपि वा तस्यामनुबन्धकार्यमादेशे न भवतीत्यस्यार्थस्य ज्ञापनार्थं गाङ्यनुबन्धकरणमिति । किं प्रयोजनम् ? 'चक्षिङः ख्याञ्' (२.४.५४) ङित इत्यात्मनेपदं न भवति; ञिदादेशकरणसामर्थ्यात्, 'स्वरितञितः०' (१.३.७२) इत्येतदेव भविष्यति । इह तर्हि 'लटः शतृशानचौ०' (३.२.१२४) लट इति सानुबन्धकात् षष्ठी, [1]पचमानः, 'टितः०' (३.४.७९) इत्येत्वं न भवतीति ? प्रकृतानामात्मनेपदानामेत्वविधानादिह न [2]भवति । इह तर्हि 'युवोरनाकौ' (७.१.१) इत्यत्र [3]भुज्यः, शुन्ध्युरित्यत्र मा भूदिति, अनुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ; ततश्च नन्दनः, कारकः, नन्दना, कारिका स्थानिवद्भावादुगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः, अस्माज्ज्ञापकान्न भवतः । अनुनासिकयणोस्तत्र ग्रहणम्, न त्वनुनासिकोकारानुबन्धयोरिति नात्रोगित्कार्यप्रसङ्गः । इह हि 'सेर्ह्यपिच्च' (३.४.८७), 'सिपो हिरिति वक्तव्यम्' अपिच्चेति न वक्तव्यम्, इह च 'तुह्योस्तातङ०' (७.१.३५) इति सिप्तिपोस्तदाशिषीति सानुबन्धकात् षष्ठीमुच्चार्यादेशो [4]विधेयः । ङित्करणं न कर्तव्यम् । इह [5]च 'तस्थस्थमिपाम्' (३.४.१०१) इति पकारो [6]नोच्चार्यः, [7]तेन 'अचिनवम्' इत्यादौ गुणसिद्धिः, 'अणिञोरनार्षयोः' (४.१.७८), 'क्त्वो ल्यप्' (७.१.३७) इत्यादौ यत्र स्थान्यनुबन्धकार्यमिष्यते, तत्राननुबन्धकः स्थान्युपादेयः । वाराह्या प्रकृत्येत्यादौ वृद्धिर्गुणप्रतिषेधश्च भवति । तदेवमस्य पक्षस्य मन्दत्वादनुपन्यासः ॥

## ५०. विभाषा लुङ्लृङोः ।

## ५१. णौ च संश्चङोः ।

'अध्यापिपयिषति' इति । 'क्रीङ्जीनां णौ' (६.१.४८) इत्यात्त्वम् । 'अध्यजीगपत्' इति । लुङि चङि 'णौ चङ्युपधाया ह्रस्वः' (७.४.१), 'सन्वल्लघुनि०' (७.४.९३), 'दीर्घो लघोः' (७.४.९४) ॥

## ५२. अस्तेर्भूः ।

भवतेरेव भवितेत्यादौ सिद्धेऽस्तेरसितेत्यादिनिवृत्तये योगारम्भः ।

'अनुप्रयोगे तु' इति । अनुप्रयोगे[8]—विषये भुवा—भूभावेनास्तेरनिवृत्तिं मनीषिणः स्मरन्ति । कर्तुः—सूत्रकारस्य वचनात् । मनीषिणः कर्तुरिति वा ॥

---

1. तत्र इत्यधिकम्–म. 2. भविष्यति–घ. 3. भुज्युः–घ. 4. अपि इत्यधिकम्–म. 5. तु–घ. 6. नोच्चार्यते–म. 7. 'तेन......इत्यादौ' इति भागः नास्ति–म. 8. इति इत्यधिकम्–म.

## ५३. ब्रुवो वचिः ।

ब्रुव आर्धधातुके [1]प्रयोगनिवृत्त्यर्थं वचनम् । वक्तेत्यादिकं तु वचेरेव सिद्धम् ॥

## ५४. चक्षिङः ख्याञ् ।

कर्त्रभिप्राये क्रियाफले आख्यास्यते, आचख्ये इत्यात्मनेपदं यथा स्यात्, तृजादौ चक्षितेत्यादि मा भूदिति [2]योगारम्भः । आख्यातेत्यादि 'ख्या प्रकथने' (धा.पा. १०६०) इत्यस्यैव सिद्धम् । अत्र यथान्यासे आकारात् पूर्वो भागः खकारयकारात्मा [3]इति स्यादाख्यातेति, ककारशकारात्मापि लिख्यते—आक्शातेति, तदेतदाह—'क्शादिरप्ययम्' इति । ककारेऽकार उच्चारणार्थः ।

अपर आह—क्शादिरेवायमादेश इति । अत्राप्यकार उच्चारणार्थः । तत्र चर्त्वे कृते [4]क्शातेत्यादि भवति । कथं 'आख्याता' इति खकारयकारयोः [5]श्रवणम् ? असिद्धकाण्डे णत्वविधानानन्तरं 'क्शाञः शस्य यो वा' (कात्या.वा. १५८६) इति शस्य यत्वं विभाषा वक्तव्यम् । तत्र चर्त्वे यत्वं सिद्धमित्याख्यातेति यत्वपक्षे रूपम्, अन्यदा[6] क्शातेति रूपम् । अवश्यं च शस्य यत्वमित्याश्रयणीयम् । इह सुप्रचष्टे सुप्रख्यः, 'आतश्चोपसर्गे' (३.१.१३६) इति कः, [7]ततो यत्वस्यासिद्धत्वात् सुप्रख्यस्य भाव इति 'योपधाद्गुरूपोत्तमात्' (५.१.१३२) इति वुञ् न भवति, अयोपधत्वात् । तस्मिन्नसति ष्यञ् भवति—सौप्रख्यमिति । तथा सुप्रख्येण निर्वृत्ते देशे [8]भवः सौप्रख्यीयः, 'धन्वयोपधात्' (४.२.१२१) इति वुञ् न भवति, 'वृद्धाच्छः' (४.२.११४) एव भवति । अख्यातः, यत्वस्यासिद्धत्वाद्यण्वत्त्वाभावात् 'संयोगादेः' (८.२.४३) इति नत्वं भवति । 'न ध्याख्यापॄमूर्छिमदाम्' (८.२.५७) इत्यत्र ख्याग्रहणं न कर्तव्यं भवति । पुंसः ख्यानं पुंख्यानमित्यत्र यत्वस्यासिद्धत्वात् 'पुमः खय्यम्परे' (८.३.६) इति [9]रुविधिर्न भवति । पर्याख्यानम्, यत्वस्यासिद्धत्वाच्छकारेणानटा व्यवायात् 'कृत्यचः' (८.४.२९) इति णत्वाभावः । नटः ख्यातेत्यत्र यत्वस्यासिद्धत्वात् खरः शर्परत्वात् 'शर्परे विसर्जनीयः' (८.३.३५) इत्येष विधिर्भवति । ननु[10] असिद्धे[11] शस्य यवचनेऽपि 'ख्या प्रकथने' (धा.पा. १०६०) इत्यस्यौत्पत्तिक एव थकार इति तत्र वुञादिप्रसङ्गः ? एवं तर्हि सोऽपि क्शादिः, शस्य यवचनमपि साधारणं द्रष्टव्यम् ।

'नृचक्षा रक्षः' (अ.वे. ८.३.१०) इति । छान्दसः प्रयोगः । भाषायां तु नृचक्षो रक्ष इति । 'विचक्षणः' इति । 'अनुदात्तेतश्च हलादेः' (३.२.१४९) इति युच् । 'वधकः' इति । अतो लोपस्य स्थानिवत्त्वात् वृद्ध्यभावः । 'गात्रम्' इति । ष्ट्रनि गादेशः । 'अजिरम्' इति । 'अजिरशिशिर' (द.उ.८.२७) इति निपातनमनादृत्योक्तम् ॥

---

1. °निवृत्तार्थवचनं–म. 2. च इत्यधिकम्–घ. 3. एव–घ. 4. अपि आक्शाता–घ. 5. पक्षे इत्यधिकम्–घ. 6. अनुवर्ते इत्यधिकम्–घ. 7. ततो.....न कर्तव्यं भवति' इति भागो नास्ति–म. 8. सौप्रख्यैः संबन्धः–घ. 9. रुत्व°–म.घ. 10. च इत्यधिकम्–घ. 11. अपि इत्यधिकम्–घ.

## ५५. वा लिटि ।

## ५६. अजेर्व्यघञपोः ।

प्रवयणीयः, प्रवायक इत्यादौ गुणवृद्धिविषये ह्रस्वदीर्घयोः[1]अविशेषं मन्वानः पृच्छति—'दीर्घोच्चारणं [2]किम्' इति । दीर्घव्याख्यानमित्यर्थः ।

'घयपोः प्रतिषेधे क्यप उपसङ्ख्यानम्' इति । क्यपि यः प्रतिषेधस्तस्य क्यप्सम्बन्धी भवतीति क्यप इत्युक्तम् । यस्त्वाह—अपीत्येव क्यपि सिद्धः प्रतिषेधः, कथम् ? 'अप्' इति प्रत्याहारः, अपोऽकारादारभ्य आ क्यपः पकारात् इति, तस्य संवीतिरिति क्तिन्यपि प्रतिषेधः प्राप्नोति, तस्मात् [3]सञ्ज्ञाग्रहणात् समज्येत्यत्र वीभावाभावः । न ह्यादेशेन सञ्ज्ञा गम्यते ।

'वलादावार्धधातुके वेष्यते' इति । नार्थोऽनयेष्ट्या, नापि घञपोः प्रतिषेधेन, नापि क्यप उपसङ्ख्यानेन, नापि 'वा यौ' (२.४.५७) इति सूत्रेण; एतावदस्तु—'वा लिटि' (२.४.५५), [4]'अजेर्वीत्येव, व्यवस्थित-विभाषेयम्, तेन घञपोः क्यपि नैव भवति, वलादौ यौ च विकल्पः, अन्यत्र नित्यम् ॥

## ५७. वा यौ ।

## ५८. ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ।

'ण्यादयो गोत्रप्रत्ययाः' इति । 'गोत्राद्यून्यस्त्रियाम्' (४.१ ९४) इति गोत्रप्रत्ययान्तादेव यूनि प्रत्ययविधानात् । क्षत्रियगोत्रस्य क्षत्रियादभेदोपचारात् क्षत्रियशब्देनाभिधानम् । ऋषेरपत्यमार्षम्, 'इतश्चानिञः' (४.१.१२२) इति ढकि प्राप्ते शिवादिपाठादण् । ढगपीष्यते—आर्षेयं वृणीते इति । तस्माच्छुभ्रादिष्वपि पठनीयः । एवं गोत्ररूपाभ्यां क्षत्रियार्षाभ्यां प्रत्ययस्योपलक्षणाद् ण्यादयो गोत्रप्रत्यया इत्युक्तम् । 'क्षत्रियात्' इति । क्षत्रियगोत्रप्रत्ययान्तादित्यर्थः । 'आर्षात्' इति । ऋष्यभिधायिनो गोत्रप्रत्ययान्तादित्यर्थः । प्रथमनिर्दिष्टाद् ण्यन्तादणोऽसम्भवाच्चरमनिर्दिष्टोऽपीञेव प्रथममवाहृतः ।

'क्षत्रियगोत्रस्य तत्र ग्रहणम्' इति । औरसशब्देन साहचर्यात् । स हि 'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६८) इत्यञन्तत्वात् क्षत्रियशब्दः । उरसशब्दः सकारोपधो जनपदवाची, तस्माद्यूनि प्राग्दीव्यतीयोऽण् (४.१.८३) इति । 'फेश्छ च' (४.१.१४९) इति च अच्छौ तु न भवतः, यमुन्दश्च सुयामा चेति परिगणनात् । 'कण्वादिभ्यो गोत्रे इति शैषिकोऽण्' इति । वामरथस्य कण्वादिवत् स्वरवर्जमिति कुर्वादिषु पाठा-दिति भावः ।

---

1. विशेषाभावं–घ. 2. किमर्थम्–घ. 3. संज्ञायाम् समनति पदेत्यादि क्यविधौ' इत्यधिकम् –घ.
4. आजवी–घ.

'अब्राह्मणगोत्रमात्रात्' इति । अत्र भाष्ये त्रीणि वाक्यान्युपन्यस्तानि—'अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसङ्ख्यानम्' (म भा. १.४.८९) इति प्रथमम्, अस्योदाहरणम्—बौधिः पिता, बौधिः पुत्रः; औदुम्बरिः पिता, औदुम्बरिः पुत्रः, बुधोदुम्बराभ्यां शाल्वावयवलक्षण इञ्, 'यञिञोश्च' (४.१.१०१) इति फक्, तस्य लुक् । अन णञर्थमेतद्वचनम् । शाल्वावयवेत्यत्रोदुम्बरास्तिलखिला इत्यादि [1]सम्भवोदाहरणं न परिगणनमिति बुधशब्दादपीञ् भवति । 'क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम्' (म.भा. १.४८९) इति द्वितीयम्। मात्रशब्दो व्याप्त्यर्थः, तद्राजादिति नियमो नास्ति—क्षत्रियगोत्रमात्रादिति । तेन जाबालशब्दादत इञोऽनद्राजात् परस्य फको लुग् भवति—जाबालिः पिता, जाबालिः पुत्रः । वृत्तिकारेणोपन्यस्तं तृतीयम् । अत्रापि मात्रशब्दो व्याप्त्यर्थः । क्षत्रियादित्यपि नियमो नास्ति[2]—अब्राह्मणगोत्रमात्रादिति, तेन वैश्यगोत्रादपि भवति । भाण्डिजङ्घिः कर्णखरकौ वैश्यौ, ताभ्यां 'अत इञ्' (४.१.९५), तदन्तात् फको लुक् । व्यापकत्वाच्चेदमुपन्यस्तं वृत्तिकारेण ॥

## ५९. पैलादिभ्यश्च ।

पीडयतेः पचाद्यचि [3]कपिलादिदर्शनादस्य लत्वे पीला । 'अन्ये पैलादय इञन्ताः' इति । तत्र बाह्वादिषु 'उदञ्चु' (४.१.९६.) इति पठ्यते । उकार उच्चारणार्थः, द्विर्नि नोपधत्वं निपात्यते । औदञ्चिः। 'अचः' (६.४ १३८) इत्यकारलोपः 'उद इत्' (६.४ १३९) इति ईत्वं च न भवति; लुप्तनकारस्य तत्र ग्रहणात् । [4]भूलिङ्गशब्दः शाल्वावयवः । सात्यकिशब्दमपि [5]केचित् पठन्ति, सोऽपि बाह्वादीञन्तः । [6]सत्यकशब्दात् 'ऋष्यन्धक' (४.१.११४) इत्यणा भाव्यम् । शेषा अत इञन्ताः । 'शालङ्किः' इति । अस्मादेव निपातनाच्छलङ्कोरिञ, शलङ्क्वादेशश्च । 'तद्राजाच्चाणः' इति । तद्राजसञ्ज्ञकादणः परस्य युवप्रत्ययस्य लुक् भवति । 'द्व्यञ्मगध' (४.१.१७०) इत्यणन्तादङ्गशब्दात् 'अणो द्व्यचः' (४.१.१५६) इति फिञो लुक्। आङ्गः पिता, आङ्गः पुत्रः । तदेवं गणवाक्यमेतदेकम्, पूर्वपठितानि त्रीणीति चत्वारि[7] यथोत्तरमधिकविषयाणि॥

## ६०. इञः प्राचाम् ।

[8]'प्राचामवृद्धात्' (४.१.१६०) इत्यादौ प्राग्ग्रहणं विकल्पार्थम्, इह तु न तथेत्याह—'गोत्रविशेषणम्' इति । युवप्रत्ययस्य लुग्विधानादर्थादाक्षिप्तं गोत्रमिति भावः । पन्नं = प्राप्तम्, अगारं येन सः पन्नागारः। मन्थरा = मन्दीभूता एषणा यस्य स मन्थरैषणः ॥

## ६१. न तौल्वलिभ्यः ।

'तुल उपमाने' (धा.पा. १५९९), औणादिको वलच् । तुल्वलः । धारयतिपारयतिभ्यां [9]'नन्द्यादिल्युः'—धारणः, [10]पारणः । देवा मित्रमस्येति देवमित्रः । देवेभ्यो यज्ञोऽस्य देवयज्ञः । 'पुष पुष्टौ'

---

1. संभवोदाहरणप्रदर्शनं–घ. 2. किं तु इत्यधिकम्–घ. 3. कपिकलकादि०–घ. 4. भूलिंगः–घ. 5. केचित् नास्ति–घ. 6. अन्यथा इत्यधिकम्–घ. 7. वाक्यानि इत्यधिकम्–घ. 8. प्राचामवृद्धम् इति मुद्रितः पाठः 9. नन्द्यादित्वात्–घ. 10. पारणः नास्ति–ङ.

(धा.पा. ७००), क्यप्, पुष्यः। विलक्षणौ कर्णावस्य, विकर्णः। करेणुं पालयति करेणुपालः। 'असु क्षेपणे' (धा.पा.१२०९), कुरच्—असुरः। [1]'हृञ् हरणे' (धा.पा. ८९९), अनुपूर्वाल्लिटः शत्रादेशः, अनुहरत्। पुष्करे सीदतीति पुष्करसत्, बाह्वादी अनुशतिकादी च[2]। परिशिष्टाः पारायणे द्रष्टव्याः॥

## ६२. तद्राजस्य बहुषु तेनैवास्त्रियाम्।

इह बहुष्विव्यनेन जसादिबहुवचनं वा गृह्येत? अर्थो वा? आद्ये पक्षेऽयमर्थो भवति—जसादिषु बहुवचनेषु परतस्तद्राजस्याऽस्त्रीलिङ्गस्य लुगिति। द्वितीये—बहुष्वर्थेषु वर्तमानस्येति। बहुवचनशब्दे हि जसादिषु विनियुक्ते तदेकदेशेन बहुशब्देनापि जसादि शक्यं लक्षयितुम्। सञ्ज्ञानामेकदेशस्यापि प्रयोगदर्शनात्—भीमो भीमसेनः, सत्या सत्यभामेति। जसादीनां च बहुत्वाद्बहुष्विति बहुवचनोपपत्तिः। नन्वेवमपि मुख्यत्वादर्थग्रहणमेव युक्तम्? सत्यम्; तेनैव ग्रहणादस्य पक्षस्य सम्भवः। तद्धि 'प्रियवाङ्गाः' इत्यादौ बहुवचनं परमिति लुकः प्रसक्तस्य निवृत्तये कृतम्। अर्थग्रहणे चात्र तद्राजस्य बहुत्वे वृत्त्यभावादेव लुकोऽप्रसङ्गः। यद्येवम्, अस्मादेव लिङ्गात् [3]बहुवचनस्यैव निश्चयादर्थग्रहणस्यासम्भवः? उच्यते—अस्त्रियामिति प्रतिषेधादस्य पक्षस्य सम्भवः। तद्धि 'आङ्ग्यः स्त्रियः' इत्यादौ तद्राजस्य बहुषु वर्तमानस्य लुङ् मा भूदिति कृतम्। बहुवचनग्रहणे चात्र स्त्रीप्रत्ययेन व्यवधानादेव लुकोऽप्रसङ्गः। न चाम्बष्ठस्यापत्यानि बह्व्यः स्त्रियः 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' ४.१.१७१), 'यङश्चाप्' (४.१.७४) 'आम्बष्ठ्याः' इत्यत्रैकादेशस्यान्तवद्भावादव्यवधानाल्लुक्प्रसङ्गः। एकादेशस्य पूर्वविधौ स्थानिवद्भावादत्रापि चापा व्यवधानात्। तदेवं लिङ्गद्वयदर्शनात् पक्षद्वयसम्भवः।

एवमुत्तरेष्वपि योगेषु द्रष्टव्यम्। तत्राद्ये पक्षेऽतिक्रान्तोऽङ्गानत्यङ्गः, अतिगर्गः, अङ्गेभ्य आगतोऽङ्गरूप्यः, 'गर्गरूप्य इत्यादौ बहुवचनपरत्वाभावाल्लुङ् न स्यात्। न च वृत्त्यर्थे वाक्ये यज्जसादि बहुवचनं, तत्रैव परतस्तस्यामेवावस्थायां लुग्लभ्यतेऽन्तरङ्गत्वादिति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या.प.१२८) इति वचनात्। न च लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेन लुग्लभ्यः, 'न लुमताऽङ्गस्य' (१.१.६३) इति निषेधात्। ननु च लुगङ्गस्य कार्यम्, किं तर्हि? तदेकदेशस्य प्रत्ययमात्रस्य, अङ्गरूप्य इत्यादौ समर्थात्तद्धितोत्पत्तेः वृत्त्यर्थे वाक्ये यद्बहुवचनमङ्गेभ्य इत्यादि, तत्रैव लुग्भविष्यति। इदं तर्हि—अत्रेरपत्यानि बहूनि, 'इतश्चानिञः' (४.१.१२२) इति ढक्, तस्य 'कितः' (६.१.१६५) इत्यन्तोदात्तत्वम्, तस्य जसि परतः 'अत्रिभृगुकुत्स॰' (२.४.६५) इति लुकि कृते उदात्तनिवृत्तिस्वरः प्राप्नोति, तस्माद्द्वितीयं पक्षमाश्रित्याह—'बहुषु वर्तमानस्य' इति।

नन्वत्रापि पक्षे आङ्गश्च वाङ्गश्च सौह्मश्च अङ्गवङ्गसुह्माः, गार्ग्यश्च वात्स्यश्च [5]वाजश्च गर्गवत्सवाजा इत्यादौ द्वन्द्वे लुग्न स्यात्; अत्र ह्येकैकस्मिन्नेवार्थे [6]प्रत्यय उत्पन्नः, पूर्वत्र तु पक्षेऽन्तिमस्यापि तावत् सिध्यति, बहुवचनपरत्वात्? नैष दोषः; [7]युगपदधिकरणतायां द्वन्द्वः, तत्रैकैकस्य वर्तिपदस्य बह्वर्थत्वाल्लुग्भविष्यति। नन्वेवमपि तद्धित उत्पत्तिदशायामेकैकस्मिन्नेवार्थे उत्पन्न इति [8]तद्राजो यो बहुषु यञ्, यो बहुषु अञ्, यो बहुष्वित्युच्यमानो

---

1. अनुसंहरणे अनुसंहृत् हरणे इत्यधिकम्—घ. 2. अप्रसिद्धाः इत्यधिकम्—घ. 3. बहुवचनग्रहणस्यैव—घ. 4. गर्गेभ्य आगतः इत्यधिकम्—घ. 5. वाज्यश्च—ट. 6. प्रत्ययोत्पत्तौ सत्यां बह्वर्थाभावात् प्रत्ययग्रहणापक्षे—घ. 7. युगपदधिकरणवचनतायां—घ. 8. तद्राजीयो—ट.

लुङ्[1] न स्यादेव। नन्वत्र बहुष्वित्यनेन न प्रत्ययमात्रं विशेष्यते, किं तर्हि ? प्रत्ययग्रहणपरिभाषया तदन्तग्रहणे सति तदन्तं विशेष्यते—तद्राजान्तं यद्बहुषु यञन्तं, यद्बहुषु अञन्तं, यद्बहुष्विति। यद्येवम्, कश्यपस्यापत्यं काश्यपः, बिदाद्यञ्, तस्य प्रतिकृतय इति 'इवे प्रतिकृतौ' (५.३.९६) इति कन्, तस्य 'जीविकार्थे चापण्ये' (५.३.९९) इति [2]देवपथादिषु अर्चासु पूजनार्थास्विति पाठाद्वा लुपि कृते काश्यपा इत्यञन्तस्य प्रतिकृतिबहुत्वे लुक् प्राप्नोति ? नैष दोषः; 'यञञोश्च' (२.४.६४) इत्यत्र 'यस्कादिभ्यो गोत्रे' (२.४.६३) इत्यतो 'गोत्रे' इत्यनुवर्तते, तेन गोत्रबहुत्वे लुक् प्रतिकृतिबहुत्वे न भविष्यति। नन्वेवमप्याङ्गस्यैकस्य प्रतिकृतयो बह्व्य इति तद्राजान्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गः। न ह्यत्रेदमस्ति—तद्राजान्तं यदपत्यं बहुत्वे वर्तत इति। एवं तर्हि तेनैव ग्रहणमस्मिन् पक्षे न कर्तव्यमित्युक्तं तदत्रोपयोक्ष्यामहे—यस्मिन्नर्थे [3]लुग्भावी प्रत्यय उत्पन्नस्तेनैव चेत् कृतं बहुत्वमिति। इह चापत्ये प्रत्यय उत्पन्नः प्रतिकृतिकृतं च बहुत्वम्। यद्येवम्, आङ्गस्यापत्यानि, 'अणो द्व्यचः' (४.१.१५६) इति फिञ्, तस्याब्राह्मणगोत्रमात्रादिति वा 'तद्राजाच्चाणः' इति वा लुक्, अङ्गाः, बैदस्यापत्यानि 'अत इञ्' (४.१.९५), 'ण्यक्षत्रिय' (२.४.५८) इति लुक्, बिदाः; अत्र गोत्रे प्रत्यय उत्पन्नो युवकृतं 'चात्र बहुत्वमिति लुङ्न स्यात् ? नैष दोषः; तेनैवेत्यस्य तज्जातीयेनैवेत्यर्थः, युवा चापत्यतया तज्जातीयो न प्रतिकृतिः। एवं च कृत्वा द्वन्द्वो यदा लोपिनामलोपिनां च भवति तदा न भवति—आङ्गदेवदत्तयज्ञदत्ताः, गार्ग्यदेवदत्तयज्ञदत्ताः। इह तु भार्गवश्च वात्स्यश्चाग्रायणश्च भृगुवत्साग्रायणा इति, यद्यपि नलोपिभिरेव कृतं बहुत्वम्, आग्रायणे नडादिफको लुगभावात्; तथाप्यपत्यतया तज्जातीयत्वमस्तीति लुग्भवत्येव। यद्येवम्, गार्ग्यश्च काश्यपश्च गालवश्च गार्ग्यकाश्यपगालवानामित्यत्र गालवे ऋष्यणो लुगभावेऽप्यपत्यतया तज्जातीयत्वात् 'यञञोः' लुक्प्रसङ्गः। एवं तर्हि भृगुवत्साग्रायणेषु 'अगार्ग्यकाश्यपगालवानाम्' इति निर्देशद्वयाल्लोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्पः। तदेवं तद्राजान्तस्य बहुत्वे वर्तमानस्येति स्थितम्। वृत्तौ तु तद्राजसञ्ज्ञकस्य प्रत्ययस्य बहुषु वर्तमानस्येति व्याधिकरणे षष्ठ्यौ, बहुषु वर्तमानस्यास्त्रीलिङ्गस्य तद्राजान्तस्य योऽवयवः प्रत्ययस्तस्येत्यर्थः। 'तेनैव चेत्तद्राजेन' इति। अत्रापि तद्राजान्तेनेत्यर्थः। तद्राजेत्यपि लोपिप्रत्ययोपलक्षणम्। अङ्गगर्गलोहध्वजा इत्यादावपि भवतीत्याहुः। इहाङ्गस्यापत्यानि बहून्यङ्गाः, तेषामपत्यं युवा युवानौ वा आङ्गः आङ्गाविति युवसङ्क्रान्तेः प्राक् 'गोत्रेऽलुगचि' (४.१.८९) इति प्रतिषेधाल्लुगभावः, पश्चात्तु बहुत्वाभावात्। 'अचि' इति विषयसप्तमी, तेन युवप्रत्यये पश्चाल्लुमता लुप्तेऽपि विषयभूत एव तस्मिन् प्रागेव लुकः प्रतिषेधः, लुप्तेऽपि वा प्रत्ययलक्षणेन। नन्वचीति वचनाद्वर्णाश्रयोऽयम् नेत्याह; अचीति प्राग्दीव्यतीयस्य प्रत्ययस्य विशेषणं प्रत्ययस्य [5]लुकि निमित्तम्। 'आङ्ग्यः स्त्रियः' इति। इह च आङ्गी च वाङ्गश्च सौह्मश्चेति द्वन्द्वे आङ्गीतिशब्देन स्त्रीत्वयुक्तानामभिधानात् तदणो लुग्[6] न भवति, आङ्गीवङ्गसुह्मा इति भवतीत्याहुः॥

## ६३. यस्कादिभ्यो गोत्रे।

'प्रत्ययविधेश्चान्यत्र' इति। गोत्रे यत्र प्रत्ययो विधीयते, 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (४.१.९८) इत्यतोऽन्यत्रेत्यर्थः। तत्र तावदपत्याधिकारे गोत्रग्रहणादेव पारिभाषिकस्य ग्रहणम्, अन्यत्र लौकिकस्येत्यत्र ज्ञापकं वक्ष्यामः। 'पुष्करसच्छन्दस्य' इति किमर्थं पुनरयमत्र पठ्यते, यावता 'बह्वच इञः प्राच्यभरतेषु' (२.४.६६)

---

1. न नास्ति–ट. 2. वा इत्यधिकम्–घ. 3. लुग्भाक्–घ. 4. च–घ. 5. एव इत्यधिकम्–ट.इ. 6. 'भवति, अन्यस्तु' इत्यधिकम्–घ.

इत्येव सिद्धं पुष्करसदः प्राच्यत्वात्, तथा चेतः प्राचामिति प्राप्तस्य लुकः प्रतिषेधाय तौल्वल्यादिषु पठितः ? एवं तर्हि गोपवनादिषु केचित् तौल्वल्यादयश्चेति पठन्ति, तौल्वल्यादिषु प्रकृतिभागा अपि गोपवनादिषु द्रष्टव्या इत्यर्थः। तेन 'न गोपवनादिभ्यः' (२.४.६७) इति निषेधे प्राप्तेऽत्रास्य पाठः। अयमेव च पाठो ज्ञापयति-गोपवनादिषु तौल्वल्यादयोऽपि पठिता इति ॥

## ६४. यञञोश्च ।

'गोत्रप्रत्ययस्य बहुषु वर्तमानस्य' इति। अत्रापि व्यधिकरणे षष्ठ्यौ। बहुषु वर्तमानस्य समुदायस्य सम्बन्धी यो गोत्रप्रत्ययो यञ् अञ् च तस्येत्यर्थः। तेन द्वन्द्वेऽपि भवति--गर्गवत्सवाजाः, बिदौर्वभरद्वाजा इति। 'गार्ग्यः स्त्रियः' इति। 'यञश्च' (४.१.१६) इति [1]ङीप्। 'हलस्तद्धितस्य' (६.४.१५०) 'वैद्यः' इति। 'शार्ङ्गरवाद्यञो ङीन्' (४.१.७३)।

'एकद्वयोः' इति। एकत्वद्वित्वयोरित्यर्थः। 'सङ्ख्याया अल्पीयस्याः' (वा. ११२) इत्येकशब्दस्य पूर्वनिपातः। 'द्व्येकयोः' (१.४.२२) इति निर्देशात् द्विशब्दस्यापि भवति। 'गार्ग्ययोः कुलं गार्ग्यकुलम्' इति। प्रकरणाविवक्षाद्[2] द्वित्वावगतौ द्विवचनान्तस्यपि[3] विग्रहः समासः ॥

## ६५. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।

## ६६. बह्वच इञः प्राच्यभरतेषु ।

भरतापत्येषु भरतशब्दाऽभेदोपचाराद्वर्तते, यथा[4]—'रघूणामन्वयं वक्ष्ये' (र. १.९) इति। युधिष्ठिरार्जुनशब्दाभ्यां कुर्वाणोऽपवादो बाह्वादिलक्षण इञ्। बलाकाशब्दोऽपि बाह्वादिः।

'भरताः प्राच्या एव' इति। 'प्राच्यभरतेषु' इति द्वन्द्वस्तु सामान्यविशेषवाचिनोर्गोबलीवर्दन्यायेन (कुल्लूकभट्टः-मनु. ८.२८) इति भावः ॥

## ६७. न गोपवनादिभ्यः ।

'परिशिष्टानां हरितादीनां[5] प्रमादपाठः' इति। ननु चेह स्थाने न गोपवनादयः[6] पठ्यन्ते, किं तर्हि ? चतुर्थ एव बिदादिषु तदुपजीवनेनैतत् प्रवर्तते। अथ चतुर्थे पाठः प्रमादज इत्युच्यते, बिदाद्यर्थापि तर्हि न प्राप्नोति। अथ गोपवनादिभ्यः परत्र पाठः प्रमादजः पूर्वत्र पाठ्यः—इत्युच्येत, एवमपि 'हरितादिभ्योऽञः' (४.१.१००) इत्येष विधिर्गोपवनादीनामपि प्राप्नोति। तस्माद्यथाव्यवस्थित एव पाठे मध्ये सूत्रकरणं कर्तव्यम्, इह वा प्राक्

1. ङीञ्-घ. 2. स वा इत्यधिकम्-घ. 3. न इत्यधिकम्-घ. 4. आह कालिदासः इत्यधिकम्-घ. 5. इह इत्यधिकम्-घ. 6. हरितादयः इत्यधिकम्-घ.

हरितादिभ्य इति वक्तव्यम् । यथोक्तम्—'गोपवनादिभ्यः प्रतिषेधः प्राग्घरितादिभ्यः' इति । वृत्तिकारस्तु चतुर्थेऽत्र च पृथक् पाठं मन्यते ॥

## ६८. तिककितवादिभ्यो द्वन्द्वे ।

द्वन्द्वरूपाण्येव गणे पठ्यन्ते । तिकादीनि पूर्वपदानि कितवादीन्युत्तरपदानि, तत्र 'तिकादिभ्यो द्वन्द्वे' इत्युच्यमाने पूर्वपदेष्वेव लुगाशङ्क्येत, उत्तरपदेऽपि यथा स्यादिति तिककितवादिभ्य इत्युक्तम् । आदिशब्दः प्रत्येकमभिसम्बध्यते, तदाह—'तिकादिभ्यः कितवादिभ्यश्च' इति ॥

## ६९. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।

'द्वन्द्वे चाद्वन्द्वे च' इति । कथम् 'अद्वन्द्वे' इत्युच्यमाने द्वन्द्वे चाद्वन्द्वे च भवति, तदाह—'अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्' इति । नात्र शास्त्रीयोऽधिकारः स्वरितत्वनिबन्धनो विवक्षितः, न हि पूर्वसूत्रे द्वन्द्वग्रहणमासक्तस्वरितः, तस्माल्लौकिकोऽधिकारो व्यपेक्षालक्षणः । तदिह द्वन्द्वशब्देन तद्विषया व्यपेक्षाऽभिधीयते, तस्या नञा निषेधः—अद्वन्द्वे इति । किमुक्तं भवति ? द्वन्द्व इति नापेक्ष्यत इति, तदनपेक्षायां द्वन्द्वे चाद्वन्द्वे च भवति । 'अद्वन्द्व' इत्यस्मिन्नसति लौकिकोऽधिकारो द्वन्द्वस्य शङ्क्येत, द्वन्द्वश्चैषामेव परस्परं गृह्यते, तेषां पूर्वेण नित्यं लुग्भवतीति । भाष्ये तु भ्राष्टकिकापिष्ठलय इत्युदाहरणात् तिककितवादिष्वस्य पाठोऽनार्ष इति निश्चयः ॥

## ७०. आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।

कुण्डिनीशब्दस्य यञि 'भस्याढे तद्धिते' (वा. ७३१) इति पुंवद्भावे 'नस्तद्धिते' (६.४.१४४) इति लोपे कौण्डय इति प्राप्नोति, अस्मादेव निपातनात् [1]पुंवद्भावः । असति च तस्मिन्नीकारस्य 'यस्येति' (६.४.१४८) लोपः, तस्य स्थानिवत्त्वादाभीयत्वेनासिद्धत्वाद्वा [2]टिलोपाभावः । आगस्त्यकौण्डिन्ययोरित्येतयोर्गोत्रप्रत्यययोरिति व्यधिकरणे षष्ठ्यौ, एतयोर्यावयवावित्यर्थः । तावेव स्वरूपेण दर्शयति—'अणश्च यञश्च' इति । 'मध्योदात्तो हि कुण्डिनीशब्दः' इति । कुण्डमस्यास्तीति 'अत इनिठनौ' (५.२.११५)[3] प्रत्ययस्वरः, ङीबनुदात्तः । ननु नानुवृत्तं लुग्ग्रहणम्, प्रत्ययान्तयोरवादेशौ स्तामत आह—'तयोः' इत्यादि । यदि हि प्रत्ययान्तयोरेवादेशौ स्याताम्—'गोत्रेऽलुगचि' (४.१.८९) इति प्रतिषेधो न स्यात्, लुको ह्यसौ [4]निषेधो नादेशस्य, ततश्चादेशे सत्यवृद्धत्वादणेव स्यात्, लुकि तु सति तस्य प्रतिषेधे तत्संनियोगशिष्टस्यादेशस्याप्यभावाद् द्रलक्षणश्छो भवति । तत्र विशेषो नास्तीति किमर्थं तर्हीदमुक्तम्—अगश्च यञश्च बहुषु लुग्भवतीति ? एवं मन्यते—यदि कुण्डिनजादेशः समुदायस्य स्यात् अगस्त्यादेशोऽपि तथा स्यात्; अतोऽवश्यं [5]लुगनुवर्त्यः, अनुवृत्तस्य च कौण्डिन्येनापि सम्बन्धः; विरोधाभावादिति ॥

---

1. पुंवद्भावाभावः—ट.इ. 2. छादिलोपाभावः—घ. 3. इति इत्यधिकम्—घ. 4. प्रतिषेधः—घ. 5. लुगनुवृत्यः—घ.

## ७१. सुपो धातुप्रातिपदिकयोः ।

अत्र 'सुपः' इति सप्तमीबहुवचनं न गृह्यते । 'पञ्चम्याः स्तोकादिभ्यः' (६.३.२) इत्यादिना पञ्चम्यादीनामलुग्विधानात् । नापि कपः पकारेण प्रत्याहारः, तद्धितानां विधानसामर्थ्यात्; अन्यथा तद्धितान्तस्य प्रातिपदिकत्वात् तदवयवस्य सर्वस्यैव तद्धितस्य लुक् स्यात्, 'द्विगोर्लुगनपत्ये' (४.१.८८) इत्येतद्वचनानर्थकं स्यात् । अतः सुशब्दादारभ्य सुपः पकारेण प्रत्याहार इत्याह—'सुपो विभक्तेः' इति । धातुप्रातिपदिकयोरिति यदि सप्तमी स्यात्, धातुप्रातिपदिकयोः परतः सुपो लुक् स्यात्—काष्ठैः पचति, शोभनैः [1]काष्ठैरिति, तस्मात् षष्ठीयमित्याह—'[2]सुपो विभक्तेर्धातुसञ्ज्ञायाः प्रातिपदिकसञ्ज्ञायाः' इति । धातुः सञ्ज्ञा यस्यास्तस्या इत्यर्थः । कथं पुनर्विभक्तिर्धातुसञ्ज्ञा प्रातिपदिकसञ्ज्ञा वा भवति, तत्राह—'तदन्तर्गताः' इति । [3]एवमपि धातुप्रातिपदिकयो[4]रवयवभूता विभक्तयः स्युः, न तत्सञ्ज्ञाः? नैष दोषः; 'समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि [5]वर्तन्ते' (शा.प. ८६) । धातुप्रातिपदिकयोरवयवस्य सुप इत्यपि व्याख्याने न कश्चिद्दोषः । प्रत्युत 'सुपः' इत्यस्य द्विवचनान्तेन सम्बन्धो न दुरुपपादो भवति, तथा तु न व्याख्यातमित्येव ॥

## ७२. अदिप्रभृतिभ्यः शपः ।

कथम् 'न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्' इति, तथा भट्टिकाव्ये—'आश्वसेयुर्निशाचराः' (भ. १९.२१) इति, तथा 'न विश्वसेत् पूर्वविरोधितस्य' इति ? निरङ्कुशाः कवयः । अपर आह—'क्षमूष् सहने' (धा. पा. ४४२) घटादिः; तत्र 'घटादयः षितः' (धा. पाठे) इति सिद्धे षित्करणं ज्ञापकम्—अनित्यं गणकार्यमिति, तेनैवमादिप्रयोगोपपत्तिरिति नात्र किंचिदपभाषितमस्ति ॥

## ७३. बहुलं छन्दसि ।

## ७४. यङोऽचि च ।

'अचि प्रत्यये परतः' इति । पचाद्यचीत्यर्थः । एतदेव ज्ञापकम्—सर्वधातुभ्यः पचाद्यच् भवतीति । प्रत्याहारग्रहणं तु न भवति, तथा हि सति—'अणि' इत्येव वक्तव्यम्; अन्याजादेः प्रत्ययस्यासंभवात् । 'न तु छन्दसि' इति । 'हुश्नुवोः सार्वधातुके' (६.४.८७) इत्यत्र वार्तिकम्—'हुश्नुग्रहणानर्थक्यमन्यस्याभावात्' (का.वा. ४११९) । याति वातीत्यत्र ङ्क्तीत्यधिकारान्न भविष्यति, यातः, [6]वातः, अचीत्यनुवर्तते । यान्ति, [7]वान्ति, ओरिति[8] । युवन्ति, रुवन्ति, अनेकाच इति वर्तते । अयुवन्, अरुवन्, अडागमोऽसिद्धः । प्रोर्णुवन्ति, असंयोगपूर्वस्येति वर्तते । यङ्लुङ्निवृत्त्यर्थं तर्हि हुश्नुग्रहणम्—योयुवति, रोरुवति । यङ्लुगर्थमिति चेदार्धधातुकत्वात् सिद्धम्, छान्दसो यङ्लुक्, तत्र 'छन्दस्युभयथा' (३.४.११७) इत्यार्धधातुकत्वादेव न भविष्यति । तदेवं यङ्लुकश्छान्दसत्वमभ्युपगम्य हुश्नुग्रहणं प्रत्याख्यातं वार्तिककारेण । स मन्यते चकारेणात्र 'बहुलं छन्दसि' (२.४.७३) इति सर्वमनुवर्तिष्यते, तेनाचि प्रत्यये परतः छन्दसि भाषायां यङो लुग् भवतीत्येकं

1. काष्ठैः नास्ति—घ. 2. विभक्तिः—ड. 3. ननु इत्यधिकम्—घ. 4. एकदेशभूता—घ.
5. प्रवर्तन्ते—घ. 6. वातः नास्ति—घ. 7. वान्ति नास्ति—म.घ. 8. वर्तते इत्यधिकम्—घ.

वाक्यम्, छन्दसि बहुलमनैमित्तिको लुगिति द्वितीयम्, प्रसिद्धश्च तथा [1]छान्दसो यङ्लुगिति। प्रयोगश्च चिरन्तनैः पद्ये गद्ये च काव्याख्यायिकादौ विकटपदोपन्यासप्रधानैरपि कविभिर्न कृतो दृश्यते।

भाष्यकारस्तु हुश्नुवोरिति वक्ष्यन्ति, एवं तर्ह्येतज्ज्ञापयति—'भाषायामपि यङ्लुग्भवति' (म.भा., ६.४.८७) [2]इति। तेन [3]चेच्चिदीति, चेच्छिदीति, योयवीतीत्यादि सिद्धं भवति। वृत्तिकारस्तु मन्यते—यदि ज्ञापकेनापि तावद्भाषायामपि यङ्लुकः प्रयोगो भवति, हन्तैवमत्रैव छन्दोग्रहणं मानुवृतत्। प्रयोगस्तु ज्ञापकाश्रयेण यथाभिधानं व्यवस्थास्यते' इति, अतो न भाष्यवार्तिकविरोधो वृत्तेः शङ्कनीयः॥

## ७५. जुहोत्यादिभ्यः श्लुः।

'शवनुवर्तते, न यङ्' इति। श्लाविति द्विर्वचनविधानात्। यङनुवृत्तौ हि श्लुना तत्र लुप्तेऽपि 'सन्यङोः' (६.१.९) इति षष्ठ्याश्रयणाद्द्विर्वचनसिद्धेरनर्थकं तत्स्यात्। 'बिभर्ति' इति। 'भृञामित्' (७.४.७६) इत्यभ्यासस्येत्वम्। 'नेनेक्ति' इति। 'णिजिर् शौचपोषणयोः' (धा.पा. १०९३), 'णिजां त्रयाणां गुणः श्लौ' (७.४.७५)॥

## ७६. बहुलं छन्दसि।

## ७७. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु।

'अभूत्' इति। 'भूसुवोस्तिङि' (७.३.८८) इति गुणप्रतिषेधः, 'लुगनुवर्तते, न श्लुः' इति। व्याख्यानात्।

'इण्पिबत्योर्ग्रहणम्' इति। इणादेशो गा इणित्युक्तः, तत्र गातीत्यादाविकस्येणो य आदेशः, तदनुकरणो [4]गा तिपि शब्लुका निर्दिष्टः। स्थानिवद्भावात् 'प्रकृतिवदनुकरणं भवति' (व्या.प. ११३) इति च। तेन 'गामादाग्रहणेष्वविशेषः' इति लाक्षणिकस्यापि गारूपस्य यद्यपि ग्रहणं प्राप्तम्, तथापि गातीति निर्देशादेव तस्य निवृत्तिः। तथा 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' (व्या.प. ५०) इति पिबतेरेव ग्रहणम्। 'अगासीत्, अपासीत्' इति। 'कै गै रै शब्दे' (धा. ९१६,९१७,९०९), 'पा रक्षणे' (धा.पा. १०५६) इतीह, 'यमरमनमातां सक् च' (७.२.७३) इति सगागमः, सिचश्चेट्, 'अस्ति सिचोऽपृक्ते' (७.३.९६) इतीट्, 'इट ईटि' (८.२.२८)। 'पै ओ वै शोषणे' (धा.पा. ९२०,९२१) इत्यस्य लाक्षणिकं पारूपमिति ग्रहणाभावः।

'अगासाताम्' इति। कर्मण्यात्मनेपदम्, आताम्॥

---

1. एव इत्यधिकम्—घ. 2. अस्ति इत्यधिकम्—घ. 3. वेभिदति, बोभवति—घ.
4. पशब्दः—घ.

## ७८. विभाषा घ्राधेट्शाच्छासः ।

धेटः सानुबन्धकस्य निर्देश आत्वपरिहारार्थः । 'धा' इत्युच्यमाने प्रतिपदोक्तत्वाद्धाञ एव ग्रहणं स्यात् । ननु सत्यप्यनुबन्धोच्चारणेऽनुबन्धानामनेकान्तत्वात् 'नानुबन्धकृतमनेजन्तत्वम्' (शा.प.१५) इत्युदीचां माङ इतिवदात्त्वं प्राप्नोति । सत्यम्; अयमेव निर्देशो ज्ञापयति—सानुबन्धानुकरणे नावश्यकमात्त्वमिति । तेन सूत्राद्बहिरपि वेञः, धेटः, देंप इत्यादि प्रयोगोपपत्तिः । 'अघ्रासाताम्' इति । कर्मण्यात्मनेपदम्, आताम् । 'सुमनसौ' इति । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरसिंहः (२.४.१७) । 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' (पा. लिङ्ग २९) इति पाणिनीयं सूत्रम् । तद्बहुत्वं प्रायिकं मन्यते । 'एका च सिकता तैलदानेऽसमर्था' (म.भा. १.३१.४) इति भाष्ये प्रयोगात् ॥

## ७९. तनादिभ्यस्तथासोः ।

उदाहरणेषु स्वरितेत्त्वादात्मनेपदम् । 'थासा साहचर्यात्' इति । यद्यपि तावदयं तशब्दो वृष्टापचारः—अस्त्यात्मनेपदमस्ति च परस्मैपदम्, अस्ति चैकवचनमस्ति च बहुवचनम् । अयं तु खलु थाःशब्दोऽवृष्टापचार आत्मनेपदमेकवचनं च, तस्यास्य कोऽन्यः सहायो भवितुमर्हति; अन्यत आत्मनेपदादेकवचनाच्चेति भावः । 'आत्मनेपदस्य' इति । उपलक्षणमेतत् । एकवचनस्येत्यपि द्रष्टव्यम् ॥

## ८०. मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।

च्लेरेवात्र ग्रहणमिष्यते, न लिङादीनाम्, तदर्थं 'सिचः' इत्यनुवर्तयन्ति—सिचो यो लिः स्थानिभूतस्तस्येति व्याचक्षते । सिचि प्रकृते लिग्रहणम् 'आदिः सिचोऽन्यतरस्याम्' (६.१.१८७) इत्यादिसिच्कार्यं मा भूदिति । पूर्वत्र हि मा हि दातामिति सिच्स्वरो भवत्येव । ह्वरेति विहितगुणस्यानुकरणम्, अकारश्चागन्तुक उच्चारणार्थः । 'अक्षन्' इति । 'लुङसनोर्घस्लृ' (२.४.३७) 'गमहन' (६.४.९८) इत्युपधालोपः, 'शासिवसि' (८.३.६०) इति षत्वम् । 'प्राणङ्' इति । नश्चादिना षत्वे जश्त्वचर्त्वे । 'प्राणग्' इति पाठे 'नशेर्वा' (८.२.६३) इति कुत्वम् । 'आप्रात्' इति । 'प्रा पूर्तौ' (धा.पा. १०६१), आङ् पूर्वः । 'अज्ञत' इति । 'जनी प्रादुर्भावे' (धा.पा.११४९), अनुदात्तेत् । बहुवचनस्य 'आत्मनेपदेष्वनतः' (७.१.५) इत्यदादेशः, पूर्ववदुपधालोपः, श्चुत्वम् । 'ब्राह्मणे प्रयोगोऽयम्' इति । मन्त्रव्यतिरिक्तो वेदभागः ब्राह्मणम् । यथाह भगवाञ्जैमिनिः—"यच्चोदकेषु मन्त्राख्या" इति मन्त्रलक्षणान्तरम्, 'शेषे ब्राह्मणशब्दः' इति । बह्वृचां हरिश्चन्द्रब्राह्मणे हरिश्चन्द्रं प्रति वरुणस्यैतद्वाक्यं—'अज्ञत वाऽस्य दन्ताः' (ऐ.ब्रा. ७.१४.१) इति । कथं पुनर्मन्त्रग्रहणे ब्राह्मणग्रहणं भवति ? तत्राह—'मन्त्रग्रहणं तु' इति । छन्दोरूपत्वात् तेन तदुपलक्ष्यते । बाहुल्येन तु मन्त्रे दर्शनान्मन्त्रग्रहणं कृतम् ॥

## ८१. आमः ।

'आम उत्तरस्य लेर्लुग्भवति' इति । यद्यपि सिचा लिर्विशेषितः, तथापीह लेरित्येवानुवर्तत इति भावः । विदामक्रन्विदाङ्कुर्वन्त्वित्यत्र लुङ्लोटोर्निपातनाल्लुग्भवति । तरबादीनां चामन्तावनुत्पत्तिरेव, तस्यानभिव्यक्तपदार्थत्वात् । अयं च लुग्नाप्राप्तेषु तिबादिषु विधीयमानत्वाल्लादेशानामपवादः । तेनामन्तस्यातिङन्तत्वात्

'चक्षुः कामम्, 'याजयाञ्चकार' इत्यत्र 'तिङ्ङतिङः' (८.१.२८) इति, तस्य चानिघातः, तस्माच्च निघातः सिद्धो भवति। कथमामन्तस्य पदत्वम्? सुबन्तत्वात्। लकारस्य कृत्त्वात् प्रातिपदिकत्वम्। तिङ्भाविनो हि लकारस्यातिङिति प्रतिषेधः, न चायं तिङ्भावी। सुपः श्रवणं कस्मान्न भवति? आमः स्वरादिषु पाठादव्ययत्वात्। तद्धितेनामः साहचर्येऽपि तद्धित एव न गृह्यते, अपि तु व्याप्तेरतद्धितोऽपि। नञा तु समासप्रसङ्गः, न कार्यां, न हार्यां, 'नञ्' सुबन्तेन समस्यत इति समासः प्राप्नोति? नैष दोषः; अभिव्यक्तपदार्थेन हि 'याजयाञ्चकार' इति नञः सामर्थ्यम्, न त्वनभिव्यक्तपदार्थेनामन्तमात्रेण। आमन्तेभ्यो णलः प्रतिषेधः—शशाम, ततान, वृद्धौ कृतायां स्थानिवद्भावेन णलो लिग्रहणेन ग्रहणे लुक् प्राप्नोति? अर्थवद्ग्रहणात् सिद्धम्। अर्थवत आमन्तस्य ग्रहणम्, न चैषोऽर्थवान्। एवमपि 'अम गत्यादिषु' (धा.पा. ४६५), लिपो णल्, आम—अत्र प्राप्नोति, अर्थवत्त्वात्? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (व्या.प. ३) इति अत्र न भविष्यति॥

## ८२. अव्ययादाप्सुपः।

'तत्र शालायाम्' इति। शालाशब्दसन्निधौ स्त्रीत्वयुक्तद्रव्यगतकारकशक्त्यभिधानात् तस्यामितिवत् तत्रेत्यत्रापि यदि स्त्रीप्रत्ययः स्यात् पदादेव स्त्रीत्वं प्रतीयेतेति व्यामोहनिवृत्त्यर्थं टापो लुग्वक्तव्यः, यथा षट्सञ्ज्ञकेभ्यः प्रतिषेध इति भावः। वार्तिककारस्त्वाह—'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' (का.वा. १६३३) इति। 'कृत्वा, हृत्वा' इति। यदा 'बहुषु बहुवचनम्' (१.४.२१) इत्यादेः स्वादिविधिवाक्येनैकवाक्यता, तदा निस्सङ्ख्येभ्यो निष्कारकेभ्यश्चाव्ययेभ्योऽस्मादेव लुग्विधानाल्लिङ्गात् स्वादयो भवन्ति, भिन्नवाक्यतायामपि नियमपक्षे तुल्यजातीयस्य नियमेन व्यावृत्तिः—बहुष्वेव बहुवचनम्, न द्वयोरेकस्मिन्, द्वयोरेव द्विवचनं नैकस्मिन् बहुषु, एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु, इत्यव्ययेभ्यः स्वादीनां सम्भवः। त्रिकपक्षे तु यत्र सङ्ख्या सम्भवति तत्रैव सा वाच्यत्वेन विधीयते, अव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति सर्वथाव्ययेभ्यः सुबुत्पत्तिरेषितव्या—प्रत्ययलक्षणेन पदसञ्ज्ञा यथा स्यादिति। सुबिति च सप्तमीबहुवचनस्य पकारेण प्रत्याहारः, न कपः; आपः पृथगुपादानात्॥

## ८३. नाव्ययीभावादतोऽम्त्वपञ्चम्याः।

किमर्थः प्रतिषेधः? पूर्वसूत्रेण लुङ् मा भूदिति। अमत्र विधीयते, स नाप्राप्ते लुक्यारभ्यमाणस्तस्य बाधको भविष्यति, यत्र तर्हि प्रतिषिध्यते, पञ्चम्यास्तत्र लुक् प्राप्नोति। प्रतिषेधे तु सति तत्सामर्थ्याद् द्वे वाक्ये भवतः—नाव्ययीभावादित्येकम्, अम्त्वपञ्चम्या इति द्वितीयम्। अत्र चात इत्यपेक्ष्यते। तत्रापञ्चम्या इत्यनेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति पञ्चम्या आदेशः प्रतिषिध्यते, न पूर्ववाक्यविहितः प्रतिषेधः। इममेवार्थं तुशब्देन द्योतयति—अविशेषेण प्रतिषेधः अम्त्वपञ्चम्या इति, तदेतदुक्तम्—'एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति' इति। वाक्यभेदस्तु वृत्तावेव स्पष्टः। 'उपकुम्भात्' इति। समीपभूतात् कुम्भादित्यर्थः। कुम्भस्य समीपादित्यपरे। उन्मत्तगङ्गादिरन्यपदार्थप्रधानः सत्त्ववाच्यव्ययीभावः। क्रियासम्बन्धसद्भावादपादानत्वात् पञ्चम्या मुख्यमुदाहरणम्॥

## ८४. तृतीयासप्तम्योर्बहुलम् ।

'सुमद्रम्' इति । मद्राणां समृद्धिरित्यव्ययीभावः, ततः सप्तमी, तस्या नित्यमम्भावः । 'एकविंशतिभारद्वाजम्' इति । एकविंशतिर्भरद्वाजा वंश्या इति 'सङ्ख्या वंश्येन' (२.१.१९) इति समासः । तत्र वर्तिपदार्थानां स्वार्थोपसर्जनार्थान्तराभिधायित्वाद्भारद्वाजशब्द एकत्वविशिष्टार्थान्तरे सङ्क्रान्त इत्यतो लुगभावः । नेति वयम्, गर्गाणां कुलं गर्गकुलमित्यादावपि प्रसङ्गात् । तस्माद्भाष्यकारप्रयोगादत्र लुगभावः ॥

## ८५. लुटः प्रथमस्य डारौरसः ।

'परस्मैपदस्यात्मनेपदस्य च' इति । यद्येवं परस्मैपदे त्रयः प्रथमपुरुषसञ्ज्ञकास्तिबादयः, आत्मनेपदेष्वपि त्रयस्तादय इति षट् स्थानिनस्त्रय आदेशा इति वैषम्यात् सङ्ख्यातानुदेशो न प्राप्नोति । मा भूत् सङ्ख्यातानुदेशः, आन्तर्यतो व्यवस्था भविष्यति ? अर्थतश्चान्तर्यम्, एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः । कथं पुनर्डादीनामैकार्थ्याध्यवसायः, यावता यस्तिपः स्थाने स एकार्थः, यस्तस्स्थाने स द्व्यर्थः, यो झेः स्थाने स बह्वर्थः ? नेत्याह, प्रयोगदर्शनादप्यैकार्थ्यादिकमध्यवसातुं शक्यम् । अथ वाऽऽदेशा अपि षडेव निर्दिश्यन्ते, कथम् ? एकशेषनिर्देशात्, डारौरसश्च डारौरसश्चेति कृतद्वन्द्वानामेकशेषः । यदि तु डा च डा च डा, रौ च रौ च रौ, रस् च रस् च रस्, डा च रौ च रस् च डारौरस इति [1]कृतैकशेषाणां द्वन्द्वः स्यात् अनिष्टः सङ्ख्यातानुदेशः प्राप्नोति तिप्तसोः डा, झितयो रौ, आतांझयो रसिति । 'कर्ता' इति । लुट्, तिप्, तस्य डा इत्ययं सर्वादेशः । नानुबन्धकृतमनेकाल्त्वम् । अस्तु तर्ह्यन्त्यस्यैव, तिपस्तकारेण सह टिलोपो भवति । ननु तकारान्तमङ्गं न भवति, डित्करणसामर्थ्यादनङ्गस्यापि भविष्यति, यथा—सिद्धान्तेऽभस्यापि । अथ वाऽऽनुपूर्व्यात् सिद्धं, कथम् ? अन्त्यस्याप्ययं स्थाने भवन्नप्रत्ययः स्यात्, असत्यां प्रत्ययसञ्ज्ञायां डकारस्येत्सञ्ज्ञा नास्ति, असत्यां चेत्सञ्ज्ञायामनेकाल्, यदाऽनेकाल् तदा सर्वादेशः, यदा सर्वादेशस्तदा प्रत्ययः, यदा प्रत्ययस्तदेत्सञ्ज्ञा, यदेत्सञ्ज्ञा तदा लोपस्तदैकाल्, न चेदानीं प्रत्यावृत्त्यान्तादेशो भवितुमर्हति ? तदेतदानुपूर्व्यात् सिद्धम् । 'कर्तारौ, कर्तारः' इति । 'रि च' (७.४.५१) इति तासस्त्योर्लोपः । 'अध्येता' इति । 'इङ अध्ययने' (धा.पा. १०४६) । अथात्र डारौरस्सु कृतेषु टेरेत्त्वं कस्मान्न भवति ? पूर्वमेवास्मिन् योगे स्थानिषु प्रवृत्तत्वात् । इह हि तशब्दस्य टेरेत्त्वं च प्राप्नोति, डादेशश्च; द्वयोरपि शब्दान्तरप्राप्तेरनित्यत्वात् परत्वात् टेरेत्त्वे कृते पुनःप्रसङ्गविज्ञानाड्डादेशः । एवं रौरसोरपि द्रष्टव्यम् । अथ वा—पूर्वमेव डारौरसो भवन्तु, थासः सेवचनं ज्ञापकम्—ये तिङादेशास्तेषां टेरेत्त्वं न भवतीति, अन्यथा 'थासः सः' (३.४.८०) इत्येव वाच्यं स्यात् ।

'कर्तासि' इति । 'तासस्त्योर्लोपः' (७.४.५०) इति सलोपः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
द्वितीयाध्यायस्य तुरीयश्चरणः ॥

—:०:—

**समाप्तश्चायं द्वितीयोऽध्यायः ॥**

---

1. कृतकशेषात्—इ.

### श्रीहरदत्तमिश्रविरचिता काशिकाव्याख्या

# पदमञ्जरी

—०—

## तृतीयोऽध्यायः

### प्रथमः पादः

**१. प्रत्ययः ।**

इह यदि सर्वानेव सञ्ज्ञिनः स्वरूपेण निर्दिश्य सञ्ज्ञा विधीयेत——सन् प्रत्ययः, क्यच् प्रत्ययः, क्यङ् प्रत्यय इति, ततो गौरवं स्यात् । अथ 'सप्' प्रत्यय इति सनः सशब्दादारभ्य कपः पकारेण प्रत्याहाराश्रयेणात्र वा प्रदेशान्तरे वा सञ्ज्ञा विधीयेत, तदानेकस्य पकारस्य सम्भवात्सन्देहः स्यात् । तथा हि—प्रत्यासत्तिन्याये आश्रीयमाणे सिपः पकारेण स्यात्, व्याप्तौ तु 'तप्तनप्तनथनाश्च' (७.१.४५) इति तनपः । स्यादेतत्——व्याप्तिरेवाश्रयिष्यते, अथ च तनपः पकारेण प्रत्याहारो न भविष्यति; ज्ञापकात्, यदयं 'इच एकाचोऽम्प्रत्ययवच्च' (६.३.६८) इत्यत्र प्रत्ययवद्भावं शास्ति, अन्यथा षष्ठेऽपि प्रत्ययसञ्ज्ञाव्यापारादमोऽपि स्वत एव प्रत्ययत्वात् तद्भावो नातिदेशः स्यादिति ? तन्न; तत्र हि 'अम्' इति द्विरावर्तते, ततश्चाप्रत्ययप्रतिबद्धम् 'औतोऽम्शसोः' (६.१.९३) इत्यादिविशिष्टं कार्यं यथा स्यादिति सोऽतिदेशः स्यात् । नन्वेवमपि प्रत्ययग्रहणमनर्थकम्, अम्वदिति वक्तव्यम्, अतः प्रत्ययग्रहणात् प्रत्ययप्रयुक्तमपि कार्यमतिदेश्यमिति प्रतीयते, तज्ज्ञापकमुक्तार्थस्य भविष्यति ? एवमप्यत्र आगमत्वात् पुगादिवदप्राप्तेः प्रत्ययत्वातिदेशः स्यात् । अस्तु वा ज्ञापकम्, एवमपि कुत एतद्व्याप्तिराश्रीयते न पुनः प्रत्यासत्तिरिति ? किं च यथान्यासाद्गौरवं स्थितमेव, सवित्यस्याधिकस्य करणात् ? अतो गौरवातिप्रसङ्गपरिहारायाधिकारेणेयं सञ्ज्ञा विधीयते । तदाह——'प्रत्ययशब्दः सञ्ज्ञात्वेनाधिक्रियते' इति । 'कारके' (१.४.२३) इति तद्विशेषणमधिक्रियते, स्वादिषु कप्पर्यन्तेषु प्रकृतिरियमधिक्रियते इतिवत् । 'प्रत्ययशब्दः सञ्ज्ञाधिक्रियते' इति वक्तव्ये सञ्ज्ञात्वेनेति वचनमनर्थभेदात् । तथा हि—अयमत्र कर्मकरत्वेनाधिकृतः, अयमत्र कर्मकरोऽधिकृतः, नार्थभेदोऽस्ति; किन्तु 'कर्मकरोऽधिकृतः' इत्युक्ते यः कर्मकरः सोऽधिकृतो रूपान्तरेणेत्यपि गम्यते, कर्मकरत्वेनेति पुनरुच्यमाने तस्यैवाकारस्याधिकृतत्वं गम्यते । अधिक्रियते = विनियुज्यते सूत्रकारेण । यान् = नावीननुक्रमिष्यामः = अनुक्रमेण विधास्यामः । सूत्रकारायमाणस्य वृत्तिकारस्यैतद्वचनम् ।

यदि तर्ह्यधिकारेण सञ्ज्ञा क्रियते, प्रतियोगमुपस्थानात् प्रकृत्युपपदोपाधिविकारागमानामपि प्राप्नोति—'हरतेर्दृतिनाथयोः पशौ' (३.२.२५) हरतेरिति प्रकृतिः, दृतिनाथयोरित्युपपदम्, पशाविल्युपाधिः, 'हनस्त च' (३.१.१०८) इत्यादिर्विकारः, 'त्रपुजतुनोः षुक्' (४.३.१३८) इत्यागमः। सत्यां च सञ्ज्ञायां प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात् शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य ? उपपदस्यापि परत्वात् 'उपसर्जनं पूर्वम्' (२.२.३०) इत्येतद्राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात्, यत्र समासाभावात् 'उपसर्जनं पूर्वम्' (२.२.३०) इत्यस्याप्रसङ्गः, तत्रोपपदस्य परत्वं स्यात् ? एवं च सति भोक्तुं व्रजतीत्येवमेव नित्यं स्यात् न तु व्रजति भोक्तुमिति, उपाधेरप्यर्थस्य परत्वासम्भवेऽपि तद्वाचिनः प्रयोगानियमे प्राप्ते 'परश्च' (३.१.२) इति नियमः स्यात् ? आद्युदात्तत्वं च यथायथं स्वरान्तरं बाधित्वा स्यात् ? अङ्गसञ्ज्ञा तु विधानप्रतिबद्धा, न चेह प्रकृत्यादयः कुतश्चिद्विधीयन्ते इति न सा प्रकृत्यादिषु परतः पूर्वस्य प्राप्नोति ? ननु च प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात् प्रकृत्यादीनां सञ्ज्ञा न भविष्यति, तथा हि—'हरतेर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्तरीन् प्रत्ययो भवतीत्येकं' वाक्यम्, ते च हरत्यादयः प्रत्ययसञ्ज्ञका इति द्वितीयम्, सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते ? नैतदस्ति; सनादीनामप्यसतां सञ्ज्ञानुपपत्तेर्विषयभेदेनैव सञ्ज्ञा विधेया, ततश्च सनादीनामेकेन वाक्येन विधिः, अपरेण सञ्ज्ञाविधिः, एवं प्रकृत्यादीनामपि प्राप्नोति ? तत्राह—'प्रकृत्युपपद' इत्यादि। अयमभिप्रायः—प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात् पारार्थ्यात् स्वसंस्कारं प्रति प्रयोजकत्वाभावः, यथा—यः पीठे स देवदत्त इति पीठस्य देवदत्तसंज्ञा न भवति।

ननु सनाद्युत्पत्तिवाक्ये प्रथमे तेषां पारार्थ्यम्, न द्वितीये सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपादनपरे वाक्ये, ततश्च सञ्ज्ञासम्बन्धप्रतिपत्तौ सत्यां स्वार्थतापि सम्भवत्येव ? तन्न; द्वितीयमपि वाक्यं सञ्ज्ञाविधानपरमेवंरूपमेव—'गुप्तिज्किद्भ्यः सन्' (३.१.५) प्रत्यय इति, ततश्च तत्रापि भूतविभक्त्या निर्देशान्निमित्तत्वात् पारार्थ्यं स्थितमेव। किं च, योग्यविभक्त्यभावाच्च न प्रकृत्यादीनां सञ्ज्ञा, प्रथमान्तस्य षष्ठ्यन्तस्य वा सञ्ज्ञासम्बन्धः 'वृद्धिरादैच्' (१.१.१), 'स्वं रूपं शब्दस्य°' (१.१.६८) इति। न च द्वितीये वाक्ये योग्यविभक्त्यध्याहारेण सञ्ज्ञा भवितुमर्हति; योग्यविभक्तिनिर्दिष्टेषु सनादिषु चरितार्थत्वात्। उपपदसञ्ज्ञा तु सप्तमीनिर्दिष्टस्य विधीयमाना युक्तं यद्वाक्यभेदेन योग्यविभक्त्यध्याहारेण च भवतीति। किं च, प्रधानेतरसन्निधौ प्रधाने कार्यसंप्रत्ययो भवति, यस्य चापूर्वविधानं तत्प्रधानम्; अतः प्रथमवाक्ये तावत्सनादीनामेव प्राधान्यम्, द्वितीयेऽपि सञ्ज्ञा संज्ञिनमपेक्षमाणा यत्पूर्ववाक्ये प्रधानतयावगतं तदेवापेक्षते, न तु पारतन्त्र्यादप्रधानमिति सिद्धमिष्टम्। एवमपि विकारागमानां प्राप्नोति ? नैष दोषः, महती सञ्ज्ञा क्रियते, अन्वर्थसञ्ज्ञा यथा विज्ञायेत—प्रतियन्त्यनेनार्थमिति प्रत्यय इति। न च विकारागमाभ्यामर्थं प्रतियन्ति। यद्येवम्, 'अवेः कः' (५.४.२८) इत्यादीनां समासान्तानां च न स्यात्, न ह्येषामन्वयव्यतिरेकाभ्यां कश्चिदर्थोऽवधार्यते, तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थावगमात्।

यदप्युच्यते—'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' (पु.प.९०) इति स्वार्थ एवैषामर्थ इति, तदपि कल्पनामात्रम्, अन्वयव्यतिरेकगम्यत्वादर्थवत्त्वस्य। इतरेतराश्रयत्वं च भवति—सति प्रत्ययत्वे स्वार्थे विधानम्, स्वार्थे विधानाच्चार्थवत्त्वे सति प्रत्ययसञ्ज्ञेति। एवं तर्हि प्रयोजनाभावान्न भविष्यति ? तथा हि तेषां स्थानषष्ठ्या सम्बन्धस्यावयवसम्बन्धस्य च प्रतिपादनात् परत्वं तावन्न सम्भवति, आगमानां चानुदात्तत्वविधानादाद्युदात्तत्वस्यासम्भवः, सति तु प्रयोजने आगमस्यापि श्नमः शकारस्येत्सञ्ज्ञार्थं भवत्येव सञ्ज्ञा। अथ 'हनश्च वधः'

(३.३.७६), 'नाभि नभञ्च' (ग.सू. १०६), 'विराग विरङ्गं च' (ग.सू. ११०) इत्यादौ वधादीनामादेशानां सञ्ज्ञा कस्मान्न भवति, सम्भवति हि तेषु परत्वं प्रयोजनम् ? यद्यपि स्थानिन आदेशे निर्वर्तितत्वान्न तदपेक्षं परत्वम्, शब्दान्तरापेक्षया स्यादेव परत्वम् । यथोक्तं प्राक्–गुपादिष्वर्थवत्त्वं च तेषामपि, विधेयत्वात् प्राधान्यं च, योग्या च विभक्तिः । अतः सर्वथा वधादिषु सञ्ज्ञानिवृत्तये यत्नः कर्तव्यः । 'कर्तव्यम्, करणीयम्' इति । अत्र प्रत्ययसञ्ज्ञायां धातोरङ्गसञ्ज्ञा, अङ्गस्य गुणः । अनन्तरमपि सनादिकमतिक्रम्य व्यवहितोऽपि तव्यदादिरुदाहृतः । तत्राद्युदात्तादेरपि प्रत्ययकार्यस्य सम्भवात् । सनादौ तु नित्स्वरेण धातुस्वरेण च तद्बाध्येत ।

## २. परश्च ।

'अयमप्यधिकारः' इति । न केवलं 'प्रत्ययः' इत्ययमेवेत्यपिशब्दार्थः । 'योगे योगे उपतिष्ठते' इति । अनेन परिभाषातोऽधिकारस्य भेदको धर्मो दर्शितः । परिभाषा हि न प्रतियोगमुपतिष्ठते, किन्त्वेकदेशस्थितं सर्वशास्त्रे व्याप्रियते । 'परश्च स भवति' इत्यादि । अनेनेहस्थाया एवास्याः परिभाषायाः प्रत्ययविधौ सर्वत्र व्यापारो दर्शितः । लिङ्गवती चेयं परिभाषा, प्रत्ययसञ्ज्ञा च लिङ्गम् । 'धातोर्वा' इति । क्रियावाचिन्याः प्रकृतेस्तिङन्तादेरप्युपलक्षणमेतत् । 'प्रातिपदिकाद्वा' इति । अक्रियावाचिन्याः प्रकृतेरिदमुपलक्षणम्, तेन उपपदोरपि ग्रहणम् । 'तैत्तिरीयम्' इति । तित्तिरिणा प्रोक्तमधीते, 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' (४.३.१०२), 'छन्दोब्राह्मणानि च तद्विषयाणि' (४.२.६६), 'तदधीते तद्वेद' (४.२.५९), 'प्रोक्ताल्लुक्' (४.२.६४), ब्राह्मणकुलस्याभिधेयत्वान्नपुंसकत्वम् । 'चकारः पुनरस्यैव समुच्चयार्थः' इति । अन्यस्य समुच्चेतव्यस्याभावात् । 'तेन' इति । अन्यथा बहुलवचनस्य सर्वोपाधिव्यभिचारार्थत्वाद्गुणादिषु परत्वस्यापि विकल्पः सम्भाव्येत, तु 'गुप्तिज्किद्भ्यः सन्' (३.१.५) इत्यादौ दिग्योगलक्षणा पञ्चमी, तत्र पूर्वः पर इति वा विशेषशब्दस्याश्रवणादनियमेनाध्याहारे सत्यनियमेन प्रयोगप्रसङ्गे नियमार्थमिदम्—पर एव प्रत्ययो न पूर्व इति । 'गापोष्टक्' (३.२.८) इत्यादौ षष्ठीनिर्देशेऽप्यानन्तर्यसम्बन्धे षष्ठीविज्ञानादानन्तर्यस्य च पूर्वत्वेऽपि भावादनियमप्रसङ्ग एवेति तत्रापि नियमार्थमेव । नैतदस्ति प्रयोजनम्, 'विभाषा सुपो बहुच् पुरस्तात्तु' (५.३.६८) इत्येतन्नियमार्थं भविष्यति—बहुजेव पुरस्ताद्भवति नान्यः प्रत्यय इति । ततश्च बहुचि पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यति, षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेण मध्येऽपि प्रसङ्ग इति चेत्, न; 'अव्ययसर्वनाम्नामकच् प्राक् टेः' (५.३.७१) इति नियमात् अकजेव प्रकृतिमध्ये भवति, नान्य इति ? नैतदेवम्, यदि तावदेवं नियमः—बहुजेव पुरस्तादकजेव मध्ये इति, बहुजकचोर्नियमो न स्यात् । अथ बहुच् पुरस्तादेव अकज्मध्य एवेति, तयोर्देशस्यानियतत्वात् तत्र प्रत्ययान्तरं स्यादेवेति सर्वथानिष्टप्रसङ्गः । किं च अकजेव प्राक् टेरित्येवं नियमे प्राक् टेः प्रत्ययान्तरं मा भूत्, मध्यान्तरे तु स्यादेव; मध्यविशेषाश्रयत्वान्नियमस्य । न च 'तस्मादित्युत्तरस्य' (१.१.६७) इत्यनया परिभाषयात्र परत्वं सिध्यति, यत्र हि प्रागेव सतः कस्यचित् किञ्चिद्विधीयते, यथा—पदात्परयोः पादादौ वर्तमानयोर्युष्मदस्मदोर्वांनावौ भवत इति, स तस्या विषयः; इह तु प्रागसन्त एव सनादयो विधीयन्ते, न तेषां सम्बन्धि किंचित्, प्रत्ययसञ्ज्ञैव तेषां कार्यमिति चेत्, न; एवमपि प्रागुत्पत्तिरनिवारिता स्यात् । तथा हि—असतां सनादीनां सञ्ज्ञाविधिरनुपपन्न इत्येकेन वाक्येन सनादीनां विधिर्द्वितीयेन च तेषामेव सञ्ज्ञाविधिरित्यङ्गीकरणीयम्, ततश्च द्वितीये वाक्ये सतः कार्यमिति कृत्वा परिभाषोपस्थानेन प्राक् प्रयुक्तानां सर्वे

केवलं न स्यादुत्पत्तिस्त्वनियतदेशैव स्यात्; प्रथमवाक्ये परिभाषानुपस्थानात्। स्यादेतत्—'गुप्तिज्किद्भ्यः सन्' (३.१.५) इत्यादावेकैव पञ्चमी, सा चैकमेव दिक्शब्दमध्याहरेत्, तत्र पूर्वः परो वेति संशये पूर्वशब्दाध्याहारे द्वितीयस्य वाक्यस्य स्वरसभङ्गः स्यात्। गुपादिभ्यः परः सन् प्रत्ययसञ्ज्ञो भवतीति हि तस्य स्वरसतः प्राप्तोऽर्थः, स च पूर्ववाक्ये पूर्वशब्दाध्याहारे सति भग्नः स्यात्, अतस्तत्परिरक्षणाय परशब्द एवाध्याहरिष्यते। भवतु वोत्पत्तिरनियतदेशा, पश्चात्तु सत एव परस्य यत्कृत्यप्रत्ययसञ्ज्ञादिशास्त्रकार्यम्, तन्नान्यदेशस्य, यद्देशस्य च शास्त्रीयं कार्यं तद्देशोऽन्यदेशं निवर्तयिष्यति, विशेषशास्त्रान्वितत्वेन तस्यैव साधुत्वादिति? अस्त्वेवम्, अथ येषु प्रत्ययसञ्ज्ञैव न भवति—'शमेः खः' (द.उ.१०.१५) शङ्खः, 'कणेः ठः' (द.उ.५.६) कण्ठः, इत्यादिषु, तेषु कथं परत्वम्, द्वितीयवाक्यव्यापाराभावात्? भवतो वा कथं भवानपि हि 'यः प्रत्ययः स परः' इति प्रत्ययपूर्वकं परत्वं परिभाषते? सत्यम्; परिभाषापक्षे न स्यात् परत्वम्, अधिकारपक्षे तु प्रत्ययत्वपूर्वकं परत्वं न भवति, किन्तु परत्वविशिष्टस्यैवोत्पन्नस्य पश्चात् प्रत्ययसञ्ज्ञा, इह तु बहुलवचनात् प्रत्ययत्वाभावेऽपि परत्वमविरुद्धम्। एवमपि नार्थ एतेन, बहुलवचनादेव परत्वमेवात्र व्यवस्थास्यते? एवं तर्हि प्रयोगनियमार्थमिदम्—पर एव प्रत्ययो न केवल इति, अन्यथा प्रत्ययार्थमात्रविवक्षायां केवलोऽपि प्रत्ययः प्रयुज्येत, यथा—किमस्य द्वयसम्, किमस्य मात्रमिति; यथा वा प्रकर्षविवक्षायां तरतमभावः तारतम्यमिति। ननु सर्वत्र प्रकृतिविशेषं निर्दिश्यैव प्रत्ययो विधीयते, तत्र पूर्वोक्तया नीत्या परत्वविशिष्टस्यैव विधानमिति नास्ति केवलस्य प्रयोगः? एवमपि प्रकृत्यर्थमात्रविवक्षायां केवलायाः प्रकृतेः प्रयोगः स्यादेव, यथा—पच, वृक्षेति। यत्र पुनरुभयं विवक्षितम्—प्रकृत्यर्थः, प्रत्ययार्थश्च, न तत्र केवलायाः प्रकृतेः प्रयोगप्रसङ्गः न केवला प्रकृतिः प्रत्ययार्थमभिधातुं समर्थेति। लक्षणया समर्थेति चेत्? नो खल्वारभ्यमाणमप्येतल्लक्षणया प्रयोगं निवारयितुमर्हति, अतः केवलप्रकृत्यर्थविवक्षायां केवला प्रकृतिर्मा प्रयोजीति सूत्रारम्भः। चशब्दश्चावधारणे, प्रत्ययः परो भवत्येव, न तु कदाचिन्न भवतीति वचनव्यक्तिः। आपदत्वनिष्पत्तेश्चायं नियमः, निष्पन्ने तु पदे तावदेव प्रयुज्यते। अपत्याद्यर्थान्तरविवक्षायां तु तस्मादपि प्रत्ययान्तरं भवति॥

## ३. आद्युदात्तश्च।

इहास्वरकस्याच उच्चारणासम्भवात् सर्व एव स्वरविधिर्नियमार्थः, तत्र 'चितः' एवान्त उदात्तः, रित्येव मध्य उदात्तः, तिदेव स्वरितः, सुप्पितावेवानुदात्तौ, दूरात्सम्बुद्धावेवैकश्रुत्यमिति। स्वरान्तराणामन्यत्र नियमात् परिशेष्याद्युदात्त एव प्रत्ययो भविष्यति, नास्वरकः, नाप्यन्यस्वरकः, तत्राह—'अनियतस्वरप्रत्ययप्रसङ्गे' इति। अनियतः स्वरो यस्य सोऽनियतस्वरः, स चासौ प्रत्ययश्चानियतस्वरप्रत्ययः, तस्य प्रसङ्गे प्रत्ययोऽनियतस्वरो मा भूदित्येवमर्थमित्यर्थः। 'अनियतस्वरप्रसङ्गे' इति पाठे त्वनियतस्य स्वरस्य प्रसङ्ग इत्यर्थः। अयमभिप्रायः—आद्युदात्तत्वमपि 'ञ्नित्यादिर्नित्यम्' (६.१.१९७) इत्यादौ नियतत्वान्न स्यात्, अन्यत्रानियमः स्यादेव यत्रायं नियमो नास्ति। किञ्च त्वदुक्ते नियमे चिदादीनामनियमः स्यात्। अतश्चितोऽन्त एव, तित्स्वरित एवेत्यादिकं तत्र तत्र नियमस्वरूपमाश्रयणीयम्, ततश्च प्रत्ययस्यानियतस्वरत्वमेव स्यात्। किञ्च, रित्येवोपोत्तममनुदात्तमित्यपि नियमेऽन्यत्रोपोत्तममनुदात्तं मा भूत्। मध्यान्तरं तु स्यादेव, मध्यविशेषाश्रयत्वान्नियमस्य। तस्माद्ये एकाचः प्रत्ययास्तेष्वनियतस्वरप्रसङ्गे वचनमिदमुदात्तार्थम्। ये पुनरनेकाचः

प्रत्ययास्तेषु देशस्याप्यनियमः प्राप्नोति—कदाचिदादेः, कदाचिन्मध्यस्य, कदाचिदन्त्यस्येति । तेषु वचननियम-दात्तार्थम्, तत्राप्यादेरुदात्तार्थमिति । किमर्थं पुनः प्रत्ययसञ्ज्ञासन्नियोगेनायं स्वर उच्यते, न 'ञ्नित्यादिर्नित्यम्' (६.१.१९७) प्रत्ययस्य च लसार्वधातुकम्, अनुदात्तम्, सुप्पितौ चेति स्वरप्रकरण एवोच्यते ? एवं हि प्रकरण-मभिन्नं भवति ? किञ्च, द्विराद्युदात्तग्रहणं द्विश्चानुदात्तग्रहणं न कर्तव्यं भवति ।

स्यादेतत्—तत्र क्रियमाणे प्रत्ययग्रहणपरिभाषया तदन्तस्य स्वरः प्राप्नोति, इह तु क्रियमाणे नायं दोषो भवेत्, उत्पन्नो हि प्रत्ययस्तदाश्रयाणां तदन्तविध्यादीनां निमित्तं भवति, न तूत्पद्यमानः, न खलूत्पद्यमानो घट उदकाहरणादीनां निमित्तमवकल्पते, ततश्च 'आद्युदात्तश्च' इत्यस्य प्रतियोगमुपस्थाने सति उत्पद्यमान एव तव्यदादिराद्युदात्तो भवति, एवं तिबादिरनुदात्त इति दोषाभावः; अतः प्रत्ययसञ्ज्ञासन्नियोगेन स्वरो विधीयते इति ? तन्न; ज्ञापकात् सिद्धम्, यदयं ञ्नित्यादिरुदात्तो भवतीत्याह—तज्ज्ञापयति प्रत्ययस्य चेदत्र तदन्तविधिर्भवतीत्यनुदात्तत्वमपि तदन्तस्य न भविष्यति, धातोरन्त उदात्तो भवतीत्यादेः प्रकृतिस्वरस्य विधान-सामर्थ्यात् । यत्र ह्यनुदात्तः प्रत्ययः—याति, वृक्षाभ्यामित्यादौ, तत्र प्रकृतिस्वरः श्रूयते । यातः, याति, वृक्षत्वमित्यादौ सतिशिष्टेन प्रत्ययाद्युदात्तत्वेन बाध्यते । यदि च प्रत्ययान्तस्यानुदात्तत्वं स्यात् निर्विषयं धातु-प्रातिपदिकान्तोदात्तत्वं स्यात् । इदं तर्हि प्रयोजनम्—लवितव्यमित्यादौ प्रत्ययोत्पत्तिकाले एवाद्युदात्तत्वे हि पश्चाद्भवन्निडनुदात्तो यथा स्यात्, अन्यथा लू तव्य इति स्थिते आद्युदात्तत्वं शब्दान्तरप्राप्त्याऽनित्यम्, इड् स्वरभिन्नस्य प्राप्नोति, उभयोरनित्ययोः परत्वादिटि कृते तस्य प्रत्ययग्रहणेन ग्रहणे सति इट एवाद्युदात्तत्वं स्यात् ? एतदपि ज्ञापकात् सिद्धम्, यदयम् 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३.४.१०३) इत्याह, तज्ज्ञा-पयति—'आगमा अनुदात्ताः' (व्या. प. १०५) इति, अन्यथा 'चिनुयाताम्' इत्यादौ यासुटः प्रत्ययादित्वात् सिद्धमुदात्तत्वमित्यनर्थकं तत् स्यात् । ननु पिदर्थमेतत् स्यात्, अन्यथा 'चिनुयात्' इत्यादौ पिद्भक्तो यासुडनुदात्तः स्यात् ? यद्येतावत् प्रयोजनं स्यात्, यासुट् परस्मैपदेषु भवति, अपिच्च लिङ् भवतीति पित्त्वमेव प्रतिषेधेत् । अवश्यं चैतत् ज्ञापकमाश्रयणीयम्, अन्यथा प्रत्ययसञ्ज्ञासन्नियोगेनाद्युदात्तत्वविधावपि 'लविषीष्ट' इत्यादौ लावस्थायामनकारत्वादसति स्वरे विशेषविहितत्वात् परत्वाच्च सीयुटि कृते पश्चाल्लादेशे प्रत्ययाद्युदात्तत्व-मित्यानुपूर्व्या सीयुट एव स्यात् । ज्ञापकाश्रयणे तु सीयुडनुदात्तः 'इटोऽत्' (३.४.१०६) इत्यकार उदात्तो भवति । कथं भवति, यावता सीयुटि कृतेऽकारस्य विच्छिन्नमादित्वम् ? नैष दोषः, यासुट उदात्तवचनं ज्ञापकम्—प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमा अविद्यमानवद्भवन्तीति; अन्यथा 'चिनुयाताम्' इत्यादौ यासुटः प्रत्ययादित्वात् सिद्धमुदात्तत्वमित्यनर्थकं तत् स्यात् । किं च, लवितव्यमित्यादौ पूर्वमाद्युदात्तत्वे सत्यपि पश्चाद्भवन्निट् किमित्यनुदात्तो भवति शेषनिघातेन ? नायं शेषनिघातस्य विषयः, स्वरविधिशेषत्वात् तस्य । यस्मिन् पदे यस्यामवस्थायां यस्याच उदात्तः स्वरितो वा विधीयते तस्मिन् पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यते इत्यर्थः । न चायं प्रकारोऽत्र सम्भवति । इह तर्हि 'स्रुघ्ने भवा स्रौघ्नी' प्रत्ययसन्नियोगेनाण उदात्तत्वे सति ङीप उदात्तनिवृत्तिस्वरः सिद्धो भवति; अन्यथा स्रौघ्न ई इति स्थिते 'प्रत्ययस्य च' इत्याद्युदात्तत्वं बाधित्वा

परत्वात् 'यस्येति च' (६.४.१४८) लोपे कृते उदात्तनिवृत्त्यभावान्न स्यात्, न वा बहिरङ्गलक्षणत्वात्। लोपो हि ङीप उत्पत्तिमपेक्षते, स्वरस्तु निरपेक्षः। अवश्यं चात्रान्तरङ्गत्वमेवाश्रयणीयम्, अन्यथा कंसेन क्रीता 'कंसाट्टिठन्' (५.१.२५) ठित इति ङीप्, कंस ठ ई इति स्थिते 'ञ्नित्यादि:' (६.१.१९७) इत्याद्युदात्तत्वं बाधित्वा परत्वाद्यस्येति लोपः स्यात्, ततश्च नित्स्वरे लोपेन बाधिते प्रत्ययसञ्ज्ञासन्नियोगेन विधीयमानमाद्युदात्तत्वमकारस्य स्थितमिति तस्य लोपे ङीप उदात्तनिवृत्तिस्वरः स्यात्। ननु च ठचश्चित्करणात्पूर्वमिकादेशस्ततः प्रत्ययाद्युदात्तत्वमिति नास्त्युदात्तलोपः। इह तर्हि उत्से जाता 'उत्सादिभ्योऽञ्' (४.१.८६), ङीप्, उत्स अ ई इति स्थिते ञित्स्वरं बाधित्वा परत्वाद्यस्येति लोपे पूर्वोक्तया नीत्या ङीप उदात्तनिवृत्तिस्वरः स्यात्? नैष दोषः; नित्स्वरो हि प्रत्ययस्वरस्यापवादः, न चापवादविषय उत्सर्गोऽभिनिविशते, तत्र तावदत्र प्रथमाद्युदात्तत्वं भवति, अपवादं ञ्नित्स्वरं प्रतीक्षत इति कुत उदात्तलोपः! इह तर्हि अत्रेरपत्यं 'इतश्चानिञः' (४.१.१२२) इति ढक्, आयन्नादिषूपदेशिवचनं स्वरसिद्धयर्थमिति प्रत्ययस्वरात्पूर्वमेयादेशः, ङीप्, आत्रेय ई इति स्थिते तद्धितस्य कित इति स्वरं बाधित्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्तिस्वर ईकारस्य न प्राप्नोति। तस्मादन्तरङ्गत्वमेवाश्रयणीयम्। एवं च स्त्रौघ्नीत्यत्रापि अन्तरङ्गत्वादेव सिद्धमिष्टमिति नार्थं एतदर्थेन प्रत्ययसञ्ज्ञासन्नियोगेनाद्युदात्तवचनेन। इदं तर्हि प्रयोजनम्—गोपायति धूपायति, उत्पत्तिसन्नियोगेनाद्युदात्तत्वे पश्चात् 'सनाद्यन्ता धातवः' (३.१.३२) इति धातुसञ्ज्ञायां धातोरित्यन्तोदात्तत्वं भवति। यदि तु ञ्नित्यादिर्नित्यं प्रत्ययस्य चेत्युच्येत, परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत। स्यादेतत्।

अनुदात्तस्य तर्ह्यत्र प्रदेशे करणे किं प्रयोजनम्? स्यादेतत् कार्यशब्दाट्टापि स्वरितत्वात् प्रागेकादेशे कृते तस्य पूर्वं प्रत्यन्तवद्भावात् तित्स्वरितश्च प्राप्नोति, परं प्रत्यादिवद्भावात् पित्स्वरश्च, परत्वात् स्वरितो भवति। यदि तु लसार्वधातुकमनुदात्तं सुप्पितौ चेत्युच्येत परत्वादनुदात्तत्वं स्यादिति? तन्न; तत्र हि टाबुत्पत्तेरपि प्रागेव स्वरितो भवति, सत्यपि वा टापि स्वरितैकादेशयोरुभयोरनित्ययोः परत्वात् स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति। इदं तर्हि—आम्बष्ठ्या यङश्चापि (४.१.७४) एकादेशे कृते पित्स्वरश्च प्राप्नोति चित्स्वरश्च, परत्वाच्चित्स्वरो भवति, अन्यत्र क्रियमाणे पित्स्वरः स्यात? अत्रापि चापश्चित्करणसामर्थ्यादेव चित्स्वरो भविष्यति। सामान्यग्रहणाविघातार्थे हि चकारे टाप्प्रकरण एव यङश्चापं विदधीत। एवं तर्हि तदेव तस्मिन्प्रयोजनं तदन्तविधिर्मा भूदिति। यदुक्तं प्रकृतिस्वरस्य विधानसामर्थ्यादिति? तत्रास्ते शेते इत्यादौ लसार्वधातुकमात्रस्यानुदात्तत्वे सति धातुस्वरस्य सावकाशत्वात्। प्रातिपदिकान्तोदात्तत्वमपि अग्निमान्, वायुमान्, अग्नीनामित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' (६.१.१७६), 'नामन्यतरस्याम्' (६ १.१७७) इति स्वरसिद्ध्यर्थं स्यात्, अत्र ह्यन्तोदात्तादिति वर्तते इत्यलमतिकर्कशेन क्षोदेन॥

## ४. अनुदात्तौ सुप्पितौ।

सुबिति प्रत्याहारस्येदं ग्रहणम्, न सप्तमीबहुवचनस्य; पित्त्वादेवानुदात्तस्य सिद्धत्वात्। अत एव वृत्तौ 'सुपः' इति बहुवचनम्। पित एतत्तु प्रक्रमानुरोधेन बहुवचनम्। सुपश्च पकारेण प्रत्याहारः, न कपः; टाबादीनां पित्करणात्। 'पचति' इति। शबन्तोदाहरणम्, तिपस्त्वनुपदेशात् 'लसार्वधातुकम्' इत्येव सिद्धम्॥

## ५. गुप्तिज्किद्भ्यः सन् ।

'गुप गोपने' इति । 'गुप व्याकुलत्वे' (धा.पा. १२३४) 'गुपू रक्षणे' (धा.पा. ३९५) इत्येतयोस्तु ग्रहणं न भवति; तिजिना सह गणे पठितस्यानुदात्तेत एव गुपेरिहापि ग्रहणात् । 'प्रत्ययसञ्ज्ञा चाधिकृतैव' इति । का पुनरत्र विस्मरणाशङ्का, किन्त्वन्वर्था प्रत्ययसञ्ज्ञा, अनर्थकस्य गुपादिसनो न स्यादित्याशङ्काऽनेन निवार्यते । अधिकारसामर्थ्यादनर्थकस्यापि भवतीत्यर्थः । अन्वर्थता त्वर्थवदनर्थकसम्भवेऽर्थवतो ग्रहणहेतुः । निन्दादयस्तु गुपादीनामर्था न सनः, अन्यथा गुपादीनामानर्थक्यप्रसङ्गात् । धातूनां चानेकार्थत्वं तत्र तत्र दृश्यते । प्रत्ययास्तु स्वार्थिका अपि भवन्ति समासान्तादिवत् । 'जुगुप्सते' इति । धातोरित्येवमनभिधानादस्य सनोऽनार्धधातुकत्वादिडभावः ।

'निन्दाक्षमा' इति । प्रायिकमेतदुपाधिवचनम् । तथा च 'क्षेत्रीयच् परक्षेत्रे चिकित्स्यः' (५.२.९२) इत्यत्र ग्रन्थः—'अथ वा क्षेत्रीयाणि तृणानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि, अथ वा क्षेत्रियः पारदारिकः, परदाराः परक्षेत्रम्, 'तत्र चिकित्स्यो निगृहीतव्यः' (काशिका. पृ. ५१९) इति । संशयेऽपि दृश्यते—तद्व्यचिकित्सन, य एवं विद्वान् विचिकित्सति, तच्छुश्रुवान्नृषिर्व्यचिकित्सदिति च । 'अन्यत्र' इति । अर्थान्तरवृत्तेर्धातोरन्तरा इत्यर्थः । एतच्च 'पूर्ववत् सनः' (१.३.६२) इत्यत्र निपुणतरमुपपादितम् । 'गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्' इति । एतदपि तत्रैवोपपादितम् । 'गुपादिषु' इति बहुवचनं मान्वधादिसूत्राभिप्रायम् । कितिस्तु परस्मैपदी, तथा चानन्तरमेव प्रयोगा दर्शिताः । सनो नकारः स्वरार्थः । नित्करणसामर्थ्याद्धातुस्वरो न भवति—'यत् स्तोतारं जिघांससि सखायम्' (ऋ. ७.८६.४) । विशेषणार्थश्च 'अज्झनगमां सनि' (६.४.१६), 'हनेः सः' (द.उ. ९.२१) हंस इत्यत्र मा भूत् । 'स्तौतिण्योरेव षण्यभ्यासात्' (८.३.६१) 'सुषुपिष इन्द्रम्' इत्यत्र मा भूत् । 'सन्यङोः' (६.१.९) इत्यत्रापि 'लिटि धातोः' (६.१.८) इत्यतो धातोरित्यनुवृत्तेर्यद्यपि तृणादिभ्यः सेऽप्रसङ्गः । हंसः, वत्स इत्यादौ तु स्यादेवोणादीनां व्युत्पत्तिपक्षे । अकारस्तु 'प्रतीषिषति' इत्यत्र प्रतिपूर्वादिणः सनि विहिते 'अजादेर्द्वितीयस्य' (६.१.२) इति शब्दस्य द्विर्वचनं यथा स्यादेवमर्थः । 'यथेष्टं नामधातूनामिति वक्तव्यम्' (वा. ६५५) पुत्रीयियिषति । अन्यत्र त्वार्धधातुके 'अतो लोपः' (६.४.४८) सार्वधातुके शता सहैकादेश इति नास्ति विशेषः ॥

## ६. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।

अत्र मान्बधौ अनुदात्तेतौ, शेषौ स्वरितेतौ । 'अभ्यासस्य चेकारस्य दीर्घो भवति' इति । 'सन्यतः' (७.४.७९) इतीत्वे दीर्घो भवतीत्यर्थः । ननु विशेषविहितो दीर्घः सामान्यविहितमित्त्वं बाधित्वाऽवर्णस्यैव प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयं 'दीर्घोऽकितः' (७.४.८३) इत्यत्राकित इत्याह, तज्ज्ञापयति—'नाभ्यासविकारेषु बाध्यबाधकभावः' इति । तद्धि 'यंयम्यते' इत्यादौ नुकि कृते मा भूदिति । यदि चाभ्यासविकारेषु बाध्यबाधकभावः स्यात् ततो विशेषविहितत्वान्नुकि कृतेऽनजन्तत्वादेव न भविष्यति दीर्घः, किं प्रतिषेधेन ? अत एव डोढौक्यते इत्यादौ ह्रस्वत्वे कृते गुणो भवति, अन्यथा बबाधे इत्यादौ चरितार्थं ह्रस्वं पापच्यते इत्यादौ चरितार्थो दीर्घः परत्वाद्बाधेत ।

अपर आह—सूत्रोपात्त एवार्थो वृत्तिकारेणोक्त इति कथमभ्यासस्येति पदच्छेदः, अभ्यासस्य विकारोऽभ्यासः, स चेत्त्वमेव । तथा हि—लोपस्य तावदभावरूपत्वादादेशो विधातुमशक्यः, यदि च ह्रस्वस्य दीर्घत्वं

स्यात् दीर्घश्रुत्या 'अचश्च' (१.२.२८) इत्युपस्थानादजन्तस्य दीर्घविधानाद्दीर्घस्य ह्रस्वस्य वा दीर्घो विशेषाभावात् तस्मादित्त्वमेव तद्धितेन प्रत्याय्यते । अथ वा सन्याहृत्य विहितस्य विकारस्य ग्रहणं तदाह–'अभ्यासस्य चेकारस्य' इति । 'सर्वशेषः' इति । न केवलं तस्यैवापि तु पूर्वयोरपि द्वयोरित्यर्थः । 'तेन क्वचिन्न भवति' इति । अर्थान्तरवृत्तिभ्यो धात्वन्तरेभ्य इत्यर्थः । एतच्च 'पूर्ववत् सनः' (१.३.६२) इत्यत्रोपपादितम् । मानयतीत्यादयश्चुरादिण्यन्ताः । निशान इति ण्यन्तादेव पचाद्यच् । 'मानेर्जिज्ञासायाम्' इति । यद्येवम्, ज्ञानार्थवृत्तेर्मानेरुत्तरसूत्रेणैव सन् सिद्धः ? सत्यम्, दीर्घविधानार्थं वचनमिडभावार्थं च । 'वधेर्वैरूप्ये' इति । चित्तस्य दुर्गन्धाद्यनुभवनिमित्तो विकारो वैरूप्यम् । 'शानेर्निशाने' इति । निशानम् = तीक्ष्णीकरणम्, यत्रैवायं पठितः 'शान तेजने' इति तत्रैवेत्यर्थः ॥

## ७. धातोः कर्मणः समानकर्तृकादिच्छायां वा ।

कर्मत्वसमानकर्तृकत्वयोः क्रियापेक्षत्वादिच्छायाश्च प्रत्ययार्थत्वेनापि तावच्छ्रुतत्वात् तदपेक्षे एव ते विज्ञायेते इत्याह–'इषिकर्म यो धातुरिषिणैव समानकर्तृकः' इति । 'अर्थद्वारकम्' इति । धात्वर्थस्य कर्मत्वात् समानकर्तृकत्वाच्च धातुस्तथा व्यपदिश्यते न स्वरूपेणेत्यर्थः, किं कारणम् ? असम्भवात् । यद्यपि करोतिमिच्छत्यादौ धातोः स्वरूपेणापि कर्मत्वसम्भवः, तथापि न तस्य स्वरूपेणार्थद्वारेण वा समानकर्तृकत्वं सम्भवति । किं चात्र श्तिपा निर्देशात् स्वरूपपरत्वम्, सम्प्रकृतेस्तु लोकव्युत्पत्त्यनुसारेणार्थपरत्वमेव, अतः सुष्ठूक्तम्–धातोरर्थद्वारकं विशेषणमिति । इच्छायाः क्रियायाः कर्मभूत इच्छयैव समानकर्तृकोऽर्थो यस्य धातोः तस्मात् सन् भवतीत्यर्थः । 'चिकीर्षति, जिहीर्षति' इति । कृहृभ्यां सन्, 'इको झल्' (१.२.९) इति कित्त्वम्, 'अज्झनगमां सनि' (६.४.१६) इति दीर्घः, 'ऋत इद्धातोः' (७.१.१००), 'हलि च' (८.२.७७) इति दीर्घः, सनः षत्वम्, द्विर्वचनम्, हलादिशेषः, ह्रस्वः, 'कुहोश्चुः' (७.४.६२) इति चुत्वम्–ककारस्य चकारः, हकारस्य झकारः, 'अभ्यासे चर्च' (८.४.५४) इति जश्त्वम्–जकारः, 'सनाद्यन्ता धातवः' (३.१.३२) इति धातुसञ्ज्ञायां लडादिः ।

'धातुग्रहणं किम्' इति । 'कर्मणः समानकर्तृकात्' इति वचनाद्वाक्यान्न भविष्यति । न ह्येतदुभयं वाक्यार्थस्य सम्भवति, सुबन्तादपि–पुत्रमिच्छतीत्यादौ असमानकर्तृकत्वान्न भविष्यति, यत्रापि समानकर्तृकत्वम् –गमनमिच्छति, आसनमिच्छतीत्यादौ, तत्रापि क्यज्बाधको भविष्यति । यद्यपि पुत्रमिच्छतीत्यादौ असमानकर्तृके क्यच् सावकाशः, तथापि चिकीर्षतीत्यादावसुबन्ते सावकाशं सनं सुबन्तेषु समानकर्तृकेषु परत्वाद्बाधिष्यते । यत्रापि क्यच् प्रतिषिध्यते क्यचि मान्ताव्ययप्रतिषेध इति–कर्तुमिच्छतीति, तत्रापि काम्यज्बाधकः । ङ्याप्प्रातिपदिकेष्वपि खट्वाकुमारीपुत्रादिषु न समानकर्तृकत्वम् । आसनशयनादौ त्वकर्मत्वम् । न हि ङ्याप्प्रातिपदिकं कर्माभिधायि, विभक्त्यभिधेयत्वात् कर्मादीनाम् । धातोरपि तर्हि न स्यात् ? अथ तत्र वस्तुतो धात्वर्थस्येच्छया व्याप्यमानत्वात् कर्मत्वम्, प्रातिपदिकादपि स्यात्, अथात्र कर्मरूपानभिधानान्न स्यात्, धातोरपि न स्यादिति समानं वचः ? एवं तर्ह्यसमानकर्तृकत्वादेवात्र न भविष्यति । शयनासनादौ हि प्रकृत्यर्थस्यैव समानकर्तृकत्वक्रियारूपत्वात्, न प्रत्ययार्थस्याक्रियारूपस्य, 'क्रियारूपस्य सिद्धता नाम यो धर्मस्तत्र घञादयः' इति स्मरणात् । तिङन्तादपि यत एव हेतोः पाकमिच्छतीत्यत्रार्थे पचतीच्छतीति न भवति, तत एव हेतोः सन्नपि न भविष्यति । तदेवं न धातुमपहाय क्वचिदपि प्रसङ्ग इति प्रश्नः ।

'सोपसर्गादुत्पत्तिर्मा भूत्' इति। अन्यथा सङ्घातस्य विशिष्टक्रियावचनत्वात् तत एव सन् स्यात्, ततश्च सन्नन्तत्वेन तस्यैव धातुत्वात् तत एव लङ्युपसर्गात् पूर्वोऽडागमः प्राप्नोति। ननु लिङ्यपसर्गात् द्विर्वचनप्रसङ्गो दोषः शक्यो दर्शयितुम्? सत्यम्; अट्प्रसङ्गमप्यपरं दोषं दर्शयितुं लुङ्ग्रहणम्। ननु धातुरेव विशिष्टक्रियावाची, उपसर्गस्तु सन्निधिमात्रेणोपकारको न तु कस्यचिदर्थस्याभिधानेन, यथा—भुङ्क्ते इत्यत्र भुजिरेवाभ्यवहारे वर्तते, आत्मनेपदं तु कर्तरि, अथ चान्तरेणात्मनेपदं नाभ्यवहारो गम्यते; तद्वदुपसर्गसन्निधाने धातुरेव विशिष्टां क्रियामाह, ततश्चार्थद्वारके कर्मत्वसमानकर्तृकत्वे अपि धातोरेव, न सङ्घातस्य। अवश्यं चैतदेवं विज्ञेयम्—धातुरेव च क्रियावाची, कथम्? यो हि मन्यते सङ्घातः क्रियावाचीति, क्रियमाणे तस्य धातुग्रहणे योऽत्र धातुः, न तस्मादुत्पत्तिः प्राप्नोति, अकर्मत्वादसमानकर्तृत्वाच्च? एवं मन्यते—प्रशब्दसन्निधौ तावत् प्रकर्षाख्यो विशेषो गम्यते, न च प्रकर्षमपि धातुरेवाचष्टे; प्रशब्दस्य वैयर्थ्यप्रसङ्गात्, सति चैवं समुदायस्यैव कर्मत्वम्। न ह्यसौ करोत्यर्थमात्रेण सन्तुष्यति, नापि प्रकर्षमात्रेण। न चैवं योऽत्र धातुस्तस्मादुत्पत्तिप्रसङ्गः, तस्यापि कर्मत्वात्। तथा च कटं करोति, भीष्ममुदारं दर्शनीयमिति समुदायचिकीर्षायां भीष्मादिभ्यो द्वितीया भवति; तेषामपि कर्मत्वात्। नन्वेवमपि यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यते तथा कर्मसमुदायस्याकर्मत्वात् समुदायादुत्पत्तिर्न भविष्यति। यत्र तर्हि समुदायस्यैव कर्मत्वं तत्र कथम्, यथा—प्रस्थातुमिच्छति प्रतिष्ठासते इति, अत्र हि 'तिष्ठति' इति गतिनिवृत्तिः प्रतीयते, प्रशब्दासन्निधौ तु गतिः, यथा 'जिगमिषति' इत्येकमेव कर्म तद्वदत्रापि, ततश्च समुदायादेव स्यात्? यद्येवम्, योऽत्र धातुः कर्मत्वं सन्, न ह्यसौ कर्म, 'कर्मणः' इति नैषा धातुसमानाधिकरणा पञ्चमी, किं तर्हि? षष्ठी—कर्मणोऽवयवाद्धातोरिति? 'चिकिर्षति' इत्यादावपि केवलस्यापि व्यपदेशिवद्भावेन कर्मावयवत्वम्। एवमप्यसमानकर्तृकत्वात् प्राप्नोति, धातुमात्रस्याक्रियावाचित्वात्। अतः समानकर्तृकादित्यपि षष्ठ्यर्थे पञ्चमीति व्याख्येयम्। तस्मात् सङ्घातनिवृत्त्यर्थं धातुग्रहणमिति स्थितम्।

'कर्मण इति किम्' इति। 'जिगमिषति' इत्यादौ प्रयोगे प्रत्ययवाच्याया इच्छायाः कर्मापेक्षायां प्रत्यासत्त्या प्रकृत्यर्थ एव कर्म प्रत्येष्यते। यद्यपि क्रिया करणमप्यपेक्षते, स्फुटतरा त्विच्छायाः कर्मापेक्षेति सा प्रकृत्यर्थेन पूरयिष्यते, नार्थः कर्मग्रहणेनेति प्रश्नः। 'गमनेनेच्छति' इति। अस्यां विवक्षायां गमेर्मा भूदित्यर्थः। असति हि कर्मग्रहणे सत्यामपीच्छायाः कर्मापेक्षायां यथैतद्वाक्यं भवति—'गमनेन इच्छति' इति, तथा सन्नपि स्यादिति भावः। 'इच्छायामिति किम्' इति। शब्दवैरादिसूत्रे यत् 'करणे' इति तदिहैवास्तु, अभिधानशक्तिस्वाभाव्याच्च करणविशेष इच्छायामेव सन् भविष्यति, नमस्प्रभृतिभ्यः पूजादाविव क्यजिति प्रश्नः। 'कर्तुं जानाति' इति। लक्षणैकशरणो नैवं प्रतिपाद्येतेति भावः।

'वावचनाद्वाक्यमपि भवति' इति। ननु 'समानकर्तृकेषु तुमुन्' (३.३.१५८) इति तुमुन्विधानसामर्थ्यादेव वाक्यं भविष्यति, अस्ति तस्यावकाशः—चिकीर्षितुमिच्छतीति। न ह्यत्र सनः प्रसङ्गः, 'सनन्तान्न सनिष्यते' इति वक्ष्यमाणत्वात्। "धातोरिति विधानात्" इत्यादिना धातुग्रहणस्य प्रयोजनान्तरं दर्शयति। 'न पूर्वत्र' इति। तथा च जुगुप्सते इत्यादाविडभावः।

'आशङ्कायाम्' इति। आशङ्का सम्भावना, प्रयोक्तृधर्मः, तद्विशिष्टक्रियावचनात् स्वार्थे प्रत्ययः। 'कूलं पिपतिषति' इति। कूलस्याचेतनत्वादिच्छाया असम्भवः। 'श्वा मुमूर्षति' इति। शुनश्चेतनत्वेऽपि जीवितस्य प्रियत्वाद्व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा न भवतीति, शङ्के पतिष्यति कूलम्, शङ्के मरिष्यति

इवेत्यत्रार्थः। प्रत्याख्यानं तु—यो यदिच्छति स तस्य पूर्वरूपाणि करोति, यथा—देवदत्तः कटं चिकीर्षुः सन्नह्यति रज्जुकीलपूलादिकं चादत्ते; कूलस्यापि च पूर्वरूपाणि दृश्यन्ते—लोष्टाः शीर्यन्ते, भिदा जायन्ते। श्वानः खल्वपि मुमूर्षव एकान्तशीलाः स्थूलाक्षाश्च भवन्ति, तदिह पूर्वरूपदर्शनादिच्छाध्यारोप्यते—इच्छत्येवायं य एवमिच्छाविनाभूतानि पूर्वरूपाणि करोति। गौणमुख्यन्यायश्च क्वचिल्लक्ष्यापेक्षया नाश्रीयते, ततश्चाध्यारोपितेच्छाश्रयः प्रत्यय इति।

'विशेषणं किम्' इति। इच्छाग्रहणं किमित्यर्थः।

'शैषिकात्' इति। सन्प्रसङ्गादन्योऽनिष्टः प्रत्ययो वार्यते। शेषाधिकारविहितः शैषिकः, मतुवर्थे भवो मतुवर्थीयः, गहादेराकृतिगणत्वाच्छः, मतुपोऽर्थो मतुवर्थः, सोऽस्यास्तीति मतुवर्थिकः। 'अत इनिठनौ' (५.२.११५)। शैषिकप्रत्ययान्ताच्छैषिकः सरूपप्रत्ययो नेष्टः, तद्यथा—शालायां भवो घटः शालीयः, तत्र भवमुदकम्, पुनश्छो न भवति, विरूपस्तु भवत्येव—अहिच्छत्रे भवमाहिच्छत्रम्, तत्र भवमाहिच्छत्रीयम्, अणन्ताच्छो भवति। तथा दण्डोऽस्यास्तीति दण्डिकः, 'अत इनिठनौ' (५.२.११५) सोऽस्यास्तीति पुनष्ठन्न भवति, विरूपस्तु भवत्येव—दण्डिमती सेनेति। 'सनन्तान्न सनिष्यते' इति। सरूप इत्येव। सारूप्येण चात्र सादृश्यं लक्ष्यते, तच्चार्थद्वारकमिति इच्छासनन्ताविति पूर्वोक्त एवार्थो भवति, एतच्च न्यायसिद्धम्। तथा हि—जातौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, ततश्च तत्प्रवृत्तेः प्राक् तत्प्रत्ययान्तप्रकृत्यसम्भवात् तदन्तान्नास्ति तत्प्रत्ययप्रसङ्गः। इह यो ग्रामं गन्तुमिच्छति तस्य यद्यपि ग्रामो न स्वरूपेणेष्टः—ग्रामो मे स्यादिति, तथापि, गम्यमानतारूपेण सोऽपीष्ट एव। ग्रामो जिगंस्यते, जिगमिषितः, जिगमिषितव्यः, सुजिगमिष इति इच्छावाचिनः सनन्तात् ग्रामे कर्मणि लादयो भवन्ति। गमिं प्रति कर्मत्वं ग्रामस्य स्पष्टमेव। अत एव ग्रामं जिगमिषति, ग्रामाय जिगमिषतीति 'गत्यर्थकर्मणि' (२.३.१२) इति द्वितीयाचतुर्थ्यौ भवतः॥

## ८. सुप आत्मनः क्यच्।

अत्रापि 'इच्छायाम्' इत्यनुवृत्तेस्तदपेक्षमेव सुबन्तस्य कर्मत्वं विज्ञायते इत्याह—'इषिकर्मणः' इति। आत्मशब्दोऽयं परव्यावृत्तिवचनः स्वशब्दपर्यायो गृह्यते, न चेतनद्रव्यवचनः। स हि गृह्यमाण इच्छया वा सम्बध्येत, सुबन्तेन वा। तत्रेच्छया सम्बन्धे कर्तरि षष्ठी, आत्मनः इच्छायामात्मकर्तृकायामिच्छायामात्मा चेदिच्छतीत्यर्थः स्यात्, ततश्चात्मग्रहणमनर्थकं स्यात् सर्वैवेहेच्छाऽऽत्मकर्तृका, तस्यास्तद्धर्मत्वात्। सुबन्तसम्बन्धे तु 'देवदत्तस्य पुत्रमिच्छति यज्ञदत्तः' इत्यत्रापि प्राप्नोति, परस्यापि हीष्यमाण आत्मन एवेष्टो भवति; तस्याप्यात्मत्वात्। अनर्थकं चात्मग्रहणं स्यात्, व्यावर्त्याभावात्। 'वृक्षस्य जलमिच्छति' 'खट्वायाः पादमिच्छति' इत्यादौ यत्राचेतनार्थं किञ्चिदिष्यते तद्व्यावर्त्यमिति चेत्, न; तत्रापि चेतनस्यैव परमशेषित्वात्। सर्वमेव हि भोग्यं चेतनानामेव शेषभूतं 'खट्वायाः पादमिच्छति' इत्यत्रापि यस्य तत् खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते, खट्वादिकं तु तस्यैव द्वारमात्रम्, अतः परव्यावृत्तिवचन एवात्मशब्दः। तत्रापि यदीच्छया सम्बन्धः स्यात्, पूर्ववत् कर्तरि षष्ठ्यामात्मग्रहणमनर्थकं स्यात्, सर्वस्या एवेच्छाया एषितृकर्तृकत्वादिति सुबन्तेन सम्बध्यते, सुबन्तात्कर्मण इच्छायामभिधेयायां क्यच् भवति, तच्चेत् सुबन्तमात्मनः स्वस्य सम्बन्धि भवति। कस्य स्वस्येत्यपेक्षायामिच्छया एषितुः सन्निधापितत्वात् तस्यैवैषितुरात्मनः सम्बन्धि इति विज्ञायते, तदाह—'एषितुरेवात्मसम्बन्धिनः सुबन्तात्' इति। न चैवमात्मनः पुत्रं परस्य दासमिच्छतीत्यत्रापि सुबन्तस्यात्मसम्बन्धित्वात् प्रसङ्गः,

नात्र यथाकथंचिदात्मसम्बन्धित्वं विवक्षितम्, किं तर्हि ? इष्यमाणमेव रूपमात्मसम्बन्धित्वेन यदेष्यते तदा प्रत्ययः। 'पुत्रीयति' इति। 'क्यचि च' (७.४.३३) इतीत्वम्।

'सुप इति किम्' इति। कर्मण इति वचनात् तिङन्तादप्रसङ्गः, न हि तिङन्तं कर्म। धातोश्चाप्रसङ्गः, विशेषविहितेन सना बाधित्वात्। ङ्याप्प्रातिपदिकादुत्पत्तावपि न कश्चिद् दोषः, 'नः क्ये' (१.४.१५) इति पदसञ्ज्ञाविधानात्। तच्च क्रियमाणे सुब्ग्रहणे नियमार्थम्—नान्तमेव क्ये पदमिति। तदेव ङ्याप्प्रातिपदिकादुत्पत्तौ विध्यर्थं भविष्यति। नन्वसति सुब्ग्रहणे ङ्याप्प्रातिपदिकात् सुबन्ताच्चोत्पत्तव्यमविशेषात्, ततश्च 'नः क्ये' (१.४.१५) इत्येतद्यद्येवं नियमार्थमथापि विध्यर्थम्, उभयथापि दोषः; नियमार्थे हि वाच्यतीत्यादौ प्रातिपदिकात् सुबन्ताच्चोत्पत्तौ यद्यपि दोषाभावः, नकारान्तेषु प्रातिपदिकादुत्पत्तिपक्षे नलोपो न स्यात्। अथ तेः प्रातिपदिकादुत्पत्तौ विध्यर्थम्, एवं सति वाच्यतीत्यादौ सुबन्तादुत्पत्तिपक्षे जश्त्वादिपदकार्यं स्यात्, अतः सुबन्तादेव यथा स्यात्, प्रातिपदिकान्मा भूदिति नियमार्थं सुब्ग्रहणं कर्तव्यमेव। एवं तर्हि कर्मग्रहणात् ङ्याप्प्रातिपदिकाद-प्रसङ्गः, सुबन्तमेव हि कर्माभिधायि, पञ्चकपक्षेऽपि द्योतकविभक्तेरपेक्षितत्वात्। तदेवं सुबन्तमपहाय न क्वचित् प्रसङ्ग इति मत्वा प्रश्नः।

'वाक्यात्' इति। पदसमूहादित्यर्थः। 'महान्तं पुत्रमिच्छति' इति। किं च स्याद्यत्र स्यात्? प्रत्ययार्थे गुणभूतयोर्महत्पुत्रशब्दयोरसति परस्परसम्बन्धे समासो न स्यात्, तथा च तन्निबन्धनमात्त्वं न स्यात्। किमिदानीं न भवति—'महापुत्रीयति' इति? भवति, यदैतद्वाक्यं भवति—महान् पुत्रो महापुत्रः, महापुत्रमिच्छतीति। अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेवात्र न भवति? प्रत्ययग्रहणपरिभाषया समुदायस्यासुबन्तत्वात्। किं पुनरयं कर्मणोः समुदायः? आहोस्वित् समुदायः कर्म? किं चातः? यदि कर्मणोः समुदायः, न कर्मग्रहणेन गृह्यते इति समुदायादप्रसङ्गः? अथ समुदायः कर्म, अवयवाद् द्वितीया न प्राप्नोत्यकर्मत्वात्? एवं तर्हि कर्मणोरेवायं समुदायः, सुब्ग्रहणं तु यदत्र कर्म तस्मान्मा भूदिति। अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेव तस्मान्न स्यात्, सुबन्तमेव हि तत्? असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति। अक्रियमाणे पुनः सुब्ग्रहणे नायं पदविधिर्भवति। यत्र हि पदस्यैवासाधारणं किंचिद्रूपमाश्रितं स पदविधिः, कर्मग्रहणं तु न पदस्यैवासाधारणम्, 'धातोः कर्मणः' (३.१.७) इत्यपदेऽपि दृष्टत्वात्।

अन्ये त्वाहुः—समुदायस्यापि कर्मत्वमवयवयोश्च महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वादिति तेषां समुदायादवयवाच्च मा भूदिति सुब्ग्रहणम्। 'राज्ञः पुत्रमिच्छति' इति। नन्वसामर्थ्यादेवात्र न भविष्यति, कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति? यत्र तर्ह्यन्तरेणापि तृतीयस्य पदस्य प्रयोगं परस्येति गम्यते, तत्र मा भूत्, यथा—अघमिच्छति, व्यसनमिच्छतीति, न हि कश्चिदात्मनोऽघमिच्छति। 'ककारः' इत्यादि। स्यादेतत्, 'नः क्ये' (१.४.१५) इत्यत्रापि मा कारि ककार इति? यद्येवम्, सामसु साधुः सामन्यः, अत्रापि प्राप्नोति। 'चकारस्तदविघातार्थः' इति। स्वरस्तु प्रत्ययस्वरेण सिद्धो धातुस्वरेण वा, अकारस्तु दृषदमिच्छति दृषद्यति, दृषद्यतेर्ण्वुल्, 'अतो लोपः' (६.४.४८), 'यस्य हलः' (६.४.४९), 'क्यस्य विभाषा' (६.४.५०)—दृषदकः, अत्रातो लोपस्य स्थानिवद्भावात्, 'अत उपधायाः' (७.२.११६) इति वृद्धिर्मा भूत्। मृदमिच्छति मृदति, मृद्यतेः 'अचो यत्' (३.१.९७), अतो लोपादि पूर्ववत्—मृद्यम्, 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वं यथा स्यादिति। पुत्रीयतीत्यादौ च शपा सहैकादेश उदात्तो भवति।

'क्यचि मान्ताव्ययप्रतिषेधः' इति । सान्तग्रहणं प्रातिपदिकस्य विशेषणम्, न सुबन्तस्य । तेन पुत्रमिच्छतीत्यादौ क्यच् भवति, कामिच्छति कानिच्छतीत्यादौ च न भवति । 'उच्चैर्नीचैः' इति । अधिकरण-प्रधानयोरप्यनयोराधेये यदा वृत्तिस्तदा कर्मत्वम्, गोसमानाक्षरनान्तादित्येके । गोशब्दात् समानाक्षरान्नान्ताच्च क्यज् भवतीत्येके मन्यन्ते । अकारादयो दश समानाक्षराः; तत्र लृवर्णान्तस्य, ऋकारान्तस्य च प्रातिपदिकस्याभावादेकारात् पूर्वेषां सप्तानामचां ग्रहणम् । अस्मिन् पक्षे वाच्यतीत्यादि न सिध्यति, तस्मान्नायं स्थितः पक्ष इत्याहुः । अत एवास्य वृत्तावुपन्यासः ।

'परेच्छायाम्' इति । शेषषष्ठ्याः समासो न कर्तृषष्ठ्याः, सुबन्तद्वारकश्च परस्येच्छया सम्बन्धः, परस्य सुबन्तार्था या इच्छा तस्यामित्यर्थः । 'अघायवः' इति । 'क्याच्छन्दसि' (३.२.१७०) इत्युप्रत्ययः, 'अश्वाघस्यात्' (७.४.३७) इत्यात्वम् । एतदेव क्यचि परत आत्वविधानं ज्ञापकम्—छन्दसि परेच्छायामपि क्यज् भवतीति । न हि कश्चिदात्मनोऽघमिच्छति । न चाचारक्यजर्थम्, छन्दस्यघशब्दाचारे क्यचोऽदर्शनात् । अथास्मात् क्यजन्ताल्लकृत्यक्तखलर्थाः भवन्तः क्व भवन्ति ? यथायोगं भावे कर्तरि च, न तु कर्मणि । प्रकृत्यर्थविशिष्टाया नियतविषयाया इच्छायाः क्यजन्तेनाभिधानम्, न सा वस्त्वन्तरं विषयीकरोति, अतो जीवत्यादिवदकर्मकः क्यजन्तः । आचारक्यजन्ते तूपमानकर्मणः पुत्रादेरन्तर्भावेऽपि उपमेयस्य छात्रादेरनन्तर्भावात् तस्मिन् कर्मणि लादयो भवन्त्येव—पुत्रीयते छात्रः पुत्रायितव्य इत्यादि, यथा—श्येनायते काक इति उपमानकर्तुरन्तर्भावेऽपि उपमेयकर्तरि लो भवति, तद्वत् । इह च माणवकं मुण्डं करोति मुण्डयति माणवकम्, मुण्ड्यते माणवकः, मुण्डयितव्यो माणवक इति ण्यन्तो धातुर्मौण्ड्यगुणविशिष्टद्रव्यमात्रमन्तर्भावयितुं शक्तः, न तु माणवकादिकं विशेषमिति तस्य धात्वनन्तर्भावात् तत्र लादयो भवन्ति । यद्येवम्, अनेन हेतुना क्यजन्तादपि प्राप्नोति, माणवकं मुण्डमिच्छति मुण्डीयति माणवकम्, मुण्डीय्यते माणवक इति, नात्र क्यचा भवितव्यमसामर्थ्यात् ? कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति । णिजपि तर्हि न प्राप्नोति ? स्यादेतत्—नोभौ करोतियुक्तौ मौण्ड्यं माणवकश्च, न हि माणवकत्वं क्रियते, ततश्च मुण्डं करोतीत्यत्रैवार्थे मुण्डयतीति णिजुत्पद्यते । मुण्डं करोति माणवकमित्यत्र वाक्येऽपि मुण्डस्यैव कर्मत्वम्, तत्सामानाधिकरण्यात् तु माणवकाद् द्वितीयोत्पत्तिः । तदेवं माणवकादयो मौण्ड्यस्याधारविशेषप्रतिपादनार्थमुपादीयमानाः करोतियुक्ता न भवन्ति । यदा पुनरुभौ करोतियुक्तौ भवतः, न भवति तदा वृत्तिः, तद्यथा—बलीवर्दं करोति तं च मुण्डं करोति मुण्डयति बलीवर्दमिति णिज्भवति । यद्येवम्, अनेनैव हेतुना क्यजपि न प्राप्नोति । यदि चाधारत्वेनापि माणवकोऽपेक्ष्यते, पुनरपि सापेक्षता ।

किं च, यदि न माणवकः करोतियुक्तः, कथं तत्र लकार उत्पद्यते—मुण्ड्यते माणवक इति ? कश्चायं न्यायो न माणवकः करोतियुक्त इति ? न ह्यसौ मौण्ड्यमात्रेण सन्तुष्यति, माणवकस्थमसौ मौण्ड्यमभिनिर्वर्तयति, ततश्च स्वरूपेणाक्रियमाणोऽपि माणवको मुण्डरूपेण क्रियते, इष्यते च । तदेवं सति यदि णिज् भवति क्यजपि स्यात्, अथ क्यज्न भवति, णिजपि न स्यादिति समानं वचः । एवं तर्हि मुण्डादयो गुणवचनाश्च सापेक्षाः, उच्यते च णिच्, स वचनात् सापेक्षेभ्योऽपि भविष्यति, क्यच् पुनरनपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति 'माणवकं मुण्डमिच्छति' इत्यादौ सापेक्षेभ्यो न भविष्यतीति ? यद्यप्ययमपि णिज् गुणमात्रकरणविवक्षायां सावकाशः—मुण्डयत्ययं नापितः प्रवीणो मौण्ड्यकरणे इति, तथापि तत् करोतीति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि यथा स्यादित्येवमर्थमेव ।

यद्वा-द्विविधा मुण्डादयः-धातवः प्रातिपदिकानि च । तत्र सूत्रे धातव उपात्तास्तेभ्यः स्वभावत एव विशिष्टक्रियावचनेभ्यो णिज् भविष्यति, प्रातिपदिकानां तु विग्रह एव—'माणवकं मुण्डं करोति' इति । अथ वा नेदं युगपदुभयं भवति—वाक्यं च प्रत्ययश्च, ततश्च मुण्डयतीति द्रव्यमात्रं प्रतीयते, तत्र विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । अथ वा मुण्डस्यैव शुद्धेन करोतिनाऽन्वयः, मौण्ड्यविशिष्टेन तु माणवकस्य, यथा—'गां दोग्धि पयः' इति शुद्धस्य दुहेः पूर्वं गवाभिसम्बन्धः, पश्चात्तु गोदुहिना पयसः । क्यच्प्रत्ययस्त्वनभिधानान्न भवति । 'माणवकं मुण्डयति' इत्युक्ते 'माणवकं मुण्डमिवाचरति' इत्यर्थान्तरमेव प्रतीयते । तदेवमिच्छाक्यजन्ताद्भावे कर्तरि च लादय इति स्थितम् ॥

## ९. काम्यच्च ।

किमर्थो योगविभागः, न 'सुप आत्मनः क्यच्काम्यचौ' इत्येकयोग एव क्रियते, एवं हि चकारो न कर्तव्यो भवति ? तत्राह—'योगविभागः' इत्यादि । एकयोगे हि सति उत्तरसूत्रे द्वयोरप्यनुवृत्तिः स्यात् । ननु योगविभागेऽप्यानन्तर्यात् काम्यच एवानुवृत्तिः प्राप्नोति ? नैष दोषः, चकारोऽत्र क्रियते, स क्यचोऽनुकर्षणार्थः, तदनुकर्षणस्य चैतदेव प्रयोजनम्—उत्तरत्रानुवृत्तिर्यथा स्यात् । काम्यचस्तु योगविभागसामर्थ्यादननुवृत्तिः । 'प्रयोजनाभावात्' इति । 'अग्निकाम्यति' इत्यादौ गुणनिषेधो न प्रयोजनम्, अनार्धधातुकत्वादेव गुणस्याप्रसङ्गात् । 'विजुपे छन्दसि' (३.२.७३) उपयट्, उपयजमिच्छति उपयट्काम्यतीत्यत्र न संप्रसारणं प्रयोजनम्; यजादिभिः किता विशेषणात्—यजादिभ्यो यो विहितः किदिति । वाक्काम्यतीत्यत्रापि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् संप्रसारणं प्रयोजनम् ।

'चकारादित्वाद्वा' इति । केचिद्व्याचक्षते—अन्तेऽस्य चकारोऽनर्थकः, धातुस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात्, स आदौ कर्तव्यः । अथ वा—अन्तेऽपि कृतो नियमार्थः सम्पद्यते—चिदेवायं व्यपदेष्टव्यो नानुबन्धान्तरेणेति । तेनान्ते कृत आदित्वफलसंपादनादादितः सम्पद्यत इति । अन्ये तु 'सुप आत्मनः क्यच्' 'काम्यच्च' इति द्विचकारकनिर्देशाश्रयेण चकारादित्वं वर्णयन्ति । चित्करणं तु 'पुत्रकाम्यति' इत्यत्र सतिशिष्टमपि स्वरं बाधित्वा चित्स्वर एव यथा स्यादिति ॥

## १०. उपमानादाचारे ।

'कुडचे' इत्युपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेति कर्मविवक्षायामेतत्प्रयोगसम्भवाद्वचनारम्भः । 'कुडचाम्' इति तु युक्तः पाठः ॥

## ११. कर्तुः क्यङ् सलोपश्च ।

'आचार इति वर्तते' इति । तेन तदपेक्षमुपमानस्य कर्तृत्वं विज्ञायत इति भावः । 'सलोपश्च' इति । यद्ययं चशब्दः समुच्चयवृत्तिर्गृह्येत तदेकमेव वाक्यं स्यात्—क्यङ्सलोपौ भवतः इति, ततश्च यत्रैव सलोपस्तत्रैव क्यङपि स्यात्—'ओजायते' इति, इह तु न स्यात्—श्येनायते काक इति । अतोऽन्वाचये चशब्दो

वाक्यभेदश्चाश्रयणीयः अविशेषेणोपमानात् कर्तुः क्यङ भवति, यत्र तु सकारः सम्भवति तत्र तस्य लोप इति तद्विदमुक्तम् । 'अन्वाचयशिष्टः सलोपस्तदसंभवेऽपि क्यङ भवति' इति । 'श्येनायते' इति 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५) ।

'सलोपविधावपि' इति । सलोपस्यान्वाचयशिष्टत्वेन वाक्यभेदे सत्ययमपि गुणो भवतीत्यर्थः ।

अपिशब्देनैतद्दर्शयति—क्यङविधौ तावत्सम्बध्यते वाक्यसंपादनाय एवं सलोपविधावपीति । 'ओजायते' इति । ओजःशब्दो वृत्तिविषये तद्वति वर्तते ।

'ओजसोऽप्सरसोर्नित्यं पयसस्तु विभाषया' (जै.सू. २.१.९१) इति । अन्यस्य तु यशःप्रभृतेर्नैव भवतीत्येके, नेति वयम् । ओजोऽप्सरोव्यतिरिक्तस्य सकारान्तस्योपलक्षणार्थं पयोग्रहणम् । अत एव सलोपो वा । 'ओजसोऽप्सरसोर्नित्यम्' इति सामान्येन वार्तिकम्; तेन यशायते इत्याद्यपि भवति । 'सलोपोऽप्सरस एव' इत्ययं तु पक्षो भाष्येऽपि न स्थितः । 'सलोपविधौ कर्तुरिति स्थानषष्ठी सम्पद्यते' इति । प्रत्ययविधौ यत् पञ्चम्यन्तं तदेव लोपेन सम्बन्धेऽर्थाद्विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं सम्पद्यत इत्यर्थः । 'तत्रालोऽन्त्यस्येतिनियमे सति' इति । सकारेण कर्तृविशेषणात् तदन्तविधिविज्ञानात् तदर्थमेव च सेति पृथक्पदं लुप्तषष्ठीकम् । क्वचित् 'अलोऽन्त्यनियमे सति' इति पाठः, तत्र सूत्रैकदेशानुकरणत्वात् समासेऽपि विभक्तेर्लुगभावः, यथा—'अस्यवामीयम्' इति ।

'आचारे' इत्यादि । क्यङपवादोऽयम् । 'गल्भ धाष्टर्ये' (धा.पा. ३९२) 'क्लीबृ अधाष्टर्ये' (धा.पा. ३८१), 'होडृ अनादरे' (धा.पा. २८५) एते पचाद्यजन्ता गृह्यन्ते, तस्य चाकारस्य वाक्येऽनुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते, तेन क्विबन्तादात्मनेपदं भवति । वावचनात् क्विपा मुक्ते क्यङ भवति, क्विप्सन्नियोगेनानुनासिकत्वप्रतिज्ञानात् क्यङपक्षे इत्सञ्ज्ञा न भवति । किमर्थं पुनरिदम्, यावता गल्भादयो धातव एवानुदात्तेतः पठ्यन्ते, तेभ्यो 'गल्भते' इत्यादि सिध्यति, एतेभ्य एव पचाद्यजन्तेभ्यः क्यङि 'अवगल्भायते' इत्यादि, यद्यपि धाष्टर्यादावर्थे गल्भादयः पठ्यन्ते, तथापि अनेकार्थत्वाद्धातूनाम् अवगल्भ इवाचरतीत्यत्रार्थेऽपि त एव वर्तिष्यन्ते ? सत्यम्; अवगल्भांचक्रे इत्यादौ प्रत्ययान्तत्वादाम्यथा स्यादित्येवमर्थं क्विब् विधीयते ।

अथ यदा धातुभ्य एव लिड विधीयते तदा कथं भवितव्यम् ? अवजगल्भे, विचिक्लीबे, विजुहोडे इति । अन्ये तु—धातुभ्य एव क्विब् विधीयते इति वदन्त एतानि रूपाणि न सम्भवन्तीत्याहुः, तदयुक्तम्, भाष्यविरोधात् । भाष्यकारस्तावत् सर्वप्रातिपदिकेभ्य इत्यनेन सिद्धिमाशङ्कते—न तर्हीदानीमित्यादिना । न हि धातुग्रहणे सति तेन सिद्धिशङ्कोपपद्यते । वार्तिककारोऽपि 'सर्वप्रातिपदिकेभ्यः' इति वदन् गल्भादिष्वपि प्रातिपदिकग्रहणमेव मन्यते । न केवलं गल्भादिभ्य एव, अपि तर्हि सर्वेभ्य एव प्रातिपदिकेभ्य इति हि तस्यार्थः । 'सर्वप्रातिपदिकेभ्यः' इत्यत्र 'सर्वेभ्यः' इति वक्तव्ये प्रातिपदिकग्रहणात् प्रातिपदिकादेव क्विब् विधीयते, न सुबन्तात्; तेन पदत्वाभावात् 'अश्वति' इति 'अतो गुणे' (६.१.९७) इति शपा पररूपं भवति, विधुरविशब्दाभ्यां क्विपि शपि गुणे 'एङः पदान्तादति' (६.१.१०९) इति न भवति । विधवति, रवयति, राजनतीति न लोपो न भवति । वाचतीत्यादौ तु कुत्वजश्त्वादि न भवति । येऽपि सर्वप्रातिपदिकेभ्यः क्विपमिच्छन्ति, तैरपि गल्भाद्यनुक्रमणं कर्तव्यमात्मनेपदार्थानुबन्धानासंक्ष्यामीति ॥

## १२. भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।

लोपविधौ 'भृशादिभ्यः' इति पञ्चमी स्थानषष्ठ्या विपरिणम्यते, हला च भृशादयो विशेष्यन्ते, तदन्तविधौ सपि हलन्तानां लोपो विधीयमानो भृशायते इत्यादावहलन्तेन भवति, तदाह—'हलन्तानां च लो' इति । एवं च स्पष्टमेव प्रतीयते—अन्वाचये चशब्द इति । सन्नियोगे हि विज्ञायमानेऽहलन्तानां पाठोऽनर्थकः स्यात् । 'अच्वेरिति प्रत्येकमभिसम्बध्यते' इति । तेनैकवचनमुपपद्यते इति भावः ।

'किमर्थं पुनरिदमुच्यते' इति । 'अच्वेः' इत्येतदधिकृत्य प्रश्नः । 'तेन' इति । अनुप्रयुज्यमानेन भव[illegible] नेत्यर्थः । न च भवतेरनुप्रयोगं बाधित्वा क्यङ भवितुमर्हति, अच्व्यन्तेषु सावकाशत्वात् । किं च, भवतेरनु च्वेरपि निवृत्तिप्रसङ्गः, तद्योगे तस्य विधानात् । कथं तर्हि डाजन्तात् क्यष् भवति, यावता डाजपि भवति[illegible] विधीयते ? अत्र परिहारं वक्ष्यति—कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव ज्ञापकमिति । 'तत्सदृशप्रतिपत्त्यर्थं तर्हि' इति । नञिवयुक्तन्यायेन च्व्यन्तसदृशा भृशादयः कथं नाम प्रतीयेरन्निति च्व्यन्तपर्युदासः क्रियते, सादृश्यं चाभूततद्भावविषयत्वेनेत्याह—'अभूततद्भावविषयेभ्यो भृशादिभ्यः' इत्यादि । 'भृशायते' इत्यादि । अजन्तानाम् 'अकृत्सार्वधातुकयोः' (७.४.२५) इति दीर्घः, हलन्तानां तु लोपः—असुमनाः सुमना भवति सुमनायते, दुर्मनायते इत्यादि ।

'भृशीभवति' इति । इदानीमेवोक्तम्—नास्त्यत्र प्रसङ्गः इति, तस्मादच्व्यर्थविषयं प्रत्युदाहरणं प्रदर्श नीयम्—क्व दिवा भृशा भवन्तीति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व प्रदेशे भवन्तीत्यर्थः । इह मनःशब्दः सोपसर्गः पठ्यते—सुमनस्, दुर्मनन्, अभिमनस्, उन्मनस्; अत्र किं सोपसर्गात् सङ्घातात् प्रत्ययो भवति आहोस्विदुपसर्गरहितान्मनःशब्दादेव ? इति विचारः, तदर्थं च किमुपसर्गः प्रकृत्यर्थविशेषणं सुमनःशब्दात् दुर्मनःशब्दादिति ? उत प्रत्ययार्थविशेषणम्—सुभवतौ, दुर्भवतौ, अभिभवतौ, उद्भवताविति ? कथं पुनर्मनः शब्देन सह पठित उपसर्गे प्रत्ययार्थविशेषणमाशङ्क्यते, तद्विशेषणत्वे हि प्राग्भवतेः पठ्येत ? नैष दोषः, प्राग्भवतेः पठितुम्, एवं हि सर्वेभ्य एव भृशादिभ्य उपसर्गविशिष्ट एव भवत्यर्थे प्रत्ययः स्यात्, मनःशब्दादेव विशिष्टेऽर्थे इष्यत इत्येवमर्थो मनःशब्देन सह पाठः स्यात् । तत्र यदा मनःशब्देन स्वादीनां बहुव्रीहिस्तदा प्रकृत्यर्थविशेषणं ते भवन्ति, यदा त्वसमस्ता एव तदा प्रत्ययार्थविशेषणम् । मनःशब्दश्च वृत्तिविषये [illegible] वर्तते मनस्वी तुष्टः भवतीत्यादावर्थे क्यङ प्रत्ययः । प्राप्त्यर्थस्य वा भवतेः 'आधृषाद्वा' (धा.पा.पृ.२६६) इति विकल्पितणिचोऽत्र विषये ग्रहणम्, तेनः मनः कर्म शोभनं प्राप्नोतीत्यादिरर्थो भवति । तत्राद्ये पक्षेऽडाड्व्यव[illegible] चनेषु दोषः, अट्—स्वमनायत, दुरमनायत । आट्—अभ्यमनायत, उदमनायत । उपसर्गस्यापि क्यङन्ते धात्व न्तर्भावात् ततः पूर्वमडाटौ प्राप्नुतः, परौ चेष्येते । ल्यप्—सुमनाय्य, अभिमनाय्य, उपसर्गस्य धात्वन्तेऽनुप्रवेशात् तद्व्यतिरिक्तपदाभावादसति समासे ल्यपोऽभावात् सुमनायित्वेति स्यात् । द्विर्वचनम्—क्यङन्तात् सनि [illegible] उपसर्गस्य सनन्तेऽनुप्रवेशात् तस्य द्विर्वचने सति सुसुमनायिषते, अबिभिमनायिषते इति स्यात्, सुमिमनायिषते अभिमिमनायिषत इति चेष्यते ? नैष दोषः; चुरादौ 'संग्राम युद्धे' (धा.पा. १९२२) इति पठ्यते, स न पाठ्यः संग्रामशब्दाद् युद्धवाचिनः 'तत् करोति तदाचष्टे' (वा. २००.२०१) इत्येव णिचः सिद्धत्वात् । पठ्यमानस्तु ज्ञाप यति—सोपसर्गात् संघातात् धातुसञ्ज्ञानिमित्तकप्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते, परिशिष्टादेव तु प्रत्यय इति । संग्रामशब्दो हि सोपसर्गः संघात एव चुरादावपि पठ्यते, न तूपसर्गसदृशावयवं शब्दान्तरम् । तथा च 'वा पदान्तस्य' (८.४.५९) इति परसवर्णविकल्पो भवति, अन्यथा स न स्यात् । स एवमर्थः पठ्यते—असंग्रामयत शूर:

संग्रामयित्वा, सिसंग्रामयिषत इत्यादि रूपं यथा स्यादिति, ततश्च उक्तस्यार्थस्य ज्ञापकः। नियमार्थो वा—धातुसञ्ज्ञाहेतुः प्रत्ययः सोपसर्गादपि भवति सङ्ग्रामशब्दादेवेति। ननु चात्रानुदात्तेदयं संग्रामयतिरिष्यते, ततश्चात्मनेपदार्थमनुबन्धमासंक्ष्यामीति पाठः स्यादिति कथं ज्ञापको नियमार्थो वा भवेत् ? स्यादेतत्—अनुबन्धासञ्जनार्थे हि पाठे 'ग्राम युद्धे' इत्येव पठितव्यम्, संशब्दस्तु द्योतकः प्रयोगदर्शनादेव लभ्यते इङ्किरोरिवाधिः, नियमार्थस्तु 'संग्राम' इति पाठ इति। एवमपि यथा इङ्किरोरवेः पूर्वमाण् न भवति, तथास्यापि न स्यात्, तस्माद्द्वितीयः पक्ष आश्रीयते। यद्येवम्, यथा श्येनायत इति आचारार्थस्य क्यङोक्तत्वादाङः प्रयोगो न भवति तथा स्वादीनामपि न स्यात्। तद्विशिष्ट एवार्थे क्यङो विधानाद्युक्तमेकोपसर्गेण विशिष्टाय क्यङ उत्पद्यत इति तस्य तेनाभिधानम्, इह पुनरेकेन। तत्र—मनायत इत्युक्ते सन्देहः स्यात् सुभवतो दुर्भवतो वेति ? तत्रासंदेहार्थमुपसर्गः प्रयोक्तव्यः। अयं तर्हि दोषः—मनःशब्दात् क्यङि कृते मनायत इत्यस्य तिङन्तस्य स्वादेरतिङन्तादुत्तरस्य निघातः प्राप्नोति। पक्षान्तरे तु सुमनायत इत्यादि तिङन्तं संपद्यते इति तद्व्यतिरिक्ताभावान्निघाताभावः। एवं तर्हि भृशादिषूपसर्गस्य पराङ्गवद्भावं वक्ष्यामि 'सुबामन्त्रिते' (२.१.२) इत्यस्यानन्तरं भृशादिषूपसर्ग इति। इहापि तर्हि प्राप्नोति—अभिभृशायते, सुभृशायत इति ? यदि नेष्यते 'मनस्युपसर्गे' इति वक्ष्यामि, मनःशब्दे परत उपसर्गस्तस्यैव परस्य मनःशब्दस्याङ्गवद्भवति स्वरे कर्तव्ये इति। एवं च 'देवदत्तः सुमनायते' इत्यादौ उपसर्गस्यापि 'तिङ्ङतिङः' (८.१.२८) इति निघातो भवति। योऽप्याह—सुमनःशब्दात् प्रत्यये विधित्सित उपसर्गः पृथक् क्रियते, परिशिष्टादेव प्रत्यय इति, तेनापि स्वरे पराङ्गवद्भावो वक्तव्य एव। तदेवं प्रत्ययार्थविशेषणं स्वादयः, मनःशब्दादेव केवलात् प्रत्यय इति स्थितम्। यदि तु सामान्येन ज्ञापकमिष्यते संघातात् प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते इति, नात्रैव, यथा 'प्रभौ परिवृढः' इत्यत्र वक्ष्यते—'परिवृढमाचष्टे' इति णिचि क्त्वाप्रत्यये कृते परिवृढय्येति ल्यब्भवतीति, ततो ज्ञापकान्तरं मृग्यम्। क्षन्तव्यं च किंचिदुद्ग्रन्थाभिधानं सूरिभिरित्युपरम्यते॥

## १३. लोहितादिडाज्भ्यः क्यष्।

'पटपटायति' इति। अव्यक्तानुकरणादिति डाचि विवक्षिते 'डाचि बहुलं द्वे भवतः' (वा.८८८) इति द्विर्वचनम्, ततो डाप्, पटत्पटा इति स्थिते 'नित्य मास्रेडिते डाचि' (६.१.१००) इति पटच्छब्दस्य यस्तकारो यश्च परः पकारस्तयोः पररूपं पकारः, 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' (वा. १८८) इति वार्तिकम्, तदेतत् पठिताभिप्रायं न पुनरनेनादिग्रहणं प्रत्याख्यायत इत्याह—'यानि पठ्यन्ते' इति। निद्राकरुणाकृपाशब्दा वृत्तिविषये तद्वति वर्तन्ते, अनिद्रो निद्रावान् भवति, अकरुणः करुणावान् भवति, अकृपः कृपावान् भवतीत्यत्रार्थे प्रत्ययः। 'अपरिपठितेभ्यस्तु क्यषेव भवति' इत्यस्योपपादनम्। 'आकृतिगणश्चायम्' इति। कुत इत्यत आह—'तथा च' इति। क्व पुनः सामान्यग्रहणार्थः ककारः ? क्यच्व्योश्चेति। आपत्यस्य इति वर्तते, न चायं न चायमापत्यादिष्यते। इह तर्हि 'क्यस्य विभाषा' (६.४.५०) 'हलः' (६.४.२) इति वर्तते, हलन्तादिष्यते, इह तर्हि 'क्याच्छन्दसि' (३.२.१७०) ? एतत् 'याछन्दसि' इति वक्तव्यम्—भुरण्युस्तुरण्युरिति, कण्ड्वादियगन्तादपि यथा स्यादिति। 'वा क्यषः' (१.३.९०) इत्येतत् 'वा यात्' इत्येवास्तु। न चैवम् 'पाशादिभ्यो यः' (४.२.४९), पाश्या, अत्र प्रसङ्गः ? सामान्यविहितानां तिङां नियमार्थं प्रकरणम्। न च पाशादियात् परस्मैपदमात्मनेपदं वा प्राप्तमस्ति। अथाप्याचारक्विबन्तात् सम्भवेत् ? एवमपि 'वा यषः' इत्येवास्तु तत्राह—'न क्ये' इति। ककारमनुबन्धमासज्जतः सूत्रकारस्याप्याकृतिगणत्वमभिप्रेतमित्याह—'न हि' इति। भाष्ये स्वादिग्रहणप्रत्याख्यानपरमेव वार्तिकं व्याख्यातम्। ककारोऽपि प्रत्याख्यातः। कथं पुनः

पटपटायतीति क्यष्योगे डाज् भवति, यावता कृभ्वस्तियोगे स विधीयते ? तत्राह--'कृभ्वस्तिभिरिव' इत्यादि। भवत्यर्थे क्यष् विधीयते, स भवतिप्रयोगे न भवति, तेनैवोक्तत्वात् तस्यार्थस्य। अतो भवतेरप्रयोग एव क्यषा भवितव्यम्। यदि च क्यषा योगे डाज् न स्यात् डाजन्तात् क्यष्विधानमनुपपन्नं स्यादिति भावः। अथ किमर्थं 'वा क्यषः' (१.३.९०) इति सूत्रमारभ्यते, न क्यष् चेति चकारोऽत्र कर्तव्यः, लोहितादिभ्यः क्यष् भवति चकारात् क्यङ् च, तत्र क्यङ्पक्षे आत्मनेपदम्, क्यष्पक्षे परस्मैपदमिति सिद्धमिष्टम् ? अहो सूक्ष्मदर्शी देवानां प्रियः, यदिदमपि न दृष्टम्--'क्यङ्मानिनोश्च' (६.३.३६) इति। इह तर्हि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (व्या.प. २९) इति लोहिनीशब्दाप्ययं क्यष् भवति, सति चैवं क्यङन्तादात्मनेपदं क्यषन्तात् परस्मैपदमिति विज्ञायमाने आत्मनेपदपक्षे 'क्यङ्मानिनोश्च' (६.३.३६) इति पुंवद्भावे सति अलोहिनी लोहिनी भवति लोहितायत इति प्राप्नोति, अद्य पुनः क्यषन्तादात्मनेपदे विकल्पिते लोहिनीयते लोहिनीयतीतीष्टं सिध्यतीति स्पष्ट एव फलभेदः॥

## १४. कष्टाय क्रमणे।

'चतुर्थीसमर्थात्' इति। सङ्गतार्थः समर्थः, 'चतुर्थ्या समर्थः' इति तृतीयासमासः। प्रत्ययार्थेन क्रमणेन सह सङ्गतार्थत्वं यस्य चतुर्थ्यन्तं तस्मादित्यर्थः। एतच्च 'कष्टाय' इति निर्देशादेव लभ्यते। क्रमणशब्दस्य पादविहरणे प्रसिद्धत्वात् तत्रैव प्रत्ययो मा विज्ञायीत्याह--'क्रमणेऽर्थेऽनार्जवे' इति। अनार्जवं कौटिल्यम्, इह त्वनार्जवशब्दोऽनाकरणरूपे क्रमणे पर्यवस्यत्यर्थात् ? किं पुनः क्रमणम् ? उत्साहः, यथा व्याकरणाध्ययनाय क्रमते उत्सहत इत्यर्थ इति व्याख्यातम्। 'कष्टाय क्रमणे क्रमते' इति। 'कृच्छ्रगहनयोः कषः' (७.२.२२) इति कृच्छ्र इडभावः, कृच्छ्रं दुःखम्। इह तु तत्कारणं पापं कर्म, कृच्छ्रं पापं कर्म कर्तुमुत्सहत इत्यर्थः। 'वृत्तिसर्ग' (१.३.३८) इत्यात्मनेपदम्। प्रायेण तु परस्मैपदं पठ्यते, तत्र पापं कर्म कर्तुकामः कुटिलमाचरतीत्यर्थः, अनुत्साहत्वात् परस्मैपदम्।

'अत्यल्पमिदमुच्यते' इति। सर्वलक्ष्यासङ्ग्रहात्। कथं तर्हि वक्तव्यमित्याह--'सत्रकष्टकक्ष' इत्यादि। अस्मिन् पक्षे द्वितीयान्तेभ्यः प्रत्ययः, चिकीर्षां प्रति कर्मत्वात्। 'कण्वचिकीर्षायाम्' इति। प्रकृतिप्रत्ययसमुदायस्यायमर्थनिर्देशः। कण्वं पापम्। सत्रादयो हि वृत्तिविषये पापपर्यायास्तेभ्यश्चिकीर्षायां प्रत्ययः, पापं चिकीर्षतीत्यस्वपदेन विग्रहः। 'अजः कष्टं क्रामति' इति। क्रमिरत्र पादविहरणे वर्तते, कष्टं गहनदेशं क्रामति गच्छतीत्यर्थः॥

## १५. कर्मणो रोमन्थतपोभ्यां वर्तिचरोः।

'कर्मणः' इति पञ्चमी, रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात्। प्रत्येकसम्बन्धात्त्वेकवचनम्। 'वर्ति' इति। ण्यन्ताद् वृतेः 'ण्यासश्रन्थो युच्' (३.३.१०७) इति युचि प्राप्तेऽस्मादेव निपातनात् क्तिन्। युजपि भवति--वर्तना। चरणं चर, संपदादित्वाद्भावे क्विप्। 'हनुचलने' इति। हनुचलनसहचरितं चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं तत्रेत्यर्थः। 'कीटो रोमन्थं वर्तयति' इति। अवगीर्णमपादानप्रदेशान्निःसृतं रोमन्थाख्यं द्रव्यं वर्तयति वृत्तं करोति, गुलिकां करोतीत्यर्थः। नात्र हनुचलनमस्ति। 'तपसः परस्मैपदं च' इति। एवं च 'नमोवरिवः' (३.१.१९) आदिसूत्रे तपःशब्दः पठितव्यस्तथा तु न कृतमित्येव। इह 'तपस्यते लोकं जिगीषुरनेः' इति छान्दसत्वादात्मनेपदम्॥

## १६. बाष्पोष्मभ्यामुद्वमने ।

## १७. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।

## १८. सुखादिभ्यः कर्तृवेदनायाम् ।

'वेदनायाम्' इति । 'विद चेतनाख्याननिवासेषु' (धा.पा. १७०८) इत्यस्माच्चुरादिण्यन्ताद्भावे 'ण्यासश्रन्थो युच्' (३.३. १०७), 'घट्टिवन्दिविदिभ्यश्च' (वा. ३१५) इत्यौपसङ्ख्यानिको वा । 'वेदनाया-मर्थेऽनुभवे' इति । प्रत्यक्षज्ञानम्—अनुभवः । यद्यपि वेदनाशब्दो ज्ञानमात्रवचनस्तथापि कर्तृग्रहणेन सुखादीनि विशेष्यन्ते, कर्तृगतानां च सुखादीनां वेदनाऽनुभवरूपैवेति मत्वैवमुक्तम् । क्रियापेक्षं कर्तृत्वं वेदनासंनिधानात्तदपेक्षमेव विज्ञायते । कर्त्रा च सुखादीनि विशेष्यन्ते न वेदना; व्यभिचाराभावात् । सर्वैव हि वेदना वेदयितुरेव भवति, तदेतदाह—'वेदयितुश्चेत्कर्तुः सुखादीनि भवन्ति' इति । आश्रयाश्रयिभावलक्षणश्च सम्बन्धः, न जन्यजनकभाव-लक्षणः । एवं च कर्तृग्रहणं लुप्तषष्ठीकं पृथक्पदम् । 'वेदयते' इति । 'आ कुस्मादात्मनेपदी' (धा.प. १६७२. अनन्तरम्) इत्यधिकारे वेदिः पठितः । एवं च प्रत्युदाहरणे परस्मैपदपाठः प्रमादजः । प्रसाधकः अभ्यङ्गादेः कर्ता, संप्रसाध्यमानस्य नेत्रविकारादिना सुखमनुमानतो जानाति ॥

## १९. नमोवरिवश्चित्रङः क्यच् ।

'करणविशेषे पूजादौ' इति । 'करणे' इति सामान्यानुवृत्तावप्यभिधानशक्तिस्वाभाव्याद्विशेष उपलभ्यत इति भावः । 'नमस्यति देवान्' इति । 'नमःस्वस्तिस्वाहा' (२.३.१६) इति चतुर्थी न भवति । प्रत्ययार्थे गुणीभूतस्य नमःशब्दस्य निष्कृष्य सम्बन्धाभावात् । अथ वा—नमस्यति नमस्कारेण पूजयतीत्यर्थः । तत्र 'उपपद-विभक्तेः कारकविभक्तिर्बलीयसी' (चां.प. ६९) इति द्वितीयैव भवति । एवं च नमस्करोति देवानित्यादावपि द्वितीयैव भवति । 'परिचर्यायाम्' इति । परिचर्या शुश्रूषा । 'चित्रीयते' इति । 'अवयवकृतं लिङ्गं समुदायस्य विशेषकं भवति' (हे.प. १०७) इति क्यजन्तादात्मनेपदं भवति, 'क्यचि च' (७.४.३३) इतीत्वम् । एतदर्थमेव च शब्दवैरादिसूत्रे चित्रशब्दो न पठितः । 'चित्रीयते' इति । विस्मयत इत्यर्थं इत्येके । विस्मापयत इत्यर्थं इत्यन्ये । तथा च भट्टिकाव्ये मायामृगं प्रकृत्य भवति 'ततश्चित्रीयमाणोऽसौ' (भ. ५ ४८) इति ॥

## २०. पुच्छभाण्डचीवराण्णिङ् ।

'पुच्छादुदसने पर्यसने वा' इति । उदसनम्—उत्क्षेपणम् । पर्यसनम् परितः क्षेपणम् । 'उत्पुच्छयते' इति । ननु यथाऽऽचारे क्यङि विहिते आङः प्रयोगो न भवति, तत्कस्य हेतोः ? आङ्विशिष्टस्यैव चरत्यर्थस्य क्यङाऽभिधा-नात्, तद्वदिहाप्युत्क्षेपणे णिङो विधानादुदः प्रयोगो न प्राप्नोतीति ? अस्त्यत्र विशेषः—पर्यसनेऽप्ययं विधीयते । तत्रोदसनं द्योतयितुमुच्छब्दः, पर्यसनं द्योतयितुं परिशब्दश्च प्रयोक्तव्यः । समाचयनम्—राशीकरणम्, अर्जनम्—द्रव्यलाभोपायः, याच्ञादि । 'ङकार आत्मनेपदार्थः' इति । तेनोत्तरसूत्रे पुच्छादयो न शक्याः पठितुमिति भावः ॥

## २१. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।

किमर्थमिदम्, न प्रातिपदिकाद्धात्वर्थं इति सिद्धम् । न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः क्रियते, राजानमतिक्रान्तवानत्यरराजदित्यपि दर्शनात् ? मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योऽपि णिज् यथा स्यादित्येवमर्थं प्रपञ्चार्थं वा । 'हलिकल्योस्त्वदन्तत्वनिपातनार्थम्' (कात्या. वा. १७४७) अन्यथा हलि इ, कलि इ इति स्थिते 'अचो ञ्णिति' (७.२.११५) इति वृद्धिः प्राप्नोति, 'णाविष्ठवत्' (वा. ८१३) इति टिलोपश्च, तत्र लोपः शब्दान्तरप्राप्त्याऽनित्यः, वृद्धिस्तु टिलोपे कृतेऽप्राप्तैवेत्युभयोरनित्ययोः परत्वात् वृद्धौ कृतायामैकारस्य लोपस्तत्राग्लोप्यङ्गं भवतीति 'सन्वल्लघुनि' (७.४.९३) इति सन्वद्भावः स्यात्, 'दीर्घो लघोः' (७.४.९४) इति दीर्घश्च, अत्वनिपातने तु यद्यपि परत्वाद् वृद्धिस्तथाप्यग्येव लुप्यते इति सन्वद्भावो न भवति, तदाह—'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्' इति । उपलक्षणमेतत्, 'दीर्घो लघोः' (७.४.९४) इति दीर्घाभावार्थं च । 'दीर्घो लघोः' (७.४.९४) इत्यत्राप्यनग्लोप इति वर्तते । एवं च वलिपटुप्रभृतिभ्यो णिचि अवीवलत्, अपीपटदिति भवति, न त्वबबलत् अपपटदिति । 'सत्यापपाश' (३.१.२५) इत्यत्र मुण्डादयः पठितव्यास्तथा तु न कृतमित्येव ॥

## २२. धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।

'हलादेः' इति विशेषणादेकाच इति बहुव्रीहिः । 'क्रियासमभिहारे वर्तते' इति । समभिह्रियमाणायां क्रियायां हि वर्तत इत्यर्थः । अनेन समभिहारस्य प्रकृतिविशेषणत्वं दर्शयति । क्रिया हि धातुवाच्या । समभिहारविशिष्टाऽपि क्रियैव भवति, अतः प्रकृतिविशेषणत्वमेव युक्तम्, यथाऽतिशयेन शुक्लोऽपि शुक्ल एवेत्यतिशयानं प्रकृत्यर्थस्तद्वत् । 'तस्माद्यङ्प्रत्ययो भवति' इति । क्व ? 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' (पु.प.९०) इति तत्रैव । समभिहारे द्योत्ये प्रकृत्यर्थसमभिह्रियमाणत्वद्योतनायेत्यर्थः, यथा प्रकृत्यर्थस्यातिशयद्योतनाय तरबादयस्तद्वत् । इह विप्रकीर्णानां पदार्थानां मूर्तानामेककालानामेकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः, यथा—पूलादीनाम् । धातुवाच्या तु क्रियैकैव । यद्यपि 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' (धा.पा. ११०७) इत्यनेकार्थो दिविः पठ्यते, तथापि न युगपदनेकार्थमाचष्टे, किं तर्हि ? प्रयोगभेदेन । यद्यपि चाश्रयभेदाद्विषयभेदाच्च भिद्यते पाकः—अन्य एव हि देवदत्तकर्तृकः पाकः, अन्य एव चान्यकर्तृकः, अन्यश्चौदनस्य पाकोऽन्य एव तैलादीनाम्, तथापि धातुना निवृत्तभेदैव सा प्रत्याय्यते । अत एव भवद्भिरास्यत इत्यादौ बहुवचनं न भवति । न खलु कर्तृभेदः क्रियाव्यक्तिभेदेन व्याप्तः, एकफलावच्छिन्नामेकामेव क्रियां कुर्वत्स्वपि बहुषु पचन्तीति दर्शनात् । तदेवं धातुवाच्या समूहरूपा प्रधानक्रियैकैवेति समभिहाराभावः । अधिश्रयणादीनां तु गुणक्रियाणां युगपदेकधातुवाच्यत्वेऽपि क्रमजन्यत्वादुत्पन्नापवर्गित्वेन युगपदवस्थानाभावादमूर्तत्वाच्च समभिहाराभावः । तदेवं मुख्यस्य समभिहारस्य धात्वर्थविषयेऽसम्भवात् गौणो गृह्यते, तद्दर्शयति—'पौनःपुन्यं भृशार्थो वा' इति । द्रव्याणां द्रव्यान्तरैरव्यपेतानां समभिहारो भवति, तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवति । तत्र प्रधानक्रियाणां पौनःपुन्यं समभिहारः, पुनः पुनरनुष्ठीयमानविषयं हि तत् । प्रधानक्रियैव च पुनः पुनरनुष्ठीयते । अवयवक्रियाणां तु भृशार्थता समभिहारः, बुद्धिगोचरानेकसकलावयवक्रियाविषया हि सा । 'पापच्यते' इति । 'दीर्घोऽकितः' (७.४.८३) इति दीर्घः । 'देदीप्यते' इति । 'गुणो यङ्लुकोः' (७.४.८२) यङैव समभिहारस्य द्योतितत्वात् । 'क्रियासमभिहारे द्वे भवतः' (वा. ८८६) इति वा 'नित्यवीप्सयोः' (८.१.४) इति वा द्विर्वचनं न भवति । 'धातोरिति किम्' इति । अन्यस्य क्रियासमभिहारे वृत्त्यसम्भवात् प्रश्नः । 'भृशं प्राटति' इति ।

अत्र धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात् ततो यङ स्यात्, ततश्चोपसर्गस्य द्विर्वचनं स्यात्। यदि सोपसर्गसङ्घातस्यैव क्रियासमभिहारे वृत्तिः, प्रपापच्यत इत्यादौ यङ न प्राप्नोति ? योऽत्र धातुः स न क्रियासमभिहारे, यश्च क्रियासमभिहारे न स धातुरिति। तस्माद्धातुरेव समभिहारविशिष्टक्रियावाची, उपसर्गस्तु सन्निधिमात्रेणोपकारकः। ततश्च सङ्घातात् प्राप्त्यभावान्नार्थो धातुग्रहणेन। यत्र तर्हि सङ्घातेनैव विशिष्टा क्रियोच्यते—प्रतेष्ठीयत इति, अत्र हि केवलस्तिष्ठतिर्गतिनिवृत्तिवचनः, प्रपूर्वेण तु सङ्घातेन गतिक्रियैवोच्यते, यथा—जङ्गम्यत इति ? अत्राप्यनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतौ तन्निवृत्तौ च वर्तते, उपसर्गस्तु सन्निधिमात्रेणोपकारक इति धातोरुत्पत्तिरविरुद्धा, तस्मादार्धधातुकसञ्ज्ञार्थमेव धातुग्रहणम्। तेन 'ब्रुवो वचिः' (२.४.५३) इत्यादि भवति। आनुषङ्गिकी त्वधातुनिवृत्तिः।

अथ कथं यङन्तादात्मनेपदं भवति ? कथं च स्यात् ? ङितो धातोरात्मनेपदमुच्यते, यश्चात्र धातुर्न स ङित्, न ह्ययं समुदायस्यानुबन्धः। यश्च ङित्प्रत्ययो नासौ धातुः। यत्र च 'अवयवे कृतं लिङ्गमचरितार्थम्' (हे. १०७) तत्र समुदायस्य विशेषकं भवति, अयं ङकारस्तु 'वेभिद्यते' इत्यादौ गुणनिषेधादौ चरितार्थः ? कश्चिदाह—क्रियासमभिहारे यङित्यकारोऽत्र प्रश्लिष्यते, स चानुदात्तोऽनुनासिकः प्रतिज्ञायते, तत्रानुदात्तत्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवति, 'अनुदात्तेतश्च हलादेः' (३.२.१४९) इत्येतच्च न भवति 'जुचङ्क्रम्यदन्द्रम्य' (३.२.१५०) इत्यत्र चङ्क्रम्यदन्द्रम्यग्रहणाल्लिङ्गादिति, स वक्तव्यः। अथ कथं ऋतेरीयङन्तात् (३.१.२९) आत्मनेपदं भवति, सोऽपि हि ङकारो गुणनिवृत्तौ चरितार्थ इति ? स चेद् ब्रूयात् तस्याप्यादित इकार ईकारो वाऽनुदात्तः प्रश्लिष्यत इति, प्रतिब्रूयादेनम्—इकारे नुम् प्रसज्येत, ईकारे 'श्वीदितो निष्ठायाम्' (७.२.१४) इतीण्णिषेधः स्यादिति ? नैष दोषः; नुमविधौ 'गोः पादान्ते' (७.१.५७) इत्यतोऽन्तग्रहणमनुवर्तते, तेनान्ते इकार इत्सञ्ज्ञको येषां तेषां नुम्। 'श्वीदितो निष्ठायाम्' (७ २.१४) इत्यत्राप्येकाच इति वर्तते ? सत्यम्; प्रतिविहितमायुष्मता, मुधा पुनरयं प्रयासः, तथा हि—'अनुदात्तङितः' (१.३.१२) इत्यत्र न धातुग्रहणमस्ति, ततः किम् ? इदं ततो भवति—प्रत्ययमेव ङितमाश्रित्यात्मनेपदं सिद्धं भवति। न चैवम् 'अशिश्रियत्, अवोचत्' इत्यादौ चङङ्भ्यामपि प्रसङ्गः, प्रागेव विकरणेभ्यः 'अनुदात्तङितः' (१.३.१२) इत्येतत् प्रकरणं प्रवर्तते; अन्यथा 'वर्तते' इत्यादौ विकरणव्यवधानान्नियमो न स्यात्। यथा च प्रागेव विकरणेभ्यो नियमः प्रवर्तते, प्रवृत्ते तु नियमे विकरण इति तथा तत्रैव प्रतिपादितमित्यलमियता।

'सूचिसूत्रि' इत्यादि। सूच्यादिभ्यो यङ वक्तव्यः, किमर्थम् ? सूच्यादीनामनेकाजर्थम्, अशादीनामहलाद्यर्थम्, ऊर्णोतेस्त्वनेकाजर्थमहलाद्यर्थं च। 'सोसूच्यते' इति। 'सूच पैशुन्ये' (धा.पा. १८७३), 'सूत्र अवमोचने' (धा.पा. १९०८) 'मूत्र प्रस्रवणे' (धा.पा. १९०९) चुरादिण्यन्ताः। अत्र णिलोपोऽपि यङ आर्धधातुकत्वे प्रयोजनम्। 'आटाट्यते'। 'अट पट गतौ' (धा. पा. २९५, २९६), 'अजादेर्द्वितीयस्य' (६.१.२) इति टयशब्दस्य द्विर्वचनम्। 'अरार्यते' इति। 'ऋ गतौ' (धा.पा.१०९८), 'गुणोऽर्तिसंयोगाद्योः' (७.४.२९), 'यङि च' (७.४.३०) इति गुणः। 'न न्द्राः संयोगादयः' (६.१.३) इत्यत्र 'यवा रपरस्य प्रतिषेधः' इति वचनाद्रेफस्य द्विर्वचनम्। 'अशाश्यते' इति। अश्नोतेरश्नेश्च ग्रहणमित्यागमः। 'प्रोर्णोनूयते' इति। 'ऊर्णुञ् आच्छादने' (धा.पा. १०३९) नोपधोऽयम्, आष्टमिकं तु णत्वम्, तस्यासिद्धत्वान्नुशब्दस्य द्विर्वचनम्। ननु 'पूर्वत्रासिद्धीयमद्विर्वचने' (जै.प. ७०) ? स्यादेतत्—आष्टमिकं तु द्विर्वचनमभिप्रेत्य तदुच्यते, यथा च 'ओजढत्' इत्यत्र ढत्वादीनामसिद्धत्वाद्धत इत्येतत् द्विरुच्यते इति ? तन्न; एवं हि धुपिभूतो द्विरुच्यत इति वक्ष्यमाणं व्याहन्येत। एवं तर्हि 'पूर्वत्रासिद्धीयमद्विर्वचने' (जै.प. ७०) इत्येतदनित्यम्, 'उभौ साभ्यासस्य'

(८.४.२१) इति लिङ्गात्; अन्यथा 'अनितेः' (८.४.१९) इति णत्वे कृते तस्यासिद्धत्वाण्णिशब्दस्य द्विर्वचने सति सिद्धं स्यात् 'प्राणिणिषति' इति। इह कस्मान्न भवति—लुनीहि लुनीहीत्येवायं लुनातीति ? भवत्येव। 'लोलूयते' इति लोट् तर्हि न प्राप्नोति यङा बाधितत्वात्, अन्तरङ्गो यङ् क्रियासमभिहारमात्रापेक्षत्वात्, लोट् तु बहिरङ्गः, क्रियाभेदाश्रये धातुसम्बन्धे भावकर्मकर्तृषु च विधानात्। सावकाशश्च लोट्, कोऽवकाशः ? अनेकाज्-हलादिश्च—जागृहि जागृहीत्येवायं जागर्ति, ईक्षस्वेक्षस्वेत्येवायमीक्षत इति। एवं तर्हि वेत्यनुवृत्तेः पक्षे यङ्, यदा न यङ् तदा लोड् भविष्यति। यङोऽकारोऽटाटचते इत्यादौ द्विर्वचनार्थः॥

## २३. नित्यं कौटिल्ये गतौ।

'धातोः' इति वर्तते, गताविति तस्य विशेषणम्, गतौ वर्तमानाद्धातोरिति। 'कौटिल्ये' इति। संनिधानाद् गतिविषयमेव कौटिल्यं गम्यते। 'चङ्क्रम्यते, दन्द्रम्यते' इति। 'क्रमु पादविक्षेपे' (धा.पा.४७३), 'द्रम मीम् गतौ' (धा.पा. ४६६,४६८), 'नुगतोऽनुनासिकान्तस्य' (७.४.८५) योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयन्नेवमुच्यते।

नित्यग्रहणमनर्थकम्, अनभिधानादेव वाक्यं न भविष्यति, न हि चङ्क्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम्; संशयो हि वाक्याद्भवति—किं गतिकौटिल्यम् ? उत वक्रहृदयत्वनिबन्धनं जिह्माचरणमिति ? वृत्तौ तु गतिकौटिल्यमेव नियतं गम्यते, कौटिल्यमात्रप्रतिपादने च वाक्यं निवारयितुमशक्यमनिष्टं चात आह—'नित्यग्रहणं विषयनियमार्थम्' इति। गतिकौटिल्यं विषयः, तत्रैव यङ् यथा स्यादित्येवमर्थमित्यर्थः, तदाह—'गतिवचनान्नित्यं कौटिल्य एव भवति' इति। व्यवच्छेद्यं दर्शयति—'न तु क्रियासमभिहारे' इति। ननु यथा 'वडवाया वृषे वाच्ये' इत्यपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, यथा वा 'ञीतः क्तः' (३.२.१८७) भूते प्राप्तस्ततोऽपकृष्य वर्तमाने विधीयते, एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितः, गतिवचनात् तु कौटिल्ये इति ? तक्रकौण्डिन्यन्यायेनैव बाधः सिद्धः। यथा वा विवक्षितार्थनिभिधानाद्वाक्यं न भवति तथा समभिहारानवगमादत्र प्रत्ययो न भविष्यति। कथमेवमपि वचनापेक्षा ? वाक्यनिवृत्तावपि वचनमपेक्षस्व! तदेतन्नित्यग्रहणं चिन्त्यप्रयोजनम्॥

## २४. लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्।

'लुनॄ च्छेदने' (धा.पा. १४३१), 'षदलृ विशरणगत्यवसादनेषु' (धा.पा. १४२७)। 'आङः षदिः पद्यर्थे' (धा.पा. १८३१) इत्यस्य तु चौरादिकणिजन्तस्य एकाच इत्यस्यानुवृत्तेरग्रहणम्। 'चर गत्यर्थः' (धा.पा. ५५९), 'जप जल्प व्यक्तायां वाचि' (धा.पा. ३९७,३९८), 'जभी जृभी गात्रविनामे' (धा.पा. ३८८,३८९), 'दह भस्मीकरणे' (धा.पा. ९९१), 'दन्श दशने' (धा पा. ९८९)। अनुनासिकलोपनिर्देशो यङ्लुक्यप्यनुनासिकलोपार्थः—'दन्दशीति' इति। 'गॄ निगरणे' (धा.पा. १४१०), तुदादिः। 'गॄ शब्दे' (१४९८) क्र्यादिः, तत्राकारान्तविकरणेन साहचर्यादाद्यस्य ग्रहणमित्येके। द्वयोरपीत्यपरे। "धात्वर्थगर्हायाम्" इति। भावशब्दो धात्वर्थे वर्तते इति दर्शयति। 'गर्हितम्' इति क्रियाविशेषणम्, तेन भावगर्हाऽत्र गम्यते। गर्हितत्वं तु छेदनस्य, निषिद्धतृणादिविषयत्वात्, 'लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः' (मनु. ४.७१) इति। एवमुत्तरत्रापि यथासम्भवं गर्हितत्वं भेदेन द्रष्टव्यम्। चञ्चूर्यते इति। 'चरफलोश्च' (७.४.८७) इति

नुक्, 'उत्परस्यातः' (७.४.८८), 'हलि च' (८.२.७७) इति दीर्घः। 'जञ्जप्यते' इत्यादौ 'जपजभदहदशभञ्जपशां च' (७.४.८६) इति नुक्। 'निजेगिल्यते' इति। 'ऋत इद्धातोः' (७.१.१००) रपरत्वम्, द्विर्वचनम्, अभ्यासस्य गुणः, जेगिर्य इति स्थिते 'ग्रो यङि' (८.२.२०) इति लत्वं च प्राप्नोति, 'हलि च' (८.२.७७) इति दीर्घश्च, तत्र दीर्घस्यासिद्धत्वाल्लत्वे कृते विहतनिमित्तत्वाद्दीर्घाभावः। अन्ये तु 'न मु ने' (८.२.३) इत्यत्र नेति योगविभागेनासिद्धत्वं बाधित्वा दीर्घे कृते लत्वमिच्छन्ति, नाप्राप्तवाक्यमस्ति।

'गर्हायामिति किम्'[1] इति। भावस्येत्येव तद्धर्मविशेषो लप्स्यते इति प्रश्नः। धर्मविशेषानुपादाने प्रशंसायामपि स्यादित्याह—'साधु जपति' इति। 'जपति वृषलो मन्त्रम्' इति। अत्र स्वरवर्णादिभ्रेषाभावाद्भावगर्हा नास्ति। वैदिकमन्त्रजपं प्रति शूद्रस्यानधिकारात्तु साधनभावे गर्हितः, यस्य खलु ईदृशी गतिः 'शूद्रस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः' इति नासौ जपितुमर्हति। 'नित्यग्रहणम्' इत्यादि। पूर्ववदेतद्व्याख्येयम्॥

## २५. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।

सत्यापेत्यकार उच्चारणार्थः। 'सत्यमाचष्टे' इति। ननु भाष्ये सत्यस्य कृञ्यापुक्, सत्यशब्दात् कृञि करोत्यर्थे णिज्भवति, आपुक् च, 'सत्यं करोति सत्यापयति' इत्युक्तम्? सत्यम्; कृञ्ग्रहणमनार्थम्, प्रदर्शनार्थो वा करोतिर्द्रष्टव्य इति मन्यते।

'आपुग्वक्तव्यः' इति। आपुग्वचनसामर्थ्याट्टिलोपो न भवति। क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते। अथ कथं पुनः शब्दापयेदिति? छन्दोवदृषयः कुर्वन्ति। एतेन प्रक्षालापयेदिति गृह्यप्रयोगो व्याख्यातः। 'पाशाद्विमोचने' इति। प्रायिकोऽयमर्थनिर्देशः, अन्यत्रापि भवति; अन्यथा 'विपाशयतीति' विशब्दस्य प्रयोगो न स्यात्, विशब्दविशिष्टस्यैव मोचनस्य ण्यर्थत्वात्, यथाऽऽचक्षयत्याङः प्रयोगो न भवति। एवमुपवीणयतीत्यादावपि द्रष्टव्यम्। तूलम् = तृणाग्रं तेनानुकृष्णाति अनुघट्टयतीत्यर्थः। 'अनुगृह्णाति' इति तु पाठे न समीचीनोऽर्थः। 'अभिषेणयति' इति। 'उपसर्गात् सुनोति' (८.३.६५) इत्यादिना षत्वम्। 'अकारान्तस्त्वचशब्दः' इति। 'त्वच संवरणे' (धा.पा. १३०१) इत्यस्माद्धातोः 'पुंसि सञ्ज्ञायाम्' (३.३.११८) इति घः। 'अवचूर्णयति' इति। विकिरतीत्यर्थः। 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे सत्यस्यापुग्विधानार्थं वचनमन्येषां प्रपञ्चार्थम्। 'मालिन्यो हयुपश्लोकयन्ति' इत्यादौ सापेक्षेभ्यो यथा स्यादित्येवमर्थं वा। कथं पुनर्विमोचनादिरर्थोऽनिर्दिष्टो लभ्यत इत्यत आह—'स्वाभाविकत्वात्' इति। 'प्रत्ययार्थो निर्दिश्यते' इति। सूत्रकारेणानिर्दिष्टोऽपि प्रत्ययार्थो व्याख्याकारैर्निर्दिश्यत इत्यर्थः॥

## २६. हेतुमति च।

लोके फलसाधनयोग्यः पदार्थो हेतुरित्युच्यते, तस्य ग्रहणे 'अध्ययनेन वसति' इत्यत्रापि प्रसज्येत, हेतुमद्ग्रहणं चानर्थकं स्यात्, कथम्? 'करणे' इति वर्तते, तस्य विशेषणं हेतुमतीति, करणं क्रिया, सर्वेव च

1. भावगर्हायामिति किम्—काशिका.

क्रिया हेतुमतीति किं विशेषणोपादानेन ! ननु शब्दोपात्ते हेतौ यथा स्यादित्येवमर्थमेतत् स्यात्, यथा 'समस्तृतीयायुक्तात्' (१.३.५४) इत्यत्र श्रूयमाणायां तृतीयायामात्मनेपदं यथा स्यात् तदर्थयोगमात्रे मा भूदित्येवमर्थं तृतीयायुक्तग्रहणम् । एवं तर्ह्यसति विरोधे 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तम्' (व्या.प. ६) इति 'तत्प्रयोजको हेतुश्च' (१.४.५५) इति यस्य सञ्ज्ञा विहिता तस्यैव पारिभाषिकस्य ग्रहणमिति मत्वाऽऽह—'हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः' इति । 'तदीयो व्यापारः' इति । प्रवर्तना । तस्यास्त्ववान्तरभेदमाह—'प्रेषणाध्येषणादिलक्षणः' इति । भृत्यादेर्निकृष्टस्य प्रवर्तना–प्रेषणम्, आज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्तना–अध्येषणम्, प्रार्थनेत्यर्थः । आदिशब्देन तत्स्थमर्थाचरणं गृह्यते, तच्च बहुधा भिद्यते–अनुमतिः, उपदेशः, अनुग्रह इति । तत्र यस्यानुमतिमन्तरेणार्थो न निर्वर्तते तस्य राजादेरनुमत्या प्रयोजकत्वम्, वैद्यादेस्तु 'मुस्तापर्पटकं पिवेज्ज्वरितः' इत्याद्युपदेशेन प्रवर्तकत्वम्, यः पुनः केनचिज्जिघांसितं पलायमानं निरुणद्धि, निरुद्धश्च हन्यते, तत्र निरोद्धा हन्तुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रवर्तकत्वम् । सर्वश्चायं विशेषः प्रकरणादिगम्यः । सर्वत्रानुगतं प्रवर्तमानमेव तु णिजर्थः । ननु यथा पितृमानित्युक्ते यं प्रति पितृत्वं स एव गम्यते तथात्रापि यं प्रति हेतुत्वं स एव हेतुमानिति युक्तम्, कं च प्रति हेतुत्वम् ? 'तत्प्रयोजकम्' इति वचनात् कर्तारं प्रतीति प्राप्तं 'कारके' (१.४.२३) इत्यधिकारात् क्रियापेक्षत्वाच्च कारकभावस्य यस्मिन् व्यापारे प्रयोजकरूपेणोपयुज्यते तमेव प्रति, स च प्रयोज्यव्यापारोऽधिश्रयणादिः सर्वसाधनसाध्यो विक्लित्त्यादिर्वेति तयोरेव हेतुमत्त्वं युक्तम्, न पुनः प्रयोजकव्यापारस्य । न हि तत्रासौ प्रयोजकरूपेणोपयुज्यते, किं तर्हि ? कर्तृरूपेण, यथा काष्ठस्य पाकापेक्षं करणत्वं न तु ज्वलनापेक्षम्, तदपेक्षं तु कर्तृत्वमेव ? उच्यते–णिचः प्रकृतिभूतेन धातुनैवाभिधीयते सोऽर्थस्तेन फलाभावात् तत्र णिज् न भविष्यति । ननु पचतीत्युक्ते न ज्ञायते–किं स्वयमेव पचति ? उतान्येन प्रवर्तितः ? इत्यतोऽन्येन प्रवर्तितस्येयं प्रवृत्तिरिति द्योतनाय णिज् भवतु ? एवं तर्हि हेतोरिति वक्तव्यम्, 'करणे' इत्येव, हेतोः करणे व्यापारे अभिधेये णिच् भवतीत्यर्थः । तथा तु न कृतम् । का गतिरिदानीं सूत्रस्य ? अभिधानस्वाभाव्यमत्र हेतुः, स्वाभावतो हि णिच् प्रत्ययः प्रयोजकव्यापारमाचष्टे । तेन पाकाद्यपेक्षया यो लब्धहेतुव्यपदेशः स हेतुत्वेनोपलक्षितो यस्यास्तीत्येवं प्रयोजकव्यापार एव मतुपोच्यते । अत्र द्वौ पक्षौ सम्भवतः—हेतुमतीति प्रकृत्यर्थनिर्देशः—हेतुमति यो धातुर्वर्तत इति, प्रत्ययार्थो वा हेतुमति करणेऽभिधेये णिज् भवतीति ।

ननु पचति, पाचयतीति च व्यक्तमर्थान्तरं गम्यते, तत्कथमस्य प्रकृत्यर्थत्वं शङ्क्यते ? उच्यते–इह हि कः पचेः प्रधानार्थः ? याऽसौ तण्डुलानां विक्लित्तिः, अधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन पच्यर्थता । यो हि पानार्थमुदकमाहरति, विक्रयार्थं च काष्ठान्याहरति, शीतं वापनेतुमग्निं समिन्धे नासौ पचतीत्युच्यते, तत्कस्य हेतोः ? विक्लित्तिं प्रति तादर्थ्याभावात् तदवच्छेदाभावाच्च । अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता, तद्वत् प्रयोजकव्यापारोऽपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति । णिच्प्रत्ययस्तु द्योतकः, तथा च योऽप्येकान्ते तूष्णीमासीनो भक्तबीजबलीवर्दैः प्रतिविधत्ते, स उच्यते—पञ्चभिर्हलैः कृषतीति । तदेवं पक्षद्वयसम्भवे यद्याद्यः पक्ष आश्रीयते ततो यथा प्रकृत्यभिहिते णिज् भवति, एवमुक्तप्रेषितादिशब्दाभिहितेऽपि स्यात्—उक्तः करोति, प्रेषितः करोतीति, हेतुमद्विषयत्वात् करोत्यर्थस्य, प्रत्ययार्थपक्षे तूक्तार्थत्वाण्णिजभावः ? नैष दोषः; प्रयोजकव्यापारस्य द्योतनाय णिज्विधीयते तस्य स्वशब्देन द्योतितत्वाद् द्योत्याभावान्न भविष्यति । इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेन, द्वयोः कर्त्रोर्लेनाभिधानं प्राप्नोति, धातुवाच्यव्यापारे हि कर्तरि लो भवति, पचिना च प्रयोजकव्यापारोऽप्यभिधीयते, प्रत्ययस्तु द्योतक इति धातुवाच्यव्यापारत्वसाम्यात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं प्राप्नोति—पाचयतो देवदत्तयज्ञदत्ताविति । प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य ण्यर्थस्य प्राधान्यात्तस्यैव कर्तरि लकारः । इह च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति प्रयोजकव्यापारस्यापि गमिवाच्यत्वादव्यतिरिक्तो गत्यर्थ इति

कृत्वा गत्यर्थानां कर्तरि क्तः प्राप्नोति, प्रयोज्यस्य तु कर्मत्वात्तत्रैवेष्यते। उक्तं हि 'ण्यन्ते कर्तुश्च कर्मणः' इति। इह च व्यतिच्छेदयन्ते, व्यतिभेदयन्ते—अव्यतिरिक्तो हिंसार्थ इति कृत्वा प्रयोजकव्यापारव्यतिहारविवक्षायामपि 'न गतिहिंसार्थेभ्यः' (१.३.१५) इति प्रतिषेधः प्राप्नोति।

तदेवमाद्ये पक्षे दोषदर्शनाद् द्वितीयं पक्षमाश्रित्याह—'तस्मिन्नभिधेये' इति। किं चान्वयव्यतिरेकाभ्यां शब्दार्थावसायः। न च पचति पठति गच्छतीत्यादावन्तरेण णिचं क्वचिदपि प्रयोजकव्यापारोऽवसीयते, उत्पन्ने तु णिचि प्रतीयते, अतस्तदर्थत्वमेव युक्तम्। पञ्चभिर्हलैः कृषतीत्यत्र त्वनेकार्थत्वाद्धातूनां कृषिरेव प्रतिविधानेऽपि वर्तत इति युक्तम्, न पुनस्तद्दर्शनेन सर्वत्र प्रकृत्यर्थत्वम्। नन्वत्रापि पक्षे पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र ण्यर्थस्य प्राधान्यात्तेन व्याप्यमानस्य प्रयोज्यस्य कर्मसञ्ज्ञा प्राप्नोति? 'गतिबुद्धिप्रत्यवसानार्थ' (१.४.५२) इति नियमात्र भविष्यति। इह तर्हि ग्रामं गमयति, ग्रामाय गमयतीति व्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थकर्मणि' (२.३.१२) इति द्वितीयाचतुर्थ्यौ न प्राप्नुतः? नैष दोषः; ग्रामोऽत्र गमेरेव कर्म, ग्रामकर्मकं गमनं कुर्विति प्रैषार्थः। इह तर्हि एधो दकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति 'कृञः प्रतियत्ने' (२.३.५३) इति षष्ठी न प्राप्नोति, सुट् तु करोतिधातुमात्राश्रयत्वाण्णिजुत्पत्तावपि तस्य रूपस्य भावात् सिध्यति? अत्राप्येधोदककर्मके करोत्यर्थे प्रयुज्यते इति षष्ठी भविष्यति। इह तर्हि अभिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति 'उपसर्गात् सुनोति' (८.३.६५) इति षत्वं न प्राप्नोति? अथात्राप्यभिषवं कुर्वित्युपसर्गविशिष्टे प्रकृत्यर्थे प्रयुक्तिरिति सिद्धं षत्वम्, यदा तु ण्यत् तेनैवोपसर्गस्य सम्बन्धस्तदा षत्वं भवति न वेति चिन्त्यम्। इह तर्हि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि कृद्योगलक्षणा षष्ठी न प्राप्नोति, अप्रधानत्वात्? तृतीयावद्भविष्यति, तद्यथा—पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तर्यप्रधानेऽपि तृतीया भवति व्याप्तेस्तथा षष्ठ्यपि भविष्यति। अथेह कथं णिज् भवति—भिक्षा वासयन्ति, कारीषोऽग्निर्ध्यापयतीति? कथं च न स्यात्? अचेतनत्वात्, चेतनावत एतद्भवति—प्रेषणम्, अध्येषणमिति? नैष दोषः; नावश्यं स एव वासं प्रयोजयति य आह—उष्यतामिति, योऽपि तूष्णीमासीनस्तत्समर्थमाचरति सोऽपि वासं प्रयुङ्क्ते, भिक्षाश्च प्रचुराश्च व्यञ्जनवत्यश्च लभ्यमाना वासं प्रयुञ्जते। तथा कारीषोऽग्निर्निर्वाते एकान्ते सुप्रज्वलितः शीतकृतमध्ययनविरोधिनमुपद्रवमपनयन् अध्ययनेऽनुकूलो भवति। तत्र यथा—अनुमतिरुपदेशोऽनुग्रहः—इत्येतेषु णिज् भवति तथाऽत्रापि भविष्यति। यद्यप्यनुमत्यादिषु प्रयोज्यव्यापारोद्देशेन प्रवृत्तिः, इह तु न तथा, तथाप्यनुकूलाचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते। इह कश्चित् कंचिदाह—पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवानिति, तत्र प्रष्टा प्रयोज्यः, तस्य प्रेरकः प्रयोजक इति तद्व्यापारे णिज् प्राप्नोति, एकविषयत्वाच्च णिचो लोडादीनां च पर्यायप्रसङ्गः? नैष दोषः; कर्तुः प्रयोजको हेतुरित्युक्तम्, प्रयोज्यश्चात्र न कर्ता। न ह्यसौ संप्रति पृच्छति तूष्णीमास्ते तस्य निर्व्यापारत्वात् कारकत्वमेव नास्ति कुतस्तद्विशेषः कर्तृत्वम्? कर्तृत्वमेव हि तस्य विधीयते प्रश्नक्रियायां कर्त्ता भवेति, यथा—राजा भव युध्यस्वेति राजत्वमेव विधीयते तत्र तदेवं प्रयोज्योऽकर्तेति प्रयोजकोऽपि न हेतुः, किमिदानीं पूर्वमेव कर्तुः सतः प्रयोजको हेतुः! यद्येवम्, व्यर्था प्रयुक्तिः। अथाप्युपरतिशङ्कया क्वचित् प्रयुक्तेरर्थवत्त्वं तथापि यत्राप्रवृत्तो बलादिना प्रवर्त्यते, तत्र णिज् न प्राप्नोति? न ब्रूमः—प्रवृत्तिप्रवर्तन एव णिजिति, किन्तु प्रवर्तितोऽपि प्रयोज्यो यत्र प्रवर्तत एव, न तु निवर्तते तत्र णिज् भवति। अनुवर्तमाना प्रयुक्तिः प्रयोज्यप्रवृत्तौ हेतुः, न मध्ये विच्छिन्ना। अतः प्रयोज्यप्रवृत्तिवेलायामपि पुत्रो विपरिवर्तमाना सैव प्रवृत्तिहेतुस्तस्यामेव च दशायां णिज वाच्यो भवति। तदेवं प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्णिजर्थः, केवला तु लोडर्थ इति विवेकः। उक्तं च—

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।

सक्रियस्य यदा प्रैषस्तदा स विषयो णिचः ॥ (वा.प. ३.७.१२६) इति ॥

किं च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः, अनियतकर्तृका तु प्रयुक्तिः णिजर्थः ।

'तत्करोतीत्युपसङ्ख्यानम्' इति । तदिति कर्मपरमेतत्, तेन द्वितीयान्तात् प्रत्ययः करोतीत्यत्र प्रकृत्यर्थ-मात्रं विवक्षितं न प्रत्ययार्थः तेन ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च लो भवति । 'सूत्रं करोति सूत्रयति' इति । इह व्याकरणस्य सूत्रं करोतीति वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते, तत्र व्यपदेशिवद्भावेन व्यतिरेकनिबन्धना षष्ठी, वृत्तौ तु व्याकरणं सूत्रयतीति प्रत्ययार्थभूतकरोत्यर्थाभिधायी सूत्रशब्दः सम्पद्यते । उक्तं हि 'परार्थाभिधानं वृत्तिः' इति । तेन सत्त्वभावो निवृत्त इति सूत्रव्याकरणयोरभिसम्बन्धो निवर्तते । अस्ति च व्याकरणस्य करोतिना सामर्थ्यमिति द्वितीया भवति । यदि तु व्याकरणं सूत्रं करोतीति वाक्ये एव सामानाधिकरण्यं तदा 'माणवकं मुण्डयति' इतिवद् व्याकरणं सूत्रयतीत्ययत्नसिद्धम् । 'सूत्र अवमोचने' (धा.पा. १९०८?) 'मूत्र प्रस्रवणे' (धा.पा. १९०९) इति चुरादौ पाठादेव सूत्रयतीति सिध्यति । अनेकार्थत्वाच्चार्थान्तरेऽपि भविष्यति । गणपाठसिद्ध एव त्वर्थ उपसङ्ख्यानेनापि प्रदर्शितः ।

'आख्यानात्' इति वाक्यं व्याचष्टे---'आख्यानात् कृदन्तात्' इति । आख्यायत इत्याख्यानम्, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति कर्मणि ल्युट् । यत्किंचिदाख्यायते तत्सर्वं राजागमनादिकमप्याख्यानमिहाभिप्रेतम्, न कंसवधनलोपाख्यानादिकमेव सञ्ज्ञाभूतम् । 'कृदन्तात्' इति 'कृद्ग्रहणेन गतिकारकपूर्वस्यापि ग्रहणम्' (व्या.प. १२६) इति कंसवधराजागमनसूर्योद्गमनादेरपि कृदन्तत्वम् । 'प्रकृतिप्रत्यापत्तिः' इति । कृतो या प्रकृतिः सा विकारपरित्यागेन स्वेनैव रूपेणावतिष्ठत इत्यर्थः । 'प्रकृतिवच्च कारकम्' इति । यत्तत्र कृदन्ते संनिहितं कारकं तत् प्रकृतिवद्भवति । कृत्प्रकृतेः शुद्धे णिचि यादृशं भवति तादृशमस्यापि ण्यन्तस्य भवतीत्यर्थः । 'कंसं घातयति' इति । हन्तेः 'हनश्च वधः' (३.३.७६) इत्यप् प्रत्ययो वधादेशश्च । हननम् = वधः, कंसस्य वध इति कर्मणि षष्ठ्या समासः, ततो णिच्, कृतो लुक्, प्रकृतेः प्रत्यापत्तिर्वधादेशपरित्यागेन हन्तिरूपेणावस्थानम् । यद्यप्यत्र 'संनियोगशिष्टानामन्यतराभावादुभयोरप्यभावः' (व्या.प. ४८) इत्येव वधादेशनिवृत्तिः सिध्यति; तथापि पुष्येण योगं जानाति, पुष्येण योजयतीत्यत्र कुत्वस्यासंनियोगशिष्टत्वात् तन्निवृत्तिर्न सिध्यतीति प्रकृतिप्रत्यापत्ति-वचनम् । अथ कथं कंसमघातयत, राजानमजीगमत्, यावता कंसवधराजागमनशब्दाभ्यां णिचि विहितेऽङ्गसञ्ज्ञा नामधातुत्वं च तयोरेव स्याताम्, ततश्चाड्द्विर्वचने अपि तयोरेव स्याताम् ? नैष दोषः; 'प्रकृतिवच्च कारकम्' इत्युक्तम् । कृत्प्रकृतेश्च शुद्धे णिचि विहिते कंसादिकारकं कीदृशं भवति ? धात्वनन्तर्भूतं द्वितीयाद्यन्तम्, तेनाऽत्रापि तादृशेनैव रूपेण भवितव्यम् । तेन राजानमागमयतीत्यत्र न लोपाभावोऽप्युपपन्नो भवति । एवमपि कंसं घातयतीत्यत्र 'हो हन्तेर्ञ्णिन्नेषु' (७.३.५४) इति कुत्वम्, 'हनस्तोऽचिण्णलोः' (७.३.३२) इति तत्वं च न प्राप्नोति, किं कारणम् ? धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते । एवं तर्हि 'प्रकृतिवच्च कारकम्' इति चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः, कार्यशब्दश्चाध्याहार्यः । एतदुक्तं भवति---कृत्प्रकृतिर्हन्त्यादिः तस्याः शुद्धे णिचि यादृशं रूपं भवति तथाऽस्यापि ण्यन्तस्य भवति, कार्यं च तद्वदेव भवतीति । एतेनाड्द्विर्वचने अपि व्याख्याते । 'बलिबन्धम्' इति । बन्धनं बन्धः, पूर्ववत् कर्मणि षष्ठ्याः समासः । शेषं पूर्ववत् । 'राजागमनम्' इति । अत्र कर्तरि षष्ठ्याः समासः । 'राजानमागमयति' इति । अत्र कृत्प्रकृतौ राजा कर्ता, तस्य गमेः शुद्धे णिचि 'गतिबुद्धि' (१.४.५२) इत्यादिना कर्मसञ्ज्ञा भवतीत्यस्मिन्नप्यौपसङ्ख्यानिके णिचि तथैव

कर्मसञ्ज्ञा भवति । इह तु देवदत्तः पाकमाचष्टे इति णिचि विहिते देवदत्तेन पाचयतीति भवति । न हि देवदत्तस्य शुद्धे णिचि कर्मसञ्ज्ञाऽस्ति; गत्यर्थादीनामेवेति नियमात् । इह तु मृगरमणमाचष्टे मृगान् रमयतीति यदा प्रतिपाद्यस्य दर्शनार्थमाख्यानं तदा णिजिष्यते, नान्यदा । तत्र यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपाद्यमाचष्टे--- एतस्मिन्नवकाशे एवं मृगा रमन्त इति, तदा तस्य प्रतिपाद्यदर्शनार्था प्रवृत्तिरिति णिज् भवति । यदा तु ग्रामे मृगरमणमाचष्टे तदा तत्र मृगाणामसम्भवात्त तद्दर्शनार्था प्रवृत्तिरिति मृगरमणमाचष्ट इति वाक्यमेव भवति । एतच्च मृगरमणादिविषयमेव, राजागमनादौ त्वन्यदपि भवति ।

'आङ्लोपः' इति । अन्याख्यानादिति न स सम्बध्यते, मर्यादायां य आकारस्तस्य लोपो भवति । क्लुग्- गित्यादि पूर्ववत् । 'आरात्रिविवासम्' इति । विवसनं विवासः, अतिक्रमणम्, रात्रेर्विवासो रात्रिविवासः, कर्तरि षष्ठ्याः समासः, ततः 'आङ् मर्यादाभिविध्योः' (२.१.१३) इत्यव्ययीभावः । यावद्रात्रेरतिक्रमणं तावत् कथाः कथयतीत्यर्थः । वसेरकर्मकत्वात् 'गतिबुद्धि' (१.४.५२) इत्यादिना रात्रेः कर्मसञ्ज्ञा हेतुमण्णिचि भवति, तद्वदस्मिन्नपि णिचि भवति---'रात्रिं विवासयति' इति ।

'चित्रीकरणे प्रापि' इति । तदित्येव । चित्रीकरणं आश्चर्यकरणम् । प्रापि प्राप्नोत्यर्थे चित्रीकरणे गम्यमाने तत्प्राप्नोतीत्यस्मिन्नर्थे णिच् भवति, क्लुगित्यादि पूर्ववत् । 'सम्भावयते' इति । 'भू प्राप्तावात्मनेपदी' (धा.पा. १८४४) उज्जयिन्या माहिष्मती विदूरे देश इति तावतो देशस्य प्रागुदयादतिक्रमणमाश्चर्यम् । 'सूर्यमुद्गमयति' इति । 'प्रकृतिवच्च कारकम्' इति सूर्यशब्दस्य पृथक्करणम् । सङ्ग्रामयतेरेव सोपसर्गादिति न्यायादुच्छब्दस्यापि पृथक्करणम् । अत्रापि सूर्यस्य हेतुमण्णिचि कर्मत्वादस्मिन्नपि णिचि कर्मत्वम् ।

'नक्षत्रयोगे ज्ञि' इति । तदित्येव । ज्ञि जानात्यर्थे नक्षत्रयोगे यत् क्वन्तं वर्तते तस्मात्तज्जानातीत्यस्मि- न्नर्थे णिज् भवति, क्लुगित्यादि पूर्ववत् । 'पुष्ययोगम्' इति । पुष्येण चन्द्रमसो योगः पुष्ययोगः, पुष्येणेति कर्तरि तृतीया, 'उभयप्राप्तौ कर्मणि' (२.३.६६) इति नियमात् षष्ठी न भवति । 'चन्द्रमसः' इति । नियमेन गम्यमानत्वादुभयप्राप्तिः, पुष्यो हि चन्द्रमसं युनक्ति = सम्बध्नाति, तत्र युजेर्गत्यादिष्वनन्तर्भावादणौ कर्तुः पुष्यस्य शुद्धे णिचि कर्तृत्वमेवेत्यस्मिन्नपि णिचि कर्तृत्वात् तृतीया भवति । 'पुष्येण योजयति' इति । लकारस्तु प्रधान एव कर्तरि भवति, यथा शुद्धे णिचि । तत्तर्हीदं वहु वक्तव्यम् ? वक्तव्यम्, इह तावत् सूर्यमुद्गयतीति यो यस्य प्रवर्त्यः स तस्याभिप्रायं निर्वर्तयति । गन्तुश्चायमभिप्रायः---माहिष्मत्यां सूर्योद्गमनं सम्भावयेयमिति, तं च सूर्यो निर्वर्तयति, एतदेव प्रवर्त्यस्य प्रवर्त्यत्वं यदुत प्रवर्तयितुरभिप्रायसम्पादनम् । न हि कश्चित् परोऽनुग्रहीतव्य इति प्रवर्तन्ते सर्व इमे स्वभूत्यर्थम् । ये तावदेते गुरून् शुश्रूषन्ते, तेऽपीह---प्रीतो गुरुरध्यापयिष्यति परत्र चाभ्युदेष्याम इति प्रवर्तन्ते । दासाश्चापि---भक्तं च लप्स्यामहे, परिभाषाश्च न नो भविष्यन्तीति प्रवर्तन्ते । 'यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम्' (अमरकोशः १.५.१४) । शिल्पिनोऽपि---मित्राणि च नो भविष्यन्ति वेतनं च लप्स्यामह इति प्रवर्तन्ते । यद्यप्यत्र सर्वत्र तत्तदुद्देशेन प्रवृत्तिः, सूर्ये तु न; तथाप्यभिप्रायसंपत्तिमात्रेण प्रयोज्य- प्रयोजकभावाध्यारोपेण णिज् भविष्यति । इह च कंसं घातयतीति---ये तावदेते कंसघातानुकारिणां नटानां व्याख्यानोपाध्यायास्ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशेनैव वासुदेवेन घातयन्ति, येऽपि चित्रं व्याचक्षते---अयं मथुराप्रासादः, अयं कंसः, अयं भगवान् वासुदेवः प्रविष्टः, एताः कंसकर्षिण्यो रज्जवः, एते उद्गूर्णा निपातिताश्च प्रहाराः, अयं हतः कंसः, अयमाकृष्ट इति, तेऽपि चित्रगतं कंसं तादृशेनैव वासुदेवेन घातयन्ति, चित्रेऽपि हि तद्बुद्धिरेव पश्यताम् । एतेन चित्रलेखका व्याख्याताः । येऽपि ग्रन्थं वाचयन्तः कंसवध- माचक्षते काथिका नाम, तेऽप्युत्पत्तिप्रभृत्याविनाशात् कंसादीन् वर्णयन्ति, तेऽपि वर्ण्यमानाः श्रोतॄणां बुद्धिस्थाः

प्रत्यक्षवद्भवन्ति । चित्तमपि तेषां तदात्मकमिव भवति, अत एव व्याश्रिताश्च भवन्ति । नानापक्षसमाश्रयः = व्याश्रयः । केचित् कंसभक्ताः, केचिद्वासुदेवभक्ताः । वर्णान्यत्वं खल्वपि पुष्यन्ति—केचिद्रक्तमुखाः, केचित् कालमुखाः । त्रैकाल्यमपि लोके लक्ष्यते, कथायां वाच्यमानायां हि वक्तारो भवन्ति—गच्छ हन्यते कंसः, गच्छ घानिष्यते कंसः, किं गतेन—हतः कंसः ! इति । तदेवं काथिकोऽपि बुद्धिस्थेन वासुदेवेन घातयति, श्रोतापि ।

> शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
>
> प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ (वा.प. ३.७.५)

एवं राजानमागमयतीत्यादावपि यथासम्भवं द्रष्टव्यम् ॥

## २७. कण्ड्वादिभ्यो यक् ।

यदीमे कण्ड्वादयो धातव एव स्युस्ततो वाग्रहणमनुवर्तते वा ? न वा ? अनुवृत्तौ यगभावपक्षे लडादिषु सत्सु कण्डवतीत्याद्यनिष्टं प्रसज्येत, कण्डूरित्यादि च न स्यात्; धातोः सुबभावात् ? क्विबन्तात्सुप्सम्भवेऽपि कण्डूरिति न वेदनामात्रं गम्यते; कर्तरि क्विपो विधानात् ? सम्पदादित्वाद्भावे क्विब्भविष्यति । एवमपि कण्ड्वौ कण्ड्वः, 'अचि श्नुधातु' (६.४.७७) इत्युवङ प्राप्नोति, कण्ड्वा, कण्ड्वे 'नोङधात्वोः' (६.१.१७५) इति विभक्तेरुदात्तनिषेधः स्यात्, मन्तुवल्गुरित्यत्र च तुक्प्रसङ्गः ? अथ नानुवर्तते, कण्डूरिति न सिध्यति, यगन्तात् सम्पदादित्वाद्भावे क्विप्यल्लोपयलोपयोः कृतयोर्भविष्यति ? न चैवमल्लोपस्य स्थानिवत्त्वादुवङ, 'क्वौ लुप्तं न स्थानिवत्' (जै.प.४७) इति वचनात् । ननु च क्वौ विधिं प्रति स प्रतिषेधः, अन्यथा लवमाचक्षाणो लौरित्यत्र क्वौ लुप्तस्य णेः स्थानिवत्त्वाभावेऽपि णौ कृतस्य टिलोपस्य स्थानिवत्त्वादूठ् न स्यात्, अतोऽत्र स्थानिवत्त्वे सत्युवङ स्यादेव ? छ्वस्तु 'च्छ्वोः शूड्' (६.४.१९) इत्यूठ् करिष्यते ? न चोठ्यपि कर्तव्ये स्थानिवत्त्वम्, तस्य क्वौ विधित्वात् आदिष्टादचः पूर्वत्वाच्च, अत एवोठि कृते पुनरुवङोऽप्रसङ्गः । एवमपि कण्ड्वौ, कण्ड्वः, कण्ड्वे—धातुविधिः प्राप्नोति, मन्तुर्वल्गुरिति च न सिध्यति, यकि दीर्घे कृते मन्तूर्वल्गूरिति स्यात् । अथ प्रातिपदिकान्येव ? तत्रापि वाग्रहणाननुवृत्तौ स एव दोषो यो धातुपक्षे । अनुवर्ततां तर्हि वाग्रहणम्, सन्तु च प्रातिपदिकान्येव, तत्राप्ययमर्थः—ककारो नानुबन्धव्यो भवति अनार्धधातुकत्वादेव गुणो न भविष्यति ? नैवं शक्यम्, इह सुख्यति, दुःख्यति, मगध्यतीत्यतो लोपो न स्यात्, अनार्धधातुकत्वादेव । न च व्यंजनान्त एव शक्यः पठितुम्, यगभावपक्षेऽपि तथा प्रयोगप्रसङ्गादत उभये कण्ड्वादयः इत्याह—'द्विविधाः कण्ड्वादयः' इति । 'धातुभ्य एव प्रत्ययो विधीयते' इति । नित्यमिति भावः । तेन पक्षे कण्डवतीत्यादि न भवति । 'न तु प्रातिपदिकेभ्यः' इति । तेन कण्ड्वौ, कण्ड्वः, मन्तुरित्यादिप्रयोगसिद्धिः । न चास्मिन्नपि पक्षे यगन्तात् सम्पदादिक्विब्विधीयते तदा पूर्वोक्तदोषानुषङ्गः, किं कारणम् ? दृशिग्रहणादेतेभ्यः क्विब् स्यात्, न चैतेभ्य इदानीं क्विब् दृश्यते । पूर्वत्र तु पक्षे कण्डूरित्यादिसिद्ध्यर्थमेव क्विब् द्रष्टव्यः ।

कथं पुनर्ज्ञायते—उभये कण्ड्वादय इति ? तच्छ्लोकेन दर्शयति—'धातुप्रकरणात्' इति । अनुवृत्तेन धातुग्रहणेन विशेषणात् ककारासञ्जनाच्च धातुत्वमेवाभिमतमिति विज्ञायत इत्यर्थः । यतस्तु खल्वयमाचार्यः क्वचिद्दीर्घमुच्चारयति—कण्डूञ्, हृणीङ् महीङिति, ततो 'मन्ये धातुर्विभाषितः' इति । धातुत्वमेषां विभाषितमिति मन्य इत्यर्थः ।

अथ कण्ड्वादीनामर्थनिर्देशः । कण्डूञ् गात्रविकर्षणे । मन्तु अपराधे । हृणीङ् रोषे । वल्गु पूजामाधुर्ययोः । अस्मनस् उपतापे । महीङ् वृद्धिपूजनयोः । लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने । इरस् इरज् इरञ् ईर्ष्यायाम् । द्रवस् परिचरणे । मेधा आशुग्रहणे । कुषुभ क्षेपे । मगध परिवेष्टने । तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सपर पूजायाम् । अरर आराकर्मणि । भिषज चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण भुरण गतौ । चुरण चौर्ये च । तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । लिट् अल्पार्थे कुत्सायां च । लोट् दीप्तौ ॥

## २८. गुपूधूपविच्छिपणिपनिभ्य आयः ।

'विच्छायति' इति । विच्छिरयं तुदादौ पठ्यते, तत्सामर्थ्यादायप्रत्ययान्तादपि शविकरणो भवति, न तु शप्, यथा–जुगुप्सते इत्यात्मनेपदम्, तेन विच्छायन्ती, विच्छायतीति 'आच्छीनद्योर्नुम्' (७.१.८०) इति नुम्-विकल्पो भवति । अन्ये तु सार्वधातुकेऽप्यायप्रत्ययस्यैव तुदादिपाठसामर्थ्येन विकल्पमाहुः । 'स्तुत्यर्थेन' इति । भट्टिकाव्ये तु व्यवहारार्थादप्यायः––'न चोपलेभे वणिजां पणायान्' (भ.का. ३.२७) इति । 'अनुबन्धश्च केवलेऽचरितार्थः' इति । अवयवेष्वचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति, यथा––गुपादीनामनुदात्तत्वमिति भावः । ये तु व्यवहारार्थादप्यायमिच्छन्ति तेषामपि पणिष्यते, पाणयिष्यतीत्यादावनुबन्धः केवले चरितार्थः ॥

## २९. ऋतेरीयङ् ।

'सौत्रः' इति । अस्मिन्नेव सूत्रे उच्चरितः इत्यर्थः । 'घृणायां वर्तते' इति । नात्र कृपायां घृणाशब्दः, किं तर्हि ? जुगुप्सायाम्, 'घृणा जुगुप्साकृपयोः' (ना.र.मा. ४३७) इति वचनात् । जुगुप्सा = निन्दा, बीभत्सेत्यर्थः । ऋतीयाशब्दो बीभत्सापर्यायो निघण्टुषु पठितः । अथ कस्मादीयङुच्यते, न छङेवोच्यते, तस्य ईयादेशे कृते 'ऋतीयते' इति सिद्धम् । परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यादिति चेत् ? न; अन्तरङ्गत्वात्, आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वचनादन्तरङ्गत्वम् । ज्ञापनार्थं तु, एतज्ज्ञापयति––धातुप्रत्ययानामायन्नादयो न भवन्तीति, तेन 'कणेष्ठः' इत्यत्रैकादेशो न भवति । क्वचित्तु वृत्तावेवं पठ्यते––'ऋतेश्छङ' इत्येव सिद्धे ईयङ्वचनं ज्ञापकम्––धातुविहितानामायन्नादयो न भवन्तीति । अत्र ब्रूमः––'द्विवचनविभज्योपपदे तरबीयसुनौ' (५.३.५७) इत्येव सिद्धे ईयसुन्वचनं ज्ञापकं प्रातिपदिकप्रत्ययानामायन्नादयो न भवन्तीति । उच्यन्ते चायन्नादयस्ते वचनादुभयेषामपि स्युः, तस्मात् 'ऋतेश्छङ' इत्यादि वृत्तौ न पठनीयमिति ॥

## ३०. कमेर्णिङ् ।

इह णिङो णकारः 'णेरनिटि' (६.४.५१) इति विशेषणे चरितार्थो ङकारोऽप्यात्मनेपदार्थं इत्युभयोश्चरितार्थयोः प्रतिषेधबलीयस्त्वात् 'अत उपधायाः' (७.२.११६) इति वृद्धेः 'क्ङिति च' (१.१.५) इति प्रतिषेधः प्राप्नोति, ज्ञापकात् सिद्धम्, यदयम् 'न कम्यमिचमाम' (भ्वादि. ८१७) इति कमेर्मित्सञ्ज्ञायाः प्रतिषेधं शास्ति, तज्ज्ञापयति––भवत्यत्र वृद्धिरिति । तस्य हि प्रयोजनम्––'मितां ह्रस्वः' (६.४.९२) इति ह्रस्वो मा भूदिति । यदि चात्र वृद्धिर्न स्याद् ह्रस्व एवोपधेति कृत्वा मित्सञ्ज्ञाप्रतिषेधोऽनर्थकः स्यात् ।

नैतदस्ति ज्ञापकम्, यदा णिङन्ताद्धेतुमण्णिच् क्रियते तदा णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वो मा भूदित्येवमर्थमेतत् स्यात्, न च णिजपेक्षाया अपि वृद्धेर्णिङमेव ङित्वमपेक्ष्य प्रतिषेधः। किं कारणम्? ङितीति निमित्तसप्तमी। ननु च न णिङन्तस्य णिचि वृद्ध्या भवितव्यम्, णिङा व्यवहितत्वात्, णिलोपे कृते स्थानिवद्भावात् व्यवधानमेव। यदा तर्हि णिङन्ताच्चिण्णमुलौ भवतस्तदा 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६.४.९३) इत्येव विधिर्मा भूदित्येवमर्थो मित्सञ्ज्ञाप्रतिषेधः स्यात्। किं पुनः कारणम्? तत्र 'दीर्घोऽन्यतरस्याम्' इत्युच्यते न प्रकृतो ह्रस्व एव विकल्प्येत, एवं हि कर्मेमित्सञ्ज्ञाप्रतिषेधो न कर्तव्यो भवति। कथम्? यदा णिङि वृद्धिर्नास्ति तदा ह्रस्व एवोपधेति सत्यपि ह्रस्वविकल्पे नैवानिष्टप्रसङ्गः, अशमि, अशामीत्यादि च सिद्धम्? नैव शक्यम्; यदा शमिप्रभृतिभ्यो णिजन्तेभ्यो द्वितीयो णिच् क्रियते तदा न स्यात्। यश्च णमुल्परो णिज् द्वितीयः, न तस्मिन्; प्रथमेन णिचा व्यवहितत्वात्। यस्मिंश्च मिदङ्गं प्रथमे णिचि, नासौ चिण्णमुल्परः, द्वितीयेन व्यवहितत्वात्। णिलोपेऽपि कृते स्थानिवद्भावाद् व्यवधानमेव। 'दीर्घोऽन्यतरस्याम्' इत्युच्यमाने पुनरत्रापि भवति, दीर्घविधिं प्रति स्थानिवद्भावनिषेधात्। तथा शमिप्रभृतिभ्यो यङन्तेभ्यो णिच्यल्लोपयलोपयोरल्लोपस्य स्थानिवद्भावादसत्यां वृद्धौ चिण्णमुलोः कृतयोरशंशमि, अशंशामि, शंशमम्, शंशामम्मिति न स्यात्। दीर्घः पुनर्विकल्प्यमानोऽत्रापि भवति; तद्विधौ स्थानिवद्भावप्रतिषेधात्। तथा 'हेडृ अनादरे' (धा.पा. २८४) घटादिः, 'एच इग्घ्रस्वादेशे' (१.१.४८), हिडयति, तत्र चिण्णमुलोः कृतयोर्ह्रस्वे विकल्प्यमाने अहिडि, अहेडीति स्यात्, दीर्घे तु पुनरहिडि, अहीडीति भवति। तस्माद्दीर्घ एव विकल्पनीयः, ततश्च मित्सञ्ज्ञाप्रतिषेधोऽपि तन्निवृत्तये वक्तव्यः। तथा 'आयादय आर्धधातुके वा' (३.१.४१) इति णिङभावे णिचि सति वृद्धौ कृतायां 'मितां ह्रस्वः' (६.४.९२) इति ह्रस्वो मा भूदित्येवमर्थोऽपि मित्सञ्ज्ञाप्रतिषेधो वक्तव्य एवेत्यज्ञापकमेतत्। एवं तर्ह्यस्थानेऽयं यत्नः क्रियते, नैवात्र प्रतिषेधः प्राप्नोति, किं कारणम्? इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चैषा इग्लक्षणा वृद्धिरित्यलमति कर्कशप्रक्रियातर्कानुसरणेन॥

## ३१. आयादय आर्धधातुके वा।

'आर्धधातुके' इति परसप्तम्यामायादिविधिभिरेकवाक्यता स्यात्, भिन्नवाक्यतायामयमर्थो भवति—गुपादिभ्य आर्धधातुके परतो वाऽऽयप्रत्ययो भवति, एवमुत्तरत्रापि, ततश्चार्धधातुके एव विकल्पेनायादयः स्युः सार्वधातुके नैव स्युः? नैष दोषः, पृथगारम्भाद्यदि ह्यार्धधातुके एवायादीनामुत्पत्तिः स्यात्, ततो गुपादिभिः संयुज्यैव निर्दिशेत्—गुपादिभ्य आर्धधातुके वेति, एवं तर्हि आयादय इति न वक्तव्यं भवति। पृथक् तं निर्दिशति, तेन मन्यामहे—व्यापारभेदेनैकवाक्यतेति। ततश्चायमर्थो भवति-गुपादिभ्यो नित्यमायादयो भवन्ति, आर्धधातुके वेति। एवमपि गुपादेर्यदार्धधातुकं प्राप्तं तत्र ततो विहिते विकरणविकल्पे नायादयः स्युः, ततश्च स्त्रीभावविवक्षायां गुपेरप्रत्ययान्तत्वाभावात् क्तिनि कृते यदायप्रत्ययो न भवति तदा गुप्तिरिति काममिष्टं सिध्यति। यदा तु भवति तदाऽल्लोपयलोपयोर्गोपातिरित्यनिष्टं प्राप्नोति, गोपायेति चेष्टं न सिध्यति। भिन्नवाक्यतायामायाद्यन्तादार्धधातुकं प्राप्तं तत्र ततो विहिते आयादयो वा भवन्तीत्यर्थः स्यात्। तत्र चायाद्यन्ताद्यदार्धधातुकमिति वक्ता तेषामुत्पत्तिस्तावदङ्गीकृता। न चोत्पन्नानामुत्पत्तिविकल्पः शक्यते कर्तुमिति लोकन्यायेन निवृत्तिविकल्पो भवति। ततश्चायप्रत्ययान्तात् स्त्रीभावविवक्षायामप्रत्ययादित्यकारे कृते निवृत्त्यभावपक्षे गोपायेति काममिष्टं सिध्यति। निवृत्तिपक्षे तु गोपेत्यनिष्टं प्राप्नोति, गुप्तिरिति चेष्टं न सिध्यति। लिटि च निवृत्त्यभावपक्षे गोपायाञ्चकारेति काममिष्टं सिध्यति, निवृत्तिपक्षे तु यदि लिटि परतो निवृत्तिः, तथापि प्रत्ययलक्षणेन कास्प्रत्ययादित्याम भवितव्यम्, अथाऽऽमि कृते निवृत्तिः, तथापि तस्यैव श्रवणं प्राप्नोतीति सर्वथा गोपांचकारेत्यनिष्टं प्राप्नोतीति,

भूयोपेति चेष्टं न सिध्यति। तस्माद्बुष्ट एवायं परसप्तमीपक्ष इति मत्वाऽऽह—'आर्धधातुके विषये' इति। कोऽर्थः ? इत्याह—'आर्धधातुकविवक्षायाम्' इति। आर्धधातुकमिहोत्पादयिष्यामीति बुद्धौ सत्यामित्यर्थः। विषयसप्तमीपक्षेऽपि भिन्नवाक्यतायामार्धधातुके विधित्सिते आयादयो भवन्तीत्युक्ते, कुतो विधित्सिते ? इत्यपेक्षायामायाद्यन्तस्यापि धातुत्वात्तत इति गम्यते, ततश्च निवृत्तिपक्ष एवाश्रित इति स एव दोषो यं पूर्वमवोचाम। तस्मादेकवाक्यतयोत्पत्तिविकल्प इत्याह—'नित्यप्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते' इति। किमेवं सति सिद्धं भवतीत्याह—'तत्र' इति॥

## ३२. सनाद्यन्ता धातवः।

'सनादयोऽन्ते येषाम्' इति। अन्तशब्दः समीपवचनः, वैयधिकरण्येऽपि गमकत्वाद्बहुव्रीहिः। अथ वा-वृत्तार्थमात्रं दर्शितम्, सूत्रे त्ववयववाचिनोऽन्तशब्दस्य समानाधिकरणस्यैव बहुव्रीहिः। सनादयोऽन्तावयवा येषां समुदायानामित्यनेन तद्गुणसंविज्ञानो बहुव्रीहिरिति दर्शयति। 'धातुसञ्ज्ञाः' इति। धातुशब्दोऽत्र स्वरूपपदार्थः, न भूवादिपदार्थकः; तावतीनां सञ्ज्ञानां विधाने प्रयोजनाभावात्। 'सुप्तिङन्तम्' (१.४.१४) इत्यत्रान्तग्रहणज्ञापिता 'सञ्ज्ञाविधौ प्रत्ययग्रहणे प्रत्ययग्रहणपरिभाषा न प्रवर्तते' (पु. २८) इति, ततश्चासत्यन्तग्रहणे तदन्तविधिर्न स्यादित्यत्रान्तग्रहणं कृतम्। एवं स्थिते यद्यपूर्व एवानेन तदन्तविधिः क्रियते, ततो देवदत्तश्चिकीर्षतीत्यत्र देवदत्तादेः समुदायस्य सञ्ज्ञा प्रसज्येतेति मत्वाऽऽह—'प्रत्ययग्रहणपरिभाषैव' इत्यादि। अपूर्वविधौ गौरवम्, प्रतिप्रसवे तु यत्नस्य लाघवं भवतीति भावः। 'भूवादयः' इत्यस्यानन्तरं सनाद्यन्ताश्चेत्युच्यमाने सनादीनामियत्तापरिच्छेदो न स्यात्। एवं तर्हि 'सङन्ताश्च' इत्युच्यताम्, सङिति प्रत्याहारः सनः सशब्दादारभ्या णिङो ङकारात्। एवमपि सन्देहः स्यात्, चङादिष्वपि ङकारस्य भावात्। एवं तर्हि 'सनाद्यन्ताः' इत्यस्यानन्तरं 'भूवादयश्च' इति वक्तव्यम्। स्यादेतत्–एवमुच्यमाने सनाद्यन्तशब्दवद् भूवादिशब्दोऽपि प्रकृतापेक्षः स्यात्, ततश्चानुक्रान्तानां गुपादीनामेव स्यादिति ? एवमपि भूवादिग्रहणमनर्थकं गुपादयश्चेति वक्तव्यम्। नानर्थकम्; भुवो वादयः भूवादय इत्येवमर्थमेव स्यात्। भूवादिपाठ इदानीं किमर्थः स्यात् ? अन्तर्गणकार्यार्थः, अनुबन्धासञ्जनार्थश्च। येषां तर्हि तदुभयं न सम्भवति भूरणिप्रभृतीनां तेषां पाठः किमर्थः ? अलमतिनिर्बन्धेन॥

## ३३. स्यतासी लृलुटोः।

इह यद्यपि 'लृ' इत्यनुकरणमुच्चारितमेकमेव, तथापि तस्य प्रतिपाद्यभूतमनुकार्यं भिद्यते—लृट्, लृङ् इति। यत्र च प्रतिपाद्यानां सङ्ख्यासाम्यं तत्र सङ्ख्यातानुदेशः, न तूच्चारितरूपसाम्ये; अन्यथा परस्मैपदानामित्येकं णलादयस्तु नवेति वैषम्यान्न स्यात्। तथा डारौरसः प्रथमस्येत्यत्रापि न स्यात्। तदेवम् 'लृ' इत्यस्य द्वे प्रतिपाद्ये, लुडिति चापरमिति त्रीणि निमित्तानि, निमित्तिनो तु द्वाविति वैषम्यात् सङ्ख्यातानुदेशो न प्राप्नोतीत्यत आह—'लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव' इति। नात्र प्रतिपाद्यं भिद्यते यत्तदुभयानुगतमुत्सृष्टानुबन्धम् 'लृ' इति सामान्यरूपं तदनुक्रियते। एतच्च लृलुटोरिति द्विवचननिर्देशादवसीयते, तत्र यथानुकरणे न भेदस्तथानुकार्येऽपीत्यर्थः। 'करिष्यति' इति। 'ऋद्धनोः स्ये' (७.२.७०) इतीट्। 'श्वः कर्ता' इति। 'श्वः' इत्यस्योपन्यासस्तु लृडन्तशङ्कानिवृत्त्यर्थः।

'इदित्करणम्' इति । इत्सञ्ज्ञकस्येकारस्य करणमित्यर्थः । 'अनुनासिकलोपप्रतिषेधार्थम्' इति । अन्यथा मन्तास् आ इति स्थिते टिलोपे कृते नकार उपधेत्यात्मनेपदे ङिति परतः 'अनिदिताम्' (६.४.२४) इति नलोपः प्राप्नोति, तस्य 'अनिदिताम्' इतीदित्वनिबन्धनः प्रतिषेधो यथा स्यादित्यर्थः । 'मन्ता, सङ्गन्ता' इति । कोऽर्थः ? मन्तेत्येतत् पदं सन्नन्तं भविष्यतीत्यर्थः, न तु सङ्गन्तेत्येतदुदाहरणम्, अनोपधत्वात् । अनुस्वारपरसवर्णयोः कृतयोरपि तयोरसिद्धत्वादनोपध एव ।

अन्ये त्वाहुः—यद्यसिद्धत्वात् सङ्गन्तेत्येतदनुदाहरणम्, मन्तेत्येतदपि उदाहरणं न भवति, अत्रापि टिलोपस्याभीयस्यासिद्धत्वात् मन्तास् आ इति स्थिते नकार उपधा न भवतीति ।

यदि मतम्—'आ भाच्छास्त्रीयमसिद्धत्वमनित्यम्' (जै. ६९), 'श्नसोरल्लोपः' (६.४.१११) इति तपरकरणात् ? तद्धि 'आस्ताम् आसन्' इत्यादौ मा भूदित्येवमर्थम्, तत्राटोऽसिद्धत्वादेव लोपो न भविष्यति, किं तन्निवृत्त्यर्थेन तपरत्वेन ! तज्ज्ञापयति—असिद्धत्वमनित्यमिति । तेन देभतुः, देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनाम्' (वा. १९; पु.सं. ३३) इति लिटः कित्त्वान्नलोपे तस्यासिद्धत्वाभावादेत्त्वाभ्यासलोपौ भवतः, तदत्र टिलोपस्यासिद्धत्वात् 'मन्त आ' इति स्थिते उपधैव नकार इत्युदाहरणमिति । यद्येवम्, पूर्वत्रासिद्धीयमसिद्धत्वमप्यनित्यम् 'न मु ने' (८.२.३) इत्यत्र नेति योगविभागात्, तथा चैकादेशस्वरोऽन्तरङ्गः सिद्धो भवति, सिज्लोप एकादेशे सिद्धो भवति, निष्ठादेशः षत्वादिषु सिद्धो भवति, द्विर्वचनविषये च पूर्वत्रासिद्धीयं न भवति, ततश्चानुस्वारपरसवर्णयोः सिद्धत्वात् 'सङ्गन्ता' इत्येतदप्युदाहरणमेवेति ।

अन्ये तु संहन्तेति पठन्ति, हन्तेः 'भावकर्मणोः' (१.३.१३) इत्यात्मनेपदम्, तत्र सम्पूर्वस्य पाठे प्रयोजनं मृग्यम् । एवं तावज्जयादित्येनासिद्धत्वमनित्यमाश्रित्य 'तासेः इदित्करणमनुनासिकलोपप्रतिषेधार्थम्' इत्युक्तम् । वामनस्तु टिलोपस्य सिद्धत्वादेव नलोपो न भविष्यतीति मन्यमानः 'इदितो' (७.१.५८) इत्यत्र वक्ष्यति—'तासि सिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते' इति । यदि तु तासेरिकारोऽनुबन्धः स्यात्, ततो नुम्विधौ धातोस्तासेर्मा भूदित्येवमर्थं स्यात्, ततश्च धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति तस्याभिप्रायः । जयादित्यस्तु 'नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थम्' इति वचनमेव शरणमशिश्रियत् ।

इह विकरणाः केचन लकारोपादानेन विधीयन्ते, यथा—स्यादयः, ते किं लावस्थायामेव भवन्ति ? उताहो आदेशेषु कृतेषु ? यदि लावस्थायामेव, ततस्तास्यनुदात्तेदित्यत्र यद्वक्ष्यते—तासेः परस्य लसार्वधातुकस्यानुदात्तवचनं ज्ञापकम्, 'सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते' (व्या. १०४) इत्यस्यार्थस्येति, तन्नोपपद्यते; लावस्थायामेव तासौ कृते तस्य च प्रत्ययाद्युदात्तत्वे पश्चाल्लादेशेषु क्रियमाणेषु तेषामेव स्वरः सतिशिष्टो भवति, ततश्चानुदात्तवचनमप्राप्तविधिरेव स्यात् । तत्र को दोषः ? चिनुतः, चिन्वन्ति, क्रीणीतः, क्रीणन्ति, सतिशिष्टो विकरणस्वर एव प्राप्नोति, द्वितीये तु पक्षे पूर्वं तिबादयः पश्चात् तासिरिति तस्यैव स्वरः सतिशिष्टः, ततश्च निघातस्वरेणैव सार्वधातुकानुदात्तत्वे सिद्धे तासिग्रहणं क्रियमाणमुक्तार्थस्य ज्ञापकं सम्पद्यते । अस्तु तर्हि तथा । यद्येवम्, धातुमात्रात् सार्वधातुकमात्रे भावकर्मणोर्यक्, कर्तरि तु शब्विधीयत इति यक्शपावुत्सर्गौ तेष्वेवार्थेषु धातुमात्रात् सार्वधातुकविशेषे स्यादय इति तेऽपवादाः ? तथा दिवादेर्धातुविशेषात् कर्तरि श्यनादयः शपोऽपवादाः, तत्र देविष्यति तनिष्यतीत्यादावुभयप्रसङ्गेऽपवादविप्रतिषेधात् श्यनादयः स्युः ? पक्षान्तरे त्वन्तरङ्गाः

स्यादय एव सिध्यन्ति ? नैष दोषः; 'दिवादिभ्यः श्यन्' (३.१.६९) इत्यादिषु स्यादयोऽनुवर्तिष्यन्ते–दिवादिभ्यः श्यन् भवति, लृलुटोस्तु स्यतासी भवतो दिवादिभ्य इति। एवं सर्वत्र। एतेनैतदपि निरस्तं यत् खल्विदमाशङ्क्यते—परेण लावस्थायां विधीयमानाः स्यादयः किमिति सार्वधातुकोत्पत्तिं प्रतीक्षन्त इति, कथम् ? उत्तरत्रानुवृत्तेरेव, सार्वधातुके यग्भवति, भावकर्मणोर्लृलुटोस्तु स्यतासी भवतः सार्वधातुके। एवं सिजादिष्वपि द्रष्टव्यम्। तदेवमादेशेषु कृतेषु स्यादय इति स्थितम् ॥

## ३४. सिब्बहुलं लेटि।

'जोषिषत्, मन्दिषत्' इति। 'जुषी प्रीतिसेवनयोः' (धा.पा. १२८८), 'मदि स्तुतिमोदस्वप्नगतिषु' (धा.पा. १३), अनुदात्तौ, व्यत्ययेन परस्मैपदम्, सिच इट्, 'लेटोऽडाटौ' (३.४.९४) इति तिपोऽट्, 'इतश्च लोपः परस्मैपदेषु' (३.४.९७) इतीकारलोपः, तत्र च वेति वर्तते। 'तारिषत्' इति। 'तॄ प्लवनतरणयोः' (धा.पा. ९६९), 'सिब्बहुलं छन्दसि णिद्वक्तव्यः' (कात्या.वा. १७९४) इति वचनाद्वृद्धिः, अमीषां भविता, भाविषविति यथा। छान्दसो वा दीर्घः। 'पताति' इति। 'शल हुल पत्लृ गतौ' (धा.पा. ८४३–८४५) 'लेटोऽडाटौ' (३.४.९४) इत्याट् शपा सहैकादेशः। 'च्यावयाति' इति। 'च्युङ प्रुङ प्लुङ गतौ' (धा.पा.-९५५,९५७,९५८) ण्यन्तः। इहाव्ययासिषीष्ठा इति यातेरवपूर्वाल्लिङि बहुलवचनात् सिप्, थासः सीयुट्, इट्। 'एकाच उपदेशेऽनुदात्तात्' (७.२.१०) इति तु प्रतिषेधो न भवति; सिपा व्यवधानात् ॥

## ३५. कास्प्रत्ययादाममन्त्रे लिटि।

'आम् प्रत्ययो भवति' इति। हलन्तपक्षे एतदुक्तम्, अदन्तपक्षे त्वामः प्रत्ययो भवतीति वक्तव्यम्। 'अमन्त्रविषये' इति। मन्त्रविषयश्चेत् प्रयोगो न भवतीत्यर्थः। ऋग्यजुःसामलक्षणो मन्त्रम्, तत्रैवाभियुक्तैर्मन्त्रशब्दस्य प्रयोगात्। आथर्वणा अपि मन्त्रा ऋग्यजुष एवान्तर्भवन्ति। तान्त्रिकेषु मन्त्रशब्दप्रयोगो मन्त्रवदुपचारात्। छन्दसीति नोक्तम्, ब्राह्मणेऽपि यथा स्यात्—'अथ ह शुनःशेफ ईक्षाञ्चक्रे ते ह तदन्तर्वेद्यामासाञ्चक्रिरे अविज्ञातानि च दर्शयांचकार'। 'कासाञ्चक्रे' इति। आमन्तस्य पदत्वम् 'आमः' (२.४.८१) इत्यत्रोपपादितम्। 'नोवाव' इति। नौतेर्यङ्लुगन्तात् प्रत्ययलक्षणेन प्राप्त आम् न भवति। 'कास्यनेकाच इति वक्तव्यम्' इति। यथान्यासे हि कशब्दादशब्दाद्वागादिभ्यश्चाचारक्विबन्तेभ्य एकाज्भ्योऽपि प्रत्ययान्तत्वादाम्प्रसङ्गः, चुलुम्पादिभ्यश्चाप्रत्ययान्तत्वादप्रसङ्गः, अतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यमित्यर्थः। तत्र कशब्दस्य णलि 'अचो ञ्णिति' (७.२.११५) इति वृद्धौ 'आत औ णलः' (७.१.३४), चकौ, अन्यत्र 'अतो लोपः' (६.४.४८) चकतुः, चकुः, अशब्दस्य णलि रूपम्–औ इति, अन्यत्र 'अतः आदेः' (७.४.७०) इति दीर्घत्वे 'आतो लोप इटि च' (६.४.६४), अतुः, उः। 'चकासांचकार' इति। 'चकासृ दीप्तौ' (धा.पा.-१०७४)। 'दरिद्रांचकार' इति। 'आत औ णलः' (७.१.३४) इत्यत्र ओकारे विधातव्ये औकारविधानं दरिद्रातेरार्धधातुकलोप इत्याकारलोपेऽप्यौकारस्य श्रवणार्थम्, तेन ददरिद्रावित्यपि भवतीत्याहुः। 'चुलुम्पाञ्चकार' इति। चुलुम्पतिर्वार्तिककारवचनात् साधुः।

आमो मकारस्य 'हलन्त्यम्' (१.३.३) इतीत्सञ्ज्ञा कस्मान्न भवतीत्याह—'आमो मित्त्वम्' इति। कारयांचकारेत्यादौ प्रयोगे य आम्शब्दस्तस्यामित्त्वं मकार इत्सञ्ज्ञको यस्य नास्ति सोऽमित् तस्य भावः अमित्त्वम्।

कुत इत्याह—'अदन्तत्वात्' इति । अद् अन्ते समीपे यस्य सोऽदन्तः, सूत्रे विधानवेलायां समीपेऽकारवत्त्वादित्यर्थः। तेनैतन्न चोदनीयम्—आम् चेत् कथमदन्तः, अथादन्तः, कथमाम् इति । सूत्रे विधीयमानस्यैव वा प्रत्ययस्योपलक्षणमाम इति । 'अगुणत्वं विदेस्तथा' इति । विदांचकारेत्यत्र विदेरामि गुणाभावोऽपि तथा, अदन्तत्वादेवेत्यर्थः। अदन्तत्वादित्येतत्प्रसङ्गेन चेदमिहोक्तम्, 'उषविदजागृभ्योऽन्यतरस्याम्' (३.१.३८) इत्यत्र तु वक्तव्यम् । तत्र हि विदेरकारान्तत्वमाम्प्रत्ययसन्नियोगेन निपात्यते, तत्रातो लोपस्य स्थानिवत्त्वाद् गुणो न भवति । न पुनः 'विद ज्ञाने' (धा.पा. १०६४) इत्यकारो विवक्षित इत्युच्यते; वेत्तीत्यादौ श्रवणप्रसङ्गात् । अभ्युपेत्यापि मकारान्तत्वमित्सञ्ज्ञाभावमाह—'आस्कासोराम्विधानाच्च' इति । आमोऽमित्त्वमित्यनुषङ्गः, सति हि मित्त्वे आस्कासोराम् भवन्नप्यचामन्त्यात् परः स्यात्, तथा च सवर्णदीर्घत्वे सत्यकिंचित्करः स्यात् । अतः 'दयायासश्च' (३.१.३७) कास्प्रत्ययादिति आस्कासोराम्विधानादप्यामोऽमित्त्वमवसीयते इत्यर्थः । 'आस्चकासोर्विधानाच्च' इत्यन्ये पठन्ति, तदयुक्तम्; न हि सूत्रे चकास आम्विधानमस्ति । यद्यपि कास्यनेकाज्ग्रहणं तदपि चुलुम्पादौ सावकाशम् । नन्वदन्तत्वपक्षे आमामन्त्र इति निर्देशः स्यात्तत्राह—'पररूपं कतन्तवत्' इति । यथा 'सर्वत्र लोहितादिकतन्तेभ्यः' (४.१.१८) इत्यत्र पररूपम्, एवमत्रापि निपातनात् पररूपमित्युक्तं भवति ॥

## ३६. इजादेश्च गुरुमतोऽनृच्छः ।

'ऋच्छतिवर्जितः' इति । ऋच्छतिना त्यक्तः तद्रूपरहित इत्यर्थः । ऋच्छतेरन्य इति यावत् । 'इयज, उवप' इति । यजिवप्योरुत्तमे णलि 'णलुत्तमो वा' (७ १.९१) इति णित्वाभावपक्षे वृद्ध्यभावाद् गुरूपोत्तमत्वाभावः। अथ थलि प्रत्युदाहरणम्—इयजिथ, इयष्ठ; उवपिथ, उवप्थेति । नन्वत्र सन्निपातपरिभाषयैव न भविष्यति, लिट्सन्निपातजं हि अभ्यासस्य संप्रसारणं तद्विघातकस्यामो निमित्तं न भवति, आमि हि सति लेर्लुका भवितव्यमिति लिट्सन्निपातमसौ विहन्यात् ? इदं तर्हि प्रत्युदाहरणम्—इयेषेति, न ह्यत्र लिट्संनिपातजमिजादित्वम्। अथ क्रियमाणेऽपि गुरुमद्ग्रहणे कस्मादेवात्र न भवति, यावता गुणे कृते गुरुमानेष भवति ? एवमीषतुरित्यादावपि सवर्णदीर्घत्वे कृते गुरुमानेव भवति ? सत्यम्; सति गुरुमद्ग्रहणे सन्निपातपरिभाषयैवात्राप्याम् न भवति, लिडानन्तर्यहेतुकत्वात् गुरुमत्तायाः । अथ वा 'गुरुमतः' इति नित्ययोगे मतुप्, नित्यं यस्य गुरुणाभिसम्बन्धः । यद्येवम्, 'उछी विवासे' (धा.पा. २१६) व्युच्छाञ्चकार, 'उछि उञ्छे' (धा.पा. १२९४) उच्छाञ्चकार, आगमनिमित्ता चास्य गुरुमत्ता, तस्मादाम् न प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयमनृच्छ इत्याह, तज्ज्ञापयति—भवत्येवञ्जातीयके आमिति । स तर्हि ज्ञापकार्थमृच्छतिप्रतिषेधो वक्तव्यो भवति । ननु चाम्निवृत्त्यर्थं एवासौ कर्तव्यः, नायं आम्निवृत्त्यर्थेन ? ज्ञापकात् सिद्धम्, यदयम् 'ऋच्छत्यृताम्' (७.४.११) इति लिटि परतो गुणं शास्ति, तज्ज्ञापयति—नास्मादाम् भवतीति । न च तत्रर्च्छतीत्यर्तेश्तिपा निर्देशः; 'ऋच्छति ऋ ऋताम्' इत्यर्तेरपि स्वरूपेणैव प्रश्लेषात् । प्रश्लेषे बहुवचनमत्र प्रमाणम् । अर्तेश्च लिटि गुणविधाने प्रयोजनं तत्रैव वक्ष्यामः । तस्मादृच्छतेर्गुणविधानं ज्ञापकमेव । तस्मादाम्न भवतीति स एषोऽनृच्छ इति प्रतिषेधो ज्ञापकार्थ एव कर्तव्यः स्यात् । एवं तर्हि लिटीति विहितविशेषणम्—इजादेर्गुरुमतो यो लिड्विहितस्तत्रेति । तेन लिड्निमित्ता यस्य गुरुमत्ता तस्माच्च न भविष्यति, आगमनिमित्ता यस्य गुरुमत्ता तस्माच्च भविष्यति । 'अनृच्छ' इति प्रतिषेधस्तु क्रियताम्, मा वा कारि । क्वचित् 'गुरुमत' इति किम्, इयेष उवोषेति पठ्यते, तत्र उवोष इत्युदाहरणमयुक्तम्, 'उषविदजागृभ्यः' (३.१.३८) इति विकल्पविधानमनवकाशं स्यात् ।

'प्रोर्णुनाव' इति । 'अजादेर्द्वितीयस्य' (६.१.२), 'न न्द्राः संयोगादयः' (६.१.३) इति नुशब्दस्य द्विर्वचनं कार्यान्तरसिद्ध्यर्थम्, अवश्यमूर्णोतेर्णुवद्भावो वाच्यः, तेनैवामोऽपि प्रतिषेधः सिद्ध इत्याह—'अथ वा वाच्यः'

इति। तत्र यङि भावातिदेशः, आमिटोस्त्वभावातिदेशः, नौतेस्तयोरभावात्। इडुपग्रहः = इट्प्रतिषेधः, 'विभाषा गुणे' (२.३.२५) इति पञ्चमी। फलस्य चात्र हेतुत्वं यथा—अध्ययनेन वसतीति। एकाच इति वर्तमाने 'श्र्युकः किति' (७.२.११) इति य इट्प्रतिषेधः ततोऽपि हेतोर्णुवद्भावो वाच्य इत्यर्थः। उदाहरणानि–प्रोर्णोनूयते, प्रोर्णुनाव, प्रोर्णुनः, प्रोर्णुतवानिति॥

## ३७. दयायासश्च।

दयायासः सर्वेऽप्यनुदात्तेतः। 'पलायाञ्चक्रे' इति। 'उपसर्गस्यायतौ' (८.२.१९) इत्युपसर्गस्य लत्वम्॥

## ३८. उषविदजागृभ्योऽन्यतरस्याम्।

'विद ज्ञाने' इति। सत्ताविचारणार्थयोस्त्वात्मनेपदिनोर्लाभार्थस्य चोभयपदिनो ग्रहणं न भवति, परस्मैपदिभ्यामुषिजागृभ्यां जागर्तिनाऽऽदादिकेन साहचर्यादिति भावः। 'विवेद' इति। आम्प्रत्ययसन्नियोगेनादन्तत्वप्रतिज्ञानादत्र गुणो भवत्येव। अत एवाह—'विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति' इति॥

## ३९. भीह्रीभृहुवां श्लुवच्च।

श्लुवत्कार्यापेक्षया सूत्रे षष्ठी, सन्नियोगशिष्टत्वाच्चाम्प्रत्ययोऽपि तेभ्य एव विज्ञायते। 'द्वित्वेत्त्वे' इति। 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' (७.४.७६) इतीत्त्वम्, तत्र 'श्लौ' इति वर्तते। 'न लुमताङ्गस्य' (१.१.६३) इति गुणप्रतिषेधस्तु न भवति, किं कारणम्? 'प्रत्ययलोपे प्रत्ययलक्षणम्' (१.१.६२) इत्यस्याः प्राप्तेरयं प्रतिषेधः। श्रूयमाणत्वादामः॥

## ४०. कृञ्चानुप्रयुज्यते लिटि।

'अनुप्रयुज्यते' इत्यनुशब्दः पश्चादर्थे। तत्र कस्य पश्चादित्यपेक्षायामामः प्रकृतत्वात् तस्यैवेति विज्ञायत इत्याह—'आम्प्रत्ययस्य' इति। योऽयमाम्प्रत्ययो विहितः–कर्मधारयोऽयम्, न तु बहुव्रीहिः—आम्प्रत्ययो यस्मात् सोऽयमाम्प्रत्ययस्तस्येति। तथा हि सत्याम्प्रत्ययवदिति वदामः प्रत्ययस्य प्रकृत्युपलक्षणत्वाद्धातोरामश्च मध्ये कृञः प्रयोग उक्तः स्यात्। 'पश्चात्कृञनुप्रयुज्यते' इति। पश्चाच्छब्दसन्निधावनुशब्दोऽयमनुवादः। 'लिटि परतः' इति। लिटि परतः स्थितो यः कृञ् सोऽनुप्रयुज्यत इत्यर्थः। सूत्रेऽपि लिटीति नानुप्रयोगस्य निमित्तनिर्देशः, किं तर्हि? 'परोक्षे लिट्' (३.२.११५) इत्यनेन विहिते लिटि परभूते यः कृञ् सोऽनुप्रयुज्यत इति वचनव्यक्तिः। इतिकृञशब्दाच्चकारेत्याविपवमनुप्रयुज्यत इति यावत्। 'कृञिति प्रत्याहारेण' इति। 'कृभ्वस्तियोगे' (५.४.५०) इत्यत्र वारस्य 'कृञो द्वितीयतृतीय' (५.४.५८) इत्या कृञो ककारात् प्रत्याहारः। अत्र च प्रमाणमाम्प्रत्यय इत्यत्र कृञ्ग्रहणम्। यदि ह्यत्र स्वरूपग्रहणं स्यात्, तदाऽन्यस्यानुप्रयोगस्याभावादनर्थकं तत्र कृञ्ग्रहणं स्यात्। अत एव विपर्ययोऽपि न भवति–तत्र प्रत्याहारग्रहणम्,इह स्वरूपग्रहणमिति; न ह्यत्र स्वरूपमात्रग्रहणे तत्र कृभ्वस्तीनामनु-

प्रयोगत्वानुवाद उपपद्यते। 'तत्सामर्थ्यात्' इति। प्रत्याहारग्रहणसामर्थ्यादित्यर्थः। 'अस्तेर्भूभावो न भवति' इति। अन्यथाऽसन्देहार्थं 'कृभ्वनुप्रयुज्यते लिटि' इत्येव ब्रूयादिति भावः। तत्र एधि इटि च रूपे विप्रतिपन्ना उभयत्र 'ह एति' (७.४.५२) ईक्षामाह इति केचित्। अन्ये तु तासिसाहचर्यादिटयेव हत्वमिति। अपरे तु साहचर्यादेव सार्वधातुक एवेति हत्वमित्युभयत्र 'ईक्षामास' इति रूपमिति स्थिताः।

इहामन्तमेतदनभिव्यक्तपदार्थकम्, नास्माद्भावकर्मकर्तृविशेषः पुरुषविशेषः सङ्ख्याविशेषो वा गम्यते, केवलं पूर्वापरीभूतानद्यतनकालं परोक्षे साधनादिविशेषाकाङ्क्षं क्रियारूपमर्थमाह। तत्रावश्यं तदाकाङ्क्षानिवृत्तये विशेषवाचिपदमनुप्रयोक्तव्यम्, तस्मादनुप्रयुज्यत इत्यंशो न विधातव्यः? इदं तर्हि प्रयोजनम्—कृभ्वस्तीनामेव यथा स्याद्धात्वन्तरस्य मा भूत्। कस्य पुनः प्राप्नोति? सामान्यवचनस्यानुप्रयुज्येत—कारयां पपाचेति। विशेषवचनस्य वा, तत्रापि सोऽनुप्रयुज्येत—उषामुवोष, विदांविवेद, जागराञ्जजागारेति। तत्समानार्थो वा—उषान्ददाहेतीत्यादि। अर्थान्तरवचनो वा—उषाम्पपाचेति। प्रथमे पक्षे यावदपक्षमेव नानुप्रयुक्तं स्यादधिकोऽप्यर्थो गम्येत पाकादिविशेषो नाम, द्वितीयतृतीययोस्त्वनुप्रयोगेणैव सकलार्थावगतेरामप्रयोगो व्यर्थः स्यात्, चतुर्थे त्वर्थान्तरगत एव विशेषो गम्येत, न त्वामवगतः, तद्गतविशेषाभिधानाय त्वामनुप्रयोगव्यसनम्। अत एव प्रत्याहारान्तर्भूतस्यापि सम्पद्यतेरनुप्रयोगो न भवति, अन्यथा तस्यापि स्यात्। 'सनाद्यन्ता धातवः' (३.१.३२) इत्यतो धात्वधिकाराद्वा धातूपसर्गसमुदायस्य न भविष्यति। एवमपि योऽत्र धातुस्तस्य प्राप्नोति, तस्मात् सामान्यवचनस्य विशेषवचनस्य वा सामान्यवचनं वानुप्रयोक्ष्यते। एवं हि सामान्यस्य सन्निहिते एव विशेषे पर्यवसानात् तद्गतसाधनादिविशेषाभिधानमामन्तर्गतविशेषाभिधानमेव संवर्त्तते। तथा भ्वस्त्योरनुप्रयुज्यमानयोरामन्तवशेन सकर्मकत्वं भवति—'तस्यातपत्रं बिभराम्बभूवे', 'अहं किल व्यपेक्षामास' इति, तदुपपद्यते, तेन द्वयोः सहप्रयोगः। यदि तु सामान्यवचन एव प्रयुज्येत; क्रियाविशेषो न गम्येत, आमन्तस्यैवानभिव्यक्तिः। तस्मात् कृञ्चेत्ययमप्यंशो न विधेयः। इदं तर्हि प्रयोजनं लिट्परस्यैव यथा स्यात्, प्रत्ययान्तरपरस्य मा भूत्। किंपरस्य पुनः प्राप्नोति? कृत्परस्य। न कृत्परस्यानुप्रयोक्ष्यमाणपुरुषविशेषाभिव्यक्तिः; लिटि तु विरुद्धकालत्वैव लृलुटोरपि। लिङादिष्वपि विध्याद्यर्थान्तरप्रतीतिप्रसङ्गः, लुङि भूतमात्रं गम्येत नानद्यतनविशेषः, लटि न पारोक्ष्यं गम्येत।

ननु च यथानुप्रयोगे प्रकृतिवाच्यस्य सामान्यस्यामन्तर्वाच्ये विशेषे पर्यवसानम्, एवं प्रत्ययवाच्यस्याप्यामन्तवाच्येऽनद्यतने परोक्षे च विशेषे पर्यवसानाद्युज्यत एव लुङोऽनुप्रयोगः, तथा 'हृशश्वतोर्लङ् च' (३.२.११६) इति लिडर्थ एव लङ् विधीयते, लङन्तस्यानुप्रयोगः प्राप्नोति? नैष दोषः; एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति। कोऽर्थः? यया प्रकृत्या प्रयोगः प्रारभ्यते तयैव समापनीयः, यथा—खादिरे बध्नाति पालाशे बध्नातीति यूपद्रव्यविकल्पे खादिरेण प्रयोगे प्रारब्धे दैवान्मानुषाद्वा कस्माच्चिदपराधात् खादिरापचारे मुख्ये पलाशे लभ्यमानेऽपि तत्परित्यागेनालभ्यमानस्यापि खादिरस्य प्रतिनिधिना बादरादिना प्रयोगः परिसमाप्यते। एवं हि प्रारब्धः प्रयोगः परिसमापितो भवति। द्रव्यान्तरोपादाने तु प्रयोगान्तरं स्यात्, द्रव्यभेदे क्रियाभेदात्। प्रतिनिधिस्तु मुख्यबुद्ध्यैवोपादीयते, तदवयवानां तत्र भूयसां सम्भवात्। तथेहाऽप्यामन्तेन लिट्प्रयोगः प्रारब्धोऽपरिसमाप्तः साकाङ्क्षः तस्याकांक्षापूरणेन स एव प्रयोगोऽनुप्रयोगेण परिसमाप्यमानो युक्तं यल्लिट्परस्यैवानुप्रयोगेण परिसमाप्यते, तस्मान्नास्ति प्रत्ययान्तरपरस्यानुप्रयोगप्रसङ्गः। तस्माल्लिटीत्ययमप्यंशो न विधातव्यः। इदं तर्हि प्रयोजनम्—अनुप्रयोगः = पश्चात्प्रयोगो यथा स्यात्—ईक्षाञ्चक्रे, चक्रेईक्षामिति मा भूत्। व्यवहितनिवृत्त्यर्थं च—ईक्षां देवदत्तश्चक्रे। कथं व्यवहितनिवृत्तिः? आमपेक्षया पश्चाद्भावस्य तत्रैव मुख्यत्वात्। तदेवं पूर्वनिवृत्तिर्व्यवहितनिवृत्तिश्च प्रयोजनमिति स्थितम्। इह तु 'तान्ह राजा मदयामेव चकार'

इति बह्वृचब्राह्मणे व्यवहितप्रयोगश्छान्दसः । कथं भट्टिकाव्ये—'उक्षां प्रचक्रे नगरस्य मार्गान्', 'बिभयां प्रचकारासौ' इति ? कथं वा 'तं पातयां प्रथमयास', 'प्रभ्रंशयां यो नहुषं चकार' ? वार्तिककारः पृच्छयताम्, यः पठति—'विपर्यासनिवृत्त्यर्थं वाच्यम्, व्यवहितनिवृत्त्यर्थं च' इति ॥

## ४१. विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।

इहोत्तरत्र चानुप्रयोगानुसारेण आमन्ते लकार उन्नेयः । 'विदेर्लोटचाम्प्रत्ययः' इति । निपात्यत इत्यनुषङ्गः, तथा गुणाभावश्चेत्यत्र । एवं लोटो लुगित्यत्र, तथा कृञश्च लोट्परस्यानुप्रयोग इत्यत्र । सर्वमेतदप्राप्तमिति निपात्यते । 'इतिकरणः प्रदर्शनार्थः' इति । सर्वेषां लोड्वचनानामुपलक्षणार्थं इत्यर्थः । किमेवं सति सिद्धं भवतीत्याह—'न केवलम्' इति । प्रचुरप्रयोगत्वात्तु सूत्रे बहुवचनं पठितम् । कश्चित्तु भाष्यवार्तिककारानुक्तत्वादुपलक्षणत्वं नेच्छति, स इतिकरणस्य प्रयोजनं ब्रवीतु ॥

## ४२. अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्निति च्छन्दसि ।

'अकर्' इति । कृञो लुङि सिपि च्लेः 'मन्त्रे घस' (२.४.८०) इत्यादिना लुक्, सिपो हल्ङ्यादिलोपः (६.१.६८) 'अक्रन्' इति । तत्रैव बहुवचनं झिः । 'क्रियात्' इति । तस्यैवाशिषि लिङ्, 'लिङाशिषि' (३.४.११६) इत्यार्धधातुकत्वाद्विकरणाभावः, 'रिङ्शय' (७.४.२८) इति रिङ् । 'द्विर्वचनं च' इति । चकारात् कुत्वं च । 'अभ्युदसीषदत्' इति । सदेर्ण्यन्ताल्लुङि चङ्युपधाया ह्रस्वः, 'चङि' (६.१.११) इति द्विर्वचनम् । 'हलादिः शेषः' (७.४.६०), 'सन्वल्लघुनि' (७.४.९३) इतीत्वम्, 'दीर्घो लघोः' (७.४.९४) । 'भाषायाम्' इति । अन्यतरस्यामित्यनुवृत्तेश्छन्दस्यपि यथादर्शनं भवत्येव । भाषायां त्वेतदेव रूपमिति अभ्युदसीषदविति भाषायामित्युक्तम् ॥

## ४३. च्लि लुङि ।

'इकार उच्चारणार्थः' इति । चकारलकारसंयोगस्य केवलस्योच्चारयितुमशक्यत्वात् । न त्वयमनुबन्धः, प्रयोजनाभावात् । 'चकारः स्वरार्थः' इति । एतदुत्तरसूत्रे वक्ष्यामः । 'अस्य सिजादीनादेशान् वक्ष्यति' इति । यद्येवम्, किमर्थोऽयमुपदिश्यते, यावता श्रवणार्थो वा भवत्युपदेशः ? कार्यार्थो वा ? न चायं च्लिः क्वचिच्छ्रूयते, नापि च्लिवादीनामिवाश्रीयमाणस्यैवास्य किञ्चित् कार्यं दृश्यते, तस्मात् सिचमेवोत्सृज्य तस्यापवादाः क्सादयो विधीयेरन् ? नैवं शङ्क्यम्, एवं हि 'मन्त्रे घस' (२.४.८०) इत्यादिसूत्रे बहूनां ग्रहणं कर्तव्यं स्यात्—गम्यर्थमङो ग्रहणम्, आकारान्तेषु धेटोऽन्तर्भावात् तदर्थं च चङो ग्रहणम्, तस्य हि 'विभाषा धेट्श्व्योः' (३.१.४९) इति चङ्, धात्वन्तरार्थं सिचो ग्रहणम्, यदि जनेः 'दीपजन' (३.१.६१) इति विहितस्य चिणो लुक् छन्दसि दृश्यते ततस्तस्यापि; तान्येतानि त्रीणि चत्वारि वा ग्रहणानि भवन्ति । च्ल्युत्सर्गे पुनः सर्वेषां स्थानिभूतस्य तस्यैवैकस्य ग्रहणम् । ननु च क्रियमाणेऽप्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति—'च्लि लुङि' (३.१.४३), 'च्लेः सिच्' (३.१.४४), 'मन्त्रे घस' (२.४.८०), आदिसूत्रे च यदेतल्लेरिति । एवं तर्हि यदेतत् 'गतिस्थाघुपाभूभ्यः सिचः' (२.४.७७) इति च्लेरिति वक्ष्यामि, तदेव च मन्त्रेघसादिसूत्रेऽप्यनुवर्तिष्यते, तल्लाघवं भवति । यदि

लेरित्युच्यते, किं ल्यवस्थायामेव लुकं करिष्यति ? उताहो आदेशेषु कृतेषु स्थानिवद्भावेन ? यदि ल्यवस्थायामेव लुक्; अगुः, अस्थुः—'सिजभ्यस्तविदिभ्यश्च' (३.४.१०९) इति जुस् न प्राप्नोति ? मा भूत् 'सिज्' इत्येवम्, 'आतः' इत्येवं भविष्यति ? तत्रापि सिज्ग्रहणमनुवर्तते । सिज्ग्रहणं निवर्तिष्यते ? यदि निवर्तिते, अभूवन्नित्यत्रापि प्राप्नोति । केन ? 'सिजभ्यस्त' (३.४.१०९) इति । नेत्याह; इदानीमेव ह्युक्तम्—ल्यवस्थायामेव लुगिति ।

तदेवम्, 'आतः' (३.४.११०) इत्यत्र 'ङितः' इत्येवानुवर्तते, न 'सिचः' इति, लङ्यपि तथैव स्यात् । धेटश्च 'विभाषा धेट्' (३.१.४९), 'लङः शाकटायनस्यैव' (३.४.१११) इति नियमाद्विकल्पो भविष्यति । एवमपि मा हि गाताम्, मा हि स्थाताम्, 'आदिः सिचोऽन्यतरस्याम्' (६.१.१८७) इत्येव स्वरो न प्राप्नोति । अथादेशेषु कृतेषु ततो 'विभाषा घ्राधेट्' (२.४.७८) इत्यत्रापि तथैव स्यात्, धेटश्च 'विभाषा धेट्श्व्योः' (३.१.४९) इति चङपि विकल्पितः । तत्र यथा सिचा लुगलुकौ, तथाऽधात्, अधाताम्, अधुः, अधासीत्, अधासिष्टाम्, अधासिषुरिति सिद्धमिष्टम् । चङोऽपि लुगभावपक्षे अदधत्, अदधताम्, अदधन् इति सिद्धम्, लुक्पक्षे तु प्रत्ययलक्षणेन द्विर्वचने 'अदधात्' इत्यपि चतुर्थं रूपं प्राप्नोति ? न चङो लुकि द्विर्वचनम् 'न लुमताङ्गस्य' (१.१.६३) इति प्रतिषेधात् । बहुवचने तर्हि चङो लुकि अधानित्यनिष्टं रूपं प्राप्नोति, त्रैशब्द्यमेव चेष्यते—अधुः, अधासिषुः, अदधन्निति ? ननु च चङोऽपि लुकि 'आतः' (३.४.११०) इति जुस् भविष्यति, यथा सिचः ? नैतदस्ति; सिज्ग्रहणं तत्रानुवर्तते । निवर्तिष्यते सिज्ग्रहणम् ? यदि निवर्तते 'आतः' (३.४.११०) इत्येतद्धेटश्चङो लुकि विध्यर्थत्वसम्भवान्नियमार्थं न स्यात्, ततश्च 'अभूवन्' इत्यत्र प्रत्ययलक्षणेन सिच इति जुस् प्राप्नोति, इदानीमेव ह्युक्तं कृतेष्वादेशेषु लुगिति ? एवं तर्हि यदेतत् 'सिजभ्यस्त' (३.४.१०९) इति, एतत् 'च्ल्यभ्यस्त' इति वक्ष्यामि । किं कृतं भवति ? लुङ्लुक्यपि च्ल्यभ्यस्तेति जुस् सिद्धो भवति, 'आतः' (३.४.११०) इत्यत्रापि सिज्ग्रहणानुवृत्तेर्नियमात् 'अभूवन्' इत्यत्र जुसभावश्च सिद्धो भवति । कृतेष्वादेशेषु लुगिति सिज्लक्षणः स्वरः सिद्धो भवति । यदि च्ल्यभ्यस्तेत्युच्यते, च्ल्यङ्चङक्षु दोषः—अधुक्षन्, अवोचन्, अपीपचन् अत्रापि जुस् प्राप्नोति । तस्मात् 'सिजभ्यस्त' (३.४.१०९) इत्येव वक्तव्यम् । 'आतः' (३.४.११०) इत्यत्रापि सिज्ग्रहणमेवानुवर्तनीयम्—नियमो यथा स्याद्विधिर्मा भूदिति । ततश्च तदेव स्थितम्—बहुवचने 'अधान्' इति प्राप्नोतीति । यदा च धेटश्चङो लुक् क्रियते तदा न केवलं बहुवचने, सर्वेष्वेव वचनेषु सिज्लक्षणस्वराभावात् स्वरे चातुःशब्द्यप्रसङ्गः । तस्मात् 'गातिस्थाघुपा' (२.४.७७. इत्यत्र सिच इत्येव वक्तव्यम्; ततश्च तदेव स्थितम्—तान्येव त्रीणि ग्रहणानीति ।

प्रत्युताक्रियमाणे उत्सर्गे मन्त्रेघसादिसूत्रे द्वयोरेव ग्रहणम्, कथम् ? घेटो जनेश्च चङ्चिणौ विकल्पितौ, तत्र यानि लुक उदाहरणानि, सिच एव तानि भविष्यन्ति । कोन्वत्र विशेषः ? अयमस्ति विशेषः—सिचो लुकि 'आदिः सिचोऽन्यतरस्याम्' (६.१.१८७) इत्यनेन स्वरेण भवितव्यम्, चङ्चिणोस्तु नेति । तस्माद्द्वयोरपि पक्षयोस्त्रीणि ग्रहणानि, नार्थश्चोत्सर्गेण ? तदुच्यते—असति ह्युत्सर्गे 'मन्त्रे घस' (२.४.८०) इत्यत्र येभ्यः सिचो लुक् क्रियते तेषां 'आदि सिचोऽन्यतरस्याम्' (६.१.१८७) इत्येष स्वरः प्राप्नोति । सति त्वस्मिंल्लेरिति तदवस्थायामेव लुग्विधानात् सिजभावात् यथायथं स्वरः सिद्धो भवति । तथाऽऽकारान्ते सिचो लुकि क्रियमाणे 'सिजभ्यस्त' (३.४.१०९), 'आतः' (३.४.११०) इति जुस् प्राप्नोति, लेस्तु लुक्यन्तर्भाव एव भवति । तस्मादुत्सर्गः कर्तव्यः । तथा 'शल इगुपधादनिटः क्सः' (३.१.४५) इत्यत्रानिट इति लेर्विशेषणं यथा स्यात् । असति पुनश्च्ल्युत्सर्गे तस्यैव तद्विशेषणं भवति धातोः, न विद्यते यस्मात् परस्येडिति, तत्र च लुङादेशानां सार्वधातुकत्वात् संप्रतिपन्नमनिट्त्वमव्यभिचारादविशेषणमिति प्रत्ययान्तरगतं तदाश्रयणीयम्—न विद्यते प्रत्ययान्तरस्य

स्मात् परस्येडिति । ततो गुहेर्न स्यात्—'अघुक्षत्' इति, विद्यते ह्यस्मात् परस्य गूहितेत्यादावित् स्वरत्यादिसूत्रेण विकल्पितम् । अथापि पाक्षिकेणेड्भावेनानिडिति व्यपदिश्येत ? नित्यं क्सः प्राप्नोति, इण्युत्सर्गे पुनरनिड् इति तस्यैव विशेषणं भवति । स च कदाचिदनिट्, कदाचित्सेट् । यदानिट् तदा क्सः, यदा सेट् तदा सिजिति सिद्धमिष्टम्—अघुक्षत्, अगुहीदिति । तस्माच्छ्ल्युत्सर्गः कर्तव्य इति । स्थानित्वेन विधानं कर्तव्यमित्यर्थः ॥

## ४४. च्लेः सिच् ।

'इकार उच्चारणार्थः' इति । न त्वनुबन्धः । यद्येवम्, असंस्तेत्यत्र सिजन्तस्याङ्गस्यात्मनेपदं ङित्तमपेक्ष्य 'अनिदिताम्' (६.४.२४) इति नलोपः प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयं 'हनः सिच्' (१.२.१४) इति हन्तेः परस्य सिचः कित्त्वं शास्ति, तज्ज्ञापयति—न सिजन्तस्योपधालोपो भवतीति । यथा चैतज्ज्ञापकं तथा तत्रैवोक्तमिति तत्रैवावधार्यम् । 'चकारः स्वरार्थः' इति । अन्तोदात्तार्थः । ननु सिचोऽनच्कत्वात् कथं चकारः स्वरार्थः, इटि कृते साच्को भवति ? एवमपि प्रत्ययस्वरेण सिद्धम् । न सिध्यति, नाप्राप्ते स्वरान्तरे विधीयमानमागमानुदात्तत्वं प्रत्ययस्वरं बाधेत ? एवं तर्हि च्लेश्चित्त्वात् स्थानिवद्भावाच्चित्स्वरो भविष्यति, तत्राह–'आगमानुदात्तत्वं हि' इति । 'चित्स्वरमपि बाधेत' इति । स्थानिवद्भावकृतम् । ननु च यदि 'मा हि लावीत्' इत्यत्रागमानुदात्तत्वं स्यात्, च्लेश्चित्करणमनर्थकं स्यात् ? एवं मन्यते—च्लेश्चकारो मन्त्रेघसादिसूत्रे सामान्यग्रहणे चरितार्थः, अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्, न लिटः, ततश्च 'आमः' (२.४.८१) इत्यत्र निरनुबन्धकस्य लेरसम्भवाल्लेरिति नानुवर्तेत, ततश्च परत्वादन्तरङ्गत्वाच्च तिबादिषु कृतेषु पश्चाल्लुकि कार्यामित्यस्य प्रत्ययलक्षणेन तिङन्तत्वात् 'देवदत्तः कारयांचकार' इति तस्य च निघातः, तस्माच्चानिघातः स्यात् । तस्मादाम इत्यत्र लेरित्यनुवर्तनीयम् । तस्य च तत्रानुवृत्तिः पूर्वत्र सामान्यग्रहणे सत्युपपद्यते । तस्माच्च्लेश्चकारस्य चरितार्थत्वात् स्थानिवद्भावात् प्राप्तं चित्स्वरमपि बाधेतेति संभावने लिङ्, संभाव्यते बाधनमित्यर्थः । अनुबन्धान्तरेणापि सामान्यग्रहणसिद्धेः चकारानुरोधेन चित्स्वर एव भविष्यतीति शक्यते वक्तुमिति भावः ।

'स्पृशमृश' इति । 'स्पृश स्पर्शने' (धा.पा. १४२२), 'मृश आमर्शने' (धा.पा. १४२५) 'कृष विलेखने' (धा.पा. १२८६)–इत्येतेभ्यः क्से प्राप्ते, 'तृप प्रीणने' (धा.पा. ११९५), 'दृप हर्षविमोचनयोः' (धा.पा. ११९६)–आभ्यां पुषादित्वादङि, प्राप्ते सिजपि पक्षेऽभ्यनुज्ञायते । 'अस्पृक्षत्' इति । व्रश्चादित्वे 'षढोः कः सि' (८.२.४१) इति कत्वम् । 'अस्प्राक्षीत्' इति । 'अनुदात्तस्य चर्दुपधस्य च' (६.१.५९) इति पक्षे अमागमः, ऋकारस्य यण्, 'वदव्रज' (७.२.३) इत्यादिनाऽकारस्य वृद्धिः, अमभावपक्षे ऋकारस्यैव वृद्धिः । एवमुत्तरत्रापि ॥

## ४५. शल इगुपधादनिटः क्सः ।

'शलन्तो यो धातुरिगुपधः' इति । ननु च्लेर्गुणनिमित्तत्वादकृत एव क्से लावस्थायामेव गुणः प्राप्नोति, ततश्च 'इगुपधात्' इति विशेषणं न प्रकल्प्यते ? नैष दोषः; विशेषणसामर्थ्यात् प्रागेव गुणात् क्सो भविष्यति । ननु च कृतेऽपि गुणे भूतपूर्वगत्या विहितविशेषणाश्रयणेन वा क्सो भविष्यति, कित्करणमिदानीं किमर्थं स्यात् ? 'क्सस्याचि' (७.३.७२) इति विशेषणार्थम् । 'सस्याचि' इत्युच्यमाने पुनर्वहिनिकमिकविभ्यः से वत्सौ वत्साः –अत्रापि प्राप्नोति ? 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (हं.प. १०३) इत्यनर्थकत्वान्न भविष्यति । एवमपि

वृश्छणादिषु तृणादिभ्यः से प्रसङ्गः—तृणान्यस्मिन् देशे सन्ति तृणसौ तृणसा इति ? नैतदेवम्; 'घोर्लोपो लेटि वा' (७.३.७०) इति प्रकरणे—धातुप्रत्ययानां ग्रहणम्, किं च 'लुग्वा दुहदिह' (७.३.७३) इत्यत्रापि 'क्सस्याचि' (७.३.७२) इत्यतः क्सस्येति वर्तते, तेन दुहादिषु यस्य सम्भवः, पूर्वसूत्रेऽपि तस्यैव ग्रहणं भविष्यति। तदेवं कित्करणसामर्थ्यात् गुणो न भवतीति स्थितम्। 'च्लेरनिटः' इति। यद्यपि च्लेः सिजादिभिरादेशैर्भवितव्यमिति क्वचिदप्यश्रवणान्न सेट्त्वमनिट्त्वं वा, तथापि 'दुह् ल' इति स्थिते क्सस्यायं विषय इति सिचा न भाव्यम्। क्सोऽपि तावन्न भवति, यावदस्यानिट्त्वं न ज्ञातम्, तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधात् सेट्त्वमनिट्त्वं च निरूप्यते इति विशेषणोपपत्तिः। 'अधुक्षत्' इत्यादि। 'दादेर्धातोर्घः' (८.२.३२), 'एकाचो बशो भष्' (८.२.३७)। 'अलिक्षत' इति। 'लिह आस्वादने' (धा.पा. १०१६), 'हो ढः' (८.२.३१)। 'भिदिर् विदारणे' (धा.पा. १४३९), 'छिदिर् द्वैधीकरणे' (धा.पा. १४४०), 'कुष निष्कर्षे' (धा.पा. १५१८), 'मुष स्तेये' (धा.पा. १५३०)॥

## ४६. श्लिष आलिङ्गने।

'श्लिषेर्धातोः' इति। 'श्लिष आलिङ्गने' (धा.पा. ११८६) इत्यस्य, न तु 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' (धा.पा. ७०१-७०४) इत्यस्य, आलिङ्गने वृत्त्यभावात्, अनिट इति चाधिकारात् सानुबन्धकत्वाच्च। 'अत्र नियमयार्थमेतत्' इति। ननु श्लिषिरयं पुषादिः, तथा च प्रत्युदाहरणे अङ् भवति। ततश्च पुषादिपाठात् प्राप्तमङं बाधित्वाऽऽलिङ्गने क्सो यथा स्यादित्येवं विधिसम्भवान्नियमो नोपपद्यते। अस्तु विधिः, एवमप्यालिङ्गने क्सः, अन्यत्राङिति सिद्धमिष्टम्। सत्यम्; सिद्धं परस्मैपदे, आत्मनेपदेत्वङभावादालिङ्गने च पूर्वेण क्सः प्राप्नोति, इष्यते च तत्राप्यालिङ्गने क्सोऽन्यत्र सिच्, तच्च नियमे सत्युपपद्यते। स च नियमो नोपपद्यते, विधेयभावात्? योगविभागात् सिद्धम्—श्लिषः इत्येको योगः श्लिषश्च क्सो भवति। किमर्थमिदम्? पुषाद्यङो बाधनार्थम्। यथैव तर्ह्यङं बाधते तथा चिणमपि बाधेत—समाश्लेषि कन्या देवदत्तेनेति? 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' (व्या.प. ९) इति तत्रालिङ्गनेऽनालिङ्गने च श्लिषः क्सो भवति। इदमिदानीं किमर्थम्? नियमार्थम्—आलिङ्गन एव, नान्यत्र। योगविभागसामर्थ्याद्या च यावती च क्सस्य प्राप्तिः सा सर्वा नियम्यते, न त्वनन्तरस्य विधिर्वा भवतीति। श्लिष इति या प्राप्तिः, अङ्बाधनार्था सैव। एवमपि नियमो नोपपद्यते, कथम्? श्लिष इत्येतदङ्बाधनार्थम्। न च तदत्यन्तायाङं बाधितुं प्रभवति; पुषादिपाठसामर्थ्यात्, ततश्चाङ्क्सयोः सर्वत्र विकल्पे प्राप्ते, द्वितीयो योगः—आलिङ्गने क्स एव नित्यं यथा स्यान्मा कदाचिदङ् भूदित्येवमर्थः स्यात्, किं तदुच्यते—नियमो नोपपद्यते इति! ननु तत्रभवताऽपि मुखान्तरेण नियम एवोक्तः। एतावांस्तु विशेषः—मया प्रत्ययनियम उक्तः—आलिङ्गन एव क्स इति, त्वया पुनरर्थनियमः—आलिङ्गने क्स एवेति, सर्वथा नियमाश्रयमुच्यामहे। तत्र लक्ष्यानुरोधाद्विधेयविभक्तिनिर्देशेन प्रधानत्वाद्वा प्रत्ययनियम एव भविष्यति॥

## ४७. न दृशः।

'पूर्वेण' इति। 'शल इगुपधात्' (३.१.४५) इत्यनेन। 'अङ्सिचौ भवतः' इति। परस्मैपदेष्वन्यत्र सिजेव। 'अदर्शत्' इति। 'ऋदृशोऽङि गुणः' (७.४.१६)। 'अद्राक्षीत्' इति। 'सृजिदृशोर्झल्यमकिति' (६.१.५८)। अथ 'च्लेः सिच्' (३.१.४४) इत्यस्यानन्तरं क्सस्य बाधनार्थं सिजेव कस्मान्न विहितः, इरित्त्वसामर्थ्यादङपि भविष्यति? सत्यम्; तत्रापि 'दृशश्च' (का.वा. ११०८) इति चकारः कर्तव्य इति लाघवे नास्ति विशेषः॥

## ४८. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।

'चकारो विशेषणार्थः' इति । 'चङि' इत्यत्र 'अङि' इत्युच्यमाने 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३.१.५२), 'षिद्भिदादिभ्योऽङ्' (३.३.१०४) अत्रापि प्राप्नोति । यदि पुनरयं ङो विधीयते चकारः शक्योऽकर्तुम् । चिन्त्यं प्रयोजनमस्य । 'अशिश्रियत्' इत्यादि । अत्र चङि धातुरङ्गं चङन्तं तु तिपि तत्र चङाश्रयस्य गुणस्य क्ङितीति प्रतिषेधः । चङन्तस्य तु तिपमपेक्ष्य लघूपधगुणः प्राप्नोति । न च तस्यापि चङमेव ङितमपेक्ष्य प्रतिषेधः, किं कारणम्, क्ङितीति निमित्तसप्तमी ? नैष दोषः; अन्तरङ्गावियङुवङौ अन्तर्भूतचङपेक्षत्वात्, बहिरङ्गो गुणो बहिर्भूततिबपेक्षत्वात् । 'अकारयिषाताम्' इति । ण्यन्तात् कर्मणि लुङ, द्विवचनम्, आताम् ।

'कमेरुपसङ्ख्यानम्' इति । ननु कमेर्णिङ विहितः, न च प्रकृत्यन्तरं कमिः सम्भवति, णिङन्तास्तु सूत्रेणैव सिद्धं तत्राह—'आयादय आर्धधातुके वेति यदा णिङ नास्ति' इति । 'णिङपक्षे सन्वद्भावः' इति सन्वत्सूत्रे चङपरो णिरित्याश्रयणात् । तत्र हि 'सन्वल्लघुनि चङि' इति वक्तव्ये परग्रहणं बहुव्रीह्यर्थम्, तत्र णिरन्यपदार्थः, अन्यस्यासम्भवात् ॥

## ४९. विभाषा धेट्श्व्योः ।

'अङोऽप्यत्र विकल्पः' इति । 'जृस्तम्भु' (३.१.५८) इत्यादिना । 'अश्वत्' इति । 'श्वयतेरः' (७.४.१८) । 'अश्वयीत्' इति । 'ह्म्यन्त' (७.२.५) इत्यादिना सिचि वृद्धेः प्रतिषेधाद्गुणः । 'अधिषाताम्' इति । कर्मणि द्विवचनम्, आताम् । 'स्थाघ्वोरिच्च' (१.२.१७) इति कित्त्वेत्त्वे ॥

## ५०. गुपेश्छन्दसि ।

'यस्मादायप्रत्ययो नास्ति तत्रायं विधिः' इति । सूत्रे केवलस्योच्चारणात् 'गुप गोपने' (धा.पा.९७०), 'गुप व्याकुलत्वे' (धा.पा. १२३४), इत्यनयोस्तु ग्रहणं न भवति, छन्दसि दृष्टानुविधानात् । दर्शने तु तयोरपि ग्रहणम् । 'अजूगुपतम्' इति । 'गुपू रक्षणे' (धा.पा. ३९५), 'तस्थस्थमिपाम्' (३.४.१०१) इति थसस्तम्, 'तुजादीनां दीर्घोऽभ्यासस्य' (६.१.७) । 'अगोप्तम्' इति । ऊदित्त्वादिडभावपक्षे 'झलो झलि' (८.२.२६) इति सिचो लोपः । 'अगोपायिष्टम्' इति । आयप्रत्ययान्तात् सिच् ॥

## ५१. नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।

'अर्द गतौ याचने च' इति । 'अर्द हिंसायाम्' (धा.पा. १८२८) इत्यस्यापि ग्रहणम्, यदि च्छन्दसि दर्शनमस्ति । 'एतेभ्यः' इति । तत्रोनयतिश्चुरादिः, ध्वनिरपि 'गर्व माने इति प्रागेतस्माद-दन्ताः' इत्यधिकारे चुरादिः पठितः, घटादौ चापि पठ्यते । एलयतिश्चुरादिः, अर्दयतिर्हेतुमण्ण्यन्तः । 'पूर्वेण' इति । 'णिश्रि' (३.१.४८) इत्यादिना । 'ऊनयीः' इति । मध्यमपुरुषैकवचनम्, पूर्ववत् वृद्धौ प्रतिषिद्धायां गुणः, 'न माङ्योगे' (६.४.७४) इत्याडागमप्रतिषेधः । 'मा त्वायतो जरितुः काममूनयीः' (ऋ. १.५३.३)— इदं प्रतिसव्यस्य ऋषेर्वचनम् । त्वायतः = त्वामिच्छतः, जरितुः = स्तोतुर्मम, कामम् = अभिलाषम् । मा ऊनयीः

= ऊनं मा कार्षीरित्यर्थः । प्रायेण तु तिबन्तं पठ्यते, कृताडागमं च, तदन्यत्र द्रष्टव्यम् । '[1]औनिनत्' इति । णिचि 'अजादेर्द्वितीयस्य' (६.१.२) इति नशब्दस्य द्विर्वचनम् । प्रायेण तूदाहरणवदिदमपि तिबन्तं पठ्यते । 'ध्वनयीत्' इति । तिप्, 'न माङ्योगे' (६.४.७४) इत्याडागमप्रतिषेधः । 'आर्दिदत्' इति । 'अजादेर्द्वितीयस्य' (६.१.२), 'न न्द्राः संयोगादयः' (६.१.३) इति दशब्दस्य द्विर्वचनम् ॥

## ५२. अस्यतिवक्तिख्यातिभ्योऽङ् ।

'ब्रूआदेशो वा' इति । वाशब्दः समुच्चये । एवमुत्तरत्रापि । '[2]पुषादित्वादेव सिद्धे' इति । परस्मैपदेषु । 'पर्यास्थत्' इति । 'उपसर्गादस्यत्यूह्योर्वावचनम्' (वा. ४९) इत्यात्मनेपदेऽङि 'अस्यतेस्थुक्' (७.४.१७) 'अवोचत' इति । 'वच उम्' (७.४.२०) । 'आख्यात्' इति । 'आतो लोप इटि च' (६.४.६४) ॥

## ५३. लिपिसिचिह्वश्च ।

लिपिसिचिसहितो ह्वा इति 'मयूरव्यंसकादयः' (२.१.७२) इति समासः । समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वं स्यात्, इतरेतरयोगे बहुवचनम् । ङसौ 'आतो धातोः' (६.४.१४०) इत्याकारलोपः । 'योगविभाग उत्तरार्थः' इति । 'अस्यतिवक्तिख्यातिलिपिसिचिह्वः' इत्येकयोगे त्वस्यादीनामप्युत्तरत्रानुवृत्तिः स्यात्, ततश्च तेभ्योऽप्यात्मनेपदे विकल्पः स्यात् ॥

## ५४. आत्मनेपदेष्वन्यतरस्याम् ।

'अलिप्त, असिक्त' इति । 'झलो झलि' (८.२.२६) इति सलोपः, 'लिङ्सिचावात्मनेपदेषु' (१.२.११) इति कित्त्वात् गुणाभावः ॥

## ५५. पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।

एकेनैवादिशब्देन प्रत्येकं सम्बन्धादेव सिद्धे द्वयोरुपादानं चिन्त्यप्रयोजनम् । 'दिवाद्यन्तर्गणः' इति । 'पुष पुष्टौ' (धा.पा. ११८२), 'शुष शोषणे' (धा.पा. ११८३) इत्येवमादिरा गणसमाप्तेः । यत्तु मध्ये 'ञिष्विदा स्नेहनमोचनयोः' इति वृत्करणं तत्रत्यावान्तरपरिसमाप्त्यर्थम् । एतच्च 'अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वात्' इति वार्तिककारवचनाद्विज्ञायते । 'न भ्वादिः' इति । 'पुष पुष्टौ' (धा.पा. ७००), 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' (धा.पा. ७०१-७०४) इत्येवमादिः, अस्य यदि ग्रहणं स्यात् पुषाद्यनन्तरं पाठाद् द्युतादीनां पृथग्ग्रहणं न कुर्यात् । 'क्र्याद्यन्तर्गणो वा' इति । 'पुष पुष्टौ' (धा.पा. १५२९), 'मुष स्तेये' (धा.पा. १५३०) इत्येवमादिः । तत्र हि चत्वार एव पठ्यन्ते, तत्र यदि ते जिघृक्षिताः स्युर्लृदित एव तान् कुर्यात्; स्वरितेत्वादेरपि तेनैव सिद्धत्वात् । अथ पुषादयो द्युतादयश्च लृदित एव कस्मात्

1. 'औनिन इति'—मुद्रितपाठः 2. पुषादिपाठादेव—काशिका.

पठिताः ? अशक्यास्ते तथा पठितुम्, आदितामीदितामुदितामूदितां च तत्र भावात्। तद्यथा—पुषादिषु तावत् 'ञिष्विदा गात्रप्रक्षरणे' (धा.पा. ११८८), 'मदी हर्षे' (धा.पा. १२०८), 'शमु उपशमे' (धा.पा. १२०१) 'षिधू राद्धौ' (धा.पा. ११९२) इति; द्युतादिष्वपि 'श्विता वर्णे' (धा.पा. ७४२) 'ञिमिदा स्नेहने' (धा.पा. ७४३), 'ञिष्विदा स्नेहनमोचनयोः' (धा.पा. ७४४) 'स्रंसु ध्वंसु भ्रंसु अवस्रंसने' (धा.पा. ७५४–७५६), 'स्यन्दू प्रस्रवणे' (धा.पा. ७६१), 'कृपू सामर्थ्ये' (धा.पा. ७६२) इति। 'अद्युतत्, अश्वितत्' इति। 'द्युद्भ्यो लुङि' (१.३.९१) इति पक्षे परस्मैपदम्। 'अलोटिष्ट' इति। 'लुट लुठ प्रतिघाते' धा.पा. ३४३)॥

## ५६. सर्त्तिशास्त्यर्त्तिभ्यश्च।

शासेरदादित्वाच्छपो लुक्, इतरत्र निपातनात्। 'शासु अनुशिष्टौ' (धा.पा.१०७५) इति। सर्त्त्यर्त्तिभ्यां परस्मैपदिभ्यां साहचर्यादस्यैव ग्रहणम्, न तु 'आङः शासु इच्छायाम्' (धा.पा. १०२२) इत्यात्मनेपदिन इति दर्शयति। 'ऋ गतौ' इति। 'ऋ गतिप्रापणयोः' (धा.पा. ९३६) इति भौवादिकः, 'ऋ सृ गतौ' (धा.पा.- १०९८,१०९९) इति जौहोत्यादिकः। द्वयोरप्यत्र निर्देश इति केचित्, वयं तु जौहोत्यादिकयोरेव अर्तिसर्त्योर्ग्रहणं मन्यामहे। 'असरत्' इति। 'ऋदृशोऽङि गुणः' (७.४.१६)। 'अशिषत्' इति। 'शास इदङ्हलोः' (६.४.३४)। 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम्।

'पृथग्योगकरणमात्मनेपदार्थम्' इति। अन्यथा 'पुषादिद्युताद्यॢदित्सर्त्तिशास्त्यर्त्तिभ्यः' इत्येकमेव योगं कुर्यात्। एवं हि पृथग्विभक्तिनिर्देशश्चकारश्च न कर्तव्यो भवति। 'समरन्त' इति। 'समो गम्यृच्छि' (१.३.२९) इत्यात्मनेपदम्, 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५) इत्याडभावः, छन्दसत्वादस्य प्रयोगस्य—'समन्यवो यत्समरन्त सेनाः' (ऋ. ७.२५.१), 'सङ्कल्पा अस्य समरन्त'। तथा भट्टिकाव्ये 'समारन्त ममाभीष्टाः सङ्कल्पास्तव्युपागते' इति। कश्चिदाह—भाष्यविरुद्धमिदम्, भाष्यकारेण हि 'समो गम्यृच्छि' (१.३.२९) इत्यत्र 'मासमृषातां मासमृषत' इति आत्मनेपदे सिजुदाहृत इति। अत्राहुः—शासिसाहचर्यादर्तिसर्त्योरविद्यमानशपोर्जौहोत्यादिकयोरिह ग्रहणम्, 'समो गम्यृच्छि' (१.३.२९) इत्यत्र तु भौवादिकस्याप्यर्त्तेर्ग्रहणम्, तत्र भौवादिकेऽर्तौ सिच उदाहरणमविरुद्धमिति॥

## ५७. इरितो वा।

'अभित्त' इति। स्वरितेत्वादात्मनेपदम्॥

## ५८. जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च।

'अस्तम्भत्' इति। 'अनिदिताम्' (६.४.२४) इत्युपधालोपः।

'अन्यतरोपादानेऽपि रूपत्रयं सिध्यति' इति। कथम् ? यदि तावत् ग्लुचिरुपादीयते तस्मादङ्सिचोः अग्लुचत्, अग्लोचीदित्येतद्द्वयं सिध्यति। ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति। अथ ग्लुञ्चिरुपादीयते तस्यादग्लुचत्,

अग्लुञ्चीदिति रूपद्वयं सिध्यति, ग्लुचेस्तु सिचि तृतीयमग्लोचीदिति, किमर्थं तर्हि उभयोरुपादानमित्यत्राह- 'अर्थभेदात्तु' इति। 'केचित्' इत्यादि। इदं भाष्यविरुद्धम्; भाष्यकारो हि 'अनेकार्थत्वाद्धातूनामर्थभेदो न प्रयोजक उभयोपादानस्य' इत्यन्यतरोपादानं प्रत्याख्यातवान् ॥

## ५९. कृमृदृरुहिभ्यश्छन्दसि।

'अमरत्' इति। व्यत्ययेन परस्मैपदम् ॥

## ६०. चिण् ते पदः।

'सामर्थ्यात्' इति। धातोरात्मनेपदित्वात् परस्मैपदबहुवचनस्य स्थाने यस्तशब्दः 'तस्थस्थमिपाम्' (३.४.१०१) इति विहितः, तस्यास्मिन् विषयेऽसम्भवः। 'सामर्थ्यात्', 'उदपादि' इति। 'चिणो लुक्' (६.४.१०४)। 'उदपत्सत' इति। 'आत्मनेपदेष्वनतः' (७.१.५) इत्यदादेशः। इह वेति निवृत्तम्, उत्तरत्रान्यतरस्यांग्रहणात् ॥

## ६१. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्।

'जनी प्रादुर्भावे' (धा. पा. ११४९), 'बुध अवगमने' (धा.पा. ११७२) इति। 'जन जनने' (धा.पा. ११०५), 'बुध बोधने' (धा पा. ८५८) इत्येतयोस्तु परस्मैपदिनोरिह ग्रहणं न भवति, दीप्यादिभिरात्मनेपदिभिः साहचर्यात्। तेन परस्मैपदिभ्यां कर्मव्यतीहारे आत्मनेपदैकवचनेऽपि तशब्दे चिण् न भवति। यदि परस्मैपदिनोरिह ग्रहणं स्यात्, आत्मनेपदिनोर्न स्यात्, सानुबन्धकत्वात्। कर्तरि चायं विकल्पः, भावकर्मणोस्तु 'चिण् भावकर्मणोः' (३.१.६६) इति नित्यमेव चिण् भवति, परत्वादिह कर्तरीत्यनुवृत्तेर्वा ॥

## ६२. अचः कर्मकर्त्तरि

'कर्मकर्त्तरि' इति। यत् कर्म भूत्वा कर्ता भवति तत्रेत्यर्थः। 'प्राप्तविभाषेयम्' इति। 'कर्मवत्कर्मणा' (३.१.८७) इत्यतिदेशेन नित्यं चिणः प्राप्तेः। 'अकारि कटो देवदत्तेन' इति। अत्र शुद्धे कर्मणि 'चिण् भावकर्मणोः' (३.१.६६) इति नित्यमेव चिण् भवति। नन्विह कर्तरीत्यनुवर्तिष्यते, यद्येवम्, शुद्धे कर्तरि स्यात्, कर्मणीति वाक्यभेदेन कर्ता विशेषयिष्यते--कर्मणि कर्तरीति? नैतदेवं शक्यते लब्धुम्, कर्मणीत्युच्यमाने कर्तृनिवृत्तिरेव स्यात्, चकारेऽपि क्रियमाणे कर्मणि च भवति, कर्तरि च भवतीत्यधिकरणयोरेव समुच्चयः स्यात्, न सामानाधिकरण्ये प्रमाणमस्ति ॥

## ६३. दुहश्च।

अप्राप्तविभाषेयम् 'न दुहस्नुनमां यक्चिणौ' (३.१.८९) इति चिणः प्रतिषेधात्। तत्र दुहिग्रहणे यक्प्रतिषेधार्थं चिण्ग्रहणं स्वाद्यर्थम्। 'अदुग्ध' इति। 'क्सस्याचि' (७.३.७२), 'लुग्वा दुहदिह' (७.३.७३) इति क्सस्य लुक् ॥

## ६४. न रुधः ।

'रुधिर् आवरणे' इति । 'अनो रुध कामे' (धा.पा. ११७४) इत्यस्य तु ग्रहणं न भवति, कर्तृस्थभावकत्वेन कर्मकर्तुरभावात् ॥

## ६५. तपोऽनुतापे च ।

'कर्मकर्तरि' इति । 'तपस्तपःकर्मकस्यैव' (३.१.८८) इति यत्र कर्मवद्भावो विहितः । 'तत्र भावकर्मणोरपि' इति । अपिशब्दात् 'कर्मवत्कर्मणा' (३.१.८७) इति यत्र कर्मवद्भावोऽतिदिष्टस्तत्रापि भवति । 'अतप्त तपस्तापसः' इति । अस्यार्थम् 'तपस्तपःकर्मकस्यैव' (३.१.८८) इत्यत्र वृत्तिकार एव वक्ष्यति । 'अन्ववातप्त पापेन' इति । पापेनेति पूर्वं यत्पापं कर्म कृतं तेन पश्चात्तप्तोऽभ्याहत इत्यर्थः । शुद्धे कर्मणि लकारः, पापेनेति कर्तरि तृतीया । कर्माविवक्षायां तु शोकार्थे वा तपौ भावे लकारः, पापेनेति हेतौ तृतीया । यदाभ्याहननांशस्य तपेः कर्मस्थभावस्य कर्मकर्ता विवक्ष्यते, तदा 'कर्मवत्कर्मणा' (३.१.८७) इत्यतिदेशादात्मनेपदम्, तदापि हेतौ तृतीया ॥

## ६६. चिण् भावकर्मणोः ।

'चिण्ग्रहणं विस्पष्टार्थम्' इति । 'चिण् ते पदः' (३.१.६०) इत्यतस्तेशब्दवदनुवृत्तेः । यत्तु 'दीपजन' (३.१.६१) इत्यादौ अन्यतरस्यांग्रहणम्, तन्न; 'रुध' इति तत्प्रतिषेधविधावेव निवृत्तम्, अन्यथा प्रतिषेधविधानमनर्थकं स्यात् । न च प्रतिषेधस्यानुवृत्तिशङ्का, प्राप्तिपूर्वको हि प्रतिषेधः । न च भावकर्मणोः केनचित् चिणः प्राप्तिरस्ति ॥

## ६७. सार्वधातुके यक् ।

इहाशिषि लिङि लिटि चान्तरेणापि विकरणं सर्वेष्वेव धातुषु तिङामेव सद्भावे भावकर्मकर्तारस्त्रयोऽपि प्रतीयन्ते—भविषीष्ट त्वया, कृषीष्ट घटः, भूयात्, क्रियात्, बभूवे, चक्रे घटः, बभूव, चकारेति । अस्तिजुहोत्यादौ कर्ता ।

> क्वचित्तिङामभावेऽपि प्रतीयन्ते त्रयोऽप्यमी ।
> अशक्यकारि गच्छेति चिणः सन्निधिमात्रतः ॥
>
> अधोगबिभरित्यादौ धातुमात्रेऽपि कर्तृधीः ।
> तथा व्यतिस इत्यादौ धात्वभावेऽपि कर्तृधीः ॥

एवं स्थिते भूयोविषयाभ्यामन्वयव्यतिरेकाभ्यां शब्दार्थावसायः । व्यभिचारभूमिषु तु तस्मिंस्तस्मिन् विषये तस्य तस्य शब्दस्य स स महिमेति कल्पयितुमुचितम् । न पुनः क्वचिद्व्यभिचारदर्शनेन सर्वत्रानाश्वासः । तादृशो

धान्वयव्यतिरेकौ तिङामेवेति तेषामेव भावकर्तारो वाच्याः। सूत्रकारोऽप्याह—'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९) इति, लादेशाश्च तिङः, ततोऽपि तेषामेव तेऽर्था इति मन्यमान आह—'भावकर्मवाचिनि सार्वधातुके परतः' इति। उत्तरसूत्रे च कर्तृवाचिनि सार्वधातुके परत इति। 'शय्यते' इति। 'अयङ् यि क्ङिति' (७.४.२२)। अथ यदा द्वौ कर्तारौ बहवो वा, तदा कथम्—आस्यते भवद्भ्याम्, आस्यते भवद्भिः—द्विवचनबहुवचने कस्मान्न भवतः? भावे भेदाभावात्। धात्वर्थो हि भावः।

कर्तृभेदेऽपि नावश्यं धात्वर्थो भिद्यते यतः।
एकामेव क्रियाव्यक्ति बहुरूपावयस्त्वपि॥

दृष्टभेते पचन्तीति कर्मभेदोऽपि तादृशः।
पर्यकस्यां क्रियाव्यक्तौ पच्यन्ते तण्डुला इति॥

न कालभेदे शब्दैक्यमास्यासिष्यत आस्यते।
पाको पाका इति त्वत्र शब्दैक्यादेकशेषता॥

अतश्च—

निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना॥ (वा.प. २-४५१) इति।

तदेवमाख्यातेन भावस्वरूपगतो भेदः प्रतीयत इति द्विवचनबहुवचनाभावः। यत्र तु स्वरूपगत एव भेदस्तत्र भवत्येव। यथा—उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते इति। उष्ट्राणां ह्यासिकाः स्वत एव विलक्षणाः, हताश्च नानाप्रकारं शेरते उत्ताना अवताना विकीर्णकेशा विस्रस्तवस्त्रा इति तत्साम्यादाख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदावभासाद्बहुवचनम्। इवशब्दप्रयोगमन्तरेणापि चेवार्थावगतिर्भवति, तदयमर्थः—यादृशानि हतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्त इति। केचित् त्वत्र कर्मणि लकारमिच्छन्ति, उष्ट्रासिकाहतशायिकालक्षणस्य भावस्य 'कालभावाध्वगन्तव्याः' (वा.प. ३.७.६७) इति कर्मत्वात्, यथा—गोदोहः सुप्यते इति।

'ककारो गुणवृद्धिप्रतिषेधार्थः' इति। मृज्यत इत्यत्र वृद्धिप्रतिषेधः। 'यग्विधाने' इति। ननु च 'कर्मवत्कर्मणा तुल्यक्रियः' (३.१.८७) इत्यतिदेशादेव यक् सिद्धः, किमुपसङ्ख्यानेन? तत्राह—'विप्रतिषेधाद्धि' इति। यदा 'कर्मवत्कर्मणा' इत्ययं शास्त्रातिदेशः, तदा तेन तेन शास्त्रेण कर्मकार्याणि भवन्ति। तत्र कर्मणि यग्भवतीत्यस्यावकाशः—शुद्धं कर्म—पच्यते ओदन इति। कर्तरि शबित्यस्यावकाशः—शुद्धः कर्ता,—भवति, पचतीति। कर्मकर्तर्युभयप्रसङ्गे परत्वाच्छबेव स्यादित्यर्थः। तर्हि उपसङ्ख्यानं कर्तव्यम्? न कर्तव्यम्—'न दुहस्नुनमां यक्चिणौ' (३.१.८९) इति यक्प्रतिषेधो ज्ञापयति—भवति कर्मकर्तरि यगिति। कार्यातिदेशे तु तस्मिंस्तेनैव सूत्रेण भवन् यगेव परो भवति॥

## ६८. कर्तरि शप् ।

'पकारः स्वरार्थः' इति । उपलक्षणमेतत्, ङित्वप्रतिषेधार्थः, 'शप्श्यनोर्नित्यम्' (७.१.८१) इति विशेषणार्थश्च । 'शकारः सार्वधातुकार्थः' इति । सञ्ज्ञापरोऽत्र सार्वधातुकशब्दो न सञ्ज्ञिपरः, सार्वधातुकसञ्ज्ञार्थ इत्यर्थः । कर्तृग्रहणस्य 'कर्मवत्कर्मणा' (३.१.८९) इत्यत्रोपयोगः । इह तु सार्वधातुके शप् भवति, श्यन् भवतीति सामान्यविधानेऽपि भावकर्मणोर्यगपवाद इति कर्तर्येव शबादयो भविष्यन्ति ॥

## ६९. दिवादिभ्यः श्यन् ।

'मृग अन्वेषणे' (धा.पा. १९००) इति चुरादावदन्तेष्वात्मनेपदी पठ्यते, तत्र 'मृगयते' इति भवितव्यम् । दिवादिष्वपि पाठान्मृग्यतीति साधुः । कण्ड्वादिषु वा मृगशब्दो द्रष्टव्यः ॥

## ७०. वा भ्राशभ्लाशभ्रमुक्लमुत्रसित्रुटिलषः ।

उभयत्रविभाषेयम् । अनवस्थानार्थो भ्रमिः, क्लमित्रसी च दिवादयः, त्रुटिस्तौदादिकः, इतरे भौवादिकाः । 'भ्राम्यति' इति । 'शमामष्टानां दीर्घः श्यनि' (७.३.७४) इति दीर्घः । भौवादिकस्य तु न भवति, अशमादित्वात् । क्रमेः 'क्रमः परस्मैपदेषु' (७.३.७६) इति दीर्घः । क्लमेस्तु 'ष्ठिवुक्लम्वाचमां शिति' (७.३.७५) इति त्रसेर्दिवादिपाठे चिन्त्यं प्रयोजनम् । क्लमेस्तु पुषादिकार्यार्थः ॥

## ७१. यसोऽनुपसर्गात् ।

'दैवादिकः' इति । दिवादिपाठोऽस्य सोपसर्गार्थः । 'अनुपसर्गादिति किम्' इति । 'सम्यसश्च' (३.१.७२) इत्येतत्सम एवोपसर्गान्नान्यस्मादिति नियमार्थं भविष्यतीति भावः । 'आयस्यति, प्रयस्यति' इति । तुल्यजातीयानां हलन्तानामेव व्यावृत्तिः स्यादिति मन्यते ॥

## ७२. संयसश्च ।

इह 'समः' इत्येवास्तु, 'यसः' इत्यनुवर्तिष्यते, 'षम ष्टम वैक्लव्ये' (धा.पा. ८२९–३०) इत्यस्य ग्रहणशङ्कानिवृत्त्यर्थं तु 'संयसः' इत्युक्तम् । एवं तर्हि 'समो यसः', 'अनुपसर्गाच्च' इत्यस्तु ॥

## ७३. स्वादिभ्यः श्नुः ।

'सिनोति' इति । 'षिञ् बन्धने' (धा.पा. १२४८) क्र्यादिपाठात् 'सिनाति' इत्यपि भवति ॥

७४. श्रुवः शृ च ।

७५. अक्षोऽन्यतरस्याम् ।

७६. तनूकरणे तक्षः ।

'अनेकार्थत्वात्' इति । अत एव विशेषणोपादानादनेकार्थत्वं विज्ञायते । प्रदर्शनार्थस्तु गणे धातूनामयं निर्देशः । 'सन्तक्षति वाग्भिः' इति । निर्भर्त्सयतीत्यर्थः ॥

७७. तुदादिभ्यः शः ।

'तुदति' इति । तुद्—ति इति स्थिते परत्वात् प्राप्तमपि गुणं नित्यः शो बाधते ॥

७८. रुधादिभ्यः श्नम् ।

'श्नम्प्रत्ययो भवति' इति । यद्यपि प्रत्ययसञ्ज्ञायां प्रकृत्युपपदोपाधिकारागमान् वर्जयित्वेत्युक्तम्, तथापि विधीयमानत्वेन प्राधान्यात् शबादिवदर्थवत्त्वाच्छ्नमः प्रत्ययसञ्ज्ञा भवतीति भावः । तेन शकारस्य प्रत्ययादित्वादित्सञ्ज्ञा । 'शपोऽपवादः' इति । देशभेदेनोभयोः सत्यपि संभवे नाप्राप्ते तस्मिन्नारभ्यमाणत्वादेकार्थत्वाच्चापवादत्वम् । विकरणा हि सार्वधातुकस्य धातोश्चार्थाभिधाने सहायतां प्रतिपद्यन्ते । 'शकारः श्नान्नलोप इति विशेषणार्थः' इति । अथार्धधातुकसञ्ज्ञा मा भूदित्येवमर्थः कस्मान्न भवति ? सत्यां हि तस्यामनक्ति, भनक्ति—'अतो लोपः' (६.४.४८) स्यात्, रुणद्धि, भिनत्ति—गुणः स्यात्, हिनस्ति, तृणेढि—इडागमः स्यात्, 'नेड्वशि कृति' (७.२.८) इत्येतदपि नास्ति, अकृत्त्वात् ? सर्वमेतत् श्नमः पूर्वभागस्यानङ्गत्वान्न भविष्यति । कथमङ्गत्वम् ? 'यस्मात् प्रत्ययविधिः' (१.४.१३) इति । कोऽर्थः ? प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकाद्वेति तदादि तस्मिन् प्रत्यये परतोऽङ्गमिति । यच्चात्र पञ्चम्या निर्दिष्टं रुधादिभ्यो धातुभ्य इति न तस्मात् प्रत्ययः, यस्माच्च प्रत्ययः पूर्वभागात् स न तस्मिन् विधीयमाने पञ्चम्या निर्दिष्टः, तस्माच्छ्नादिति विशेषणार्थ एव शकारः । 'नान्नलोपः' इत्युच्यमाने 'यजयाचयतविच्छप्रच्छरक्षोनङ्' (३.३.९०) यज्ञानाम्, यत्नानाम्—अत्रापि प्राप्नोति, 'नामि' (६.४.३) इति दीर्घत्वे कृते नादिति व्यपदेशाभा(वा)न्न भविष्यति, परत्वाल्लोप एव प्राप्नोति । यत्तु 'अतो दीर्घो यञि' (७.३.१०१), 'सुपि च' (७.३.१०२) इति दीर्घत्वम्, न च तदत्र प्रवर्तते, किं कारणम् ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या.प. १२) इति । इहापि तर्हि न स्यात्—वृक्षायेति ? 'कष्टाय क्रमणे' (३.१.१४) इति निर्देशाद्भविष्यति । इहापि तर्हि—यत्नानामिति ? तस्मादेव निर्देशात् सामान्यापेक्षया ज्ञापनाद्दीर्घो भविष्यति । एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वान्नशब्द एवायमिति नलोपः स्यादेव । तस्माद्विशेषणार्थः शकारः कर्तव्यः । अथ क्रियमाणेऽपि शकारे इह कस्मान्न भवति—विश्नानाम्, प्रश्नानामिति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्' (व्या.प. ३) ॥

## ७९. तनादिकृञ्भ्य उः ।

'तनोति' इत्यादि । 'तनु विस्तारे' (धा.पा. १४६३), 'षणु दाने' (धा.पा. १४६४)। 'क्षणु हिंसायाम्' (धा.पा. १४६५)।

'अन्यत्तनादिकार्यम्' इति । तनादिकार्यापेक्षो नियम इत्यर्थः । व्यावर्त्यं दर्शयति—'तनादिभ्यस्तथासोरिति विभाषा सिचो लुग् न भवति' इति । नन्वस्तु लुग्विकल्पः, तदभावे 'ह्रस्वादङ्गात्' (८.२.२७) इति लोपो भविष्यति, न च विकल्पेन बाधः, विकल्पं प्रति नित्यस्यासिद्धत्वात्; न च तनादिपाठसामर्थ्यादपवादो वचनप्रामाण्यादिति न्यायेनासिद्धत्वबाधाद्विकल्पेन नित्यस्य बाधः, तनादिपाठस्य विकरणविधौ चरितार्थत्वात्; विकल्पोऽपि 'अततः, अतथाः' इत्यादौ चरितार्थः; प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्यानन्यार्थत्वाद्येन नाप्राप्तिन्यायेन विकल्पो नित्यविधिं बाधेत ? इदं हि कृञ्ग्रहणविधौ तनादिषु पाठश्चरितार्थो मा विज्ञायीत्येवमर्थमेव स्यादिति कृञ्ग्रहणप्रत्याख्यानमेव न्याय्यं मन्यामहे ।।

## ८०. धिन्विकृण्व्योर च ।

'अतो लोपस्य स्थानिवद्भावाद्गुणो न भवति' इति । तेन प्रक्रियालाघवाय धिन्विकृण्व्योर्लोप एव नोक्त इति भावः । लोपे हि गुणः स्यात् । न च 'न धातुलोप आर्धधातुके' (१.१.४) इति निषेधः, प्रत्ययसन्नि-योगशिष्टत्वेन लोपस्यानार्धधातुकनिमित्तत्वात् । ननु नुमनुषक्तयोर्ग्रहणं किमर्थम् ? नुमि कृतेऽत्वं यथा स्यात्, 'धिन्विकृव्योः' इत्युच्यमानेऽत्वे कृतेऽत एव परो नुम् प्रसज्येत; अत्वं ह्यन्तरङ्गं प्रत्ययसन्नियोगेन विधानात्, नुमागमस्तु बहिरङ्गः, उत्पन्ने प्रत्ययेऽङ्गस्य सतो विधानात् । ननु चात्वस्याङ्गस्य नुम्, लावस्थायामेव भविष्यति; तिबादीनामन्तरङ्गत्वात् । तिबादिष्वेव तर्हि भविष्यति, न; नित्येनात्वेन बाधनात् । नुमागमस्तु शब्दान्तर-प्राप्तेरनित्यः । अन्तरङ्गस्तर्हि नुमागमस्तद्विधौ धातुग्रहणात् ? तद्धि धातुसञ्ज्ञाप्रवृत्तिकाल एव नुम् यथा स्यादित्येवमर्थम्; अन्यस्योदितोऽसम्भवात् । कथमसम्भवः ? यदिदानीमेवोक्तम्—तासेरिविकरणमनुनासिकलोप-प्रतिषेधार्थमिति । नन्वत्रापि पक्षे 'नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्धयर्थम्' इति वचनादुपदेश एव नुम् भविष्यति ? एवं तर्ह्यन्तरङ्गत्वादेव प्राप्तस्य नुमोऽयं निर्देशः ।।

## ८१. क्र्यादिभ्यः श्ना ।

## ८२. स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।

'उदित्त्वप्रतिज्ञानात्' इति । एषां ह्युकारोऽनुनासिक इत्सञ्ज्ञकः प्रतिज्ञायते, तस्य प्रयोजनम्—'उदितो वा' (७.२.५६) इति क्त्वाप्रत्यये इड्विकल्पः । यदि चैतद्विकरणविषया एवैते स्युः, तन्नोपपद्यते । तस्मादुदित्त्वेन प्रतिज्ञानात् सर्वार्थत्वं विज्ञायते, सर्वे प्रत्ययाः प्रयोजनमेषामित्यर्थः । सर्वप्रत्ययप्रयोजनत्वमिति वा ।।

## ८३. हलः श्नः शानज्झौ ।

'पुषाण, मुषाण' इति । लोट्, सिप्, तस्य हिः, 'क्र्यादिभ्यः श्ना' (३.१.८१), तस्य शानच्। चकारः स्वरार्थः । अत्र सन्निपातपरिभाषाया अनित्यत्वात् 'अतो हेः' (६.४.१०५) इति हेर्लुक्। ननु च श्नाप्रत्ययस्य प्रकृतत्वात् तस्यैव शानजादेशो भविष्यति, नार्थः श्न इति स्थानिनिर्देशेन, अत आह—'श्न इति स्थानी' इत्यादि । आदेश इत्येष संप्रत्ययः—अवगमो यथा स्यादित्येवमर्थः । असति तु तस्मिन् किं स्यादित्याह—'प्रत्ययान्तरम्' इति । अस्तु प्रत्ययान्तरम्, 'क्र्यादिभ्यः' (३.१.८१) इत्यनुवृत्तेः तेभ्य एव हलन्तेभ्यो भविष्यतीति न कश्चिद्दोष इत्यत आह—'सर्वविषयम्' इति । अक्र्यादिविषयमपीत्यर्थः । क्र्याद्यनुवृत्तिर्दुर्ज्ञानेति मन्यते। शानचः शित्करणं चिन्त्यप्रयोजनम्; स्थानिवद्भावेनैव सिद्धेः । इह 'ञिमिदा स्नेहने' (धा.पा. १२४३) दिवादिः, व्यत्ययेन छन्दसि श्ना, तस्य शानजादेशः, मिदान । 'मिदेर्गुणः' (७.३.८२) इति प्रतिषेधविषये विधीयमानो गुणो न भवति, पुनः शित्करणेन 'सार्वधातुकमपित्' (१.२.४) इत्यस्यापि पुनः प्रवृत्तेरिति केचित्। नेति वयम्; यथैव व्यत्ययेन श्ना भवति, एवं गुणविषये इकारो भविष्यति ॥

## ८४. छन्दसि शायजपि ।

'गृभाय' इति । ग्रहिज्यादिसूत्रेण संप्रसारणम्, 'हृग्रहोर्भश्छन्दसि' (वा. ९१८) इति हकारस्य भकारः । 'बधान' इति । 'बन्ध बन्धने' (धा.पा. १५०८) 'अनिदिताम्' (६.४.२४) इति नलोपः॥

## ८५. व्यत्ययो बहुलम् ।

'यथायथम' इति । स्वस्मिन् स्वस्मिन् विषये इत्यर्थः । 'व्यतिगमनं व्यत्ययः' इति । व्यतिपूर्वादिणो भावे 'एरच्' (३.३.५६) । अन्योन्यविषयावगाहनमित्यर्थः । क्वचिदित्यादिना व्यत्ययस्य प्रकारं दर्शयति। 'न मरति' इति । परस्मैपदमप्यत्र व्यत्ययेन । 'नेषतु' इति । नयतेर्लोटि शप्सिपौ । 'तरुषेम' इति । तरतेर्विध्यादौ लिङ्, तथा च "तरेमेति प्राप्ते" इति वृत्तिः, इतरथा "तीर्यास्मेति प्राप्ते' इति वक्तव्यं स्यात्, ततः शप् सिप् उप्रत्यय इति त्रयो विकरणाः, धातोर्गुणः । तरुषमस्, ततो यासुट्, 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९), 'अतो येयः' (७.२.८०), यलोपः, 'आद्गुणः' (६.१.८७), तरुषेम ।

बहुलग्रहणमनर्थकम्, पूर्वसूत्रादपिशब्दस्यानुवृत्तौ छन्दसि व्यत्ययोऽपि भविष्यति, अपिशब्दाद्यथाप्राप्तं चेति सर्वमिष्टं सिध्यति । अत आह—'बहुलग्रहणम्' इति । सर्वस्य प्रकृतस्याप्रकृतस्य च विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थमित्यर्थः ।

एवमर्थे बहुलग्रहणे सति यदिष्टं सिध्यति तच्छ्लोकेन दर्शयति—'सुप्तिङुपग्रह' इत्यादि । तत्र सुपां व्यत्ययः—'धुरि दक्षिणायाः' । दक्षिणस्यामिति प्राप्ते । तिङाम्—'चषालं ये अश्वयूपाय तक्षति' (ऋ. १-१६२-६)। तक्षन्तीति प्राप्ते । लादेशव्यक्त्ययः क्रियासाधनविशेषः स्वार्थपरार्थत्वव्यक्तवाक्त्वादिको यः स मुख्यः उपग्रहः। यथोक्तम्—

य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते ।

अन्यतश्चापि लादेशान्मन्यन्ते तमुपग्रहम् ॥ (वा.प. ३.१२.१) इति ।

आत्मनेपदाद्धेतोरित्यर्थः । एवमन्यतश्चापि लादेशादिति, इह तु तद्व्यक्तिनिमित्तत्वात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते । स ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । 'ऊर्मिर्युध्यति', युध्यत इति प्राप्ते । लिङ्गम्—मधोस्तृप्ता इवासते, मधुन इति प्राप्ते । भाषायामपि मधुशब्दं पुंलिङ्गं प्रयुञ्जते—'मधूंश्च बिभ्रति रम्यसुरविटपिनः' इति, तच्चिन्त्यम् । नरः पुरुषः—'अधा स वीरैर्दशभिर्वियूयाः' (ऋ. ७-१०४-१५), वियूयादिति प्राप्ते, 'यु मिश्रणे' (धा.पा. १०३३) विपूर्वः, आशिषि लिङ् । कालवाची प्रत्ययः कालः—'श्वोऽग्नीनाधास्यमानेन' लुटो विषये लृट् । हल्—'त्रिष्टुभौजः शुफितमुग्रवीरम्' (तै. ४-४-१२-२) 'शुभ शोभार्थे' (धा.पा. १३२१), भकारस्य फकारः । आश्वलायनसूत्रे तैत्तिरीये च भकार एव पठ्यते । अच्—'उपगायन्ति मा पत्नयो गर्भिणयः' दीर्घस्य ह्रस्वः । स्वरव्यत्ययः—'परादिश्छन्दसि बहुलम्' (६.२.१९९) इत्यत्र वक्ष्यते । कर्तृशब्दः कारकमात्रस्योपलक्षणार्थः, तद्वाचिनां शब्दानां व्यत्यय इत्यर्थः । विभक्तीनां व्यत्यय इति यावत् । यङाम्—यङिति प्रत्याहारः । यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्' (३.१.८६) इति ङकारेण, तेषां व्यत्ययः—'आण्डा शुष्णस्य भेदति' इत्यादिना वृत्तावेव दर्शितः । एषां सुप्रभृतीनां व्यत्ययमिच्छति शास्त्रकृत् पाणिनिराचार्यः । सोऽपि तथाविधो व्यत्ययो बाहुलकेन सिध्यति । बहुलस्य भावो बाहुलकम्, मनोज्ञादित्वाद्वुञ् । तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं यद्बह्वर्थादानम् । चशब्दो हेतौ । यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिध्यति, तस्माद्बहुलग्रहणं कृतमित्यर्थः ॥

## ८६. लिङ्याशिष्यङ् ।

'शपोऽपवादः' इति । लिङाशिषीत्यार्धधातुकत्वात् कथमत्र शपः प्राप्तिरित्यत आह—'छन्दस्युभयथा' इति । शब्ग्रहणं चोपलक्षणम् । श्नाकेः श्नोरपवादः, स्थादिष्वेवायमङ् प्रायेण दृश्यत इत्याह—'स्यागामि' इत्यादि । 'उपस्थेयम्' इति । उपपूर्वात् तिष्ठतेराशिषि लिङ्, मिपोऽम्भावः, यासुटः सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९), अङि 'आतो लोप इटि च' (६.४.६४), 'अतो येयः' (७.२.८०), 'आद् गुणः' (६.१.८७) । एवमुपगेयमिति । 'गमेम' इति । मस् । 'वोचेम' इति । अङ्, 'वच उम्' (७.४.२०), यासुट्, इयादेशः, वलि लोपः । 'दृशेरग् वक्तव्यः' इति । अङि हि सति 'ऋदृशोऽङि' (७.४.१६) इति गुणः स्यात् ॥

## ८७. कर्मवत्कर्मणा तुल्यक्रियः ।

कर्मणा तुल्यं वर्तत इति कर्मवत्, 'तेन तुल्यम्' (५.१.११५) इत्यादिना वतिः, न तु 'तत्र तस्येव' (५.१.११६) इति; तुल्यक्रिय इति प्रतियोगिनि प्रथमानिर्देशात्, अन्यथा तुल्यक्रिये तुल्यक्रियस्येति वा निर्देशः स्यात्, तथा हि—वाक्ये तावद्यतो वतिर्भवति, यश्च प्रतियोगी—उभाभ्यामपि ताभ्यां षष्ठीसप्तम्यौ भवतः, विप्रस्येवास्य शीलम्, मथुरायामिव पाटलिपुत्रे प्राकार इति, उभयोरपि सम्बन्धित्वात्, आधारत्वाच्च । ततश्चोत्पन्नेऽपि वतौ प्रतियोगिनस्ते एव षष्ठीसप्तम्यावुपतिष्ठेते, तुल्यार्थयोगे तु या तृतीया सोपमानादेव भवति,

नोपमेयात्; तुल्यशब्दस्योपमेयनिष्ठत्वात्, तद्यथा—चन्द्रेण तुल्यं मुखमिति। ततश्चोत्पन्नेऽपि वतावुपमेयात् प्रथमैवावतिष्ठते।

कर्मणेति पारिभाषिकं कर्म गृह्यते न लौकिकं क्रिया कर्म; तस्य हि ग्रहणे क्रियया तुल्या क्रिया यस्येति किमुक्तं स्यात् क्रियायाः, यया कयाचन क्रियया तुल्यत्वात्! अतः साधनकर्मणो ग्रहणम्, तत्र साध्यसाधनयोरत्यन्तभेदान्मुख्येन कर्मणा क्रियायाः सादृश्यासम्भवात् कर्मशब्देन तत्स्था क्रिया लक्ष्यते, भवति हि तात्स्थ्यात्ताच्छब्द्यम्, यथा—मञ्चाः क्रोशन्तीति। तदेतदाह—'कर्मणि क्रिया कर्म' इति।

विशेषणस्य वैयर्थ्यं न चेदानीं प्रसज्यते।
कर्मणः क्रियया तुल्या न सर्वस्य क्रिया यतः॥ इति।

कर्मणः क्रियया तुल्यक्रियः, न साधनान्तरस्येत्येवं प्रतिपत्त्यर्थत्वादित्याह—'कर्मस्थया क्रियया तुल्यक्रियः' इति। तुल्यशब्दस्य नित्यसापेक्षत्वात् कर्मस्थया क्रिययेत्येतदपेक्षस्यापि सूत्रवद्बहुव्रीहिर्नानुपपन्नः। तुल्यशब्दोऽयमस्ति साधारणवचनः—एतौ तुल्यधनाविति, सादृश्यवचनस्तु प्रसिद्ध एव। तत्रास्य ग्रहणे कर्मणेति यदि मुख्यवृत्तिस्तदा कर्तुः कर्मणश्च या साधारणी क्रिया, तत्र यः कर्ता कर्मणा सह साधारणक्रियः सकर्मकेषु यः कर्तेत्युक्तं भवति। तत्र तुल्यक्रिय इत्यनर्थकम्, कर्मणेत्येव वाच्यं स्यात्, कर्मणा सह यः कर्ता प्रतिपाद्यत इत्यर्थः। अथ गौणवृत्तिः, तदाऽयमर्थः—क्रियया हेतुना साधारणक्रियः। कया क्रियया? कर्मस्थया क्रिययेति, एवमपि पचत्योदनं देवदत्त इत्यत्रापि प्राप्नोति, याऽसौ कर्मस्था विक्लित्तिरूपा क्रिया तया साधारणक्रियत्वात्। अतोऽस्मिन् पक्षेऽनिष्टप्रसङ्गः प्रसिद्धतरश्च सदृशपर्यायस्तुल्यशब्द इति तस्यैव ग्रहणमिति दर्शयन्नाह—'यस्मिन् कर्मणि' इत्यादि। अत्र तद्वद्यथा-शब्दौ प्रयुञ्जानः 'सादृश्यवचनस्तुल्यशब्दः, न साधारणवचनः' इत्याचष्टे। 'कर्तृभूतः' इति। कर्तरि सम्पन्न इत्यर्थः। च्वेर्विकल्पितत्वादत्राभावः। अथ वा—कर्तृशब्दः कर्तृत्वे वर्तते, भूत इति 'भू प्राप्तौ' (धा.पा. १८४४) इत्यस्य 'आ धृषाद्वा' (धा.पा. १८०५ अनंतरम्) इति णिजभावे रूपम्, कर्तृत्वं प्राप्त इत्यर्थः। तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदेन सादृश्याभावात् कर्मवद्भावाभावः। एवमपि भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति, यादृशी हि पात्रेषु क्रियाऽवयवविशरणात्मिका तादृश्येव कुसूलेऽपि कर्तरि लक्ष्यत इति? नैष दोषः; कर्मस्थया क्रियया तुल्या क्रिया यस्य कर्तुरित्युक्ते कर्तृत्वोपयोगिनी या क्रिया यदावेशादसौ कर्ता भवति सैव क्रिया गम्यते; इह तु पात्रेषु दृश्यमानं द्विधाभवनं कुसूलेऽपि दैवगत्या दृष्टमित्येतावन्न पुनस्तत्समावेशादसौ भिनत्ति, स्वयमभिद्यमानोऽपि कुसूल उपरि पतन् पात्राणि भिनत्त्येव। एवमप्यन्योन्यमाश्लिष्यतः, अन्योन्यं स्पृशतः, अन्योन्यं गृह्णीतः—अत्र प्राप्नोति, अत्र हि यत्क्रियावेशात् कर्ता भवति सैव कर्मण्यपि दृश्यते? सत्यं दृश्यते; न सा कर्मत्वोपयोगिनी, न ह्यसौ तदावेशात् कर्म भवति; स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात्। तदेतदुक्तं भवति—कर्मणः कर्मत्वोपयोगिनी या क्रिया तया तुल्या यस्य कर्तृत्वोपयोगिनी क्रिया स कर्मणा तुल्यक्रियः कर्तेति। एवं च यस्यैव कर्मणः कर्मावस्थायां या क्रिया कर्त्रवस्थायामपि यदि सैव क्रिया भवति स कर्ता कर्मवदित्युक्तं भवति। इदमप्यत्रैवोक्तम्—'यस्मिन् कर्मणि कर्तृभूतेऽपि' इति। तस्मिन्नेव कर्मणि कर्त्रवस्थां प्राप्त इति ह्यत्रार्थः। एवं च कर्तृकर्मावस्थाभेदादेकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपाद्यम्।

अतिदेशो रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदेनानेकविधः, तत्रादितस्त्रयाणामसम्भवः। व्यपदेशातिदेशस्तु सञ्ज्ञापक्षान्न भिद्यते। तत्र वत्करणमनर्थकम्। अतः शास्त्रातिदेशः, कार्यातिदेश इति द्वावेव

पक्षौ। तत्र शास्त्रातिदेशे 'भावकर्मणोः' (१.३.१३) इत्यादिषु शास्त्रेष्वतिदिष्टेषु तेन तेन शास्त्रेण तत्तत्कार्यं प्रवर्तते, ततश्च 'भावकर्मणोः' (१.३.१३) इत्यस्यावकाशः—शुद्धं कर्म, पच्यते ओदनः, 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८) इत्यस्यावकाशः—शुद्धः कर्ता, पचति, पठति; कर्मकर्तर्युभयप्रसङ्गे परत्वात् परस्मैपदं प्राप्नोति ? नैष दोषः; 'कर्तरि कर्मव्यतिहारे' (१.३.१४) इत्यतः कर्तृग्रहणमनुवर्तते, तेन कर्तैव यः कर्ता तत्र परस्मैपदम्, कर्मकर्तरि न भविष्यति। इह तर्हि कर्मणि यग् भवतीत्यस्यावकाशः—शुद्धं कर्म, पच्यते ओदनः, 'कर्तरि शप्' (३.१.६८) इत्यस्यावकाशः—शुद्धः कर्ता, पचति, पठति; कर्मकर्तर्युभयप्रसङ्गे परत्वाच्छप् प्राप्नोति ? नैष दोषः; 'कर्तरि शप्' (३.१.६८) इत्यत्र कर्तृग्रहणं न कर्तव्यं सार्वधातुके शबिति सामान्यस्य भावकर्मणोर्यगपवादो भविष्यति। एवं सिद्धे यत् कर्तृग्रहणं क्रियते तस्यैतत् प्रयोजनम्—कर्तैव यः कर्ता तत्र शबादयो यथा स्युः, कर्मापदिष्टे मा भूवन्निति ? सत्यं प्रतिविहितमायुष्मता ! वृथा पुनरयं प्रयासः, कार्यातिदेशाश्रयेणैव सिद्धेः। तत्र ह्यनेनैवात्मनेपदम्, अनेनैव यगिति परत्वाद्यगात्मनेपदे सिध्यतः। प्रधानं च कार्यम्, तदर्थत्वादतिदेशान्तराणाम्। अतः कार्यातिदेश एवायं, तदाह—'कर्माश्रयाणि कार्याणि प्रतिपद्यते' इति। ननु च नेह सूत्रे कर्तृग्रहणमस्ति, यदपि प्रकृतं 'कर्तरि शप्' (३.१.६८) इति, तदपि सप्तम्यन्तं 'तुल्यक्रिय' इति प्रथमान्तेन सम्बन्धुं नार्हति, तत्राह—'कर्तरि शबित्यतः' इति।

'यगात्मनेपद' इत्यादि। लान्तस्य कर्ता कर्मवदिति वक्ष्यमाणत्वाद्यगादीनामेव सम्भव इति भावः। 'भिद्यते' इत्यादीनि त्रीण्यात्मनेपदस्योदाहरणानि यगादीनां क्रमेण। कथं पुनः काष्ठस्य भिदां प्रति कर्तृत्वम्, यावता भिद्यतेऽसौ देवदत्तेन ? यो ह्युद्यमननिपातनादि कुठारस्य करोति स भेदने कर्ता उच्यते। सर्वेषामेव कारकाणां प्रातिस्विकोऽवान्तरव्यापारोऽस्ति, अकिंचित्करस्य कारकत्वानुपपत्तेः। एतच्च कारकप्रकरण एवोपपादितम्। तत्र च स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैवास्ति। कारके कर्तृव्यापारेण तिरस्कृतत्वात्तु न्यग्भूतं स्वातन्त्र्यमिति कर्तृत्वं न भवति, करणादिसञ्ज्ञैव भवतीत्येतावत्। सकर्मकास्तु केचिद्धातवः कर्मव्यापारमप्यभिधाय तावत्येवापर्यवस्यन्तस्तदुपसर्जनं कर्तृव्यापारमाचक्षते, तद्यथा—भिदिर्द्विधाभवनोपसर्जनं द्विधाभावनमाह। न खल्वयमुद्यमननिपातनमात्रवचनः; रजकेऽपि प्रसङ्गात्, सोऽपि हि वस्त्रमुद्यच्छति निपातयति च। अथ च न भिनत्तीत्युच्यते; द्विधाभवनाभावात्। एतेन छिनत्तिलुनत्ती व्याख्यातौ। तथा पचिरपि विक्लित्त्युपसर्जनं विक्लेदनमाह। तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते तदा निवृत्तप्रेषणं कर्म स्वक्रियावयवस्थितं निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते। धातुरपि तद्व्यापारमात्रे वर्तते। कथं पुनरुभयवचनो धातुः कर्मव्यापारमात्रवचनो भवति ? को विरोधः ? अनेकार्था धातवः, समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते, तदेवं कर्मव्यापारमात्रवाचिषु कर्तृत्वमेव काष्ठादीनाम्, न तु कर्मत्वगन्धोऽप्यस्ति; धातवश्चैते प्रयोगेऽस्मिन्नकर्मकाः, यथा विश्लिष्यति द्विधा भवतीति; कथं तर्हि कर्मणा तुल्यक्रियः कर्ता ? न ब्रूमः—अस्मिन् प्रयोगे यत् कर्म, तेन तुल्यक्रिय इति, किं तर्हि ? प्रयोगान्तरे यत् कर्म तेन तुल्यक्रिय इति। नन्वेवं पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेव—अत्रापि प्राप्नोति ? अत्र परिहारं वक्ष्यति—धात्वधिकारादिति। कर्तृकर्मणोर्धातोरन्यत्रासम्भवादेव सिद्धेस्तदनुवृत्तिरेकत्वविवक्षार्था—यस्मिन्नेव धातौ यत् कर्म तेन तुल्यक्रियस्तस्यैव धातोः कर्तेति। तेन धातुभेदे न भविष्यति।

आह—अध्यारोपोऽयमस्तु, कोऽर्थः ? कृत्स्न एव धात्वर्थः कर्मण्यध्यारोप्यते किमत्र देवदत्तेन ओदन एव पाकं करोतीति। एवं हि सौकर्यातिशयः सुतरां प्रतिपादितो भवति, करणाधिकरणवत्, यथा—साध्वसिश्छिनत्ति, साधु स्थाली पचतीति। तत्र येषु तावत् कृत्स्न एव धात्वर्थः कर्मण्यपि सम्भवति—आत्मना बुध्यते, आत्मना

मुच्यते, आत्मना हन्यते, आत्मना ताड्यते इति, तेषु शुद्धे कर्मणि लकारः केनचिद्रूपेण कर्तृत्वं, केनचिद्रूपेण कर्मत्वमिति । तथा भिद्यते कुसूल इति यत्रापि चेतनो भेत्ता न दृश्यते तत्र वातातपकालाभिवर्षणानामन्यतमस्य कर्तृत्वम्, अध्यारोपो वा । पच्यते ओदनः स्वयमेव, लूयते केदारः स्वयमेवेत्यादावध्यारोप एव, आत्मनैवौदनः पच्यते, न तु देवदत्तेनेति । एवं नाम पाकेऽनुकूलो भवतीत्यर्थः, तदेवं शुद्धे कर्मणि लकारोत्पत्तेर्नार्थं एतेन । यद्येवम्, भिद्यते कुसूलेनेति भावे लो न स्यात्, सकर्मकत्वात् ? अथाप्यत्र भिद्यते कुसूलेनात्मेति कर्मणि व्याख्यायेत । एवमपि भेत्तव्यं कुसुलेन, भिन्नं कुसूलेन, ईषद्भेदं कुसूलेनेति भावे कृत्यक्तखलर्था न स्युः ? न च तत्रापि कर्मणीति शक्यमाश्रयितुं, नपुंसकलिङ्गदर्शनात्, तथा नमते दण्डः स्वयमेव, कारयते कटः स्वयमेव, अचीकरत कटः स्वयमेव–यक्चिणोः प्रतिषिद्धयोरपि शप्चङौ न स्याताम्, अकर्तृत्वात्, तस्मात् कर्मव्यापारमात्रवाचिभ्यः कर्तरि भावे च लादय इत्येतदेव साधीयः । तथा च 'शृतं पाके' (६.१.२७) इत्यत्र पचेः कर्मव्यापारे च 'शृतम्' इति भवति; द्वयोरपि पाकशब्दाभिधेयत्वात् ।

एवं हि या विमृष्टा शास्त्रं न करिष्यामीति मतिः, साऽपि त्याज्या । असति सूत्रे 'न दुहस्नुनमां यक्चिणौ' (३.१.८९) इति प्रतिषेधस्य विषयो न प्रदर्शितः स्यात् । किं च, यद्यपि पच्यते ओदनः स्वयमेवे त्यादिकः प्रयोगः कर्मणि समर्थ्यते, कर्तरि तु लकारोत्पत्तौ पचत्योदन इत्यादिकः प्रयोगोऽपि प्रसज्येत; तस्मादारब्धव्यं सूत्रम् ।

अत्रोदाहरणेषु कर्त्रन्तरव्युदासार्थं स्वयमिति प्रयुज्यते, न त्वेतदुदाहरणाङ्गम् । प्रयुक्त एतस्मिन्नात्मनेत्यस्यार्थे वृत्तेः प्राकृतमेवैतत् कर्म स्यात्—स्वाश्रयमपि यथा स्यादिति, असति वत्करणे कर्तुः कर्मसञ्ज्ञा ज्ञायेत, ततश्चानेन कर्मणा सकर्मकत्वात् 'भावे चाकर्मकेभ्यः' (३.४.६९) इति भावे लो न स्यात् । सति तु तस्मिन् स्वतःप्राप्तस्याकर्मकव्यपदेशस्यानिवर्तनादकर्मकाणां भावे लः सिद्धो भवति, अकर्मकाणां भावे यो लो विधीयते स सिद्धो भवतीत्यर्थः । कथं सिद्धो भवति, यावता नित्योऽयमतिदेशः, नित्ये चास्मिंस्तत्र लविधिरपि कर्मकार्यमेवेति स्यादेवातिदेशः ? आतिदेशिकाविरुद्धं स्वाश्रयं वतिना प्राप्यते, न तु विरुद्धमपि । न ह्ययं विकल्पार्थः—कदाचित् कर्मवत्, कदाचिन्नेति । अथ लान्तस्य कर्तेति वक्ष्यमाणत्वादेतत्सूत्रप्रवृत्तेः प्रागेव 'लः कर्मणि च' (३.४.६९) इत्येतत्प्रवृत्तिरङ्गीक्रियते, तच्च प्रवर्तमानमकर्मकत्वाद्भावे कर्तरि च प्रवर्तते, यदा कर्तरि तदाऽयमतिदेश इति भावे लविधिः समर्थ्येत । यद्येवम्, मा भूद्वतिः, लकारवाच्यस्य कर्तुः कर्मसञ्ज्ञैवास्तु, यगात्मनेपदयोस्त्वप्रसिद्धिः, परत्वाच्छबादीनां परस्मैपदस्य च प्रसङ्गः; न च कर्मसञ्ज्ञया कर्तृसञ्ज्ञाया बाधः, एकसञ्ज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशात् ? सत्यम्; उक्तोऽत्र परिहारः—तदेतद्वत्करणं सर्वसादृश्यार्थम् । तेनोदाहरणेषु काष्ठादिभ्यो द्वितीया न भवति; इतरथा कर्मकार्यत्वात् प्राप्नोति, अभिहितत्वान्न भविष्यति, भवेदयं परिहारः शास्त्रातिदेशे, कार्यातिदेशे त्वनेनैव कर्मकार्याणि प्राप्यन्ते, न चात्रानभिहिताधिकारोऽस्तीति स्यादेव द्वितीया । वत्करणात्तु सर्वसादृश्यार्थाद्यथा कर्मण्यभिहिते न भवति, एवं कर्तर्यपीति द्वितीयाभावः । यदा तर्ह्यकर्मकत्वाद्भावे लकारस्तदा प्राप्नोति, तत्राह—'लिङ्याशिष्यङ' इत्यादि । तत्र लग्रहणमनुवृत्तं षष्ठ्या विपरिणम्यते इत्यभिप्रायेणाह—'लान्तस्य कर्ता' इति । लकारवाच्यः कर्तेत्यर्थः । 'कुसूलाद्द्वितीया न भवति' इति । भिद्यते कुसूलेनेत्यनन्तरोदाहृतेषु उदाहरणेषु तु वत्करणादेव सर्वसादृश्यार्थाद्द्वितीयाया अभाव इति भावः । तदेवं वृत्तिकारस्याभिप्रेतम्—एतद्वतिः सर्वसादृश्यार्थं इति । किं च, नावश्यं द्वितीयैव, कृत्यक्तखलर्था अप्यस्मिन् विषये कर्तर्यतिदेशेन प्राप्नुवन्ति—भेत्तव्यः कुसूलः स्वयमेव, भिन्नः कुसूलः स्वयमेव, ईषद्भेदः कुसूलः स्वयमेवेति; भाव एव चेष्यन्ते—भेत्तव्यं कुसूलेन कुसूलस्य वा, 'कृत्यानां कर्तरि वा' (२.३.७१), भिन्नं कुसूलेन, ईषद्भेदं

कुसूलेनेति । अत्र वार्तिके क्तग्रहणमन्यत्र सहपाठात् पठितम्, यथा—ककारो गुणवृद्धिप्रतिषेधार्थं इति । भवत्येव ह्येभ्योऽकर्मकत्वात् 'गत्यर्थाकर्मक' (३.४.७२) इति कर्तरि क्तः । तथा च 'सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्' (वा ९२२) इति निष्ठानत्वे । सिनो ग्रासः स्वयमेवेति कर्तरि क्त उदाहरिष्यते । तस्मात् कृत्यखलर्थेष्वेवेष दोषः, अतस्तत्र लान्तस्य कर्तेत्याश्रयणादेवातिदेशाभावः ।

'कर्मणेति किम्' इति । धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता, तत्र सादृश्यस्य भेदाधिष्ठानत्वात् कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न सम्भवतीति कर्मस्थैव क्रिया आश्रयिष्यत इति मत्वा प्रश्नः । 'करणाधिकरणाभ्याम्' इति । तत्स्थक्रिययेत्यर्थः । 'साध्वसिश्छिनत्ति' इति । किं पुनरत्र करणाधिकरणव्यापारमात्रे धातुर्वर्तते ? आहोस्वित्तत्र कृत्स्नधात्वर्थाध्यारोपः ? न तावदाद्यकल्पः । तावति धातोरवृत्तेरसिना छिनत्तीत्यत्रापि नैव करणव्यापारो धातुनोपादीयते, केवलं करणत्वादवान्तरव्यापारोऽस्तीत्येतावत् । द्वितीये तु भिन्नक्रियत्वादेवाप्रसङ्गः । तस्मात् करणाधिकरणव्यापारमात्रेऽपि धातोर्वृत्तिमङ्गीकृत्य प्रत्युदाहृतं द्रष्टव्यम् । क्वचित्तु करणेनापि तुल्यक्रियस्य कर्मवद्भाव इष्यते, यदाह—करणेन तुल्यक्रियः कर्ता बहुलमिष्यते, परिवारयति कण्टकैर्वृक्षम्, परिवारयन्ते कण्टका वृक्षम्—आत्मनेपदं भवति, वृत्तिकारस्तु 'णिचश्च' (१.३.७४) इत्यात्मनेपदमुपपद्यत इति मन्यमानो नैतदुपसमचष्ट ।

'धात्वधिकारत् समाने धातौ' इति । एकस्यैव धातोरित्यर्थः । एतच्च प्रागेव व्याख्यातम् ।

'कर्मस्थभावकानाम्' इत्यादि । यद्यपि क्रियाभावशब्दयोरभिन्न एवार्थः, तथा च 'यस्य च भावेन भावलक्षणम्' (२.३.३७) इति क्रियाऽपि गृह्यते, 'लक्षणहेत्वोः क्रियायाः' 'कर्मणा तुल्यक्रियः' इति च वाचोऽपि; तथाप्यस्मिन् ग्रन्थे भेदेनोपादानादर्थभेदो द्रष्टव्यः—अपरिस्पन्दरूपो धात्वर्थो भावः, परिस्पन्दरूपस्तु क्रिया । क्व पुनरसौ कर्मस्थः ? क्व वा कर्तृस्थः ? केचिदाहु :—येषु कर्मव्यापारोपसर्जनः कर्तृव्यापारोऽभिधीयते तेषु कर्मस्थः, येषु कर्तृव्यापार एव तेषु कर्तृस्थ इति । नेति वयम्; प्रधान क्रिया यत्र समवैति कर्तरि कर्मणि वा तत्स्थो धात्वर्थः, यदुद्देशेन कारकव्यापारः सा प्रधाना क्रिया, यथा—पचेर्विक्लित्तिः, गमेर्देशान्तरप्राप्तिः । एवं च कृत्वा न्यग्भवनोपसर्जनन्यग्भाववचनोऽपि रुहिः कर्तृस्थक्रियः—आरोहन्ति हस्तिनं हस्तिपका इति; उपरिदेशप्राप्तेरुद्देश्यायाः कर्तरि समवायात्, तत्रेह कर्मस्थेन व्यापारेण कर्तृव्यापारस्योपमानात् ।

अस्य चार्थस्य कर्तृस्थव्यापारेष्वसंभवान्न्यायप्राप्त एवार्थो वृत्तिकारेण दर्शितः । तत्र कर्मस्थव्यापारस्य कर्तृस्थस्य चोदाहरणमात्रं श्लोकेन दर्शयति—'कर्मस्थः पचतेर्भावः' इति । पच्यते घट इत्यत्र तद्देशस्यैव घटस्य पाक इति भावोऽसौ भवति, कर्मस्थश्च—पच्यते ओदन इत्यत्र परिस्पन्दवत एव, पाक्यस्य पाकाभिनिर्वृत्तिरिति कर्मस्थैव पचेः क्रिया भवति । 'कर्मस्था च भिदेः क्रिया' इति । भिद्यते कुसूल इत्यत्रावयवविशरणात्मिका भिदिक्रिया भेदस्य परिस्पन्दे सति भवतीति कर्मस्था च भिदेः क्रिया भवति । 'मासासिभावः कर्तृस्थः' इति । मासमास्ते इत्यत्र 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम्' इति मासकर्मकोऽयमासिधातुः, तत्र मासासिधातो प्रतीयमानोऽर्थो भावः; अपरिस्पन्दरूपत्वात् स च कर्तृस्थ इत्यर्थः । 'कर्तृस्था च गमेः क्रिया' इति । गमेरर्थः क्रिया, सा च कर्तृस्थेत्यर्थः । तेनास्यते मासः स्वयमेव, गम्यते ग्रामः स्वयमेवेति न भवति । अथेह कथं कर्मवद्भावः—तस्मादुदुम्बरः सलोहितं पच्यते फलमिति ? अत्राहुः—पचिरत्र विषये द्विकर्मकः, वृक्षस्य पाकमन्तरेण फलस्य पाकासम्भवात्, तत्र 'अप्रधाने दुहादीनाम्' इति वृक्षोऽकथितं कर्मेति तत्र लकारः, कालस्तु कर्तेति । इदं तु वक्तव्यमेव, 'सृजियुज्योः

श्यंस्तु' इति 'सृजि विसर्गे' (धा.पा. १४१४), 'युजिर्योगे' (धा.पा. १४४४)-अनयोः सकर्मकयोः कर्ता कर्मवद्भवति; तत्र सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावः, यग्विषये च श्यन्, चिण्विषये तु चिण्वेष्यते; सृज्यते मालां देवदत्तः, श्रद्धया निष्पादयतीत्यर्थः । श्यनि सति प्रकृतेराद्युदात्तत्वं भवति, यकि तु सार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात्--असर्जि मालाम, श्रद्धया निष्पादयति स्मेत्यर्थः, 'युजिर्'--युज्यते ब्रह्मचारी योगेन ॥

## ८८. तपस्तपःकर्मकस्यैव ।

'क्रियाभेदाद्विध्यर्थमिदम्' इति वक्ष्यति--कथं तर्ह्येवकारस्यान्वय इत्याशङ्क्य वाक्यभेदेन व्याचष्टे। 'तप सन्तापे, अस्य कर्ता कर्मवद्भवति, स च तपःकर्मकस्यैव' इति । एवकारस्य व्यवच्छेद्यं दर्शयति--'नान्यकर्मकस्य' इति । एतच्च श्रुतस्यैवकारस्यान्वयो वक्तव्य इति मत्वोक्तं, न पुनरस्य किंचित् प्रयोजनमस्ति। 'क्रियाभेदात्' इति । अत्यन्तभेदादित्यर्थः । नियमपक्षेऽपि क्रियाणां च भेदोऽपेक्षितः; तुल्यत्वस्य भेदाधिष्ठानत्वात्। क्रियाभेदमेव दर्शयति--'उपवासादीनि' इति । 'दुःखयन्तीत्यर्थः' इति । सुखदुःख तत्क्रियायाम् (धा. पा. १९२९, १९३०) इति चुरादिपाठाण्णिच् । अनेन तापसस्य कर्मत्वे तपेर्दुःखनमर्थ इति दर्शितम् । 'अर्जयतीत्यर्थः' इति । अनेनापि तापसस्य कर्तृत्वे तपेरर्जनमर्थ इति दर्शितम् । क्वचित्तु आर्जयतीति पाठः, तत्राङ्पूर्वस्य प्रयोगः। नन्वेवमपि शरीरसन्तापलक्षणा क्रियाऽवस्थाद्वयेऽपि तुल्या, न हि शरीरसन्तापादन्यदर्जनं तापसस्य व्यापारः? तदसत्; वस्तुस्थित्या सतोऽपि शरीरसन्तापस्याशब्दार्थत्वात्, कथमन्यथा तपसः कर्मत्वम् ! तस्मादर्जनं निष्पादनम्, अलब्धस्य लाभः; दुःखं तु शरीरसन्ताप एवेति स्पष्ट एव क्रियाभेदः । विध्यर्थमेतदिति यदुक्तं तदेवोपसंहरति--पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते इति । 'अतप्त तपस्तापसः' इति । 'तपोऽनुतापे च' (३.१.६५) इति चिणः प्रतिषेधात् सिच् 'झलो झलि' (८.२.२६) इति लोपः ॥

## ८९. न दुहस्नुनमां यक्चिणौ ।

'दुह प्रपूरणे' (धा.पा.१०१४), 'ष्णु प्रस्रवणे' (धा.पा.१०३८), टुदु उपतापे' (धा.पा.१२५६), 'हसे हसने' (धा. पा. ७२१), 'णु स्तवने' (धा.पा.१०३५) इत्येतेषां तु ग्रहणं न भवति, नौतिहसत्योरकर्मस्थक्रियत्वात् । यदि च तेषां ग्रहणमिष्टं स्यादसन्देहार्थं 'न दुनुहस्नमाम्' इत्येव ब्रूयात्, 'अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसी' (व्या. प. १०८) । 'कर्मवद्भावापदिष्टौ' इति । एतेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या पा. १९) इति 'कर्मवत्कर्मणा, (३.१.८७) इति प्राप्तयोर्यक्चिणोरयं प्रतिषेधः न तु 'चिण् भावकर्मणोः' (३.१.६६), 'सार्वधातुके यक् (३.१.६७) इति शुद्धे कर्मणि भावे प्राप्तयोरिति दर्शयति। 'दुग्धे' इति । यकि, प्रतिषिद्धे शप्, तस्य अदादित्वाल्लुक्, 'दादेर्धातोर्घः' (८.२.३२) झषस्तथोर्धोऽधः' (८.२.४०.) जश्त्वम्, दुहिरयं द्विकर्मकः, तत्राप्रधाने 'दुहादीनाम्' इति यस्मिन् कर्मणि लकारः, तस्य कर्तृत्वविवक्षा, प्रधानं तु कर्म कर्मैवेति, यथा--'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति। 'अदुग्ध' इति । णिच्, भावे क्सः, 'लुग् वा दुह' (७.३.७३) इत्यादिना तस्य लुक् । नन्विदानीमेवोक्तम्--दुहेरनेन यक् प्रतिषिध्यते, चिण् तु [1]'दुहेश्च' (३.१.६३) इति पूर्वमेव विकल्पितः इति, तस्मान्नेतदत्रोदाहर्तव्यम्। 'प्रस्नुत' इति । यकि प्रतिषिद्धे पूर्ववच्छपो लुक् । 'प्रास्नोष्ट' इति । चिण्प्रतिषेधे सिच् । 'नमते' इति। अन्तर्भावितण्यर्थोऽत्र नमिः । तत्र यथा नमयति दण्डं देवदत्तः, नमयते दण्डः स्वयमेवेति ण्यन्तस्य कर्मस्थक्रियत्वम्, एवमस्यापि द्रष्टव्यम् ।

---

1. 'दुहश्च'--३.१.६३

'णिश्रन्थिग्रन्थि' इत्यादि । णीति णिङो णिचश्च सामान्येन ग्रहणम् । 'श्रन्थग्रन्थ सन्दर्भे' (धा.पा.-१५१२,१५१३) चुरादावाधृषीयौ, तयोर्णिजभावपक्षे ग्रहणम् । तथा क्र्यादिष्वपि पठ्येते, तयोरपि ग्रहणम् । 'ब्रूञ् व्यक्तायां वाचि' (धा.पा. १०४४) । आत्मनेपदविधायकर्मका ये धातवो निर्दिष्टास्ते यदाऽन्तर्भावितण्यर्थाः सकर्मका भवन्ति त इमे आत्मनेपदाकर्मकाः । वृत्तौ क्वचिदेषामुदाहरणानि पठ्यन्ते, क्वचिन्न । णिचि—कारयते कटः स्वयमेव, अचीकरत कटः स्वयमेव । यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः । णिङ—पुच्छमुदस्यति, उत्पुच्छयते गौः, स यदाऽन्तर्भावितण्यर्थः, तदा उत्पुच्छयते गाम् । पुनः सौकर्यातिशयेन कर्तृत्वविवक्षायामुत्पुच्छयते गौः स्वयमेव, उदपुपुच्छत गौः स्वयमेव । श्रन्थिग्रन्थ्योराधृषीययोः—ग्रन्थति ग्रन्थं देवदत्तः, श्रन्थति मेखलाम्, ग्रन्थते ग्रन्थः स्वयमेव, अग्रन्थिष्ट ग्रन्थः स्वयमेव; श्रन्थते मेखला स्वयमेव, अश्रन्थिष्ट मेखला स्वयमेव । क्र्यादिकयोस्तु—ग्रथ्नीते ग्रन्थः स्वयमेव, श्रथ्नीते मेखला स्वयमेव । ब्रूञ्—ब्रवीति कथां देवदत्तः, ब्रूते कथा स्वयमेव । वचनं शब्दप्रकाशनफलत्वात् कर्मस्थम् । आत्मनेपदाकर्मक—'वेः शब्दकर्मणः' (१.३.३४) 'अकर्मकाच्च' (१.३.३५), विकुर्वते सैन्धवाः, वल्गन्तीत्यर्थः । तान्यदाऽन्यो वल्गयति तदा तेषां कर्मत्वम् । पुनः सौकर्यातिशयात् कर्तृत्वविवक्षायाम्—विकुर्वते सैन्धवाः स्वयमेव, व्यकृषत सैन्धवाः स्वयमेव, यक्चिणौ न भवतः, क्वचित्तु वृत्तौ—आहन्ति माणवकम्, आहते माणवकः स्वयमेवेति पठ्यते, तदयुक्तम्; आहन्ति माणवकमिति सकर्मकत्वादात्मनेपदाभावाच्च । अन्ये पुनराहुः—आत्मनेपदाकर्मकेति धातूपलक्षणम्, हन्तिश्चायम् 'आङो यमहनः' (१.३.२८) इत्यत्र यदा कर्माविवक्षयाऽकर्मकस्तदाऽऽत्मनेपदस्य निमित्तं स्यात्, तस्याद्य सकर्मकत्वेऽप्य-विरुद्धमुदाहरणमिति ।

भूषाकर्मकिरादिसनां यक्चिणोः प्रतिषेधो वक्तव्यः । कर्मशब्दः क्रियावाची, भूषाफलं च शोभाख्यं कर्मणि दृश्यत इति कर्मस्था भूषा । अलङ्कुरुते कन्या स्वयमेव, अलङ्करिष्यते कन्या स्वयमेव, अलमकृत कन्या स्वयमेव; अवकिरते हस्ती स्वयमेव, अवाकीर्ष्ट हस्ती स्वयमेव, अवकरिष्यते हस्ती स्वयमेव—यक्चिण्चिण्वद्भावा न भवन्ति । सन्—मुमुक्षते वत्सः स्वयमेव, अमुमुक्षिष्ट वत्सः स्वयमेव, चिकीर्षते कटः स्वयमेव, अचिकीर्षिष्ट कटः स्वयमेव—प्रकृत्यर्थापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्था, आर्थं च प्रकृत्यर्थस्य प्राधान्यम्; तदर्थत्वा-विच्छायाः ॥

## ९० कुषिरजोः प्राचां श्यन् परस्मैपदं च ।

'यगात्मनेपदयोरपवादौ' इति । श्यन्यकोऽपवादः, परस्मैपदमात्मनेपदस्य । श्यन्यकोश्चात्र नुमि स्वरे च विशेषः—कुष्यन्ती जङ्घा, श्यनि 'शप्श्यनोर्नित्यम्' (७.१.८१) इति नित्यं नुमागमः, नित्वाच्चाद्युदात्तत्वं भवति; यकि तु 'आच्छीनद्योर्नुम्' (७.१.८०) इति नुम्विकल्पः लसार्वधातुकानुदात्तत्वे च यक एवोदात्तत्वं स्यात् । 'रज्यति' इति । 'अनिदिताम्' (६.४.२४) इति नलोपः । कुष्यते, रज्यते इति पक्षे यगात्मनेपदे भवतः ।

[1]'लिङ्लिटोः' इति । आशिषि लिङत्र गृह्यते, यदुक्तं–कुषिरजोः श्यन्विधाने सार्वधातुकवचनम्, अवचने हि लिङ्लिटोः प्रतिषेध इति । 'स्यादिविषये च' इति । आदिशब्देन सिजादीनां ग्रहणम् । 'चुकुषे, ररञ्ज' इति । लिट्, आत्मनेपदम्, तस्य एशादेशः । 'कोषिषीष्ट' इति । 'लिङः सीयुट्' (३.४.१०२), 'सुट् तिथोः' (३.४.१०७) लघूपधगुणः । 'रङ्क्षीष्ट' इति । 'एकाचः' (७.२.१०) इति इट् प्रतिषेधः, 'चोः कुः' (८.२.३०) इति कुत्वम् गकारः, तस्य चर्त्वम्, ककारः । 'अकोषि, अरञ्जि' इति । चिण् ॥

1. 'लिङ्लिङोः'—काशिका

## ९१. धातोः ।

आ कुतोऽयमधिकारः, किं प्राग्लादेशात् ? आहोस्विदाऽध्यायपरिसमाप्तेः ? इति विचारे द्वितीयं पक्षमाश्रयति—'आ तृतीयाध्यायपरिसमाप्तेः' इति ।

एशः शित्करणात्, तद्धि 'धातोः' (३.१.९१) इत्यधिकारे सति, 'तस्मादित्युत्तरस्य' (१.१.६७), 'आदेः परस्य' (१.१.५४) तकारस्य स्थाने एत्वे सति अकारस्य स्थाने टेरेत्वे अयादेशे च सत्ययेशब्दस्य श्रवणं मा भूदित्येवमर्थं क्रियते । प्राग्लादेशात् पुनर्धात्वधिकरेऽलोन्त्यस्य विधयो भवन्तीति एकारस्यैकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारमन्त्येऽल्यनुसंहारं बाधित्वा सर्वादेशो भविष्यति, किं शकारेण ? यद्याध्यायपरिसमाप्तेरयमधिकारः ? आद्ये योगे न व्यवाये तिङः स्युः, आद्ये योगे तिबादिसूत्रे येऽमी लावस्थायां स्यादयो विधीयन्ते तेषु कृतेषु तैर्व्यवधाने तिबादयो न स्युः । करिष्यति, हरिष्यति, कर्ता, शबादिपु तु न दोषः; तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्रप्त्यभावात्; तिबादयश्च तत्र सावकाशाः ।

न स्यादेत्वम्, टेष्टितां यद्विधत्ते व्यवाय इत्येव—पचते, यजते, क्व तर्हि स्यात् ? आस्ते, शेते, धत्ते, रुन्धे, बेभिदाते इत्यादौ यत्र न विकरणाः सन्ति ।

एशः शित्त्वम् 'लिटस्तझयोरेश्' (३.४.८१) इत्ययमेश् शित्कर्तव्यः । एतच्चोपक्रम एव व्याख्यातम् ।

यच्च लोटो विधत्ते तच्च विकरणव्यवाये न स्यात्—'लोटो लङ्वत्' (३.४.८५), 'एरुः' (३.४.८६), 'सेर्ह्यपिच्च' (३.४.८७) इत्यादि, पचतु, पचतामित्यादि, स्तौतु, जुहोतु, भिनत्तु, आस्तामित्यादावेव स्यात् ।

यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् 'नित्यं ङितः' (३.४.९९), 'इतश्च' (३.४.१००), 'तस्थस्थमिपां तान्तन्तामः' (३.४.१०१), 'लिङः सीयुट्' (३.४.१०२), 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (३.४.१०३) इत्यादि, तथा 'थासः से' (३.४.८०), पचसे इत्यादौ न स्यात् ? नैष दोषः; विहितविशेषणं विज्ञास्यते—धातोर्विहितस्य लोट इति । यद्येवम्, 'विदो लटो वा' (३.४.८३) इत्यत्रापि विदेर्धातोर्विहितस्य लटस्तिबादीनां णलादय इति विज्ञायमाने विन्दति, विन्दतः, विन्दन्तीति लाभार्थस्य विकरणेन व्यवायेऽपि णलादयः प्राप्नुवन्ति ? न क्वचिद्विहितविशेषणं धातुग्रहणमिति सर्वत्र तथा भवितव्यम् । अथ वात्र धातुना विहितं विशेषयिष्यामः, विदिनाऽऽनन्तर्यम्—धातोर्विहितस्य लटो विदेरनन्तरस्येति, 'सिजभ्यस्तविदिभ्यश्च' (३.४.१०९) इत्यत्रापि धातुना विहितं विशेष्यते, अभ्यस्तेन चानन्तर्यम्—धातोर्विहितस्याभ्यस्तादनन्तरस्य ङितो झेरिति; तेनाजक्षिष्यन्, अजागरिष्यन् इत्यादौ न भविष्यति । 'आतः' (३.४.११०) इत्यत्र कथम्, यदि तावद्धातोर्विहितस्याकारादनन्तरस्येति, अलुनन्, अपुनन्—अत्रापि प्राप्नोति ? अथ चाकारान्ताद्धातोर्विहितस्येति, अपिबन्नित्यत्र प्राप्नोति ? अस्तु धातोर्विहितस्याकारादनन्तरस्येति, अलुनन्, अपुनन्, इत्यत्र लुना झि इति स्थिते 'श्नाभ्यस्तयोरातः' (६.४.११२) इति लोपे कृते आकाराभावान्न भविष्यति, नात्र लोपः प्राप्नोति ? 'ई हल्यघोः' (६.४.११३) इति ईत्त्वेन बाध्यते । एवमप्याकारान्न भविष्यति ? नात्रेत्त्वं प्राप्नोति, अन्तिभावेन बाध्यते ? नात्रान्तिभावः प्राप्नोति, जुस्भावेन बाधनात् ? तदेवं लोप ईत्त्वेन, ईत्त्वमन्तिभावेन,

अन्तिभावो जुस्भावेन, जुस्भावो लोपेन, लोप ईत्त्वेनेति चक्रकमव्यवस्था प्राप्नोति ? नैष दोषः; आयन्नादिषूपदेशिवद्वचनादुपदेशकाल एव झस्यान्तिभावे कृते लोपः, लोपेन व्यवस्था । किं चात इत्यत्र सिज्ग्रहणमनुवर्तते—आकारान्तात् सिज्लुगन्तादिति, तेन न क्वाप्यनिष्टप्रसङ्गः । तदेवमाऽध्यायपरिसमाप्तेर्धात्वधिकार इति स्थितम् ।

'वक्ष्यति—तव्यत्तव्यानीयरः' इति । किं च स्यात् यदि तव्यादिविधौ धातोरिति नानुवर्तेत ङ्याप्प्रातिपदिकादपि तव्यादयः स्युः ? साधने तव्यादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाया अभावात् साधनाभावः, साधनाभावाद् ङ्याप्प्रातिपदिकात्तव्यादयो न भविष्यन्ति । कथं तर्हि कर्मादिषु विधीयमाना द्वितीयादयो भवन्ति, नैव प्रातिपदिकार्थस्य साधने द्वितीयादयः, किं तर्हि ? शब्दान्तरवाच्यक्रियापेक्षे तस्यैव कर्मादिभावे; तव्यादयस्तु प्रकृतिवाच्यक्रियापेक्षे साधने चरितार्था न ङ्याप्प्रातिपदिकाद्भविष्यन्ति ? इदं तर्हि प्रयोजनम्—सत्याणवयेत्यादयो येऽपभ्रंशाः क्रियावचनाः तेभ्यस्तव्यादयो मा भूवन्निति; न हि ते धातवः, भूवादिपाठाश्रयत्वाद्धातुसञ्ज्ञायाः । किं च, सोपसर्गाल्लङादयो मा भूवन्निति धात्वधिकारः क्रियते, अन्यथा प्राकरोत्, प्रास्थित अभ्यंष्टेति धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात् ततः प्रत्ययविधावङ्गसञ्ज्ञायामडादि प्रसङ्गः । चोदयति—'धातुग्रहणमनर्थकम्, यङ्विधौ धात्वधिकारात्' इति । 'धातोरेकाचः' (३.१.२२) इत्यत्र यङ्विधौ धात्वधिकारादिति 'धातोरेकाचः' (३.१.२२) इत्यत्र यङ्विधौ यद्धातुग्रहणं तस्येहाधिकारादित्यर्थः । परिहरति—'कृदुपपदसञ्ज्ञार्थं तु' इति । एतदेव व्याचष्टे—'अस्मिन्' इति । अस्मिन्नेवेत्यवधारणं द्रष्टव्यम् । तद्दर्शयति—'पूर्वत्र मा भूताम्' इति । असत्यस्मिन्नधिकारे धात्वधिकारे यत् सप्तम्या निर्दिष्टं तदुपपदमित्येतावानर्थः स्यात्, ततश्च पूर्वत्रापि स्यात्—'च्लि लुङि' (३.१.४३) लुङन्त उपपदे च्लिरिति । एवं कृत्सञ्ज्ञाऽपि धातोर्विहितस्यातिङो भवतीति पूर्वत्रापि स्यात्, ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य कृत्सञ्ज्ञायां कृदन्तं प्रातिपदिकमिति प्रातिपदिकत्वे सति तिङोक्तेऽप्येकत्वे वचनग्रहणादेकवचनस्य चोत्सर्गत्वात् सोरुत्पत्तिः प्रसज्येत । तस्मादस्मिन् धात्वधिकारे यथा स्यातां पूर्वत्र मा भूतामिति पुनर्धात्वधिकारः क्रियते ।

ननु चाधिकारेण ते सञ्ज्ञे विधास्येते, प्रत्ययसञ्ज्ञा च तत्र ते पूर्वत्र भविष्यत इत्याशङ्क्य प्रयोजनान्तरमाह—'आर्धधातुकसञ्ज्ञार्थं च' इति । कः पुनरार्धधातुकसञ्ज्ञायां द्वितीयधातुग्रहणस्योपयोग इत्यत आह—'धातोरित्येवं विहितस्य' इति । 'लूभिः' इति । अत्र सत्यपि प्रातिपदिकत्वे धातुत्वमप्यस्ति; पूर्वप्रवृत्ताया धातुसञ्ज्ञाया अनिवर्तनात् । ततश्च धातोरेवायं विहित इति आर्धधातुकसञ्ज्ञा स्यादेव । यदि तु शमिधातोरित्यत्र धातुग्रहणस्य द्वितीयस्यार्धधातुकसञ्ज्ञार्थं स्वरितत्वं प्रतिज्ञायेत, अयमप्यधिकारः शक्योऽकर्तुम् । वासरूपविधिरप्यधिकारेण सिद्धः; तेन क्सादिभिः सिचः समावेशो न भविष्यति ॥

## ९२. तत्रोपपदं सप्तमीस्थम् ।

'सप्तमीस्थम्' इत्यस्यार्थमाह—'सप्तम्या निर्दिष्टम्' इति । सप्तम्या विभक्त्योच्चारितमित्यर्थः । सप्तम्यन्ते पदे सप्तम्यन्तेन पदेन प्रतिपादितमिति वा । अस्मिन् पक्षे सूत्रे सप्तमीशब्देन सप्तम्यन्तमुच्यते । सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुंभादिकमित्यर्थः । प्रथमे तु पक्षे कर्मणीत्यादेर्यः सप्तम्या निर्देशः स एव कुम्भमित्यादेरपि प्रयोगगतस्य सप्तम्या निर्देशः, यथा—'तस्यापत्यम्' (४.१.९२) इत्यादौ तस्येति सामान्यं विशेषोपलक्षणार्थमिति तदीयमेव प्राथम्यं विशेषाणामपि भवति, तद्वदत्रापि । 'कुम्भकारः' इति । अत्रोपपदत्वात् समासः, कृदुत्तरपदप्रकृतिस्वरत्वं च भवति ।

'स्थग्रहणम्' इत्यादि । सूत्रेषु यः सप्तम्या विभक्त्या निर्देश उच्चारणं सप्तम्यन्तेन वा पदेन प्रतिपादनं तदेव सञ्ज्ञाङ्गमिति प्रतिपत्त्यर्थमित्यर्थः । ननु सप्तमीशब्देन साहचर्यात् सूत्रादिषु सप्तम्या निर्दिष्टं ग्रहीष्यते, नार्थ एतदर्थेन ग्रहणेन ? तत्राह--'अन्यथा हि' इति । मुख्यार्थसम्भवे गौणस्याग्रहणात् सप्तम्या एव सञ्ज्ञा स्यात्; 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्' (पु.प.वृ. ८१) । न चासतः सञ्ज्ञिनः सञ्ज्ञा शक्या विधातुमिति यत्र सप्तमी श्रूयते तत्रैव स्यादित्यर्थः । 'स्तम्बेरमः' इति । 'स्तम्बकर्णयो रमिजपोः' (३.२.१३) इत्यच्, 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्यलुक् । 'यत्र वा' इति । यत्र सूत्रे सप्तमीश्रुतिः, सप्तमीशब्दस्य श्रवणमित्यर्थः । अशब्दसञ्ज्ञेति स्वरूपग्रहणप्रतिषेधादभ्युपगम्यवादोऽयम्, सर्वथेष्टं न सिध्यतीत्यत्र तात्पर्यम् । 'स्थग्रहणात्तु' इति । स्थग्रहणे सति सौत्रसप्तम्युपलक्षितस्य सञ्ज्ञाविधानात् सर्वत्र सिध्यतीत्यर्थः ।

ननु च लघ्वर्थं सञ्ज्ञाकरणम्, तत्किमर्थं गुर्वी सञ्ज्ञा क्रियत इत्यत आह--'गुरुसञ्ज्ञाकरणम्' इति । 'उपोच्चारितं पदमुपपदम्' इत्येवमर्थानुगता सञ्ज्ञा अन्वर्थसञ्ज्ञा । 'समर्थपरिभाषाव्यापारार्थम्' इति । इह यदा स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थस्तदा नान्तरेण विभक्तिं कर्माधिकरणाद्युपपदमुपपद्यत इत्यवश्यमुत्पाद्या विभक्तिरिति पदविधित्वादेव सिद्धः परिभाषाव्यापारः, पञ्चकपक्षेऽपि तु प्रातिपदिकस्यैव कर्माद्यभिधायित्वेन पदविधित्वाभावात् परिभाषाव्यापारो न स्यादित्यन्वर्थया सञ्ज्ञया बलात् प्रवर्त्यते ? नैतदस्ति; पञ्चकपक्षेऽपि विभक्त्युत्पत्त्या पदत्वे सत्येव प्रत्यय इति प्रतिपादनात् । ननु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या.प. १३८) इति वचनात् कथमुपपदस्य सुबन्तत्वम्,--साम्नि स्मर्ता भवान् ! 'उपपदमतिङ्' (२.२.१९) इत्यत्र हि 'सुपा' इति तृतीयान्तमेव निवृत्तं सुबिति प्रथमान्तमनुवर्तत इत्यवोचाम, कथमपरथा चर्मकारादौ नलोपादि स्यात् ! 'पश्य कुम्भं करोति कटम्' इति । 'धातोः' (३.१.९१) इति वर्तते, कर्मादिशब्दाश्च सम्बन्धिशब्दाः, तत एवं विज्ञास्यामः--यस्य धातोर्यत्कर्मेति । एवमपि महान्तं कुम्भं करोतीत्यत्र प्राप्नोति ? न वा भवति; महाकुम्भकार इति भवति; यदेतद्वाक्यम्--महान् कुम्भो महाकुम्भः, महाकुम्भं करोतीति । यदा त्वेतद्वाक्यम्--महान्तं कुम्भं करोतीति, तदा नेष्यते । किं च स्यात्, यद्यत्र स्यात् ? कुम्भशब्दस्य कारशब्देन समासे कृते तदर्थ एकार्थीभावात् महच्छब्देन समासो न स्यात्, अन्वर्थत्वादेव सञ्ज्ञायाः सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणात् तद्विशेषणानां च उपोच्चारितपदत्वाभावादुपपदसञ्ज्ञा न भवति ।

अथ तत्रग्रहणं किमर्थम् ? धात्वधिकारः प्रतिनिर्दिश्यते--तत्रैतस्मिंस्तृतीये धात्वधिकार इति । नैतदस्ति प्रयोजनम्, अधिकारादप्येतत् सिद्धम् ? इदं तर्हि प्रयोजनम्--सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तत्वं यथा स्यादिति, कथम् ? प्रत्यय इति वर्तते--सप्तमीस्थमुपपदसञ्ज्ञं भवति, तत्र चोपपदे सत्येव प्रत्यय इति । अथ कर्मणीत्यादिका सत्सप्तमी, तत्कुतोऽसत्युपपदे प्रत्ययप्रसङ्गः ? न; कर्मणीत्यादिका सौत्री सप्तम्यर्थापेक्षा, तथा हि सत्यप्रत्ययस्याभिधेयं कर्म स्यात्, यथा--'धः कर्मणि ष्ट्रन्' (३.२.१८१) इति, तथा चोपपदत्वं न प्रतीयेत, अतो यथेसञ्ज्ञार्थमनुनासिकत्वं प्रतिज्ञायते, तथार्थनिरपेक्षा केवलमुपपदसञ्ज्ञाया लिङ्गं सप्तमी, तथा च धातोरण् भवति कर्म चोपपदमित्येतावानर्थः स्यात् । कर्मणः प्रत्ययोत्पत्तिं प्रति निमित्तत्वं न प्रतीयेत, तस्मात् तदर्थं तत्रग्रहणम् । किमिदानीं हेय एवायं ग्रन्थस्तत्रैतस्मिन् धात्वधिकार इति ? न ब्रूमो हेय इति, सोपस्कारस्तु भवति, एतस्मिन् धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदसञ्ज्ञं भवति, तत्र च सति प्रत्यय इति ॥

## ९३. कृदतिङ् ।

'तिङ्वर्जितः' इति । तिङ्त्वेन त्यक्तः तिङ्त्वेन रहितः, तिङोऽन्य इति यावत् । 'अतिङिति किम्' इति । इह क्रियमाणोऽप्ययं प्रतिषेधः स्वाश्रयामेव तिङः कृत्सञ्ज्ञां बाधितुं प्रभवति, न तु लकारस्य कृत्वात् स्थानिवद्भावेन प्राप्ताम्; 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति वचनादिति मत्वा प्रश्नः । तिङ्भाविनो लकारस्यैव कृत्सञ्ज्ञा प्रतिषिध्यते, प्रतिषेधसामर्थ्याद्वा स्थानिवद्भावो न भविष्यतीत्युत्तरम् । 'चीयात् स्तूयात्' इति । ननु च ज्ञापकादेतत् सिद्धम्, यदयम् 'अकृत्सार्वधातुकयोः' (७.४.२५) इति पृथक् सार्वधातुके प्रतिषेधं शास्ति तज्ज्ञापयति—अकृदिति प्रतिषेधो न तिङ्क्षु भवतीति, यदि स्यात्; चिनुयात्, सुनुयादित्यादौ सार्वधातुकेऽपि कृत्प्रतिषेधादेव दीर्घो न भविष्यति, किं पृथक् सार्वधातुकपर्युदासेन ! इह तर्हि पचति, पठति—'ह्रस्वस्य पिति कृति तुक्' (६.१.७१) इति तुङ्मा भूदिति ? तुग्विधौ धात्वादेरित्यतो धातुग्रहणमनुवर्तिष्यते । एवमपि चिकीर्षति, जिहीर्षतीत्यत्र प्राप्नोति ? शपा व्यवधानान्न भविष्यति । एकादेशे कृते नास्ति व्यवधानम् ? 'एकदेशः पूर्वविधौ स्थानिवद्भवति' इति व्यवधानमेव । नात्र स्थानिवद्भावः प्राप्नोति; परत्वावन्तवद्भावेन बाध्यते । तस्माच्चिकीर्षतीत्यादौ तुङ्मा भूदित्यतिङिति प्रतिषेधः कर्तव्यः । किं च, तिङन्तस्य कृदन्तं प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञायां पचेरन्—नलोपः प्राप्नोति, पपाच ब्राह्मणी—टाप् प्राप्नोति, सर्वत्र च स्वाद्युत्पत्तिः प्रसज्येत, तदेतदस्मादन्यार्थादतिङिति प्रतिषेधादेव सिद्धे चीयादित्यादौ ज्ञापकं नाश्रयितव्यमिति वृत्तिकारो मन्यते स्म ॥

## ९४. वाऽसरूपोऽस्त्रियाम् ।

'असरूपः' इति पदच्छेदः, अन्यथा लाघवे विशेषाभावादसन्देहार्थं 'सरूपोऽस्त्रियां वा' इति ब्रूयात् । अपवादविषयेऽपि केषांचित् कृतां प्रवृत्तिर्यथा स्यादित्येवमर्थमिदं वचनं, यथोक्तम्—असरूपस्य वावचनमुत्सर्गस्य बाधकविषये निवृत्त्यर्थमिति । परिभाषा चेयम्, अस्मिन् धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यान्यसरूपस्यापवादस्य विधायकानि शास्त्राणि तच्छेषभूता, तत्र तत्र वचने क्रियमाणे गौरवं स्यादिति साधारणरूपेण परिभाष्यते । तत्र च 'असरूपः' इति व्यर्थं कृन्मात्रस्य विकल्पने सर्वस्यैवासरूपत्वाद्यत्किंचित् कृदपेक्षया; असरूपपदं चैतत् सापेक्षं प्रतियोगिनि यतोऽत्र भिन्नरूपत्वमसरूपत्वमिष्यते । केनचिद्धि किंचित्सरूपमसरूपं वा भवति, तत्र केनासरूप इत्यपेक्षायां स्वविधानवेलायां यः स्वस्मिन् विषये प्राप्तः स एव बुद्धिस्थः प्रतियोगी गम्यते, अपवादविधानसमये चोत्सर्गः; तमपि विषयमवगाढुमुपढौकमान उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एवात्रासरूपो विवक्षित इत्याह—'असरूपोऽपवादप्रत्ययः' इति । एवं स्थिते यद्ययमुत्पत्तिविकल्पः स्यात्, अपवादप्रत्ययो वा भवतीति, ततः स्वविषये कामं विकल्पस्तस्य लभ्यते, न तूत्सर्गः प्रवर्तेत । तत्रातद्विषयो ह्यसौ, उत्सर्गापवादशास्त्रयोर्हि प्रमितिव्यापारे पर्यवसिते पश्चादियमत्रैव प्रदेशे स्थिताऽपवादस्य पक्षे प्रवृत्तिं प्रतिबध्नाति । अपवादशास्त्रेण यः स्वीकृतो विषयः तद्व्यतिरिक्तविषया सामान्यशास्त्रस्य प्रमितिरित्यपवादस्याप्रवृत्तावपि नैवोत्सर्गस्य तस्मिन् विषये प्रमितिः प्रवृत्तिर्वा उपपद्यते, तद्धितवत्; तद्यथा—दक्षस्यापत्यम्, अत इञि विकल्पिते पक्षेऽण् न भवति, अपि तु वाक्यमेव भवति, तत्कस्य हेतोः ? 'समर्थानां प्रथमाद्वा' (४.१.८२) इति तटस्थेन पक्षे प्रवृत्तिर्निरुध्यते, न पुनरेकवाक्यतया प्राप्तिरेव विकल्पकषितेति, तथेहापीति, अपवादाभावपक्षे प्रकृतिरेव कर्त्राद्यभिधानायानुज्ञाता स्यात्, यथाऽग्निचिदित्यादौ क्विबादिलोपे, तदाह—तत्रोत्पत्तिर्वा प्रसङ्गो यथा तद्धित इति ।

तमिममुत्पत्तिविकल्पपक्षे दोषं दृष्टवा बाधकत्वं विकल्प्यत इत्याह--'वा बाधको भवति' इति। उक्तं च 'सिद्धं त्वसरूपबाधकस्य वावचनात्' इति, असरूपो वा बाधको भवतीति वक्तव्यमित्यर्थः। ननु तत्र तत्रोच्यते यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवतिपर इति, ततश्चासरूपो वेत्युक्ते भवतीत्येवाध्याहारो युक्तः, न पुनर्वा बाधक इति ? उच्यते--उत्पत्तिविकल्पस्य प्रयोजनं केवलायाः प्रकृतेः प्रयोगः, केवला च प्रकृतिः स्वार्थमात्रमभिधातुमसमर्था, किं पुनः कर्त्रादिकमभिधास्यति ! प्रकृतिप्रत्ययसमुदाये हि प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यामयं प्रकृत्यर्थः, अयं प्रत्ययार्थ इति व्यवस्थाप्यते; अनुत्पन्नप्रत्यया तु प्रकृतिर्न कंचिदप्यर्थं गमयति। प्रयोगोऽपि हि तस्या दुर्लभः, परश्चेति नियमात्। तद्धिते त्वनुत्पत्तिपक्षेऽप्युत्सर्गप्रवृत्तिव्यतिरेकेण प्रत्ययान्तरमस्ति षष्ठी, इह तु न तथेति सामर्थ्यादिहिरङ्गमपि बाधकत्वमपि कल्प्यते। ननु च शास्त्रं शास्त्रेण बाध्यते, न पुनः कार्यं कार्येण, निदानोच्छेदेनैव हि निदानिन उच्छेदः शक्यते कर्तुम्, न हि प्रदीपेऽनुच्छिन्ने तत्प्रकाश उच्छिद्यते, तत्किमुच्यते—अपवादप्रत्यय इति। एवं तु वक्तव्यम्—अपवादशास्त्रमिति ? उच्यते--सर्वस्यैवापवादशास्त्रस्य स्वगतमसारूप्यमव्यभिचारीति प्रत्ययद्वारकं तदाश्रयणीयमित्यपवादप्रत्यय इत्युक्तम्। एवंभूतस्य प्रत्ययस्य विधायकं शास्त्रमित्यर्थः।

यद्वा—प्रत्ययस्य बाधकत्वविकल्पसामर्थ्याच्छास्त्रमपि पक्षे बाधकं भविष्यति।

अथ वा वृत्तौ वस्तुमात्रं दर्शितम्; यथा त्वयमर्थ उपपद्यते तथा सूत्रं व्याख्येयम्। तत्रेदं व्याख्यानम् —परिभाषेयमित्युक्तम्, तत्रेक्परिभाषावदियमपि पदमुपस्थापयति—अस्मिन् धात्वधिकारे यत्रासरूपोऽपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते, स्त्र्यधिकारे तु नेति। किं कृतं भवति ? 'ददातिदधात्योर्विभाषा' (३.१.१३९) इत्यादिवत् प्रमितिरेव विकल्परूषिता भवति, ततस्तद्वदेवोत्सर्गस्य प्रवृत्तिसिद्धिरिति। अथ 'असरूप उत्सर्गप्रत्ययोऽपवादविषये वा भवति' इति विज्ञायमाने को दोषः ? न खलु कश्चिद्दोषः, अपवादविकल्पे प्राप्ते विभाषा, उत्सर्गविकल्पे त्वप्राप्तविभाषेति, किन्तु प्रतियोग्यपेक्षमसरूपपदमप्यपवादमेव गोचरयतीत्युक्तम्।

'अस्त्रियाम्' इत्यत्र पक्षत्रयं सम्भवति—अभिधेयसप्तमी वा स्यात्—स्त्रियामभिधेयायां वासरूपो न भवतीति, स्त्रियामित्येव वा विहितस्यासरूपस्य निषेधः स्यात्—स्त्रियामित्युच्चार्य ये विधीयन्ते ते नेति, स्त्रीग्रहणं वा स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति—'स्त्रियां क्तिन्' (३.३.९४) इत्यस्मिन्नधिकारे नेति। तत्राद्ये पक्षे विक्षिपा विक्षेपिका, विक्षेप्तेति कविषये ण्वुल्तृचौ न स्याताम्, द्वितीये तु 'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३) व्यावक्रोशी, व्यावकृष्टिरिति णचो विषये क्तिन्न स्यात्, द्वयोरपि स्त्रियामित्युच्चार्य विधानादिति, एवमाद्ययोः पक्षयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह--'स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा' इति। केचिदाहुः—अपवादप्रत्ययं वर्जयित्वेति वक्तव्ये प्रत्ययं वर्जयित्वेति वचनं प्रत्ययमात्रपरिग्रहार्थम्, तेनोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशिनोरयं प्रतिषेधः। किं सिद्धं भवति ? आसना, आस्या--स्त्र्यधिकारविहितेनापि युचापवादेन ऋहलोर्ण्यतः (३.१.१२४) समावेशः सिद्धो भवति, घञस्तु क्तिन्नादिभिरनभिधानादसमावेश इति। अन्ये तु--अपवादो वा बाधको भवतीति प्रकृतत्वात् स एवात्र प्रत्यय इति व्याचक्षते, तेन घञः क्तिन्नादिभिरसमावेशः। आस्येत्यत्र 'कृत्यल्युटो बहुलम्' (३.३.११३) इति ण्यदिति। 'ण्वुल्तृचावुत्सर्गौ' इति। धातुमात्रे विधानात्। 'इगुपधज्ञाप्रीकिरः क इत्यपवादः' इति। धातुविशेषे विधानात्। किं पुनः प्रयोगगतमसारूप्यम् ? आहोस्विदुपदेशगतम् ? किं चातः ? प्रयोगे लादेशेषु प्रतिषेधः—ह्योऽपचदित्यत्र लुङपि प्राप्नोति, प्रयोगे ह्यसारूप्यं स्यात्, लङि अनचकस्तकारः प्रत्ययः। लुङि—अपाक्षीदितीचछब्दः। श्वः कर्तेत्यत्र लुङपि प्राप्नोति ? ज्ञापकात् सिद्धम्, यदयम् 'हशश्वतोर्लङ् च' (३.२.११६) इति लिड्विषये लङं शास्ति, तज्ज्ञापयति—न लादेशे

वासरूपविधिरिति। एवमपि ग्रामणीः, ग्रामनाथ इति क्विबादिविषयेऽणादयो न स्युः, न हि क्विबादयः प्रयोगे रूपवन्तः, लोपविधानात् तेषाम्। तस्मादुपदेशगतमसारूप्यम्। यद्येवम्, अनुबन्धभिन्नेषु विभाषाप्रसङ्गः, काणोरपि ह्युपदेशे भिन्नं रूपम्, प्रयोगे तु समानम्, तत्राह—'नानुबन्धकृतम्' इति। अनुबन्धानामनेकान्तत्वात् तत्कृतमसारूप्यं नाश्रीयते, तथा च 'उदीचां माङः' (३.४.१९) इति श्रूयमाणेऽपि ङकारे तस्यानेकान्तत्वादव्याहृतमेजन्तत्वमित्यात्वं प्रयुक्तम्। 'ददातिदधात्योर्विभाषा' (३.१.१३९) इति विभाषाग्रहणं च लिङ्गमस्यार्थस्य; अन्यथाऽनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन ?

इह क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिः प्राप्नोति। हसितं छात्रस्य, शोभनं हसनं छात्रस्य, अत्र क्तल्युड्विषये घञपि प्राप्नोति। तुमुन्—इच्छति भोक्तुम्, अत्र 'इच्छार्थेषु लिङ्लोटौ' (३.३.१५७) इति लोट् प्राप्नोति, तुमुना च बाध इष्यते, लिङ् तु 'लिङ् च' (३.३.१५९) इति वचनाद् भवत्येव। यद्येवम्, अस्मादेव नियमाल्लोडपि न भविष्यति। खलर्थ—'आतो युच्' (३.३.१२८) ईषत्पानः, अत्र खलपि प्राप्नोति। ननु स्त्र्यधिकारे तावत् 'अस्त्रियाम्' (३.१.९४) इति प्रतिषेधादस्याप्रवृत्तिः परस्तादपि विच्छिन्नत्वादेव न भविष्यति ? स्यादेतदेवम्, यद्ययमधिकारः स्यात्, परिभाषा त्वेषेत्युक्तम्। इष्यते च स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिः—आसित्वा भुङ्क्ते, आस्यते भोक्तुमित्यपि यथा स्यात्; अन्यथा भोजनार्थत्वादासनस्य पौर्वकाल्यमवगम्यते तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययस्तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात्। तथा कालो भोक्तुम्, कालो भोजनस्य—तुमुना ल्युटो बाधः स्यात्, तस्मात् स्त्र्यधिकारस्य परस्तादपि वासरूपविधिरेषितव्यः, 'अर्हे कृत्यतृचश्च' (३.३.१६९) इत्यत्र कृत्यतृज्ग्रहणं ज्ञापकम्—स्त्र्यधिकारस्य परस्तादनित्यैषा परिभाषेति। तस्मात् क्तल्युट्तुमुन्खलर्थेषु प्रतिषेधोऽवक्तव्य एव॥

## ९५. कृत्याः प्राङ् ण्वुलः।

'ण्वुल्तृचाविति वक्ष्यति' इति। 'रोगाख्यायां ण्वुल् बहुलम्' (३.३.१०८) इत्ययं त्ववधिर्न भवति; 'अर्हे कृत्यतृचश्च' (३.३.१६९) इति पृथक् तृचो ग्रहणात्, यद्येवम्, 'प्राङ् ण्वुलः' इति न वक्तव्यम्, 'कृत्याः' इत्येवास्तु, तृज्ग्रहणादेव ज्ञापकात् परतोऽनुवृत्तिर्न भविष्यति, योगापेक्षं च ज्ञापकं 'ण्वुल्तृचौ' (३.१.१३३) इत्यस्माद् योगात् प्राक् कृत्यसञ्ज्ञाधिकार इति ? सत्यम्; 'कृत्याः' इत्येतावदेव पठितं सूत्रकारेण, वृत्तिकारस्तु भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रचिक्षेप। विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण! 'कृत्याः' इति बहुवचनमनुक्तसमुच्चयार्थम्, तेन 'केलिमर उपसङ्ख्यानम्' (वा. २१२) इत्यादि नोपसङ्ख्येयं भवति॥

## ९६. तव्यत्तव्यानीयरः।

'वसेः' इति। 'वस निवासे' (धा. पा. १००५) इत्यस्य ग्रहणम्, न तु 'वस आच्छादने' (धा.पा.- १७४४) इत्यस्य लुग्विकरणस्य। 'तयोरेव कृत्यक्तखलर्थाः' (३.४.७०) इति वचनात् कर्त्तरि न प्राप्नोतीति वचनम्, णिद्वद्भावार्थं च। 'वास्तव्यः' इति। तद्धितान्तो वा पुनरेष भविष्यति, वास्तुनि भवो वास्तव्यः, दिगादित्वाद्यत्। अवास्तव्य इत्यत्र स्वरभेदो नास्ति, 'कृत्योकेष्णुच्' (६.२.१६०) इति यदन्तोदात्तत्वं तदेव 'ययतोश्चातदर्थे' (६.२.१५६) इत्यनेन भविष्यति। 'केलिमर' इति। ककारो गुणवृद्धिप्रतिषेधार्थः, रेफः स्वरार्थः। 'कर्मकर्त्तरि चायमिष्यते' इति। भाष्ये तु 'पचेलिमा माषाः, पक्तव्याः, भिदेलिमाः सरलाः, भेत्तव्याः' इति शुद्धे कर्मणि प्रदर्शितम्॥

## ९७. अचो यत् ।

'अज्ग्रहणं किम्' इति । पूर्वसूत्र एव यद्ग्रहणं कर्तव्यमिति प्रश्नः । 'यावता' इत्यादि । द्वये हि धातवः—अजन्ता हलन्ताश्च । तत्र हलन्ताद् ण्यतं वक्ष्यति, अतः पारिशेष्यादजन्तादेव यद्भविष्यतीत्यभिप्रायः ।

'अजन्तभूतपूर्वादपि' इति । पूर्वं भूतो भूतपूर्वः, 'सुप् सुपा' (२.१.४) इति समासः, अजन्तश्चासौ भूतपूर्वश्च अजन्तभूतपूर्वः 'दित्स्यम्, धित्स्यम्' इति । दाञो धाञश्च सन्, द्विर्वचनं 'सनिमीमाघु' (७.४.५४) इत्यादिना इस्, 'सः स्यादार्धधातुके' (७.४.४९) इति तत्वम्, 'अत्र लोपोऽभ्यासस्य' (७.४.५८) दित्स धित्स इति स्थिते, अनुत्पन्न एवार्धधातुके वुद्धिस्थे एवातो लोपे कृते सम्प्रत्ययं हलन्त इति ण्यत् स्यात्; अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति, तेन 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वम्, ण्यति तु तित्स्वरितं स्यात् । चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषाभावः । 'यतोऽनावः' (६.१.२१३) इत्यत्र हि 'द्व्यचः' इति वर्तते । यदा त्वार्धधातुके परतो लोपः, तदैतदज्ग्रहणं न कर्तव्यमेव ।

'तकिशसि' इत्यादि । 'तकि हसने' (धा. पा. ११७) 'शसु हिंसायाम्' (धा. पा. ७२७), 'चते चदे याचने' (धा. पा. ८६५,८६६) 'यती प्रयत्ने' (धा. पा. ३०), 'जनी प्रादुर्भावे' (धा. प. ११४९), 'यतोऽनावः' (६.१.२१३) इति स्वरार्थं जनेर्यद्विधानम्, जन्यमिति रूपम्, न तु ण्यताऽपि सिद्धम्; 'जनिवध्योश्च' (७.३.३५) इतिवृद्धि प्रतिषेधात् । शंसिमपि केचित् पठन्ति—तद्वा नाराशंस्यं राद्धचं च ।

'हनो वा वध च' इति । हन्तेर्वा यत्प्रत्ययो भवति, तत्सन्नियोगेन च वधादेशः । 'वध्यम्' इति । तद्धितान्तो वा पुनरेष भविष्यति—वधमर्हतीति वध्यः, 'दण्डादिभ्यः' (५.१.६६) इति यत् । यदि तद्धितः, समासो न प्राप्नोति—असिवध्यः, मुसलवध्य इति, कृति पुनः सति 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समासः सिद्धो भवति । 'घात्यम्' इति । 'हनस्तोऽचिण्णलोः' (७.३.३२) इति तत्वम्, 'हो हन्तेर्ञ्णिन्नेषु' (७.३.५४) इति कुत्वम् ॥

## ९८. पोरदुपधात् ।

'पाक्यं वाक्यम्' इति । 'चजोः कु घिण्ण्यतोः' (७.३.५२) इति कुत्वम् । 'कोप्यम्, गोप्यम्' इति । 'कुप कोपने' (धा. पा. १२३३) 'गुप व्याकुलत्वे' (धा.पा. १२३४) । 'आप्यम्' इति । 'आप्लृ व्याप्तौ' (धा.पा.१२६०) एषु त्रिषु 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वं न भवति, तित्स्वरित एव तु भवति ॥

## ९९. शकिसहोश्च ।

'शक्लृ शक्तौ' इति । उपलक्षणमेतत्, 'शक विभाषितो मर्षणे' (धा.पा. ११८७) इत्यस्यापि ग्रहणम् । 'षह मर्षणे' इति । ननु 'षह शक्त्यर्थः' (धा.पा. ११२८) इत्यस्यैव परस्मैपदिनोऽननुबन्धकस्य ग्रहणं प्राप्तम्, नैष दोषः; प्रत्ययविधिविषयत्वादननुबन्धकपरिभाषायाः, तस्माद्द्वयोरपि ग्रहणम् । अन्ये तु 'कृत्यल्युटो बहुलम्' (३.३.११३) इति वृत्तिकारोक्तयोरेव ग्रहणमिच्छन्ति ॥

## १००. गदमदचरयमश्चानुपसर्गे ।

'अनुपसर्गेभ्यः' इति । सूत्रे 'अनुपसर्गे' इति व्यत्ययेन पञ्चम्यर्थे सप्तमीति भावः । अत एवोपसर्गादन्योऽनुपसर्गः, तस्मिन्ननुपसर्गे उपपद इत्यर्थो न भवति । एवं हि केवलेभ्यो न स्यात् 'वदः सुपि क्यप् च' (३.१.१०६) इत्यत्र सुब्ग्रहणमनर्थकं स्यात्, 'अनुपसर्गे' इति हि वर्तते, तत्र नञिवयुक्तन्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणं भविष्यति ।

'नियमार्थम्' इति । अनुपसर्गादेव यथा स्यात् सोपसर्गात् मा भूदिति । कथं तर्हि तेन न तत्र भवेद्विनियम्यमिति ? प्रमादपाठोऽयम्, विनियाम्यमिति पाठः । एतेन 'इति यत्नोपचर्यम्' इति व्याख्यातम् ।

'चरेराङि चागुरौ' इति । सोपसर्गार्थं वचनम् । 'आचर्यो देशः' इति । गन्तव्य इत्यर्थः । उपनेता = गुरुः ॥

## १०१. अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ।

'अवद्यम्' इति । 'निपात्यते' इति । वदेर्नञ्युपपदे 'वदः सुपि क्यप् च' (३.१.१०६) इति यत्क्यपोः प्राप्तयोर्यदेव यथा स्यात्—गर्ह्ये एव च यथा स्यादित्युभयार्थं निपातनम् । 'अवद्यं पापम्' इति । अवदनार्हत्वात् । 'अनुद्यमन्यत्' इति । गुरुनामादि । तद्धि गर्ह्यं न भवति, अथ च वदनार्हमपि न भवति । अत्र क्यबेव भवति, यजादित्वात् संप्रसारणम्, 'नलोपो नञः' (६.३.७३), 'तस्मान्नुडचि' (६.३.७४), 'पण्यं व्यवहर्तव्यम्' इति । निपातनस्य रूढ्यर्थत्वात् पण्यशब्दस्य च तत्रैव रूढत्वात्, उक्तं च—

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥ इति ।

'पाण्यमन्यत्' इति । स्तुत्यमित्यर्थः । 'वर्येति स्त्रियां निपात्यते' इति । सूत्रेऽवद्यादीनि अविभक्तिकानि पृथक् पदानि, न तु द्वन्द्वस्य जसन्तनिर्देश इति भावः । 'शतेन वर्या' इति । 'वृङ् संभक्तौ' (धा.पा. १५०९) इत्येतस्येदं निपातनम्; तत्रैवानिरोधसंभवात् । 'वृत्याऽन्या' इति । 'वृञ् वरणे' (धा.पा. १२५४) 'एतिस्तुशास्वृ' (३.१.१०९) इत्यादिना क्यप् । 'वार्या ऋत्विजः' इति । 'एतिस्तुशास्वृ' इत्यत्र वृञो ग्रहणम्, वृङस्तु स्त्रीलिङ्गादन्यत्र ऋहलोर्ण्यत् (३.१.१२४) एव भवति, भट्टिकाव्ये तु पुंलिङ्गेऽपि यदेव प्रयुक्तः—'सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः' इति ।

## १०२. वह्यं करणम् ।

'वहेर्धातोः करणे यत्प्रत्ययो निपात्यते' इति । अर्थव्याख्यानमेतत् । 'वह्यमिति निपात्यते करणं चेद्भवति' इति वक्तुं युक्तम् ॥

## १०३. अर्यः स्वामिवैश्ययोः ।

'स्वामिन्यन्तोदात्तत्वं च' इति । अथ यो वैश्यः स्वामी च, तत्र कथम् ? उच्यते—वैश्याख्यायामाद्युदात्तत्वम्, स्वाम्याख्यायामन्तोदात्तत्वम् । तथा च 'अर्यस्य स्वाम्याख्यायाम्' (फि.सू. १.१७) इति फिट्सूत्रे आख्याग्रहणं कृतम् । 'आर्यो ब्राह्मणः' इति । प्राप्तव्य इत्यर्थः ।

## १०४. उपसर्या काल्या प्रजने ।

'उपपूर्वात् सर्तेः' इति । भौवादिकस्य जौहोत्यादिकस्य च 'सर्तिशास्त्यर्तिभ्यश्च' (३.१.५६) इति निर्देशात् सूत्राद्बहिरपि लुका निर्देशः । 'प्राप्तकाला काल्या' इति । 'तदस्य प्राप्तम्' इति वर्तमाने 'कालाद्यत्' (५.१.१०७) इति यत् । प्रजननम् = प्रजनः 'भावे घञ्' (३.३.१८) 'जनिवध्योश्च' (७.३.३५) इति वृद्धिप्रतिषेधः । 'उपसर्या गौः' इति । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । वृषभोपगमनस्य प्राप्तकालेति यावत् । 'उपसार्या' इति । उपसरणीया प्राप्तव्येत्यर्थः ॥

## १०५. अजर्यं सङ्गतम् ।

'सङ्गमने कर्तरि' इति । सूत्रे 'सङ्गतम्' इति 'नपुंसके भावे क्तः' (३.३.११४) इति दर्शयति । कर्तरीति 'तयोरेव कृत्यक्तखलर्थाः' इति भावे मा भूदिति निपातनाश्रयणम् । तेन भावे सङ्गतकर्तृकेऽपि ण्यदेव भवति—अजार्यं सङ्गतेनेति । 'अजरिता' इति । तृच् ॥

## १०६. वदः सुपि क्यप् च ।

'अनुपसर्गे इति वर्तते' इति । 'सत्सूद्विष' (३.२.६१) इत्यादौ सूत्रे वक्ष्यति—उपसर्गग्रहणं ज्ञापकमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति । तच्चावश्यं तथैवाश्रयणीयम्—'सुप्यजातौ' (३.२.७८) 'स्पृशोऽनुदके क्विन्' (३.२.५८) इत्यादावुपसर्गग्रहणं मा भूदिति, ततश्च नार्थ इहानुपसर्गग्रहणानुवृत्त्या । 'सुबन्ते उपपदे अनुपसर्गे' इति । यद्यपि पूर्वं बहुव्रीहेः पञ्चम्यर्थे सप्तमीति व्याख्यातम्, इह तु विरोधाभावात् तत्पुरुषात् स्वार्थ एव सप्तमीति भावः । 'ब्रह्मोद्यम्' इति । भावे क्यप् पूर्ववत् संप्रसारणम् । ब्रह्म वेदः तस्य वदनमित्यर्थः । कथं पुनः सकर्मकाद्भावे कृत्यप्रत्ययः, यावता 'भावे चाकर्मकेभ्यः' (३.४.६९) 'तयोरेव कृत्यक्तखलर्थाः' (३.४.७०) इति वक्ष्यति; न च कर्माविवक्षयाऽकर्मकत्वम्; ब्रह्मेति कर्मणः श्रुतत्वात् ? तस्मादुत्तरसूत्रादिह भावग्रहणमपेक्षणीयमित्याहुः ॥

## १०७. भुवो भावे ।

'यत्तु नानुवर्तते' इति । पूर्वसूत्रे चानुकृष्टत्वात् । ननु 'तयोरेव कृत्यक्तखलर्थाः' (३.४.७०) इति भावकर्मणोः कृत्या विधीयन्ते, 'अनुपसर्गे' इति चानुवर्तते, अनुपसर्गश्च भवतिरकर्मक एव, अतः सामर्थ्याद्भाव एव भविष्यति ? ननु च प्राप्त्यर्थः सकर्मक एव ? सत्यम्; व्यक्तिनिर्देशात्, प्राथम्याच्च सत्तार्थस्यैव ग्रहणम् ।

न च कालादिकर्मणि प्रसङ्गः, अनभिधानात्, तत्किमर्थं भावग्रहणम् ? इत्यत्राह—'भावग्रहणमुत्तरार्थम्' इति। 'हनस्त च' (३.१.१०८) इति सकर्मकादपि हनो भावे यथा स्यात्—ब्रह्महत्या वर्तत इति, कर्मणि मा भूत्—त्वया घात्यो वृषल इति ॥

## १०८. हनस्त च ।

'ब्रह्महत्या' इति । स्वभावतः स्त्रीलिङ्गत्वमस्य क्यबन्तस्य, यथाऽन्येषां भावे कृत्यानां नपुंसकत्वम् । छन्दसि तु क्यबन्तस्यापि नपुंसकत्वमिष्यते—'सनादेव दस्युहत्याय जज्ञिषे' (ऋ. १.५१.६) । छन्दसि च स्त्रियां चिद्वक्तव्यः—'अस्यै ब्रह्महत्यायै तृतीयं परिगृहाण' इति । 'प्रघातो वर्तते' इति । किं पुनः कारणं घञ् प्रत्युदाह्रियते न ण्यदित्यत आह—'ण्यत्तु भावे न भवति' इति कर्माविवक्षायामकर्मकत्वे सत्यपीति भावः । सकर्मकात्तु भावे ण्यतः प्राप्तिरेव नास्ति ॥

## १०९. एतिस्तुशास्वृदृजुषः क्यप् ।

'एति' इति श्तिपा निर्देशः किमर्थः ? धातोर्ग्रहणं यथा स्यात्, इवर्णान्तस्य मा भूदिति । अत्र चेण एव ग्रहणम्, नेङिकोः, तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः । तथा च—'रक्षार्थं वेदानामध्येयं व्याकरणम्' (म. भा. १) इति भाष्ये यदेव प्रयुक्तः । केचित्तु 'इण्वदिक इति वक्तव्यम्' (वा. १६७) इति वचनादधीत्या मातेत्यप्युदाहरन्ति । 'स्तुत्यः' इति । ह्रस्वस्य तुक् (६.१.७१) । 'शिष्यः' इति । 'शास इदङ्हलोः' (६.४ ३४) इतीत्वम्, 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम्, 'आङः शासु इच्छायाम्' (धा. पा. १०२२) इत्यस्यापि ग्रहणमविशेषात् । तेनाशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति । ण्यति तु 'गतिकारकोपपदात् कृत्' (६.२.१३९) इति अन्तस्वरितत्वं स्यात् । केचित्तु 'शासु अनुशिष्टौ (धा. पा.-१०७५) इत्यस्यैव ग्रहणमिच्छन्ति । 'ओरावश्यके' इत्यादि । इह स्तुग्रहणस्यावकाश आवश्यकाविवक्षायाम्—स्तुत्य इति; 'ओरावश्यके' (३.१.१२५) इत्यस्यावकाशः—अवश्यलाव्यमिति; अवश्यस्तुत्य इत्यत्रोभयप्रसङ्गे परत्वाद् ण्यत् स्यात्, पुनः क्यब्ग्रहणात् क्यबेव भवति । 'वृग्रहणे वृञो ग्रहणमिष्यते न वृङः' इति । ज्ञापकात्, यदयम् 'ईडवन्दवृशंसदुहां ण्यतः' (६.१.२१४) इति वार्यशब्दस्याद्युदात्तत्वं शास्ति, तत्र चेडिवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङो ग्रहणम् ।

'शंसिदुहि' इत्यादि । 'शंसु स्तुतौ' (धा. प. ७२८), 'दुह प्रपूरणे' (धा. पा. १०१४), 'गुहू संवरणे' (धा. पा. ८९६) । 'शस्यम्' इति । क्यप्पक्षे उपधालोपः । भाष्ये एतदुपसङ्ख्यानं न दृष्टम् ।

'आङ्पूर्वात् । इति । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' (धा. पा. १४५८) । 'आज्यम्' इति । 'कृत्यल्युटो बहुलम्' (३.३.११३) इति करणे क्यप्, पूर्ववदुपधालोपः । अथ कस्माद् ण्यत्येवोपधालोपो नोक्तः ? कुत्वप्रसङ्गात् तित्स्वरप्रङ्गाच्च । तस्मात् क्यबन्त एषः । यद्येवमवग्रहः प्राप्नोति—आज्यमित्या अज्यमिति ? पदविच्छेदो ववगृह्यताम्, को दोषः ? न हि लक्षणेन पदकारा अनुवर्त्याः, किन्तु पदकारैर्नाम लक्षणमनुवर्त्यम् । पदविच्छेदो हि पौरुषेयः, संहितैव तु नित्या । अर्थं चार्थनिश्चयाभावे नावगृह्णन्ति; यथा 'हरिव' इति, किं हरिशब्द इकारान्त उत हरित्शब्दः तकारान्त इति सन्देहात् ।

'कथम्' इति । इण एवैतद्रूपमिति मन्यमानस्य प्रश्नः । 'एः' इति । 'इ गतौ' (धा. प. १०४५) इत्यस्य ॥

## ११०. ऋदुपधाच्चाक्लृपिचृतेः ।

'क्लृपिचृती वर्जयित्वा' इति । 'क्लृपू सामर्थ्ये' (धा.पा. ७६२), 'चृती हिंसाग्रन्थनयोः' (धा.पा. १३२४), कृपेर्लत्वस्यासिद्धत्वादृकारलृकारयोः सवर्णसञ्ज्ञाविधानाच्च ऋदुपधात्वम् । 'कृत संशब्दने' 'ण्यदेव भवति' इति । 'अनित्यण्यन्ताश्चुरादयः' इति णिजभावपक्षे इति भावः । इदमेव च तपरकरणं लिङ्गम्–अनित्यण्यन्ताश्चुरादय इति । णिजन्तात्तु णिलोपे कृते चाकृते च विरत्स्यम्, चिरत्स्यमितिवद्यदेव भवति ।

'पाणिसर्ग्या' इति । पाणिभ्यां सृज्यत इत्युपपदसमासः, पूर्ववत् कुत्वम् । एवं 'समवसर्ग्या' इत्यत्रापि ॥

## १११. ई च खनः ।

दीर्घोच्चारणं किमर्थम् ? न 'इ च खनः' इत्येवोच्येत, दीर्घस्य ह्रस्वस्य वा आद्गुणे (६.१.८७) नास्ति विशेषः, ह्रस्वादेशे 'षत्वतुकोरसिद्धः' (६.१.८६) इत्येकादेशस्यासिद्धत्वाद्ध्रस्वाश्रयस्तुक् स्यादिति चेत् ? न; पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः, अन्यथा 'वृक्षेच्छत्रम्' इति डौ आद् गुणस्य (६.१.८७) असिद्धत्वात् 'छे च' (६.१.७३) इति ह्रस्वाश्रयो नित्यस्तुक् स्यादित्यत आह—'दीर्घनिर्देशः' इत्यादि । एतेन ह्रस्वद्वयमत्र विधीयते, न दीर्घं इति दर्शयति । पूर्वं तु यथाश्रुताश्रयणेनोक्तमीकारश्चान्तादेश इति । 'तत्र' इति । प्रश्लेषे सति । 'ये विभाषेत्यास्वबाधनार्थः' इति । अन्यथा 'ये विभाषा' (६.४.४३) इत्यस्यावकाशः—खायते, खन्यते; अस्य त्ववकाशः—यस्मिन् पक्षे आत्वं नास्ति; आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात् । एतच्च 'ये विभाषा' (६.४.४३) इति विषयसप्तमीपक्ष उच्यते । तदा हि यकारादौ बुद्धिस्थ एव भवदात्वमन्तरङ्गम्, अयं त्विकारः क्यपा सह विधानात् बहिरङ्गः, परसप्तमीपक्षे त्विदमेवेत्वमन्तरङ्गम्, परनिमित्तमनपेक्ष्य विधानात् ॥

## ११२. भृञोऽसञ्ज्ञायाम् ।

'भर्तव्या इत्यर्थः' इति । एतेन क्रियाशब्दत्वं दर्शयन् सञ्ज्ञात्वमपाकरोति । 'संपूर्वाद्विभाषा' इति । असञ्ज्ञायामेव सूत्रेण नित्यं प्रसक्तस्य क्यपोऽयं विकल्पः । प्राप्तविभाषेत्यर्थः ।

'सञ्ज्ञायाम्' इत्यादि । प्रतिषेधस्येति शेषः । असञ्ज्ञायामित्यस्य प्रतिषेधस्य भार्यो नाम क्षत्रिय इत्यत्र पुंसि दृष्टत्वाच्चरितार्थत्वान्न ते = सूत्रकारस्य भार्याशब्दः सिध्यतीत्यर्थः । पुंसि चरितार्थे हि प्रतिषेधे स्त्रियां क्यपा भवितव्यम् । ननु भार्याशब्दोऽपि सञ्ज्ञा, अभ्रियमाणापि भार्या भार्येत्युच्यते, तत्कुतोऽस्य क्यपः प्रसङ्गः ? न भृञोऽनेन क्यपा भवितव्यमिति; यस्तु सञ्ज्ञायामेव विधीयते 'संज्ञायां समजनि' (३.३.९९) इत्यादिना तस्यात्र प्रसङ्गः । न च तस्यापि प्रतिषेधसामर्थ्यान्निवृत्तिः, पुंसि प्रतिषेधस्य चरितार्थत्वादिति चोद्यम् । उत्तरमाह—'स्त्रियां भावाधिकारोऽस्ति' इति । ननु 'संज्ञायां समजनिषद' (३.३.९९) इत्यत्र वक्ष्यति—'भाव इति न स्वर्यते, पूर्वक एवार्थाधिकारः' इति, यथा—समजन्ति तस्यामिति समज्या, निषदन्ति तस्यामिति निषद्येत्यादि भवति।

तत्कथमिदमुच्यते—स्त्रियां भावाधिकारोऽस्तीति ? नेदमपूर्वं चोद्यम्, वृत्तिकार एव हि तत्र वक्ष्यति—कथं तदुक्तं स्त्रियां भावाधिकारोऽस्तीति । स्त्रियां स्त्रीप्रकरणे 'संज्ञायां समजनि' इत्यादिना यद्यपि विधीयमाने भावस्याधिकारोऽभिधेयभावोपगमलक्षणो व्यापारोऽस्ति; शब्दशक्तिस्वाभाव्यात् । भाव एव तेन क्यब् भवति, न कर्मणि, तेन भार्या प्रसिध्यतीति कर्मणीत्यभिप्रायः । 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' (व्या.प. ५२) इति 'भृञ् भरणे' (धा.पा. ८९८) इत्यस्यैव क्यब्विधौ ग्रहणम्, न 'डुभृञ् धारणपोषणयोः' (धा.पा. १०८७) इत्यस्य । अतस्तस्माद्वा 'भृञ् भरणे' (धा.पा. ८९८) इत्यस्माद्दीर्घान्ताद्वा भार्येति प्रसिध्यतीति परिहारान्तरमप्यत्र सम्भवति ॥

## ११३. मृजेर्विभाषा ।

'परिमार्ग्यः' इति । 'मृजेर्वृद्धिः' (७.२.११४) पूर्ववत् कुत्वम् ॥

## ११४. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।

'राजा सोतव्यः' इति । अभिषिक्तः क्षत्रियो राजा, तेन सोमयोऽभिषवद्वारेण निष्पादयितव्य इत्यर्थः, कर्मणि क्यब् दीर्घत्वं च निपात्यते । 'राजा वा इह सूयते' इति । अत्र पक्षे लतात्मकः सोमो राजा, राजानं क्रीणन्तीत्यादौ दर्शनात् । सुनोतिरत्राप्यभिषवे । अधिकरणे क्यब्निपातनं रूढ्यर्थम्, तेन ज्योतिष्टोमादौ न भवति । पूर्वस्मिन्नपि पक्षेऽश्वमेधादावतिप्रसङ्गः । 'सूसर्तिभ्याम्' इति । ननु 'सर्तेरुत्वं सुवतेर्वा रुडागमः' इत्यभिधानाद्विकल्पोऽत्राभिप्रेत इति चार्थाभावाद्द्वन्द्वानुपपत्तिः ? भाष्यकारप्रयोगात्तु द्वन्द्वः । प्रयुक्तं हि भाष्ये 'सूसर्तिभ्यां च सर्तेरुत्वं सुवतेर्वा रुडागमः' इति । दीर्घत्वं तु रपरत्वे सति 'हलि च' (८.२.७७) इत्येव सिद्धम् । 'सुवतेर्वा रुडागमः' इति । सुवतेरिति पञ्चमी, सुवतेः परस्य क्यप इत्यर्थः, रुगागम इति पाठे षष्ठी । 'सरति' इति । आकाशे । 'सुवति' इति । 'षू प्रेरणे' (धा.पा. १४०८) तुदादिः, कर्मणि लोकं प्रेरयतीत्यर्थः, उदिते हि तस्मिन् क्रियासु लोकस्य प्रवृत्तिः । कर्तृप्रत्ययेन कर्तरि निपातनं दर्शयति । एवं रुच्याव्यथ्ययोरपि द्रष्टव्यम् । आह च—'सूर्यरुच्याव्यथ्याः कर्तरि' इति । 'कुप्यम्' इति । सञ्ज्ञायामेतदिष्यते, सुवर्णरजतव्यतिरिक्तस्य धनस्येयं सञ्ज्ञा । सर्वत्रातिप्रसङ्गो निपातनाश्रयेण परिहार्यः । 'कर्मकर्तरि निपातनम्' इति । अन्तोदात्तस्य चेति द्रष्टव्यम् । आह हि—'कृष्टपच्यस्यान्तोदात्तत्वं कर्मकर्तरि च' इति । शुद्धे तु कर्मणि कृष्टपाच्य इत्येव भवति ॥

## ११५. भिद्योद्ध्यौ नदे ।

## ११६. पुष्यसिद्ध्यौ नक्षत्रे ।

'पुष्यन्त्यस्मिन्नर्थाः' इति । आरब्धा इति शेषः । 'सिध्यन्त्यस्मिन्' इति । अत्रार्था इत्यपेक्ष्यते पुष्यसिद्ध्यशब्दौ पर्यायौ, स्वरूपपरत्वात्तु सूत्रे द्वन्द्वः ॥

## ११७. विपूयविनीयजित्या मुञ्जकल्कहलिषु ।

'विपूयो मुञ्जः' इति । रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः । 'विनीयः कल्कः' इति । कल्कशब्दोऽयमस्ति पिष्टे औषधे—'पथ्या शुण्ठी सैन्धवांशस्य कल्कः पेयो नित्यं सर्वरोगक्षयाय' इति । तैले घृते वा औषधे प्रक्षिप्ते

यवृजीवं तत्रापि वर्तते, तापे च प्रसिद्धः—'तापो न कल्कोऽध्ययनं न कल्कः' इत्यादौ; इह तु प्रथमस्य ग्रहणमिति केचित्। अविशेषेणेति वयम्। तथा च माघः प्रायुङ्क्त—'अविनीय सम्भ्रमविकासिभक्तिभिः' इति। 'जित्यः' इति। बलेनाक्रष्टव्यः। कृष्टसमीकरणार्थं स्थूलं काष्ठं हलिरित्युच्यते॥

## ११८. प्रत्यपिभ्यां ग्रहेश्छन्दसि।

## ११९. पदास्वैरिबाह्यापक्ष्येषु च।

'अस्वैरिणी' इति। 'ईर प्रेरणे' (धा.पा. १०१८), स्वयमेवेरितुं शीलमस्या इति ताच्छीलिको णिनिः, 'स्वादीरेरिणोः' (वा. ६७९) इति वृद्धिः। 'बाह्यायाम्' इति। बहिर्भवा 'बहिषष्टिलोपश्च' (वा. ३७८) इति यञ्टिलोपौ; पक्षे भवः पक्ष्यः, दिगादित्वाद्यत् (४.३.५४)। 'यस्य प्रगृह्यसञ्ज्ञा विहिता' इति। ननु पदावयवस्य द्विवचनादेः प्रगृह्यसञ्ज्ञा, न तु पदस्य, सत्यम्; यौगिकस्त्वयं पदशब्दः—पद्यते गम्यतेऽनेनार्थ इति। यद्वा–प्रातिशाख्ये द्विवचनान्ते पद एव प्रगृह्यशब्दः प्रसिद्धः। संनिकर्षोऽत्र गृह्णातेरर्थः। स्वरसन्ध्यभावादग्नी इत्यादौ कियताऽपि कालेन व्यवधानात् परस्परमचो न सन्निकृष्यन्ते। 'अवगृह्यम्' इति। समासे पूर्वपदम्, तत्र हि पदकालेऽवग्रहो विच्छेदः। 'गृह्यका इमे गृहीतिका इत्यर्थः' इति। 'उभयत्रानुकम्पायां कन्' (५.३.७६), पञ्जरादिबन्धेन परतन्त्रीकृताः शुकादयः उच्यन्ते। 'ग्रामगृह्या' इति। शेषलक्षणायाः षष्ठ्या समासः। 'वासुदेवगृह्या' इत्यत्र तु कर्तरिषष्ठ्या वा समासः॥

## १२०. विभाषा कृवृषोः।

'वृष्यम्' इति। वृषु सेचने (धा.पा. ७०६)॥

## १२१. युग्यं च पत्रे।

'पतन्त्यनेनेति पत्रम्' इति। 'दाम्नीशस' (३.२.१८२) इत्यादिना करणे ष्ट्रन्। 'तद्वहति रथयुगप्रासङ्गम्' (४.४.७६) इति प्राग्दीव्यतीयेनैव यता, सिद्धम्; स्वरेऽपि नास्ति भेदः—यद्यपि धातुस्वरः, यद्यपि 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वम्, अयुग्यमित्यत्रापि न स्वरे भेदः, 'ययतोश्चातदर्थे' (६.२.१५६) 'कृत्योकेष्णुच्चार्वादयश्च' (६.२.१६०) इत्युभयत्रान्तोदात्तविधानात्॥

## १२२. अमावस्यदन्यतरस्याम्।

'अमाशब्दः सहार्थे वर्तते' इति। अमात्य इत्यादौ दर्शनात्। 'तस्मिन्नुपपदे' इति। उपपदत्वमपि निपातनादेव, अमेति वा सप्तम्या लुका निर्देशः। तकारोच्चारणात् प्रकृतस्य ण्यपस्तावन्निपातनं न भवति। यदि तु परमप्रकृतस्य यतो निपातनं स्यात् स्वरे दोषः स्यात्–यति सति वस्याशब्दे 'यतोऽनावः' (६.१.२११) इत्याद्युदात्तत्वम्; कृदुत्तरपदप्रकृतिस्वरत्वेऽपि स एव स्वरोऽवतिष्ठेत, ण्यति त्वन्तस्वरितत्वं भवति। तथा यता

मृवतेऽमावास्येत्यधिकरणे ण्यन्न प्राप्नोति, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भविष्यति। एवमप्युपपदसमासो न प्राप्नोति ? मयूरव्यंसकादित्वात् (२.१.७२) भविष्यति। एवमपि 'गतिकारकोपपदात्' (६.२.१३९) इति स्वरो न प्राप्नोति, तथा 'अमावास्याया वा' (४.३.३०) इति ण्यदन्तस्य यत्कार्यं तद्यदन्तस्यामावस्यशब्दस्य न स्यात्, भिन्नत्वात् ? इति यदन्तपक्षे दोषं दृष्ट्वा प्रकृतस्यापि ण्यत एव निपातनमित्याह—'ण्यत्प्रत्ययो भवति' इति। किं तर्हि उच्यते—ण्यत्प्रत्ययो भवतीति, न पुनर्ण्यत्प्रत्ययो निपात्यत इति ? सत्यम्; स एवार्थः निपातनाद् ण्यत्प्रत्ययो भवतीत्यर्थः। 'अन्यतरस्यां वृद्ध्यभावो निपात्यते' इति। ण्यत्प्रत्ययो नित्यः, वृद्ध्यभावस्तु पाक्षिक इत्यर्थः। 'सह वसतः' इति। सन्निकृष्टौ वसत इत्यर्थः। यदुक्तम्—ण्यत्प्रत्ययो निपात्यत इति, तत्रायं गुण इत्याह—'एकदेशविकृतस्यानन्यत्वात्' इति। ण्यति ह्यमावास्येति स्वतः प्राप्तं रूपम्, वृद्ध्यभावस्तु तस्यैव विकार इति भावः। यद्वा—ण्यति वृद्धौ कृतायां पक्षे ह्रस्वोऽपि निपात्यते, स एव वृद्ध्यभाव उक्तः। एवं श्लोकेऽप्यवृद्धितामिति।

किमत्र निपात्यत इत्याशङ्कायां श्लोकः—'अमावसोः' इत्यादि। वृद्धिभावाभावकृतविशेषाश्रयो द्विवचननिर्देशः। 'निपातयामि' इति। एकस्यवेति शेषः, अमःपूर्वयोर्वसोर्ण्यन्तयोर्मध्ये एकस्य वृद्ध्यभावमहं निपातयामीत्यर्थः। सूत्रकारेणैक्यमापन्नस्यैतद्वचनम्। तथा सति किं सिद्धमित्यत्राह—'तथा' इति। एका तद्धितवृत्तिरेकदेशविकृतस्यानन्यत्वादेतयोर्द्वयोरपि सिध्यतीत्यर्थः। 'स्वरश्च मे प्रसिध्यति' इति। एवं निपातयतो मम स्वरोऽपि सिध्यति। व्याख्यातः स्वरः॥

## १२३. छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्तव्योपचाय्यपृडानि।

'नुगभावश्च' इति। यद्वा जुहोतेस्तदेति भावः। 'उपचाय्यपृडम्' इति। 'मृड सुखे, पृड च' (धा पा. १३२७,१३२८) इत्येतस्मात् इगुपधलक्षणः कः उपचाय्यं च तत्पृडं चेति कर्मधारयः। 'हिरण्ये चेति वक्तव्यम्' इति। हिरण्येऽभिधेय इत्यर्थः। 'व्यत्ययम्' इति। आद्यन्तविपर्यास इत्यर्थः।

'ण्यदेकस्मात्' इति। एकस्माद् धातोर्ण्यत्प्रत्ययो निपात्यते, तदनन्तरेषु देवहूयादिषु चतुर्षु चतुर्भ्यो धातुभ्यः क्यब् निपात्यते। उपसर्गभेदान्नयतेर्भेदः। 'द्वौ क्यपौ' इति। द्वाभ्यां धातुभ्यां द्वौ क्यपौ निपात्येते इत्यर्थः। 'ण्यद्विधिश्चतुः' इति। सुज्ञमेतत्, क्रियाभ्यावृत्तिवाचिचतुरो वा ण्यद्विधीयत इत्यर्थः॥

## १२४. ऋहलोर्ण्यत्।

'ऋवर्णान्तात्' इति। अर्तेस्तु ग्रहणं न भवति; हला साहचर्यात्, परं कार्यमिति निर्देशात् 'ईडवन्दवृशंसदुहां ण्यतः' (६.१.२१४) इति लिङ्गाच्च॥

## १२५. ओरावश्यके ।

'अवश्यं भाव आवश्यकम्' इति । मनोज्ञादित्वाद्वुञ्, अव्ययानां भमात्रे टिलोपः । किं पुनरवश्यार्थवाचिन्युपपदे प्रत्यये ? आहोस्विदावश्यके द्योत्ये ? तत्राद्ये पक्षे उपपदरहितात् प्रत्ययो न स्यात्–लाव्यम्, पाव्यमिति, तस्माद्द्वितीयः पक्ष आश्रीयत इत्याह—'आवश्यके द्योत्ये' इति ।

'स्वरसमासानुपपत्तिः' इति । उपपदपक्षे उपपदसमासो लभ्यते, 'गतिकारकोपपदात् कृत्' (६.२.१३९) इत्युत्तरपदप्रकृतिस्वरत्वं च; द्योत्यपक्षे त्वेतदुभयमपि न सिध्यतीत्यर्थः । 'अवश्यलाव्यम्' इति । 'लुम्पेदवश्यमः कृत्ये' इति मलोपः । द्योतितार्थस्यापि क्वचित् प्रयोगो दृश्यते, लाघवं प्रत्यनादरात् । न त्वेतदत्र वक्तव्यम्; 'लुम्पेदवश्यमः कृत्ये' इति वचनादेव द्योतिते अवश्यमः प्रयोग इति तस्यावश्यकर्तव्यादौ चरितार्थत्वात् । 'मयूरव्यंसकादित्वात्' इति । तस्याकृतिगणत्वादिति भावः । 'उत्तरपदप्रकृतिस्वरत्वं च' इति । मयूरव्यंसकादिनिपातनादेव स्वरोऽपि भविष्यतीत्यपि शक्यं वक्तुम् ॥

## १२६. आसुयुवपिरपिलपित्रपिचमश्च ।

युप्रभृतीनां द्वन्द्वेन आसुनोतेर्द्वन्द्व इत्याहुः । सुनोतेरभिसम्बन्धस्तदाह—'आङ्पूर्वात् सुनोतेः' इति । 'षु प्रसवैश्वर्ययोः' (धा.पा. ९४१) इत्यस्य ग्रहणम्, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति । 'यु' इति 'यु मिश्रणे' (धा.पा. १०३३) इत्यस्य ग्रहणम् । 'युञ् बन्धने' (धा.पा. १४७९) इत्यस्य तु सानुबन्धकत्वादग्रहणम् । 'यतोऽपवादः' इति । 'अचो यत्' (३.१.९७), 'पोरदुपधात्' (३.१.९८) इति यथायोगं प्राप्तस्य । 'दाभ्यम्' इति । दभेर्धातुष्वपठितस्यापि चुरादौ 'बहुलमेतन्निदर्शनम्' इति वचनाच्छिष्टप्रयोगाच्च क्षपयत्यर्थयत्यवधीरयत्यादिवद्धातुत्वं द्रष्टव्यम् ॥

## १२७. आनाय्योऽनित्ये ।

'रुढिरेषा' इति । तेन घटावावतिप्रसङ्गो नोद्भावनीय इति । निपातनाच्च रुढित्वम् । उक्तं हि–'रूढ्यर्थं च निपातनम्' इति । कुतः पुनरनित्यत्वमित्यत्राह—'तस्य चानित्यत्वम्' इति । 'नित्यमजागरणात्' इति । सततमज्वलनादित्यर्थः, ज्वलनमेव हि तस्य जागरणम् । दक्षिणाग्नावपि विशिष्ट एवेष्यते, न सर्वत्रेति दर्शयति–'यश्च' इति । योनिरुत्पत्तिस्थानम् । वैश्यकुलादित्यादिना योनिविकल्पं दर्शयति ।

'आनाय्योऽनित्य इति चेत्' इति । घटादिष्वपि प्रसङ्ग इति शेषः । 'भवेत्' इति । सम्भावने लिङ् । निपातनादेव सम्भाव्यत इत्यर्थः । 'एकयोनौ' इति । आहवनीयेन । 'आनेयो ह्यन्यथा भवेत्' इति । घटावावनित्ये भिन्नयोनौ च दक्षिणाग्नौ, 'अचो यत्' (३.१.९७) इति यदेव भवतीत्यर्थः ॥

## १२८. प्रणाय्योऽसम्मतौ ।

असम्मताविति बहुव्रीहिरित्याह—'अविद्यमाना सम्मतिरस्मिन्' इति । सम्मतिश्चात्र संमननं प्रीतिविषयभावोपगमनं कर्मव्यापारो विवक्ष्यते, न सम्मन्तृव्यापारः; तथा सत्यसम्मन्तरि निपातनप्रसङ्गात्, तस्य चा-

निश्चत्वादित्यभिप्रायेणाह—'संमतता सम्मतिः' इति। 'सम्मतिरभिलाषोऽप्युच्यते' इति। भोगविषयोऽप्यादरः सम्मतिशब्देनोच्यते, तन्त्रेणेत्यर्थः ॥

## १२९. पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु।

मीयतेऽनेनेति मानम्, हूयत इति हविः, निवसत्यस्मिन्निति निवासः, समिधामाधानी ऋक् सामिधेनी। 'माङो ण्यत्प्रत्ययः' इति। करणे तत्र 'आतो युक् चिण्कृतोः' (७.३.३३) इति युक्। 'मेयमन्यत्' इति। भावकर्मणोर्यदेव भवतीत्यर्थः। 'सान्नाय्यम्' इति। सम्यङ्नीयते होमार्थमग्निं प्रतीति कर्मणि ण्यत्। 'हविर्विशेषः' इति। 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्' इति विहितयोर्दधिपयसोः। माघस्तु यथाश्रुतार्थग्राही हविर्मात्रे प्रायुङ्क्त—'हुतमयमवलीढे साधु सान्नाय्यमग्निः' इति। निचीयतेऽस्मिन् धान्यादिकमिति अधिकरणे ण्यत्। 'धाय्या' इति। धीयतेऽनया समिदिति करणे ण्यत्, पूर्ववद्युक्। 'ऋग्विशेषस्य' इति। 'प्रवोवाजा अभिद्यवः' इत्यादिकस्य। 'किं तर्हि काचिदेव' इति। समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा अमर्त्य इत्यादिका। कथं पुनरयं विशेषो लभ्यत इत्याह—'रूढिशब्दो ह्ययम्' इति। अत एव निपातनाश्रयणमिति भावः। रूढित्वमेव द्रढयति—'तथा च' इति। धाय्याः शंसतीति ज्योतिष्टोमे मरुत्वतीये शस्त्रे विधानमेतत्। सामिधेनी-ग्रहणं प्रयोगविषयोपलक्षणार्थमिति भावः ॥

## १३०. क्रतौ कुण्डपाय्यसंचाय्यौ।

ण्यति प्रकृते यत्प्रत्ययान्तः कुण्डपाय्यशब्दो निपात्यत इत्युक्तम्, तत्र प्रयोजनमाह—'यतोऽनाव इति' इति। यदुत्तरपदस्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरेण स एव स्वरः सिद्धो भवतीत्यर्थः। ण्यति तु स्वरितत्वं स्यात् ॥

## १३१. अग्नौ परिचाय्योपचाय्यसमूह्याः।

'अग्नौ' इति। न ज्वलने, किं तर्हि? तदर्थइष्टकाचयनविशेषे; तत्रैव रूढत्वात्, इह संपूर्वात् 'ऊह वितर्के' (धा.पा. ६४८) इत्यस्मादनेकार्थत्वाद् वहेरर्थे वर्तमानाद्धलन्तत्वात् ण्यति समूह्यमिति सिद्धम्, तथा च—'समूह्यं चिन्वीत पशुकामः, पशवो वै पुरुषः, पशूनेवास्य तत्समूह्यति' इति वह्यर्थेनोहिना ब्राह्मणे समूह्यशब्दो निरुक्तः ॥

## १३२. चित्याग्निचित्ये च।

'चित्योऽग्निः' इति। कर्मणि यदपवादः क्यप् निपात्यते, तेनाद्युदात्तत्वं भवति। 'भावे यकारप्रत्ययः' इति। किमर्थं पुनरत्रापि क्यबेव न निपातितः? एवं हि तुक् निपात्यो न भवति, तत्राह—'तेनान्तोदात्तत्वं भवति' इति। 'अग्नावित्येव' इति। तच्च चित्यशब्दस्यैव विशेषणार्थम्, नाग्निचित्याशब्दस्य; तस्य भावे निपातितत्वात्। तदेतद्दर्शितम्—'चेयमन्यत्' इति ॥

## १३३. ण्वुल्तृचौ ।

## १३४. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।

'आदिशब्दः प्रत्येकमभिसंबध्यते' इति । गणपाठादिति भावः । 'अपोद्धृत्य ये पठ्यन्ते' इति । ते गृह्यन्त इत्यन्वयः, अपोद्धृत्येति बुद्ध्या पृथक्कृत्येत्यर्थः । किमर्थं पुनरपोद्धृत्य प्रत्ययविधानम्, यावता नन्दनादीनां गणपाठादेव सिद्धं साधुत्वम् ? उच्यते—असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगाद् गणत्रयपाठोऽनार्षोऽध्यवसीयेत ।

'नन्दिवाशी' इत्यादि । 'टुनदि समृद्धौ' (धा.पा. ६७), 'वाशृ शब्दे' (धा.पा. ११६३), 'मदी हर्षे' (धा.पा. १२०८), 'दुष वैकृत्ये' (धा.पा. ११८५) 'राध साध संसिद्धौ' (धा.पा. १२६२, १२६३), 'वृधु वृद्धौ' (धा.पा. ७५९), 'शुभ शुम्भ शोभार्थे' (धा.पा. १३२१,१३२२), 'रुच दीप्तौ' (धा.पा.- ७४५) । 'दूषणे' इति । 'दोषो णौ' (६.४.९०) इत्यूत्वम् । 'सहितपि' इत्यादि । 'षह मर्षणे' (धा.पा. ८५२), 'तप सन्तापे' (धा.पा. ९८५), 'शमु दमु उपशमे' (धा. पा. १२०१,१२०३) । 'जल्पने' इत्यादि । जल्प जप व्यक्तायां वाचि' (धा.पा. ३९७,३९८), 'रमु क्रीडायाम्' (धा.पा. ८५३), 'तृप हर्षविमोचनयोः' (धा.पा.- ११९६), 'क्रदि आह्वाने रोदने च' (धा.पा. ७१) । 'कृष विलेखने' (धा.पा. ९९०), 'हृषु अलीके' (धा.पा. ७०९), 'अर्द हिंसायाम्' (धा.पा. १८२८), जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते । एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम् । 'यु मिश्रणे' धा.पा. १०३३), 'षूद रक्षणे' (धा.पा. २५), मधुनामाऽसुरस्तं सूदयतीति मधुसूदनः । 'ञिभी भये' (धा.पा. १०८४), णिचि 'भियो हेतुभये षुक्' (७.३.४०) । 'लूञ् छेदने' (धा.पा. १४८३) 'णश अदर्शने' (धा.पा. ११९४), 'दमु उपशमे' (धा.पा. १२०३),—ण्यन्तौ, चित्तं नाशयतीति चित्तनाशनः, कुलं दमयतीति कुलदमनः ।

'ग्राहीत्यादि' । 'ग्रह उपादाने' (धा.पा. १५३३), 'षह मर्षणे' (धा.पा. ८५२), 'तसु उपक्षये' (धा.पा. १२१२), 'वसु च' (धा.पा. १२१३), 'भस भर्त्सनदीप्त्योः' (धा.पा. ११००), तिष्ठतेरातो युक् । 'मन्त्रि गुप्तभाषणे' (धा.पा. १६७९) चुरादिः, 'अर्द हिंसायाम' (धा.पा. १८२८) । 'रक्ष' इत्यादि । 'रक्ष पालने' (धा.पा. ६५८), 'श्रु श्रवणे' (धा.पा. ९४२), 'डुवप् बीजसन्ताने' (धा.पा. १००३), 'शो तनूकरणे' (धा.पा. ११४५)—एषां निशब्द उपपदे णिनिः । 'याचि' इत्यादि । 'टु याचृ याच्ञायाम्' (धा.पा. ८६३), 'हृञ् हरणे' (धा.पा. ८९९), 'व्रज गतौ' (धा.पा. २५३), 'वद व्यक्तायां वाचि' (धा.पा. १००९), 'वस निवासे' (धा.पा. १९४२)—एषां प्रतिषिद्धानां णिनिर्भवति । प्रतिषिद्धार्थानामित्यर्थः । प्रतिषिद्धार्थता च नञ्पूर्वाणां भवतीति दर्शयति । 'अयाचि' इत्यादि । यद्यपि विशब्दोऽपि विगर्दभरथिरित्यादौ प्रतिषेधे दृष्टः, याच्यादीनां तु विपूर्वाणां णिनिर्न दृश्यते इति नञ्येव णिनिर्विज्ञायते । 'अचाम्' इत्यादि । अजन्तानां धातूनामचित्तकर्तृकाणां प्रतिषिद्धार्थानां णिनिर्भवति, न विद्यते चित्तमस्येत्यचित्तः, स कर्ता येषां ते तथोक्ताः । 'विशयी विषयी' इति । 'शीङ् स्वप्ने' (धा.पा. १०३२) 'षिञ् बन्धने' (धा.पा.- १४७७), वृद्ध्यभावो निपातनात् । 'अभिभावी भूते' इति । अभिभूतवानभिभावी । 'अपराधी, अवरोधी' । 'राध साध संसिद्धौ' (धा.पा. १२६२,१२६३), रुधिर् आवरणे' (धा.पा. १४३८) । 'परिभवी, परिभावी' इति । पक्षे वृद्ध्यभावः ।

'पच' इत्यादि । 'डुपचष्पाके' (धा.पा. ९९६) 'वच परिभाषणे' (धा.पा. १०६३) डुवपिदुक्तार्थः एवं वदिरपि । 'चल कम्पने' (धा.पा. ८३२), 'पत्लृ गतौ' (धा.पा. ८४५) । 'नदट्' इति । 'नद अव्यक्ते शब्दे' (धा.पा. ५४), टकारो ङीबर्थः । एवमुत्तरत्रापि । 'भष भर्त्सने' (धा.पा. ६९५), 'प्लुङ् गतौ' (धा.पा.-९५८), 'चर गत्यर्थः' (धा.पा. ५५९), 'गॄ निगरणे' (धा.पा. १४१०), 'तॄ प्लवनतरणयोः' (धा.पा.-९६९), 'चुर स्तेये' (धा.पा. १५३४), 'दिवु क्रीडादौ' (धा.पा. ११०७), सूदिरुक्तार्थः, 'जॄष् वयोहानौ' (धा. पा. ११३०), 'मृङ् प्राणत्यागे' (धा.पा. १४०३) 'क्षमूष् सहने' (धा.पा. ४४२), 'षिवु तन्तुसन्ताने' (धा.पा. ११०८), 'मिष स्पर्धायाम्' (धा.पा. १३५२), 'कुप क्रोधे' (धा.पा. १२३३), 'मिधृ मेधा-हिंसनयोः' (धा.पा. ८६८), 'व्रण गात्रचूर्णने' (धा.पा. १९३७) चरादिः, 'नृती गात्रविक्षेपे' (धा.पा.-१११६), 'दृशिर् प्रेक्षणे' (धा.पा. ९८८), 'सृप्लृ गतौ' (धा.पा. ९८३), 'डु भृञ् धारणपोषणयोः'(धा.पा.-१०८७), जारं बिभर्तीति जारभरा । एवं श्वानं पचतीति श्वपचा, न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात् पक्षे कर्मण्यणपि भवति । 'पचादिराकृतिगणः' इति । तत्सम्बन्धिन आदिशब्दस्य प्रकारवचनत्वात् । तथा च 'शिवशमरिष्टस्य करे'(४.४.१४३) इति कृञोऽच्प्रत्ययः कृतः । घटेश्च 'कर्मणि घटोऽठच्' (५.२.३५) इति । तथा यङन्तानां 'यङोऽचि च' (२.४.७४) इति यङोऽस्मिन्नचि लुगुक्तः । भाष्ये च 'अजपि सर्वधातुभ्यो वक्तव्यः' इत्युक्तम्, पचाद्यनुक्रमणं तु नदडित्यादावनुबन्धासञ्जनार्थम्, कर्मोपपदानाम् इगुपधानां च बाधकबा-धनार्थम्, देवडित्युभयार्थम्, अन्येषां तु प्रपञ्चार्थं द्रष्टव्यम् ॥

## १३५. इगुपधज्ञाप्रीकिरः कः ।

इगुपधादीनां समाहारद्वन्द्वे नपुंसकत्वेन ह्रस्वप्रसङ्गादितरेतरयोगे द्वन्द्वः, व्यत्ययेन भ्यसः पञ्चम्येकवचनम् । तत्र कृशब्दस्य धात्वनुकरणत्वात् प्रकृतिवदनुकरणम्, विभक्तावित्वम् । 'ज्ञ' इति । 'आतो लोप इटि च' ६.४.६४), 'प्रियः' इति । 'प्रीञ् तर्पणे' (धा.पा. १८३६) इयङादेशः । 'किरः' इति । कॄ विक्षेपे' (धा.पा.-१४०९) 'ॠत इद्धातोः' (७.१.१००) । 'पचादिषु द्रष्टव्याः' इति । यद्यप्यजपि तुजादिवत् सर्वधातुभ्यो भवति, तथाप्यपवादबाधनार्थमेते पचादिष्ववश्यं पाठ्या इत्यर्थः ॥

## १३६. आतश्चोपसर्गे ।

## १३७. पाघ्राध्माधेट्दृशः शः ।

'पा पाने' (धा.पा. ९२५), 'घ्रा गन्धोपादाने' (धा.पा. ९२६), 'ध्मा शब्दाग्निसंयोगयोः' (धा.पा. ९२७), 'धेट् पाने' (धा.पा. ९०२) 'दृशिर् प्रेक्षणे' (धा.पा. ९८८) । 'पा रक्षणे' (धा.पा.-१०५६) इत्यस्य तु लुग्विकरणत्वादग्रहणम् । 'उत्पिब' इत्यादि । पाघ्रादिसूत्रेण (३.१.१३७) यथायोगं पिबादय आदेशाः । 'व्याघ्रः' इति । अत्र 'आतश्चोपसर्गे' (३.१.१३६) इति क एव भवति; अत्र च 'व्याघ्रादिभिः' (२.१.५६) इति वचनं लिङ्गम् ॥

## १३८. अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।

'अनुपसर्गात्' इति व्यत्ययेनैकवचनमित्याह—'अनुपसर्गेभ्यः' इति । 'लिप उपदेहे' (धा.पा. १४३३), 'विद्लृ लाभे' (धा.पा. १४३२) अगामिना नुमा सनुम्कयोर्ग्रहणम्, तेन विद्यन्तराणामग्रहणम् । 'धृञ् धारणे' (धा.पा. ९००), 'धृङ् अवस्थाने' (धा.पा. १४१२) ण्यन्तयोर्द्वयोरपि ग्रहणम् । 'पार तीर कर्मसमाप्तौ' (धा.प. १९११,१९१२), 'विद चेतनाख्यानादिषु' (धा.पा. १७०८) चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । 'एजृ कम्पने' (धा.पा. २३४) ण्यन्तः, चिती संज्ञाने' (धा.पा. ३९) चुरादिः, सातिर्हेतुमण्ण्यन्तः । 'षह मर्षणे' (धा.पा. ८५२) चुरादिर्हेतुमण्ण्यन्तो वा । 'लिम्पः विन्दः' इति । 'तुदादिभ्यः शः' (३.१.७७), 'शे मुचादीनाम्' (७.१.५९) इति नुम् । धारयादिषु शब्गुणायादेशाः ।

'नो लिम्पेः' इति । छन्दसि तु 'धर्त्ता च विधर्ता च विधारय' इति दृश्यते ।

'अरविन्दः' इति । अराकाराणि दलान्यरशब्देनोच्यन्ते ॥

## १३९. ददातिदधात्योर्विभाषा ।

'ददः दधः' इति । शपः श्लुः, द्विर्वचनम् 'श्नाभ्यस्तयोरातः' (६.४.११२) इत्याकारलोपः, 'दद दाने' (धा.पा. १७), 'दध धारणे' (धा.पा. ८) इत्येताभ्यामचि कृते 'ददः, दधः' इति सिद्धम्, दाधाभ्यामपि णे कृते दायो धाय इति, इदं तु वचनं स्वरार्थम्—अददः, अदध इति 'अच्कावशक्तौ' (६.२.१५७) इति अन्तोदात्तत्वं मा भूत्, नञ्स्वर एव यथा स्यादिति ॥

## १४०. ज्वलितिकसन्तेभ्यो णः ।

'इतिशब्द आद्यर्थः' इति । अनेकार्थत्वान्निपातानाम् 'उच्चावचेष्वर्थेषु निपतन्तीति निपाताः' इति निरुक्तकारो निपातशब्दं निराह । ज्वलितीत्यविभक्तिको निर्देशः, ज्वलादिभ्य इत्यर्थः । कसिरन्ते येषां ते कसन्ताः, तत्र ये कसमधीत्य वृदिति पठन्ति, तेषां मते कसन्तग्रहणं चिन्त्यप्रयोजनम् । ननु च 'ज्वल दीप्तौ' (धा.पा. ८०४,८३१) इति द्विः पठ्यते-घटादिषु, परस्ताच्च; तेषामसत्यस्मिन् विशेषणे सन्देहः स्यात्,—किं पूर्वो ज्वलिरादिः ? उत पर इति ? अतः कसः समीपभूतेभ्यो ज्वलादिभ्य इति विशेषणमर्थवत्, नैतत् सुष्ठूच्यते, यद्यन्तशब्दः समीपवचनः, बहुव्रीहौ तत्पुरुषे च कसेर्ग्रहणं न प्राप्नोति, पूर्वत्र ज्वलतावादावभिप्रेते तदनन्तर एव धातुरुपादीयेत; परोपदेशेनैव ज्वलतेर्ग्रहणसिद्धेः । घटादिपाठश्च मित्सञ्ज्ञायां चरितार्थः, इतरस्त्वचरितार्थ इति स एवादिर्भविष्यति । 'अचोऽपवादः' इति । तस्यापि सर्वधातुविषयत्वादिति भावः । 'भ्रमु चलने' (धा.पा. ८५०) इत्यस्य ज्वलादिपाठः किमर्थः, यावता पचाद्यचि 'भ्रमः' इति सिद्धम्, णेऽप्येतदेव रूपम्, 'नोदात्तोपदेशस्य' (७.३.३४) इति वृद्धिप्रतिषेधात् ? इह 'अभ्रम' इति 'अच्कावशक्तौ' (६.२.१५७) इति स्वरो मा भूदिति ॥

## १४१. श्याऽऽद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ।

'अनुपसर्गादिति निवृत्तम्' इति । उत्तरसूत्रे पुनरनुपसर्गग्रहणात् । 'विभाषेति च' इति । निवृत्तमित्यपेक्ष्यते । विभाषाग्रहणं ह्यनुपसर्गग्रहणेन सम्बद्धम्, अतस्तन्निवृत्तावस्यापि निवृत्तिः । 'श्यैङ' इति । 'श्यैङ गतौ' (धा.पा ९६३) इत्यस्मात्, शी आत् श्यादिति शीङो यणादेशेन ग्रहणं न भवति; व्याख्यानात्, झटिति प्रतीताननोरोहाच्च । 'आकारान्तेभ्यः' इति । एतेन अत्तेरच्छब्दान्तानां पतिप्रभृतीनामकारान्तानां च ग्रहणं न भवतीति दर्शयति । एतदपि व्याख्यानादेव । 'व्यध ताडने' (धा.पा. ११८१) 'स्रु गतौ' (धा.पा. ९४०) आङ्पूर्वः, संपूर्वश्च, 'इण् गतौ' (धा.पा. १०४५) अतिपूर्वः, 'षो अन्तकर्मणि' (धा.पा. ११४७) 'हृञ् हरणे' (धा.पा. ८९९) अवपूर्वौ, 'लिह आस्वादने' (धा.पा. १०१६), 'श्लिष आलिङ्गने' (धा.पा. ११८६), 'श्वस प्राणने' (धा.पा. १०६९) । येऽत्र सोपसर्गास्तेभ्यः सोपसर्गेभ्य एव भवति, शेषेभ्यस्त्वविशेषेण । 'बाधकबाधनार्थम्' इति । 'आतश्चोपसर्गे' (३.१.१३६) इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः, तद्बाधनार्थमिदम् । एतेनावस्यतेरुपादानं व्याख्यातम् । 'अवश्यायः' इति । पूर्ववद्युक् ॥

## १४२. दुन्योरनुपसर्गे ।

'दावः' इति । वनवह्निः । कथं तत्रैव 'दवः' इति ? नयतिसाहचर्यात् सानुबन्धकस्य दुनोतेरिह ग्रहणम् । निरनुबन्धकाद्द्रवतेः पचाद्यचि भविष्यति । करणसाधनो वा 'ऋदोरप्' (३.३.५७) इत्यबन्तः ॥

## १४३. विभाषा ग्रहः ।

'व्यवस्थितविभाषा चेयम्' इति । एतदेव स्पष्टयति—'जलचरे' इति ।

'भवः' इति । भवत्येव न तु कदाचिन्न भवतीति भवः = देवः संतारश्च, भावाः = पदार्थाः ॥

## १४४. गेहे कः ।

'गेहे' इति । प्रत्ययार्थस्य कर्तुर्विशेषणम्, नोपपदम्; 'गृहपतिना संयुक्तः' इति निर्देशादित्याह—'गेहे कर्तरि' इति । 'तात्स्थ्याद्दाराश्च' इति । तेन गौणस्यापि गेहस्य ग्रहणमिति दर्शयति । तच्च तन्त्रावृत्त्योरन्यतराश्रयणेन लभ्यते, तत्र वेश्मनि पुंलिङ्गबहुवचनान्त एव—गृहान् ह दाहको भवति, गृहानुत्तरया संकाशयते, गृहान् गच्छ, गृहपत्नी, गृहानहं सुमनसः प्रपद्य इति । न पुंसकलिङ्गोऽभिधेयवचनः, एवं दारेष्वपि । अन्ये तु गृहशब्दो वेश्मन्येव मुख्यः, दारेषु गौण इति वदन्ति, तथा 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति वेश्मन्येव मुख्यतां दर्शयन्ति । यथा वृत्तिकारे णोक्तं तथा दारेष्वपि मुख्य एवेति लक्ष्यते ॥

## १४५. शिल्पिनि ष्वुन्।

पूर्वेण साहचर्यात् शिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणम्, नोपपदमित्याह--'शिल्पिनि कर्तरि' इति। क्रियासु कौशलं शिल्पम्, तदस्यास्तीति शिल्पी।

'नृतिखनि' इत्यादि। एतद्वचनमेव, तेन, आह्वाता, आह्वायक इत्यादौ न भवति। 'रञ्जेरनुनासिकलोपश्च' इति। एतत्तु ज्ञापकात् सिद्धम्, यदयम् 'जनितृष्क्नुसुरञ्जोऽमन्ताश्च' इति मित्सञ्ज्ञां शास्ति, तज्ज्ञापयति—रञ्जेरकित्वेऽप्यनुनासिकलोपो भवतीति॥

## १४६. गस्थकन्।

'गायतेः' इति। 'कै गै शब्दे' (धा.पा. ९१६,९१७) 'गामादाग्रहणेष्वविशेषः' इति 'गाङ् गतौ' (धा.पा. ९५०) इत्यस्यापि ग्रहणं प्राप्तम्, अनभिधानान्न भवति, थकन्प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थः॥

## १४७. ण्युट् च।

णकारो युगर्थः, टकारो ङीबर्थः। 'योगविभाग उत्तरार्थः' इति। उत्तरत्र ण्युट एवानुवृत्तिर्यथा स्यात्, थकनो मा भूदिति॥

## १४८. हश्च व्रीहिकालयोः।

'जहातेः' इति। 'ओहाक् त्यागे' (१०९०)। 'जिहातेः' इति। 'ओहाङ् गतौ' (धा.पा. १०८९)। प्रायेण जिहीतेरिति पाठः, स त्वयुक्तः, तिपः पित्त्वादीत्वाभावात्। जहातेः ककारोऽत्र सामान्यग्रहणार्थः, अन्यथा एकानुबन्धकत्वादस्यैव स्यात्। अथ हाङ इत्युच्येत, एवमपि तस्य ग्रहणं न स्यात्, तस्माद् द्वयोरपि ग्रहणम्। 'व्रीहिकालयोः' इति कर्तुर्विशेषणम्, नोपपदम्; त्रिचतुर्भ्यां हायनस्य 'दामहायनान्ताच्च' (४.१.२७) इति वचनादिति मत्वाऽऽह--'व्रीहौ काले च कर्तरि' इति। 'जहत्युदकमिति कृत्वा' इति। व्रीहौ हायनशब्दस्य प्रवृत्तिनिमित्तं वर्णितम्। जाङ्गलदेशोद्भवाः केचिद् व्रीहयो हायना इत्याहुः। 'जिहीते भावान्' इति। भावाः पदार्थाः, तान् जिहीते = गच्छति परिच्छेदकत्वेन व्याप्नोतीत्यर्थः॥

## १४९. प्रुसृल्वः समभिहारे वुन्।

'प्रसुल्वः' इति पञ्चम्याः स्थाने जस्, 'ओः सुपि' (६.४.८३) इति यणादेशः। 'साधुकारित्वं लक्ष्यते' इति। प्रायः सहचरितत्वात् पुनःपुनरनुष्ठानं समभिहारः, यश्च यां क्रियां पुनःपुनरनुतिष्ठति, तस्य तत्र प्रायेण

कौशलमुपजायते, अतः प्रायः साहचर्यात् साधुकारित्वं लक्ष्यते, लक्षणया तत्र वर्तत इत्यर्थः, तेन किं सिद्धं भवतीत्याह—'सकृदपि' इति ॥

## १५०. आशिषि च ।

'आशिषि गम्यमानायाम्' इति । न वाच्यायाम्; 'कर्तरि कृत्' (३.४.६७) इति कर्तुरेव वाच्यत्वात् । 'प्रार्थनाविशेषः' इति । अप्राप्तस्याभिलषितस्य प्राप्तुमिच्छा प्रार्थना = आशीः । 'स चेत् क्रियाविषयः' इति । 'धातोः' (३.१.९१) इत्यधिकारात्, धातोश्च क्रियावचनत्वात् । 'अमुष्याः क्रियायाः' इति । जीवनादिकायाः, अनेन प्रयोक्तृधर्मत्वमाशिषो दर्शयति । 'जीवतात्' इति । आशिषि लोट्प्रयोगेणोदाहरणे आशिषं दर्शयति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां

तृतीयाध्यायस्य प्रथमः पादः ॥

—:०:—

# अथ तृतीयाध्यायस्य

## द्वितीयः पादः

### १. कर्मण्यण् ।

'कर्मणि' इति । नेदं स्वरूपग्रहणम्; 'अशब्दसञ्ज्ञा' (१.१.६८) इति प्रतिषेधात् । ननु चार्थस्येयं सञ्ज्ञा, न शब्दस्य, 'अशब्दसञ्ज्ञा' इति नैवं विज्ञायते—शब्दस्य सञ्ज्ञा शब्दसञ्ज्ञेति, किं तर्हि ? शब्दे सञ्ज्ञा शब्दसञ्ज्ञेति । शब्दशब्देन शब्दानामनुशासनं व्याकरणमुच्यते, असति च बाधे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तम् । तस्मात् पारिभाषिकस्य कर्मणो ग्रहणमङ्गीकृत्य तस्यावान्तरभेदमाह—'त्रिविधं कर्म' इति । ता एव तिस्रो विधा दर्शयति—'निर्वर्त्यं, विकार्यं प्राप्यं च' इति । यदसज्जायते सद्वा जन्मना यत्प्रकाशते तन्निर्वर्त्यम्, यथा–कुम्भं करोति, पुत्रं प्रसूत इति । यस्य तु सत एव कश्चिद्विकारः क्रियते, तद्विकार्यम्, स च विकारः क्वचित् प्रत्यक्षगम्यः, यथा—काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोतीति । क्वचित् शास्त्रगम्यः—व्रीहीन् प्रोक्षतीति, अत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो जन्यत इति शास्त्रादेव गम्यते । एतावता च भेदेन संस्कार्यमेतत्कर्मेति चातुर्विध्यं मीमांसका मन्यन्ते । क्रियाकृतविशेषाभावे तु प्राप्यं कर्म, यथा—वेदमधीते, चर्चां पारयतीति । ननु न 'कर्तुरीप्सिततमम्' (१.४.४९) इत्येतदेव कर्म त्रिविधम्, अन्यदप्यस्ति, 'तथायुक्तं चानीप्सितम्' (१.४.५०) इति, तच्च द्विविधम्–द्वेष्यमितरच्च, तथा 'अकथितं च' (१.४.५१), एवं 'दिवः कर्म च' (१.४.४३), तथा 'अधिशीङ्स्थासां कर्म' (१.४.४६) इति । तदेवमनान्तरभेदविवक्षायां सप्तविधं कर्म । उक्तं च—

'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु सञ्ज्ञितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
सञ्ज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ (वा.प. ३.७.४५,४६) इति ।

तत्किमुच्यते त्रिविधं कर्मेति ? केचिदाहुः—कर्तुरीप्सिततममेवात्र कर्म गृह्यतेऽन्यत्राण् न भवतीति । अन्ये त्वाहुः—आदित्यं पश्यतीत्यादौ माभूदित्येवमर्थं कर्मणि निर्वर्त्यमाने विक्रियमाण इति वक्तव्यमित्याशङ्क्य वार्तिककारेणोक्तम्—कर्मणि निर्वर्त्यमाने विक्रियमाण इति चेद्वेदाध्यायानामुपसङ्ख्यानमित्यादि । तदनेन प्रदर्श्यते, त्रिविधमपि कर्म गृह्यते, न पुनः प्राप्यं न गृह्यत इति, न तु सूत्रान्तरोक्तं व्यावर्त्यते । तथा च 'दिवः कर्म च' (१.४.४३) इत्यत्र समावेशस्य प्रयोजनमुक्तम्—मनसा देव इत्यत्र कर्मत्वादण् करणत्वात् तृतीयेति । एवं च वृक्षावासः, पर्वताधिवास इत्याद्यपि यथादर्शनं भवतीति । 'अनभिधानात्' इति । तच्चानभिधानं यत्राप्तं तत्रैव । अन्यत्र तु यथालक्षणं भवत्येव, तथा च पठति—'यथालक्षणमप्रयुक्ते' इति ।

'शीलिकामी' इत्यादि। 'शील समाधौ' (धा.पा. ५२३), 'भक्ष अदने' (धा.पा. १५५७) चुरादिः, 'कमु कान्तौ' (धा.पा. ४४३) णिङन्तः, 'चर गत्यर्थे, आङ्पूर्वः' (धा.पा. ५५९), णस्य णित्करणं वृद्ध्यर्थम्। 'पूर्वपदप्रकृतिस्वरत्वं च' इति। कृदुत्तरपदप्रकृतिस्वरस्यापवादः। 'मांसशीला' इति। अन्नाणि सति ङीप् स्यात्। णेपि क्वचिदणकृतं भवतीत्येतत्तु ताच्छीलिक एव णे भवति, 'मनेर्दीर्घश्च' (द.उ. ९.२३) इति सप्रत्ययान्तो मांसशब्दः। कल्याणशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः। अस्यायमर्थः—अन्ते लघौ परतो द्वयोश्चान्तयोर्लघ्वोः परतो बह्वचः शब्दस्य यो गुरुः स उदात्तो भवति। बह्वष इति बह्वच इत्यर्थः, 'अष' इत्यचः पूर्वाचार्यसञ्ज्ञा।

'ईक्षिक्षमिभ्यां च' इति। अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेत्येव, वाक्यभेदस्तु वैचित्र्यार्थः। इह यो मांसं भक्षयति, मांसं तस्य भक्षो भवति, तत्र भक्षयतेः कर्मण्येरजन्तस्य बहुव्रीहिणा सिद्धम्। एवमन्यत्रापि। यः पुनरण्यन्तस्तस्य घञन्तस्य बहुव्रीहिः, नार्थ एतेन। ननु बहुभक्ष इत्यत्र बहोर्नञ्वदित्युत्तरपदान्तोदात्तत्वं प्राप्नोति? एवं तर्हि भावेऽजन्तेन व्यधिकरणपदो बहुव्रीहिर्भविष्यति—बहुषु भक्षोऽस्य बहुभक्ष इति, तत्रोत्तरपदार्थस्य बहुत्वाभावाद्बहुस्वरो न भविष्यति? सत्यम्; अण्बाधनार्थं तु वचनम्, अकारादनुपपदात् कर्मोपपदो विप्रतिषेधेन। पचादिभ्योऽच, अनुपपदोऽकारस्तस्यावकाशः—पचतीति पचः, कर्मोपपदस्यावकाशः—काण्डलावः, शरलावः; ओदनपाच इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति। तेनोपधावृद्धिः, उपपदसमासश्च नित्यो भवति। अचि तु षष्ठीसमासो विकल्पितः स्यात्। न वाच्यं युगपद्विवक्षायां भवतु विप्रतिषेधः, केवले पच्यर्थे विवक्षितेऽचि कृते पश्चादोदनसम्बन्धे विवक्षिते ओदनपच इत्यपि प्राप्नोति? एकत्वात् प्रयोगस्य। न हि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं च कर्म भवति। तस्मादोदनपच इत्यसाधुरेव। गङ्गाधरः, क्षीधरः, वज्रधरः, भूधरः, शशधरेति तु सञ्ज्ञाशब्दाः। यदा त्वजपि सर्वधातुभ्य इति पक्षः, तदापवादत्वादेव तस्याण् बाधकः। तथा 'इगुपधज्ञाप्रीकिरः कः' (३.१.१३५), अनुपपदस्तस्यावकाशः—विक्षिपः, विलिखः, कर्मोपपदस्य स एव, काष्ठभेद इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति। तथा अनुपसर्गाल्लिम्पविन्द (३.१.१३८) इत्यनुपपदः शस्तस्यावकाशः—लिम्पतीति लिम्पः, कर्मोपपदस्य स एव; कुड्यलेप इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति। 'आतश्चोपसर्गे' (३.३.१०६) इति कोऽनुपपदस्तस्यावकाशः—सुग्लः, सुम्लः, कर्मोपपदस्य स एव; गोसन्दाय इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति॥

## २. ह्वावामश्च।

'वेञ् तन्तुसन्ताने' इति। 'वा गतिगन्धनयोः' (धा.पा. १०५०) इत्यस्य ग्रहणं न भवति, अकर्मकत्वात् प्रमाणार्थे ह्यसौ—सर्वा दिश आवाति, 'वात आवातु भेषजम्' (ऋ. १०.१८६.१) इति। सोपसर्गस्य तु प्रयोगश्चिन्त्यः। सकर्मकत्वेऽप्यग्रहणम्, पूर्वेणैवाणः सिद्धत्वात्, 'वाता वान्तु दिशो दश' (अथ. ४ १५.८) इति प्रयोगश्चिन्त्यः। 'माङ् माने' इति। यद्यपि क्वचित्कथंचित्सकर्मकत्वम्, तथाऽपि ह्वेञा साहचर्यात् सानुबन्धकस्यैव वेञो ग्रहणम्। 'मा माने' (धा.पा.-ङितो माङ्रूपस्योपलक्षणमेतत्, तेन 'मेङ् प्रणिदाने' (धा.पा. ९६१) इत्यस्यापि ग्रहणम्। 'मा माने' (धा.पा.-१०६२) इत्यस्य तु संभावनार्थस्याकर्मकत्वादग्रहणम्॥

## ३. आतोऽनुपसर्गे कः।

कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः। संप्रसारणभाजः प्रसारणिनः। 'ज्या वयोहानौ' (धा.पा.-१४९९), ब्रह्म जिनातीति ब्रह्मज्यः, सर्वत्रग्रहणान्नावश्यमिहैव 'आतश्चोपसर्गे' (३.३.१०६) आह्वः, प्रह्वः, के

हि संप्रसारणप्रसङ्गः, आह्व अ इति स्थिते सम्प्रसारणे पूर्वत्वे च कृते उवङादेशे आहुवः प्रहुव इति प्राप्नोति एवं ब्रह्मजिय इति प्राप्नोति । ननु संप्रसारणे कृते 'आतो लोपः' (६.४.६४) तस्य स्थानिवद्भावादियङुवङौ न भविष्यतः, लोपो न सिध्यति—अन्तरङ्गत्वात् पूर्वत्वं प्राप्नोति, समानाश्रये च 'वार्णादाङ्गं बलीयः' (व्या.प. ३९) इति ? एवं तर्हि प्रागेव · संप्रसारणात् 'आतो लोपः' (६.४.६४) भविष्यति, परत्वाद् नित्यं सम्प्रसारणम्, कृताकृतप्रसङ्गित्वात्; आतो लोपस्त्वनित्यः, कृते संप्रसारणे पूर्वत्वेन बाध्यते—यस्य च निमित्तं लक्षणान्तरेण विहन्यते तदनित्यम् । तदेवं परत्वात् 'आतो लोपः' (६.४.६४), ततः सम्प्रसारणम्, तत इयङुवङौ प्रसक्तावाल्लोपस्य स्थानिवत्त्वान्न भविष्यतः । ननु योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः, आदिष्टाच्चैषोऽचः पूर्वम्—इदानीमेव ह्युक्तं पूर्वमल्लोपः पश्चात् संप्रसारणमिति ? एवं तर्ह्याकारलोपस्यासिद्धत्वादुवङ न भविष्यति । इहापि तर्हि जुहुवतुः, जुहुवुः, आल्लोपस्यासिद्धत्वादुवङ् न प्राप्नोति ? आभीयमसिद्धत्वमनित्यमित्यत्र न भविष्यति । अथ वा 'संप्रसारणाच्च' (६.१.१०८), 'एङः पदान्तात्' (६.१.१०९) इत्यत्र एङ इति योगविभागः—संप्रसारणादेङि परतः पूर्वपरयोः पूर्वमेकादेशो भवतीति । किमर्थमिदम्, न 'संप्रसारणाच्च' (६.१.१०८) इत्येव सिद्धम् ? ज्ञापनार्थम्—यत्र संप्रसारणात् पर एङ् संभवति तत्र 'आदेच उपदेशेऽशिति' (६.१.४५) इत्यात्वं न भवतीति । यदि स्यात् पूर्वत्वेन तस्य निवृत्तिविधानमनुपपन्नं स्यात् । तेन जुहुवतुरित्यत्रानैमित्तिकत्वेनान्तरङ्गमप्यात्वमकृत्वा एङ्भावादेव लिटि विहिते संप्रसारणे पूर्वत्वे न स्थानिवत्त्वं नासिद्धत्वमिति सिद्धमिष्टम् । आह्वः, प्रह्वः ब्रह्मज्य इत्यत्र त्वाकारान्तलक्षणः प्रत्ययो नासत्यात्वे भवितुमर्हतीति पूर्वमात्वम्, ततः प्रत्ययः, आल्लोपः संप्रसारणम्, असिद्धत्वादियङुवङोरभावः॥

## ४. सुपि स्थः ।

सुपीति न सप्तमीबहुवचनस्य ग्रहणम्, किं तर्हि ? प्रत्याहारस्य; 'सुप्तिङन्तं पदम्' (१.४.१४), 'सुप आत्मनः क्यच्' (३.१.८), 'सुपो धातुप्रातिपदिकयोः' (२.४.७१), 'अव्ययादाप् सुपः' (२.४.८२) इत्यादौ तस्यैव प्रसिद्धत्वात् । 'द्वाभ्यां पिबति' इति । ननु रूढिशब्दा द्विपादयः, ततश्चासन्तमप्यवयवार्थमाश्रित्य कर्मोपपद एव कः करिष्यते ? नैतदेवम्; द्वाभ्यां पिबतीत्यादेरवयवार्थस्य सम्भवतोऽपरित्यागेनैव व्युत्पत्तौ सम्भवन्त्यामस्याः कल्पनाया अयुक्तत्वात् । यत्र त्वत्यन्तमसम्भवः, युक्ता तत्रैव सा कल्पना, यथा—तैलपायिकादौ । 'अनेन भावे यथा स्यात्' इति । आरम्भसामर्थ्यात्तावदयं कर्तुरपकृष्यते, न चान्योऽर्थो निर्दिश्यते । अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति, स्वार्थश्च धातूनां भाव एव । ननु 'घञर्थे कविधानम्' (वा. ३०६) इति भावे कः सिद्धः ? सत्यम्; नित्यसमासार्थं तु वचनम्, अन्यथा पाक्षिकः षष्ठीसमासः स्यात् । नित्य एव तूपपदसमासो भवति, तथा च 'आखूनामुत्थानम्' इत्यस्वपदेन विग्रहः कृतः । 'घञर्थे कविधानम्' इत्यत्र स्थग्रहणं कर्तृवर्जिते कारकेऽपि यथा स्यादिति ॥

## ५. तुन्दशोकयोः परिमृजापनुदोः ।

'तुन्दपरिमृजः' इति । मृजेरजादौ सङ्क्रमे इत्यत्र 'यस्मिन् विधिस्तदादौ' (वा. १४) इत्येव सिद्धे आदिग्रहणं मुख्याजादिपरिग्रहार्थम्, तेन व्यपदेशिवद्भावेनाजादावत्र के वृद्धिर्न भवति ।

'आलस्य' इत्यादि । आलस्ये गम्यमाने सुखोत्पादने च प्रत्यय इत्यर्थः । तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाहर्तरि प्रत्ययो भवतीत्युक्तं भवति । 'शोकापनोद एवान्यः' इति । यः संसारानित्यताद्युपदेशेन शोकमेव केवलमपनुदति, न तु सुखमुत्पादयति स शोकापनोदः ।

'मूलविभुजादिभ्यः' इति । तादर्थ्ये एषा चतुर्थी, मूलविभुजादिसिद्ध्यर्थमित्यर्थः । आकृतिगणश्चायम्, तेन महीध्र-कुध्र-शिरोरुहादि सिद्धं भवति । 'काकगुहाः' इति । काकेभ्यो गूहितव्या इति कर्मणि कप्रत्यय इष्यते, अतो घञर्थे कविधानमित्यत्रेदं द्रष्टव्यम् ॥

## ६. प्रे दाज्ञः ।

'ददातेः' इति । उपलक्षणमेतत् । 'गामादाग्रहणेष्वविशेषः' (व्या.प. १२४) इति सर्वेषामेव दारूपाणां ग्रहणमिष्यते । 'जानातेश्च' इति । जनेस्त्वल्लोपेनायं निर्देशो न भवति, 'खनो घ च' (३.३.१२५), 'हनश्च वधः' (३.३.७६) इत्यादौ धातुनिर्देशेऽल्लोपस्याकरणात् । 'प्रेणोपसृष्टात्' इति । प्रशब्देनोपसर्गेण सम्बद्धादित्यर्थः । 'अनुपसर्गे' (३.२.३) इति चानुवर्तते, तेन केवलेन प्रेणोपसृष्टादित्यर्थः । अतश्च गोसंप्रदाय इत्यणेव भवति ॥

## ७. समि ख्यः ।

## ८. गापोष्टक् ।

'गायतेः' इति । 'गामादाग्रहणेष्वविशेषः' (व्या.प. १२४) इति गाङो लुग्विकरणस्यापि ग्रहणं प्राप्तं पिबतिसाहचर्यात्तु न भवति । 'सामगी' इति । टकः कित्त्वात् 'आतो लोपः' (६.४.६४), टित्त्वान्ङीप् ।

'सुराशीध्वोः पिबतेरिति वक्तव्यम्' इत्यत्र पिबतेरिति लुग्विकरणालुग्विकरणपरिभाषालभ्यस्यैवार्थस्य कथनम्, उपपदपरिगणनं तु वाचनिकमेव । 'क्षीरपा' इति । स्त्रियामेव विशेषात् स्त्रीलिङ्गमुदाहृतम् ॥

## ९. हरतेरनुद्यमनेऽच् ।

'अच्प्रकरणे' इति । लिङ्गविशिष्टपरिभाषयैव घटग्रहणेन घटीग्रहणेऽपि सिद्धे घटीग्रहणम् परिभाषाया अनित्यत्वज्ञापनार्थम् ।

'सूत्रग्राह एवान्यः' इति । यः सूत्रं केवलमुपादत्ते, न तु धारयति तत्राणेव भवतीत्यर्थः ॥

## १०. वयसि च ।

'[illegible]भ्यमानं वा' इति । तेनासत्यपि कवचग्रहणे वयसि गम्यमाने कवचहर इति भवतीति भावः ॥

## ११. आङि ताच्छील्ये ।

'पुष्पाद्याहरणे' इत्यादिना ताच्छील्यमुदाहरणे दर्शयति । 'स्वाभाविकी' इति । स्वभावे भवा स्वाभाविकी, अध्यात्मादिः । स्वशब्दो द्वारादिषु पठ्यते, तदादिविधिश्च तत्रेष्यते । भाष्यकारप्रयोगात्तु द्वाराविकार्याभावः, स्वार्थिकस्वाभाविकशब्दो भाष्ये प्रयुक्तो । अस्य विवरणम्—'फलानपेक्षा' इति । कथं पुनः फलमनपेक्ष्य तत्र प्रवर्तते, न हि स्वभावः पर्यनुयोगमर्हति ॥

## १२. अर्हः ।

## १३. स्तम्बकर्णयो रमिजपोः ।

'रमेरकर्मकत्वात्' इति । ननु 'व्याङ्परिभ्यो रमः' (१.३.८३) 'उपाच्च' (१.३.८४) इत्यत्रोदाहृतम्—देवदत्तमुपरमतीति ? एवं मन्यते—'अनुपसर्गे' (३.२.३) इति वर्तते इति । 'जपेश्च शब्दकर्मकत्वात्' इति । मन्त्रं जपतीत्यादौ तत्रैव प्रयोगदर्शनात् । 'कर्म न सम्भवति' इति । केवलस्य रमेर्जपेश्च कर्णाद्यशब्दात्मकमिति भावः ।

सूचकः = पिशुनः । 'स्तम्बेरमः' इति । 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्यलुक् । 'कर्णे जपिता मशकः' इति । उपांशुशब्दायितेत्यर्थः ॥

## १४. शमि धातोः सञ्ज्ञायाम् ।

'धातुमात्रात्' इति । मात्रग्रहणेनापवादविषयेऽपि विधानं भवतीति दर्शयति । 'शङ्कर' इति । ऐहिकमामुष्मिकं मोक्षाख्यं च सुखं करोतीति शङ्करः । धातुग्रहणस्य प्रयोजनं दर्शयन् मात्रग्रहणप्रतिपादितमेवार्थं स्पष्टीकरोति—'शमि सञ्ज्ञायाम्' इति । अस्मिन् सूत्र इत्यर्थः । असति धातुग्रहणे शमि सञ्ज्ञायामित्यस्यावकाशः—शम्भवः शंवद इति 'कृञो हेतुताच्छील्ये' (३.२.२०) इत्यस्यावकाशः—श्राद्धकर इति; शङ्कर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात्, धातुग्रहणसामर्थ्यादजेव भवति । कुण्डखादवस्त्वाचार्यो मन्यते—गृणातेः शब्दकर्मण एतद्रूपम्, पृषोदरादित्वाद्गकारस्य ककार इति, तन्मते धातुग्रहणं चिन्त्यप्रयोजनम् ॥

## १५. अधिकरणे शेतेः ।

'पार्श्वादिषु' इति । अनधिकरणार्थमिदम् । तद्द्विग्रहेण दर्शयति—'पार्श्वाभ्याम्' इति ।

'दिग्धसहशयः' इति । दिग्धेन सह शेते इत्यचि कृते मयूरव्यंसकादित्वात् समासः । दिग्धसहशब्दो मयूरव्यंसकादिः तस्योपपदसमासः ।

'अवमूर्धशय' इति । अवनतो मूर्धा यस्य अवमूर्धा अधोमुखः शेते इत्यर्थः ।

'गिरौ डश्छन्दसि' इति । यदि छन्दसीत्युच्यते, कथम् 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' (कु.सं.-१.६०), 'आरोपितं यद् गिरिशेन पश्चात्' (कु.सं. १.३७) इति ? निरङ्कुशाः कवयः। अन्ये त्वाहुः—इह यो गिरौ शेते गिरिशस्तस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः। तथा चात्रैव वार्तिकम्—'तद्धितो वा' (कात्या.वा-२०००) इति। न च लोमादिष्वपि छन्दोग्रहणमस्ति, तेन भाषायामपि गिरिश इति भवति। एवं च कृत्वा निघण्टुषु पाठोऽप्युपपन्नो भवति। 'गिरौ शेते' इति। गिरावास्त इत्यर्थः ॥

## १६. चरेष्टः ।

## १७. भिक्षासेनादायेषु च ।

'भिक्षाचर' इति। चरतिरत्र तत्पूर्वके अर्जने वर्तते, चरणेन भिक्षामर्जयतीत्यर्थः। 'सेनाचरः' इति। सेना प्रविशन्नुच्यते। 'आदायचरः' इति। आदाय गच्छतीत्यर्थः, भक्षयतीति वा। कथं सहचरः, सहचरीति ? पचादिषु चरडिति पठ्यते, सुप्सुपेति समासः ॥

## १८. पुरोऽग्रतोऽग्रेषु सर्त्तेः ।

'अग्रे इत्येतेषु' इति। एतेनाग्रशब्दस्यैकारान्तत्वं निपात्यत इति दर्शयति। एतच्चाग्रेशब्दस्य परनिपातनादेव विज्ञायते, अन्यथा 'अजाद्यदन्तम्' (२.२.३३) इति पूर्वनिपातः स्यात्। किमर्थं पुनरेकारान्तत्वं निपात्यते, यावता सप्तम्या अलुकाप्यग्रेसर इति सिद्धम् ? यदा तद्वग्रं सरति अग्रेण सरतीति वा विगृह्यते तदाप्यग्रेसर इत्येव यथा स्यात्। कथं 'यूयं तदग्रसरगर्वितकृष्णसारम्' इति ? 'कृत्यल्युटो बहुलम्' (३.३.११३) इति समर्थनीयम् ॥

## १९. पूर्वे कर्त्तरि ।

## २०. कृञो हेतुताच्छील्यानुलोम्येषु ।

'करोतेर्धातोः' इति। प्रसिद्धतरत्वात् द्व्यनुबन्धकस्याप्यस्यैव ग्रहणम्, न तु 'कृञ् हिंसायाम्' (धा.पा. १४८५) इत्यस्येति भावः। 'आनुलोम्ये च गम्यमाने' इति। एतेन हेत्वादीनि नोपपदानीति दर्शयति, एतच्च 'शमिधातोः' (३.२.१४) इत्यत्र धातुग्रहणात् कृञो हेत्वादिषु टप्रतिषेधार्थाद्विज्ञायते। उपपदत्वे हि शम्युपपदे टप्रत्ययस्य प्राप्त्यभावादनर्थकं तत्स्यात्। अतो नैषामुपपदत्वम्, नापि प्रत्ययार्थत्वम्, 'कर्तरि कृत्' (३.४.६७) इत्यस्य बाधप्रसङ्गात्। न चासति विरोधे बाधा युक्ता। 'हेतुरैकान्तिकं कारणम्' इति। एकान्तशब्दो विनयादिषु द्रष्टव्यः, नियतमव्यभिचारीत्यर्थः। एतेन लौकिकस्य हेतोर्ग्रहणमिति दर्शयति। न हि केवले कृञि प्रयोजककर्ता सम्भवतीति भावः। ननु लौकिकेनापि हेतुना कर्तुर्विशेषणमयुक्तम्, अव्यभिचारात्, न हि कर्तुरनिमित्तत्वमस्ति ? सत्यम्; पुनर्हेतुशब्दोपादानादैकान्तिकत्वमाश्रीयते, अन्यथा निमित्तमात्रमुपादीयेत। अनुकूलता = आराध्यचित्तानुवर्तनम्। 'यशस्करी विद्या' इति। 'अतः कृकमि' (८.३.४६) इत्यादिना विसर्जनीयस्य सत्वम् ॥

## २१. दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।

'यथायोगम्' इति । तत्र दिवाशब्दोऽह्नीति सप्तम्यन्तस्यार्थे वर्तत इति तस्य कर्मत्वानुपपत्तेः 'सुपि' (३.२.४) इत्यनेनाभिसम्बन्धः, शेषाणां तु कर्मणीत्यनेन । यदि तु दोषामन्यमहः, दिवामन्या रात्रिरितिवद् वृत्तिविषये कर्मत्वमभ्युपगम्येत, तदा दिवाशब्दस्यापि कर्मणीत्यनेन सम्बन्धः । 'सकारस्य' इति । भास्करान्तेति भाशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते, तस्माद्भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः । अथ वा-सकारस्य विसर्जनीयजिह्वामूलीयौ न भवतः, कुतः ? निपातनात् । भास्करान्तेति सूत्रे सकारोच्चारणमेव निपातनम् । 'कारकरः' इति । कर एव कारः, प्रज्ञादित्वात् स्वार्थेऽण् । 'अनन्तकरः' इति । अन्तकरशब्देन नञ्समासेऽप्येतद्रूपं सम्भवति, स्वरे हि दोषः स्यात्—सतिशिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः प्रसज्येत, इष्यते हि गतिकारकोपपदात् कृदिति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । 'बहुकरः' इति । बहुशब्दो वैपुल्यवचनः, सङ्ख्यावचनस्य तु सङ्ख्याग्रहणेनैव सिद्धम् । 'लिपिलिबिशब्दौ' पर्यायौ । 'अहस्करः' इति । अहन् 'रोऽसुपि' (८.२.६९) इति रेफः । पूर्ववत् सत्वम् । 'धनुष्करः, अरुष्करः' इति । 'नित्यं समासेऽनुत्तरपदस्थस्य' (८.३.४५) इति षत्वम् । 'किंयत्तद्बहुषु कृञोऽज्विधानम्' (वा. २४२) इति वार्तिकेन सूत्रस्य बाधितत्वाद्धस्याभावाद्धेत्वादिष्वन्यत्र किंकरीत्यसाधुरित्याहुः । क्वचिद् ग्रन्थः—'अथ वा वचादिषु पाठः करिष्यते' इति । तत्रायमर्थः—इह किमाविग्रहणमपनीय पचादिष्वेव 'किंयत्तद्बहुषु कृञः' इति पठितव्यमिति ॥

## २२. कर्मणि भृतौ ।

'कर्मणीति स्वरूपग्रहणम्' इति । अनुवृत्तेन कर्मणीत्यनेन विशेषणात् । 'कर्मनिर्देशः' इति । कर्म क्रिया, तस्य निष्क्रयाय देयं भक्तादिद्रव्यमित्यर्थः ॥

## २३. न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।

## २४. स्तम्बशकृतोरिन् ।

'स्तम्बकरिः' इति । नित्त्वात् कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तं भवति ॥

## २५. हरतेर्दृतिनाथयोः पशौ ।

'पशौ कर्तरि' इति । एतेन प्रत्ययार्थस्य कर्तुः पशुर्विशेषणम्, न तु तस्य बाधक इति दर्शयति । धातोर्हि प्रत्ययविधानात् तदर्थस्य येन सम्बन्धस्तत्र वाच्ये प्रत्ययो भवितुमर्हति । धात्वर्थस्य च क्रियायाः साधनेन सम्बन्धः । पशुशब्दस्तु चतुष्पाज्जातीयं वस्तुस्वरूपेणाचष्टे, न शक्तिमद्रूपेण, नतरां शक्तिरूपेणेति । न पश्वर्थः स्वरूपेण प्रत्ययार्थो भवितुमर्हतीति युक्तमुक्तम्—पशौ कर्तरीति । एवं सर्वत्र प्रत्ययार्थविशेषणं द्रष्टव्यम् ॥

## २६. फलेग्रहिरात्मम्भरिश्च ।

'उपपदस्यैकारान्तम्' इति । छन्दस्यकारान्तत्वमपि दृश्यते—'या वनस्पतीनां फलग्रहिः' (तै.सं. ५.१ १.४) इति । स कुक्षिम्भरिवच्चकारेण समुच्चेतव्यः ॥

## २७. छन्दसि वनसनरक्षिमथाम् ।

'वन षण संभक्तौ' इति । गणे सहपठितयोर्भ्वादिकयोरेव ग्रहणम्, न तु 'वनु याचने' (धा.पा.१४७०), 'षणु दाने' (धा पा. १४६४) इति तानादिकयोरिति भावः । अत्र साहचर्यमेव हेतुः, निरनुबन्धकत्वं च । 'ब्रह्मवनिम्' इति । ब्रह्म वनति, क्षत्रं वनतीति विवक्षायामिन् प्रत्ययः, तदन्ताद् द्वितीयैकवचनम् । 'गोसनिम्' इति । गां सनतीति विग्रहः । 'परिरक्षी' इति । पन्थानं रक्षत इति विग्रहः । हविर्मथन्तीति हविर्मथयस्तेषां हविर्मथीनाम् ॥

## २८. एजेः खश् ।

'ण्यन्तात्' इति । एजेस्त्वयमिका निर्देशो न भवति; खशः शित्करणात् । तद्धि सार्वधातुकत्वे सति शब्था स्यादिति । न चैजेः प्रकृत्यन्तरस्य शपि सत्यसति वा विशेषोऽस्ति । न चैवमिहार्थत्वे संभवति, केवलोत्तरार्थत्वं युक्तम् । 'खित्करणं मुमर्थम्' इति । खित्कार्योपलक्षणमेतत् । शुनिन्धयः, नाडिन्धयः, नासिकन्धय इति ह्रस्वत्वमपि प्रयोजनम् । 'शकारः सार्वधातुकार्थः' इति । सार्वधातुकसञ्ज्ञार्थं इत्यर्थः । 'वातशुनि' इत्यादि । वातादिषु यथासङ्ख्यमुपपदेषु अजादिभ्यो धातुभ्यः खश् प्रत्ययो भवति । 'शर्धंजहा' इति । 'ओहाक् त्यागे' (धा.पा. १०९०) जुहोत्यादित्वाच्छपः श्लौ द्विर्वचने 'श्नाभ्यस्तयोरातः' (६.४.११२) इत्याकारलोपः ॥

## २९. नासिकास्तनयोर्ध्माधेटोः ।

'नासिकन्धमः' इति । पाघ्रादिसूत्रेण (७.३.७८) धमादेशः । 'तच्चैतत्' इत्यादिना यथासङ्ख्याभावे हेतुमाह—तच्चैतत् यथासङ्ख्याभावलक्षणं कार्यम् । एतेन च व्याख्यातॄणां मूलत्वेन सूत्रकारस्याप्यत्र किंचिदभिप्रेतमित्येतावत् प्रदर्श्यते । तेनैतन्न नोदनीयम्—उत्तरसूत्रवत् प्रत्येकमभिसम्बन्धः कस्मान्न भवति, विपर्ययो वा कस्मान्न भवतीति । 'स्तनन्धयति' । अत्रैव ङीबिष्यते, नान्यत्रेत्याहुः ॥

## ३०. नाडीमुष्ट्योश्च ।

'घटिन्धमः, खरिन्धमः' इति । घटी = घटः, खरी = गर्दभी, जातिलक्षणो ङीष् । खारीत्यन्ये पठन्ति स च परिमाणवचनः । वातशब्दो न दृष्टः ॥

## ३१. उदि कूले रुजिवहोः ।

यत्र प्रत्येकमुपपदत्वमिच्छति तत्र समुदायात् सप्तमीमुच्चारयति, यथा—नाडीमुष्ट्योरिति । इह तु विपर्ययः कृतः, तस्मात् 'उदि' इति सतसप्तमी । 'कूले' इति स्वर्थनिरपेक्षैवोपपदसञ्ज्ञायां लिङ्गम् । तत्र च 'ते प्राग्धातोः' (१.४.८०) इति उच्छब्दस्य धातोः प्राक् प्रयोगः । ततः पूर्वः कूलशब्दः । तदेतद्दर्शितम्—'उत्पूर्वाभ्यां कूले कर्मण्युपपदे' इति ॥

## ३२. वहाभ्रे लिहः ।

## ३३. परिमाणे पचः ।

परिमाणशब्दः काष्ठादिविनिर्मिते प्रस्थादौ वर्तते, न तस्य विक्लेदवाचिना पचिना कर्मत्वेनान्वयः । अतो न स्वरूपग्रहणम्, किं तर्हि ? तद्विशेषाः प्रस्थादयो गृह्यन्ते, ते च परिमाणे परिमेये व्रीह्यादौ च वर्तन्ते । तत्र परिमाणनिष्ठानां न पचिनाऽन्वय इति परिमेयनिष्ठेषु प्रत्ययः । न तर्हि परिमाणवाचित्वम्, न; परिमाणाध्यारोपेण परिमेये प्रस्थादिशब्दस्य प्रवृत्तेः ॥

## ३४. मितनखे च ।

'नखम्पचा' इति । पचिरत्र तापवचनः ॥

## ३५. विध्वरुषोस्तुदः ।

'अरुन्तुदः' इति । 'अरुर्द्विषदजन्तस्य मुम्' (६.३.६७) इति उकारात् परो मुम्, संयोगान्तस्य लोपः (८.२.२३) ॥

## ३६. असूर्यललाटयोर्दृशितपोः ।

'असूर्यम्पश्या' इति । पाघ्रादिसूत्रेण (७.३.७८) पश्यादेशः । 'गुप्तिपरं चैतत्' इति । यद्वचनम्—'असूर्यम्पश्या राजदाराः' इति, एतद् गुप्तिप्रधानम्; तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यत इति भावः । गुप्तिपरत्वमेव प्रकटयति—'एवं नाम' इति ॥

## ३७. उग्रम्पश्येरम्मदपाणिन्धमाश्च ।

'उग्रं पश्यति' इति । क्रियाविशेषणमेतत् । 'इरम्मदः' इति । 'मदी हर्षे' (धा.पा. १२०८) । दिवादित्वाच्छ्यनि प्राप्ते तदभावो निपातनात् । इरा = उदकम् । 'पाणिन्धमाः पन्थानः' इति । ते पुनर्येषु गच्छद्भिः सर्पाद्यपनोदनाय पाणयो ध्मायन्ते = शब्द्यन्ते ॥

## ३८. प्रियवशे वदः खच्

'चकारः खचि ह्रस्वः इति विशेषणार्थः' इति। 'खे ह्रस्वः' इत्युच्यमाने 'एजेः खश्' (३.२.२८) अङ्गमेजयः, जनमेजयः—अत्रापि प्राप्नोति? 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' (व्या.प. ५२) इत्यत्र न भविष्यति। इह तर्हि 'कुलात् खः' (४.१.१३९) कुलीनः, यस्येति लोपनिवृत्तये ह्रस्वः स्यात्? तत्र धातुप्रत्ययस्य ग्रहणम्, तत्प्रकरणसाहचर्यादेव चिन्त्यप्रयोजनश्चकारः। 'प्रत्ययान्तरकरणमुत्तरार्थम्' इति। 'द्विषन्तपः' इत्यत्र ह्रस्वणिलोपौ यथा स्याताम्, शप् च मा भूदिति। यद्येवम्, उत्तरत्रैव कर्तव्ये इह करणे किं प्रयोजनम्? अन्येभ्योऽपि भवतीति ज्ञापनार्थम्। तेन 'गमेः सुप्युपसङ्ख्यानम्' इति न वक्तव्यं भवति।

'मितङ्गमः' इति असञ्ज्ञार्थमिदम्, सञ्ज्ञायां तु 'गमश्च' (३.२.४७) इति वक्ष्यमाणेनैव सिद्धम्॥

## ३९. द्विषत्परयोस्तापेः।

'द्विषन्तपः' इति। मुमि संयोगान्तलोपः। 'द्वितकारको निर्देशः' इति। तत्रैकेन द्विषच्छब्दो विशेष्यते—तकारान्तो यो द्विषच्छब्द इति, सौत्रत्वान्निर्देशस्य विशेषणस्य परनिपातः। 'तेन स्त्रियां न भवति' इति। अन्यथा लिङ्गविशिष्टपरिभाषया स्यादेव प्रसङ्ग इति भावः॥

## ४०. वाचि यमो व्रते।

'शास्त्रितः' इति। शास्त्रशब्दाद्विधाने धात्वर्थे णिच्, तदन्तात् कर्मणि क्तः। शास्त्रे विहितः, शास्त्रेण वा = शास्त्रितः। 'नियमः' इति। सङ्कल्पविशेषः। वाचंयमः' इति। 'वाचंयमपुरन्दरौ च' (६.३.६९) इति पूर्वपदस्यामन्तत्वम्। तत एव तर्हि निपातनात् प्रत्ययो भविष्यति। व्रतादन्यत्रापि तर्हि प्राप्नोति? तत्रैव व्रतग्रहणं करिष्यते—'वाचंयमो व्रते पुरन्दरश्च' इति, तदेतच्चिन्त्यप्रयोजनम्। एतेन 'पुरन्दरो' व्याख्यातः।

'वाग्यामः' इति। योऽशक्त्यादिना वाचं यच्छति तत्राणेव भवति॥

## ४१. पूःसर्वयोर्दारिसहोः।

'दॄ विदरणे' (धा.पा. १४९३) इत्यस्य ग्रहणम्; न 'दॄ भये' (धा.पा. ८०८), 'दृङ आदरे' (धा.पा. १४११)—इत्येतयोरित्युपदेशः। असञ्ज्ञार्थं सहिग्रहणम्, सञ्ज्ञायां तु वक्ष्यति। 'सर्वंसहो राजा' इति। सर्वं संपादयितुं समर्थ इत्यर्थः॥

## ४२. सर्वकूलाभ्रकरीषेषु कषः।

## ४३. मेघर्तिभयेषु कृञः।

'करोतेः' इति। कृणोतेस्तु पूर्ववदेवाग्रहणम्। शिवङ्कर इत्यपि छन्दसि दृश्यते—शिव एको ध्येयः शिवङ्कर इति॥

## ४४. क्षेमप्रियमद्रेऽण् च ।

## ४५. आशिते भुवः करणभावयोः ।

'अत्र सुपीत्युपतिष्ठते' इति । न तु कर्मणीति, भवतेरकर्मकत्वात् । सोपसर्गात् प्राप्त्यर्थाच्च खचा न भवितव्यम्, अनभिधानादिति भावः । आशितशब्दोऽयम् 'अश भोजने' (धा.पा १५२३) इत्यस्मादाङ्पूर्वाद विवक्षिते कर्मणि क्तप्रत्ययान्तो गृह्यते—आशितः कर्तेति, यस्याद्युदात्तत्वं विधास्यते । यस्तु 'ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३.४.७६) इति भावकर्माधिकरणेषु क्तः, न तदन्तो गृह्यते, अनभिधानादित्याहुः । अन्ये त्वशेर्ण्यन्तात् प्रयोज्ये कर्मणि क्तप्रत्यये कृते य आशितशब्दः स गृह्यते । एवमाशितः कर्तेति यस्याद्युदात्तत्वं तत्रापि प्रयोज्य एव भूतपूर्वगत्या कर्त्तोच्यते, 'गतिबुद्धिप्रत्यवसानार्थ' (१.४.५२) इति अणौ कर्तुर्णौ कर्मसञ्ज्ञाविधानात् । तथा च कृषम्निष्फाल आशितं कृष्णोतीति आद्युदात्तस्यावग्रहो न दृश्यते । कर्तृग्रहणं तु तत्र भावनिवृत्त्यर्थमिति । 'आशितम्भव ओदनः' इति । यावतौदनेनातिथ्यादिराशितो भवति स एवमुच्यते ॥

## ४६. सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः ।

'सञ्ज्ञावशात्' इत्यादि । 'शत्रुन्तपः' इत्यादौ यत्र कर्मार्थानुगमस्तत्र कर्मणीति सम्बध्यते । यत्र तु न रथन्तरमित्यादौ तत्र सुपीति । 'अरिन्दमः' इति । अन्तर्भावितण्यर्थो दमिः सकर्मको भवति ॥

## ४७. गमश्च ।

'योगविभाग उत्तरार्थः' इति । उत्तरत्र गमेरेवानुवृत्तिर्यथा स्यात् भृतृप्रभृतीनां मा भूत् ॥

## ४८. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।

'अनुबन्धकरणसामर्थ्यात्' इति । श्रवणार्थस्तु डकारो न भवति, 'पादस्य पदाज्यातिगोपहतेषु' (६.३.५२) इति कृतटिलोपस्य डप्रत्ययान्तस्य निर्देशात् । अत्रात्यन्तानन्तग्रहणमनर्थकम्, अन्तशब्दोऽत्र गृह्यते; तेन कर्मणो विशेषणात् तदन्तविधिर्भविष्यति । उपपदविधौ तु न सर्वत्र तदन्तविधिः, उपपदविधौ तदाद्यादिग्रहणमिति नियमात् । पन्नं पतितं यथा गच्छतीति 'पन्नगः' । 'सुदुरोरधिकरणे' (वा. २५४) इति कर्मणि खलेव भवति—सुगमः, दुर्गम इति । 'अन्यत्रापि दृश्यते' इति । एवं च सूत्रमपि प्रपञ्चार्थम् ॥

## ४९. आशिषि हनः ।

'दारौ' इति । दारुशब्दे इत्यर्थः । शब्दापेक्षया पुंलिङ्गः, टविधानार्थं वचनम् ,अण् 'कर्मण्यण्' (३.२.१) इत्येव सिद्धः । अन्तग्रहणं विस्पष्टार्थम्, 'अलोऽन्त्यस्य' (१.१.५२) इत्येव सिद्धम् ॥

## ५०. अपे क्लेशतमसोः ।

## ५१. कुमारशीर्षयोर्णिनिः ।

'सुप्यजातौ' (३.२.७८) इति सिद्धेऽताच्छील्यार्थमिदं वचनम्, शिरसः शीर्षभावार्थं च ।

## ५२. लक्षणे जायापत्योष्टक् ।

'लक्षणवति' इति । एतेनार्शआद्यच्प्रत्ययान्तो लक्षणशब्द इति दर्शयति । एतच्च सूत्रारम्भादेवावसीयते, केवले हि लक्षणे उत्तरेणैव सिद्धः प्रत्ययः । 'जायाघ्नो ब्राह्मणः' इति । यस्य तिलकालकादि जायामरणलिङ्गमस्ति स तां हन्तीति गौणो वादः । एतेन 'पतिघ्नी' व्याख्याता । 'गमहन' (६.४.९८) इत्युपधालोपः, टित्वान्ङीप् ॥

## ५३. अमनुष्यकर्तृके च ।

अमनुष्यशब्दो रक्षःपिशाचादिषु रूढ इति पूर्वमुक्तम्, इह तु मनुष्यादन्यः सर्व एव गृह्यते । ननु यथा पूर्वसूत्रे लक्षणग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणम्, एवमिहाप्यमनुष्यग्रहणं भविष्यतीति नार्थः कर्तृग्रहणेन ? 'अमनुष्ये' इत्युच्यमाने उपपदत्वमपि विज्ञायेत, तस्मात् कर्तृग्रहणम् । कृतघ्नशब्दो मूलविभुजादिषु द्रष्टव्यः ॥

## ५४. शक्तौ हस्तिकपाटयोः ।

'विषेण हस्तिनं हन्ति' इति । नन्वत्राप्यशक्तस्य कर्तृत्वानुपपत्तेरस्त्येव शक्तिः ? सत्यम्; शक्तिग्रहण-सामर्थ्यात् प्रकर्षविज्ञानादन्यनिरपेक्षस्वबलेनैव हन्तुं या शक्तिः सा गृह्यते, तद्दर्शयति—'हस्तिनं हन्तुं [1]समर्थो हस्तिघ्नो मनुष्यः' इति । एवं च हस्तिनं हन्तुं मा वा वधीत् सामर्थ्ययोगाद्धस्तिघ्न इत्युच्यते । 'कं पाटयति प्रविशते' इति । कपाटशब्दं व्युत्पादयति । कवाटमिति तु प्रसिद्धः, तत्राटतेः पचाद्यच् । 'कवङ्‌ चोष्णे' इति योगविभागात् कोः कवादेशः ॥

## ५५. पाणिघताडघौ शिल्पिनि ।

## ५६. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।

'आढ्यादिषु' इति । अनेन आढ्यादीनामुपपदत्वं दर्शयति । 'करणे कारके' इत्यनेनापि कारणस्य प्रत्ययार्थत्वम् । अथैवं कस्मान्न विज्ञायते—करण उपपदे आढ्यादिषु कर्तृष्विति ? उच्यते—'च्व्यर्थेष्वच्वौ'

---

1. शक्तः—काशिकायाम्

इति वचनात् आढ्यादिशब्दाः स्वरूपप्रधानाः, न च शब्दानां कर्तृत्वमुपपद्यते। ननु च श्रवणेन करोति सुखमाढ्यशब्द इत्यत्र शब्दस्यापि कर्तृत्वं सम्भवति? एवं तर्हि व्याख्यानात् तथा नाश्रीयते। अच्वाविति तत्पुरुषो बहुव्रीहिर्वा, अच्व्यन्त इत्यर्थः। प्रत्येकं सम्बन्धात्वेकवचनम्। कथं पुनश्च्व्यर्थाश्च भवन्त्यच्व्यर्थाश्च भवन्तीत्याह– 'च्वेर्विकल्पेन विधानात्' इति। 'आढ्यंकरणम्' इति। ख्युनः खकारो मुमर्थः लिङ्गविशिष्टपरिभाषया (व्या.प. २९) स्त्रीलिङ्गेष्वाढ्यादिषूपपदेषु ह्रस्वार्थश्च। नकारः स्वरार्थः। योरनादेशः।

'अभ्यञ्जयन्तीत्यर्थः' इति। अनेकार्थत्वाद्धातूनाम्। तेनात्र प्रागनाढ्यः सन्नाढ्यः क्रियत इति अभूततद्भावाभावः। भवतु वाऽभूततद्भावः, तथापि युक्तमेवेदं प्रत्युदाहरणमित्याह–'प्रकृतेरविवक्षायाम्' इति। प्रकृतिरेव परिणामित्वेन यत्र विवक्ष्यते, यथा––तन्तवः पटो भवतीति, तदा च्विप्रत्ययः, तथा च वार्तिकम्––'प्रकृतिविवक्षाग्रहणं च' इति, प्रकृतिः कार्यस्य पूर्वावस्था।

'अच्वाविति किम्' इति। अस्य वक्ष्यमाणोऽभिप्रायः, तमाविष्करोति––'ननु च' इति। 'ल्युटात्र भवितव्यम्' इति। 'करणाधिकरणयोश्च' (३.३.११७) इति। न च ल्युटः ख्युनश्च विशेषोऽस्तीति, ल्युटि तावदाढ्यीकरणमिति रूपम्, स्वरोऽपि लित्स्वरेणोत्तरपदाद्युदात्तत्वम्, ख्युन्यपि नित्स्वरेणाद्युदात्तत्वम् 'खित्यनव्ययस्य' (६.३.६६) 'अरुर्द्विषदजन्तस्य मुम्' (६.३.६७) इति ह्रस्वत्वम्, मुम् चानव्ययस्य विधीयते, च्व्यन्तादश्चाव्ययम्; 'ऊर्यादिच्विडाचश्च' (१.४.६१) इति निपातत्वात्। स्त्रियामप्युभयत्र 'टिड्ढाणञ्' (४.१.१५) इत्यादिना ङीब् भवति, अतो रूपे स्वरे च नास्ति विशेषः। 'उत्तरार्थश्च' इति। उत्तरसूत्रे खिष्णुच्खुकञ्भ्यां मुक्ते तृजादिभिर्भवितव्यमित्यस्ति विशेषः, कथं तर्हि पूर्वमुक्तम्––प्रतिषेधसामर्थ्यादिति? अस्मिन् सूत्रे प्रतिषेधसामर्थ्यादिति भावः। केवलोत्तरार्थत्वे हि तत्रैव 'अच्वौ' इत्यवक्ष्यत् यथा वक्ष्यते––इह किंचित्त्रपी इति। भाष्ये तूत्तरार्थमेव स्थितम्॥

## ५७. कर्तरि भुवः खिष्णुच्खुकञौ।

कर्तृग्रहणं करणनिवृत्त्यर्थम्, उत्तरार्थं च, खकारो मुमर्थः, चकारः स्वरार्थः, ञकारो वृद्ध्यर्थश्च। किमर्थं खिष्णुजिकारादिः क्रियते, न ख्स्नुरित्येवोच्येत, तत्राऽयमप्यर्थः––स्वरार्थश्चकारो न कर्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धम्? केनेदानीमिकारादित्वं सिध्यति? तत्राह––'उदात्तत्वात्' इति। भवतिरयमुदात्तः, तस्योदात्तत्वादिड् भविष्यति। 'नञस्तु' इति। 'नञः' इति पञ्चमी, नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः। यद्ययमिकारादिर्न क्रियेत, ततः सत्यपीट 'कृत्योकेष्णुच्चार्वादयश्च' (६.२.१६०) इत्यस्य ग्रहणं न स्यात्, अस्य चकाराभावात्। अथास्यापि चकारः क्रियेत? एवमपि लाक्षणिकत्वात् षत्वणत्वयोश्चासिद्धत्वाखिष्णुजिति रूपाभावाद् ग्रहणं न स्यादेव, तत इकारादित्वं क्रियते। ननु च सत्यपीकारादित्वे 'तदनुबन्धग्रहणे नातदनुबन्धकस्य' (व्या.प. ५४), 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्' (व्या.प. ५२) इति वा अलङ्कृञादीष्णुच एव ग्रहणेन भवितव्यम्, नास्य? इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीति मन्यते। यद्येवम्, क्ष्णुजयमस्तु, तत्र षत्वणत्वयोश्चकारस्य च करणसामर्थ्यादिटि कृतेऽस्यापि ग्रहणं सिद्धमिति विस्पष्टप्रयोजनमिकारादित्वम्॥

## ५८. स्पृशोऽनुदके क्विन् ।

'ननु च' इत्यादि । 'सुपि स्थः' (३.२.४) इत्यत्रोक्तम्--सकर्मकेषु कर्मणीत्युपतिष्ठतेऽन्यत्र सुपीति, ततश्च सुबन्त उपपदे क्विन् प्रत्यय इत्युक्तमनुपपन्नमिति भावः । 'तत्कर्तृप्रचयार्थम्' इति । 'कर्तरि कृत्' (३.४.६७) इत्येव कर्तरि क्विनः सिद्धत्वात् कर्त्रनुवृत्तेर्नान्यत् प्रयोजनमस्तीति भावः । 'कर्तृप्रचयो लभ्यते' इति । कर्मण्युपपद एकः कर्ता; करणादौ चापर इत्येवं प्रचयो भवति । 'घृतस्पृक्' इति । 'क्विन्प्रत्ययस्य कुः' (८.२.६२) इति शकारस्य षकारः सोष्मत्वेनान्तरतम्यात्, 'झलां जशोऽन्ते' (८.२.३९) । क्विनः ककारो गुणवृद्धिप्रतिषेधार्थः, इकारः 'वेरपृक्तस्य' (६.१.६७), इति विशेषणार्थः । नकारः किमर्थः, एकाज्भ्यो ह्ययं विधीयते तत्र धातुस्वरेणैव सिद्धम् ? यस्तर्ह्यनेकाच्--दधृगिति, वक्ष्यत्येतद्धृषेर्द्विवचनमन्तोदात्तत्वं चेति ? एवं तर्हि 'क्विन्प्रत्ययस्य कुः' (८.२.६२) इति विशेषणार्थः । 'क्विप्रत्ययस्य' इत्युच्यमाने सन्देहः स्यात्--क्वेः क्विपो वा निर्देश इति । क्वेरपि निर्देशे पकारस्य 'अनचि च' (८.४.४७) इति द्विर्वचनम् ॥

## ५९. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।

'ऋतौ यजति' इति । वसन्तादिके । 'ऋतुं यजति' इति । यस्मिन् यागे ऋतुर्देवता, यथा 'वसन्ताय कपिञ्जलानालभते' (वा.सं. २४.२०) । 'पिशङ्गास्त्रयो वासन्ताः' (तै.सं. ५.६.२३.१) इत्यृतुपशूनालभते, 'ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः' (तै.सं. ५.७.२.४) इत्यादौ तदभिप्रायमेतत् । 'ऋतुप्रयुक्तो वा' इति । 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ यत् कर्तृत्वं तदभिप्रायमेतत् । 'षत्वं च' इति । अन्यथा 'सात्पदाद्योः' (८.३.१०९) इति निषेधः स्यात् । 'सुबन्तमात्रे' इति । अन्यथा सकर्मकत्वात् कर्मण्येव स्यात् । 'केवलादेव' इति । एतत्तु क्विन्विधानसामर्थ्यादपि लभ्यते, न हि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति, कुत्वस्य 'चोः कुः' (८.२.३०) इत्यनेनैव सिद्धत्वात् । अनुपपदे तु 'युजेरसमासे' (७.१.७१) इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकम् । यदि तु निपातनसाहचर्यात् सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत, तदा 'सत्सूद्विष' (३.२.६१) इत्यत्र युजिग्रहणं शक्यमकर्तुम् । 'नलोपः कस्मान्न भवति' इति । 'कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः' (धा.पा. १८५,१८६) इति नोपधावेतौ धातू । तथा निकुचितिरिति नलोपो दृश्यते, चुत्वेन तु जकारस्य श्रवणम्, तस्य असिद्धत्वाच्चकारे परतः 'चोः कुः' (८.२.३०) इति कुत्वं न भवति । कुञ्चौ, कुञ्च इत्यादौ न कारोपधं तु पठतां स्यात्, तत्र सङि झलीति वचनान्न भवतीति वक्तव्यम् । सङिति प्रत्याहारः सनः सशब्दादारभ्य महिङो ङकारात् । अन्ये तु कुञ्चिरेक एव धातुः, तस्य ककारात् परो रेफोऽपि क्विन्संनियोगेन निपात्यते इत्याहुः । तदेतत् 'चोः कुः' (८.२.३०) इत्यत्र वामनो वक्ष्यति ॥

## ६०. त्यदादिषु दृशोऽनालोचने कञ्च ।

'पश्यार्थैश्च' (८.१.२५) इत्यत्र वक्ष्यति--आलोचनं चक्षुःसाधनं विज्ञानमिति, इह तु ज्ञानमात्रप्रतिषेधं मन्यते । 'यादृक् तादृक्' इति । 'दृग्दृशवतुषु' (६.३.८९) इति वर्तमाने, 'आ सर्वनाम्नः' (६.३.९१)

इत्यात्वम् । 'अकारो विशेषणार्थः' इति । आद्युदात्तत्वस्य नकारेणापि सिद्धत्वात् अकारोऽस्य प्रयोजनं विशेषणमेवेत्यर्थः न तु स्वरो न प्रयोजनमित्युच्यते । 'तं पश्यति तद्दर्शः' इति चक्षुर्विज्ञानेऽणेव भवति । कथं पुनः प्रत्युज्यमानस्यैव दृशेरनालोचनार्थत्वमित्याह–'[1]तादृशादयो रुढिशब्दाः' इति । ततः किमित्याह–'नैवात्र' इति । रूढिशब्दा ह्यसताप्यवयवार्थेन व्युत्पाद्यन्ते, यथा––तैलपायिकादयः । एतदर्थमेव 'अनालोचने' इत्युक्तम् । दृश्यर्थाभावेऽयं विधिः, सति तु दृश्यर्थेऽणेव भवतीति । भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता––तमिवेमं पश्यन्ति जनाः सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यतीति । तत्र कर्मव्यापारमात्रे वा दृशेर्वृत्तिः, कृत्स्नधात्वर्थाध्यारोपो वा सौकर्यातिशयप्रतिपादनायेति द्रष्टव्यम् ।

'समानान्ययोश्च' इति । समानस्य 'दृग्दृशवतुषु' (६.३.८९) सभावविधानात् सिद्धम् ।

'क्सश्च' इति । त्यदादिषु समानान्ययोश्च । 'तादृक्षः सदृक्षः, अन्यादृक्षः' इति । 'दृक्षे चेति वक्तव्यम्' (वा. ८९,९१) इति सभाव आत्वं च ॥

## ६१. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।

'अतः प्रभृति' इति । भाष्यकारप्रयोगात् प्रभृतिशब्दयोगे पञ्चमी । 'वदः सुपि क्यप् च' इति । प्रयोजनदिगियं दर्शिता । अत्र ह्यनुपसर्गे इति वर्तते, तस्मात् 'स्पृशोऽनुदके क्विन्' (३.२.५८) इत्यादौ प्रयोजनं द्रष्टव्यम् । 'सुवतेः' इति । न्यायस्य तुल्यत्वाद्दैवादिकस्याप्यग्रहणम् ।

'शुचिषत्' इति । छन्दसोऽयं प्रयोगः––'हंसः शुचिषत्' (ऋ. ४.४०.५) इति । 'पूर्वपदात्' (८.३.१०४) इति षत्वम् । शुचिसदिति पाठे लौकिकः प्रयोगः । 'कथमत्र णत्वम्' इति । ग्रामणीविषयः प्रश्नः । 'प्रणीः' इत्यत्र तु 'उपसर्गादसमासेऽपि' (८.४.१४) इति णत्वमस्त्येव । 'ज्ञापकात्' इति । पूर्वपदस्थान्निमित्तादुत्तरस्य नयतिनकारस्यासञ्ज्ञायामपि णत्वं भवतीति सामान्येन ज्ञापकमित्यर्थः । तेनाप्रणीरित्यत्रापि भवति । कर्मण्यणि तु न भवति । नीरूपविषयत्वाज्ज्ञापनस्य । अन्ये तु 'अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्' इति वचनाज्ज्ञापनमपि तद्विषयम्, तत्रापि नीरूपविषयमिति स्थिताः ॥

## ६२. भजो ण्विः ।

## ६३. छन्दसि सहः ।

'तुरासाहं पुरोधाय' (कु. २.१), पृतनाषाट् द्विषो योद्धुं पुरुहूतः, 'पृतनाषाट्' इति भाषायां प्रयोगाश्चिन्त्याः ॥

1. 'तादृगादयो' इति काशिका पाठः ।

६४. वहश्च ।

६५. कव्यपुरीषपुरीष्येषु ञ्युट् ।

६६. हव्येऽनन्तःपादम् ।

६७. जनसनखनक्रमगमो विट् ।

'विशेषणार्थश्च' इति । 'विवनोः' इत्युच्यमाने हि क्विबादीनामपि ग्रहणं स्यात् । अथात्र निरनुबन्धकत्वादस्यैव ग्रहणम् ? 'वेरपृक्तस्य' (६.१.६७) इत्यत्राप्यस्यैव ग्रहणं स्यात् । अथात्र क्विबादीनामपि ग्रहणं स्यात् ? 'विड्वनोरनुनासिकस्यात्' (६.४.४१) इत्यत्रापि स्यादिति समानं वच इति भावः । 'गोषा' इति । 'सनोतेरनः' (८.३.१०६) इति षत्वम् । 'अग्रेगाः' इति । पूर्ववदलुक् ॥

६८. अदोऽनन्ने ।

'अन्नादः' इति । भाषायामणेव भवति । छन्दसि त्वकारादनुपपदादित्यणि प्राप्ते पचाद्यजिष्यते, इत्यन्न अद इत्यवग्रहो भवति ॥

६९. क्रव्ये च ।

'[1]वाऽसरूपबाधनार्थम्' इति । तथा च वार्तिकम् 'अदोऽनन्ने क्रव्यग्रहणं वाऽसरूपनिवृत्त्यर्थम्' (कात्या.वा.-२०३४) इति । 'कथं तर्हि' इति । यदि वाऽसरूपविधिबाधनार्थमिति भावः । 'कृत्तविकृत्त' इति । कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तमिति 'पूर्वकाल' (२.१.४९) इति समासः । तस्य पक्वशब्देन पुनः स एव समासः, ततो मांसशब्देन पुनर्विशेषणसमासः । 'पृषोदरादित्वात्क्रव्यभावः' इति । यद्येवम्, क्रव्याद इत्यस्य रूपस्यावर्जनीयत्वादलं वाऽसरूपबाधनार्थेनानेन वचनेन, वार्तिकविरोधश्चैवं वदन् इत्याशङ्क्याह—'कृत्तविकृत्त' इत्यादि । अर्थभेदादुभयमपि नास्ति किलेत्ययमभिप्रायः ॥

७०. दुहः कब् घश्च ।

'कामदुघा' इति । कामयन्ते इति । कामाः, तान् दुग्धे कामदुघा । अर्थः मधुपर्कः ॥

७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।

'एतेभ्यः' इति । श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्य इत्यर्थः । 'धातूपपदसमुदायाः' इति । किमर्थमित्याह—'अलाक्षणिक' इति । 'श्वेतवाः' इत्यादिषु 'अवयाः श्वेतवाः पुरोडाश्च' इति निपातनाद्रुत्वम् । 'उक्थशाः' इति । नलोपे 'अत उपधायाः' (७.२.११६) इति वृद्धिः, रुत्वम् ।

1. असरूपबाधनार्थम्—काशिका ।

'ङस्पदस्य' इति। प्रत्येकमभिसम्बध्यते, भाविपदत्वाश्रयेण चेदमुच्यते, यत्र ङसन्तस्य पदत्वं भविष्यति तत्र ण्विनोऽपवादो ङस्प्रत्ययो वक्तव्य इत्यर्थः। यद्येवम्, अनेन ङसि कृते सौ 'अत्वसन्तस्य' (६ ४ १४) इति दीर्घे रुत्वे च 'श्वेतवाः' इत्यादि सिद्धम्, नार्थः 'अवयाः श्वेतवाः' इति निपातनेन? एवं तर्हि सम्बुद्ध्यर्थं निपातनम्—हे श्वेतवा इन्द्रेति, 'अत्वसन्तस्य' (६.४.१४) इत्यत्र हि 'असम्बुद्धौ' इति वर्तते, ङसपि वक्तव्यः। उत्वार्थम्—श्वेतवोभ्याम्, उक्थशोभ्यामिति। एवं चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्तव्यं यदि मन्त्रे दर्शनमस्ति॥

## ७२. अवे यजः।

'अवया' इति। निपातनाद्ध्रस्वम्। 'योगविभाग उत्तरार्थः' इति। 'पुरोडाशवयजो ण्विन्' इत्येकयोगे श्वेतवहादीनामप्युत्तरत्रानुवृत्तिः स्यात् यजेश्चावपूर्वस्यैवानुवृत्तिः स्यात् केवलस्यैव चेष्यते, तदर्थो योगविभाग इत्यर्थः॥

## ७३. विजुपे छन्दसि।

अथ छन्दोग्रहणं किमर्थम्, यावता मन्त्र इत्यनुवृत्तेरेव भाषायां न भविष्यति, तत्राह—'छन्दोग्रहणं ब्राह्मणार्थम्' इति। मन्त्रव्यतिरिक्तो वेदभागः = ब्राह्मणम्, यथोक्तम्—तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्द इति।

'किमर्थं पुनरिदम्' इति। उत्तरसूत्र एव विज्ग्रहणं छन्दोग्रहणं च क्रियतामिति प्रश्नः। 'नियमार्थम्' इति। ननु दृशिग्रहणादेव भाषायां न भविष्यति, सत्यम्; तस्यैव प्रपञ्चार्थमिदम्॥

## ७४. आतो मनिन्क्वनिब्वनिपश्च।

'अश्व इव तिष्ठति अश्वत्थामा', पृषोदरादित्वात् सकारस्य तकारः। 'सुधीवा सुपीवा' इति। घुमास्थादिसूत्रेण (६.४.६६) ईत्वम्। चकारो विचोऽनुकर्षणार्थः। यद्येवम्, उत्तरत्रानुवृत्तिर्न स्यात्? एवं तर्हि चकारोऽप्युत्तरत्रानुवर्तिष्यते॥

## ७५. अन्येभ्योऽपि दृश्यन्ते।

'अपिशब्दः [1]सर्वविधिव्यभिचारार्थः' इति। विधीयतेऽनेनेति विधिः उपाधिः। 'सर्वोपाधिव्यभिचारार्थः' इति युक्तः पाठः। 'दृशिग्रहणं प्रयोगानुसरणार्थम्' इति। 'यथा प्रयोगे दृश्यन्ते तथैव भवन्ति' इति वचनव्यक्त्याश्रयेणेति भावः॥

---

1. सर्वोपाधिव्यभिचारार्थः—काशिका।

## ७६. क्विप् च ।

'निरुपपदेभ्यश्च' इति । एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते, न तु 'सुपि' इत्यस्य निवृत्तेः; उत्तरसूत्रे 'सुप्युपसर्गेऽपीति वर्तते' इति वक्ष्यमाणत्वात्, 'छन्दसि भाषायां च' इति पूर्वसूत्र एव 'छन्दसि' इत्यस्य निवृत्तत्वात् । 'उखास्रत्' इति । 'स्रंसु ध्वंसु भ्रंसु अवस्रंसने' (धा पा.७५४,७५६) 'अनिदिताम्' (६.४.२४) इति उपधालोपः, 'वसुस्रंसु' (८.२.७२) 'इत्यादिना दत्वम्' । वाहभ्रट्' इति । 'भ्रंशु अधःपतने' (धा.पा. ७५६), व्रश्चादिना षत्वम्, 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घः । उखायाः स्रंसते पर्णानि, ध्वंसते, वाहाद् भ्रश्यतीति विग्रहः । ध्वंसिरन्तर्भावितण्यर्थः सकर्मकः । क्वचित्तु वृत्तावेव विग्रहवाक्यानि पठ्यन्ते ।।

## ७७. स्थः क च ।

केरयविभक्तिको निर्देशः । 'अन्येभ्योऽपि दृश्यते' इति । क्विबिति सिद्ध एवेत्यपेक्षते । ननु तच्छीलाविग्रहणं तत्रानुवर्तते, तस्मात् 'क्विप् च' (३.२.७६) इति क्विप् सिद्ध एवेति वक्तव्यम् । यद्वा तच्छीलादिग्रहणं तत्र न सम्बन्धनीयमिति मन्यते । नन्वेवमपि 'सुपि स्थः' (३.२.४) इति विशेषविहितः कः सामान्यविहितं क्विपं बाधेत ? वाऽसरूपविधिना सोऽपि भविष्यति । 'शमि धातोः सञ्ज्ञायामचं बाधते' इति । अन्यथा यथा कृञो हेत्वादिषु टं बाधते धातुग्रहणात् तथा तिष्ठतेरपि कश्चिपो बाधेत, अतस्तमप्यचं बाधित्वा कक्विपावेव यथा स्यातामिति पुनर्वचनमित्यर्थः । 'शंस्थाः' इति । क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थादिसूत्रेण (६.४.६६) इत्वमत्र प्राप्नोति, भाष्यकारप्रयोगात्तु न भवति । केचित्तु—ईत्वमवकारादाविति वचनं पठन्ति, तेषां सुपीवा, सुधीवा, अत्रापि न स्यात् ।।

## ७८. सुप्यजातौ णिनिस्ताच्छील्ये ।

'ब्राह्मणानामन्त्रयिता' इति । ताच्छील्यस्य विवक्षितत्वात् तृन् प्रत्युदाहृतः, 'न लोकाव्यय' (२.३.६९) इति षष्ठीप्रतिषेधः ।

'उत्प्रतिभ्याम्' इति । पुनः सुब्ग्रहणस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भः ।

'साधुकारिणि च' इति । अताच्छील्यार्थमिदम्, तच्चैतज्ज्ञापकात् सिद्धं यदयम् 'आ क्वेस्तच्छील' (३.२.१३४) इत्यत्र तच्छीलेत्यभिधाय साधुकारिग्रहणं करोति, तज्ज्ञापयति—साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति ।

'ब्रह्मणि वदः' इति । ब्रह्म = वेदः । इदमप्यताच्छील्यार्थम् ।।

## ७९. कर्तर्युपमाने ।

उपमानस्योपमेयापेक्षत्वात् कर्तरि च प्रत्ययविधानात् तस्यैवोपपदकर्तोपमानं विज्ञायेत इत्याह—'उपपदकर्ता' इति । 'उष्ट्रक्रोशी' इति ।

इवशब्दो गतार्थत्वाद्वृत्तौ नैव प्रयुज्यते ।
समास उपमानानां शस्त्रीश्यामादिके यथा ॥

## ८०. व्रते ।

'समुदायोपाधिश्चायम्' इति । न प्रत्ययार्थविशेषणम् । तथा हि सति व्रत एव कर्तरि प्रत्ययः स्यान्न तद्वतीति भावः । समुदायोपाधित्वमेव स्पष्टयति––'धातूपपद' इत्यादि । कामचारः = इच्छाप्रवृत्तिः, तत्प्राप्तौ सत्यां नियमः, स च द्विविधः सम्भवति––'स्थण्डिले शेते एव अश्राद्धं भुङ्क्ते एव' इत्येवंरूपो वा स्यात्, 'स्थण्डिले एव शेते अश्राद्धमेव भुङ्क्ते' इत्येवंरूपो वा । तत्र पूर्वके नियमे यदैवासावशक्त्याविनाऽश्राद्धं न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति । न चैवंविधं शास्त्रमस्ति––स्थाण्डिले शयितव्यमेव, अश्राद्धं भोक्तव्यमेवेति । अस्ति तु 'स्थण्डिले एव शयितव्यम्, अश्राद्धमेव भोक्तव्यम्' इति । 'व्रते' इति तु शास्त्रतो नियम इत्युक्तम्, तस्माद्द्वितीयो नियमो विज्ञायत इत्याह––'सति शयने' इत्यादि ॥

## ८१. बहुलमाभीक्ष्ण्ये ।

आभीक्ष्ण्यं पौनःपुन्यम्' इति । पुनःपुनर्भवितरि वर्तमानाभ्यामव्ययाभ्यां भावे ष्यञ्, अव्ययानां भमात्रे टिलोपः । 'ताच्छील्यादन्यत्' इति । एतेन 'सुप्यजातौ' (३.२.७८) इत्यनेनागतार्थत्वं दर्शयति । फलानपेक्षा प्रवृत्तिः = ताच्छील्यम् । गान्धारादयस्तु वाताविसाम्यार्थं देशाचारवशेन कषायादिपाने प्रवर्तन्ते । उदाहरणेषु 'आतो युक् चिण्कृतोः' (७ ३.३३) इति युक् 'प्रातिपदिकान्तनुम्विभक्तिषु च' (८.४.११) इति णत्वम् ॥

## ८२. मनः ।

'मन्यतेर्ग्रहणम्' इति । 'मन ज्ञाने' (धा.पा. ११७६) इत्यस्य दैवादिकस्य । 'न मनुतेः' इति । 'मनु अवबोधने' (धा.पा. १४७१) इत्यस्य तानादिकस्य । तिपि गुणेन भवितव्यम् । यदि नेष्यते, 'सञ्ज्ञापूर्वको विधिरनित्यः' (व्या.प. ६४) । किं पुनः कारणं प्रयत्नेन मनोतेर्ग्रहणं निवार्यते, यावता इह द्वयोरपि णिनिः, तदेव रूपम्, न चार्थभेद इत्याह—'उत्तरसूत्रे' इति ॥

## ८३. आत्ममाने खश्च ।

'चकाराण्णिनिश्च' इति । वाऽसरूपविधिना सिद्धोऽपि णिनिरविच्छेदाय समुच्चीयते । तेन 'करणे यजः' (३.२.८५) इत्यत्र णिनेरेवानुवृत्तिर्भवति, नानन्तरस्य खशः । आत्मशब्दोऽयं परव्यावृत्तिं कुर्वाणो यस्तत्प्रतियोगिनमर्थमाचष्टे स स्वशब्दपर्यायो गृह्यते, न चेतनद्रव्यवचनः । मननं मानः, भावे घञ्, आत्मनो मानं आत्ममानः—कर्मणि षष्ठ्या समासः । तत्र कस्येत्यपेक्षायां प्रत्ययार्थस्य सन्निहितस्य मन्तुरेवात्मन इति गम्यते, तदाह—'प्रत्ययार्थः कर्ता' इति । दर्शनीयत्वादिना धर्मेणेति विशिष्टमिति शेषः । कर्तरि षष्ठ्यास्तु समासो न भवति,

सर्वस्या एव मतेर्मन्तृकर्तृकत्वाव्यभिचारात् । एवं चेतनद्रव्यवचनेऽप्यात्मशब्दे कर्तरि षष्ठ्यामव्यभिचारादविशेषण कर्मणि षष्ठ्या, न तु चेतनान्तरे कर्मणि प्रत्ययप्रसङ्गः, तस्मात् स्वशब्दपर्याय एवात्मशब्दः । 'दर्शनीयम्मन्यः' इति । शरीरधर्ममपि दर्शनीयत्वादिकमात्मधर्ममेव मन्यन्ते संसारिणः शरीरशरीरिणोरग्न्ययोगोलकयोरिवाभेदं मन्यमानाः । 'पण्डितम्मन्यः' इति । एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं पण्डितत्वादिविशिष्टरूपेण कर्मत्वं च युज्यत एव । यथोक्तमाचार्यैः :—

अस्मत्प्रयोगसंभिन्ना ज्ञानस्यैव च कर्तरि ।
भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ इति ।

खशः खकारो मुमर्थः, दर्शनीयम्मन्या कुमारीत्यादौ ह्रस्वार्थश्च । शकारः सार्वधातुकसञ्ज्ञार्थः, दिवादिभ्यः श्यन् (३.१.६९) । स्वरस्तु सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते इति खश एव भवति, न निस्स्वरः । 'दर्शनीयमानी देवदत्तो यज्ञदत्तस्य' इति । कर्मणि षष्ठी, तदपेक्षयास्यापि दर्शनीयशब्दस्य गमकत्वात् समासः ॥

## ८४. भूते ।

यस्य सत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते, तत्र न ज्ञायते कस्मिन् भूत इति, किं साधने भूते ? किं वा धात्वर्थे ? तत्राह—'धात्वधिकाराच्च' इति । चशब्दः पूर्वोक्तेनार्थेनास्य सङ्गतिं द्योतयति । 'धात्वर्थभूते' इति । ननु धात्वधिकाराद्धातौ भूत इति युक्तम्, न धात्वर्थे भूत इति ? उच्यते—प्रयोगे प्रत्ययस्य द्योत्यं भूतत्वमर्थस्यैव विशेषणं भवितुमर्हति, विशेषणान्तरवत्, न तु शब्दस्य; तस्य स्वाभिधेयप्रतिपादने व्यग्रत्वाद्विशेषणभूतत्वसम्बन्धं प्रत्ययोग्यत्वात् । किं च—नित्यो धातुरनित्यत्वेऽपि भूतात् प्रत्ययविधिरनुपपन्नः, उच्चारितलक्षणे भूतत्वे विशेषणं व्यर्थम्, तर्ह्यनुच्चारितात् प्रत्ययविधिः सम्भवति । नित्यश्चायं भूतशब्दोऽतिक्रान्तवाचीति निष्ठायामितरेतराश्रयत्वादप्रसिद्धिरित्यचोद्यम् ॥

## ८५. करणे यजः ।

'णिनिरनुवर्तते, न खश्' इति । अत्रोक्तो हेतुः । 'अग्निष्टोमयाजी' इति । ननु चाग्निष्टोम शब्दः कर्मनामधेयम्, तत्कथमग्निष्टोमस्य यजिं प्रति करणत्वम्, न हि तदेव तत्र करणं भवति; इदं तु युक्तमुदाहरणम्—सोमेनेष्टवान् सोमयाजी, साम्नाय्येनेष्टवान् साम्नाय्ययाजीति ? तत्राह—'अग्निष्टोमः फलभावनायां करणं भवति' इति । सत्यं याग एवाग्निष्टोमः; यागोऽपि फलभावनायां करणम्, फलस्य स्वर्गादेर्भवतो या भावना उत्पादना तस्यामित्यर्थः । ननु दीक्षणीयादिरुदवसानीयान्तो ज्योतिष्टोमाख्यो याग एव स्वर्गभावना न तदतिरिक्तः कश्चिद्व्यापारो यजनस्यास्ति यत्र यागः कारणत्वमश्नुते ? उच्यते, द्विविधो यजमानव्यापारः—सामान्यरूपः, विशेषरूपश्चेति । तत्र सामान्यरूप आभ्यन्तर औदासीन्यप्रच्युतिरूपः कृतिप्रयत्नादिपदाभिलप्यः; बाह्यस्तु दीक्षणीयादिरुदवसानीयान्तः प्रसिद्ध एव । एवमोदनं पचतीत्यादिष्वप्यात्मगुणः प्रयत्नः, बाह्यश्चाधिश्रयणादिर्द्रष्टव्यः । फलं हि प्रेप्सन् तदर्थं प्रयतते, नोदास्ते; यतोऽयमुपायं जिज्ञासते, जानीते च, ज्ञात्वा चोपायमनुतिष्ठति । सैषा स्वर्गादिफलोद्देशेन प्रवृत्ता कृतिर्भावनेत्युच्यते । सा च भाव्यम्, करणम् इतिकर्तव्यतां चेति त्रितयमपेक्षते—इदमनेनेत्थं साधयेदिति । यथाह—

भावनापेक्ष्यमाणा हि साधनं किं फलस्य मे ।

साधनानुग्रहः को वेत्यनुस्यूतमपेक्षते ॥ इति ।

सथा सामान्यरूपा वृत्तिर्न शास्त्रकटाक्षमपेक्षते । विशेषरूपा त्वपेक्षते, तथा हि—फलार्थी तदुपायं जिज्ञासते, तदुपायं जिज्ञासमानः शृणोति—ज्योतिष्टोमेन स्वर्गकामो यजेत इति । तत्र च पुरुषप्रवर्तनारूपो विधिः श्रूयते, न चापुरुषार्थे पुरुषः प्रवर्तत इति विध्यवरुद्धा भावना भाव्यापेक्षायां समानपदोपात्तमपि दुःखरूपं धात्वर्थमपहाय पदान्तरोपात्तमपि पुरुषोपसर्जनमपि सुखरूपं स्वर्गमेवावलम्बते । ततः करणापेक्षायां समानपदोपात्तो धात्वर्थः करणं भवति, पश्चात् सन्निधिसमाम्नातं दीक्षणीयदीतिकर्तव्यतयाऽन्वेतीत्येषा [?] मीमांसकमर्यादा । यत्र तु न विध्यवरोधो भावनायाः, तत्र धात्वर्थ एव भाव्यो भवति, यथा—पचति पाकं करोति, गच्छति गमनं करोतीत्यादि निर्दिश्यते ।

ननु भावनया सम्पद्यमानस्य बाह्यव्यापारस्य कथं तत्र करणत्वम् ? को दोषः ? करणं खलु सर्वत्र कर्तृव्यापारगोचरः, कुठारेण छिनत्तीत्यत्रापि उद्यमननिपातनरूपेण कर्तृव्यापारेणाप्यमानस्यैव कुठारस्य तत्र करणत्वम्, तदेव कथं द्विधाभवनरूपेण फलेनावच्छिन्नयोस्तयोश्छेदनरूपत्वं न स्वरूपत्वम्, न स्वरूपेण रजके दर्शनात् सोऽपि हि वस्त्रमुद्यच्छते निपातयति च । अथ द्विधाभवनाभावान्न छिनत्तीत्युच्यते, तदेवमुद्यमननिपातयोश्छेदरूपत्वं कुठारगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वम्, तथेहापि भावनायां स्वर्गभावनारूपत्वमग्निष्टोमाख्ययागगोचरत्वनिबन्धनमिति तस्य तत्र करणत्वम् । तदिदमुक्तम्—फलभावनायां कारणमिति । इयं हि फलं धात्वर्थं च सम्पादयति, तत्र फलभावनारूपत्वे बाह्यो व्यापारः करणमित्यर्थः । नन्वेवमपि यज्यर्थं प्रति अग्निष्टोमः करणं न भवति ? मा भूत्तत्र करणत्वम्, करणं तावत् सम्बन्धि च यजिना सामानाधिकरण्येन । अथ वा भावनापि धातोरेव वाच्या, न प्रत्ययस्य; तत्र धात्वर्थैकदेश एकदेशान्तरस्य करणम्, अग्निष्टोमशब्दश्च तत्रैकदेशान्तरे वर्तत इति न किञ्चिदनुपपन्नम् ॥

## ८६. कर्मणि हनः ।

'कुत्सितग्रहणम्' इति । पितृव्यवधादिना यः कर्ता कुत्स्यते तत्रायं प्रत्यय इति वक्तव्यमित्यर्थः ॥

## ८७. ब्रह्मभ्रूणवृत्रेषु क्विप् ।

'चतुर्विधश्चात्र' इति । धातूपपदकालप्रत्ययनियमः । भाष्ये तूपपदविषयनियमद्वयं प्रदर्शितम्, तदुपलक्षणम्, न तु नियमान्तरव्यावृत्त्यर्थमिति गम्यते । ब्रह्मादिष्वेव हन्तेरिति धातुनियमः; अत्रापि नियमे भूते इत्याश्रयणात् कालान्तरे उपपदान्तरेऽपि भवत्येव—पुरुषं हन्ति हनिष्यति वा पुरुषहेति । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमः, अत्रापि 'भूते' इत्याश्रयणात् कालान्तरे धात्वन्तरादपि भवत्येव—वृत्रं जयति, जेष्यति वा वृत्रजिदिति । भूतकाले क्विबेवेति कालनियमः । 'नान्यः प्रत्ययः' इति । यथा 'कर्मणि हनः' (३.२.८६) 'कर्मण्यण्' (३.२.१) इति । उपपदान्तरे तु भूतेऽपि प्रत्ययान्तरं भवत्येव—पितृव्यं हतवान् पितृव्यघातीति, सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते । निष्ठा तु भवत्येव—वृत्रं हतवानिति । तथा भूत एवेति प्रत्ययनियमः, अत्रापि ब्रह्मादिषु हन्तेरित्याश्रयणादुपपदान्तरे धात्वन्तराच्च कालान्तरेऽपि भवत्येव । कथं पुनरेकस्मिन्नेव योगे चतुर्विधो नियमो लभ्यते ?

इत्याह—'तदेतत्' इति । अगृह्यमाणविशेषत्वादेव चतुर्विधो नियमो लब्धुं शक्यते, तत्रैव तूपोद्बलकमेवुक्तं वेदितव्यम् ॥

## ८८. बहुलं छन्दसि ।

## ८९. सुकर्मपापमन्त्रपुण्येषु कृञः ।

'स्वादिषु' इति । सुशब्दं वर्जयित्वेत्यनन्तरमेवाभिधानादतद्गुणसंविज्ञानो बहुव्रीहिः, बाहुल्याश्रयणेनैव-मुक्तम्, आढ्यो ग्राम इतिवत् ।

'त्रिविधश्च' इति । एतद्बहुलग्रहणानुवृत्तेरेव लभ्यते । 'कालोपपदप्रत्यय[1]विषयः' इति । तत्र काल-नियमात् कर्म कृतवान् कर्मकार इत्यण् न भवति । उपपदनियमात् मन्त्रमधीतवान् मन्त्राध्याय इत्यणेव भवति, न तु क्विप् । प्रत्ययनियमात् मन्त्रं करोति करिष्यति वेति विवक्षायामणेव भवति, न तु क्विप् । 'शास्त्रकृत्' इति । 'क्विप् च' (३.२.७६) इति क्विप् ॥

## ९०. सोमे सुञः ।

'कालधातूपपद प्रत्ययविषयः' इति । तत्र भूतकालस्य क्विपि नियतत्वात् सोमं सुतवान् सोमसाव इत्यण् न भवति । तथा धातोः सोम एवोपपदे नियतत्वात् सुरां सुतवान् सुरासाव इत्यणेव भवति । तथा सोमस्य सुतावेव धातौ नियतत्वात् सोमं क्रीतवान् सोमक्रीरिति क्विब्न भवति, अणेव तु भवति । तथा क्विपो भूते नियतत्वात् सोमं सुनोति, सोष्यति वेति विवक्षायां क्विब् न भवति, अणेव तु भवति ॥

## ९१. अग्नौ चेः ।

'अत्रापि' इत्यादि । तत्र भूतकालस्य क्विपि नियतत्वादग्निं चितवान्, अग्निचाय इत्यण् न भवति । धातोश्चारनावुपपदे नियतत्वादिष्टकाचिदिति न भवति । अग्नेश्चिनोतावेव नियतत्वादग्निभृदिति न भवति । क्विपश्च भूत एव नियतत्वादग्निं चिनोति चेष्यति वेत्यत्राभावः ॥

## ९२. कर्मण्यग्न्याख्यायाम् ।

'कर्मणि हनः' (३.२.८६) इत्यतोऽनुवृत्तं कर्मग्रहणमुपपदम्, इदं तु कर्मप्रत्ययार्थमित्याह—'कर्मण्येव कारके' इति । एवकारः पौनर्वचनिकः । उपपदं तावत् कर्मप्रत्ययार्थोऽपि कर्मैवेति । 'आख्याग्रहणं रूढिसम्प्रत्ययार्थम्' इति । अग्निशब्दो लोके ज्वलने रूढः, वेदे त्वग्न्यर्थ इष्टकाचयेऽपि प्रचुरप्रयोगः—'य एवं विद्वानग्निं चिनुते' (तै. ५.५.२.१) 'अग्निं चेष्यमाणः' (मै. ३.२.२), इति, स मुख्यो जघन्यो वा भवतु; इह त्वसत्याख्याग्रहणे लोकप्रसिद्धिवशेन ज्वलन एव गृह्येत, मा ग्राहि, इष्टकाचय एव गृह्यतामित्याख्याग्रहणमित्यर्थः ॥

---

[1] 'नियमः' इति काशिका.

## ९३. कर्मणीनिर्विक्रियः ।

'कर्मणीति वर्तमाने' इति । 'कर्मणि हनः' (३.२.८६) इत्यतः 'कर्तुः कुत्सानिमित्ते कर्मणीति' यत्कर्म क्रियासम्बद्धं कर्तुः कुत्सामावहति तत्रेत्यर्थः । सोमादीनां विक्रयः शास्त्रे निषिद्धः ॥

## ९४. दृशेः क्वनिप् ।

'प्रत्ययान्तरनिवृत्त्यर्थम्' इति । प्रत्ययान्तरं सह निर्दिष्टं मनिनादि, अणादि च । सोपपदाण्णिष्ठा तु भवत्येव—परलोकं दृष्टवानिति ॥

## ९५. राजनि युधिकृञः ।

'ननु च युधिरकर्मकः' इति । तत्कथं राजन्शब्दे कर्मवाचिन्युपपद इत्युक्तमिति भावः । 'अन्तर्भावितण्यर्थः' इति । अनेकार्थत्वाद्धातूनां लक्षणया वा यदा ण्यर्थमपि युधिरेवान्तर्भावयति तदा प्रयोज्येन कर्मणा सकर्मको भवतीत्यर्थः ॥

## ९६. सहे च ।

'असत्त्ववचनत्वान्नोपपदं कर्मणा विशेष्यते' इति । अतश्च 'कर्मणि' इति नानुवर्तते इति भावः । न पुनरनुवर्तमानस्यैवात्रासम्बन्धः, उत्तरत्राप्यनुपयोगात् ॥

## ९७. सप्तम्यां जनेर्डः ।

'मन्दुरजः' इति । 'वाजिशाला तु मन्दुरा' (अमर. २.२.७) । 'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्' (६.३.६३) इति ह्रस्वः ॥

## ९८. पञ्चम्यामजातौ ।

बुद्ध्यादय आत्मगुणाः; खेदः = रागः, खेदात् स्त्रीषु प्रवृत्तिरिति दर्शनात् ॥

## ९९. उपसर्गे च सञ्ज्ञायाम् ।

'प्रजा' इति प्राणिजातस्यैषा सञ्ज्ञा ॥

## १००. अनौ कर्मणि ।

'पुमांसमनुजातः' इति । पुमांसमनुरुध्य जात इत्यर्थः, तेनास्य सकर्मकत्वम् । 'पुमनुजः' इति पुंसः संयोगान्तलोपः ॥

## १०१. अन्येष्वपि दृश्यते ।

'द्विजातिः' इति ।

> 'मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनम् ।
> तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ (मनु. २.१६९) ॥

## १०२. निष्ठा ।

'क्तक्तवतू निष्ठा इत्युक्तम्' इति । ककारः कित्कार्यार्थः, उकारः उगित्कार्यार्थः, 'अत्वसन्तस्य' (६.४.१४) इति विशेषणार्थश्च । 'निष्ठायाम्' इत्यादि । अप्रसिद्धिः = अनिष्पत्तिः, कस्य ? सञ्ज्ञायाः सञ्ज्ञिनो वा । कथमित्याह—'सञ्ज्ञया' इति । यदि द्विः क्तक्तवतूपग्रहणं क्रियेत—इह, सञ्ज्ञाविधौ च, ततो न स्यादितरेतराश्रयत्वमिति सञ्ज्ञयेत्युक्तम् । 'सतोश्च तयोः' इति । लोके शास्त्रे वा, न तावल्लोके सानुबन्धावेतौ स्तः, शास्त्रेऽपि यद्यपि 'ञीतः क्तः' (३.२.१८७), 'नपुंसके भावे क्तः' (३.३.११४) इति क्तः स्वरूपेण विहितोऽस्ति, भूते तु काले नास्ति, क्तवतुस्तु न क्वाप्यास्तीति भावः । 'भाविनी सञ्ज्ञा' इति । सञ्ज्ञिनो भावित्वात् सञ्ज्ञाऽपि भाविनी सूत्रशाटकवत्, तद्यथा—अस्या सूत्रस्य शटकं वयेति तन्तुवाय उक्तः, स पश्यति यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, मन्ये स वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । 'सामर्थ्यात्' इति । 'क्तक्तवतू निष्ठा' (१.१.२६) इति वचनात् अन्यस्योत्पन्नस्य निष्ठेति सञ्ज्ञाया अभावः = सामर्थ्यम । 'आदिकर्मणि' इति । कर्मशब्दः क्रियावाची, एकफलोद्देशप्रवृत्तक्षणसमूहरूपा क्रिया, तत्राद्ये क्रियाक्षणेऽपवृक्तेऽपि धात्वर्थरूपायाः क्रियाया अनपवृक्तत्वाद्वचनम् । न्याय्या त्वाद्यपवर्गात् । न्याय्या त्वेषा भूतकालता, कुतः ? आद्यपवर्गात् । आविर्भूतक्रियाक्षणोऽपवृक्तः तस्मिन्नेव चावयवे समूहरूपो धात्वर्थः परिसमाप्तः । उक्तं च—

> समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
> समाप्यते ततो भेदे कालभेदस्य सम्भवः ॥ (वा. प. ३.८.५) इति ।

तथा च 'प्राकार्षीत् कटं देवदत्तः' इति लुङपि प्रयुज्यते । कटावयवे वा कटशब्दो द्रष्टव्यः, ततः केषांचित् कटावयवक्षणानामपरिसमाप्तेः 'प्रकरिष्यति कटं देवदत्तः' इति लृट्प्रयोगोऽप्यविरुद्धः ।

अपर आह—ज्ञापकात् सिद्धं यदयम 'आदिकर्मणि क्तः' (३.४.७१) 'कर्तरि च' (२.२.१६) 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' (१.२.२१) इति चाह, तज्ज्ञापयति—भवत्यादिकर्मणि क्त इति । यदि तद्विषयमेव नैतदस्ति ज्ञापकम्; 'ञीतः क्तः' (३.२.१८७) इति योऽयं वर्तमाने क्तस्तद्विषयमेतत् स्यात् । यदि तद्विषयमेव स्याद्वर्तमानग्रहणमेव कुर्यात् ॥

## १०३. सुयजोर्ङ्वनिप् ।

'सुनोतेः' इति । 'सु स्रु गतौ' (धा.पा. ९४०) 'सु प्रसवैश्वर्ययोः (धा.पा. ९४१) इत्यनयोरेव निरनुबन्धकयोर्ग्रहणं प्राप्तम्; अनभिधानादुभयपदिना साहचर्याद्वा न भवति । ङकारः सुनोतेर्गुणप्रतिषेधार्थः, इकार उच्चारणार्थः, पकारः स्वरार्थः, तुगर्थश्च ॥

## १०४. जीर्यतेरतृन् ।

## १०५. छन्दसि लिट् ।

'आततान' इति । 'णलुत्तमो वा' (७.१.९१) इति णित्त्वपक्षे वृद्धिः 'धातुसम्बन्धे स विधिः' इति । 'धातुसम्बन्धे प्रत्ययाः (३.४.१) इत्याधिकारात् । लिट इकारटकारौ विशेषणार्थौ, 'लिटः कानज्वा' (३.२.१०६), 'लिटचभ्यासस्योभयेषाम्' (६.१.१७) इत्यादौ 'ल' इत्युच्यमानेऽप्येषामपि लङादीनां ग्रहणं स्यात्, निरनुबन्धकत्वादस्यैव ग्रहणं भविष्यति । परोक्षे लिटोऽपि तर्हि न प्राप्नोति ? टकारष्टेरेत्वार्थश्च ॥

## १०६. लिटः कानज्वा ।

'चिक्यानः' इति । 'चिञ् चयने' (धा.पा. १२५१) । 'विभाषा चेः' (७.३.५८) इति कुत्वम्, 'एरनेकाचः' (६.४.८२) इति यणादेशः । 'न च भवति' इति । वावचनस्य प्रयोजनं दर्शयति । वाऽसरूपविधिश्च लादेशेषु नास्ति, 'हशश्वतोर्लङ् च' (३. २. ११६) इति वचनादित्युक्तम् । नन्वनन्तरसूत्रविहितस्य लिटो नित्यमादेशोऽस्तु, यस्तु 'छन्दसि लुङ्लङ्लिटः' (३. ४. ६) इति लिट्, तत्र तिङां श्रवणं भविष्यति ? न; तस्य धातुसम्बन्धविषयत्वादधातुसम्बन्धे तिङां श्रवणं न स्यात् । लिण्मात्रस्य च ग्रहणमित्यनन्तरमेव वक्ष्यति ।

'पूर्वस्यैव' इत्यादि । प्रत्ययान्तरं तु कानज् न भवति, वावचनाद्वाऽसरूपविधिनैव लुङादीनां सिद्धत्वादिति भावः । 'लिण्मात्रस्य' इति । भाष्ये त्वन्तरस्यैव लिटोऽयमादेशः लिड्ग्रहणं च प्रत्ययान्तरत्वं मा विज्ञायीति । वावचनं चोत्तरार्थमिति स्थितम् । कानचश्चित्करणं स्वरार्थम् । कित्करणं किमर्थम्, न 'असंयोगाल्लिट् कित्' (१.२.५) इत्येव सिद्धम्, तेन 'ईजानः, नेपानः' इत्यादौ संप्रसारणैत्वाभ्यासलोपादिकार्यं भविष्यति ? संयोगान्तार्थम्—'बन्ध बन्धने' (धा.पा. १०५८) 'वृत्रस्य यद्बद्बधानस्य रोदसी' (ऋ. १.५२.१०) 'त्वमर्णवान् बद्बधानाँ अरम्णाः' (ऋ. ५.३२.१) अत्र 'अनिदिताम्' (६.४.२४) इति नलोपः, छान्दसत्वादभ्यासधकारस्य हलादिशेषेण (७.४.६०) निवृत्त्यभावे 'झलां जश् झशि' (८.४.५३) इति जश्त्वं वकारः । ननु छान्दसः कानच् लिट् च छन्दसि सार्वधातुकमपि भवति, 'छन्दस्युभयथा' (३.४.११७) इति वचनात्, तत्र 'सार्वधातुकमपित्' (१.२.४) इति ङित्त्वं, 'ङिति' (६.४.२४) इत्युपधालोपो भविष्यति ? न च संयोगान्तेषु कित्त्वङित्त्वयोर्विशेषोऽस्ति । ऋकारान्तगुणप्रतिषेधार्थं तु 'ऋच्छत्यृताम्' (७.४.११) इति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति—'परितस्तरे' इति । एवमिहापि स्यात् 'परितिस्तिराणः' (ऋ. १. १०८. ४) इति, तस्मात् कित्करणम् । कित्करणसामर्थ्याद्भाषायामपि कानजस्तीत्येतत्तु भाष्यविरोधादुपेक्ष्यम् ॥

## १०७. क्वसुश्च ।

क्वसोरुकार उगित्कार्यार्थः, जक्षिवानित्यादौ 'उगिदचाम्' (७.१.७०) इति नुम्, उपसेदुषीत्यादौ 'उगितश्च' (४.१.६) इति ङीप्, 'वसोः सम्प्रसारणम्' (६.४.१३१) इत्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनम् । कित्करणं किमर्थं न 'असंयोगाल्लिट् कित्' (१.२.५) इत्येव सिद्धम् ? संयोगान्तार्थम् । अञ्जेः आजिवान् उपधालोपो भवति, छान्दसः क्वसुः लिट् । छन्दसि सार्वधातुकमपि तत्र 'सार्वधातुकमपित्' (१.२.४) इति । तत्त्वङितीत्युपधालोपो भविष्यति । ऋकारान्तगुणप्रतिषेधार्थं तु 'ऋच्छत्यृताम्' (७.४.११) इत्ययं गुणप्रतिषेध आरभ्यते, स यथेह भवति—तेरतुस्तेरुरिति, तथा तितीर्वानित्यत्रापि स्यात् । कित्करणसामर्थ्याद्भाषायामपि क्वसुर्भवतीत्येतत्तु भाष्यविरोधादुपेक्ष्यम् । उत्तरसूत्रानर्थक्यं च, यदि भाषायामपि क्वसुर्भवति ॥

## १०८. भाषायां सदवसश्रुवः ।

'आदेशविधानादेव' इत्यादि । यदि भाषायां सदादिभ्यो भूतसामान्ये लिण्न स्यात्, ततस्तादृशस्य लिट आदेशविधानमनुपपन्नं स्यादिति मन्यते । ननु च 'लिटः कानज्वा' (३.२.१०६) इत्यत्र पुनर्लिड्ग्रहणस्य प्रयोजनमुक्तम्—योऽपि परोक्षे लिड् विहितस्तस्याप्ययमादेशो भवतीति, तच्चेत्सत्यम्, इहापि यः परोक्षे लिट् स भाषायामपि सदादिभ्यः सम्भवतीति तस्यैवेदमादेशविधानं स्यात् ? उच्यते—लङ्लिड्विषयेऽपि परस्तादनुवृत्तेर्भवतीति वक्ष्यति, ततो नानेन परोक्षे लिट आदेशाभिधानम्, किं तर्हि ? भूतसामान्ये, ततश्चादेशविधानादेव लिडपि तद्विषयोऽनुमातव्यः । यद्येवम्, तस्य पक्षे क्वस्वादेशः, पक्षान्तरे तिङां श्रवणं प्राप्नोति ? न वावचनेन क्वसुरभिसम्बध्यते, क्वसुर्वा भवतीति, किं तर्हि ? लिडभिसम्बध्यते, भाषायां सदादिभ्यो वा लिट्; तस्य नित्यं क्वसुरादेशो भवतीति । वृत्तिग्रन्थोऽप्यस्मिन्नेवार्थे योजनीयः । 'उपासदत्' इति । लृदित्त्वादङ् । 'उपासीदत्' इति । पाघ्रादिसूत्रेण (७.३.७८) सीदादेशः । 'अनूषिवान्' इति । यजादित्वात् संप्रसारणम्, 'शासिवसिघसीनां च' (८.३.६०) इति षत्वम् । 'अन्ववात्सीत्' इति । 'सः स्यार्धधातुके' (७.४.४९) इति तत्वम् । 'अनूवास' इति । 'लिट्यभ्यासस्योभयेषाम्' (६.१.१७) इत्यभ्यासस्य संप्रसारणम् । 'लुङ्लङ्विषयेऽपि परस्तादनुवृत्तेर्भवति' इति । अन्यथा भूतसामान्ये लुङ् विहितस्तत्रैव धातुविशेषेऽनेनादेशविधानेनानुमितो लिडपवादः । तथा भूतविशेषे लङ्लिटौ लुङ एवापवादौ । सदादिभ्यस्तु भूतविशेषे एतत्सूत्रविहितं च कार्यं प्राप्नोति, लङ्लिटौ च; अपवादविप्रतिषेधाल्लङ्लिटावेव स्याताम् ॥

## १०९. उपेयिवाननाश्वाननूचानश्च ।

'उपपूर्वादिणः क्वसुः' इति । निपात्यत इत्यर्थः । लिडादेशश्चायम्; अन्यथा द्विर्वचनाभ्यासदीर्घत्वे अपि निपातयितव्ये स्याताम् । तथा ग्राममुपेयिवानित्यत्र 'न लोकाव्यय' (२.३.६९) इति षष्ठीप्रतिषेधो न स्यात् । 'दीर्घं इणः किति' 'द्विर्वचनम्' इति । इडागमात्पूर्वं नित्यत्वात् क्रियत इत्यर्थः । 'अभ्यासदीर्घत्वम्' इति । एकादेशेनैव (७.४.६९) इत्यनेन । 'तत्सामर्थ्यात्' इति । यदि ह्येकादेशः स्याद्दीर्घविधानमनर्थकं स्यात्, 'इ इ अतुस्' इति स्थिते दीर्घस्य सिद्धत्वात् । ननु चाभ्यासदीर्घत्वस्य 'ईयतुः' इत्यादिरवकाशः स्यात् । अत्र हि दीर्घत्वमेकादेशश्च प्राप्नोति, 'इणो यण्' (६.४.८१) इति यणादेशश्च; तत्र 'वार्णादाङ्गं बलीयः' (व्या.प.३९) इति बहिरङ्गत्वादा यणेव भवति, ततश्च दीर्घविधानमर्थवद्भवति ? एवं मन्यते— इति बह्वाश्रयत्वेनैकादेशस्य बहिरङ्गत्वाद्वा यणेव भवति, ततश्च दीर्घविधानमपार्थकमेव ।

अत्रापि पूर्वपरविधिरेकादेशः पूर्वविधिरिति, तत्र कर्तव्ये यणादेशस्य स्थानिवत्त्वात् स्यादेवैकादेशः; तदेवमभ्यास-दीर्घत्वमनवकाशत्वात् सवर्णदीर्घत्वं बाधत इति। तस्मात् सुष्ठूक्तम्--तत्राभ्यासदीर्घादिकादेशप्रतिबन्ध इति। 'तत्र' इति। एवं सतीत्यर्थः। 'स निपात्यते' इति। निपातनाश्रयणमिडर्थम्। अभ्यासत्वं पूर्वत्रैवेण्ग्रहणादेव सिद्धमित्यर्थः।

यदि तर्हीडर्थमेतन्निपातनं संप्रसारणविषयेऽपि प्राप्नोति; अत्र वलादेरिति विशेषानुपादानात्, यथा वक्ष्यति--नित्यश्चायं वालिनमित्तो विघातीति, तत्राह--'क्रादिनियमात् प्राप्तश्च' इति। च शब्दो हेतौ। नात्रापूर्व इड्विधीयते, किं तर्हि ? योऽयं वलादिलक्षण इट् क्रादिनियमेन प्राप्तः 'वस्वेकाजाद्घसाम्' (७.२.६७) इति नियमेन प्रतिषिद्धः, स एव प्रतिप्रसूयते = प्रतिबन्धापनयनेन पुनः प्रवर्त्यते। तेनाजादावतिप्रसङ्गो न भवतीत्यर्थः। अन्ये तु--अभ्यासदीर्घत्वे कृते धात्विकारस्य व्यञ्जनं यणादेशं निपातयन्ति, 'ईय्वसु' इति स्थिते 'वस्वेकाजाद्घसाम्' (७.२.६७) इत्यवेट् सिद्धः, स च वलादिलक्षण इति नास्त्यतिप्रसङ्गः।

अपर आह--पूर्वसूत्र एवेण्ग्रहणं कर्तव्यम्, नार्थो निपातनाश्रयणेन। अत्र यदुक्तम्--ईयतुरित्यत्रा-भ्यासदीर्घत्वे कृते एकादेशात् पूर्वं 'वार्णादाङ्गं बलीयः' (व्या.प. ३९) इति यणि कृतेऽपि तस्य स्थानिवत्त्वादेकादेशः प्राप्नोति, ततश्चावश्यमभ्यासदीर्घत्वेन बाधितव्यः एकादेश इति, तन्न; न हि स्थानिवद्भावेन रूपमतिदिश्यते, रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति। किं च यणादेशेन बाधितस्यैकादेशस्य पुनः स्थानिवद्भा-वेनापि प्रवृत्त्यभावो बाधितत्वादेव। किमतो यद्येवमिदं ततो भवति ? इणः क्वसौ विहिते द्विर्वचनं च प्राप्नोति, 'वस्वेकाजाद्घसाम्' (७.२.६७) इतीडागमश्च। किमत्र कर्तव्यम् ? परत्वादिट्, नित्यं द्विर्वचनं कृतेऽपीटि प्राप्नोति, अकृतेऽपि प्राप्नोतीति। इडपि नित्यः, कृते द्विर्वचनेऽभ्यासदीर्घत्वे एकादेशे च एकाच्त्वात् प्राप्नोति; इदानीमेव ह्युक्तम्-अभ्यासदीर्घत्वेन न बाधितव्य एकादेश इति। तदेवमुभयोर्नित्ययोः परत्वादिट्, द्विर्वचनम्, अभ्यासदीर्घत्वं परस्य यणादेशः, ईयतुरित्यादिवत् सिद्धमुपेयिवानिति। बिभिद्वानित्यादौ नित्यत्वात् पूर्वं द्विर्वचनमेव भवति।

'न चात्रोपसर्गस्तन्त्रम्' इति। एवमाचार्याणामुपदेश इति भावः। 'अनुपसर्गाच्च' इति। 'ईयिवांसमति-स्त्रिधः' (ऋ. ३.९.४) इति हि छन्दसि दृश्यते।

'लुङादयो भवन्ति' इति। लङ्लिड्विषयेऽपि परस्तादनुवृत्तेरयं विधिर्भवतीति दर्शयति। 'उपागात्' इति। 'इणो गा लुङि' (२.४.४५) 'गातिस्थाघुपाभूभ्यः' (२.४.७७) इति सिचो लुक्। 'उपैत्' इति। अदादित्वाच्छपो लुक्, 'आडजादीनाम्' (६.४.७२), 'आटश्च' (६.१.९०)। 'उपेयाय' इति। तिपो णलि वृद्ध्यायादेशौ, 'द्विर्वचनेऽचि' (१.१.५९) इतिस्थानिवद्भावादिकारस्य द्विर्वचनम्, 'अभ्यासस्यासवर्णे' (६.४.७८)।

'अश्नोतेः' इति। 'अश भोजने' (धा.पा. १५२३)। 'नञ्पूर्वात्' इति। तेनान्यपूर्वात्केवलाच्च न भवति। 'नाशीत्' इति। तिपि सिचि 'नेटि' (७.२.४) इति वृद्धिप्रतिषेधः; 'आडजादीनाम्' (६.४.७२), 'आटश्च' (६.१.९०), नञा सह सवर्णदीर्घत्वम्। 'नाश' इति। तिपि णलि द्विर्वचने 'अत आदेः' (७.४.७०) इत्यभ्यासदीर्घः, नञा परेण च सवर्णदीर्घत्वम्।

'वचेः' इति । 'ब्रुवो वचिः' (२.४.५३) इत्यस्य । तथा च लङि अन्वब्रवीदित्युदाहरिष्यते । अन्ये तु 'वच परिभाषणे' (धा.पा. (१०६३) इत्यस्यापि ग्रहणमिच्छन्ति । 'कर्तरि' इति । न भावकर्मणोः । एतच्च निपातनाल्लभ्यम् । 'अन्ववोचत्' इति । 'वच उम्' (७.४.२०) 'अन्वब्रवीत्' इति । 'ब्रुव ईट्' (७.३ ९३) । 'अनूवाच' इति । पूर्ववदभ्यासंसप्रसारणम् ॥

## ११०. लुङ् ।

इह भूतसामान्ये लुङ् विधीयते, तस्य विशेषेऽनद्यतने लङ्लिटावपवादौ, तद्विषयेऽपि लुङ् दृश्यते, आगमाम घोषात्, अपाम पयः, अशेयिष्महि पूतीकतृणेषु, 'अभून्नृपो विबुधसखः परन्तपः' (भ. १.१) इति चिरवृत्तं कथयतः प्रयुञ्जते ? नैष दोषः; विशेषे सामान्यमस्ति, तत्र विशेषाविवक्षायां सामान्याश्रयणेन वस्तुतोऽनद्यतनेऽपि लुङुपपद्यते, तद्रूपविवक्षायामेव तु लङ्लिटौ, विवक्षोपारूढो ह्यर्थः शब्दप्रयोगनिमित्तः, न वस्तुतः सन्निति । गतमेतत् । 'वसतेः' इति । 'वस निवासे' (धा.पा. १००५), रात्रेश्चतुर्थे यामे पृष्टो यदा वाक्यं प्रयुङ्क्ते तदा तस्यातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रयोगे लुङ् वक्तव्यः । लङ्निवृत्तिपरं चैतत्, लुङ् भूतसामान्यविवक्षया सिद्धः ।

'जागरणसन्ततौ' इति । यदा प्रयोक्ता सकलमतिक्रान्तं रात्रिप्रहरत्रयं जागरितवान् तदा लुङ्प्रयोगः । यदा सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥

## १११. अनद्यतने लङ् ।

'अनद्यतने' इति तत्पुरुषपक्षे पर्युदासश्चेत् व्यामिश्रेऽपि प्राप्नोति—अद्य ह्यो वाऽभुक्ष्महीति, भवति ह्यद्यतनानद्यतनसमुदायोऽद्यतनादन्यः, प्रसज्यप्रतिषेधे तु योऽत्राद्यतनस्तदाश्रयः प्रतिषेधो भवति, किं तु भूतसामान्ये प्राप्नोति, भूतविशेषे हि प्रतिषेधः । न च सामान्यं विशेषो भवति । पर्युदासेऽप्ययं दोषो द्रष्टव्यः । बहुव्रीहौ न विद्यतेऽद्यतनो यस्मिन् सोऽनद्यतनो भूतो धात्वर्थः, तत्र वर्तमानाल्लङ् भवति, ततश्चा(द्यतनान)द्यतनसमुदायेऽद्यतनस्यैकदेशस्य सम्भवान्न भवति प्रसङ्गः । भूतसामान्येऽपि न भवत्येव, विद्यते हि सामान्ये विशेषः,—अतो बहुव्रीहिरेवायं युक्त इत्याह—'अनद्यतन इति बहुव्रीहिनिर्देशः' इति । बहुव्रीहिणा विवक्षितार्थस्य प्रतिपादनं बहुव्रीहेरुच्चारणमित्यर्थः । यदि बहुव्रीहिनिर्देशः, एवं सत्यद्यतने प्राप्नोति, न ह्यद्यतनेऽद्यतनो विद्यते ? अद्यतनेऽपि मुहूर्तादिरद्यतनो विद्यते, मुहूर्तादावपि क्षणादिः, कथम् ? व्यपदेशिवद्भावेन यथा मुख्ये भेदे आधाराधेयभावो भवति—सदे तिष्ठतीति, तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते, न तु तत्त्वतः अवयवव्यतिरिक्तोऽत्र समुदाय आधारोऽस्ति । तदुक्तं हरिणा—

> कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।
> न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥ (वा.प. ३.३.८५) इति ।

'अद्य ह्यो वा' इति । अद्य ह्यश्चेत्यर्थः । गामश्वं पुरुषं नयमान इतिवद्वाशब्दस्याप्रयोगः । 'अभुक्ष्महि' इति । 'भुजोऽनवने' (१.३.६६) इत्यात्मनेपदम्, महिङि, 'लिङ्सिचावात्मनेपदेषु' (१.२.११) इति सिचः कित्त्वात् गुणाभावः, 'चोः कुः' (८.२.३०) इति कुत्वम्—गकारः । 'खरि च' (८.४.५५) इति चर्त्वम्—ककारः, सिचः सस्य षत्वम् ।

'परोक्षे च' इत्यादि। परोक्षशब्दोऽयमतीन्द्रियार्थे वर्तते, लोकविज्ञाते लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ता तस्य दर्शनविषये लङ् वक्तव्यः। ननु विप्रतिषिद्धमिदम्—यदि परोक्षः, कथं दर्शनविषयः ? अथ दर्शनविषयः, कथं परोक्षः ? शक्यदर्शनत्वाद्दर्शनविषयः, क्वचिद्व्यासङ्गादननुभूतत्वात् परोक्ष इति विरोधाभावः। 'अरुणत्' इति। 'रुधिर् आवरणे' (धा.पा. १४३८) रुधादित्वात् श्नम्, तिपो हल्ङ्यादिना लोपः। साकेतरोधस्तदानीं प्रयोक्तुर्दर्शनविषयः, शक्यदर्शनत्वात्। लोकप्रसिद्धश्च, क्वचिद्व्यासङ्गादननुभूतत्वात् परोक्षश्च। परोक्ष इति किम् ? उदगादादित्यः, इणो लुङ्, गादेशादिकार्यम्।

'लोकविज्ञाते' इति किम् ? चकार कटं देवदत्तः। 'प्रयोक्तुर्दर्शनविषये' इति किम् ? जघान कंसं किल वासुदेवः, हन्तेः परोक्षे लिट्, द्विर्वचनम् 'अभ्यासाच्च' (७.३.५५) इति कुत्वम्, हकारस्य घकारः। कंसवधश्चिरकालान्तरवृत्तत्वादिदानीं प्रयोक्तुर्दर्शनविषयो न भवति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान्—आहत कंसं वासुदेव इति। मूलोदाहरणेऽपि प्रयोक्ता साकेतरोधेन तुल्यकालो वेदितव्यः, तस्यैव ह्यसौ दर्शनविषयः, नान्यस्य॥

## ११२. अभिज्ञावचने लृट्।

'वत्स्यामः' इति। वसेर्लृट्, मस्, 'स्यतासी लृलुटोः' (३.१.३३) इति स्यप्रत्ययः, 'सः स्यार्धधातुके' (७.४.४९) इति सस्य तकारः, 'अतो दीर्घो यञि' (७.३.१०१) इति दीर्घः।

'वचनग्रहणम्' इत्यादि। असति वचनग्रहणेऽभिज्ञाशब्द एवोपपदे स्यात्, तस्मिंस्तु सति यावन्तोऽभिज्ञावचनास्तेषु भवति। 'बुध्यसे, चेतयसे' इति। अर्थप्रकरणादिना स्मृतिरूपे ज्ञाने यदानयोर्वृत्तिस्तदाऽत्रापि भवतीति भावः॥

## ११३. न यदि।

'यदि' इति सतिसप्तमीयम्। अभिज्ञावचनं चानुवर्तते, तेन यत्र यच्छब्दोऽस्ति, तत्र यदभिज्ञावचनं तन्नियोगतो यच्छब्देन सहितं भवतीत्यभिप्रेत्याह—'यच्छब्दसहिते' इत्यादि। 'अवसाम' इति। वसेर्लङ्, मस्, 'नित्यं ङितः' (३.४.९९) इति सलोपः, दीर्घः, वासमात्रमित्यादिनोत्तरसूत्रस्य नायं विषय इति दर्शयति। यदि तत्रापरं किंचिल्लक्ष्यमपेक्ष्येत तदोत्तरसूत्रेण पाक्षिको विधिः स्यात्, तच्च नेष्यते, तस्मान्न तस्य विषयः॥

## ११४. विभाषा साकाङ्क्षे।

'उभयत्रविभाषेयम्' इति। प्राप्ते चाप्राप्ते च। असति यच्छब्दे 'अभिज्ञावचने लृट्' (३.२.११२) इति लृटि प्राप्ते सति यच्छब्दे प्रतिषेधे प्राप्ते। आकाङ्क्षणम् = आकाङ्क्षा, आकाङ्क्षया सह वर्तते साकाङ्क्षः। आकाङ्क्षा च चेतनावतो धर्मः, तस्मात् 'साकाङ्क्षे' इत्येतत् प्रयोक्तृविशेषणम्, तेन सकर्मक इत्यादिवत् समासः। 'साकाङ्क्षश्चेत् प्रयोक्ता' इति। 'अङ्गयुक्तं तिङाकाङ्क्षम्' (८.२.९६) इत्यत्र तु प्रयोक्तृगताकाङ्क्षाध्यारोपेण तिङन्तमाकाङ्क्षमिति वक्ष्यते। इह तु मुख्ये प्रयोक्तरि सम्भवति, गौणकल्पनया धात्वर्थविशेषणमयुक्तमिति भावः। कीदृशे पुनर्विषये प्रयोक्ता साकाङ्क्षो भवतीत्याह—'लक्ष्यलक्षणयोः सम्बन्धे' इति। यत्रैको धात्वर्थो लक्ष्यः,

अपरो लक्षणम्, तत्र द्वयोर्लक्ष्यलक्षणभावेन सम्बन्धे सति प्रयोक्तुराकाङ्क्षा भवति, तत्र न वासमात्रं प्रतिपाद्य प्रयोक्ता चरितार्थो भवति, किं तु तेन प्रसिद्धेन भोजनादिकं स्मारयितुं प्रवर्तते ॥

## ११५. परोक्षे लिट् ।

परोक्षशब्दोऽयमतीन्द्रियवाची प्रसिद्धः । व्युत्पत्तिस्तु--परमक्ष्णः परोक्षम्, मयूरव्यंसकादित्वात् समासः, 'अच्प्रत्यन्ववपूर्वात्' (५.४.७५) इत्यत्राजिति योगविभागच् समासान्तः । वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवचनः, न चक्षुःपर्यायः, अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षमापद्येत । एवं च कृत्वा दर्शनपर्यायोऽक्षिशब्दो न भवतीति 'अक्ष्णोऽदर्शनात्' (५.४.७६) इत्येवाच् समासान्तोऽस्तु । अन्ये तु 'प्रतिपरसमनुभ्योऽक्ष्णः' (ग.सू.-१५८; ५.४.१०७) इति शरत्प्रभृतिषु पाठादच् समासन्त इत्याहुः । स च यद्यप्यव्ययीभावे विधीयते, तथापि परशब्देनाव्ययीभावासम्भवात् समासान्तरे विज्ञायते । एवं तु 'क्रियायां परोक्षायाम्' (म.भा. २.१२०) इति भाष्यप्रयोगे टिल्लक्षणो ङीप् प्राप्नोति, तस्मादजन्त एवायम् । तत्र परतः परशब्दस्य परो भावोऽस्मादेव निर्देशाद्भवति, परशब्दादुत्तरस्याक्षिशब्दस्यादेरुत्वं वा ।

'ननु च' इत्यादि । एकफलोद्देशेन प्रवृत्तत्वादैक्यमिवापन्नो विततरूपः क्षणप्रवाहो धात्वर्थः, स कार्त्स्न्येनैकस्मिन् क्षणे न सम्भवतीति सद्वस्तुविषयैरिन्द्रियैर्न गृह्यते, ततश्चैकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेऽपि समूहरूपो धात्वर्थः सर्वः परोक्ष एव, ततश्चाव्यभिचारादविशेषणमिति भावः । 'सत्यमेतत्' इति । अनन्तरोक्तं मन्यते । किमर्थं तर्हि परोक्षग्रहणमित्याह--'अस्तु' इति । यत्र साधनशक्त्याश्रयभूतं फूत्कारसीत्कारादिविशिष्टं संरब्धरूपं द्रव्यं प्रत्यक्षम्, तत्र धात्वर्थ एव प्रत्यक्षाभिमानो लौकिकनाम् । अभिमानः = मिथ्याज्ञानम्, तद्व्यावृत्तये परोक्षग्रहणम् । यदि तर्हि यत्र साधनशक्त्याश्रयं द्रव्यं परोक्षम्, तत्र लिड् भवति तर्हि उत्तमो न प्राप्नोति, तत्र हि बुद्धीन्द्रियशरीरादिसङ्घातः कर्ता, स चात्मनः प्रत्यक्ष एव । 'परस्मैपदानाम्' (३.४.८२) इति तु णलादेशवचनं 'णलुत्तमो वा' (७.१.९१) इति च, 'छन्दसि लुङ्लङ्लिटः' (३.४.६), 'अत्यन्तापह्नवे' (वा. २७१) इति चापरोक्षे यो लिट् तद्विषयं भविष्यतीत्यत आह--'उत्तमविषयेऽपि चित्तव्याक्षेपात्' इति । मदस्वप्नादिभिश्चित्ते व्याक्षिप्ते भवति वै कश्चित् स्वकृतमेव न जानाति, पश्चादेव त्वया कृतमिति पार्श्वस्थेभ्यः श्रुत्वा प्रयुङ्क्ते—सुप्तोऽहं किल विललापेति । किलेत्यज्ञानं सूचयति । 'अत्यन्तापह्नवे' इति । अपह्नवः = अलापः । कलिङ्गो नाम जुगुप्सितो देशः, तत्र प्रविश्य त्वया चिरकालं स्थितमिति कश्चिदुक्तः सन्नाह--नाहं कलिङ्गं जगामेति । न केवलमवस्थानमेव प्रतिषिध्यते, किं तर्हि ? तद्धेतुभूतगमनमपीति भवत्यत्यन्तापह्नवः । तथा दक्षिणापथं प्रविश्यायाज्ययाजनादिकं त्वया कृतमिति कश्चिदुक्तः सन्नाह--नाहं दक्षिणापथं प्रविवेशेति । अत्राप्ययाज्ययाजनादेर्हेतुभूतः प्रवेश एव प्रतिषिध्यत इत्यत्यन्तापह्नवः । क्वचित् 'दक्षिणापथं प्रविष्टोऽसि' इति वृत्तावेव पठ्यते, तत्र प्रविश्येदं कृतवानित्यर्थः ॥

## ११६. हशश्वतोर्लङ् च ।

## ११७. प्रश्ने चासन्नकाले ।

'भूतानद्यतनपरोक्ष इति वर्तते' इति । अयमर्थोऽनुवर्तत इत्यर्थः । न पुनरेवंविधः समासः प्रकृतोऽस्ति । 'प्रष्टव्यः प्रश्नः' इति । कर्मसाधनं प्रश्नशब्दं दर्शयति । करणसाधने तु प्रश्नक्रियासाधनभूते धातावासन्नकाल इत्यर्थः

स्यात्, तत्र आसन्नकाल इत्यनर्थकम्, न ह्यनुच्चारितात् प्रत्ययविधानम्, उच्चारितश्चासन्नकाल एव। भावसाधनेऽप्यासन्नकाले प्रश्ने वर्तमानावित्यर्थः स्यात्, ततश्चार्थान्तरवाचिभ्यो लङ् न स्यात्, अतः कर्मसाधनोऽयं प्रश्नशब्दः। तत्र पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतं तु विप्रकृष्टकालमिति वर्णयन्ति ॥

## ११८. लट् स्मे।

'नडेन स्म पुराधीयते' इति। अधिपूर्वादिङः कर्मणि लकारः, कर्माविवक्षायां वा भावे, नडेनेति कर्तरि तृतीया। अथ वा—अधीयते इति कर्तरि बहुवचनम्, 'आत्मनेपदेष्वनतः' (७.१.५) इत्यदादेशः, नडेनेति सहयोगे तृतीया। अन्ये तु व्याचक्षते—पुराकल्पे नडाख्यं तृणविशेषं हस्ते गृहीत्वाधीयाना अधीयते स्मेति ॥

## ११९. अपरोक्षे च।

पूर्वसूत्रेण परोक्षे विधानादपरोक्षे न प्राप्नोतीत्ययमारम्भः, पूर्वसूत्र एव परोक्षग्रहणं निवर्तिष्यते। यद्येवम्, तत्सम्बन्धादनद्यतनग्रहणमपि निवर्तेत, मा निवृतदित्येवमर्थमिदम्, द्वयोर्हि प्रकृतयोरेकनिवृत्तिर्यत्नेन क्रियमाणा इतरस्यानिवृत्तिमनुमापयति ॥

## १२०. ननौ पृष्टप्रतिवचने।

पृष्टमिति कर्मणि क्तः, पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनम्। वृत्तौ तु वस्तुमात्रं दर्शितम्। 'प्रश्नपूर्वके प्रतिवचने' इति। उदाहरणे पूर्वांशः प्रश्नः, उत्तर उदाहरणम। पृष्टग्रहणार्थकं प्रश्नपूर्वकमेव प्रतिवचनम्? तन्न; विरुद्धमपि वचनं प्रतिचवनं वचनाभिमुखं प्रतिवचनमित्यपि सम्भवात्। तस्मात् पृष्टग्रहणम्। अत्यन्तासन्नकाले चायं विधिरिष्यते, तत्र निर्वृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवृत्तिः। एवं च श्रमादिदर्शनेन सैव क्रिया वर्तत इति शक्यं वक्तुमिति। 'वर्तमाने लट्' (३.२.१२३) इत्येव सिद्धेः प्रत्याख्यातमिदम्—'ननौ पृष्टप्रतिवचने' इत्यशिष्यम्, क्रियासमाप्तेरविवक्षितत्वादिति ॥

## १२१. नन्वोर्विभाषा।

## १२२. पुरि लुङ् चास्मे।

'अनद्यतनग्रहणम्' इत्यादि। लुङ्ग्रहणं चात्र लिङ्गम्। यदि हि भूतमात्रेऽयं विधिः स्यात् विभाषा लटो विधानात् तेन मुक्ते लुङपि भविष्यति, किं लुङ्ग्रहणेन? अनद्यतनग्रहणानुवृत्तौ तु लटा मुक्ते लङेव स्यादिति कर्तव्यं लुङ्ग्रहणम्। 'अन्येऽपि' इति। लङ्लिटौ, अभिज्ञावचने लृट्—अभिजानासि देवदत्त वत्स्यन्तीह पुरा छात्रा इति ॥

## १२३. वर्तमाने लट्।

'प्रारब्धोऽपरिसमाप्तश्च' इति। अधिश्रयणादिरधःश्रयणपर्यन्त ओदनफलावच्छिन्नो विततरूपो व्यापारनिचयः पचेरर्थः। एवं सर्वत्र स यावता कालेन निवर्तते स कालो वर्तमानः, तद्योगाद्वर्तमानो धात्वर्थ इत्यर्थः। तेन

निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावित्वान्निष्पन्नानिष्पन्नव्यतिरेकेण राश्यन्तरस्याभावाद्वर्तमानाभाव इति चोद्यं परिहृतम्। इहाध्ययने प्रवृत्ता यदा भोजनादिक्रियां कुर्वन्तो नाधीयते तदा अधीयत इति प्रयोगो न प्राप्नोति? नैव दोषः; आफलनिष्पत्तेरध्ययनमपरिसमाप्तमन्तरालवर्ति तु भोजनादिकं नान्तरीयकं तस्यैव वाऽवयवक्रिया। यमपि भवान् मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते--भुङ्क्ते देवदत्त इति, अत्राप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति, तत्र चेद्युक्ता वर्तमानकालता, इहापि युक्ता दृश्यताम्। उक्तं च-

व्यवधानमिवोपैति निवृत्त इव दृश्यते।
क्रियासमूहो भुज्यादिरन्तराल प्रवृत्तिभिः॥

[1]न च विच्छिन्नरूपोऽपि स विरामान्निवर्तते।
सर्वैव हि क्रियाऽन्येन सङ्कीर्णैवोपलभ्यते॥

तदन्तरालदृष्टा वा सर्वैवावयवक्रिया।
सादृश्यात् सति भेदे तु तदङ्गत्वेन गृह्यते॥ (वा.प. ३.९.८२-८४) इति।

एतदप्यनेनैवोक्तं प्रारब्धोऽपरिसमाप्तश्च वर्तमान इति। इह तिष्ठन्ति पर्वताः, स्रवन्ति सिन्धव इति पर्वतादिस्थित्यादेः सर्वदाभावाद् भूतभविष्यदभावात् तत्प्रतिद्वन्द्विरूपस्य वर्तमानस्याप्यभाव इति लण्न प्राप्नोति? नैष दोषः; कालत्रयवर्तिनां राज्ञां याः क्रियाः पालनादिका भूतादिभेदेन भिन्नाः, ताः पर्वतस्थित्यादेर्भेदिकाः, ततश्च ये संप्रति राजानस्तत्क्रियाभेदेन भिन्नायाः पर्वतादिस्थितेर्वर्तमानत्वम्। एवं च कृत्वा भूतभविष्यत्कालयोगोऽप्युपपद्यते--तस्थुः पर्वता नलदुष्यन्तादिकाले, स्थास्यन्ति पर्वताः कल्किविष्णुकाले। लटष्टकाष्टैरेत्वार्थः॥

## १२४. लटः शतृशानचावप्रथमासमानाधिकरणे।

शकारः सार्वधातुकसंज्ञार्थः, ऋकार उगित्कार्यार्थः, चकारः स्वरार्थः। प्रथमाशब्दः सुपामाद्ये त्रिके प्रसिद्धः प्रथमाया अन्याऽप्रथमा द्वितीयादिः तत्र प्रत्ययग्रहणपरिभाषया तदन्तविधिः अप्रथमान्तं द्वितीयाद्यन्तमित्यर्थः। अधिकरणम = अभिधेयम्, समानम् = साधारणम्, अभिधेयं यस्य तत् समानाधिकरणम्, अप्रथमान्तेन समानाधिकरणमप्रथमासमानाधिकरणम्। तृतीयेति योगविभागात् समासः। द्विपदो वा बहुव्रीहिः--अप्रथमा समानाधिकरणं यस्येति। 'यस्य च भावेन' (२.३.३७) इति सप्तमी अप्रथमासमानाधिकरणे लटि सति, तस्य लट इति षष्ठ्यर्थे सप्तमी। एष पर्युदासपक्षो दर्शितः। प्रसज्यप्रतिषेधपक्षे तु नञो भवतिना सम्बन्धः। प्रथमाशब्देन प्रथमान्तं गृह्यते। शेषं समानम्।

तत्राद्ये पक्षे कुर्वतोऽपत्यं कौर्वतः, पाचतः, कुर्वतो भक्तिः कुर्वद्भक्तिः, कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोः शतृशानचौ न स्याताम्, न ह्यत्र द्वितीयाद्यन्तेन सामानाधिकरण्यम्, न हि कुर्वतो देवदत्तस्य भक्तिः कुर्वतो देवदत्तस्यापत्यमित्यत्र समासतद्धितौ भवतः, सापेक्षत्वात् पदान्तरनिरपेक्षत्वे प्रथमान्तेन सामानाधिकरण्याभावः। प्रसज्यप्रतिषेधे तु प्रथमान्तेन सामानाधिकरण्याभावाददोषः। अस्तु तर्हि स एव? एवमपि कुर्वतो भक्तिरस्य कुर्वद्भक्तिः, कुर्वाणभक्तिरत्र न प्राप्नोति, ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तेषु न स्यात्--कुर्वत्तरः, कुर्वाणतरः; कुर्वद्रूपः, कुर्वत्कल्प इति? पर्युदासेऽप्येष दोषो द्रष्टव्यः।

---

1. न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते-वा.प.

एवं तर्हि 'प्रत्ययोत्तरपदयोश्च' (७.२.९८) इति लक्षणशेषः कर्तव्यः, तत्र पृथगुत्तरपदग्रहणम् 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' (व्या.प. १२८) इति समासार्थाया विभक्तेर्लुकि कृते प्रत्ययलक्षणप्रतिषेधात् प्रत्ययापरत्वार्थम्। ननु च प्रत्ययोत्तरपदयोः सतोः शतृशानचौ भवतः, तयोश्च कृत्वात् प्रातिपदिकत्वे सति विभक्त्युत्पत्तौ सत्यां तद्धिताः, समासश्च, समासे च सत्युत्तरपदं तदितरेतराश्रयं भवति ? नैष दोषः; ङ्याप्प्रातिपदिकात् तद्धिताः, ते लकारस्य कृत्त्वाद्भविष्यन्ति, उत्तरपदेऽपि विधानसामर्थ्यात् तिङादेशं बाधित्वा लान्तस्य प्रातिपदिकत्वमाश्रित्य सुबुत्पत्तौ समास इति सिद्धम्। एवमपि वीक्षमाणस्यापत्यं वैक्षमाणिरित्यत्र कृते शानचि अकारान्तत्वाभावात इञोऽप्रसङ्गः, पचतितरामित्यत्र शतृशानचौ प्राप्नुतः, तथा पचतिरूपमित्यादौ 'तिङश्च' (५.३.५६) इत्येतत् लङादिविषयमेव स्यात्।

तदेवं सर्वत्र दोषसद्भावे समासोऽपि तावन्न्याय्यो भवतीति पर्युदासमाश्रित्याह—'अप्रथमान्तेन चेत्' इत्यादि। 'तस्य' इति। लटः। कथं पुनर्लटो द्वितीयाद्यन्तेन सामानाधिकरण्यम्, यावता 'लः कर्मणि च' (३.४.६९) इत्यनेन कर्तृकर्मणोर्विधीयमानो लकारः क्रियां प्रति गुणभूते कर्तृकर्मणी प्रतिपादयति, तथा च क्रियाप्रधानत्वादाख्यातस्य क्रियान्तरयोगाभावाच्छष्ठ्यन्तरावेशाभावः, न हि भवति पचत्योदनं देवदत्तं पश्य, पच्यते ओदनेन तृप्तः अपचदोदनं देवदत्तं पश्य पच्यते ओदनेन तृप्त इति, यथा—अन्येषु कृत्सु पाकं पश्य, पाकेन तृप्त इति ? सत्यम्; तिङ्भाविनो लकारस्यायं स्वभावः, यदुक्तगुणभूते कर्तृकर्मणी प्रतिपादयति, शत्रादिविषयस्य क्रियोपसर्जनकर्त्राद्यभिधानम्, ततश्च क्रियान्तरयोगे सति तन्निमित्तं द्वितीयाद्यन्तसामानाधिकरण्यमुपपद्यते। यद्यपि केवलस्य लटः प्रयोगाभावादप्रथमान्तेन सामानाधिकरण्यं न क्वचिदुपलब्धम्, तथापि तदादेशयोः शतृशानचोर्दर्शनात् स्थानिनो लकारस्यापि तद्योग्यत्वमनुमीयते, तेन लटः प्रक्रियार्थं विहितस्य काल्पनिकप्रथमान्तेन सामानाधिकरण्यमस्तीति दोषाभावः।

अथ लड्ग्रहणं किमर्थम्—आदेशौ यथा स्यातां प्रत्ययान्तरं मा भूतामिति ? नैतदस्ति; पूर्वसूत्र एव लड्ग्रहणं स्वरयिष्यते, तस्येहानुवृत्तस्यार्थात् षष्ठ्या विपरिणामे तस्यैवादेशौ भविष्यतः, न प्रत्ययान्तरमत आह—'लडिति वर्तमाने पुनर्लड्ग्रहणम्' इति। 'क्वचित् प्रथमासामानाधिकरण्येऽपि भवतः' इति। अप्रथमासमानाधिकरणत्वाभावोपलक्षणमिदम्, तेन कौर्वतः, कुर्वद्भक्तिरित्यादयोऽपि भवन्ति। 'सन्' इति। 'अस् भुवि' (धा.पा.-१०६५), 'श्नसोरल्लोपः' (६.४.१११)। 'विद्यमानः' इति। 'विद सत्तायाम्' (धा.पा. ११७१), दिवादिरनुदात्तेत्। 'जुह्वत्' इति। 'नाभ्यस्ताच्छतुः' (७.१.७८) इति नुमभावः।

'माङ्याक्रोशे' इति। माङि लुङोऽपवादः, तथा पुनर्लड्ग्रहणाद्योऽपि भूते लट् 'ननौ पृष्टप्रतिवचने' (३.२.१२०) इति तस्यापि भवतः-ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणं पश्येति। एतच्च 'ननौ पृष्टप्रतिवचने' (३.२.१२०) इत्यत्र भाष्यकारेणोक्तम्।

'केचित्' इत्यादि। न चैवं पचन्तं पश्येत्यादावपि विकल्पप्रसङ्ग इत्यत आह—'व्यवस्थितविभाषा चेयम्' इति। 'यथादर्शनम्' इति। प्रथमासमानाधिकरणे विकल्पः, पचन्तं पश्येत्यादौ 'प्रत्ययोत्तरपदयोश्च' (७.२.९८) नित्यं पचतितरामित्यादौ नैव भवतः, अन्यथा तिङोऽपि स्थानिवद्भावात् स्यात् प्रसङ्गः। न तर्हीदानीमिदं वक्तव्यम्—'अप्रथमासमानाधिकरणे' इति ? वक्तव्यं च। किं प्रयोजनम् ? नित्यार्थम्। नन्वेतदपि विभाषयैव सिद्धम् ? सत्यम्; स एवार्थो वचनेन स्पष्टीक्रियते। एतेन 'सम्बोधने च' (३.२.१२५), 'लक्षणहेत्वोः' (३.२.१२६) इति च व्याख्यातम्॥

## १२५. सम्बोधने च ।

'हेपचन्' इति । संयोगान्तलोपस्यासिद्धत्वान्नलोपाभावः । अत्र सम्बोधने प्रथमा, अयमादेशश्चेत्युभयं मिलितं सम्बोधनं द्योतयति ।।

## १२६. लक्षणहेत्वोः क्रियायाः ।

'लक्ष्यते चिह्न्यते येन' इति । चिह्नयतिरवधारयत्यादिवच्चुरादिषु द्रष्टव्यः । 'धात्वर्थविशेषणं चैतत्' इति । नोपपदं क्रियाया इति वचनात् । उपपदं हि धातोर्भवति, स च क्रियावचन इति क्रियाग्रहणमनर्थकमुपपदत्वे स्यात् । क्रियायाश्च लक्षणापेक्षया कर्मत्वम् । हेत्वपेक्षया तु शेषत्वम्, तत्रोभयानुग्रहाय कर्मणोऽपि शेषत्वविवक्षया शेषलक्षणैव षष्ठी, वृत्तौ तु वस्तुमात्रं प्रदर्शि । 'क्रियाविषयौ' इति । 'शयाना भुञ्जते' इति । अत्र शयनं लक्षणं भोजनस्य । 'तिष्ठन्तोऽनुशासति' इति । अत्रापि स्थानमनुशासनस्य । 'अर्जयन् वसति' इति । 'अर्ज प्रतियत्ने' (धा.पा. १७२५) चुरादिराङ्पूर्वः ।

'लक्षणहेत्वोरिति किम्' इति । क्रियासम्बन्धिन्यर्थे वर्तमानाविति विज्ञायमाने लक्षणहेत्वोरपि भविष्यत इति प्रश्नः, प्रतिप्रसङ्गेन तूत्तरम् । 'पचति च पठति च' इति । अत्र द्वयोः क्रिययोरेकस्मिन् साधने समुच्चयात् तद्द्वारेण परस्परसम्बन्धोऽप्यस्तीत्युभयत्रापि प्रसङ्गः । 'यः कम्पते सोऽश्वत्थः' इति । बहुषु वृक्षेषु तिष्ठत्सु कम्पनेनाश्वत्थो लक्ष्यते, तच्च द्रव्यम् । 'यदुत्प्लवते तल्लघु' इति । अत्राप्युत्प्लवनेन लाघवं गुणो लक्ष्यते । निषदनं निमज्जनं तेन गौरवं गुणो लक्ष्यते । इह तु योऽधीयानमास्ते स देवदत्त इति आसिक्रियाया एवाध्ययनक्रियालक्षणम्, न देवदत्तस्य, आसिक्रिया तु तस्य लक्षणम् । एवं यस्तिष्ठन् मूत्रयति स ब्राह्मणब्रुव इति, अत्रापि स्थितिक्रिया मूत्रणक्रियाया एव लक्षणम्, सैव तु देवदत्तस्याशौचावेर्लक्षणं न स्थितिक्रियेति सूत्रेणैव सिद्ध आदेशः । कथं शयाना वर्धते दूर्वा, आसीनं वर्धते विषमिति, न ह्यासनशयने वृद्धेर्लक्षणम्, किं तर्हि ? स्वभावमात्रकथनमेतत्? भवति वै स्वभावाख्यानमपि लक्षणम्, यथा-चैतन्यलक्षणं पुरुष इति । 'पूर्वनिपातव्यभिचारलिङ्गम्' इति । 'द्वन्द्वे घि' (२ २.३२), 'अल्पाच्तरम्' (२.२.३४) इति यो पूर्वनिपातो तयोर्व्यभिचारे लिङ्गमित्यर्थः । तेन धूमाग्नी, मृदङ्गशङ्खपणवा इत्यादिप्रयोगोपपत्तिः ॥

## १२७. तौ सत् ।

तौग्रहणं किमर्थम्, सञ्ज्ञाविधिर्यथा स्यात् सदित्यस्य प्रत्ययस्य विधिर्मा भूदिति ? नैतदस्ति प्रयोजनम्, पूर्वसूत्रे शतृशानचौ स्वरयिष्येते, तयोरनुवृत्तयोः सञ्ज्ञैव भविष्यति, तत्राह—'तौग्रहणमुपाध्यसंसार्गार्थम्' इति । किं सिद्धमित्याह—लट्स्थानिकत्वात् वर्तमानकालविहितत्वं चोपाधिः, तेनोपाधिनाऽसंबन्धार्थः, तौग्रहणमित्यर्थः, 'शतृशानज्मात्रस्य' इति । असति तौग्रहणे यादृशौ शतृशानचौ प्रकृतौ लट्स्थानिकौ वर्तमानकालौ च तादृशयोरेव सञ्ज्ञा स्यात्, ततश्च लृडादेशयोर्न स्यात् । 'लृटस्सद्वा' (३.३.१४) इत्येतत्तु वचनं सत्सञ्ज्ञकप्रतिरूपयोर्विधानार्थं स्यात्, ततश्च यथा-अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति तदाकाराः क्रियन्ते । विहितयोस्तूत्तरकालं सञ्ज्ञा न सिध्यति, ततश्च ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाण इति समासप्रतिषेधो न स्यात्, तस्यां दशायां सत्सञ्ज्ञाया अभावात् । एवं भूतकालयोरपि न स्यात् । 'वर्तमानसामीप्ये वर्तमानवद्वा' (३.३.१३१) इति वचनाद्भूतेऽपि शतृशानचौ भवतः । एवं

तत्रापि वर्तमानवदित्यतिदेशेन विधानमेव तयोर्भूते सिध्यति, न तु सञ्ज्ञा । प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते, न सञ्ज्ञा । 'ननौ पृष्टप्रतिवचने' (३.२.१२०) इत्यपि लटः शतृशानचौ भवत इत्युक्तम्, तयोरपि सञ्ज्ञा न भवेत्, तौग्रहणे सति तयोरपि सञ्ज्ञा भवति--'ननु मां ब्राह्मणस्य कुर्वन्तं पश्य', ननु मां ब्राह्मणस्य कुर्वाणं पश्येति। अथ क्रियमाणेऽपि तौग्रहणे कथमिव कालान्तरविहितयोः सञ्ज्ञा सिध्यति, यावता प्रकृतस्यैव वस्तुनः सर्वनाम्ना परामर्शः ? सत्यम्; तौग्रहणसामर्थ्यात्तु विशेषणांशपरित्यागेन शतृशानचो रूपमात्रं परामृश्यते ॥

## १२८. पूङ्यजोः शानन् ।

इहैते शानन्नादयो यदि लटोऽनुवृत्तिमाश्रित्य तस्यैवादेशाः क्रियरन्, वेति वक्तव्यम्, पवमानः, यजमानः, पवते, यजत इत्यपि यथा स्यात्, वाऽसरूपविधिना तिङो भविष्यन्ति, न लादेशेषु वाऽसरूपविधिरस्तीत्युक्तम्। साधनाभिधानम्--साधनस्य चाभिधानं प्राप्नोति, 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९) इति भावकर्मणोरपि प्रसङ्गः। परः स्वरश्च न सिध्यति--कतीह पवमानाः, 'अदुपदेशाल्लसार्वधातुकम्' (६.१.१८६) इत्यनुदात्तत्वं प्राप्नोति । आत्मनेपदसञ्ज्ञा---'तङानावात्मनेपदम्' (१.४.१००) इत्यात्मनेपदसञ्ज्ञा च प्राप्नोति, ततश्च परस्मैपदिभ्यश्चानश् न स्यात्--कतीह नन्दमानाः । तस्मादलादेशा एवैते लादेशा विज्ञातुमिति मत्वाह--'शानन्प्रत्ययो भवति' इति । शकारः सार्वधातुकसञ्ज्ञार्थः, नकारः स्वरार्थः ।

'यदि' इत्यादि । 'न लोकाव्यय' (२.३.६९) इत्यत्र स्वरूपस्य ग्रहणं मन्यमानस्य प्रश्नः। 'तृन्निति प्रत्याहारानिर्देशात्' इति । षष्ठीप्रतिषेध इत्यनुषङ्गः ।

'द्विषः शतुर्वावचनम्' इति । 'द्विषोऽमित्रे' (३.२.१३१) इति योऽयं शतृप्रत्ययस्तस्य प्रयोगे वा षष्ठी भवति, प्रत्याहारेऽन्तर्भावान्नित्यं प्रतिषेधं प्राप्ते वचनम् । यस्यापि तृन्निति स्वरूपग्रहणं तेनाप्येतद्वक्तव्यम्--पक्षे षष्ठी यथा स्यान्नित्यं मा भूदिति । शेषविज्ञानात् सिद्धम्, कर्मणि शेषत्वेन विवक्षिते षष्ठी, कर्मत्वेन विवक्षिते द्वितीयेति ॥

## १२९. ताच्छील्यवयोवचनशक्तिषु चानश् ।

'मण्डयमाना' इत्यादि । 'मडि भूषायाम्' (धा.पा. १५८७), 'भूष अलङ्कारे' (धा.पा. १७३०) चुरादी, 'असु क्षेपणे' (धा.पा. १२०९), पर्यासः सन्नहनम्, शिखापर्यायः शिखण्डशब्दः । वचनग्रहणं विस्पष्टार्थम् ॥

## १३०. इङ्धार्योः शत्रकृच्छ्रिणि ।

'अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थः' इति । अस्तीति शेषः । 'अत इनिठनौ' (५.२.११५) इतीनिः अपुत्रा भार्याविवत् बहुव्रीहिणैव सिद्धे तत्पुरुषान्मत्वर्थीयः कृतः; लघुत्वं प्रति सर्वत्रानादरात् । इङ आत्मनेपदित्वाद्धारयतेश्च कर्त्रभिप्राये शता न सिध्यति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः ॥

## १३१. द्विषोऽमित्रे ।

असन्देहार्थम् 'मित्रे द्विषः' इति सूत्राभ्यासावकारप्रश्लेषो विज्ञायते इत्याह—'अमित्रः शत्रुः' इति । अमेर्द्विषतीति अच्प्रत्ययः, नपुनरयं नञ्समासः, परवल्लिङ्गप्रसङ्गात् 'लोकाश्रियत्वाल्लिङ्गस्य' (चां.प. ७३) । स्वरे दोषः, चित्स्वरो ह्येष्यते । बह्वृचास्तु मध्योदात्तममित्रशब्दमधीयते—'अमित्रस्य व्यथया मन्युमिन्द्रः' ऋ. ६.२५.२), 'अमैरमित्रमर्दय' (ऋ. ८.७५.१०) । द्विषेः स्वरितत्वात् कर्त्रभिप्राये शता न प्राप्नोतीत्ययमारम्भः ।

## १३२. सुञो यज्ञसंयोगे ।

कर्मसाधनः संयोगशब्द इत्याह—'यज्ञसंयुक्तेऽभिषवे' इति । 'सर्वे सुन्वन्तः' इति । प्रयोगः । तस्य विषयमाह—'सर्वे यजमानाः सत्त्रिण उच्यन्ते' इति । सूत्रेषु हि ये यजमानास्ते ऋत्विज इति सर्वे प्रधानकर्तारः । इह 'सुञो यज्ञे' इत्येव सिद्धम् । यज्ञविषयश्चेत् सुनोत्यर्थो भवतीत्यर्थः । तत्किं संयोगग्रहणेन ? तत्राह—'संयोगग्रहणम्' इति । 'लटः शतृशानचौ' (३.२.१२४) इत्यनेनाप्यप्रधाने कर्तरि न भवति, संयोगग्रहणसामर्थ्यात् प्रधानकर्ता = अधिकारी ॥

## १३३. अर्हः प्रशंसायाम् ।

'अर्हति चौरो वधम्' इति । 'लटः शतृशानचौ' (३.२.१२४) इत्यनेनापि न भवति, प्रथमासमानाधिकरणत्वात् । अस्तु वा 'अदुपदेशाल्लसार्वधातुकम्' (६.१.१८६) इत्यनुवृत्तः ॥

## १३४. आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।

'तत्' इत्यादि । 'धातोः' इति वर्तते । धातुश्च शब्दः, न तस्य शीलादिं प्रति विशेषणत्वमुपपद्यते, तस्मात् तस्य योऽर्थः स शीलादीनां त्रयाणां विशेषणत्वेन त्रिभिस्तच्छब्दैर्निर्दिश्यते । तत्र धात्वर्थं शीलं यस्य स धात्वर्थो धर्मो यस्य तस्य धात्वर्थस्य साधुकारीत्येवमित्यर्थः ।

'तद्धर्मा तदाचारः' इति । धर्मशब्दस्याचारे प्रसिद्धत्वात् । 'विनापि शीलेन' इति । तच्छीलाद्भेदं दर्शयति—'यो धात्वर्थं साधु करोति' इति । विनापि शीलेनेत्यनुषङ्गः ॥

## १३५. तृन् ।

'मुण्डयितारः' इति । श्राविष्ठायनानां गोत्रविशेषणामेव कुलधर्मः । 'अपहर्तारः' इति । मह्वरदेशे भवाः माह्वरकाः, 'रोपधेतोः प्राचाम्' (४.२.१२३) इति । वुञ्, तेषामेव देशधर्मः । श्राद्धे सिद्धे । निर्वृत्ते । 'उन्नेतारः' इति । अयमपि कुलधर्मः ।

'तृन्विधौ' इति। अताच्छील्याद्यर्थ आरम्भः। 'तृजेव भवति' इति। तृन्तृचौ 'शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इत्यनेन। 'स्वरे विशेषः' इति। तृनि 'तादौ च निति कृत्यतौ' (६.२.५०) इति गतेः प्रकृतिस्वरः स्यात्, तृचि तु कृत्स्वरो भवति। 'तृन्तृचौ' इत्यस्यैव विषयव्यवस्थार्थमिदम्। अनुपसर्गेभ्यस्तृन्, सोपसर्गेभ्यस्तृजिति प्रपञ्चार्थं वा, तथा च प्रशास्तेति तृच्यपीण्नास्ति।

'नयतेः षुक् च' इति। गुणो कृते षुग्वेवितव्यः, प्रकृत्यन्तरं वा; नेषति (ऋ. ५.४६.१), नेषतु, नेषिषेति दर्शनात्।

'अनिट्त्वं च' इति। त्रिपः स्वत एवानिट्त्वादुत्तरत्र वक्ष्यमाणतृचोऽसंख्यानशेषभूतमिदम्। तेन पोता, क्षत्तेत्यनिट्त्वं भवति।

'क्षदे' इति। धातुष्वपठितोऽपि क्षदिरस्मादेव वचनादभ्युपगम्यते, आत्मनेपदी चायम्। 'उक्षाणं वा वेहतं वा क्षदन्तः' (ऐ.३.४.१५) इति बह्वृचब्राह्मणप्रयोगात्। 'क्वचिदधिकृतः' इति। द्वाररक्षणे, रथप्राजने च॥

## १३६. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।

कृञिति करोतेर्ग्रहणम्, प्रसिद्धेः, न हिंसार्थस्य। 'जनी प्रादुर्भावे' (धा. पा. ११४९), 'डु पचष् पाके' (धा. पा. ९९६), 'पचि व्यक्तीकरणे' (धा.पा. १७४) इत्यस्येदित्त्वान्नुमा भाव्यमिति नायं निर्देशः सम्भवति। 'शल हुल पत्लृ गतौ' (धा. पा. ८४३-४५), 'उत्पतिष्णु सहिष्णु च चेरतुः खरदूषणौ' (भ. ५.१) इति भट्टिकाव्ये प्रयोगः। 'पद गतौ' (धा. प. १८९८) इत्यन्ये पठन्ति। 'मदी हर्षे' (धा. पा. ८१५), 'मद तृप्तियोगे' (धा. पा. १७०५) इत्ययं तु चुरादिः, तस्य 'उन्मद' इति निर्देशो न सम्भवति। 'रुच दीप्तौ' (धा. पा. ७४५), 'त्रपूष् लज्जायाम्' (धा. पा. ३७४), 'वृतु वर्तने' (धा. पा. ७५८), वृधु वृद्धौ (धा. पा. ७५९), 'षह मर्षणे' (धा. पा. ८५२) 'चर गत्यर्थः' (धा. पा. ५५९)। येऽत्र सोपपदा उपात्तास्तत्रोपात्तादेव रूपाद्भवति, तत एतन्न नोदनीयम्—'उदः पचपतमद' इति वक्तव्यम्, किं स्वरूपतः? प्रत्येकमुत्पूर्वपाठेनेति तेन समुत्पतिष्णुरिति न भवतीत्याहुः। ये तु निरुपपदा उपात्तास्तेभ्यो यथादर्शनं भवति॥

## १३७. णेश्छन्दसि।

'पारयिष्णवः' इति। 'अयामन्ताल्वाय्येत्न्विष्णुषु' (६.४.५५) इत्ययादेशः॥

## १३८. भुवश्च।

'छन्दसीत्युच्यते'। तत्कथम्—'जगत्प्रभोरप्रभविष्णु वैष्णवम्' 'विष्णवे प्रभविष्णवे' इति? निरङ्कुशाः कवयः। 'भ्राजिष्णुना' इति। नैतद्भाष्ये समाश्रितम्॥

## १३९. ग्लाजिस्थश्च क्स्नुः ।

'चर्त्वभूतः' इति । चर्त्वं प्राप्तः, चर्त्वेन वा प्राप्तः इत्यर्थः । 'श्र्युकः कितीत्यत्रापि' इति । गकारोऽपि चर्त्वभूतो निर्दिश्यत इत्यनुषङ्गः ।

'क्स्नोर्गित्त्वान्न स्थ ईकारः' स्थास्नुरित्यत्र ईकारो न भवति, क्स्नोर्गित्त्वात् । कङितोरीत्वशासनात् । ककारेऽकार उच्चारणार्थः । क्ङितोर्हीत्वमुच्यते अयं तु गित् । यद्येवं जिष्णुर्भूष्णुरित्यत्र गुणः प्राप्नोति ?—गुणाभावस्त्रिषु स्मार्यः । गित् कित् ङिदिति त्रिषु गुणाभावः स्मर्तव्य; क्ङिति च' (१.१.५) इत्यत्र गकारप्रश्लेषात् । इह तर्हि भूष्णुरिति 'श्र्युकः किति' (७.२.११) इति इट्प्रतिषेधो न प्राप्नोति ?—'श्र्युकोऽनिट्त्वं गकोरितोः' । श्र्युकः परस्य यदनिट्त्वं तद् गकारककारयोर्द्वयोरपीतोर्भवति, न केवलं ककारे; तत्रापि गकारस्य चर्त्वभूतस्य निर्देशात् । यद्येवम्, चर्त्वस्यासिद्धत्वात् 'हशि च' (६.१.११४) इत्युत्वं प्राप्नोति ? सौत्रो निर्देशः, असंहितया वा निर्देशः करिष्यते छन्दसि । 'दंक्ष्णवः पशवः' इति । क्स्नोर्गित्त्वादुपधालोपाभावः ॥

## १४०. त्रसिगृधिधृषिक्षिपेः क्नुः ।

'त्रस्नुः' इति । 'नेड्वशि कृति' (७.२.८) इतीट्प्रतिषेधः ॥

## १४१. शमित्यष्टाभ्यो घिनुण् ।

'इतिशब्द आद्यर्थे' इति । अनेकार्थत्वान्निपातानाम् । तत्र 'शम्' इति आदिर्येषामिति बहुव्रीहौ सुपो लुक्, 'शमु उपशमे' (धा.पा. १२०१), 'तमु काङ्क्षायाम्' (धा.पा. १२०२), 'दमु उपशमने' (धा.पा.-१२०३), 'श्रमु तपसि खेदे च' (धा.पा. १२०४), 'भ्रमु अनवस्थाने' (धा.पा. १२०५), 'क्षमूष् सहने' (धा.पा. १२०६), 'क्लमु ग्लानौ' (धा.पा. १२०७) 'मदी हर्षे' (धा.पा. १२०८) । 'उकार उच्चारणार्थः' इति । नानुबन्धः, अनुबन्धे हि सति शमिनौ, शमिन इत्यत्र 'उगिदचाम्' (७.१ ७०) इति नुम् प्रसज्येत; शमिनितरा, शमिनितमेत्यत्र 'नद्याः शेषस्यान्यतरस्याम्' (६.३.४४), 'उगितश्च' ४.१.६) इत्यन्यतरस्यां ह्रस्वः स्यात् । 'घरूपकल्पचेलड्' (६.३.४३) इति नित्यमिष्यते, तस्मान्नायमनुबन्धः, किं तूच्चारणार्थं इति व्याचक्षते । भाष्ये तु 'अकार उगित्कार्यार्थे अनुबन्धः एव' इति स्थितम् । तत्र ह्रस्वत्वं विकल्पेनेष्यते, न नित्यम् । नुम्विधौ तु झल्ग्रहणमनुवर्तिष्यते, अझलन्तत्वान्न भविष्यति । 'शमि' इति । 'नोदात्तस्य' (७.३.३४) इति वृद्धिप्रतिषेधः । 'उन्मादि' इति । ननु मादीत्यत्र चरितार्थमेतत् । उत्पूर्वात्स्वकुमालंविसूत्रेण (३.२.१३६) विशेषविहित इष्णुजेव प्राप्नोति, वाऽसरूपविधिना घिनुण् भविष्यति, ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीत्येतत्तु प्रायिकमिति वक्ष्यते । 'असिता' इति । 'असु क्षेपणे' (धा.पा. १२०९) तृजेव भवति ॥

## १४२. सम्पृचानुरुधाङ्यमाङ्यस परिसृ संसृज परिदेवि संज्वर परिक्षिप परिरट परिवद परिदहपरिमुहदुषद्विष द्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरमुषाभ्याहनश्च।

'पृची संपर्के' (धा.पा. १४६२), 'रुधिर् आवरणे' (धा.पा. १४३८), 'अनो रुध कामे' (धा.पा. ११७४) इत्यस्य तु दैवादिकस्याग्रहणम्; पृचिना साचर्यात्। अनुना सह पठितस्य दैवादिकस्य ग्रहणमित्यन्ये। 'यम उपरमे' (धा.पा. ९८४) 'यसु प्रयत्ने' (धा.पा. १२१०) 'सृ गतौ' (धा.पा. ९३५), 'सृज विसर्गे' (धा.पा. ११७८), 'देवृ देवने' (धा.पा. ५००), 'ज्वर रोगे' (धा.पा. ७७६), 'क्षिप प्रेरणे' (धा.पा. १२८५) 'रट परिभाषणे' (धा.पा. २९७), 'वद व्यक्तायां वाचि' (धा.पा. १००९), 'दह भस्मीकरणे' (धा.पा. ९९१), 'मुह वैचित्त्ये' (धा.पा. ११९८), 'दुष वैकृते' (धा.पा. ११८५) 'द्विष अप्रीतौ' (धा.पा १०१३), 'द्रुह जिघांसायाम्' (धा.पा. ११९७), 'दुह प्रपूरणे' (धा.पा. १०१४), 'युजिर् योगे' (धा.पा. १४४४), 'क्रीड विहारे' (धा.पा. ३५०), 'विचिर् पृथग्भावे' (धा.पा. १४४२), 'त्यज हानौ' (धा.पा. ९८६), 'रञ्ज रागे' (धा.पा. ११६७) 'भज सेवायाम्' (धा.पा. ९९८) 'चर गत्यर्थः' (धा.पा. ५५९), 'मुष स्तेये' (धा.पा. १५३०), 'हन हिंसागत्योः' (धा.पा. १०१२), [1]'परिदेविर्भूवादिः' इति। 'गृह्यते' इति सम्बन्धः। क्रीडार्थस्य तु ण्यन्तस्याग्रहणम्, अण्यन्तैः साहचर्यात्, प्रतिपदोक्तत्वाच्च। अत एव 'दिवु परिकूजने (धा.पा. १७०६) इत्यस्य चौरादिकस्यापि न भवति। 'सम्पर्कः' इति। 'चजोः कु घिण्ण्यतोः। (७.३.५२) इति कुत्वम्। येऽत्र सम्पूर्वाः तेषां द्वन्द्वं कृत्वा 'सम एतेभ्यः' इति वक्तव्यम्, एवमाङ्पूर्वेषु परिपूर्वेषु च, एवं सिद्धे यत्प्रतिपदं पठति तस्यैतत्प्रयोजनम्--उपात्तादेव रूपाद्यथा स्यात्, उपसर्गान्तिरयुक्तान्मा भूदिति॥

## १४३. वौ कषलसकत्थस्रम्भः।

## १४४. अपे च लषः।

## १४५. प्रे लपसृद्रुमथवदवसः।

'रप लप व्यक्तायां वाचि' (धा.पा. ४०१-४०२), 'सृगतौ' (धा.पा. ९३५) 'द्रु गतौ' (धा.पा. ९४५), 'मथे विलोडने (धा.पा. ८४८)॥

## १४६. निन्द हिंस क्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्।

'णिदि कुत्सायाम्' (धा.पा. ६६) 'तृहहिंसि हिंसायाम्' (धा.पा. १४५५-५६), 'क्लिश विबाधने' (धा.पा. १५२२), 'खादृ भक्षणे' (धा.पा. ४९), 'णश अदर्शने' (धा.पा. ११९४) ण्यन्तः। भाविना णिलोपेन निर्देशः। अकारस्त्वागन्तुकः। केचित्तु 'विनाशि' इति ण्यन्तमेव पठन्ति। 'क्षिपिरटी' उक्तार्थौ, 'भाष व्यक्तायां वाचि' (धा.पा. ६१२), असूयतिः कण्ड्वादियगन्तः।

1. परिदेविर्भ्वादिः—काशिका, न्यासश्च.

अथ किमर्थं निन्दादिभ्यो वुञ् विधीयते, न 'ण्वुल्तृचौ' (३.१.१३३) इति ण्वुलेव सिद्धम्, तदेव रूपम्, स्वरोऽप्यसूयतिमेकं वर्जयित्वाऽन्यत्र स एव; असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं स्यात्, वुञि तु 'ञ्नित्यादिः' (६.१.१९७) इति। तस्मादेवैकस्माद् वुञ् विधेयः, अन्येभ्यस्तु ण्वुलेव सिद्धम्, योऽयं तच्छीलादिषु तृन् विधीयते स बाधकः प्राप्नोति, वाऽसरूपविधिना ण्वुलपि भविष्यति, तत्राह—'ण्वुलेव सिद्धे' इति। 'तृजादयो न भवन्ति' इति। न केवलं ण्वुलविषयमेव ज्ञापकम्, किं तर्हि ? प्रत्ययमात्रविषयमित्यर्थः ॥

## १४७. देवक्रुशोश्चोपसर्गे ।

'देवयतेः' इति। दीव्यतेर्हेतुमण्णिजन्तस्य, 'दिवि कूजने' (धा.पा. १७०६) इत्यस्य चुरादिण्यन्तस्य च ॥

## १४८. चलनशब्दार्थादकर्मकाद्युच् ।

'चोपनः' इति। 'चुप मन्दायां गतौ' (धा.पा. ४०३) 'शब्दनः' इति। 'शब्द शब्दने' (धा.पा.-१७१४) चुरादिः, शब्दप्रातिपदिकाद्वा 'तत्करोति' (वा. २००) इति णिच् ॥

## १४९. अनुदात्तेतश्च हलादेः ।

'जुगुप्सनः' इति। 'गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्' इत्युक्तत्वात् 'अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' (है.प. १०७) इति समुदायस्यानुदात्तेत्त्वम्। तत्रासत्यादि ग्रहणे तदन्तविधिः स्यात्, ततश्चात्र न स्यात्, अतस्तदन्तविधिर्मा भूदित्येवमर्थमादिग्रहणम् ॥

## १५०. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ।

'जु' इति सौत्रो धातुः। गतिवचन इत्येके। वेगवचन इत्यन्ये। 'क्रमु पादविक्षेपे' (धा.पा. ४७३), 'द्रम हम्म मीमृ गतौ' (धा.पा. ४६६–४६८), 'सृ गतौ' (धा.पा. ९३५), 'गृधु अभिकाङ्क्षायाम्' (धा.पा.-१२४६) 'ज्वल दीप्तौ' (धा.पा. ८०४), 'शुच शोके' (धा.पा. १८३), 'लष इच्छायाम्' (धा.पा. ८८८), 'शल हुल पत्लृ गतौ' (धा.पा. ८४३–४५), 'पद गतौ' (धा.पा. ११६९)।

ननु चात्र चङ्क्रम्यप्रभृतयः केचिच्चलनार्थाः, पदिस्त्वनुदात्तेत्, तेभ्यो यथायोगं पूर्वसूत्राभ्यामेव युच् सिद्धः, किमर्थमिह ग्रहणमित्याह—'चलनार्थानाम्' इत्यादि। प्रपूर्वः पदिः सकर्मकः। 'ज्ञापकार्थम्' इति। ज्ञापनं ज्ञापकम्। भाष्यकारप्रयोगाद्भावे ण्वुल्। 'अन्ये पदिग्रहणं वर्णयन्ति' इति। भाष्यकारादयः। ते हि मन्यन्ते सकर्मकात्पदेर्युचा न भवितव्यम्; अनभिधानादिति। यथाह—"पदिग्रहणमनर्थकम्, 'अनुदात्तेतश्च हलादेः' (३.२.१४९) इति सिद्धत्वात्।" वासरूपनिवृत्त्यर्थं त्विति। 'ताच्छीलिके वाऽसरूपविधिर्नास्ति' (व्या.प. ३१) इति निन्दादिसूत्रे तच्छीलादिषु कर्तृषु वाऽसरूपविधिना तृजादयो न भवन्तीति ज्ञापितम्। इह तु ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नास्तीति ज्ञाप्यते। 'अलङ्कर्ता' इति। एवमलङ्कृञादेस्तृन्स

भवतीत्यर्थः। यथा तु पविग्रहणं ज्ञापकं तथा दर्शयति-'तथा हि' इति। 'उकञा विशेषविहितेन' इति। 'लषपतपद' (३.२.१५४) इत्यादिना। 'प्रायिकं चैतत्' इति। एतच्च 'सूददीपदीक्षश्च' (३.२.१५३) इत्यत्र वक्ष्यते। 'गन्ता' इति। गमेर्लषपतपदाद्युकञ्विषये तृन् भवति। 'विकत्थनः' इति। 'वौ कषलष' (३.२.१४३) इति घिनुण्विषयेऽनुदात्तेल्लक्षणो युज् भवति॥

## १५१. क्रुधमण्डार्थेभ्यश्च।

## १५२. न यः।

'अय वय नय वय गतौ' (धा.पा. ४७४,४७५,४८०,४७९) इति नयतेरनुदात्तेत्त्वादेव युचः सिद्धत्वान्न तस्यैवं ग्रहणम्; किं तर्हि? प्रतिषेध एवेति मत्वाऽऽह-'यकारान्तात्' इति। 'पूर्वेण' इति। 'अनुदात्तेतश्च' (३.२.१४९) इत्यादिना। 'क्नूयिता, क्ष्मायिता' इति। 'क्नूयी शब्दे' (धा.पा. ४८५), 'क्ष्मायी विधूनने' (धा.पा. ४८६)॥

## १५३. सूददीपदीक्षश्च।

'षूद क्षरणे' (धा.पा. २५), 'दीपी दीप्तौ' (धा.पा. ११५०), 'दीक्ष मौण्ड्ये' (धा.पा. ६०९)। ननु 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति' (व्या.प. ३१) इति ज्ञापितम्, तत्कथं वाऽसरूपेण युजिह प्राप्नोति? तत्राह-'ताच्छीलिकेषु' इति। प्रायिकत्वस्य चायमेव प्रतिषेधो लिङ्गम्, सर्वत्र वाऽसरूपविधेरभावे विशेषविहितेन रप्रत्ययेन बाधितत्वादेव युज् न भविष्यतीति प्रतिषेधोऽयमनर्थकः स्यात्। 'तथा च' इत्यादिना प्रायिकत्वस्य प्रयोजनं दर्शयति। नानेन प्रतिषेधेन युज्रयोरेव समावेशो ज्ञाप्यते, यथा भाष्ये प्रतिभासः, किं तर्हि? ज्ञापकस्यैव प्रायिकत्वम्। तेन 'गन्ता खेटं विकत्थनः' इत्यपि भवति। एतच्च पूर्वमेवोक्तम्।

'अथ वा नन्द्यादिषु' इति। योगविभागस्त्विदानीं वैचित्र्यार्थः॥

## १५४. लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्।

'अपलाषुकम्' इति। अशोभनमित्यर्थः। नन्वत्र विशेषविहितत्वात् 'अपे च लषः' (३.२.१४४) इति घिनुणा भाव्यम्, अयं तु केवलेऽन्योपसर्गपूर्वे च लषौ चरितार्थः, वाऽसरूपविधिनोकञ् भविष्यति? 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति' (व्या.प. ३१) इत्येतत्तु प्रायिकमित्युक्तम्। 'आघातुकं पाकलिकस्य मूत्रम्' इति। पाकलो नाम गजानां व्याधिविशेषः, स यस्यास्ति स पाकलिकः, 'द्वन्द्वोपतापगर्ह्यात्' (५.२.१२८) इतीनिरेव प्राप्नोति, व्रीह्यादिपाठात्तु भवति। पाकलिको गजस्तस्य मूत्रं स्पृष्टमाघ्रातं वाऽन्यान् गजान् हन्ति, एष तस्य स्वभावः। 'आगामुकं वाराणसीं रक्ष आहुः' इति। यः शापादिना रक्षोभूतः तं मोक्षार्थं वाराणसीं प्रत्यागमनशीलमाहुरित्यर्थः॥

## १५५. जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।

'जल्प जप व्यक्तायां वाचि' (धा.पा. ३९८, ३९७), 'भिक्ष याच्ञायाम्' (धा.पा. ६०६), 'कुट्ट छेदने' (धा.पा. १५५८), 'लुण्ठ स्तेये' (धा.पा. १५५३)—चौरादिकौ । वृङ सम्भक्तौ' (धा.पा. १५०९) ॥

## १५६. प्रजोरिनिः ।

इनेरिकारो नकारस्येत्सञ्ज्ञा मा भूदिति ॥

## १५७. जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।

'जि जये' (धा.पा. ५६१), 'जि अभिभवे' (धा.पा. ९४६), द्वयोरपि ग्रहणम्, 'दृङ आदरे' (धा.पा. १४११), 'श्रीञ् सेवायाम्' (धा.पा. ८९७), 'इण् गतौ' (धा.पा. १०४५), 'टुवम् उद्गमने' (धा.पा. ८४९), 'व्यथ भयचलनयोः' (धा.पा. ७६४) नञ्पूर्वः, नञः कृतलोपस्य निर्देशः, निपातनाच्च नञो धातुना समासः, ततो वलोपः, ततः प्रत्ययः । 'अम रोगे' (धा.पा. ४६५), 'भू सत्तायाम्' (धा.पा. १) । 'द्वयोरपि ग्रहणम्' इति । 'क्षिप् हिंसायाम्' (धा.पा. १५०६) इत्यस्य तु सानुबन्धकत्वादग्रहणम् । 'षू प्रेरणे इत्यस्य ग्रहणम्' इति । 'षूङ प्राणिगर्भविमोचने' (धा.पा. १०३१), 'षूङ प्राणिप्रसवे' (धा.पा. ११३२) इत्येतयोस्तु सानुबन्धकत्वादग्रहणम् । प्रजोरप्यत्रैव ग्रहणं कर्तव्यम्, एवं हि चकारो न वक्तव्यो भवति ? तथा तु न कृतमित्येव ॥

## १५८. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यः आलुच् ।

'चुरादावदन्ताः पठ्यन्ते' इति । तेन णौ कृतस्यातो लोपस्य स्थानिवद्भावात्पतयतेः 'अत उपधायाः' (७.२.११६) इति वृद्धिर्न भवति, स्पृहयतिगृहयत्योश्च लघूपधगुणो न भवतीति भावः । श्रत्पूर्वो धाञ्' इति । धेटस्तु श्रत्पूर्वस्याप्रयोग एव । अथ किमर्थमालुज् विधीयते, न लुजेवोच्येत ? का रूपसिद्धिः ? 'स्पृहयालुः,' शपि कृते 'अतो दीर्घो यञि' (७.३.१०१) इति दीर्घो भविष्यति ? तत्र हि 'तुरुस्तुशम्यमः सार्वधातुके' (७.३.९५) इति सार्वधातुकग्रहणमनुवर्तते, न तु तिङ्ग्रहणम्, लकारस्येत्सञ्ज्ञाप्रयोजनाभावश्च भविष्यति, यकारादित्वाद्वा । किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो यकारः, एवमपि श्रद्धालुर्न सिध्यति, कथम् ? शपः श्लुर्द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' (६.४.११२), श्रद्दध्लुरिति प्राप्नोति ? अथापि 'सञ्ज्ञापूर्वको विधिरनित्यः' (व्या.प. ६४) इति द्विर्वचनं न प्रवर्तिष्यत इत्युच्येत ? एवमपि ज्ञापनार्थमालुज् विधीयते, एतज्ज्ञापयति—यथा-लुचैव रूपसिद्धिस्ततोऽप्ययं भवतीति । तेनालुचि शीङो ग्रहणमित्येतच्च वक्तव्यं भवति ॥

## १५९. दाधेट्सिशदसदो रुः ।

'गामादाग्रहणेष्वविशेषः' इति दारूपाणां यथाभिधानं ग्रहणम् । 'धेट् पाने' (धा.पा. ९०२), 'षिञ् बन्धने' (धा.पा. १२४८), 'शद्लृ शातने' (धा.पा. १४२८), 'षद्लृ विशरणगत्यवसादनेषु' (धा.पा. १४२७) ॥

## १६०. सृघस्यदः क्मरच् ।

घसिः प्रकृत्यन्तरमस्ति ॥

## १६१. भञ्जभासमिदो घुरच् ।

'भञ्जो आमर्दने' (धा.पा. १४५३), 'भासृ दीप्तौ' (धा.पा. ६२४), 'ञिमिदा स्नेहने' (धा.पा. ७४३) ॥

## १६२. विदिभिदिच्छिदेः कुरच् ।

'न लाभार्थस्य' इति । ज्ञानार्थस्यैवमुपलक्षणं न लाभार्थस्येत्यर्थः । कुत इत्याह–'स्वभावात्' इति । तेन 'लुग्विकरणालुग्विकरणयोः' (व्या.म. ५०) इत्येतदपि न प्रवर्तत इत्यर्थः । 'विदिभिदिच्छिदेर्ङित्' इति प्रकृतस्यैव घुरचो ङित्त्वादतिदेशेनैव सिद्धे 'प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यम्' (व्या.प. ९५) इति ज्ञापनार्थम् । तेन 'धू विधूनने' (धा.पा. १३९८) कुटादिः, ततः 'अर्तिलूधू' (३.२.१८४) इतीत्रप्रत्यये कृते ङित्कार्यं न भवति । केचित्तु 'धुवित्रम्' इत्येवेच्छन्ति, 'प्राणा वै धुवित्राणि' इति छान्दसं तदनुसारेण कल्पसूत्रेषु प्रयोगः । 'कर्मकर्तरि' इति । माघस्तु शुद्धे कर्तरि प्रयुङ्क्ते–'गुरुमत्सरच्छिदुरया दुरयाचितमङ्गना' इति ॥

## १६३. इण्नशजिसर्तिभ्यः क्वरप् ।

क्वरपः पकारः स्वरार्थः, तुगर्थश्च । 'इत्वरी' इति । 'टिड्ढाणञ्' (४.१.१५) इत्यादिना ङीप् ॥

## १६४. गत्वरश्च ।

## १६५. जागरूकः ।

## १६६. यजजपदशां यङः ।

दंशेर्भाविना नलोपेन निर्देशः । 'यायजूकः' इति । 'दीर्घोऽकितः' (७.४.८३) इत्यभ्यासस्य दीर्घत्वम् । 'जञ्जपूकः, दन्दशूकः' इति । 'जपजभदहदश' (७.४.८६) इति नुक् ॥

## १६७. नमिकम्पिस्म्यजसकमहिंसदीपो रः ।

अजसेत्यकार आगन्तुकः । 'क्रियासातत्ये' इति । क्रियाणामविच्छेदेन प्रवृत्तिः = क्रियासातत्यम् । कथं तर्हि अनित्येषु प्रयोगः—'अजस्रानजुहूत इन्धीरन्' इति, आधानात् द्वादशरात्रमजस्रा इति ? अत्राप्यजस्रजागरणा-दजस्राः ॥

## १६८. सनाशंसभिक्ष उः ।

'न सनिर्धातुः' इति । 'षणु दाने' (धा.पा. १४६४), 'वन षण संभक्तौ' (धा.पा. ४६३.४६४) इति च धातुर्न गृह्यते, कुतः ? गर्गादिषु विजिगीषुशब्दस्य पाठात् । 'न शंसेः स्तुत्यर्थस्य' इति । एतदाङा सह निर्देशाद्विज्ञायते—इच्छार्थो हि स तेन सह पठ्यते, न स्तुत्यर्थः ॥

## १६९. विन्दुरिच्छुः ।

'विदेः' इति । ज्ञानार्थस्य ग्रहणं नेतरेषाम्, अनभिधानात्, निपातनाद्वा । बिन्दुशब्दस्तु पवर्गादिः, 'बिदि अवयवे' (धा.पा. ६४) इत्यस्मादौणादिके 'मृगय्वादयश्च' (द.उ. १.१२१) इत्युप्रत्यये भवति । बकारस्य छन्दसि पक्षे भकार इष्यते—'वैश्वदेवा भिन्दवः' इति । 'इषेः' इति । 'इषु इच्छायाम्' (धा.पा.-१३५१) इत्यस्य । 'इषु गतौ' (धा पा. ११२७), 'इष आभीक्ष्ण्ये' (धा.पा. १५२५) इत्येतयोस्तु पूर्ववदग्रहणम् ॥

## १७०. क्याच्छन्दसि ।

'क्य' इति क्यच्क्यष्क्यङां सामान्येन निर्देशः' इति । सूत्रे वृत्तौ च ककारानुबन्धवतो धातुसञ्ज्ञानि-मित्तस्य प्रत्ययस्योपलक्षणात् कण्ड्वादियकोऽपि ग्रहणम्, तेन 'भुरण्युः' (ऋ. १ ६८.१) 'तुरण्यवोऽङ्गिरसो नक्षन्त (ऋ. ७.५२.३) 'सपर्येम सपर्यवः' (ऋ. २.६.३) इत्यादि भवति । भाषायां च सुम्नयुशब्द उणादिषु मृगय्वादिषु पाठात् द्रष्टव्यः । 'मित्रयुः' इति । 'क्यचि च' (७.४.३३) इतीत्वम्, 'अकृत्सार्वधातु-कयोः' (७ ४.२५) इति दीर्घत्वं च न भवति । 'न छन्दस्यपुत्रस्य' (७.४.३५) इति निषेधात् ॥

## १७१. आदृगमहनजनः किकिनौ लिट् च ।

किकिनौ लिट् चापरार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, गौर्वाहीक इतिवदित्याह—'लिड्वच्च तौ भवतः' इति । किकिनौ भवतः, लिट् च प्रत्ययो भवतीत्ययं त्वर्थो न भवति; तथा हि सति 'लिट् किकिनः' इत्येव ब्रूयात् । कार्यातिदेशश्चायम् । यद्येवम्, लः परस्मैपद(१.४.९९)सञ्ज्ञा किकिनोः स्यात्, ततश्च वेङवृङादिभ्य आत्मनेपदिभ्यो न स्याताम् । न लकारस्य परस्मैपदसञ्ज्ञा, किं तर्हि ? तदादेशानाम्,

न चैतावादेशौ। एवमपि भावकर्मकर्तृषु त्रिष्वपि लिडवद्भावात् किकिनौ प्राप्नुतः? नैष दोषः; उत्पन्नयोर्लिट्कार्यमतिदेश्यम्। उत्पत्तिश्च तयोः कर्तर्येव भवति; 'कर्तरि कृत्' (३.४.६७) इत्यनेनास्यैकवाक्यत्वात्। अनभिधानाद्वा भावकर्मणोर्न भविष्यतः। वर्तमानाधिकाराच्च वर्तमाने किकिनोर्विधानमिति भूतकालतार्थविरोधान्नातिदिश्यते। स्वरूपाबाधेन च कार्यातिदेशः प्रवर्तते इति तिबादीनां कानच्क्वस्वोश्चाभावः। 'आदिति दकारो मुखसुखार्थः' इति। आदित्ययं दकारः, स च मुखसुखार्थ इत्यर्थः। 'न त्वयं तपरः' इति। तश्चासौ परश्च तपरो नायमकारात् परस्तकारो जश्त्वेन निर्दिष्ट इत्यर्थः। किं कारणमित्याह—'मा भूत्' इति। 'तकारो मुखसुखार्थः' इति पाठे तु आदित्ययं तकारः, स मुखसुखार्थः, न तु तपरकार्यसंपादनार्थं इत्यर्थः। 'पपिः सोमम्' इति। 'न लोकाव्यय' (२.३.६९) इति षष्ठीप्रतिषेधो लिटः कार्यमिति सोमशब्दात् द्वितीया। 'ततुरिः' इति। 'बहुलं छन्दसि' (७.१.१०३) इत्युत्वम्। 'द्विर्वचनेऽचि' (१.१.५९) इति स्थानिवद्भावात् 'तृ' इत्येतद् द्विरुच्यते। 'जज्ञिः' इति। 'गमहन' (६.४.९८) इत्युपधालोपः, चुत्वम्।

'तद्बाधनार्थं कित्त्वम्' इति। अतॄर्ऋकारान्तानां च किकिनोर्गुणो मा भूदित्येवमर्थमित्यर्थः।

'उत्सर्गः' इति। धातुमात्राद्विधानं कर्तव्यमित्यर्थः। कस्मादित्यत्राह—'सदादिभ्यो दर्शनात्' इति। 'सेदिः, नेमिः' इति। सदेर्नमेश्चैत्वाभ्यासलोपौ।

'सहिवहि' इत्यादि। अत्र भाषायामित्यपेक्ष्यते। 'पापतिः' इति। 'नीग्वञ्चु' (७.४.८४) इत्यादिना नीगागमः प्राप्तः 'सासहिवावहिचाचलिपापतीनां निपातनम्' (कात्या. २१४४) इति वार्तिककारवचनान्न भवति। इदं तु वृत्तौ पठितं वाक्यम्। अपर आहेति भाष्ये पठितम् तत्रापि भाष्यकारवचनान्नीगभावः। उक्तं हि तेन- तान्येवोदाहरणानीति॥

## १७२. स्वपितृषोर्नजिङ्।

## १७३. शॄवन्द्योरारुः।

## १७४. भियः क्रुक्लुकनौ।

## १७५. स्थेशभासपिसकसो वरच्।

'ईश्वरः' इति। 'नेड्वशि कृति' (७.२.८) इतीट्प्रतिषेधः। स्त्रियाम् 'ईश्वरा'। 'विन्यस्तमङ्गलमहौषधिमीश्वरायाः' 'ईश्वरीं सर्वभूतानाम्' (ऋ.खि. २.६.९) इति तु छान्दसः। औणादिको वरडित्यन्ये। 'पुंयोगादाख्यायाम्' (४.१.४८) इत्यन्ये। 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति क्वनिपि 'वनो र च' (४.१.७) इति ङीब्रावित्यन्ये॥

## १७६. यश्च यङः ।

'यायावरः' इति । पूर्ववदिटि प्रतिषिद्धे 'अतो लोपः' (६.४.४८), 'लोपो व्योर्वलि' (६.१.६६) अल्लोपस्य स्थानिवत्त्वादाल्लोपः प्राप्तो वरे कृतस्य स्थानिवत्त्वनिषेधान्न भवति ॥

## १७७. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।

'भ्राजृ दीप्तौ' (धा.पा.१८१) 'भासृ दीप्तौ' (धा.प. ६२४) 'तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम्' (५७०-५७३) 'द्युत दीप्तौ' (धा. पा. ७४१), 'ऊर्ज बलप्राणनयोः' (धा.पा. १५४९), 'पॄ पालनपूरणयोः' (धा.पा. १०८६) 'जु' इति सौत्रो धातुः, 'ष्टुञ् स्तुतौ' (धा.पा. १०४३) ग्रावपूर्वः ।

'जवतेर्दीर्घत्वं च' इति । केचिदाहुः--सूत्रे 'जू' इति दीर्घः पठितव्य इति । विध्यन्तरोपसंग्रहार्थं दृशिग्रहणमुत्तरसूत्रादपकृष्टव्यमित्यन्ये । 'ग्रावस्तुत्' इति । ग्रावशब्दः सप्तमीनिर्देशाभावेऽप्युपपदसञ्ज्ञ इष्यते । अन्ये तु सूत्रनिर्देशाद्धातुनैव समासे पश्चात् क्विपं कुर्वन्ति ॥

## १७८. अन्येभ्योऽपि दृश्यते ।

'विध्यन्तरोपसङ्ग्रहार्थम्' इति । दृशिग्रहणे सति यथा क्विबन्ता धातवो दृश्यन्ते, तथैव तेऽनुगन्तव्या इत्यर्थो भवति । एवं च ते तथानुगता भवन्ति यदि यथायोगं द्विर्वचनादयो भवन्ति । विध्यन्तरमेव दर्शयति— 'क्वचित्' इति । 'तथा चाह' इति । वार्तिककारः । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । 'दिद्युत्' इति । 'द्युतिस्वाप्योः संप्रसारणम्' (७.४.६७) इत्यभ्यासस्य संप्रसारणम् । कथं पुनरभ्याससञ्ज्ञा, यावता प्रत्यासत्तेः षाष्ठिक एव द्विर्वचने सा विधीयते, अत एवाष्टमिके न भवति ? एवं तर्हि दृशिग्रहणादेव संप्रसारणम्, अभ्याससञ्ज्ञा च द्रष्टव्या । 'जगत्' इति । 'गमः क्वौ' (६.४.४०) इति मलोपः । अत्रापि पूर्ववदेवाभ्यासकार्यम् ।

द्वे चेति चकारेण दीर्घः समुच्चीयमानो दीर्घश्रुत्या 'अचश्च' (१.२.२८) इत्युपस्थानादचा च तदन्त- विध्याश्रयणात् जुहोतेरेवाजन्तस्य विज्ञायते, न द्युतिगम्योरित्याह--'जुहोतेर्दीर्घत्वं च' इति । 'जुहूः' इति । करणस्यात्र कर्तृत्वविवक्षा । 'धीः' इत्यत्रापि करणस्यैव कर्तृत्वविवक्षा, पुरुषो हि ध्यायति, न धीः ॥

## १७९. भुवः सञ्ज्ञान्तरयोः ।

'धनिकाधमर्णयोः' इति । यस्मै ऋणं धार्यते, स धनिकः, यो धारयति सोऽधमर्णः, तयोरन्तरे मध्ये यस्तिष्ठति विश्वासार्थं स प्रतिभूरित्युच्यते । ग्रामयोरन्तरे यस्तिष्ठति तत्र न भवति । एतच्च दृशिग्रहणानु- वृत्तेर्लभ्यते । यद्येवम्, सञ्ज्ञेयं भवति, तत्र 'सञ्ज्ञायाम्' (२.१.४४) इत्येव सिद्धम् ? अत्राहुः—यावद् द्रव्यभाविन्यः सञ्ज्ञा भवति, प्रतिभूशब्दस्तु सत्येव तस्मिन्नृणप्रतिदाने निवर्तते ॥

## १८०. विप्रसम्भ्यो ड्वसञ्ज्ञायाम् ।

'मितद्र्वादिभ्यः' इति । मितादिपूर्वेभ्यो धातुभ्य इत्यर्थः । 'शम्भुः' इति । अन्तर्भावितण्यर्थोऽत्र भवतिः ॥

## १८१. धः कर्मणि ष्ट्रन् ।

'कर्मणि कारके' इति । उपपदं तु कर्म न सम्भवति, यदि स्यात् 'कर्मण्यण्' (३.२.१) इत्यस्मिन्नेव प्रकरणे ष्ट्रनं विदध्यात् । ननु चोत्तरसूत्रे पुनः ष्ट्रन्ग्रहणं कर्तव्यं स्यात्, अस्तु लघीयो हि कर्मग्रहणात् ष्ट्रन्ग्रहणम् । न चेह वर्तमानकाले ष्ट्रन्प्रत्ययः, धात्रीत्युक्ते क्रियाकारकसम्बन्धमात्रं गम्यते । अतः 'कर्मणि' इति प्रत्ययार्थं एव, नोपपदम् ॥

## १८२. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।

'दाप् लवने' इति । 'दैप् शोधने' (धा.पा. ९२४) इत्यस्य त्वग्रहणम्, अनभिधानात् । 'युजिर् योगे' इति । 'युज समाधौ' (धा.पा. ११७७) इत्यस्य तु पूर्ववदेवाग्रहणम् । 'करणे कारके' इति । उपपदं तु करणं न भवति, अजादिषु दंष्ट्राशब्दस्य पाठात् । अत एव च पाठात् सूत्रेऽनुनासिकलोपेन निर्देशोऽपि ष्ट्रनि न भवति, ल्युटयेव तु भवति । योऽत्र सेट् ततः 'तितुत्र' (७.२.९) इत्यादिनेट्प्रतिषेधः ॥

## १८३. हलसूकरयोः पुवः ।

'तच्चेत्करणं हलसूकरयोरवयवो भवति' इति । एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्यति । 'मुखमुच्यते' इति । नान्यः कर्णादिः । एतदपि स्वभावादेव लभ्यते ॥

## १८४. अर्तिलूधूसूखनसहचर इत्रः ।

इकारोपदेशः 'तितुत्र' (७.२.९) इति 'एकाचः' (७.२.१०) इति च यथायोगमिट्प्रतिषेधो मा भूदिति । स्वरार्थश्च, इटि हि सत्यागमानुदात्तत्वं स्यात्, इका तु प्रत्ययाद्युदात्तत्वम् ॥

## १८५. पुवः सञ्ज्ञायाम् ।

'बर्हिष्पवित्रम्' इति । बर्हिषा कृतं बर्हिषः पवित्रं भवति, तत्र षष्ठीसमासः, 'नित्यं समासेऽनुत्तरपदस्थस्य' (८.३.४५) इति षत्वम्, येनाज्यमुत्पूयते तत् पवित्रम् । अनामिकायामङ्गुलौ कृतं जपादिषु ॥

## १८६. कर्तरि चर्षिदेवतयोः ।

'ऋषौ करणे' इति । ऋषिः वेदमन्त्रः, 'तदुक्तमृषिणा' इति दर्शनादित्याहुः ॥

## १८७. ञीतः क्तः ।

'भूते निष्ठा विहिता' इत्यादि । तत्र येन नाप्राप्तिन्यायेन क्तस्यैव वर्तमानविषयतया भूतविषयता बाध्यते, यथा 'वडवाया वृषे वाच्ये' (वा. ३८८) इत्यत्र वक्ष्यते—अपत्ये प्राप्तस्ततोऽपकृष्य वृषे विधीयत इति ।

एवमुत्तरत्रविहितस्यापि। ज्ञानमित्येतत्तु भूतेऽपि भवति, तेनेत्यधिकारे उपज्ञात इति तद्धितविधानात्, वर्तमाने हि 'क्तस्य च वर्तमाने' (२.३.६७) इतिषष्ठ्या भाव्यम्। एवं च 'पूजितो यः सुरैरपि' इत्यादीनां साधुत्वं चिन्त्यम्॥

## १८८. मतिबुद्धिपूजार्थेभ्यश्च।

'मतिरिच्छा' इति। बुद्धेः पृथगुपादानात् बुद्धिर्न गृह्यते। 'मतः' इति। 'अनुदात्तोपदेश' (६.४.३७) इत्यनुनासिकलोपः।

'शीलतः' इत्यादि। 'शील समाधौ' (धा.पा. ५२३), 'रक्ष पालने' (धा.पा. ६५८) 'क्षमूष् सहने' (धा.पा. ४४२), 'कुश आह्वाने रोदने च' (धा.पा. ८५६), 'जुषी प्रीतिसेवनयोः' (धा.पा. १२८८), 'रुष रोषे' (धा.पा. ६९३), 'ह्वल हरणे' (धा.पा. ८९९) 'हृषु अलीके' (धा.पा. ७०९), 'हृष तुष्टौ' (धा.पा. १२२९) इति वा; 'तुष तुष्टौ' (धा.पा. ११८४), 'कमु कान्तौ' (धा.पा. ४४३), 'यम उपरमे' (धा.पा. ९८४), 'कष हिंसायाम्' (धा.पा. ६८५), 'मृङ प्राणत्यागे' (धा.पा. १४०३)। तत्राद्यौ सेटौ, उदितामूदितां च 'यस्य विभाषा' (७.२.१५) इतीट्प्रतिषेधः, ईदितः 'श्वीदितो निष्ठायाम्' (७.२ १४) इति। 'हृष्टः' इति। 'हृषेर्लोमसु' (७.२.२९) इति। कषेः 'कृच्छ्रगहनयोः कषः' (७.२.२२) इति। रुषेः 'रुष्यमत्वरसंघुषास्वनाम्' (७.२.२८) इति विकल्पः।

'सुप्तः' इति। सुपेः 'ञीतः क्तः' (३.२.१८७) इत्येव सिद्धे नजिङ्ग तच्छीलादिषु बाधा मा भूदिति समुच्चीयते। क्वचित्तु 'सप्तः' इति पठ्यते।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
तृतीयाध्यायस्य द्वितीयः पादः॥

—:०:—

# अथ तृतीयाध्यायस्य

## तृतीयः पादः

### १. उणादयो बहुलम् ।

'वर्तमाने इत्येव' इति । 'वर्तमाने लट्' (३.२.१२३) इत्यतो वर्तमानग्रहणानुवृत्तेरविच्छेदमेवकारेण दर्शयति । 'सञ्ज्ञायामिति च' इति । 'पुवः सञ्ज्ञायाम्' (३.२.१८५) इत्यतः ।

'उणादयः' इत्येव सूत्रमुणादीनां शास्त्रान्तरपरिपठितानां साधुत्वानुज्ञानार्थमस्तु, किं बहुलग्रहणेन? तत्राह—'बाहुलकम्' इति । 'ला आदाने' (धा.पा. १०५८) बहूनर्थान् लाति—बहुलम्, तस्य भावो बाहुलकम्, मनोज्ञादित्वाद्वुञ् । तत्पुनर्बह्वर्थादानं बहुलशब्दप्रवृत्तिनिमित्तम् । बहवः पुनरर्थाः—'क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः' इति वक्ष्यमाणलक्षणाः । 'प्रकृतेः' इति । जातावेकवचनम् । तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः । प्रकृतीनां तानवमल्पत्वं दृष्ट्वा तद्बाहुलकमुक्तम्, तेनापठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति, यथा हृषेरुलजुक्तः शकेरपि भवति—शङ्कुलेति । तथा तेषामुणादीनां पञ्चपाद्यां प्रायेण समुच्चयनं कृतम्, न तु साकल्येन; बहुलवचनादविहिता अपि भवन्ति, यथा—अर्तेः फिडफिड्डौ भवतः—ऋफिडः, ऋफिड्ड इति ।

'कार्यसशेषविधेश्च' । कार्याणि च सशेषाणि विहितानि न निःशेषाणि । बहुलवचनादविहितान्यपि भवन्ति । 'षणु दाने' (धा.पा. १४६४), 'अमन्ताड्डः' (द.उ. ५.७), 'धात्वादेः षः सः' (६.१.६४) इति सत्वं न भवति, कृते वा सत्वे षत्वं भवति । स्यादेतत्—यावत्यः प्रकृतयः पञ्चपाद्यां उपात्ताः, यावन्तश्च प्रत्ययाः, यावन्ति च कार्याणि विहितानि तावान्त्येव भवन्तु, मा भूदन्येषां बहुलग्रहणेन सङ्ग्रह इति? तत्राह—'नैगमरूढिभवं हि सुसाधु' इति । निगमः = छन्दः, तत्र भवा नैगमाः । निगमशब्दस्याथादिस्वरेणान्तोदात्त इति 'बह्वचोऽन्तोदात्ताट्ठञ्' (४.३.६७) इति ठञि प्राप्ते ऋगयनादिपाठादण् । रूढिः = प्रसिद्धिः, तत्र भवा रूढिभवाः = सञ्ज्ञाशब्दाः, तेषां साधुत्वमनुपात्तानां प्रकृत्यादीनां बहुलग्रहणेन संग्रहे सति भवति, नान्यथा । हि शब्दो हेतौ । यस्मादेवं तस्माद्बाहुलकमुक्तमित्यर्थः ।

अन्यैरप्याचार्यैर्नैगमरूढिभवानां प्रकृत्यादिविभागेन व्युत्पादनं कृतम्, अतोऽस्माभिरपि तत्कर्तव्यमेवेत्यभिप्रायेणाह—'नाम च' इति । निरुक्तकारो हि यास्क आचार्यः स्वशास्त्रे निरुक्तेः सर्वमेव नाम धातुजमाह । तोकमित्यपत्यं नाम । शकटस्य तोकं शाकटायनः । 'यत्र' इति । पदमर्थः प्रयोजनमस्य व्युत्पाद्यत्वेनेति पदार्थः = प्रकृत्यादिः, पदार्थश्चासौ विशेषश्च पदार्थविशेषः, तस्मात् समुत्थितं पदार्थविशेषसमुत्थम् । यदेवंविधं न भवति, प्रकृत्यादिविशेषोपादानेनाव्युत्पादितमित्यर्थः, तद्धातुजत्वेनोह्यम् । कथमूह्यम्? प्रत्ययतः प्रकृतेश्च । यत्र शब्दरूपे परभागः प्रत्ययत्वेन प्रसिद्धेन केनचित् सदृशः श्रुतः, तत्र तं भागं प्रत्ययं कल्पयित्वा परिशिष्टो भागः प्रकृतित्वेनोह्यते । 'हृषेरुलच्' (द.उ. ८.१०६) इति प्रत्ययं दृष्ट्वा शङ्कुः प्रकृतिरुह्यते, तेन सिद्धं शङ्कुलेयस्य

धातुजत्वम् । यत्र तु पूर्वो भागो धातुत्वेन प्रसिद्धेन केनचित् सदृशस्तत्र तं भागं प्रकृतिं कल्पयित्वा परिशिष्टो भागः प्रत्ययत्वेनोह्यः । यथा—ऋफिडः, ऋफिड्ड इति । फिडफिड्डौ प्रत्ययौ ।

स चायमूहोऽनादिप्रयुक्तास्वेव सञ्ज्ञासु, न सर्वत्रेत्याह—'सञ्ज्ञासु' इति । कार्यात् गुणप्रतिषेधादिकात् अनुबन्धं ककारादिकं विद्यात् । तेन फिडफिड्डौ कितावूह्यौ । एतदेवानन्तरोक्तमूहात्मकं शास्त्रमुणादिष्वनुक्तेषु ॥

## २. भूतेऽपि दृश्यन्ते ।

'पूर्वत्र वर्तमानाधिकारात्' इति । तत्रैव वर्तमानग्रहणं न निवर्तितम्, बाहुल्येन वर्तमाने भवन्ति, क्वचिदेव भूते भवन्तीति किल विवेकप्रदर्शनार्थेति भावः । उदाहरणेषु 'ताभ्यामन्यत्रोणादयः' इति संप्रदानापादानव्यतिरिक्ते कारके मनिन्प्रत्ययः, 'नेड्वशि कृति' (७.२.८) इतीट्प्रतिषेधः ॥

## ३. भविष्यति गम्यादयः ।

यथा 'स्यदो जवे' (६.४.२८) इत्युक्ते जवशब्दपर्यायः स्यदशब्दो भवति, तथेहापि भविष्यच्छब्द-पर्याया गम्यादयः प्राप्नुवन्तीत्याशङ्क्याह—'प्रत्ययस्यैव' इत्यादि । प्रकृत्यर्थगता भविष्यत्कालता प्रत्ययस्यैव द्योत्यत्वेन विधीयते, न पुनः प्रकृत्यर्थपरित्यागेन समुदायस्येत्यर्थः । 'न प्रकृतेः' इति । न प्रकृतेरपीत्यर्थः । गम्यादिषु केचिदुणादयः, केचिदष्टाध्यायीगताः । 'गमी, आगामी' इति । 'गमेरिनिः' (द.उ. ६.५७), 'आङि णिच्च' (द.उ. ६.५८) इतीनिः । 'भावी, प्रस्थायी' इति । अस्मिन्नेवाधिकारे 'भुवश्च' (द.उ. ६.५९), 'प्रात्स्थः' (द.उ. ६.६०) इतीनिः, णित्त्वाद् वृद्धिः युक् च । रुधिबुधियुधियातिभ्यः प्रतिपूर्वेभ्यो ग्रहादिनिः । अस्मादेव निपातनादित्यन्ये । 'सुप्यजातौ' (३.२.७८) इत्यन्ये । 'प्रतियोगी' इति । संपृचादिसूत्रेण (३.२.१४२) घिनुणि 'चजोः कु घिण्ण्यतोः' (७.३.५२) इति कुत्वम् । णिनिप्रत्यय एव न्यङ्क्वादिपाठा-दस्मादेव निपातनाद्वा कुत्वमित्यन्ये ।

'अनद्यतन उपसङ्ख्यानम्' इति । किं पुनः कारणं न सिध्यति ? लृटाऽयं निर्देशः क्रियते लुट् चानद्यतने लृटा बाध्यते, तेन लृट एव विषये एते स्युः । न वा वाक्यार्थत्वाद् गम्यादयः शब्दा विशेषे यत् सामान्यं तदाश्रयेण प्रवर्तन्ते । अनद्यतनाख्यस्तु विशेषः श्वःशब्दमहिम्ना गम्यते । विशेषविवक्षायां तु लुडेव भवति—श्वो गन्ता ग्राममिति । वासरूपविधिना च लृडपि भवति । तेन भविष्यति, गमिष्यतीत्यादयः प्रयोगा उपपद्यन्ते ।

## ४. यावत्पुरानिपातयोर्लट् ।

'पुरा' इत्यविभक्तिको निर्देशः, कर्मधारयो वा । निपातनाद्विशेषणस्य परनिपातः । निपातौ चैतौ निश्चयं द्योतयतः । एतयोश्च प्रयोगे वर्तमाने लण्न भवति; भविष्यत्कालतया वर्तमानकालताया बाधनात् ।

'यावद्दास्यति' इति । यत्परिमाणमस्य 'यत्तदेतेभ्यः परिमाणे वतुप्' (५.२.३९), 'आ सर्वनाम्नः' (६.३.९१) इत्यात्त्वम् । 'पुरा व्रजिष्यति' इति । 'पॄ पालनपूरणयोः' (धा.पा. १०८६), 'भ्राजभास' (७.४.३) इत्यादिना क्विप्, 'उदोष्ठ्यपूर्वस्य' (७.१.१०२) इत्युत्वम् । अस्य तृतीयान्तत्वं द्योतयितुं

'करणभूतया' इत्युक्तम् । प्रतिपदोक्तत्वादेव निपातयोर्ग्रहणे सिद्धे निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया (व्या प. ३) अनित्यत्वज्ञापनार्थम् । तेन 'आतां पुग्णौ' (७.३.३६) इत्यत्र लाक्षणिकस्याप्याकारान्तस्य पुक् भवति । 'क्रीङ्जीनां णौ' (६.१.४८)–क्रापयति, प्रापयतीति ॥

## ५. विभाषा कदाकर्ह्योः ।

'अनद्यतने लुट्' (३.३.१५) इत्यत्राप्ययं योगोऽनुवर्तनीयः, तेन लुड्विषयेऽपि पक्षे लड् भवति। अत एव पक्षे लुडप्युदाहृतः । एतच्च पूर्वयोगेऽपि द्रष्टव्यम् । 'कर्हि भोक्ष्यते' इति । ननु च कर्हिशब्दोऽनद्यतनविषयः, तत्प्रयोगे लुडेव भवितुमर्हति, न लृट्, न वा वाक्यार्थत्वात् । 'भोक्ष्यते' इति पदं भविष्यत्सामान्ये वर्तते, अनद्यतनावगतिस्तु कर्हिशब्दाधीना । न च वाक्यार्थः पदसंस्कार उपयुज्यते ॥

## ६. किंवृत्ते लिप्सायाम् ।

'किमो वृत्तं किंवृत्तम्' इति । वर्ततेऽस्मिन्निति वृत्तम्, 'क्तोऽधिकरणे च' (३.४.७६) इत्यधिकरणे क्तः । अस्मादेव निपातनात् 'अधिकरणवाचिना च' (२.२.१३) इति षष्ठीसमासप्रतिषेधाभावः, शेषषष्ठ्या वा समासः । यत्र किंशब्दोऽवयवत्वेन वर्तते तत्सर्वं किंवृत्तम् । ततश्च कीदृशः, किमीयः, किन्तरामित्यावत्ति-प्रसङ्गात् परिगणनम् । 'वृत्तग्रहणेन' इति । तदिति शब्दरूपापेक्षं नपुंसकत्वम् । 'डतरडतमौ च' इति। डतरडतमान्तं किंशब्दरूपमित्यर्थः । 'कं भवन्तं भोजयितारः' इति । अस्यापि 'अनद्यतने लुट्' (३.३.१५) इत्यत्रानुवृत्तिरिति भावः । एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् ॥

## ७. लिप्स्यमानसिद्धौ च ।

'लिप्स्यमानसिद्धौ' इति षष्ठीसमासः । वृत्तौ तु वस्तुमात्रमदर्शि । 'लिप्स्यमानात्सिद्धिः' इति । अस्मादेव निपातनाद्वा पञ्चमीसमासः । लिप्स्यमानं भक्तादि तन्निमित्ता या स्वर्गादेः सिद्धिस्तस्यामित्यर्थः । ननु च यत्र लिप्स्यमानस्य सिद्धिर्गम्यते, लिप्सापि तत्र भवति, ततश्च पूर्वेणैव सिद्धं नार्थ एतेन ? तत्राह–'अकिंवृत्तार्थोऽयमारम्भः' इति । पूर्वसूत्रे किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहिते लिप्सामात्रे किंवृत्त एव यथा स्यात्, अकिंवृत्ते मा भूदित्येवमर्थम् ॥

## ८. लोडर्थलक्षणे च ।

'अध्ययनप्रैषस्य' इति । 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्यत्र साधनं कृतेति वा पावहारकार्यमिति वचनात् सप्तमीसमासः ॥

## ९. लिङ् चोर्ध्वमौहूर्तिके ।

'निपातनात् समास उत्तरपदवृद्धिश्च' इति । ठञ्प्रत्ययश्चाध्यात्मादित्वात् । 'बह्वचोऽन्तोदात्तात्' (४.३.६७) इत्यत्र तु 'व्याख्यातव्यनाम्नः' इति वर्तते । 'उपाध्यायश्चेदागन्ता' इति । ऊर्ध्वमौहूर्तिकेऽनद्यतनत्वं सम्भवतीति चिन्त्यम् ॥

## १०. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।

'भिक्षिष्य इत्यस्य जटाः' इति । अत्र भिक्षणक्रियार्थत्वं जटानाम्, न तु क्रियात्वम् । द्रव्यत्वाज्जटानाम् । 'धावतस्ते पतिष्यति दण्डः' इति । अस्त्यत्र धावनक्रियोपपदम्, न त्वसौ दण्डपातनार्थं धावति, किं तर्हि ? धावतोऽर्थात् पतिष्यति दण्डः । उद्देशेन हि तादर्थ्यं विवक्ष्यते, न तु हेतुत्वमात्रेण तादर्थ्यम् । 'अथेत्यादि' चोद्यम् । परिहरति 'लृटा क्रियार्थोपपदेन' इति । तुमुना तु बाधो नाशङ्कनीयः; भिन्नार्थत्वात्–कर्तरि ण्वुल्, तुमुन् पुनर्भावे । कथम् ? 'तुमर्थे सेसेन्' (३.४.९) इत्यत्र तुमर्थग्रहणात् । यदि हि 'कर्तरि कृत्' (३.४.६७) इति वचनात् कर्तरि तुमुन् स्यात् तद्वदेव सेसेन्प्रभृतयोऽपि कर्तरि भविष्यन्ति । अतस्तुमर्थग्रहणात् कर्तुस्तावदयमपकृष्यते । न चान्योऽर्थो निर्दिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति । कश्च धातोः स्वार्थः ? भाव एव । लृट् तु यद्यपि भावकर्मणोश्चरितार्थस्तथापि क्रियायां क्रियार्थायामुपपदे भविष्यति काले च विधानाद्विशेषविहितः । ण्वुलविधौ तु कर्तरीति न श्रूयते, अतोऽसौ विशेषविहितेन लृटा बाध्यते । अथवा किं न एतेन विशेषविहित इति, द्वयोः सावकाशत्वेऽपि परत्वाल्लृट् ण्वुलं बाधेत । पुनश्चोदयति—'वासरूपविधिना' इति । परिहरति—'एवं तर्हि' इति । नन्वसति प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनम्, किम् ? 'अकेनोर्भविष्यदाधमर्ण्ययोः' (२.३.७०) इति षष्ठीप्रतिषेधो भविष्यदधिकारविहितस्याकस्य प्रयोगे यथा स्यात्, वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इत्यत्र मा भूदिति ? एवं मन्यते—पदान्तरसन्निधानादत्र भविष्यत्कालत्वं गम्यते । यदा हि बालविषयमेतत् प्रयुज्यते तदा तस्यामवस्थायां वर्षशतपूरणस्य पुत्रपौत्रदर्शनस्य चासम्भवात् तावन्तमसौ कालं जीविष्यतीत्यर्थादवगम्यते, न त्वत्र पदार्थो भविष्यत्कालत्वमिति । स्थिते त्वस्मिन् ण्वुल्विधाने 'वर्षशतस्य पूरकः' इत्यादौ भविष्यत्कालस्य पदार्थत्वेऽपि न दोष इत्यभिप्रायेण 'अकेनोर्भविष्यदाधमर्ण्ययोः' (२.३.७०) इत्यत्रोक्तम्—भविष्यदधिकारविहितस्याकस्यैवं ग्रहणम्, तेन वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इत्यत्र न भवतीति ॥

## ११. भाववचनाश्च ।

'वक्ति' इति वचनः, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति कर्तरि ल्युट्, करण एव वा—भाव उच्यते येन स भाववचनः । अत्र पुरुषाः कर्तारः, भावाधिकारविहिता एव भाववचना भवन्तीत्याह—'भाव इति प्रकृत्य' इति । 'तुमुना बाध्येरन्' इति । लृट् तु भावकर्मकर्तृषु त्रिषु विधानादसमानार्थः । किं च धात्वर्थस्य सिद्धतायां घञादयः, शुद्धे तु धात्वर्थे लकारः, अतोऽप्यसमानार्थत्वम् ।

इह 'भावे' इत्येतावद्वक्तव्यम्, एवमपि ह्युच्यमाने भावे ये विहितास्ते क्रियायां क्रियार्थायामुपपदे भवन्तीत्यर्थो लभ्यत एव, तदपार्थकं वचनग्रहणमिति मत्वा पृच्छति–'अथ' इति । 'वाचकाः यथा स्युः' इति । वचनग्रहणे हि सति भाववचनाः सन्तो घञादयोऽस्मिन् विषये भवन्तीत्यर्थो भवति, भावस्य वाचकाः सन्तो भवन्तीत्यर्थः । एतदेक

प्रश्नपूर्वकं विवृणोति—'कथं च' इति। 'याभ्य प्रकृतिभ्यः' इति। इवर्णान्तेभ्योऽच्, ऋवर्णान्तेभ्यः उवर्णान्तेभ्यश्चाविति। एवं 'येन विशेषणेन' इति। 'हस्तादाने चेरस्तेये' (३.३.४०), 'श्रिणीभुवोऽनुपसर्गे' (३.३.२४) इत्यादिना। असामञ्जस्यम् = व्यतिकरः, अन्योऽन्यविषयावगाहनमितियावत्। पाकायेत्यादौ 'तुमर्थाच्च भाववचनात्' (२.३.१५) इति चतुर्थी॥

## १२ अण् कर्मणि च।

'चकारः सन्नियोगार्थः' इति। अन्यथा पर्यायेण स्यात्, कदाचित् क्रियार्थायामेव क्रियायामुपपदे, कदाचित् कर्मण्येव केवले; वचनं तु भविष्यति काले कादीनामपवादानां बाधनार्थं स्यात्। चकारात्तु सन्नियोगार्थात् समुदायस्यैव प्रत्ययोत्पत्तिं प्रति निमित्तत्वम्। उपपदसञ्ज्ञा तु प्रत्येकमेव भवति, प्रत्येकं सप्तमीनिर्देशात्। तेन केवलस्यापि कर्मणः समासो भवति। 'काण्डलावो व्रजति' इति। 'सोऽपवादत्वात् ण्वुलं बाधते' इति। ण्वुल्विधाने च क्रियायां क्रियार्थायामुपपदे वासरूपेण तृजादयो न भवन्तीति ज्ञापितम्, न पुनरस्मिन् प्रकरणे वासरूपविधिर्नास्तीति। तेन योऽयं 'तुमुन् ण्वुलौ' (३.३ १०) इति ण्वुल्, सोऽस्याणो विषयेऽपि वासरूपविधिना भवत्येव-एधानाहारको व्रजतीति। तथा च 'अकेनोर्भविष्यदाधमर्ण्ययोः' (२.३.७०) इति भविष्यदधिकारविहितस्याकस्य भविष्यति प्रयोगे कर्मणि षष्ठी प्रतिषिध्यते। 'परत्वाच्च कादीन्' इति। ननु चापूर्वविधानात् प्रतिप्रसववचनस्य लाघवमस्तीति अणविषय एव ण्वुलं बाधित्वाण् स्यान्नापवादविषये? एवं मन्यते—इह कर्मणीति न वक्तव्यं वचनग्रहणानुवृत्तेरेव यो वचनेऽण् सोऽस्मिन् विषये भवतीति वचनव्यक्त्या कर्मण्येवोपपदेऽण् सिद्धः, तत्र पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेऽपि भवतीति। एवं च परत्वादिति कोऽर्थः? उत्कृष्टत्वादाविष्याविरित्यर्थः। अन्ये तु विप्रतिषेधमेव व्याचक्षते॥

## १३. लृट् शेषे च।

'शेषः क्रियार्थोपपदादन्यः' इति। क्रिया क्रियार्थोपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यदित्यर्थः। 'चकारात्' इति। यदि तर्हि शेषे चाशेषे च भवति लृडित्येवास्तु, क्रियायां क्रियार्थायामिति निवर्तिष्यते, तेन सर्वत्र भविष्यति? एवमपि शेष एव स्यात्, अशेषे तु तुमुन्ण्वुलौ बाधकौ स्याताम्। वासरूपविधिना लृडपि भविष्यति। तदेतत् 'शेषे च' इति वचनं चिन्त्यप्रयोजनम्। 'करिष्यामीति व्रजति' इति। इतिशब्दः परस्परसम्बन्धज्ञापनार्थः॥

## १४. लृटः सद्वा।

'लृटः' इति वचनं स्थानिनिर्देशार्थम्, अन्यथा सत्सञ्ज्ञकौ प्रत्ययौ स्वतन्त्रौ स्यातां न स्वादेशौ। 'अप्रथमासमानाधिकरणादिषु' इति। आदिशब्देन 'सम्बोधने च' (२.३.४७), 'लक्षणहेत्वोः क्रियायाः' (३.२.१२६) इत्यस्मिन् विषये, तथा 'प्रत्ययोत्तरपदयोश्च' (७ २.९८)—करिष्यतोऽपत्यं कारिष्यतिः, कारिष्यमाणिः, करिष्यतो भक्तिः करिष्यद्भक्तिः, करिष्यमाणभक्तिः, करिष्यन्ती भक्तिरस्य, करिष्यद्भक्तिः, करिष्यमाणा भक्तिरस्य करिष्यमाणभक्तिः, करिष्यत्तरः करिष्यमाणतरः, करिष्यमाणतमः, करिष्यद्रूपः, करिष्यमाणरूपः,

करिष्यत्कल्पः, करिष्यमाणकल्पः । कथं 'श्वोऽग्नीनाधास्यमानेन' (काठ.सं. ८.१२) इत्यनद्यतने शतृशानचौ भवतः? उक्तोऽत्र परिहारः—'व्यत्ययो बहुलम्' (३.१.८५) इति कालव्यत्ययेन लृट् । अथ वा—उत्तरत्र 'अनद्यतने' इति योगविभागः, 'लृटः सद्वा' इत्येव अनद्यतने यो लृट्, तस्यापि सत्सञ्ज्ञकौ भवतः । केन पुनरनद्यतने लृट् भवति? एतदेव ज्ञापयति—भवत्यनद्यतने लृडिति, यदयमनद्यतने लृटः सत्सञ्ज्ञकौ शास्ति ॥

## १५. अनद्यतने लुट् ।

'अनद्यतन इति बहुव्रीहिनिर्देशः' इति । 'अनद्यतने लङ्' (३.२.१११) इत्यत्रैवैतद्व्याख्यातं तत एवावधार्यम् ।

'परिदेवने' इति । परिदेवनम् = अनुशोचनम् । 'श्वस्तनी' इति । लुटः पूर्वाचार्यसञ्ज्ञा । [1]'भविष्यन्त्यर्थे' इति । 'भविष्यन्ती' इति लृटः सञ्ज्ञा, तस्या अर्थे भविष्यत्सामान्य इत्यर्थः । भविष्यदर्थे इति वा पाठः । भविष्यत्सामान्यरूपेऽर्थे इत्यर्थः । 'यैवम्' इति । विलम्बितम् । अनभियुक्तः = परिचयरहितः ॥

## १६. पदरुजविशस्पृशो घञ् ।

'पद्यतेऽसौ' इति । करणस्यात्र कर्तृत्वेन विवक्षा । पदमित्येतत्तु 'खनो घ च' (३.३.१२५) इत्यत्र साधयिष्यते । 'रोगः' इति । 'चजोः कु घिण्ण्यतोः' (७.३.५२) इति कुत्वम् ।

'स्पृश उपतापे' इति । उपतापः = रोगः ।

## १७. सृ स्थिरे ।

'सृ' इत्यविभक्तिको निर्देशः । 'सर्तेः' इति । 'सृ गतौ' (धा.पा. ९३५), 'ऋ सृ गतौ' (धा.पा.-१०९८, १०९९) इति द्वयोरपि ग्रहणम् । 'स्थिरे कर्तरि' इति । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्तृविशेषणं नोपपदमिति दर्शयति । एतच्चवार्थर्चादिषु सारशब्दपाठाद्विज्ञायते । ननु स्थिरशब्दस्तिष्ठतेर्गतिनिवृत्तिवाचिना उणादिषु किरच्प्रत्ययान्तो निपातितः, सर्तिस्तु गतिवचनः, तत्कथं सरणस्य स्थिरकर्ता युज्यते? इत्याह—'स्थिर इति कालान्तरस्थायी' इत्यादि । यतः कालान्तरगमनं संभवति, ततश्च सर्तेर्धातोरर्थस्य कर्ता युज्यत इत्यर्थः । तिष्ठन्नितिच हेतौ शतृप्रत्ययः । 'खदिरसारः' इति । खादिरास्थि, तत् दृढत्वात् स्थिरम् । 'अतीसारो व्याधिः' इति । शरीरान्तरावस्थितं रुधिरादिद्रव्यमतिशयेन सारयतीति कृत्वा । अन्तर्भावितण्यर्थोऽत्र सरतिः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६.३.१२२) इति दीर्घः । 'विसारो मत्स्यः' इति । विविधं सरतीति कृत्वा । 'सारो बलम्' इति । सारयति चेष्टयतीति कृत्वा । अत्राप्यन्तर्भावितण्यर्थः सरतिः । बलवान् हि चेष्टते, सारशब्द उत्कर्षे पुंलिङ्गः, न्यायादनपेते नपुंसकलिङ्ग इति च दृश्यते ॥

---

1. 'भविष्यदर्थे' इति काशिका, न्यासश्च ।

## १८. भावे।

नित्यानामेव शब्दानां साङ्कर्यस्य निवृत्तये।
अन्वाख्यानाद्भावशब्दे घञि नान्योऽन्यसंश्रयः॥

'रागः' इति। 'रञ्जेश्च' (६.४.२६), 'घञि च भावकरणयोः' (६.४.२७) इति न लोपः। कथं पुनः पाकादिरुदाहरणं भवति, यावता भवतिनार्थनिर्देशः क्रियमाणोऽस्तिभवतिविद्यतिविषय एव कृतो भवति, न पचादिविषयः? तत्राह—'क्रियासामान्यवाची भवतिः' इति। सत्ताख्यं सामान्यमपि भवतिना साध्यत्वेनाभिधीयत इति क्रियासामान्यवाची भवतिर्भवति। 'तेनार्थनिर्देशः क्रियमाणः' इति। हेतौ शानच्, यस्मात् सामान्यवाचिनाऽर्थनिर्देशः क्रियते, न विशेषवाचिना पचादिना; तस्मात् सर्वधातुविषयः कृतो भवति सामान्यस्य, सर्वेष्वेव विशेषेषु भावात्, षण्डादिषु गोत्ववत् विशेषरूपाश्रयनिषेधस्याभावाच्च। इह भावो धात्वर्थः, स च पूर्वापरीभूतोऽपरिनिष्पन्नः। तस्य घञ्वाच्यस्य कथं लिङ्गसङ्ख्यायोग इत्याह—'धात्वर्थश्च' इति। यथा पचति पाचक इत्यादौ प्रकृतिभागेन क्रियोच्यते, प्रत्ययभागेन तु तदीयं साधनम्; तथा पाकादिषु प्रकृतिभागः साध्यरूपमर्थमाह, प्रत्ययभागस्तु तस्यैव सिद्धरूपतां द्रव्यधर्मैर्लिङ्गसङ्ख्याकारकशक्तिभिः सम्बन्धयोग्यमाकारमाहेत्यर्थः। उक्तं च—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः॥ (वा.प. ३.८.४७,४८) इति।

बहुवचनत्योऽयमर्थः। इह 'भावे' इति पुंलिङ्गेनायं निर्देशः क्रियते, एकवचनेन च तत्र पुंलिङ्ग एव, भावे एकवचन एव च प्रत्ययाः स्युः, न लिङ्गान्तरे, न च सङ्ख्यान्तरे; ततश्च 'स्त्रियां क्तिन्' (३.३.९४) इत्यत्र स्त्रियां भाव इति सामानाधिकरण्येन सम्बन्धासम्भवात्—स्त्र्यात्मकर्तरि कारके क्तिन्प्रत्ययः स्यात्, भावे तु पुंसीव 'नपुंसके भावे क्तः' (३.३.११४) इत्यत्र 'अकर्तरि च कारके' (३.३.१९) इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि क्तः स्यात्, भावे तु पुंसि, द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यत आह—'पुंलिङ्गमेकवचनं चातन्त्रम्' इति।

न विना लिङ्गसङ्ख्याभ्यां सत्त्वभूतोऽर्थ उच्यते।
इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम्॥
धान्यार्थिनामुपादानं पलालादेर्यथा मतम्।
शब्दसंस्कारमात्रं तु तन्निर्देशप्रयोजनम्॥ (वा.प. ३.१.५१-५२?)॥

## १९. अकर्तरि च कारके सञ्ज्ञायाम् ।

प्रासः = कुन्तः । प्रसेवः सूच्या प्रसेवनेन निष्पाद्य आवपनविशेषः । 'मधुराहारः' इति । कर्मधारयः, षष्ठीसमासो वा ।

'भेषः' इति । पचादिषु पाठमनपेक्ष्यैतदुदाहृतम्, तथा च 'इगुपधज्ञाप्री' (३.१.१३५) इत्यत्रोक्तम्—देवसेवमेषादयः पचादिषु द्रष्टव्या इति । न हि पाठे सति द्रष्टव्यत्ववचनमुपपद्यते । अथ वा—प्रत्युदाहरणदिगियं दर्शिता, इदं तु प्रत्युदाहरणम्—विभर्त्यसौ भर्तेति ।

'चकारः' इत्यादि । चकारोऽयं भिन्नक्रमः—'सञ्ज्ञायां च' इति, तेनासञ्ज्ञायामपि घञ् भवति । यद्येवम्, मा भूत्सञ्ज्ञायामिति, मा च भूच्चकारः, 'अकर्तरि कारके' इत्येवास्तु ? सत्यम्; बाहुल्येन सञ्ज्ञायां भवति, क्वचिदेवासञ्ज्ञायामिति सूचयितुं सञ्ज्ञाग्रहणं कृतम् । 'दायः' इति । दीयमानं सर्वमुच्यत इति नेयं सञ्ज्ञा । एवं 'लाभः' इत्यत्रापि, उभयत्र कर्मणि घञ् । 'कारकग्रहणम्' इत्यादि । पर्युदासे हि नञिवयुक्तन्यायेन कर्तुरन्यस्मिंस्तत्सदृशे कारक एव प्रतीतिर्भवति, यथा—अब्राह्मण इति क्षत्रियादौ । तस्मात् पर्युदासे कारकग्रहणं न कर्तव्यम् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन सञ्ज्ञायां घञ् भवति, कर्तरि तु न भवतीत्येषोऽर्थो भवति । तत्र प्रथमे वाक्येऽर्थनिर्देशाभावात्, 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' (पु.प. ९०) इति स्वार्थे एव स्यात् । ननु च विहितः स्वार्थे पूर्वेणैव ? नेत्याह; धात्वर्थस्य हि सिद्धताख्ये धर्मे घञादयो भवन्तीत्युक्तम्, इह तु साध्यरूपे शुद्धे प्रकृत्यर्थे स्यात् । ननु च कर्तरि प्रतिषेधसामर्थ्यादनिर्दिष्टार्थोऽपि घञ् धात्वर्थसम्बन्धिनि कारके एव विज्ञास्यते ? नैतदस्ति, असति हि प्रतिषेधे 'कर्तरि कृत्' (३.४.६७) इति वचनान्नायमनिर्दिष्टार्थः स्यात् । अतः प्रसज्यप्रतिषेधार्थं कारकग्रहणम् । पर्युदासे तु न कर्तव्यम् । यद्येवम् स एवाश्रयिष्यते, किं कारकग्रहणेन ? तत्राह—'तत्क्रियते' इति । किं पुनः कारणं प्रसज्यप्रतिषेधे प्रयत्नलभ्यः समासः । असामर्थ्यात् तत्र हि नञः क्रियया सम्बन्धः, कर्तरि न भवतीति न कर्तृशब्देन । 'आदेच उपदेशेऽशिति' इति । अत्र यदि 'अशिति' इति पर्युदासः स्यात्, तदा शितोऽन्यत्र तृजादौ प्रत्यये परत आत्वेन भवितव्यम् । ततश्च सुग्लः, सुम्ल इत्यत्र 'आतश्चोपसर्गे' (३.१.१३६) इति को न स्यात्, प्राक् प्रत्ययोत्पत्तेरनाकारान्तत्वात् । प्रतिषेधे त्वनैमित्तिकमात्वम्, शिति तु प्रतिषेध इति सिद्धमिष्टम् ॥

## २०. परिमाणाख्यायां सर्वेभ्यः ।

'परिमाणाख्यायाम्' इति । भावसाधनः परिमाणशब्दः, आख्यानमाख्या = उक्तिः, परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिः ? प्रत्ययार्थस्य भावस्य कर्तृवर्जितस्य करकस्य च । परिमाणाख्यायां गम्यमानायामिति वृत्तेरप्ययमेवार्थः । 'तण्डुलनिचायः' इति । निचीयते राशीक्रियते इति निचायः = राशिः, तण्डुलानां निचाय इति षष्ठीसमासः । अत्र राश्येकत्वेन परिच्छित्तिर्गम्यते । अत्रैरचि प्राप्ते घञ् । प्रायेण तु निश्चाय इति पाठः, तत्राप्यर्थः स एव, 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इत्यपि प्राप्ते घञ् । 'शूर्पनिष्पावौ' इति । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः । शूर्पेण निष्पावः शूर्पनिष्पाव इति 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समासः । अत्र शूर्पसङ्ख्यया परिच्छित्तिः । यद्यप्यत्र 'निरभ्योः पूल्वोः' (३.३.२८) इति घञ् सिध्यति, तथापि सर्वापवादार्थसर्वग्रहणोपादानादनेनैव घञ् भवितुमर्हतीत्यस्योपन्यासः । 'कारौ' इति । 'कॄ विक्षेपे'

(धा.पा. १४०९) कर्मणि घञ्, विक्षिप्तो धान्यादिः = कारः, अत्रापि सङ्ख्यया परिच्छित्तिः। ननु च धातोरिति सामान्याधिकारादन्तरेणापि सर्वग्रहणं धातुमात्राद् घञ् भविष्यति, नार्थः सर्वग्रहणेन ? तत्राह–'सर्वग्रहणम्' इति। किं पुनः कारणमपो बाधनं यत्नसाध्यमित्यत आह–'पुरस्तादिति निश्चयः' इति। अत्र न केनचिदियत्ता गम्यते। ननु च परिमाणशब्दस्य प्रस्थादिषु रूढत्वात् प्रस्थस्तण्डुलनिश्चाय इत्यादावेव युक्तं भवितुम्, न तु द्वौ शूर्पनिष्पावावित्यत्र ? इत्यत आह—'आख्याग्रहणं रूढिनिरासार्थम्' इति। प्रस्थादिषु जिघृक्षितेषु परिमाण इत्येव वक्तव्यं किमाख्याग्रहणेन ? आख्याग्रहणात्तु मात्रचो लोपो विज्ञायते परिमाणमात्रस्याख्यायामुक्तो सत्यामिति। तेन परिमाणशब्दः क्रियाशब्द उपजायते—परिमितिः = परिमाणम् परिच्छित्तिरिति सङ्ख्ययाऽपि परिच्छित्तिर्भवति। एवं चोन्मानादावपि यथाभिधानं घञ् भवति। यदि तर्हि सर्वग्रहणात्परमप्ययं घञपं बाधते, स्त्रीप्रत्ययानपि बाधत, तत्राह—'घञनुक्रमणमजपोर्विषये' इति। एतच्च 'सर्वेभ्यः' इति पञ्चमीनिर्देशाल्लभ्यते। पञ्चम्यन्तो हि सर्वशब्दो धातुशब्देन समानाधिकरणो भवति, तेन प्रकृत्याश्रय एवापवादो बाध्यते, नार्थाश्रयः। 'तिलोच्छित्तिः' इति। कर्मणि भावे वा क्तिन्। ऊर्ध्वीकृतो राशिः।

'णिलुक् च' इति। णिलोपे सति तस्य स्थानिवद्भावात् घञाश्रया वृद्धिर्न स्यादिति लुग्विधीयते, तस्य परनिमित्तकत्वात् क्विलुगुपधात्वेति प्रतिषेधाद्वा स्थानिवत्त्वाभावाज्जारशब्दः सिध्यति। 'जरयन्ति' इति। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (धा.पा. ८१७) इति मित्वात् ह्रस्वत्वम्। जारः = प्रच्छन्नपतिः॥

## २१. इङश्च।

'उपाध्यायः' इति। उपेत्यस्मादधीयत इति अपादाने घञ्। 'अध्यायः' इत्यत्र कर्मणि घञ्।

'अपादाने स्त्रियाम्' इति। 'घञनुक्रमणमजपोर्विषये' (काशिका ३.३.२०) इति वचनात् स्त्रियामप्राप्तो घञ् विधीयते। 'उपाध्याया उपाध्यायी' इति। या स्वयमध्यापयति तस्यामेतद्रूपम्। पुंयोगे तु नित्यमेव ङीष् भवति। अत्र च 'उपाध्यायमातुलाभ्यां वा' (वा. ३५५) इति वचनात् पक्षे आनुगागमः—उपाध्यायी, उपाध्यायानी।

'शॄ वायुवर्णनिवृतेषु' इति। 'शॄ' इत्यविभक्तिको निर्देशः। 'शारो वायुः' इति। करणे घञ्। 'शारो वर्णः' इति। चित्रीकरणमत्र धात्वर्थः—चित्रीक्रियतेऽनेनाश्व इति, अत्रापि करणे घञ्। वर्णान्तरसंपृक्तश्चेद्वर्णः शारः। निव्रियते आव्रियतेऽनेन शरीरमिति निवृतमावरणमुच्यते, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति करणे क्तः। 'नीशारः' इति। पूर्ववद्दीर्घः। 'अकृतनीशारः' इति। अकृतप्रावरण इत्यर्थः। 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्तिककारप्रयोगादक्षेष्वपि शार इति भवति॥

## २२. उपसर्गे रुवः।

## २३. समि युद्रुदुवः।

संयावः = पिष्टविकारोऽपूपविशेषः। संपूयते मिश्रीक्रियते गुडजीरकादिभिरिति कृत्वा॥

२४. श्रिणीभुवोऽनुपसर्गे ।

२५. वौ क्षुश्रुवः ।

२६. अवोदोर्नियः ।

अधोनयनमवनायः, ऊर्ध्वं नयनमुन्नायः, उन्नयस्तु उत्प्रेक्षा ।

२७. प्रे द्रुस्तुस्रुवः ।

२८. निरभ्योः पूल्वोः ।

निष्पावः = कोशी धान्यविशेषः, निष्पूयते शूर्पादिभिरिति कृत्वा ॥

२९. उन्न्योर्ग्रः ।

उद्गारः = अतिप्रवृद्धः शब्दः । निगारो भक्षणम् ॥

३०. कॄ धान्ये ।

धान्यमिह प्रकृत्यर्थो वा स्यात् प्रत्ययार्थस्य वा कारकस्योपाधिः ? प्रकृत्यर्थस्तावन्नोपपद्यते; धान्यस्य द्रव्यत्वात्, धातोश्च क्रियावाचित्वात् । प्रत्ययार्थोपाधित्वे तु प्रत्ययेनाभिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति । अथापि विस्पष्टप्रतिपत्त्यर्थं प्रयोगः स्यात् । एवमपि प्रत्ययार्थेऽन्तर्भूतत्वाद्धान्ये षष्ठी न स्यात्, 'दृतिहरिः पशुः' इतिवत् सामानाधिकरण्यमेव तु स्यात् । तस्मान्नायं प्रत्ययार्थस्योपाधिः, नापि प्रकृत्यर्थः, किन्तु प्रत्ययार्थस्य विषयत्वेन विशेषणमित्याह—'धान्यविषयश्चेत्' इति । उपपदत्वमपि न भवति, व्याख्यानात् । 'अनभिधानात्' इति । शब्दशक्तिस्वाभाव्यात् । उत्कारनिकारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते, न हिंसा । सापि धान्यस्य कीदृशीति चिन्त्यम् ॥

३१. यज्ञे समि स्तुवः ।

'समेत्य स्तुवन्ति यस्मिन् देशे' इति । अधिकरणे ल्युटोऽपवादो घञिति दर्शयति । संस्तवः = परिचयः ॥

३२. प्रे स्त्रोऽयज्ञे ।

'यज्ञे' इति प्रकृतत्वात् 'अयज्ञे' इति पदच्छेदः । शङ्खादिषु प्रस्तारः = विस्तारः । 'बर्हिष्प्रस्तरः' इति । प्रस्तरः = मुष्टिविशेषः । बर्हिर्विकारः प्रस्तरो बर्हिष्प्रस्तरः । 'ॠदोरप्' (३.३.५७) इत्यप् । 'इदुदुपधस्य च' (८.३.४१) इति षत्वम् ॥

## ३३. प्रथने वावशब्दे ।

विस्तारः = तिर्यगायतिः ॥

## ३४. छन्दोनाम्नि च ।

अक्षराणामियत्ताविशिष्टो विन्यासविशेषः = वृत्तम् । 'यस्य गायत्र्यादयः' इति । प्रसिद्धत्वादेवमुक्तम् । 'न मन्त्रब्राह्मणम्' इति । 'बहुलं छन्दसि' (२.४.३९) इत्यादौ यद्यपि तेषामेव ग्रहणं प्रसिद्धं तथापीह तेषां ग्रहणं न भवति, कुतः ? इत्याह--'नामग्रहणात्' इति । 'विष्टारपङ्क्तिः' इति । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ्, ततः कर्मधारयः, 'छन्दोनाम्नि च' (८.३.९४) इति षत्वम् । यद्यप्यत्र प्रथनं गम्यते, तथापि शब्दविषयत्वात् पूर्वेण न सिध्यति । केचित्तु 'वौ' इति नानुवर्तयन्ति, तेन प्रस्तारपङ्क्तिः, आस्तारपङ्क्तिः, संस्तारपङ्क्तिरित्यपि भवतीत्याहुः । 'कर्मण्यग्न्याख्यायाम्' (३.२.९२) इत्यादौ यथा प्रत्ययान्तश्चेदाख्या भवतीत्ययमर्थो भवति, एवमिहापि प्रत्ययान्तश्चेच्छन्दोनाम भवतीत्यर्थः स्यात् ? इति शङ्कमानं प्रत्याह--'विष्टारपङ्क्तिशब्दोऽत्र छन्दोनाम' इति । 'अवयवत्वेन वर्तते' इति । घञन्तशब्दरूपमित्यनुषङ्गः । क्वचित् तद्वर्तत इति तच्छब्दः पठ्यते, तत्र नानुषङ्गः । कथं तर्हि छन्दोनाम्नीत्यस्य निर्वाहः ? इत्याह--'छन्दोनाम्नीत्यधिकरणसप्तम्येषा' इति । प्रत्ययान्तस्याधिकरणं छन्दोनाम, अवयवाश्चावयविनि वर्तन्त इति लौकिका मन्यते, तेन न काचिदनुपपत्तिरिति भावः ॥

## ३५. उदि ग्रहः ।

'अपवादः' इति । 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इति प्राप्तस्य ।

'छन्दसि नि' इत्यादि । अवयवसन्निवेशविशिष्टा यज्ञपात्रविशेषाः स्रुचः । इह तु जुहूपभृतोर्ग्रहणम् । 'उद्ग्राभं चेति जूहूमुद्यच्छति, निग्राभं चेत्युपभृतं नियच्छति' इति वचनात् । 'हृग्रहोर्भश्छन्दसि' (वा. ९१८) इति भत्वम् ॥

## ३६. समि मुष्टौ ।

'मुष्टिविषयश्चेद् धात्वर्थो भवति' इति । इति । 'कॄ धान्ये' (३.३.३०) इत्यत्र धान्यविषयश्चेद् धात्वर्थो भवतीति एतदनुसारेणायं ग्रन्थो योज्यः । मुष्टिशब्दोऽयमस्त्येव परिमाणे--चतुरो मुष्टीन् निर्वपतीति, अङ्गुलीनां रचनाविशेषवचनोऽप्यस्ति--मुष्टिना हन्तीति । तत्र पूर्वस्य ग्रहणे परिमाणख्यायामित्येव सिद्धत्वाद् द्वितीयस्य ग्रहणमित्याह--'मुष्टिरङ्गुलिसन्निवेशः' इति । अहोशब्द आश्चर्ये । मुष्टौ कुशलो मुष्टिकः, आकर्षादिपाठात् कन् ॥

## ३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः ।

अक्षादिभिः क्रीडनं द्यूतम् । 'भ्रेष चलने' (धा.पा. ८८४), भ्रेषणं भ्रेषः = चलनम् । अभ्रेषः = अचलनम् । 'अभ्रेषविषयश्चेत्' इति । अयमपि ग्रन्थः पूर्वानुसारेण योज्यः । 'अनपचारः' इति । कुत्सितश्चारोऽपचारः, तस्मादन्यः प्रशस्तः चारोऽनपचारः । एतदेव स्पष्टयति—'यथाप्राप्तस्य' इति । यथा येन प्रकारेण प्राप्तिर्यस्येति बहुव्रीहिः । अव्ययीभावे त्वम्भावः प्राप्नोति । क्वचित्तु 'यथाप्राप्तकरणम्' इति पठ्यते । 'परिणायेन' इति । 'उपसर्गादसमासेऽपि' (८.४.१४) इति णत्वम् । हन्तीति बाधते । 'समन्तान्नयनेन' इति । परिणायेनेत्यस्यैवमर्थकथनम् । 'एषोऽत्र न्यायः' इति । एतदत्र यथाप्राप्तमित्यर्थः । परिणयः = विवाहः । न्ययः = नाशः ॥

## ३८. परावनुपात्यय इणः ।

इह द्विः परिग्रहणम्, द्विश्चेण्ग्रहणं क्रियते, सकृदेव तु कर्तव्यम्, एवं वक्ष्यामि—परौ नियो द्यूते इणोऽनुपात्यये नावभ्रेषे इति ? सत्यम्; तथा तु न कृतमित्येव ॥

## ३९. व्युपयोः शेतेः पर्याये ।

पूर्वसूत्रेणानुपात्यये पर्यायशब्दो व्युत्पादितः । ततश्चानुपात्यय इत्यधिकारेणैव सिद्धे पर्यायग्रहणं पुनर्विधानार्थम् । तेनाभिविधिविवक्षायां परमपीनुणं बाधित्वाऽयमेव घञ् भवति । 'राजानमुपशयितुं पर्याय इत्यर्थः' इति । 'कालसमयवेलासु तुमुन्' (३.३.१६७) इत्यत्र कालेऽत्यर्थग्रहणम् । पर्यायोपादानं तु प्रपञ्चार्थम्, यथा—'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' (वा. १२६) इति । तेन पर्यायशब्दयोगेऽपि तुमुन् भवति । तथा चावसरो भोक्तुम्, अवकाशो भोक्तुमित्याद्यपि दृश्यते । विशयः = संशयः, उपशयः = समीपशयनम् ॥

## ४०. हस्तादाने चेरस्तेये ।

'हस्तादानग्रहणेन' इत्यादि । यत्रोपायान्तरनिरपेक्षेण हस्तेनैवादेयमादीयते, तत्रावश्यमादेयस्य ग्राह्यस्य प्रत्यासत्तिर्भवति, अतः साहचर्यं लक्षणाहेतुः । 'वृक्षशिखरे' इति । वृक्षाग्रे यानि फलानि तेषां यष्ट्यादिना प्रचयं करोतीत्यर्थः । यद्वा—आरुह्य हस्तेनादानेऽप्यादेयस्य प्रत्यासत्त्यभावात् घञभावः ॥

## ४१. निवासचितिशरीरोपसमाधानेष्वादेश्चः कः ।

'एतेष्वर्थेषु' इति । अत्रोपसमाधानं धात्वर्थः, अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । 'चिखल्लिनिकायः' इति । चिखल्लिः—जनपदविशेषः, तत्सम्बन्धी ग्रामादिर्निवासदेश इत्यर्थः । 'आकायम्' इति । आचीयतेऽस्मिन्निष्टका इत्यधिकरणे घञ् । 'कायः' इति । चीयन्तेऽस्मिन्नस्थ्यादीनि, अधिकरण एव घञ् । 'गोमयनिकायः' इति । प्रकीर्णानां गोमयानामेकत्र राशीकरणमित्यर्थः ।

'बहुत्वमत्र गम्यते' इति। तत्र तत्र विक्षिप्तानामेव काष्ठानामित्यर्थः। 'चः कः' इति वक्तव्ये आदेरिति वचनं यङ्लुगन्तेऽप्यादेरेव यथा स्यात्, अनन्त्यस्याभ्यासस्य चोभयोर्मा भूदिति—गोमयानां निकेचायः, गोमयानां पुनः पुना राशीकरणमित्यर्थः ॥

## ४२. सङ्घे चानौत्तराधर्ये।

'प्राणिनां समुदायः सङ्घः' इति। 'सङ्घोद्घौ गणप्रशंसयोः' (३.३.८६) इति गणमात्रे निपातितोऽपि सङ्घशब्दः प्राणिनामेव समुदाये रूढ इति भावः। [1]'एकधर्मसमावेशेन' इति। एकधर्मोऽनुगतः। 'औत्तराधर्येण' इति। उत्तरे चा धरे चोत्तराधराः तेषां भाव औत्तराधर्यम्।

'सूकरनिचयः' इति। स्तनपानाय यदौत्तराधरभावेन शेरते तदेदं प्रत्युदाहरणम्, यदा तु भिक्षुवत् पृथक् पृथगेव तिष्ठन्ति तदेदमुदाहरणमेव भवति ॥

## ४३. कर्मव्यतिहारे णच् स्त्रियाम्।

'धातुः' इति वर्तते, तस्य विशेषणं कर्मव्यतिहारग्रहणम्, कर्मव्यतिहारे वर्तमानादित्यर्थः। धातोश्च क्रियावाचित्वम्, न तस्य साधनकर्मव्यतिहारे वृत्तिः सम्भवति, अतो लौकिकस्य क्रियाकर्मणो ग्रहणमित्याह— 'कर्मव्यतिहारः क्रियाव्यतिहारः' इति। 'स्त्रीलिङ्गे वाच्ये तच्च भावे' इति। कर्तृवर्जिते तु कारके न स भवति; अनभिधानादिति भावः। 'चकारो विशेषणार्थः' इति। न स्वरार्थः, प्रत्ययस्वरेणैव सिद्धत्वात्। अस्य चाकारो न क्वापि श्रूयते, णजन्ताच्च नित्यमञ् विधीयते, तत्र सतिशिष्टत्वात् ञित्स्वरेणैव भवितव्यम्। 'णचः स्त्रियाम्' (५.४.१४) इत्यत्र णात् स्त्रियामित्युच्यमाने 'ज्वलितिकसन्तेभ्यो णः' (३.१.१४०) इत्यस्यापि ग्रहणं स्यात्। 'व्यावक्रोशी' इत्यादि। 'क्रुश आह्वाने' (धा.पा. ८५६) 'लिख अक्षरविन्यासे' (धा.पा. १३६५), 'हसे हसने' (धा.पा. ७२१), णजन्तावम्,। स च कृद्ग्रहणपरिभाषया सोपसर्गादपि भवति, तद्धितत्वादावृद्धिः। 'न य्वाभ्याम्' (७.३.३) इत्ययं तु विधिर्न भवति; 'न कर्मव्यतिहारे' (७.३.६) इति प्रतिषेधात्। 'स्त्रियां क्तिन्' (३.३.९४) इत्यत्र प्रकरण एतन्नोक्तम्, वासरूपविधिर्यथा स्यात्। तेन व्यावक्रुष्टिरिति क्तिन्नपि भवति। व्यावचोरीत्यत्र 'ण्यासश्रन्थो युच्' (३.३.१०७) इति युच् प्राप्नोति, क्तिनोऽपवादः, तथाऽयमपि णच् येन नाप्राप्तिन्यायेन क्तिन एवापवादः, तत्रापवादविप्रतिषेधाद्युचि प्राप्तेऽयमेव णजिष्यते। 'व्यतीक्षा, व्यतीहा' इति। अत्र क्तिनपवादः, 'गुरोश्च हलः' (३.३.१०३) इत्यकार एवेष्यते। 'व्यात्युक्षी' इति। 'उक्ष सेचने' (धा.पा. ६५७), अत्राकारविषयेऽप्ययमेवेष्यते। 'तदेतद्वैचित्र्यं कथं भवति' इति। न कथंचिदिति भावः। 'कृत्यल्युटो बहुलम्' इति। एवंविधं वैचित्र्यं कर्तुं बहुलग्रहणमेव भवतीति भावः ॥

## ४४. अभिविधौ भाव इनुण्।

'क्रियागुणाभ्याम्' इति। अभिविधिस्वरूपकथनमेतत्, इह तु धातोः प्रत्ययविधानात् क्रियाविषय

1. एकधर्मनिवेशेन–काशिका, न्यासश्च।

एवमभिविधिर्गृह्यते। 'सांकूटिनम्' इति। 'कूट दाहे' (धा.पा. १८९०), दीर्घोपधाद् इनुण्, 'अणिनुणः' (५.४.१५) इतीनुणन्तात् स्वार्थिकोऽण् प्रत्ययः, स च पूर्ववत् सगतिकारकाद्भवति, 'इनण्यनपत्ये' (६.४.१६४) इति प्रकृतिभावात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपाभावः। समन्ताद्दाह इत्यर्थः। संशब्दोऽभिविधिद्योतकः। 'सांराविणम्' इति। 'उपसर्गे रुवः' (३.३.२२) इति घञ् उपसर्गान्तरेऽनभिविधौ चरितार्थः। 'संरावः' इति। अत्र संशब्दः पूजायाम्। क्वचित् 'संद्रावः' इति प्रत्युदाहरणं पठ्यते, तदयुक्तम्। 'समि युद्रुदुवः' (३.३.२३) इत्यस्यानवकाशात्। ननु च 'भावे कारके' (३.३.१८,१९) इति द्वयेऽपि प्रकृते शब्दस्वाभाव्यात् पूर्ववत् कारके न भविष्यति, तत् किं भावग्रहणेन? तत्राह—'भाव इति वर्तमाने' इति। तेन घञ्, 'नपुंसके भावे क्तः' (३.३.११४) इति क्तश्च न भवति। 'ल्युटा तु' इत्यादि। गतार्थम्। स्वभावतश्चेदमिनुणन्तं नपुंसकलिङ्गम् ॥

## ४५. आक्रोशेऽवन्योर्ग्रहः।

'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इत्यपि प्राप्तेऽयमारम्भः। 'दृष्टानुवृत्तिसामर्थ्यात्' इति। दृष्टमनुवृत्तिसामर्थ्यं यस्येति बहुव्रीहौ 'द्व्येकयोः' (१.४.२२) इतिवत् भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशो दृष्टानुवृत्तिसामर्थ्यत्वादित्यर्थः। यद्वा—अनुवृत्तौ सामर्थ्यमनुवृत्तिसामर्थ्यम्, ततो दृष्टशब्देन कर्मधारयः। 'आक्रोशः शपनम्' इति। न क्षेपः, स्वभावतो घञन्तस्य शपनविषयत्वात्। शपनम् = अनिष्टाशंसनम्। अवग्रहः = अभिभवः। निग्रहः = बाधः। हन्तशब्दः कोपं द्योतयति। अवग्रहः = पदस्य छेदः। निग्रहः = निरोधः ॥

## ४६. प्रे लिप्सायाम्।

लब्धुमिच्छा लिप्सा। 'पात्रप्रग्राहेण चरति' इति। भिक्षापात्रोपादानेन गृहीतपात्र इति यावत्। स्रुवग्रहणं तु दक्षिणार्थिनो लिङ्गम्। दाक्षिणहोमस्य स्रुवसाधनत्वात्।

'प्रग्रहो देवदत्तस्य' इति। प्रग्रहो मदः, प्रकृष्टो वाऽभिनिवेशः ॥

## ४७. परौ यज्ञे।

'उत्तरपरिग्राहः' इति। भावे घञ्। वेदेः स्फ्येन स्वीकरणं परिग्राहः, ततः कर्मधारयः। यदविदुत्तरः परिग्राहः इत्यसमास एव पठ्यते ॥

## ४८. नौ वृ धान्ये।

'नीवारा नाम व्रीहयो भवन्ति' इति। धान्यसामान्योक्तावपि धान्यविशेषरूपव्रीहिविशेषे स्वभावतो घञन्तस्य वृत्तिरिति दर्शयति। अत्र कर्मणि घञ्, पूर्ववदुपसर्गस्य दीर्घः। 'निवरा कन्या' इति। 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इत्यप् कर्मण्येव। ननु च वितना वितना स्त्रियां भवितव्यम् 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः

खलनो विप्रतिषेधेन' (कात्या.वा. २२३९-४०) इति वचनात्? सत्यम्, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति बहुलवचनात् क्वचित् क्तिनादिविषयेऽपि अच् भवति, प्रवरा सेना, प्रवरा गौरितिवत्। एवं च 'घञजबन्ताः पुंसि' (लिङ्गानु. ३५,३६) इति प्रायिकं द्रष्टव्यम्॥

## ४९. उदि श्रयतियौतिपूद्रुवः।

'वक्ष्यमाणम्' इति। एवं च यौतिप्रभृतिभ्यो विकल्पः प्राप्नोति। यदि नेष्यते, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति न भविष्यति। अन्ये तु—भाष्येऽनुक्तत्वात् असाधुरेवायं प्रयोगः। प्रदर्शितस्तु भारतप्रयोग आर्षत्वेन निर्वाह्य इत्याहुः॥

## ५०. विभाषाऽऽङि रुप्लुवोः।

## ५१. अवे ग्रहो वर्षप्रतिबन्धे।

'कुतश्चिन्निमित्तात्' इति। 'सत्त्वकर्मापराधादेरनावृष्टिर्भवेन्नृणाम्' सत्त्वशब्दः प्राणिवचनः, कर्मापराध = कर्मविषयो दोषः, विहितानाचरणप्रतिषिद्धाचरणनिमित्तं पापं सत्त्वकर्मापराधः। आदिशब्देन 'तयोर्मध्यगतो भानुः समुद्रमपि शोषयेत्' इत्यादेर्ग्रहणम्। 'अवग्राहो देवस्य' इति। देवकर्तृको वर्षाभाव इत्यर्थः॥

## ५२. प्रे वणिजाम्।

पणन्ते व्यवहरन्तीति वणिजः, 'पणेरिज्यादेश्च वः' (द.उ. ४.८), 'पण व्यवहारे' (धा.पा. ४३९) इत्यस्मादिजिप्रत्ययो भवत्यादेश्च वः। 'वणिक्सम्बन्धेन' इति। तुलासूत्रं हि प्रायेण वणिजां भवतीति साहचर्यं लक्षणाहेतुः। 'अन्यो वा' इति। न तु वणिजस्तन्त्रमित्यस्येदं प्रयोजनम्॥

## ५३. रश्मौ च।

'रथादियुक्तानाम्' इति। आदिशब्देन शकटस्य ग्रहणम्। 'अश्वादेः' इति। अनडुहादेरप्युपलक्षणमेतत्। संयमनम् = नियमनम्। 'सा रश्मिरिह गृह्यते' इति। रश्मिशब्दः पुंल्लिङ्गः, सेति रज्जुपरामर्शात् स्त्रीलिङ्गता। चन्द्रादिसम्बन्धिनां तु रश्मीनामग्रहणम्; अनभिधानात्। इह तु बहुकृत्वो ग्रहिरुपादीयते, सकृदेव तु कर्तुं शक्यम्; कथम्? एवं वक्ष्यामि—'उदिग्रहः समि मुष्टौ आक्रोशेऽवन्यो प्रे लिप्सायां परौ यज्ञेऽवे वर्षप्रतिबन्धे विभाषा प्रे वणिजाम्' इत्यादि, 'परौ भुवोऽवज्ञाने' (३.३.५५) इत्यस्यानन्तरं 'आङि रुप्लुवोः' (३.३.५०) इति? तथा तु न कृतमित्येव॥

## ५४. वृणोतेराच्छादने।

अप्राप्त्याच्छादन इति सामान्येनोक्तावपि पूर्ववद्विशेषप्रतिपत्तिरित्याह—'प्रत्ययान्तेन चेत्' इति। 'प्रावारः' इति। पूर्ववद्दीर्घः। 'प्रवरा गौः' इति। प्रशस्तेत्यर्थः॥

## ५५. परौ भुवोऽवज्ञाने ।

## ५६. एरच् ।

'चकारो विशेषणार्थः' इति । विना हि तेन थाथादिसूत्रे (६.२.१४४) 'अ प्रत्ययात्' (३.३.१०२) इत्यस्यापि ग्रहणं स्यात । 'वर्षम्' इति । 'वृषभो वर्षणात्' इति भाष्यकारप्रयोगात् वर्षणमित्यपि भवति ।

'जवसवौ' इति । अपि प्राप्तेऽज् विधीयते । स्वरे विशेषः । एरजण्यन्तानामिति तु नास्ति वचनम् । 'कल्प्यादिभ्यः प्रतिषेधवचनम्' (का.वा. २१९९) इत्येतदेवास्ति । कल्प्यते इति कल्पः, अर्थ्यते इत्यर्थः । मन्त्र्यते इति मन्त्रः, अचि प्रतिषिद्धे घञेव भवति ॥

## ५७. ऋदोरप् ।

'लवः' इति । न च तावपि परस्तपर इति उकारस्य तपरत्वान्नाप्राप्ता भवितव्यम् ? तत्राह—'वकारो मुखसुखार्थः' इति । नायं तकारः, किं तर्हि ? वकारः । एतच्च 'निरभ्योः पूल्वोः' (३.३.२८) इत्याद्यारम्भाद्विज्ञायते । मुखशब्देन ताल्वादिस्थानमुच्यते, तस्य सुखमनायासः । अचोर्हि हल्व्यवहितयोरुच्चारणे मुखस्य लाघवं भवति । असन्देहः, यस्यानुषङ्गिकं प्रयोजनम् ॥

## ५८. ग्रहवृदृनिश्चिगमश्च ।

'निश्चिनोतेस्त्वचोऽपवादः' इति । 'एरच्' (३.३.५६) इति प्राप्तस्य । यस्तु 'हस्तादाने चेरस्तेये' (३.३.४०) इति घञ् स निपूर्वादपि पूर्वविप्रतिषेधेनेष्यते, यथोक्तम्—'अस्तेयार्थमिति चेत् नानिष्टत्वात्' इति । कः पुनर्निश्चय इत्यत्राजपोर्विशेषः, यावता तदेव रूपं स एव स्वरोऽपि; थाथादिसूत्रेण (६.२.१४४) उभयत्रान्तोदात्तत्वविधानादित्यत आह—'निश्चिग्रहणं स्वरार्थम्' इति । निश्चिग्रहणसामर्थ्यात् थाथादिस्वरोऽत्र न प्रवर्तते, कृत्स्वरेण तु मध्योदात्तत्वमेव भवतीति भावः ।

'वशिरण्योः' इति । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दायन्तेऽस्मिन्निति रणः सङ्ग्रामः ।

'घञर्थे' इति । भावः कर्तृवर्जितं च कारकं घञर्थः । प्रस्थः सानुः, प्रस्नः कटाहः, प्रपा पानीयशाला— सर्वत्र 'आतो लोप इटि च' (६.४.६४) इत्याकारलोपः । 'आविधः' इति । ग्रहिज्यादिसूत्रेण (६.१.१६) संप्रसारणम् । आयुधशब्दपर्यायोऽयम् ॥

## ५९. उपसर्गेऽदः ।

'अदेर्धातोः' इति । धातुरूपाणां धातूनामयं निर्देशो न भवति । 'घञपोश्च' (२.४.३८) इत्यपि परतोऽदेर्घस्लादेशविधानात् । व्यधत इति विघसः = वैश्वदेवशिष्टमन्नम् ।

घासस्तु चतुष्पदां भक्ष्यम् । घसिः प्रकृत्यन्तरमस्ति, तस्मादेवाञ्विधेयः । एवं ह्यदेरपि घस्लृभावो न वक्तव्यो भवति । उत्तरार्थं त्वदेर्ग्रहणम्--'नौ ण च' (३.३.६०) अदेर्यथा स्यात् घसेर्मा भूदिति ॥

६०. नौ ण च ।

६१. व्यधजपोरनुपसर्गे ।

व्यधजपोरिति पञ्चम्यर्थे षष्ठी, 'अनुपसर्गे' इति प्रसज्यप्रतिषेधः--उपसर्गे सति न भवतीति । तेन केवलाभ्यामेव भवति, न तूपसर्गव्यतिरिक्तेऽन्यस्मिन्नुपपदे । वृत्तिग्रन्थोऽप्यस्मिन्नेवार्थे व्याख्येयः । उपजापः=मन्त्रभेदः ॥

६२. स्वनहसोर्वा ।

६३. यमः समुपनिविषु च ।

६४. नौ गदनदपठस्वनः ।

६५. क्वणो वीणायां च ।

'सोपसर्गार्थमिदं वीणाग्रहणम्' इति । निव्यतिरिक्तोपसर्गार्थमिदं द्रष्टव्यम् । निपूर्वादनुपसर्गाच्च सामान्येन विधानात् । 'कल्याणप्रक्वणा' इति बहुव्रीहिः ॥

६६. नित्यं पणः परिमाणे ।

६७. मदोऽनुपसर्गे ।

'विद्यामदः' इत्यादि । 'कर्तृकरणे' (२.१.३२) इत्यादिना समासः । 'क्वणो वीणायां च' (३.३.६५) इत्यस्यानन्तरं 'नित्यं मदः प्रमदसंमदौ हर्षे पणः परिमाणे' इति यदि सूत्रन्यासः क्रियेत, अत्रानुपसर्गग्रहणं शक्यमकर्तुम्, अनुवृत्तेरेव सिद्धत्वात् ? सत्यम्; एवं विन्यासे हि क्रियमाणे, 'पणः परिमाणे' (३.३.६६) इत्यत्राप्यनुपसर्ग इत्यस्यानुवृत्तिः शङ्क्येत । यथान्यासे तूत्तरत्राप्यनुपसर्ग इति वचनात् 'नित्यं पणः परिमाणे' (३.३.६६) इत्यत्रानुपसर्ग इति न सम्बध्यत इति विज्ञायते । तेनोपसर्गेऽपि भवति यदि परिमाणाभिधानमस्ति ।

अपर आह--''मदोऽनुपसर्गे' इति सूत्रप्रणयनमस्य विधेरनित्यत्वज्ञापनार्थम्, तेन माद इति सिद्धं भवति" इति, नात्राप्तभाषितमस्ति ॥

## ६८. प्रमदसम्मदौ हर्षे ।

'निपातनं रूढ्यर्थम्' इति । उपात्तस्यैव रूढिरूपस्य साधुत्वं यथा स्यादित्यर्थः । 'प्रसंख्याम्' (५.४.१२९) इत्युच्यमाने प्रसंमदः, संप्रमदः, विप्रमद इत्यादावपि प्राप्नोतीति मन्यते ॥

## ६९. समुदोरजः पशुषु ।

## ७०. अक्षेषु ग्लहः ।

'अक्षस्य ग्लहः' इति । भावेऽप्, अक्षस्य ग्रहणमित्यर्थः । अन्ये त्वाहुः—अक्षशब्देनात्र तत्साधनं] देवनं लक्ष्यते, अक्षकर्मणि देवनविषये यत् पणरूपेण ग्राह्यं तद् ग्लहशब्देन उच्यते । तथा च माघः—'व्यात्युक्षीमभिसरण-ग्लहामदीव्यन्' इति । वृत्तावपि 'अक्षस्य ग्लहः' इत्यक्षसाधनस्य देवनस्य पणबन्ध इत्यर्थः ॥

## ७१. प्रजने सर्तेः ।

प्रजननं प्रजनः, भावे घञ्, 'जनिवध्योश्च' (७.३.३५) इति वृद्धिप्रतिषेधः, ण्यन्ताद्वेरच् । प्रशब्दो धात्वर्थं विपरीतयति, यथा—प्रतिष्ठत इत्यत्र । प्रादुर्भावस्य च वैपरीत्यं गर्भग्रहणम्, तदाह—'प्रजनः प्रथमं गर्भग्रहणम्' इति । कथमवसरः, प्रसर इति ? अधिकरणे 'पुंसि सञ्ज्ञायां घः प्रायेण' (३.३.११८) ॥

## ७२. ह्वः संप्रसारणं च न्यभ्युपविषु ।

'निहवः' इत्यादि रूपं तु जुहोतेरेव सिद्धम् । अनेकार्थत्वाद् धातूनाम् । अर्थभेदोऽप्यकिंचित्करः । इदं तु वचनं ह्वयतेर्घञि निह्वाय इति रूपं मा भूदिति ॥

## ७३. आङि युद्धे ।

## ७४. निपानमाहावः ।

'आहावः' इति रूपं तु जुहोतेरेव सिद्धम्, 'अनेकार्थत्वाद्धातूनाम्' । अर्थभेदोऽप्यकिंचित्करः । इदं तु वचनं ह्वयतेर्घञि आह्वाय इति रूपं मा भूदिति । आहाव इत्यधिकरणे निपातनमित्याह—'तत्र हि' इति ॥

## ७५. भावेऽनुपसर्गस्य ।

'भावग्रहणम्' इत्यादि । ननु च द्वयेऽप्यविकृते लक्ष्यदर्शनवशाद्भाव एवार्थे विधिर्भविष्यति, यथा—'कर्म-व्यतिहारे णच् स्त्रियाम्' (३.३.४३) इत्यत्र ? सत्यमेष एवार्थो भावग्रहणेनाख्यायते । अथ यथा—'अभिविधौ

भाव इनुण्' (३.३.४४) इत्यत्र वाऽसरूपनिवृत्त्यर्थं भावग्रहणम्, तथेहापि कस्मान्न भवति ? असरूपस्य बाधनीयस्याभावात् । घञ् तावत् सरूपः, क्तल्युट्क्तिनस्तु नास्योत्सर्गाः, न हि तेषु नाप्राप्तेष्वस्यारम्भः, इष्यन्ते च ते—हूतः, ह्वानम्, हूतिरिति ॥

## ७६. हनश्च वधः ।

'स चान्तोदात्तः' इति । सूत्रे तथैवोच्चारणात् । किमर्थं पुनरकारान्तत्वम्, किमर्थं चान्तोदात्तत्वम्, यावता नायमकारः क्वचिच्छ्रूयतेऽतो लोपोऽस्य भवति ? तत्राह—'तत्र' इति । अन्तोदात्तत्वे सतीत्यर्थः । 'उदात्तनिवृत्तिस्वरेण' इति । 'अनुदात्तस्य च यत्रोदात्तलोपः' (६.१.१६१) इत्येव उदात्तनिवृत्तिनिमित्तत्वादुदात्तनिवृत्तिस्वरः । 'घातः' इति । अत्र कर्मादौ कारके घञ् । 'किं तर्हि प्रकृतेन प्रत्ययेन' इति । अथ धातोरनन्तरं श्रुतः प्रकृतेन धातुना कस्मान्न सम्बध्यते—हनश्च वधादेशो भवति, ह्वयतेश्चेति ? पूर्वसूत्रे संप्रसारणविधानसामर्थ्यात् ॥

## ७७. मूर्तौ घनः ।

'अभ्रघनः' इति । अभ्रस्य काठिन्यमित्यर्थः । 'धर्मशब्देन' इति । शुक्लादिवदिति भावः । यद्येवम्, गुणेनेति प्रतिषेधात् समासो न प्राप्नोति, तत्स्थैश्च गुणैरित्येतदपि नास्ति ? इदानीमेव ह्युक्तम्—'धर्मशब्देन धर्मी भण्यते' इति वक्तव्योऽत्र समासः ॥

## ७८. अन्तर्घनो देशे ।

'तदपि ग्राह्यमेव' इति । उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥

## ७९. अगारैकदेशे प्रघणः प्रघाणश्च ।

'द्वारप्रकोष्ठो बाह्य उच्यते' इति । द्वारप्रदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरः, बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनम्, नागारैकदेशमात्रे । एतच्च निपातनाल्लभ्यते । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते, इत्यप् कर्मणि, पक्षे वृद्धिश्च ॥

## ८०. उद्घनोऽत्याधानम् ।

'अत्याधानम्' इति । अतिशब्द उपरिभावे वर्तते, आङ्धातिः स्थापने, अधिकरणे ल्युट् । 'उद्घनः' इत्यत्राप्यधिकरण एवाप् ॥

## ८१. अपघनोऽङ्गम् ।

'अपघनः' इति । करणेऽप् ॥

## ८२. करणेऽयोविद्रुषु ।

'द्रुघनः' इति । 'द्रुः' इति वनस्पतिनाम, 'वनस्पतयो वै द्रवः' इति निगमो भवति । 'पूर्वपदात्सञ्ज्ञायामगः' (८.४.३) इति वा' इति । सञ्ज्ञा चैषा कुठारविशेषस्य ॥

## ८३. स्तम्बे क च ।

'तत्र च' इति । अनन्तरोक्तेऽपि के तु घनादेशो न भवति; पूर्वमेव घनादेशस्याप्सम्बन्धित्वात् । 'स्तम्बघ्नः' इति । उपपदसमासः, 'गमहन' (६.४.९८) इत्युपधालोपः, 'हो हन्तेः' (७.३.५४) इति कुत्वम् । 'स्त्रियाम्' इत्यादि । एतच्च कापोः प्रतिपदविधानात् सर्वापवादत्वात् 'कृत्यल्युटो बहुलम्' (३.३.११३) इति वचनाद्वा लभ्यते । अन्ये पुनः 'ऊतियूतिजूतिसातिहेति' (३.३.९७) इति हन्तेः क्तिनि निपातनात् निपातनस्य च सर्वापवादत्वात् स्तम्बहेतिरितीच्छन्ति । अपरे तु 'करणाधिकरणयोश्च' (३.३.११७) इति ल्युटि स्तम्बहननीति भवितव्यम्, यथा—रक्षोयातूनां हननीत्युक्तमित्याहुः । 'स्तम्बघातः' इति । भावे घञ्, षष्ठीसमासः ॥

## ८४. परौ घः ।

'परेश्च घाङ्कयोः' (८.२.२२) इति विभाषा लत्वम् ॥

## ८५. उपघ्न आश्रये ।

'आश्रयशब्दः' इत्यादि । आश्रयणमाश्रयः, स प्रत्यासत्त्याऽविनाभावीत्येतल्लक्षणहेतुः । 'पर्वतोपघ्नः' इति । पर्वतेनोपहन्यते = सामीप्येन गम्यत इति कर्मण्यप् ॥

## ८६. सङ्घोद्घौ गणप्रशंसयोः ।

संहननं सङ्घः, भावेऽप् । उद्घन्यते उत्कृष्टो ज्ञायत इति कर्मण्यप् । 'गत्यर्था बुद्ध्यर्थाः' (हे. १०१) इति हन्तिर्ज्ञाने वर्तते । 'उद्घो मनुष्याणाम्' इति । मनुष्याणां मध्ये प्रशस्त इत्यर्थः ॥

## ८७. निघो निमितम् ।

'समारोहपरिणाहम्' इति । आरोहः = उच्छ्रायः । परिणाहः = विस्तारः । तौ समानौ यस्य तत्तथोक्तम् । 'निघा वृक्षाः' इति । निर्विशेषं हन्यन्ते ज्ञायन्ते इति कर्मण्यप् ॥

## ८८. ड्वितः क्त्रिः ।

'भावे, अकर्तरि च कारके इति वर्तते' इति । अधिकारस्याविच्छेदं दर्शयति । अयं तु क्त्रिप्रत्ययः स्वभावाद्भाव एव भवति पाकेन निर्वृत्तं पक्त्रिममित्युच्यते, न तु पक्वेनेति । 'केवलो न प्रयुज्यते' इति । तेनावश्यमन्यशब्देनैव विग्रहः कर्तव्यः । तद्दर्शयति—'पाकेन निर्वृत्तं पक्त्रिमम्' इति । 'उप्त्रिमम्' इति । यजादित्वात् संप्रसारणम् । अथ 'ड्वितः क्त्रिमम्' इत्येव कस्मान्नोक्तम्, एवं हि 'त्रेर्मम् नित्यम्' (४.४.२०) इति न वक्तव्यं भवति ? नैवं शक्यम्, 'भावे' (३.३.१८) इत्यधिकारात् भावेऽपि कृत्रिममिति प्राप्नोति । अथाप्युभयानुवृत्तावप्यभिधानस्वाभाव्यात् कारक एव कर्मणि भवेत् ? एवमपि भूतकालो न गम्येत । एतदप्यभिधानस्वाभाव्याद्भवतु नाम ? एवमर्थाभिधाने प्रकारभेदो न स्यात्, न हि पक्वपक्त्रिमशब्दयोः पर्यायतां मन्यन्ते ॥

## ८९. ट्वितोऽथुच् ।

अयमपि स्वभावाद्भाव एव भवति । घञादेरपवादः । वाऽसरूपविधिना सोऽपि भवत्येव ॥

## ९०. यजयाचयतविच्छप्रच्छरक्षो नङ् ।

नङो ङकारः विच्छेर्गुणप्रतिषेधार्थः, अन्यथाऽन्तरङ्गत्वात् तुकि 'च्छ्वोः शूडनुनासिके च' (६.४.१९) इति सतुक्कस्य छस्यादेशे कृते लघूपधत्वात् गुणः स्यात् । नङन्ताः सर्वे पुंल्लिङ्गाः (लि. ३९) याचिस्तु स्त्रीलिङ्गः (लि. ४०) । वासरूपविधिश्च यथाभिधानं भवति । 'प्रश्नः' इति । अत्र ग्रहिज्यादिसूत्रेण (६.१.१६) संप्रसारणं कस्मान्न भवतीत्याह—'प्रच्छेः' इति ॥

## ९१. स्वपो नन् ।

## ९२. उपसर्गे घोः किः ।

## ९३. कर्मण्यधिकरणे च ।

कर्माधिकरणयोः पृथक् पृथक् सप्तमीनिर्देशान्न तावदुभयोरुपपदत्वम् । तत्र व्याख्यानात् कर्मोपपदम्, अधिकरणं तु प्रत्ययार्थं इत्याह—'कर्मण्युपपदे' इति । 'अधिकरणग्रहणमर्थान्तरनिरासार्थम्' इति । अर्थान्तरं भावः, करणादि च कारकम् ॥

## ९४. स्त्रियां क्तिन् ।

'घञजपामपवादः' इति । येन नाप्राप्तिन्यायेन घञोऽपवादः, अजपोस्तु परत्वादपवादो बाधक इत्यर्थः । उक्तं च 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' (कात्या.वा. २२३९–४०) इति । अजपोरवकाशः—चयः, जयः, लव इति । क्तिनोऽवकाशः–कृतिः, वृतिः, चितिः, स्तुतिरित्यत्रोभयप्राप्तौ क्तिन् भवति विप्रतिषेधेन । 'लब्धिः' । षित्वादङपि भवति—लभेति । ननु 'निष्ठायां वा सेटोऽकारवचनात् सिद्धम्' (का.वा. २२०८) इति ब्रुवतो वार्तिककारस्य 'गुरोश्च हलः' (३.३.१०३) इत्यकारप्राप्तावेव 'आबादिभ्यश्च' (वा. ३०७) इति क्तिन्नभिमत इति गम्यते, तत्कथमङ्विषये क्तिन्नुदाहृतः ? सत्यम्; प्रयोगबाहुल्यादिदमपि भवतीति मन्यते । एवं च युज्विषयेऽपि क्तिन् प्रयुज्यते—आस्तिरिति । अत एवाबादयः प्रयोगतोऽनुसर्तव्या इत्युक्तम् ।

'श्रुयजिस्तुभ्यः करणे' इति । ल्युटि प्राप्ते वचनम्, श्रुतिः श्रोत्रम्, इज्यतेऽनया देवता इष्टिः । 'ऋकारल्वादिभ्यः' इति । ऋकारान्तेभ्यः ल्वादिभ्यश्च परः क्तिन् निष्ठाकार्यं लभते—'रदाभ्यां निष्ठातो नः' (८.२.४२), 'ल्वादिभ्यः' (८.२.४४) इति च; निष्ठायां विधीयमानं नत्वं क्तिनोऽपि भवतीत्यर्थः ।

'क्तिन्नधीष्यते' इति । 'अस्त्रियाम्' इति प्रतिषेधाद्वासरूपविधेरभावादिदमुक्तम् ॥

## ९५. स्थागापापचो भावे ।

'अङोऽपवादस्य बाधकः' इति । स्थादिभ्यः 'आतश्चोपसर्गे' (३.१.१३६) इति प्राप्तस्य । पचेस्तु षित्वात् प्राप्तस्याङोऽपवादः । कां स्थायिकाम्, स्थायिमित्यत्र 'विभाषाख्यानपरिप्रश्नयोः' (३.३.११०) इति प्राप्तयोः ण्वुलिञोरपि बाधकः कस्मान्न भवति ? 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' (व्या.प. ९) इति ।

'कथम्' इति । न कथंचित्; वासरूपविधेरभावात् । 'नात्यन्ताय' इति । नियमेन चतुर्थ्यन्तप्रतिरूपकोऽयं निपातः, यथा—'चिराय' इति ॥

## ९६. मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।

'प्रकृतिप्रत्यययोः' इति । प्रकृतिसामान्यविवक्षायां द्विवचनम्; अन्यथा बहुत्वात् प्रकृतीनां बहुवचनप्रसङ्गात् । 'विभक्तिविपरिणामेन' इति । वृषादीनां द्वन्द्वे या प्रथमा तस्याः पञ्चमीभावेन यो विपरिणामः तेन प्रकृतिप्रत्यययोः सम्बन्धः, अन्यथा सम्बन्धानुपपत्तिरित्यर्थः । 'वृषु सेचने' (धा.पा. ७०६), 'इषु इच्छायाम्' (धा.पा. १३५१), वृषिसाहचर्यात् उदितो ग्रहणम् । सूत्रेऽवकारो न विवक्षितः । 'मन ज्ञाने' (धा.पा. ११७६), 'मनु अवबोधने' (धा.पा. १४७१) द्वयोरपि ग्रहणम् । विदादीनामपि यथादर्शनम् । 'सर्वत्र' इति । मन्त्रे चामन्त्रे चेत्यर्थः । वृषादिभ्यः क्तिप्रत्यये विधातव्ये उदात्तवचनमुत्तरार्थम्, व्रजयजोभवि क्यबुदात्तो यथा स्यात् ।

प्रमतिरित्यादौ 'तादौ च निति कृत्यतौ' (६.२.५०) इति पूर्वपदप्रकृतिस्वरार्थं च। पिबतेरपि मन्त्रे क्तिनन्तुदात्तो दृश्यते–'त्वां सुतस्य पीतये' (ऋ. ३.४२.९), 'मध्वः सोमस्य पीतये' (ऋ.१.४७.९) इति ॥

## ९७. ऊतियूतिजूतिसातिहेतिकीर्तयश्च।

'मन्त्रे इति नानुवर्तते' इति। तेन ब्राह्मणे भाषायां चायं विधिर्भवति। 'स्यतेः' इति। 'षोऽन्तकर्मणि' (धा पा. ११४७) इत्यस्य। 'इत्वाभावः' इति। 'द्यतिस्यति' (७.४.४०) इत्यादिना प्राप्तस्येत्वस्याभावः। 'सनोतेर्वा' इति। 'षणु दाने' (धा.पा. १४६४) इत्यस्य। 'हन्तेर्हिनोतेर्वा' इति। यदा हन्तेस्तदा नकारस्येत्वं निपात्यते, यदा हिनोतेस्तदा तु गुणः। 'कीर्तयतेः' इति। 'कॄत संशब्दने' (धा॰पा. १६५३) इत्यस्य चुरादिणिजन्तस्य 'ण्यासश्रन्थो युच्' (३.३.१०७) इति युचोऽपवादः क्तिन् निपात्यते, उदात्तत्वं च। इडभावस्तु 'तितुत्र' (७.२.९) इत्यादिना सिद्धः, 'उपधायाश्च' (७.१.१०१) इतीत्वम्, 'हलि च' (८.२.७७), 'उपधायां च' (८.२.७८) इति दीर्घत्वम्। कालापास्तु युचमपीच्छन्ति—कीर्तनेति ॥

## ९८. व्रजयजोर्भावे क्यप्।

'इज्या' इति। वचिस्वपिसूत्रेण (६.१.१५) संप्रसारणम्। यद्युदात्त इति वर्तते, पित्करणं किमर्थमित्यत आह—'पित्करणमुत्तरत्र तुगर्थम्' इति ॥

## ९९. सञ्ज्ञायां समजनिषदनिपतमनविदपुञ्शीङ्भृञिणः।

'भाव इति न स्वर्यते' इति। पूर्वसूत्रे यद्भावग्रहणं तस्येहास्वरितत्वान्नानुवृत्तिरित्यर्थः। 'समज्या' इति। घञपोः प्रतिषेधे 'क्यप उपसङ्ख्यानम्' (वा. १७२) इति वचनाद्वीभावाभावः। अन्ये तु सञ्ज्ञायामित्येव क्यपो विधानात् रूढ्यनुगमार्थत्वाच्च सञ्ज्ञाग्रहणस्य वीभावाभावमाहुः। न हि वीभावे सति सञ्ज्ञा गम्यते। समज्या = सभा। निषद्या = आपणः, निपत्या = पिच्छिला भूमिः, मन्या गलपार्श्वशिरा, मन्यन्तेऽनयेति कृत्वा। तया हि क्रुद्धो ज्ञायते। क्यपोऽझलादित्वात् 'अनुदात्तोपदेश' (६.४.३७) इत्यनुनासिकलोपो न भवति, तदभावात् तुगपि न भवति। अन्ये तु—'संज्ञायाम्' इति वचनाद्यथा समज्येत्यत्र वीभावो न भवति, एवं मनेरनुनासिकलोपस्तत्र' कृते तुगदीत्याहुः, नात्राप्तवचनमस्ति। विद्यते गृह्यतेऽनयार्थ इति विद्या। सूयतेऽभिपूयते सोमोऽस्यामिति सुत्या = अभिषवदिवसः। 'सुत्यमहस्सत्तमम्' इति स्वार्षं नपुंसकत्वम्। शय्यतेऽस्यामिति शय्या = खट्वादिः। भरणं भृत्या = जीविका। ईयते गम्यतेऽनयेतीत्या = दीपिका।

'भृञोऽसञ्ज्ञायाम्' (३.१.११२) इत्यत्रोक्तम्,—'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' इति। इह तु 'भाव इति न स्वर्यते' इत्युक्तम्, तत्र पूर्वापरविरोधं मन्यमानः पृच्छति—'कथं तदुक्तम्' इति। परिहरति—'भावाधिकारः' इति। सञ्ज्ञायामित्युच्यते, भृञश्च भाव एवोत्पद्यमानेन क्यपा सञ्ज्ञा गम्यते, अतः सञ्ज्ञावशाद्योऽयं भावस्य भृत्याशब्दवाच्यत्वेन व्यापारः स एव तत्र भावाधिकारो विवक्षितः, न तु शास्त्रीयः,

स्वरितत्वनिबन्धन इत्यर्थः। 'सञ्ज्ञायाम्' (३.३.१९) इति वर्तमाने पुनः सञ्ज्ञाग्रहणं भावार्थम्, पूर्वकं हि सञ्ज्ञाग्रहणं कारकेण सम्बद्धम्। असञ्ज्ञायां तु षितन्नेव भवति॥

## १००. कृञः श च।

'योगविभागः' इति। कृञः क्यप् भवति, ततः श च, चकाराद्यथाप्राप्तं चेति। तेन त्रीणि रूपाणि भवन्ति; अन्यथा चकारेणानन्तरस्य क्यप एव समुच्चयः, न तु क्तिन इति क्तिन्न स्यात्। शकारः सार्वधातुकसञ्ज्ञार्थः, तत्र यदा भावकर्मणोः शः, तदा 'सार्वधातुके यक्' (३.१.६७) 'रिङ् शयग्लिङ्क्षु' (७.४.२८) इति रिङादेशः, अन्यत्र शकार एव परतो रिङादेशः, 'अचि श्नुधातु' (६ ४.७७) इत्यादिनेयङ्॥

## १०१. इच्छा।

'इषेर्धानो' इति: 'इषु इच्छायाम्' (धा.पा. १३५१) इत्यस्माद्भावे शप्रत्ययो भवतीति; न त्वकर्तरि कारके, स्वभावात्।

'परिचर्या' इत्यादि। परिचर्यादीनामपि निपातनस्योपसङ्ख्यानम्, परिचर्यादयोऽपि शप्रत्ययान्ता निपातयितव्या इत्यर्थः। तत्र सर्वत्र शप्रत्ययो यक् च निपात्यते। परिचर्या = पूजा। परिसर्या = परिसरणम्, अत्र गुणोऽपि निपात्यते। 'मृग अन्वेषणे' (धा.पा. १९००) चुरादावदन्तः। अत्रातो लोपाभावः, निपातनात्। शे यकि णिलोपः--मृगया। अटतेः शे यकि यका सह टकारस्य द्विर्वचनम्, पूर्वभागे यकारस्य निवृत्तिः, दीर्घत्वमित्येत् सर्वं निपात्यते। हलादिशेषस्तु नास्ति; षाष्ठिके द्विर्वचनेऽभ्याससञ्ज्ञाविधानात्। यदा तु 'अटयर्त्यशूर्णोतीनाम्' (वा. १९८) इति यङन्तात् 'अ प्रत्ययात्' (३.३.१०२) इत्यकारः तदातो लोपे यलोपे च 'अटाटा' इति भवति।

'जागर्तेरकारो वा' इति। वाशब्दात पक्षे शः, तदा 'सार्वधातुके यक्' (३.१.६७,) 'जाग्रोऽविचिण्णल्ङित्सु' (७.३.८५) इति गुणः॥

## १०२. अ प्रत्ययात्।

## १०३. गुरोश्च हलः।

प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधिरित्याह--'हलन्तो यो धातुः' इति। अविशेषवाचिनो गुरुशब्दस्य हलन्ते धातौ न मुख्या वृत्तिः सम्भवतीति तद्वति तच्छब्दो विज्ञायत इत्याह--'गुरुमान्' इति। विपर्ययस्तु न भवति--गुर्वन्तो यो धातुर्हल्वानिति, 'चेष्टायामनध्वनि' (२.३.१२) 'आशंसायां भूतवच्च' (३.३.१३२) इति निर्देशात्। 'कुण्डा, हुण्डा' इति। 'कुडि दाहे' (धा.पा. २७०), 'हुडि संघाते' (धा.पा.२६९)।

## १०४. षिद्भिदादिभ्योऽङ् ।

'गणपरिपठितेषु' इति । गणे तावद्भिदा छिदेत्यङन्ता एव समुदायाः पठ्यन्ते, तेषु भिदिच्छिदिप्रभृतयोऽङः प्रकृतयो यास्ता इह भिदादिशब्देन निर्दिश्यन्त इत्यर्थः । कुत एतत् ? धात्वधिकारात् । 'भिदादिभ्यो धातुभ्यः' इति । 'भिदिर् विदारणे' (धा.पा.१४३९) 'छिदिर् द्वैधीकरणे' (धा पा. १४४०), 'विद ज्ञाने' (धा.पा. १०६४), 'क्षिप प्रेरणे' (धा.पा. १२८५), 'गुहू संवरणे' (धा.पा. ८९६), डुधाञ् धारणपोषणयोः (धा.पा. १०९२), 'मिधृ मेधृ हिंसासंक्लेशनयोः' (धा.पा. ८६८,८६९) 'ऋ गतौ' (धा.पा. १०९८), 'हृञ् हरणे' (धा.पा. ८९९), 'क्षि क्षये' (धा.पा. २३६), अथवा 'क्षि निवासगत्योः' (धा.पा. १४०७), 'तृ प्लवनतरणयोः' (धा.पा. ९६९), 'धृञ् धारणे' (धा.पा. ९००) 'लिख अक्षरविन्यासे' (धा.पा.१३६५), 'चुद प्रेरणे' (धा.पा. १५९२), 'पीड अवगाहने' (धा.पा. १५४४), 'डुवप बीजतन्तुसन्ताने' (धा.पा. १००३), 'वस निवासे' (धा.पा. १९४२), 'मृजूष् शुद्धौ' (धा.पा. १०६६), 'ऋप कृपायाम्' (धा.पा. ७७१), इत्येते वेदितव्याः ।

'जरा' इति । 'ऋदृशोऽङि गुणः' (७.४.१६) । 'गुहा गिर्योषध्योः' इति । गिरिशब्देन तदेकदेश उच्यते, अन्यत्र गूढिः, क्तिन्नेव भवति । 'आरा धारा' इति । गुणे कृते दीर्घत्वं च निपात्यते । 'रेखा लेखा' इति । लिखेः पक्षे लकारस्य रेफो निपात्यते, गुणश्च । 'चूडा' इति । चुदेर्डत्वं दीर्घत्वं च निपात्यते । 'भित्तिरन्या' इति । भिद्यत इति भित्तिः = कुडचम् । छित्तिः = छिद्रम् । 'आरा शस्त्र्याम्' इति । शस्त्री शस्त्रजातिः, स्वभावाच्च विशेषः परिगृह्यते । आरा = प्रतोदः, अर्यन्ते प्रेर्यन्तेऽनयाऽश्वा इति कृत्वा । 'आर्तिरन्या' इति । आङोऽर्तेश्च 'उपसर्गादृति धातौ' (६.१.९१) इति वृद्धिः । धार्यते अपात्यते इति धारा । 'धृतिरन्या' इति । प्रीतिर्धैर्यं च ॥

## १०५. चिन्तिपूजिकथिकुम्बिचर्चश्च ।

'युचि प्राप्ते' इति । सर्वेषामेव ण्यन्तत्वात् । कुम्बा = अग्रम् । 'उदीचीनकुम्बां शम्याम्' इति हि दृश्यते । चकारोऽनुक्तसमुच्चयार्थः । तुलयतेस्तुला । अथ 'गुरोश्च हलः' (३.३.१०३) इत्यस्यानन्तरं कस्मान्न कृतम्, किमङ्विधानेन ? तत्रापि कर्तव्यम्, को ह्यत्र विशेषः । अपर आह--अङ्विधानसामर्थ्यात् पक्षे णिलोपो न भवति, 'चिन्तिया' इत्यादि भवतीति, नात्राप्तभाषितमस्ति ॥

## १०६. आतश्चोपसर्गे ।

'श्रदन्तरोः' इत्यादि । उपसर्गे यादृशी वृत्तिः, प्रत्ययोत्पत्तिलक्षणा तादृश्येव तयोरपि भवतीत्यर्थः । तत्र श्रद्धाशब्दस्तारकादिपाठात् सिद्धः । यदयम् 'अन्तर्धौ' इत्युपसर्गनिबन्धनं किप्रत्ययं निर्दिशति तज्ज्ञापयति—अन्तःशब्दः उपसर्गवृत्तिरिति । एवं च कृत्वा अन्तर्णयतीति 'उपसर्गादसमासेऽपि' (८.४.१४) इति णत्वमपि भवति ॥

## १०७. ण्यासश्रन्थो युच्।

'ण्यद् भविष्यति' इति। ननु वासरूपविधिना ण्यत् स्यात् स चास्त्रियामिति प्रतिषिद्धः? तत्राह— 'वासरूपप्रतिषेधश्च' इति। 'उत्सर्गापवादस्य' इति। समाहारद्वन्द्वः। द्वयोरप्युत्सर्गापवादयोः स्त्र्यधिकाराद्स्त्रियो-रित्यर्थः। 'घट्टिवन्दिविदिभ्यश्च' इति। विदिर्लाभार्थो गृह्यते, न ज्ञानार्थः; 'विद चेतनाख्याननिवासेषु' (धा.पा. १७०८) इत्यस्यैव चुरादेर्वेदनेति ज्ञाने सिद्धत्वात्। न च वेत्तेः क्तिनो निवृत्त्यर्थं वचनम्; संवित्तिरिति दर्शनात्।

'अन्वेषणा' इति। 'इष आभीक्ष्ण्ये' (धा.पा. १३५१), 'इष गतौ' (धा पा. ११२७) इति वा। युचश्चकारश्चिन्त्यप्रयोजनः, 'उदात्तः' इति हि वर्तते तत्सामर्थ्यादन्तोदात्तत्वं भविष्यति; प्रत्ययस्वरेणैवाद्यु-दात्तत्वसिद्धेः॥

## १०८. रोगाख्यायां ण्वुल् बहुलम्।

'आख्याग्रहणम्' इत्यादि। यदि प्रत्ययान्तं रोगस्य नाम भवति, एवं प्रत्ययो भवति, नान्यथेत्येवमर्थमा-ख्याग्रहणमित्यर्थः। तेन पदान्तरद्योत्ये रोगे न भवति—बुभुक्षा भस्मकेनेति। भस्मको नाम रोगविशेषस्तत्राशित-पीतादिकं शरीरस्य व्यापकं न भवति, सर्वदा च बुभुक्षा भवति। 'बहुलग्रहणं व्यभिचारार्थम्' इति। 'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव' (न्यासः. ३.३.१) इत्ययं व्यभिचारः। 'प्रच्छर्दिका' इति। 'छर्द वमने' (धा.पा. १५८९) वमिः। मुहुर्मुहुः प्रवाहयति, प्रवर्तयतीति ग्रहणी प्रवाहिका। 'विचर्चिका' इति। 'चर्च अध्ययने' (धा.पा. १७१२), प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः, पामा विचर्चिका। शिरोर्तिः शिरस्तोदः। 'अर्द हिंसायाम्' (धा.पा. १८२८), 'तितुत्र' (७.२.९) इतीडभावः, पूर्वपदस्य रुत्वम्, 'अतो रोरप्लुतात्' (६.१.११३) इत्युत्वम्, 'आद्गुणः' (६.१.८७), 'एङः पदान्तादति' (६.१.१०९)।

'धात्वर्थनिर्देशे' इति। क्रियानिर्देश इत्यर्थः।

'इक्श्तिपौ धातुनिर्देशे' इति। धात्वनुकरण इत्यर्थः। बहुलवचनाच्च क्वचिन्न भवति—'गुप्तिज्किद्भ्यः सन्' (३.१.५) 'मान्बधदान्शान्भ्यः' (३.१.६) इति। श्तिपः शित्करणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिन् शबादयो भवन्ति। एवयभावकर्मवाचिन्यपि। क्वचिद्यगपि भवति; यथा—'विभाषा लीयतेः' (६.१.५१), अत्र लीलीङोर्यका निर्देशः कृतः, श्यनि तु लीङ एव ग्रहणं स्यात्, न तु लीनातेः। कथं पुनः शित्करणस्य सामर्थ्यम् यावता पिबतिर्जिघ्रतिरित्यादौ श्तिपि पिबाद्यादेशार्थं ग्लायस्यावावास्वप्रतिषेधार्थं च शित्करणं स्यात्? एवं तर्हि 'उपसर्गात् सुनोतिसुवतिस्यति' (८.३.६५), 'विभाषा लीयतेः' (६.१.५१) 'भवतेर्ण उपसङ्ख्यानम्' 'ध्यायतेः संप्रसारणं च' (वा. २९२) इत्येवमादिनिर्देशाच्छबादयो भविष्यन्ति।

'वर्णात्' इति। वर्णवाचिनो वर्णानुकरणादित्यर्थः। न तु वर्णादुच्चार्यमाणादिति। किं सिद्धं भवति? ककार इत्यादौ साच्कादपि सङ्घातात्कारः सिद्धो भवति; अकारस्योच्चारणार्थत्वेन वर्णमात्रस्यानुकार्यत्वात्। ककारस्येत्सञ्ज्ञा प्रयोजनाभावान्न भवति। बहुलग्रहणात् 'अस्य च्वौ' (७.४.३२), 'यस्येति च' (६.४.१४८)

इत्यादौ कारप्रत्ययो न भवति। बहुलवचनादेव क्वचिद्वर्णसंघातादनुकरणादपि भवति--एवकार इति। अधातुविहितत्वेऽपि कारप्रत्ययस्य कृत्सञ्ज्ञाधिकारसामर्थ्याद्भवति। तेन कृदन्तत्वात् प्रातिपदिकसञ्ज्ञा भवति, इडागमस्त्वनार्धधातुकत्वान्न भवति। किमर्थं पुनः कारप्रत्ययो विधीयते, यावता करणं कारः, अस्य कारोऽकारः इत्येवमस्तु? नैवं शक्यम्; एवं हि विज्ञायमाने ककारकरणमिति न स्यात्, करोतेः पौनरुक्त्यात्।

'रादिफः' इति। कारस्यायमपवादः। कथं तर्हि 'रकारादीनि नामानि'? वासरूपविधिना कारोऽपि भविष्यति, पूर्ववत्कृतसञ्ज्ञायां प्रातिपदिकत्वम्।

'मत्वर्थाच्छः' इति। मतुना समानार्थो मत्वर्थः, ततः स्वार्थे छः। बहुलवचनादभत्वेऽपि 'यस्येति' (६.४.१४८) लोपः, पूर्ववत् प्रातिपदिकत्वम्। बहुलवचनात् क्वचिन्न भवति, यथा--'तसौ मत्वर्थे' (१.४.१९) इति। बहुलवचनादेव च मतुवर्थशब्दादपि भवति--शैषिकान्मतुवर्थीयादिति।

'आजिः' इति। बहुलवचनाद्वीभावाभावः।

'इक् कृष्यादिभ्यः' इति। धात्वर्थनिर्देशे ण्वुलोऽपवादः॥

## १०९. सञ्ज्ञायाम्।

उद्दालः = श्लेष्मातकः, तस्य पुष्पाणि भज्यन्ते यस्यां सा उद्दालपुष्पभञ्जिका। वरणपुष्पाणि प्रचीयन्ते यस्यां वरणपुष्पप्रचायिका। अभ्यूषः = पूलिकाऽपूपविशेषः, स खाद्यते यस्यां सा अभ्यूषखादिका। तालस्य भञ्जनं यस्यां सा तालभञ्जिका। एवं शालभञ्जिका॥

## ११०. विभाषाख्यानपरिप्रश्नयोरिञ् च।

ननु पूर्वं परिप्रश्नः, पश्चादाख्यानं भवति, तत्कथं क्रमव्यत्यासेन सूत्रे पूर्वमाख्यानस्य निर्देशः, पश्चात् परिप्रश्नस्य? तत्राह--'पूर्वं परिप्रश्नः' इत्यादि। सत्यं पूर्वं प्रश्नः पश्चादाख्यानमिति, सूत्रे तु लक्षणवशाद्विपर्यय आश्रित इत्यर्थः। स्वयं तु व्यत्यासेन व्याचक्षाणोऽर्थक्रमेण व्याचष्टे, उदाहरति च। 'कारिकाम्' इति। ण्वुल्। 'क्रिया कृत्याम्' इति। 'कृञः श च' (३.३.१००)। चकारात् क्यप् च। 'कृतिम्' इति। योगविभागात् क्तिन्। 'गणिम्' इति। 'गण सङ्ख्याने' (धा.पा. १८५३), चुरादिरदन्तः। 'गणनाम्' इति। युच्। 'एवम्' इत्यादि। कां पाचिकां, पचाम्। षित्वादङ्। पक्तिः--'स्थागापापच' (३.३.९५) इति क्तिन्। 'कां याजिम्, याजिकाम्। कां पाठि पाठिकां पठितिम्'। तितुत्रेष्वग्रहादीनामिति वचनादिट्॥

## १११. पर्यायार्हर्णोत्पत्तिषु ण्वुच्।

'परिपाटी' इति। पटेः परिपूर्वात् 'इणजादिभ्यः' (वा. ३२३) इति इण्। तदन्तात् 'कृदिकारादक्तिनः' (ग.सू. ५०) इति ङीष्। 'तद्योग्यता' इति। तच्छब्देन धात्वर्थ उच्यते। 'परस्मै' इति। 'धारेरुत्तमर्णः'

(१.४.३५) इति संप्रदानसञ्ज्ञा। 'परस्य' इति तु पाठे परस्य वस्त्रिवत्यर्थः। धार्यते = बध्यते। 'ग्रामगामिका' इति। कर्मणि षष्ठ्याः समासः। 'उदपादि' इति। 'चिण् ते पदः' (३.१.६०) इति कर्तरि चिण्। 'स्वरार्थम्' इति। 'चितः' (६.१.१६३) इत्यन्तोदात्तत्वं यथा स्यात्। ण्वुलि तु 'लिति' (६.१.१९३) इति प्रत्ययात् पूर्वमुदात्तं स्यात्॥

## ११२. आक्रोशे नञ्यनिः।

आक्रोशः = शपनम्। न क्षेपः; स्वभावात्। अकरणिरित्यादिकं शपनवाक्यम्॥

## ११३. कृत्यल्युटो बहुलम्।

'स्नानीयम्' इति। करणे कृत्यः। 'दानीयः' इति। संप्रदाने अवसेचनादौ कर्मणि ल्युट्।

'प्रस्कन्दनः, प्रपतन' इति। कर्तरि। बहुलग्रहणं न कर्तव्यम्। आरम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहितास्ततोऽन्यत्र भविष्यन्ति, ततो बहुलग्रहणात् कृन्मात्रस्य स्वार्थव्यभिचारः साधितो भवति। 'तयोरेव कृत्यक्त-खलर्थाः' (३.४.७०), 'कर्तरि कृत्' (३.४.६७) इत्ययं स्वर्थनिर्देशः, 'बाहुल्याद्भावादिषु भवन्ति क्वचिदेव त्वन्यत्र' इति ज्ञापनार्थः।

'पादहारकः' इति। कर्मणि ण्वुलि पञ्चम्यन्तस्य साधनं कृतेति समासः। 'गलेचोपकः' इति। 'अमूर्धमस्तकात्' (६.३.१२) इत्यलुक्॥

## ११४. नपुंसके भावे क्तः।

ननु च 'तयोरेव कृत्यक्तखलर्थाः' (३.४.७०) इति नपुंसके भावे क्तः सिद्धः? सत्यं भूते सिद्धः, कालसामान्ये तु नपुंसके न प्राप्नोतीत्ययमारम्भः। इह सकर्मकेभ्योऽपि यथा भावे घञादयो भवन्ति—ओदनस्य पाकः, ओदनस्य भोजनमिति, तथाऽयमपि क्तः सकर्मकेभ्यो भावे भवति; अत्राकर्मकेभ्य इत्यवचनादिति केचिदाहुः। अथ तदा कर्मणि का विभक्तिर्भवति? कृद्योगलक्षणा कर्मणि षष्ठी। सा निष्ठायोगे प्रतिषिध्यते? नपुंसके भावे उपसङ्ख्यानमिति षष्ठी भविष्यति—'ओदनस्य भुक्तमुदकस्य पीतमिति। अस्मिन् पक्ष एतदर्थोऽप्ययमारम्भः, न हि तयोरेवेत्यनेन सकर्मकेभ्यो भावे क्तः सिध्यति। अन्ये तु तयोरेवेत्येतदस्यापि क्तस्य विषयव्यवस्थापकं मन्यन्ते। तद्धि 'निष्ठा' (३.२.१०२) इति विहितस्य क्तस्य भावमर्थं विधत्ते। 'अकर्मकेभ्यः' इति च विषयं व्यवस्थापयति। अस्य तु 'भावे क्तः' (३.३.११४) इत्यनुवादेनाकर्मकेभ्य इति विषयं व्यवस्थापयति॥

## ११५. ल्युट् च।

'योगविभाग उत्तरार्थः' इति। उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात्, क्तस्य मा भूदित्येवमर्थम्॥

## ११६. कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ।

कर्तुरिति कर्मणि षष्ठी । 'उभयप्राप्तौ कर्मणि' (२.३.६६) इति नियमात् 'येन' इति कर्तरि तृतीया, तदाह—'येन कर्मणा संस्पृश्यमानस्य' इति । कस्य शरीरसुखमित्यपेक्षायां कर्तुः सन्निधानात्तस्यैव विज्ञायत इत्याह—'कर्तुः शरीरसुखमुत्पद्यते' इति । किमिदं शरीरस्य सुखमिति ? ननु शरीरव्यतिरिक्तस्यात्मनो धर्मः सुखम् ? सत्यम्; यस्मिन् सुखे समुत्पन्ने शरीरेऽपि स्वास्थ्यमुत्पद्यते तच्छरीरसुखमित्युच्यते । 'नित्यसमासार्थं वचनम्' इति । कथं तर्हि 'उभयप्राप्तौ कर्मणि' (२.३.६६) इत्यत्रोदाहृतम्—साधु खलु पयसः पानं देवदत्तेनेति ? यत्र प्रतिकूलतया सुखं नोत्पद्यते तत्र तदुदाहृतं द्रष्टव्यम् । 'पयःपानं सुखम्' इति । तत्र पानेन सुखं न स्पर्शेन, इदं तू वाहर्तुमुचितम्—'चन्दनानुलेपनं सुखम्' इति ? नैष दोषः; यत्र संस्पर्शनमन्तरेण न सुखमुत्पद्यते तद्विषयोपलक्षणं संस्पर्शग्रहणम् । तत्र स्पर्शनादेव सुखं भवतु तत्पूर्वकात् पानादेर्वा सर्वत्र भविष्यति ।

'तूलिकायाः' इति । तूलेन निर्मितः कशिपुस्तूलिका, तत्र शयित्वोत्थानं सुखम् । 'अग्निकुण्डस्योपासनम्' इति । अत्राग्निकुण्डेनास्पृश्यमानस्यैव सुखम् । 'गुरोः स्नापनम्' इति । यद्यप्यत्र गुरुः सुखानुभवस्य कर्ता, तथापि न तदत्राश्रितम्, अव्यभिचारात्, किं तर्हि ? ल्युट्प्रकृतौ यत्कर्तृत्वं तदाश्रितम् तदाह—'स्नापयतेर्न गुरुः कर्ता' इति । 'मानसी तु प्रीतिः' इति । पुत्रेण बलवत् परिष्वज्यमानस्य शरीरतोद एव भवति, मानसी तु प्रीतिः । ननु प्रत्युदाहरणेष्वपि सर्वत्र ल्युट् प्रयुज्यते, तत्कथं प्रत्युदाहरणत्वम् ? तत्राह—'सर्वत्रासमासः प्रत्युदाह्रियते' इति ॥

## ११७. करणाधिकरणयोश्च ।

'करणे चाधिकरणे चाभिधेये' इति । उपपदे तु करणाधिकरणे न भवतः, करणाधिकरणयोरित्यत एव निर्देशात् । क्रियतेऽनेनेति करणम्, अधिक्रियतेऽस्मिन्नित्यधिकरणमिति करणाधिकरणसाधनौ ह्येतौ । यद्येवम्, सति निर्देशे प्रत्ययविधानम्, सति च प्रत्ययविधाने निर्देश इतीतरेतराश्रयः प्राप्नोति ? न; नित्यत्वाच्छब्दानां नास्मान्निर्देशात्करणाधिकरणशब्दौ स्तः । 'इध्मप्रव्रश्चनः' इति । कर्मणि षष्ठ्याः समासः । दात्रादिरुच्यते ।

'पलाशशातनः' इति । 'शद्लृ शातने' (धा.पा. १४२८) हेतुमण्णिच्, 'शदेरगतौ तः' (७.३.४२) इति तत्वम् । येन दण्डेन वृक्षस्य पर्णानि पात्यन्ते स एवमुच्यते । 'गोदोहनी' सवतुधानी पात्री । योगद्वयार्थं येन नाप्राप्तिन्यायेन घञोऽपवादः । अजपौ स्त्रीप्रत्ययांश्च परत्वाद्बाधते । उक्तं हि—'अजब्भ्यां स्त्रीखलनाः; स्त्रियाः खलनौ विप्रतिषेधेन' (कात्या.वा. २२३९-४०) ॥

## ११८. पुंसि सञ्ज्ञायां घः प्रायेण ।

'दन्तच्छदः' इति । 'छद आवरणे' (धा.पा. १८३३) चुरादिः, 'छादेर्घेऽद्व्युपसर्गस्य' (६.४.९६) इति ह्रस्वः । एत्यास्मिन् कुर्वन्ति व्यवहारमित्याकरः = उत्पत्तिस्थानम् ॥

## ११९. गोचरसंचरवहव्रजव्यजापणनिगमाश्च ।

'गावश्चरन्त्यस्मिन्' इति । रूढिशब्दोऽयं विषयपर्यायः, तस्य यथाकथंचिन्निर्वचनम् । तथा च गोचरः, इन्द्रियगोचर इत्याद्यपि । 'सञ्चरन्तेऽनेन' इति । 'समस्तृतीयायुक्तात्' (१.३.५४) इत्यात्मनेपदम् । सञ्चरः = मार्गः । वहः = स्कन्धः । व्रजः = गोष्ठम् । व्यजः = तालवृन्तम् । आपणः = पण्यस्थानम् । निगमः = छन्दः । अयं योगः शक्योऽवक्तुम्, पूर्वेणैव घः सिद्धः । 'हलश्च' (३.३.१२१) इति घञ् कस्मान्न भवति ? प्रायेणग्रहणं तत्रानुवर्तते, यथा—कषो निकष इत्यत्र घञ् न भवति, एवं गोचरादिष्वपि न भविष्यति ।

## १२०. अवे तृस्त्रोर्घञ् ।

अवतारः = रूपादिः । अवस्तारः = जवनिकादिः । नद्यवतारः = तीर्थम् । 'प्रायेणग्रहणानुवृत्तेरसञ्ज्ञाया-मपि भवति' इति । ननु घञ् विधेयः प्रधानम्, तस्य प्रायग्रहणमुपाधिः, ततश्च संज्ञायामेव क्वचिन्न भवतीत्यर्थः स्यात् ? एवं मन्यते—सञ्ज्ञायामित्युपाधेरेव प्रायग्रहणमुपाधिः । उपाधेरुपाधिर्भवति, विशेषणस्यैव वा विशेषणमिति तु नाश्रीयते; लक्ष्यानुरोधादिति ॥

## १२१. हलश्च ।

लेख = लेखनी । वेष्टः = वस्त्रादिः । 'वेष्ट वेष्टने' (धा.पा. २५५) विद्यते ज्ञायते अनेन धर्माधर्मा-विति वेदः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः वीरुद्विशेषः । वीमार्गः = सम्मूहनी, पूर्ववत् कुत्वदीर्घत्वे ॥

## १२२. अध्यायन्यायोद्यावसंहाराधारावायाश्च ।

'आवयन्ति' इति । एत्यावयन्तीत्यर्थः ।

'चकारोऽनुक्तसमुच्चयार्थः' इति । 'घञ्विधाववहारावायानामुपसंख्यानम्' (कात्या वा. २२३६) इति वार्तिकम् । वृत्तिकारस्तु आधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं साधयति स्म, विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण ॥

## १२३. उदङ्कोऽनुदके ।

तैलमुदच्यते, उद्ध्रियतेऽस्मिन्निति तैलोदकम् = चर्ममयं भाजनम् ।

'घः कस्मात्' इति । 'पुंसि सञ्ज्ञायाम्' (३.३.११८) इत्यादिना घे प्राप्ते घञ् विहितः, ततश्च तेन मुक्ते घ एव भवितुमर्हतीति भावः । 'विशेषाभावात्' इति । ननु घे सति प्रत्ययस्वरः घञि ञित्स्वरेणाद्युदात्तः, तत्कथं विशेषाभावः ? तत्राह—'घञ्यपि हि' इत्यादि ॥

## १२४. जालमानायः ।

'जल घात्ये' (धा.पा. ८३३) इत्यतः 'ज्वलितिकसन्तेभ्यो णः' (३.१.१४०) इति णे कृते जालमिति भवति। आनीयन्ते मत्स्यादयोऽनेनेत्यानायः ॥

## १२५. खनो घ च ।

घित्करणं किमर्थम्, यावता न खनः कश्चिदवयवः कुत्वभागस्ति ? ज्ञापनार्थं तु, एतज्ज्ञापयति—अन्येभ्योऽप्ययं भवतीति। तेन भजेर्भगः, पदेः पदम्—करणे घः; 'खल सञ्चलने' (धा.पा. ५४५), अधिकरणे घः, खल एवमादि सिद्धं भवति। आखनादयः खनित्रवचनाः ॥

## १२६. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।

'तद्दुरः' इति। 'ससुरोरधिकरणे' (वा. २५४) इति निर्देशात् दुःशब्दो रेफान्तोऽप्यस्ति। 'सम्भवात्' इति। दुर एव कृच्छ्रे सम्भवः, इतरयोरेवाकृच्छ्रे, अतः सामान्येनोक्तावपि विशेषणस्य विषयविभागो लभ्यत इति भावः। 'ईषत्कार्यम्' इति। मनागित्यर्थे ईषच्छब्दः ॥

## १२७. कर्तृकर्मणोश्च भूकृञोः ।

'कर्तरि कर्मणि चोपपदे' इति। प्रत्ययार्थत्वं तु कर्तृकर्मणोर्न भवति; चकारस्योपपदसमुच्चयार्थत्वात्। किं च, यदि तयोः प्रत्ययार्थत्वं स्यात् ईषदादिष्वेवोपपदेषु प्रत्ययः स्यात्, ततश्च खित्करणमनर्थकं स्यात्। अनव्ययस्य हि मुम् विधीयते। तस्मात् सुष्ठूक्तम्—कर्तरि कर्मणि चोपपदे इति। अत्र चकारः सन्नियोगार्थः क्रियते, यदा कर्तृकर्मणोरीषदादीनां च युगपदुपपदत्वं तदा प्रत्ययो भवति, समासस्तु युगपत् पर्यायेण वा भवति। किं पुनरत्र परमुपपदम् ? कर्तृकर्मणी। कुत एतत् ? खलः खित्करणात्। तद्धि मुमर्थम्, मुमागमश्चानव्ययस्य। तत्रेषदादीनां धातोश्चानन्तर्ये खित्करणमनर्थकं स्यात्। ननु मा भूदीषदो धातोश्चानन्तर्यम्, यत्रैतन्नास्ति—'ते प्राग् धातोः' (१.४.८०) इति, यत्र त्वस्ति सुदुरोः, तत्र तयोरेव प्राक् प्रयोगो युक्तः, खित्करणं त्वीषदाढ्यम्भवन्तीम् इत्यादौ मुमर्थं स्यात्, सुदुरोरपि 'कृदग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या.प.९३) इति तत्रापि मुमर्थं स्यात्, यथा 'उदिकूले रुजिवहोः' (३.२.३१) कूलमुद्रुज इति ? वक्तव्योऽत्र परिहारः—'कृत्यल्युटो बहुलम्' (३.३.११३) इति। बहुलग्रहणं वाऽत्राश्रयणीयम्। 'ईषदाढ्यम्भवम्' इति। अनाढ्येन भवता सुखेनाढ्येन भूयत इत्यर्थः। 'ईषदाढ्यङ्करः' इति। अनाढ्यो देवदत्तः सुखेनाढ्यः क्रियत इत्यर्थः। 'स्वाढ्येन भूयते' इति। प्रमादपाठोऽयम्। अत्र हि खलभावात् सुशब्दस्य धातोः प्राक् प्रयोगेण भाव्यम्, तस्मादाढ्येन सुभूयते इति पाठः ॥

## १२८. आतो युच् ।

## १२९. छन्दसि गत्यर्थेभ्यः ।

## १३०. अन्येभ्योऽपि दृश्यते ।

'अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्यः' इति । गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्य इत्यर्थः । अथ वा नञोऽत्र प्रश्लेषः—अन्येभ्योऽपि धातुभ्यः, कोऽर्थः ? अगत्यर्थेभ्य इति ।

'भाषायाम्' इति । 'छन्दसि' इत्यधिकारादयमारम्भः । 'शासु अनुशिष्टौ' (धा.पा. १०७५), 'युध संप्रहारे' (धा.पा. ११७३), 'दृशिर् प्रेक्षणे' (धा.पा. ९८८), 'ञिधृषा प्रागल्भ्ये' (धा.पा. १२६९), 'मृष तितिक्षायाम्' (धा.पा. ११६४) ॥

## १३१. वर्तमानसामीप्ये वर्तमानवद्वा ।

अत्र केचिद्व्याचक्षते—"समीपस्य भावः सामीप्यम्, भावे ष्यञ्, वर्तमानस्य सामीप्यं वर्तमानसामीप्यम्, षष्ठीसमासः, वर्तमानस्य भूतभविष्यन्तौ प्रति यत् सामीप्यं तत्र वर्तमानवत् प्रत्ययातिदेशोऽनर्थकः, ये हि वर्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् भवन्त्येव, अतो वर्तमानं प्रति भूतभविष्यतोर्यत् सामीप्यं तदत्र वर्तमानसामीप्यमित्युच्यते, समीपद्वारकाच्च वर्तमानस्य सामीप्येनाभिसम्बन्धान् समासो नानुपपन्नः, यथा–देवदत्तस्य गुरुकुलमिति । गुणेन नेति प्रतिषेधोऽपि न भवति, यस्माद्गुणशब्दस्य सम्बन्धिशब्दत्वात् गुणाक्षिप्तस्य गुणिन एव समासनिषेधः । न च वर्तमानः सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणित्वात्" इति । तदिदं क्लिष्टं व्याख्यानम्, ष्यञ्निर्देशश्च केवलं गौरवायैव स्यादित्यन्यथा व्याचष्टे—'समीपमेव सामीप्यम्' इति । न चास्मिन् पक्षे ष्यञो वैयर्थ्यमित्याह—'ष्यञः स्वार्थिकत्वं ज्ञाप्यते' इति । स्वार्थेऽपि ष्यञ् भवतीति एतमर्थं ज्ञापयितुं ष्यञा निर्देशः कृत इत्यर्थः । 'चातुर्वर्ण्यादिसिद्ध्यर्थम्' इति । आदिशब्देन चातुराश्रम्यम् । अन्यस्य भावोऽन्यभावः, अन्यभाव एवान्यभाव्यमित्येवमादीनां ग्रहणम् । 'कदा देवदत्त आगतोऽसि' इति । भूतकालेन प्रश्नः, उदाहरणे भूतकालाभिव्यक्तयेऽयमेव इत्यागमनाविनाभूतं यद्रूपं श्वेतपरिकरबन्धादियुक्तं तद्रूपं प्रतिनिर्दिश्यते । इदानीमागममित्यर्थः । एवं च कदेति प्रश्ने चोत्तरं सङ्गच्छते, सामीप्यं च द्योतितं भवति । 'आगमम्' इति । लुङ्, मिपोऽम्भावः, लृदित्वादङ् । 'कदा देवदत्त गमिष्यसि' इति । अत्रापि भविष्यत्कालेन प्रश्नः, उदाहरणे भविष्यत्कालाभिव्यक्तये । 'गन्तास्मि' इति । अनद्यतने लुट् । अत्रापि सामीप्यं यथासम्भवं द्रष्टव्यम् ।

अथ वत्करणं किमर्थम्, यावताऽसत्यपि तस्मिन प्रत्ययाधिकारात् वर्तमाने ये प्रत्यया विहितास्ते वर्तमानसामीप्ये भवन्तीत्येषोऽर्थो लभ्यत एव, नार्थो वत्करणेनात आह–'वत्करणं सर्वसादृश्यार्थम्' इति । असति वत्करणे वर्तमाने ये प्रत्यया इत्यनेन प्रत्ययानां रूपमात्रं लक्ष्येत, ततश्च सङ्करोऽपि स्यात्—अन्यस्माद्धातोर्यो वर्तमाने विहितः प्रत्ययः स धात्वन्तरादपि स्यात् । वत्करणे तु सति सर्वसादृश्यावगतेः सङ्करो न भवति । सर्वसादृश्यमेव दर्शयति—'येन विशेषणेन' इति । आदिशब्देनोपाधेरभिधेयस्य च ग्रहणम् । 'पवमानः, यजमानः' इति । वर्तमाने 'पूङ्यजोः शानन्' विहितः, सामीप्ये स ताभ्यामेव भवति । 'अलङ्करिष्णुः' इति । तच्छीलादिविशिष्टे कर्तर्यलंपूर्वात् कृञः इष्णुच् विहितः, स सामीप्येऽपि तस्मादेव तत्पूर्वादेव तस्मिन्नेवार्थे भवति । परुत् पूर्वस्मिन् संवत्सरे ।

'यो हि मन्यते' इत्यादिना प्रतिपत्तृविशेषं प्रति प्रकरणं प्रत्याचष्टे । 'कालान्तरगतिस्तु' इति । कालान्तरं वर्तमानसमीपो भूतो भविष्यंश्च कालः, तस्य या गतिः = प्रतीतिः सा 'अयं गच्छामि' इत्यतो वाक्यात्

'कदा देवदत्त गमिष्यसि' इत्यस्योत्तरत्वेन प्रयुक्ताद्भवति, ततः किमित्यत्राह—'न च' इति । 'वाक्यार्थप्रतिपत्तारम्' इति । वाक्यार्थोऽयं न पदार्थः इति यः प्रतिपद्यते स वाक्यार्थप्रतिपत्ता, कर्मणि षष्ठ्याः समासः । 'कर्तरि च' (२.२.१६) इति प्रतिषेधस्त्वनित्यः । 'जनिकर्तुः' (१.४.३०) इति निर्देशात्, शेषषष्ठ्या वा समासः । 'प्रकरणम्' इति । इत आरभ्याष्टसूत्री प्रकरणशब्देनोच्यते । 'तथा च—श्वः करिष्यति' इत्यादि । यदि वाक्यगम्योऽपि कालः पदसंस्कार उपयुज्यते, तदा नैवमाद्युपपद्यते—अनद्यतने लुटैव भवितव्यमिति कृत्वा ॥

## १३२. आशंसायां भूतवच्च ।

'तस्याश्च भविष्यत्कालो विषयः' इति । भविष्यत्कालोऽस्येति भविष्यत्कालो धात्वर्थः । स आशंसाविषयः, सा तु वर्तमानकालैव । एवं च सामर्थ्याद्भविष्यद्विषयोऽयमतिदेशो विज्ञायत इत्याह—'भविष्यत्काले' इति । 'आशंसायां गम्यमानायाम्' इति । आशंस्यमानक्रियावचनाद्धातोरित्यर्थः । उपाध्यायश्चेदित्यादिकमाशंसावाक्यम्, तत्रोपाध्यायागमनं व्याकरणाध्ययनं चोभयमाशंस्यमानमित्युभयत्रापि प्रत्ययः । 'अध्यगीष्महि' इति । 'विभाषा लुङ्लृङोः' (२.४.५०) इति इङो गाङादेशः, 'गाङ्कुटादिभ्यः' (१.२.१) इति सिचो ङित्वम्, घुमास्थादिसूत्रेण (६.४ ६६) इत्वम् ।

'सामान्यातिदेशे' इति । अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते, न तु तद्विशेषोऽनद्यतनः । सामान्यातिदेशे च विशेषो नातिदिश्यते, ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्युक्ते ब्राह्मणमात्रप्रयुक्तं कार्यं गम्यते, न तु माठरादिविशेषप्रयुक्तम्, तेनानद्यतनप्रयुक्तौ लङ्लिटौ न भवतः । इहानिष्पन्ने निष्पन्नशब्दः शिष्यः, शासितव्यः, देवश्चेद् वृष्टो निष्पन्ना शालय इति वस्तुस्वरूपकथनमेतत्, नात्राशंसा, तेन सूत्रेणाप्राप्तिः ? नैष दोषः; अप्शालिबीजसंयोग एव निष्पत्तिः शालीनां तत्रैव निष्पत्तेर्वृत्तेः । अत एव लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । देवश्चेद्वृष्टः संपत्स्यन्ते शालय इत्युक्ते, वक्तारो भवन्ति—मैवं वोचः, संपन्नाः शालय इति ब्रूहीति, हेतुभूतकालसंप्रेक्षितत्वात् सिद्धम् । हेतुभूतस्य वर्षादेर्यः कालः स एव कार्यस्य संप्रेक्षितः स एव कार्यस्यापि कालो व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनाय । ततश्च कारणस्यैव कार्यरूपेण विवक्षितत्वादभेदाध्यवसायात् कारणस्य भूतत्वात् कार्यस्यापि भूतत्वं सिद्धमित्यर्थः । इह तु कश्चिदध्वानं जिगमिषुः पश्यति—अमुष्मिन्नवकाशे कूपो भविष्यतीति, अनद्यतने कूपो भवितेति समासाद्य कूपोऽस्तीति, अतिक्रम्य कूपोऽभूदिति, अतिक्रम्योषितत्वात् कूप आसीदिति, अतिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति; तदत्र सर्वत्र कूपसत्ताया वर्तमानत्वं भूतभविष्यद्रूपत्वमिति सर्वत्र लडेव प्राप्नोति, लुङादयस्तु वक्तव्याः ? तदाह—'अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तृविद्यमानार्थत्वात्' इति । भवन्तीशब्दो लटः पूर्वाचार्याणां संज्ञा । यदि वचनेन वर्तमान एव लुङादयो विधीयन्ते कूपेऽभूदिति प्रयोक्तव्ये कूपो भविष्यतीत्यपि प्रयुज्येत, तस्माद्यथास्वमेताः विभक्तयः कालेषु प्रयुज्यन्ते । कथम् ? इन्द्रियव्यापारस्य कालस्य कूपसत्तां प्रति भेदकत्वेनाश्रयणात् तस्या अपि तत्कालत्वम् । ततश्चेन्द्रियव्यापारे भाविनि भविष्यद्विभक्तिः, वर्तमाने वर्तमानविभक्तिः, भूते भूतविभक्तिरिति सिद्धमिष्टम् । उक्तं च—

> सत्तामिन्द्रियसम्बन्धात् सैव सत्ता विशेष्यते ।
> भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
> अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
> यः समासादनाद्भेदः स तत्र न विवक्षितः ॥ (वा.प. ३.९.११२,११३) इति ॥

## १३३. क्षिप्रवचने लृट् ।

'वचनग्रहणं पर्यायार्थम्' इति । असति तस्मिन् 'स्वं रूपं शब्दस्य' (१.१.६८) इति वचनात् क्षिप्रशब्दे एवोपपदे स्यात्, सति तु पर्यायेष्वपि भवति। ननु 'भूतवच्च' (३.३.१३२) इत्यस्यायमपवादः, स च भविष्यत्कालविषयस्तत्र नेत्येव वक्तव्यम्, तस्मिन् प्रतिषिद्धे 'लृट् शेषे च' (३.३.१३) इत्यनेनैव लृट् सिद्धः, तत्किं लृड्ग्रहणेन ? तत्राह—'नेति वक्तव्ये' इत्यादि । नेत्युच्यमाने 'लृट् शेषे च' (३.३.१३) इत्यनेन लृड् भवन्ननद्यतने न स्यात् । लुटा बाधितत्वात् । अतो लुड्विषयोऽपि यथा स्यादिति लृड्ग्रहणं क्रियत इत्यर्थः ॥

## १३४. आशंसावचने लिङ् ।

'अधीयीय' इति । इङो लिङः 'इटोऽत्' (३.४.१०६), सीयुट्, लिङः सलोपः, धातोरियङ्, उपसर्गेण सह सवर्णदीर्घत्वम्, क्षिप्रवचने लृट्, आशंसावचने लिङ् विप्रतिषेधेन । क्षिप्रवचने लृडित्यस्यावकाशः—क्षिप्रमध्ये-ष्यामहे इति, आशंसावचने लिङित्यस्यावकाशः—आशंसे युक्तोऽधीयीयेति, इहोभयं प्राप्नोति,—आशंसे क्षिप्र-मधीयीयेति, लिङ् भवति विप्रतिषेधेन । तदेतदुदाहरणे दर्शयति—'आशंसे क्षिप्रमधीयीय' इति ॥

## १३५. नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ।

'कालानां सामीप्यम्' इति । 'वर्तमानसामीप्ये' (३.३.१३१) इत्यारभ्य कालप्रायत्वादस्य प्रकरणस्य सामान्येनोक्तावपि कालसम्बन्धिन एव सामीप्यस्याश्रयणमिति भावः। 'तुल्यजातीयेन' इति । तत्रैव लोके सामी-प्यव्यवहारादिति भावः । 'अदात्' इति । 'गातिस्था' (२.४.७७) इत्यादिना सिचो लुक् । 'अध्यापिपत्' इति । इङो णिच् । 'क्रीङ्जीनां णौ' (६.१.४८) इत्यात्वम् । 'अर्तिह्री' (७.३.३६) इत्यादिना पुक्, लुङि चङि 'अजादेर्द्वितीयस्य' (६.१.२) इति पिशब्दस्य द्विर्वचनम्, णिलोपः ।

'येयं पौर्णमास्यतिक्रान्ता' इति । पौर्णमास्यन्तरेणाव्यवहिता या पौर्णमासी तामधिकृत्येदमुच्यते । साधि यद्यप्यमावस्ययान्याभिश्च तिथिभिर्व्यवहिता; तथापि तुल्यजातीयेन पौर्णमास्याख्येनाव्यवहितत्वात् सामीप्यं नातिवर्तते । 'आधित' इति । दधातेराङ्पूर्वस्य 'स्थाघ्वोरिच्च' (१.२.१७) इतीत्वम्, 'ह्रस्वादङ्गात्' (८.२.२७) इति सिचो लोपः । 'अयष्ट' इति । 'झलो झलि' (८.२.२६) इति सिचो लोपः, व्रश्चादिसूत्रेण (८.२.३६) षत्वम् । 'अदित' इति । ददातेः रूपं पूर्ववत् । 'यक्ष्यते' इति । व्रश्चादिषत्वे (८.२.३६) 'षढोः कः सि' (८.२.४१) इति कत्वम्, सर्वत्र 'स्वरितञितः' (१.३.७२) इत्यात्मनेपदम् ।

इह क्रियाप्रबन्धसामीप्ययोरद्यतनप्रत्ययौ लुङ्लृटौ इष्येते, नानद्यतनप्रत्ययौ लङ्लुटौ, तौच लुङ् लृटौ 'अनद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इत्युच्यमानेऽपि सिध्यत एव; किमर्थं द्वौ प्रतिषेधावुच्येते ? इत्यत आह—'द्वौ प्रतिषेधौ' इति । 'यथाप्राप्तस्य' इति । यथा येन प्रकारेण प्राप्तं प्राप्तिर्यस्येति बहुव्रीहिः । अव्ययीभावे त्वम्भावः स्यात् । इहाद्यतनवचने सति विधानमिदं विज्ञायेत, तत्र लङ्विधिप्रसङ्गे पूर्वविधाने ह्यद्यतनसंशब्दनेन विहितस्य कस्यचित् प्रत्ययस्याभावादद्यतने दृष्टस्यातिदेशः, लट् चाप्यद्यतने दृष्टस्तेन तस्यापि भूतभविष्यतोः

प्रसङ्गः, लुङ्लृटोश्चायथाकालं विधिः प्रसज्येत—लुङो विषये लृट्, लृटश्च विषये लुङ्। ननु च वत्करणात् सादृश्यार्थात् सङ्करो न भविष्यति ? नैतदस्ति; इह लुङ्लृटौ, भूतभविष्यतोरद्यतने च दृष्टौ, तत्राद्यतनवविक्ष्यमाने तस्मिन्नेवाद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशो हातव्यः। तत्राद्यतनांशत्यागेनातिदेशे विज्ञायमाने भूतानद्यतने लुङ्, भविष्यदनद्यतने लृडिति सिद्धम्। यदा तु भूतभविष्यदंशपरित्यागेन अतिदेशः; तदा भूताद्यतने दृष्टस्य भविष्यदद्यतने, भविष्यदनद्यतने च दृष्टस्य भूताद्यतने विधानमिति सङ्करः स्यादेव, लट् चोभयत्र प्रसज्येत। वत्करणं तु यस्माद्धातोर्यस्मिन्नुपाधौ यः प्रत्ययो विहितः स तस्मादेव तस्मिन्नुपाधावेव यथा स्यादित्येवमर्थं स्यात्। तेन 'पूङ्यजोः शानन्' (३.२.१२८) इत्यादौ कालव्यत्यास एव भवति, न धात्वादिव्यत्यासः। यदि पुनरयं द्वौ प्रतिषेधौ कृत्वा तूष्णीमास्ते, स्वैरेव विधायकैर्लङादय उत्सर्गाः स्वेषु स्वेषु कालेषु अपवादविनिर्मुक्तेषु भवन्तीति न सङ्करप्रसङ्गः। अतो यथा प्राप्तस्याभ्यनुज्ञानान्नायं वतिः, किं तर्हि ? मतुप्—अनद्यतनमस्यास्तीत्यनद्यतनवत्, सामान्यविवक्षायां नपुंसकत्वम्, 'अनद्यतनवत् प्रत्ययविधिर्नभवति' इति। अस्याप्यनद्यतनवांश्चासौ प्रत्ययश्च तस्य विधिरित्यर्थ इति सर्वथा यदनद्यतने विहितं तत्सर्वं न भवति। वृत्तौ 'लङ्लुटौ विहितौ तयोः प्रतिषेधः' इत्युपलक्षणम् ॥

## १३६. भविष्यति मर्यादावचनेऽवरस्मिन्।

'अक्रियाप्रबन्धार्थमसामीप्यार्थं च वचनम्' इति। 'क्रियाप्रबन्धसामीप्ययोः' (३.३.१३५) इति नानुवर्तते, तदनुवृत्तौ हि नियमार्थमेतत् स्यात्—भविष्यत्येव मर्यादावचन एवावरस्मिन्नेवेति वा। विधिनियमसम्भवे च विधिरेव ज्यायानिति भावः। 'मर्यादावचने सति' इति। मर्यादोक्तौ सत्यामित्यर्थः। वचनग्रहणमभिविध्यर्थम्, वचनग्रहणे हि सति मर्यादामात्रवचने मर्यादावचन इत्यर्थो भवति। सैव हि मर्यादा यदा कार्येणाभिसम्बध्यते तदा 'अभिविधिः' इत्युच्यते। 'अवरस्मिन् प्रविभागे' इति। अपरभागविषयश्चेद्धात्वर्थो भवतीत्यर्थः। अपरस्मिन्निति वचनाद्यस्य मर्यादा तस्य द्वौ भागौ कल्पयितव्याविति गम्यते। 'गन्तव्यः' इति। अध्वगमनस्य भविष्यत्त्वं दर्शयन् तत्र कर्तव्यस्य भोजनादेर्भविष्यत्त्वं दर्शयति। 'तस्य यदपरम्' इति। अनेनाध्वनो विभागो द्विरित्यनेनापि क्रियाप्रबन्धाभावो द्विरेव, नानवरतमिति।

'योऽयमध्वा गतः' इति। भूतकालतां दर्शयति 'अध्येमहि' इति। इङो लङ्, 'शपो लुक्' (२.४.७२), 'आडजादीनाम्' (६.४.७२), 'आटश्च' (६.१.९०)। 'अभुञ्ज्महि' इति। 'भुजोऽनवने' (१.३.६६) इत्यात्मनेपदम्, 'श्नसोरल्लोपः' (६.४ १११), चुत्वम्।

'तत्र उत्तरसूत्रे विशेषं वक्ष्यति' इति। अनहोरात्राणाम् इत्यनेन ॥

## १३७. कालविभागे चानहोरात्राणाम्।

'कालमर्यादाविभागे सति' इति। मर्यादा च विभागश्च मर्यादाविभागम्—समाहारद्वन्द्वः, तेन कालशब्दस्य षष्ठीसमासः। 'न चेदहोरात्रसम्बन्धी विभागः' इति। एतेनानहोरात्राणामिति सम्बन्धसामान्ये षष्ठी, न 'कर्तृकर्मणोः' (२.३.६५) इति दर्शयति। एवं सति यदिष्टं सिद्धं तद्दर्शयति—'तैः' इति। तैरन्यस्य कालस्य विभागोऽन्येन वा तेषां तैरेव वा सर्वथा प्रतिषेधः। ननु पूर्वसूत्रे एवानहोरात्राणामिति वक्तव्यम्, एवमपि

हि सामर्थ्यात् कालविभागस्यैव प्रतिषेधो विज्ञायते, न हि देशविभागस्याहोरात्रैः सम्बन्धोऽस्ति, तत्किं योग विभागेन ? तत्राह—'योगविभाग उत्तरार्थः' इति। उत्तरसूत्रे कालविभाग एव विभाषा यथा स्यात्, देशविभागे माभूदिति। आग्रहायणी = मार्गशीर्षी।

'त्रिविधमुदाहरणम्' इति। प्रथमं तैर्विभागस्य, द्वितीयं तेषां विभागस्य, तृतीयं तैस्तेषामहोरात्रसंस्पर्शे = अहोरात्रगन्धे, एतच्च प्रसज्यप्रतिषेधसमाश्रयणाल्लभ्यते। दर्शितश्च प्रसज्यप्रतिषेधः 'न चेदहोरात्रसम्बन्धी विभागः' इति; अन्यथा 'अनहोरात्रसम्बन्धिनि विभागः' इत्यवक्ष्यत् ॥

## १३८. परस्मिन् विभाषा।

## १३९. लिङ्निमित्ते लृङ् क्रियातिपत्तौ।

'कुतश्चिद्वैगुण्यात्' इति। प्रतिबन्धकोदयः सामग्रीवैकल्यं वा वैगुण्यम्। 'दक्षिणेन मार्गेण न शकटं पर्याभविष्यत्' इति। तस्य मार्गस्य ऋजुत्वात् स्थाण्वादेरभावाच्च। पर्याभवनम् = भङ्गः। कमलकः = कश्चित् पुरुषः, स शकटादीनां विषमेष्वपि स्थानेषु मुसलाद्यवष्टम्भयोगेन नेता। 'अभोक्ष्यत भवान् घृतेन' इति। घृतमात्रस्यातिपत्तौ भोजनक्रियानिर्वृत्तावपि लृङ् भवति, कारणभेदाद्विभिन्नैव भोजनक्रिया, ततो घृतातिपत्तौ घृतभोजनक्रियाप्यतिपन्नैव।

'भविष्यत्कालविषयमेतद्वचनम्' इति। कथं तर्हि भविष्यतोऽर्थस्येदानीमवगतिस्तत्राह—'भविष्यत्पर्याभवनम्' इति। 'हेतुमत् तत्र हेतुभूतम्' इति। एतेन लिङ्निमित्तं हेतुहेतुमद्भावं दर्शयति। 'लिङ्गेन बुद्ध्वा' इति। असकृत् प्राक्कमलकाह्वाने सति शकटापर्याभवनं दृष्ट्वा भाविनोऽपि कमलकाह्वानस्य शकटापर्याभवनहेतुभूतत्वं लिङ्गेन बुद्ध्वा। लिङ्गं पुनः कमलकाह्वानत्वम्। 'भविष्यत्कमलकाह्वानमपि शकटापर्याभवनस्य हेतुः कमलकाह्वानत्वात् पूर्वकमलह्वानवत्' इति एवं बुद्ध्वेत्यर्थः। 'तदतिपत्तिम्' इति। प्रकरणात द्विवचनात्तस्य समासः, तयोराह्वानापर्याभवनयोरतिपत्तिमित्यर्थः। तत्र कमलकस्य देशान्तरगमनादिना तदाह्वानस्यातिपत्तिरवसीयते; तदतिपत्त्यैव च पर्याभवनस्याप्यतिपत्तिः, शकटस्य गुरुतरभारारोपणादिना। 'भविष्यत्कालयोरतिपत्तिरितो वाक्याद् गम्यते' इति। नेदानीं कमलक आह्वातुं शक्यते, तच्च शकटमपि पर्याभविष्यत्येवेत्यवगमात् ॥

## १४०. भूते च।

'अन्नार्थं चङ्क्रम्यमाणः' इति। भोक्तुकामः क्षुधा कुटिलं गच्छन्नित्यर्थः। 'अपरश्च द्विजो ब्राह्मणार्थी' इति। चङ्क्रम्यमाणो दृष्ट इत्यनुषङ्गः। ब्राह्मणार्थी भोक्तारं मार्गयमाणं इत्यर्थः। सोऽपि संभ्रमात् कुटिलं गच्छति। ततः किमित्यत आह—'यदि' इत्यादि। 'यदि दृष्टोऽभविष्यात्' इति क्वचित् पठ्यते, तत्तु 'यदाययोरुपसङ्ख्यानम्' (वा. ३३१) इति यदि(देः)लिङ्निमित्तत्वात् लृङ्, किंतूत्तरसूत्रेण विकल्पितः। दृष्ट इत्येव तु पाठो युक्तः। 'न तु भुक्तवान्' इति। क्रियातिपत्तिं दर्शयति। तत्र हेतुः—'अन्येन पथा स गतः' इति ॥

## १४१. वोताप्योः ।

'वा आ उताप्योः' इति आङः प्रश्लेषं दर्शयति । तत्र आङ उताप्योरित्यनेन सम्बन्धावल्पापेक्षत्वेनान्तरङ्गत्वाद्वा पूर्वं परेण सह 'आद्गुणे' कृते पूर्वं प्रत्यन्तवद्भावात् 'ओमाङोश्च' (६.१.९५) इति पररूपम्। यथा—आ+ऊढा ओढा, अद्य ओढा अद्योढा, कदोढेति । अत्रोताप्योः समर्थयोरिति यत् सप्तम्यन्तं तदवधित्वेनोपादीयते, तत्र प्रकृतिवदनुकरणं भवतीत्यनुकरणस्याप्यप्रत्यय इति प्रतिषेधेनाप्रातिपदिकत्वावाङोऽपि योगे पञ्चम्यभावः। 'मर्यादायामाङ' इति । एतच्च विभाषा गर्हाप्रकृतौ प्रागुताप्योरिष्यामिति स्मरणादवसीयते। गर्हाप्रकृतौ गर्हाविशिष्टे प्रकृत्यर्थे । गर्हाग्रहणमनवक्लृप्त्यादेरपि लिङ्निमित्तस्योपलक्षणम् । 'विभाषा कथमि लिङ् च' (३.३.१४३) इति लिङ्निमित्ताभावादुत्तरसूत्रातिक्रमः ॥

## १४२. गर्हायां लडपिजात्वोः ।

'कालसामान्ये न प्राप्नोति' इति । विधीयते इत्यनेन भविष्यतीत्यादेः कालविशेषवाचिनो निवृत्तिं सूचयन् कालसामान्ये विधिरिति दर्शयति । 'कालविशेषविहितांश्च' इत्यादि । भाष्येत्वेष निर्णयः "गर्हायां लड्विधानानर्थक्यम्, क्रियासमाप्तेरविवक्षितत्वात् । ताच्छील्यप्रतिपादनेनात्र गर्हा, ततश्च यदनेन क्रियते तत्सर्वं वृषलयाजनार्थमिति सर्वदाऽसौ वृषलं याजयन्नेव भवति, ततश्च क्रियाया समाप्तिरविवक्षिता इति 'वर्तमाने लट्' (३.२.१२३) इत्येव सिद्धः । यद्येवम्, शतृशानचावपि प्राप्नुतः, दृश्येते च शतृशानचावपि—मां याजयन्तं पश्य, अपि मां याजयमानं पश्येति । प्रत्युत सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लटस्तौ न प्राप्नुत इति दोषवानेव सूत्रारम्भः" इति ॥

## १४३. विभाषा कथमि लिङ् च ।

'विभाषाग्रहणम्' इत्यादि । स्वस्मिन् स्वस्मिन् काले ये लृडादयो विहितास्तेषां च बाधा मा भूदित्येवमर्थमित्यर्थः । यद्येवम्, विभाषाग्रहणादेव लडपि भविष्यति, नार्थश्चकारेण ? सत्यम्; वर्तमाने सिध्यति, कालान्तरे तु न सिध्यति, तस्मात् तदर्थश्चकारेण लटः समुच्चयः । 'अत्र लिङ्निमित्तमस्ति' इति । 'कथमि' इत्येतद्गर्हा च ।

## १४४. किंवृत्ते लिङ्लृटौ ।

'किंवृत्ते लिप्सायाम्' (३.३.६) इत्यत्र किंवृत्तं व्याख्यातम् । इह किंवृत्ते लृट् चेति वक्तव्यम्, चकारात् प्रकृतो लिङ् भविष्यति, नार्थो लिङ्ग्रहणेन ? तत्राह—'लिङ्ग्रहणम्' इति । चकारेण लिङ इव लटोऽपि समुच्चयः स्यात; तस्यापि प्रकृतत्वात्, तस्मात् तन्निवृत्त्यर्थमिति भावः ॥

## १४५. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।

अपिग्रहणं शक्यमकर्तुम्, कथम् ? यथा 'उपकादिभ्योऽन्यतरस्यामद्वन्द्वे' (२.४.६९) इत्यत्राद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्, तथेहाप्यकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थम्, अस्मिन् निवृत्ते किंवृत्तेचाकिंवृत्ते च

प्रत्ययद्वयं भविष्यति, तत्क्रियते विस्पष्टार्थम्। तथाऽकिंवृत्त इत्यपि विस्पष्टार्थमेव, अस्वरितत्वादेव 'किंवृत्ते' इत्यस्याननुवृत्तेरविशेषेण प्रत्ययद्वयं भविष्यति। आह च—किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यमिति। ननु चाकिंवृत्तग्रहणेन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते, तस्योपपदसञ्ज्ञां वक्ष्यामीत्यकिंवृत्तग्रहणं स्यात्। किं पुनरुपपदसञ्ज्ञायाः प्रयोजनम्? समासः; अतिङिति प्रतिषेधात्। यदा तर्हि लृटः सत्सञ्ज्ञकौ भवतस्तदा समासो यथा स्यात्, नास्य लृटः सत्सञ्ज्ञकौ भवतः, 'लृटः सद्वा' (३.३.१४) इत्यत्र भविष्यतीत्यधिकाद्भविष्यतीत्येवं विहितस्य लृटो ग्रहणम्। अयं तु कालमात्रे विधानाद्यद्यपि भवति, तथापि भविष्यदधिकारविहितो न भवतीति नास्य शतृशानचौ भवतः॥

## १४६. किंकिलास्त्यर्थेषु लृट्

'समुदाय उपपदम्' इति। केवलस्य किंशब्दस्यानवक्लृप्त्यमर्षयोर्वृत्त्यसम्भवात्। 'लिङोऽपवादः' इति। पूर्वेणाप्राप्तस्य। 'अस्तिनाम' इत्यादि। भवत्कर्तृकं वृषलयाजनमस्तीत्यर्थः। उक्तं हि 'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति॥

## १४७. जातुयदोर्लिङ्।

'लृटोऽपवादः' इति। अनवक्लृप्त्यादि सूत्रेण (३.३.१४५) लिङ्लृटोर्द्वयोरपि प्राप्तयोर्लिङेव यथा स्यात्, लृण्मा भूदित्येवमर्थ इत्यर्थः।

'यदायद्योरुपसङ्ख्यानम्' इति। सूत्रवत् लृटोऽपवादः॥

## १४८. यच्चयत्रयोः।

'लृट एवापवादः' इति। पूर्ववत् प्राप्तस्य। एवकारः पौनर्वचनिकः। 'योगविभाग उत्तरार्थः' इति। उत्तरत्र यच्चयत्रयोरेवानुवृत्तिर्यथा स्यात्, जातुयदोर्मा भूदिति। इहानवक्लृप्त्यमर्षौ द्वौ, यच्चयत्रयोरित्युपपदे अपि द्वे एव, ततश्च यथासङ्ख्यं प्राप्नोति? तत्राह—'यथासङ्ख्यमिह नेष्यते' इति। पूर्ववल्लक्षणव्यभिचारचिह्नात् बह्वचः पूर्वनिपातात्॥

## १४९. गर्हायां च।

दरिद्रश्चेद्वृषलयाजनमपि युक्तं स्यात्, तत उक्तम्-'आढ्यः' इति। आढ्यस्याप्युपभोगबाहुल्येन सम्भाव्येत, अत उक्तम्—'वृद्ध' इति। वृद्धस्यापि जातिमात्रब्राह्मणस्य युक्तं स्यात्, अत उक्तम्—'सद्ब्राह्मण' इति। सद्वंशजः सदाचारश्चेत्यर्थः सो गर्हामर्हः इति॥

## १५०. चित्रीकरणे च ।

## १५१. शेषे लृडयदौ ।

'यच्चयत्राभ्याम्' इति । चित्रीकरणापेक्षस्तु शेषो न भवति, तस्येह स्वरितत्वेनाधिकारात् । 'आश्चर्यं यदि स भुञ्जीत' इति । अत्रानवक्लृप्तिराश्चर्यं च द्वयं गम्यते, तत्राश्चर्यनिमित्ते लृटि प्रतिषिद्धे जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानमित्यनवक्लृप्तौ लिङ । भाष्ये तु "सम्भावनार्थो यदिशब्दः प्रयुज्यते, ततश्च सम्भावनमत्र तात्पर्यार्थः, न चित्रीकरणम्; ततश्चायदाविति न वक्तव्यम्, लिङपि 'सम्भावनेऽलम्' (३.३.१५४) इत्यनेनैव" इत्युक्तम् । यदाह—चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वादिति ॥

## १५२. उताप्योः समर्थयोर्लिङ् ।

'समर्थयोः' इति । सूत्रे समशब्दस्य निपातनात् 'अतो लोपः' (६.४.४८), शकन्ध्वादित्वाद्वा (वा. ६८४) पररूपत्वम् । संशब्द एव वा वृत्तौ समशब्देन समानार्थः, यथा—'प्रोपाभ्यां समर्थाभ्याम्' (१.३.४२), यथा—मुखसंमुखस्येत्यत्रेति भावः ।

'प्रश्नः प्रच्छादनं च गम्यते' इति । आद्ये प्रश्नो गम्यते, द्वितीये प्रच्छादनम् । ननु चापिशब्दोऽपि प्रश्ने दृष्टः—'अप्यग्रणीर्मन्त्रकृतामृषीणाम्' (र. ५.४), 'अपि प्रसन्नं हरिणेषु ते मनः' (कु. ५.३५) इति, ततश्च प्रश्नेऽपि समानार्थत्वमनयोरिति 'उत दण्डः पतिष्यति' इति प्रत्युदाहरणानुपपत्तिः ? एवं मन्यते—अप्यग्रणीरित्यादौ प्रष्टव्यमर्थान्तरमपेक्ष्य समुच्चयार्थ एवापिशब्दः, प्रश्नस्त्वर्थप्रकरणादिना गम्यते; तेन नानयोः प्रश्ने समानार्थत्वमिति ॥

## १५३. कामप्रवेदनेऽकच्चिति ।

'स्वाभिप्रायाविष्करणं कामप्रवेदनम्' इति । एतदेवावयवार्थप्रकाशनेनोपपादयति—'काम इच्छा' इति ।

'माराविद त्वां पृच्छामि' इति । माराविशब्दं वदतीति माराविदः । माराविरवो माकारीत्यर्थः । सञ्ज्ञैषा शुकविशेषस्य, तं हस्ते निधाय कश्चिल्लालयति । पार्वत्यपि शुकस्यैव काचिदिष्टा । प्रायेण तु मातापितरौ पृच्छामीति पाठः, तत्र तदुपक्रमं वाक्यम्—मातापितरौ पृच्छामि । किमत्र पृच्छ्यते ? कच्चिज्जीवति ते मातेति ॥

## १५४. सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे ।

'योग्यताध्यवसानम्' इति । योग्यताया निश्चय इति । एतदेव स्फोरयति—शक्तिश्रद्धानम्' इति । शक्तिः सामर्थ्यम् । श्रद्धीयते विषयीक्रियते येन ज्ञानेन तत्तथोक्तं तदिति । सम्भावनपर्याप्त्योरित्येतेन पर्याप्तिविहारं

शब्दः न भूषणादावित्याह—"यद्येवं सम्भावने' इति । सप्तम्यन्तस्य कथमलमिति चेदित्येतद्विशेषणमुपपद्यत इत्याशङ्क्य विपरिणामेन व्याचष्टे—'तच्चेत् सम्भावनम्' इति । सम्भावनमलमिति चावर्तते—सम्भावने लिङ् भवति, तच्चेत् सम्भावनमलमात्मकं भवतीति । एवं पर्यवसानेनालमा सम्बन्धः, अतोऽत्रेतिशब्दो न सम्बन्धनीयः । ततोऽलमित्यस्मिन् सिद्धाप्रयोगे सतीत्यन्वयः । अत्र चेच्छब्दो न सम्बन्धनीयः; सप्तम्यन्तेन सम्बन्धासम्भवात् । वृत्तौ तु वस्तुमात्रं दर्शितम्—सिद्धश्चेदलमोऽप्रयोग इति, न पुनरत्र चेच्छब्दस्यान्वयः । 'पर्याप्तम्' इति । स्वकार्यनिर्वर्तने समर्थम्, स्वकार्यं पुनस्तस्याविपरीतमविषयपरिच्छेदः, तद् दर्शयति । 'अवितथम्' इति । अतथाभूतार्थविषयत्वं ज्ञानस्य वैतथ्यम्, यथा—शुक्तिकायां रजतज्ञानस्य; तद्विपरीतमवितथम्, तथाभूतार्थविषयमित्यर्थः । 'तदीदृशसम्भावनोपाधिके' इति । तदिति वाक्योपन्यासे । ईदृशमलमर्थविशिष्टं सम्भावनमुपाधिर्यस्येति त्रिपदो बहुव्रीहिः । क्वचित्तु ईदृशे सम्भावनोपाधिक इत्यसमासः पठ्यते, तत्रेदृश इति न सङ्गच्छते, न हि धात्वर्थस्य किञ्चिद्रूपं प्राङ्निर्दर्शितं यदीदृशमित्युच्यते । 'सर्वलकारा-णामपवादः' इति । सम्भावनस्य भविष्यद्विषयत्वाद्भविष्यद्विषयाणां सर्वलकाराणामित्यर्थः । 'अपि पर्वतं शिरसा भिन्द्यात्' इति । अत्र यत् पर्वतभेदविषयं सामर्थ्यं पुंसः सम्भाव्यते तद्यस्य भीमसेनादेर्विद्यत एव, तत्र सम्भावन-मवितथमिति तद्विषयमुदाहरणम् । 'अपि द्रोणपाकं भुञ्जीत' इति । यत्पक्वस्य भोजनं तदेव पाकस्य भोजनम्, कर्मसाधनो वा पाकशब्दः । विदेशस्थायी = देशान्तरगतः । 'प्रायेणागमिष्यति' इति । प्रायिकस्वदक्षिणाक्षि-स्पन्दनादेर्लिङ्गाभासादागमनं सम्भाव्य तत एतत् प्रयुज्यते, तत्तथ्यमपि भवति, विपरीतमपि भवति । 'अलं देवदत्तः' इति । पर्याप्तं हनिष्यतीत्यर्थः । भाविविषयत्वात् सम्भावनस्य सर्वत्र लृट् प्रत्युदाहृतः ।

अपरा व्याख्या—संभावनं भाविवस्तूत्प्रेक्षणम्, असति विरुद्धप्रत्ययोपनिपाते भवितव्यमनेनेति ज्ञानम्, यथा प्रत्युदाहरणे—प्रायेणागमिष्यतीति, तस्य विशेषणमलमिति चेदिति, अलमिति चेत् तत्सम्भावनमिति विपरि-णामेनान्वयः । तत्र यथा घट इति ज्ञानं पट इति ज्ञानमित्युक्ते ज्ञानस्य विषयनिर्देशः प्रतीयते, तथेहापि सम्भा-वनाख्यस्य ज्ञानस्य विषयनिर्देशोऽयमलमिति चेत् तत्सम्भावनमलमर्थविषयं चेदित्यर्थः । अलमर्थश्च पर्याप्तिर्न भूषणादिः, धातोश्च प्रत्ययविधानात्तदर्थगोचरमेव सामर्थ्यं गृह्यते । इमं धात्वर्थमनुष्ठातुं समर्थ इत्येवं रूपं चेत् तत्संभावनमित्यर्थः । सिद्धाप्रयोगे कस्मिन् सन्निधानादलंशब्दः । एवं तावत् सूत्राक्षराणां निर्वाहः । वृत्तेस्तु—'यत्क्रियासु योग्यताध्यवसानम्' इति तदिह सूत्रे जिघृक्षितस्य सम्भावनस्य लक्षणं न सम्भवनमात्रस्य । अन्यथा प्रत्युदाहरणमनुपपन्नं स्यात्, न हि तत्र शक्तिश्रद्धानं गम्यते । कथं पुनरत्रेदृशं सम्भावनं गृह्यते, इत्यत्राह—'तदिदानीम्' इति । तत्खलु सम्भावनमेतत्सूत्रप्रणयनकालेऽस्मिन् सूत्र इत्यर्थः । अलमर्थेन विषयेण विशेष्यते अलमिति चेत् सम्भावनमिति, पर्याप्तिमिति । पर्याप्तिरलमर्थः न भूषणादिरित्यर्थः । विपरिणामेनान्वयं दर्शयति—'तच्चेत्सम्भावनम्' इति । पर्याप्तिविषयत्वात् पर्याप्तम्, अवितथविषयत्वात् अवितथम्, एतद्धात्वर्था-नुष्ठाने पर्याप्तो वितथारम्भोऽयमस्मिन् धात्वर्थे इत्येवंरूपं चेत् सम्भावनमित्यर्थः । 'अपि पर्वतं शिरसा भिन्द्यात्' इति । एवं नामायं बलवानित्यर्थः, पर्वतं तु भिनत्तु मा वा भिदत् ॥

## १५५. विभाषा धातौ सम्भावनवचनेऽयदि ।

'सम्भावयामि भुञ्जीत भवान्' इति । भोजने भवान् शक्त इत्युत्प्रेक्ष इत्यर्थः ॥

1. नास्तीदं वाक्यम् काशिकायाम्.

## १५६. हेतुहेतुमतोर्लिङ् ।

'भविष्यति च काले' इति । इष्यत इत्यपेक्ष्यते । कथं पुनरेतद्द्वयं सूत्रेऽनुपात्तमेव लभ्यते ? इत्याह— 'तत्र' इति । 'लिङिति वर्तमाने' इति । 'उताप्योः' (३.३.१५२) इत्यादेः सूत्रात् । 'हन्तीति पलायते' इति । अत्र हननं हेतुः, पलायनं हेतुमत् । वर्षणं हेतुः, सरणं हेतुमत् । 'पलायते' इति । 'उपसर्गस्यायतौ' (८.२.१९) इति लत्वम् । अत्र 'लक्षणहेत्वोः क्रियायाः' (३.२.१२६) इति शत्रादेशोऽपि न भवति, 'इतियोगे च सद्विधिः' इति व्यवस्थितविभाषासु पठितत्वात् ॥

## १५७. इच्छार्थेषु लिङ्लोटौ ।

"कामप्रवेदन इति वक्तव्यम्" इति । 'कामप्रवेदने अकच्चिति' (३.३.१५३) इत्ययं तर्हि योगः किमर्थः, यावता कामो मे भुञ्जीत भवान् अभिलाषो मे भुञ्जीत भवानित्यत्राप्यनेनैव सिद्धम् ? यत्रेच्छार्थमुपपदं न भवति, अर्थप्रकरणादिना तु कामप्रवेदनं गम्यते, तत्रापि लिङ् यथा स्यात् । इदं तर्हि किमर्थम् ? लोडर्थम्, लिङ्ग्रहणं तु लोटा बाधा मा भूदिति । एवमपि 'लोट् च' इति वक्तव्ये किं लिङ्ग्रहणेन ? प्रकृतं लिङ्ग्रहणं विभाषासम्बद्धम्, अतस्तदनुकर्षणे विभाषाग्रहणस्याप्यनुकर्षणं सम्भाव्येत ॥

## १५८. समानकर्तृकेषु तुमुन् ।

'तुमुन्प्रकृत्यपेक्षम्' इति । तुमुन्प्रकृतौ यः कर्ता स चेदिच्छार्थेष्वपि भवतीति, एतच्च सान्निध्याल्लभ्यते । 'इच्छति भोक्तुम्' इति । आत्मनो भोजनमिच्छतीत्यर्थः । य एवेषेः कर्ता स एव भुजेरपीत्यस्तीह समानकर्तृकत्वम् । इच्छाया भुजिक्रियां प्रति तादर्थ्यस्याप्रतीतेः 'तुमुन्ण्वुलौ' (३.३.१०) इत्यादिना तुमुन् न सिध्यतीत्ययमारम्भः । अथापि कथंचित् तादर्थ्यं स्यात्, एवमपि समानकर्तृकेष्विति वक्ष्यामीत्ययमारम्भः, तेन देवदत्तेन भोक्तुमिच्छति यज्ञदत्त इति न भवति । 'इच्छन् करोति' इति । अत्रार्थे इच्छन्कर्तुमिति न भवतीत्यर्थः । इच्छन् कर्तुं गच्छतीत्यादौ 'तुमुन्ण्वुलौ' (३.३.१०) इत्यादिना तुमुन् । ननु भावे तुमुन् विधीयते, कस्कथमिच्छन् करोतीत्यत्र कर्तरि प्रसङ्गः ? एवमपीच्छता क्रियते इत्यत्र प्रसङ्गादनभिधानमेवाश्रयणीयम् ॥

## १५९. लिङ् च ।

किमर्थमिदमुच्यते ? लिङ् यथा स्यात् । सिद्धोऽत्र लिङ् 'इच्छार्थेषु लिङ्लोटौ' (३.३.१५७) इति ? तस्य समानकर्तृकेषु तुमुन् बाधकः प्राप्तः । वासरूपविधिश्च क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धस्तत्र यथा लोण्न भवति एवं लिङपि न स्यात् । अथापि वासरूपविधिः स्यात् ? एवमपि लिङेव यथा स्याल्लोण्मा भूदित्येवमर्थमेतदारब्धव्यमेव ॥

## १६०. इच्छार्थेभ्यो विभाषा वर्तमाने ।

'उश्यात्' इति । 'वश कान्तौ' (धा.पा. १०८०) अदादिः, ग्रहिज्यादिना (६.१.१६) सम्प्रसारणम् ॥

## १६१. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।

'विधिः प्रेरणम्' इति । भृत्यादेर्निकृष्टस्य क्वचित्प्रवर्तनमाज्ञापनमित्यर्थः । नियोगतोऽवश्यम्भावेन यत्करणमनुष्ठानं तन्निमन्त्रणम्, स निमन्त्रणस्य विषय इत्यर्थः । अवश्यकर्तव्ये श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनेति यावत्, श्राद्धे हि निमन्त्रितो दौहित्रादिरभुञ्जानः प्रत्यवैति । 'कामचारकरणम्' इति । कामचार इच्छाप्रवृत्तिस्तया यत्करणमनुष्ठानं तदामन्त्रणम् । तद्विषयमामन्त्रणमित्यर्थः । यत्राननुष्ठानेऽपि न प्रत्यवायस्तत्र प्रवर्तनेति यावत् । कल्याणादौ ह्यामन्त्रितोऽभुञ्जानोऽपि न प्रत्यवैति । 'अधीष्टम्' इति । अधिपूर्वादिच्छतेर्नपुंसके भावे क्तः । पुंलिङ्गेन पाठस्त्वयुक्तः । 'सत्कारपूर्वको व्यापारः' इति । गुर्वादेराराध्यस्य व्यापारेणेत्यर्थः, ण्यन्तादेरच् । इदं वा कर्तव्यमिदं वा कर्तव्यमित्येवं भूतविचारणासंप्रधारणम् । यथेदमिह संप्रधार्यते इति याच्ञा प्रसिद्धा ।

न्यायव्युत्पादनार्थं च प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥
अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥

अयं विध्यादिः प्रकृत्यर्थः, प्रत्ययार्थः, प्रकृत्यर्थविशेषणम् प्रत्ययार्थविशेषणं वेति चत्वारः पक्षाः । तत्राद्ये पक्षे विध्यादिषु वर्तमानाद्धातोरित्यर्थः स्यात्, ततश्च यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्रैव स्यात्—विदध्यान्नि-मन्त्रयेत, आमन्त्रयेत, अधीच्छेत्, संप्रच्छेत्, प्रार्थयेतेति । तत्रापि प्रकृत्यर्था भावकर्मकर्तारश्चेत्येतावदवगम्येत, न प्रकृत्यर्थव्यतिरेकेणापरं विध्यादिकम् । यथा चेच्छार्थेभ्यः 'विभाषा वर्तमाने' (३.३.१६०) इत्यत्र लिङि इच्छेदिति लडादयश्च न स्युः, अनेन लिङा बाधितत्वात् । द्वितीये नाप्राप्तेषु भावकर्मकर्तृषु विध्यादयोऽर्था निर्दिश्यमानास्तेषां बाधकाः स्युरिति लिङा कर्त्रादीनामभिधानं न स्यात् द्विवचनबहुवचनानुपपत्तिश्च, विध्यादीना-मेकत्वात् । तृतीये तु यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्र न स्यात्—विदध्यान्निमन्त्रयेतेति, न ह्यत्र प्रकृत्यर्थान्वये तद्विशेषणभूता विध्यादयः सन्ति । चतुर्थे तु विध्यादीनां कर्त्रादीनां च स्पष्ट एव भेद इति दोषाभाव इति तमेवाश्रयति—'विध्यादयश्चैते' इति । 'विध्यादिविशिष्टेषु' इति । विध्यादयः प्रवर्तनाविशेषास्तैर्विशिष्टेषु प्रवर्तितेष्वित्यर्थः । संप्रश्नप्रार्थनयोस्तु सम्पृच्छ्यमाने प्रार्थ्यमाने च कर्तरि । ननु च प्रकृत्या योऽर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्यम्, न तु प्रकृत्याभिहिते; 'उक्तार्थानामप्रयोगः' (व्या.प. ६०) इति न्यायात् । ततश्चा-स्मिन्नपि पक्षे विदध्याविस्यादौ तदवस्थ एवाप्रसङ्गः ? एवं तर्हि सन्त्येवात्र व्यतिरिक्ता विध्यादयो विषयभेदात्, तथा हि—श्राद्धे मां निमन्त्रयेत भवानिति मत्कर्मकं निमन्त्रणं तवानुष्ठेयमित्यर्थः, तत्र प्रकृत्यभिहितं निमन्त्रणं भोजनविषयम्, लिङभिहितं तु निमन्त्रणविषयमिति विस्पष्ट एव निमन्त्रणभेद यथैषितुमिच्छतीति कालसाधन-भेदादिच्छयोर्भेदाश्रयो योगस्तद्वत् । एवं विध्यादिष्वपि द्रष्टव्यम् । एवं च कृत्वा प्रकृत्यर्थविशेषणपक्षेऽपि नातीव दोषः । 'आमन्त्रणे—इह भवान् भुञ्जीत' इति । यदिच्छतीत्यर्थः । 'अध्येष्यामहे' इत्यपपाठोऽयम् । नहीच्छतेरे-तद्रूपं सम्भवति, इष्यतिरपि परस्मैपदी, गुणश्च श्यनि दुर्लभः । इङश्चात्रार्थो नास्ति, सूत्रे चाधीष्टेति इङ न प्रयुक्तः, तस्मादधीच्छाम इति पाठः । 'उपनयेत' इति । आचार्यकरण आत्मनेपदम् ॥

## १६२. लोट् च ।

'योगविभाग उत्तरार्थः' इति । उत्तरत्र लोट एवानुवृत्तिर्यथा स्याल्लिङो मा भूदिति । 'अध्ययै' इति । इट्, उत्तमैकवचनम्, टेरेत्वम्, 'एत ऐ' (३.४.९३) 'आडुत्तमस्य पिच्च' (३.४.९२) इत्याडागमः, 'आटश्च' (६.१.९०) इति वृद्धिः, प्रकृतेर्गुणायादेशौ ॥

## १६३. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।

'कृत्यः' इति । 'विभाषा कृवृषोः' (३.१.१२०) इति क्यप् । भवान् हि प्रेषित इत्यादिर्वाक्यशेषः सर्वेष्वेवोदाहरणेषु योज्यः ।

'न सामान्येन' इति । भावकर्मणोरित्युपलक्षणम्; भव्यगेयादीनां कर्तर्यपि भावात् । 'एवं तर्ह्येतज्ज्ञापयति' इति । 'प्रैषादिष्वेव कृत्या भवन्ति नान्यत्र' इति नियमार्थं चैतन्न भवति, अनिष्टत्वात् । अन्यत्रापि कृत्या दृश्यन्ते—तृणेन शोष्यम्, बुषेन बोध्यमिति, अग्निस्तोकं तृणेन दीपनीय इति । वस्तुस्वरूपकथनमेतत्, न त्वत्र प्रैषादिप्रतीतिः । 'अधिकारात् परेण' इति । एनपा योगे पञ्चमी मृग्या । 'नावश्यम्' इति । क्वचिद्भवति, क्वचिन्नेत्यर्थः ।

'को विशेषः' इति । विधिः प्रेरणमिति पूर्वत्र व्याख्यातत्वात् नास्त्येव भेद इति प्रश्नः । यद्यविशेषः, कथं द्वन्द्वनिर्देश इति चेत् ? शब्दरूपस्याभिधेयत्वात् । 'को विशेषः' इति कोऽनयोः शब्दयोर्विशेषोऽभिधेय इत्यर्थः । 'केचित्' इति । एवमामन्त्रणातिसर्गयोरपि विशेषो ज्ञेयः । केचिदिति वचनादपरेऽनयोर्विशेषं नेच्छन्तीत्युक्तं भवति । तेषामपि प्रैषातिसर्गग्रहणं कर्तव्यमेव, तत्रैव कृत्या यथा स्युरिति । 'प्राप्तकाले च' इति । इत्युक्ते निमन्त्रणादावपि कृत्याः स्युः । चकारेण लोडप्यनुकर्षणीयः प्राप्तकाले यथा स्यादिति ॥

## १६४. लिङ् चोर्ध्वमौहूर्तिके ।

'चकाराद्यथाप्राप्तं च' इति । लोट्, कृत्याश्च ॥

## १६५. स्मे लोट् ।

'लिङ्कृत्यानामपवादः' इति । अनन्तरसूत्रेण प्राप्तानाम् । 'करोतु स्म' इति । स्मशब्दोऽधिकारं सूचयति—भवानत्राधिकृत इत्यर्थः ॥

## १६६. अधीष्टे च ।

'अङ्ग स्म राजन्' इति । अङ्गशब्दोऽनुनय । ब्राह्मणानामेवाध्यापनं वृत्तिरतो राजन्नित्यभ्यर्हितेत्यर्थः ॥

## १६७. कालसमयवेलासु तुमुन् ।

'प्रैषादिग्रहणं सम्बध्यते' इति । न चेह प्रैषादयो गम्यन्त इति भावः । 'इह कस्मात्' इति । 'कालो भोजनस्य' इति । तस्माद्भुज्यतां भवान् इति वाक्यार्थः, तेन गम्यतेऽत्र प्रैष इति प्रश्नः । 'वासरूपविधिना' इति । ननु प्रैषादिषु कृत्यविधानात् स्त्र्यधिकारात् परेण वासरूपविधिर्नास्तीति ज्ञापितम् ? तत्राह—'उक्तम्' इति । अनित्यत्वमेव तत्र ज्ञापितम्, न सर्वथाभाव इत्यर्थः । पर्यायोपादानं पर्यायान्तरनिवृत्त्यर्थम् । अन्ये त्वाहुः—अवसरो भोक्तुमित्यादावपि तुमुन् दृश्यते, 'व्युपयोः शेतेः' (३.३.३९) इत्यत्र राजानमुपशयितुं पर्याय इति प्रयुक्तो वृत्तिकारेण । तस्मादर्थग्रहणार्थं पर्यायोपादानम्, यथा—'निमित्तकारणहेतुषु' इत्यत्रेति ।।

## १६८. लिङ् यदि ।

'तुमुनोऽपवादः' इति । कर्तृकर्मणोः सावकाशोऽपि लिङ् प्रतिपदविधेर्बलीयस्त्वात् परत्वाच्च भावे तुमुनो बाधक इत्यर्थः ।।

## १६९. अर्हे कृत्यतृचश्च ।

'अर्हतीत्यर्हः' इति । पचाद्यच् । 'तद्योगः' इति । तच्छब्देन धात्वर्थः परामृश्यते । 'अर्हे कर्तरि गम्यमाने' इति । क्वचिद्वाच्ये, क्वचिद्गम्यमान इत्युभयथानुग्रहाय गम्यमान इत्युक्तम् । क्वचिद्वाच्ये गम्यमानेवेति पाठः । तत्र यथासम्भवमित्यन्वयः । तत्र तृच् अजर्यकुप्यादिषु, कृत्याश्च वाच्यत्वे भवन्ति; लिङ् भव्यगेयादिषु कृत्याश्चोभयत्र भवन्ति । अथ कस्मात् 'कृत्यतृचौ' इति सूत्रे कृत्यभेदविवक्षया बहुवचनम्, इह तु सामान्यविवक्षया द्विवचनम् ? क्वचित्तु वृत्तावपि बहुवचनमेव पठ्यते । 'तेन बाधा मा भूत्' इति । वासरूपविधिश्च नावश्यं भवतीत्यनन्तरमेवोक्तम् ।।

## १७०. आवश्यकाधमर्ण्ययोर्णिनिः ।

'अवश्यं भाव आवश्यकम्' इति । मनोज्ञादित्वात् वुञ्, अव्ययानां भमात्रे टिलोपः । 'उपाधिः' इति । प्रत्ययार्थविशेषणमित्यर्थः । 'नोपपदम्' इति । 'शीतोष्णाभ्यां कारिणि' (५.२.७२), 'सेनान्तलक्षणकारिभ्यश्च' (४.१.१५२) इति निर्देशात् । उपपदत्वे हि केवलाण्णिनिर्न स्यात् तत्साहचर्यादाधमर्ण्यमप्युपाधिरेव, नोपपदम् । 'शतं दायी' इति । 'अकेनोर्भविष्यदाधमर्ण्ययोः' (२.३.७०) इति षष्ठीप्रतिषेधात् द्वितीयैव भवति ।।

## १७१. कृत्याश्च ।

'भव्यगेयादयः कर्तृवाचकाः कृत्याः' इति । भव्यगेयादिष्ववयवत्वेन स्थिताः कृत्या इत्यर्थः । आदिशब्देन न भव्यगेयादिसूत्रनिर्दिष्टानामेव ग्रहणम्, किं तर्हि ? अजर्यवच्यकुप्यकृष्टपच्यप्राप्यपण्यादीनामपि ग्रहणम् । योगविभाग उत्तरार्थः ।।

## १७२. शकि लिङ् च ।

'प्रकृत्यर्थविशेषणम्' इति । नोपपदम्, 'क्षय्यजय्यौ शक्यार्थे' (६.१.८१) इति लिङ्गात्, उपपदत्वे हि केवलौ क्षय्यजय्यौ शक्यार्थौ न सम्भवतः । भवान् खलु शक्त इति वाक्यशेषः सर्वेषु योज्यः । 'लिङा बाधा मा भूत्' इति । स्त्रियाः परेण वासरूपविधेरनित्यत्वाल्लिङा बाधाशङ्का । 'पराजेरसोढः' (१.४.२६) इत्यत्रासोढो योऽर्थः—सोढुं न शक्यत इति । शक्यार्थे क्तप्रत्ययो व्याख्यातः, स 'कृत्यल्युटो बहुलम्' (३.३.११३) इति वा, वासरूपविधिना वा समर्थनीयः ॥

## १७३. आशिषि लिङ्लोटौ ।

आशीर्विशिष्ट इत्याशास्यमान इत्यर्थः । विध्यादिसूत्र एवाशीर्ग्रहणं न कृतम्, 'स्मे लोट्' (३.३.१६५) इत्यादिविषयेऽपि परत्वादेष विधिर्यथा स्यादिति । अवश्यं चोत्तरार्थमिहाशीर्ग्रहणं कर्तव्यम् ॥

## १७४. क्तिच्क्तौ च सञ्ज्ञायाम् ।

'तन्तिः' इति । 'अनुदात्तोपदेश' (६.४ ३७) इत्यादिनाऽनुनासिकलोपः प्राप्नोति, 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५) इति दीर्घत्वं च, तदुभयमपि न भवति, 'न क्तिचि दीर्घश्च' (६.४.३९) इति प्रतिषेधात् । 'सातिः' इति । सनः क्तिचि 'लोपश्चान्यतरस्याम्' (६.४.१०७) इत्यात्त्वम् । क्तिचश्च-कारश्चिन्त्यप्रयोजनः, 'न क्तिचि दीर्घश्च' (६.४.३९), इत्यत्र एकानुबन्धकपरिभाषया क्तिनो निवृत्तेः सिद्धत्वात् ॥

## १७५. माङि लुङ् ।

## १७६. स्मोत्तरे लङ् च ।

अत्रोत्तरशब्द आधिक्यवचनो न दिग्वचनः, तेन पूर्वभूतेऽपि स्मशब्दे भवति, तद्दर्शितम्—स्मशब्दसहित इति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
तृतीयाध्यायस्य तृतीयः पादः ॥

—:o:—

# अथ तृतीयाध्यायस्य

## चतुर्थः पादः

### १. धातुसम्बन्धे प्रत्ययाः ।

प्रयोगे स्वार्थाभिधानव्यग्रयोर्धात्वोः परस्परेण सम्बन्धाभावादुपचरितवृत्तिरत्र धातुशब्द इत्याह— 'धात्वर्थे धातुशब्दः' इति । 'धात्वर्थानां सम्बन्धो धातुसम्बन्धः' इति । सम्बन्धस्यानेकाधिष्ठानत्वात् वृत्तावपि सङ्ख्याविशेषोऽवगम्यत इति भावः । सकलविषयापेक्षया च बहुवचनम् । एकैकं विवक्षायां तु धात्वर्थयोः सम्बन्ध इति द्रष्टव्यम् । यदि तु कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमितिवद्धात्वोरेवार्थद्वारकः सम्बन्ध आश्रीयेत, इह तु न स्यात्—गोमानासीत्, गोमान् भवितेति, द्वयोर्हि प्रयुज्यमानयोः सम्बन्धो भवति, न चात्र वर्तमानकालेऽस्तिः प्रयुज्यते । कीदृशः पुनरयं धातुसम्बन्धः ? इत्याह—'विशेषणविशेष्यभावः' इति । तत्र तिङन्तवाच्योऽर्थो विशेष्यं तत्प्रधानत्वाद्वाक्यस्य; सुबन्तवाच्यस्तु विशेषणम्, कारकस्य क्रियां प्रति गुणभावात् । 'अयथाकालोक्ता अपि' इति । यस्मिन् काले विहितास्ततोऽन्यत्रापि प्रयुक्ता इत्यर्थः । एतेन कालमात्रस्यात्र बाधः, न तूपपदोपाधिप्रकृतिप्रत्ययार्थानामिति दर्शयति । एतच्च 'वर्तमानसामीप्ये' (३.३.१३१) इत्यारभ्य प्रायेण कालान्यत्वप्रतिपादनाल्लभ्यते । 'अग्निष्टोमयजीति भूतकालः' इति । भूतः कालो यस्येति बहुव्रीहिः, एतेन भविष्यत्काल इति व्याख्यातम् । 'तत्र' इति । तयोर्मध्ये । भूतकालोऽग्निष्टोमयाजीत्येवशब्दो भविष्यत्कालेन जनितेत्यनेन सम्बध्यमानः साधुर्भवति । अयमपि भविष्यत्कालः सन् साधुर्भवतीत्यर्थः । अथ वा—स्वयमपि भविष्यत्कालेनाभिसम्बध्यमानः, स्वकालपरित्यागेन भविष्यत्कालः सन्नित्यर्थः । अयं ह्यत्रार्थः—पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टेति, तत्र यदि भूतकाल एव णिनिरवतिष्ठेत तदा यागस्य भविष्यत्तावगमो न प्राप्नोतीत्ययमारम्भः । एवमितरयोरप्युदाहरणयोर्द्रष्टव्यम् । अथ विपर्ययः कस्मान्न भवति, भविष्यत्कालो भूतकालेनाभिसम्बध्यमानः स्वकालपरित्यागेन भूते साधुर्भवति, ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययं वाक्यार्थ इति ? तत्राह—'विशेषणं गुणत्वात्' इति । प्रधानानुवर्ती गुणः, न गुणानुवर्ति प्रधानम्, उभयोश्च स्वकालनिष्ठयोः सम्बन्धानुपपत्तिरिति प्रधानानुरोधेन गुणस्य कालपरित्याग इत्यर्थः ।

'प्रत्ययाधिकारे' इति । यद्यपि प्रकृतः प्रत्ययशब्दः स्वरूपपदार्थकः, तथापीह सञ्ज्ञिनामनिर्देशात् सञ्ज्ञिपदार्थको विज्ञास्यत इति भावः । 'अधात्वधिकारविहिता अपि' इति । अन्यथा प्रकृतानां धातुप्रत्ययानामेव ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वपरिग्रहार्थात् तद्धितानामपि कालान्तरेऽपि साधुत्वं भवति । 'गोमानासीत्, गोमान् भविता' इति । 'तदस्यास्त्यस्मिन्' (५.२.९४) इति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टेन प्रकृत्यर्थेन विशिष्टेऽर्थे विहितः । धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वेऽपि साधुर्भवति । ततश्चायमत्रार्थः—गावोऽस्यासन् गोमानासीत्, गावोऽस्य भवितारः गोमान् भवितेति । धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थम्, तेनास्तिभूजनिसम्बन्धे तद्विशेषणानामेव कालान्यत्वेन साधुत्वं भवतीति केचित् । न चायं पक्षो भाष्ये सिद्धान्तत्वेन स्थापितः, तस्मादविशेषेण भवतीत्यन्ये । दृश्यते चान्यत्रापि कालान्यत्वम्—'साटोपमुर्वीमनिशं

नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी' (शि. ३.७४) इत्यत्र। नदन्त इति वर्तमानकालः प्लावयिष्यन्तीति अवर्तमानेनाभिसम्बध्यमानो भविष्यत्कालः सम्पद्यते ।

सूत्रप्रत्याख्यानं तु अग्निष्टोमयाजीति भूत एव णिनिः, जनितेत्येतत्सम्बन्धात्तु केवलं व्यपदेशस्य भावित्व-प्रतीतिः, अस्य सूत्रस्य शाटकं वयेतिवत् । ततश्च भाविव्यपदेशविज्ञानाद्विशेषस्य कालान्यत्वं वाक्यर्थवशादसत्यपि सूत्रारम्भे प्रत्येष्यते । अवश्यं च स्वकाल एव प्रत्ययविधिरेष्टव्यः, अन्यथा भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात् । तस्मादिदानीमासीदित्येवं तत्रार्थः । गोमानासीदि-त्यत्रापि देवदत्तस्य विद्यमानत्वेऽपि गोमद्रूपस्यातीतत्वाद् भूतप्रत्ययः । तत्रार्थात् गवामप्यतीतत्वं प्रतीयते, गोमच्छ-ब्दस्तु स्वमहिम्ना वर्तमानसत्ताविशिष्टमेव प्रकृत्यर्थमाह ।।

## २. क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ।

'धातुसम्बन्ध इति वर्तते' इति । अनुप्रयोगधातुना च सम्बन्धः । क्वचिदयं ग्रन्थो न पठ्यते। 'प्रकृत्यर्थविशेषणं चैतत्' इति । उपपदत्वाशङ्कां निरस्यति । व्याख्यानाच्चोपपदत्वाभावः । 'समभिहारविशिष्ट-क्रियावचनात्' इति । क्रियाधर्मे समभिहारमात्रे धातोर्वृत्त्यसम्भवादेतदुक्तम् । अत्र यदि 'लोटो हिस्वौ' इति वचनात्तस्यैव हिस्वौ स्याताम्, तदा सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाधा स्यात्, ततस्त-ध्वमोर्लोट्स्थानिकयोरभावात् 'वा च तध्वमोः' इति तयोः स्थानित्वेनोपादानमनुपपन्नमिति । लोट्शब्देन तदादेशानां ग्रहणमित्युपलक्ष्यते । अस्तु तथा, को दोषः ? इह हि तिप्सिप्मिपां स्थाने विहितस्य हेः स्थानिव-द्भावेन पित्वाङ्ङित्वाभावाल्लुनीहीतीत्वं न स्यात्, ब्रूहीति 'ब्रुव ईट्' (७.३.९३) स्यात्, तृण्ढीति 'तृणह इम्' (७.३.९२) स्यात्, अनुदात्तत्वं च हेः प्रसज्येत ? नैष दोषः; 'सेर्ह्यपिच्च' (३.४.८७) इत्यत्र योगविभागः करिष्यते, तत्सामर्थ्यात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति नाश्रीयते, सेर्हिर्भवति अपिच्च भवति यावान् कश्चिद्धिर्नामेति । यौ तर्ह्युत्तमादेशौ हिस्वौ, तयोराडागमः प्राप्नोति—लुनीहि लुनीहीत्येवाहं लुनामि, अधीष्वाधीष्वेत्येवाहमधीय इति ? नैष दोषः; आटि कृते साट्कस्यादेशौ भविष्यतः, सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् । हिस्वयोः पुनराट् न भविष्यति, इह ह्याट् क्रियतां हिस्वाविति संप्रधारणायामुभयोर-नित्ययोः 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' (व्या.प. १००) इति परत्वादाटि कृते साट्कस्य हिस्वाविति सिद्धमिष्टम् । एवमपि हेर्योगविभागेन पित्वाभावेऽपि स्वशब्दस्योत्तमादेशस्य पित्वात् 'भुङ्क्ष्व भुङ्क्ष्वे-त्येवाहं भुञ्जे' इत्यत्र 'श्नसोरल्लोपः' (६.४.१११) इत्यकारलोपो न प्राप्नोति, 'ब्रूष्व ब्रूष्वेत्येवाहं ब्रुवे' 'ब्रुव ईट्' (७.३.९३) प्राप्नोति, सर्वेषां च तिङां द्वावपि हिस्वौ पर्यायेण स्यातां न तु 'परस्मैपदानां हिः इतरेषां स्वः' इति नियामकमस्ति । तस्माद् दुष्ट एवायं पक्ष इति मत्वा लकारस्यैवादेशौ हिस्वावाश्रयणीयाविति दर्शयति । 'तस्य च लोटः' इति । नन्वस्मिन् पक्षे 'वा च तध्वमोः' इत्यनुपपन्नमित्युक्तं तत्राह—'तध्वम्भाविनस्तु वा भवतः' इति । मुख्यार्थासम्भवे तध्वम्भावो लोडेव तथोच्यते इत्यर्थः ।

यदि तर्हि लोट एव हिस्वावादेशौ न तदादेशानाम्, 'लः परस्मैपदम्' (१.४.९९) इति द्वयोरपि परस्मैपदसञ्ज्ञा स्यात्, ततश्च द्वावपि परस्मैपदिभ्य एव स्याताम् । तिङ्क्ष्वसंनिवेशाच्च तदन्तस्य तिङन्तता न स्यात्, ततश्च 'तिङ्ङतिङः' (८.१.२८) इति निघातो न प्राप्नोति । हिस्वयोश्च कृत्त्वात् तदन्तस्य शतृ-शानजन्तस्येव प्रातिपदिकत्वात् स्वाद्युत्पत्तिः प्राप्नोति, तत्र च विभक्तिसञ्ज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोः

'विभक्तिस्वरप्रतिरूपकाश्च निपाताः' (ग.सू. १६) 'निपातोऽव्ययम्' इत्यव्ययसञ्ज्ञायां यद्यपि विभक्तीनां श्रवणं न भवति, तथापि ततः परस्य 'तिङ्ङतिङः' (८.१.२८) इति निघातः प्राप्नोति, द्वावपि च कर्तर्येव स्याताम्, न तु स्वादेशो भावकर्मकर्तृषु स्यात्। तस्मादयमपि पक्षो दुष्ट एव, तत्राह—'योगविभागश्चात्र कर्तव्यः' इति। योगविभागे यथेष्टं सिध्यति तथा दर्शयति—'लोडित्येव' इति। एतेन द्वितीययोगे प्रथमान्तस्य लोड्ग्रहणस्यानुवृत्तिं दर्शयति। तत्र च सामानाधिकरण्येन लोडित्यनेन हिस्वौ विशेष्येते, न षष्ठ्या विपरिणामेन, न च हिस्वौ लोटौ भवतः; उच्यते चेदं लोटो हिस्वाविति, ततश्च धर्मातिदेशो विज्ञायते, तदाह—'लोड्धर्माणौ तौ भवत इत्यर्थः' इति। अत्र च लोट्शब्देन लोट्सम्बन्धिनौ हिस्वावुच्येते मुख्यलोट्सम्बन्धिनो धर्मस्यातिदेश्यस्यासम्भवात् प्रसिद्धौ लोट्सम्बधिनौ यौ हिस्वौ, 'सेर्ह्यपिच्च' (३.४.८७), 'सवाभ्यां वामौ' (३.४.९१) इति विहितौ, तद्धर्माणावित्यर्थः। किं सिद्धं भवति? तद्दर्शयति—'तेन' इति। तयोर्हि परस्मैपदात्मनेपदत्वं भेदेन व्यवस्थितम्—हेः परस्मैपदम्, स्वस्यात्मनेपदत्वमिति। अतस्तद्धर्मातिदेशादिहापि तदुभयं भेदेन भविष्यतीत्यर्थः। 'तिङ्त्वं च भवति' इति। तथा च हीत्यस्य कर्ता वाच्यः, स्वशब्दस्य तु भावकर्मकर्तारः। पुरुषैकवचनसञ्ज्ञे तु विधानसामर्थ्यान्न भवतः, यदि हि ते अपि स्याताम्, हिस्वयोरनेन विधानमनुपपन्नं स्यात्; वचनान्तरेणैव तयोस्तादृशयोः सिद्धत्वात्।

'लुनीहि लुनीहि' इत्यादि। पुनः पुनर्लवनमयं करोतीत्यादिरर्थः। तत्र च लोडन्तं पुनः पुनर्लवनमाह, अनुप्रयोगधातुस्तु कृतिं तद्विषयां वदन् अभिव्यनक्ति, संमुग्धं तद्गतं साधनादिकम्। एवं च सामान्यविशेषयोः विशेषणविशेष्यभावात् धातुसम्बन्ध उपपद्यते, इत्येवशब्दौ लोडन्तानुप्रयोगयोः सम्बन्धार्थौ, अयंत्वमहंशब्दाः पुरुषविशेषाभिव्यक्तिहेतवः। 'अथ वा' इति। 'वा च तध्वमोः' इत्यस्य फलं दर्शयति।

'अलावीत्' इति। लुङ्, सिचि वृद्धिः, सिच इट्, तिपः 'अस्तिसिचोऽपृक्ते' (७.३.९६) इतीट्, 'इट ईटि' (८.२.२८) इति सिचो लोपः, 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' (वा. ९०२) इति सवर्णदीर्घत्वम्। एवं 'मध्यमोत्तमयोरुदाहार्यम्' इति। लुनीहि लुनीहीत्येव त्वमलावीः, अलाविष्टमलाविष्ट। अथ वा लुनीत लुनीतेत्येव यूयमलाविष्ट। लुनीहि लुनीहीत्येवाहमलाविषम्, अलाविष्व, अलाविष्म। एवं 'मध्यमोत्तमयोरपि' इति। लुनीहि लुनीहीत्येव त्वं लविष्यसि, लविष्यथः, लविष्यथ। अथ वा लुनीत लुनीतेत्येव यूयं लविष्यथ। लुनीहि लुनीहीत्येवाहं लविष्यामि, लविष्यावः, लविष्यामः। 'एवं सर्वेषु लकारेषूदाहार्यम्' इति। लुनीहि लुनीहीत्येवायमलुनात् लुनातु, लुनीयात्, लूयात्, लुलाव, लविता, लविष्यति, अलविष्यत्; अधीष्वाधीष्वेत्येवायमध्यैत अधीताम्, अधीयीत, अध्येषीष्ट, अधिजगे, अध्यगीष्ट, अध्यैष्ट, अध्येता, अध्यैष्यत, अध्येष्यते। कर्मणि—लूयस्व लूयस्वेत्येवायं केदारो लूयते इत्यादि। भावे तु प्रसिद्धः स्वशब्दो दृष्टो न वेति चिन्त्यम्।

अथोदाहरणेषु कथं द्विर्वचनम्, यावता क्रियासमभिहारं द्योतयितुं द्विर्वचनं विधीयते, स चात्र तस्मिन्नेव विधीयमानेन लोटैव द्योतित, अथ द्योतितेऽपि तस्मिन 'क्रियासमभिहारे द्वे भवतः' (वा. ८८६) इति वचनसामर्थ्यादत्र द्विर्वचनं यङन्तेऽपि प्राप्नोति, वक्तव्यो वा विशेषः? तत्राह—क्रियासमभिहाराभिव्यक्तौ' इति। 'लः कर्मणि च' (३.४.६९) इति वचनाद्भावकर्मकर्तारोऽस्य वाच्याः, समभिहारस्तु द्विर्वचनेनैव द्योत्यः, यङस्तु न किंचिदन्यद्वाच्यं द्योत्यं वा विद्यते इति तेनैव क्रियासमभिहारस्य द्योतितत्वाद्द्विर्वचनाभावः। ननु च सन्तु भावकर्मकर्तारोऽस्य वाच्याः, समाभिहारोऽप्युपाधित्वेन श्रुतः, सोऽपि लोटो द्योत्यो भवतु, यथा—लडादिषु वर्तमानादयः? एवं तर्ह्यसति द्विर्वचने शुद्धस्य लोटोऽस्य च साधारणं रूपमिति समभिहाराभिव्यक्तयेऽवश्यं

द्विर्वचनमपेक्ष्यते। शब्दशक्तिवैचित्र्यं चात्र हेतुः, यथा—स्त्रीत्वं क्वचिदेकेनैव प्रत्ययेन द्योत्यते, क्वचिद्द्वाभ्याम्, क्वचिद्वृषदित्यादौ प्रातिपदिकेनैवेत्यलं प्रबन्धेन ॥

## ३. समुच्चयेऽन्यतरस्याम् ।

'समुच्चये' इति सामान्योक्तावपि क्रियासमुच्चय एव दृश्यते, धातोः प्रत्ययविधानादित्याह—'अनेकक्रियाध्याहारः समुच्चयः' इति। अनेकासां क्रियाणामेकस्मिन् सम्बन्धिनि निचीयमानतेत्यर्थः। एतेनैकक्रियाविषयात् समभिहारात् समुच्चयस्य भेदो दर्शितः। धातोः क्रियावाचित्वात् क्रियाधर्मे समुच्चयमात्रे वृत्तिं भवतीत्यभिप्रायेणाह—'समुच्चीयमानक्रियावचनात्' इति। एकस्मिन् साधने याः क्रियाः समुच्चीयन्ते तद्वाचिभ्यो धातुभ्यः प्रत्यय इत्यर्थः।

'भ्राष्ट्रमट' इत्यादि। भ्राष्ट्राटनादीनि करोतीत्यर्थः। तत्रानुप्रयुज्यमानो धातुः साधनभेदेन भिन्नेष्वटनेष्वनुवर्तमानं कृतिव्यापारं वदंस्तद्गतानि साधनादीनि प्रकाशयतीति परस्परसम्बन्धः। भ्राष्ट्रम् = चुल्लि, खस्य दूरं खदूरम् = अपवरकम् स्थाल्यः प्रक्षालिता यत्र निधाय पिधीयन्ते तत् स्थाल्यपिधानम्।

'अथ वा' इति। प्रथमेनाथवाशब्देन 'वा च तध्वमोः' इत्यस्य व्यापारं दर्शयति, द्वितीयेनान्यतरस्यांग्रहणस्य। एवं द्वितीयेऽप्युदाहरणे द्रष्टव्यम् ॥

## ४. यथाविध्यनुप्रयोगः पूर्वस्मिन् ।

'यथाविधि' इति। पदार्थानतिवृत्तौ 'यथार्थे यदव्ययम्' (२.१.६) इत्यव्ययीभावः, अनुप्रयोग इत्यनुशब्दो धात्वर्थानुवादी, न पश्चाद्भावेनानन्तर्येऽर्थे। तेन पूर्वव्यवहितप्रयोगोऽपि भवति। 'पूर्वस्मिन्' इति वचनं विस्पष्टार्थम्। समुच्चये हि सामान्यवचनस्यानुप्रयोगं वक्ष्यति, तेन ततोऽन्यत्रायं विधिः अन्यश्च विषयः, पूर्वमेव लोड्विधानम्। 'धातुसम्बन्धे प्रत्ययविधानात्' इति। ननु च हिस्वन्तमेतदनभिव्यक्तपदार्थकम्, सङ्ख्याकालपुरुषाणामनभिव्यक्तत्वात्, अतस्तदर्थाभिव्यक्त्यर्थमेवानुप्रयोगः सिद्धः? अस्त्वेवम् किमेतावता वृत्तिकारोक्तो हेतुर्न भवति! अथ वा यावन्तमर्थमभिव्यङ्क्तुं हिस्वान्तं समर्थं तावतो विवक्षायामनुप्रयोगासिद्धिं मत्वैवमुक्तम्। 'यथाविध्यर्थं वचनम्' इति। ननु च 'समुच्चये सामान्यवचनस्य' (३.४.५) इति वक्ष्यति, तत्र नियमो विज्ञास्यते—समुच्चय एव धात्वन्तरस्यानुप्रयोग इति, ततश्च क्रियासमभिहारे यथाविध्यनुयोगो भविष्यति? एवं मन्यते—समुच्चये सामान्यवचनस्यैवानुप्रयोग इति नियमादन्यत्र धात्वन्तरस्यापि स्यादिति 'छिनत्ति' इति नानुप्रयुज्यत इति। पचतीत्यादेर्भिन्नार्थस्य त्वप्रसङ्गः, लोडन्तेनानन्वयात्। समानार्थस्य तु सम्भवति सम्बन्धः, यथा—तस्यैव। एवं सामान्यवचनस्य करोत्यादेरप्यनुप्रयोगप्रसङ्गः, तस्यापि हि सन्निहितलोडन्तवाच्ये विशेषे पर्यवसानात् सम्भवत्येवान्वयः। ननु चैकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवति, एतच्च 'कृञ्चानुप्रयुज्यते' (३.१.४०) इत्यत्र व्याख्यातम्, तत्र यथा गवां स्वामी अश्वेषु चेति न भवति, तथेहापि येनैव धातुना लोट्प्रयोगः प्रारब्धस्तेनैवासौ समापयिष्यते? न; अस्यापि न्यायस्य वेदे लोके च व्यभिचारात्। वेदे तावत् 'इन्द्राय राज्ञे सूकरः' (तै.सं. ५.५.११.१) इति चतुर्थी प्रयोगप्रकरणे 'क्षिप्रश्येनस्य वर्तिका'

(तै.सं. ५.५.११.१), 'ते धातुं' (तै.सं. ५.५.१२.१) इति षष्ठी, 'मयुः प्राजापत्यः' (तै.सं.-५.५.१२.१) इति तद्धितश्च देवतासम्बन्धे दृश्यते। लोकेऽपि—सक्तूः, पयः पपुरिति लिटा सह 'अनेनिजुः' इति लङ् प्रयुक्तः। तस्मादारभ्यमेवैतत्॥

## ५. समुच्चये सामान्यवचनस्य।

ननु च हिस्वान्तस्यानभिव्यक्तपदार्थकत्वाद्धातुसम्बन्धे प्रत्ययविधानाच्चानुप्रयोगः सिद्धः, नार्थ एतेन? तत्राह—'सर्वविशेष' इति। असत्यस्मिन् यतो धातोर्लोड्विहितः स तस्यानुप्रयुज्येत। एवमपि हिस्वान्तार्थस्याभिव्यक्तिर्भवत्येव, धातुसम्बन्धश्चोपपद्यते।

ननु च सर्वेषु विशेषेषु यदनुगतं सामान्यं तद्वाचिनोऽनुप्रयोगेऽपि तस्य सामान्यस्य सन्निहितेषु विशेषेषु पर्यवसानादर्थाभिव्यक्तिश्च सर्वेषां भवति, धातुसम्बन्धश्च। तत्र सामान्यवचनस्यैकस्यानुप्रयोगोऽस्तु, बहूनां विशेषवाचिनां वेति सम्प्रधारणायामेकस्यैव भविष्यति, लघुत्वात् तत्राह—'लाघवं च' इति। अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यात्, न वनस्पत्यादिशब्दानामिति भावः। ननु भ्राष्ट्रमटेत्यादौ तस्यैवानुप्रयोगात् कथं सामान्यवचनता? तत्राह—'भ्राष्ट्रमट' इत्यादि। 'कारकभेदात् क्रियाभेदे सति' इति। भेदनिबन्धनः समुच्चयोऽप्येवमेवात्रोपपाद्यः॥

## ६. छन्दसि लुङ्लङ्लिटः।

उदाहरणेषु धातुसम्बन्धो मृग्यः। 'अकरत्' इति। 'कृमृदृरुहिभ्यश्छन्दसि' (३.१.५९) इति च्लेरङादेशः, 'ऋदृशोऽङि गुणः' (७.४.१६)॥

## ७. लिङर्थे लेट्।

'जोषिषत्' इति। 'जुषी प्रीतिसेवनयोः' (धा.पा. १२८८) अनुदात्तेत्, व्यत्ययेन परस्मैपदम्, 'इतश्च लोपः परस्मैपदेषु' (३.४.९७) 'लेटोऽडाटौ' (३.४.९४) इति तिपोऽडागमः, 'सिब्बहुलं लेटि' (३.१.३४) इति सिप्, इडागमः। 'तारिषत्' इति। सिब्विधौ बहुलं णिद्वद्भाव उक्तः, ततो वृद्धिः। 'पताति' इति। 'पत्लृ गतौ' (धा.पा. ८४५), तिप आडागमः॥

## ८. उपसंवादाशङ्कयोश्च।

'यदि मे भवान्' इत्यादिनोपसंवादस्य स्वरूपं दर्शयति। 'कारणतः' इत्यादिना। शङ्काया अनुसरणमनुगमनमित्यर्थः। 'अहमेव' इत्यादि। त्रिपुरविजये देवैः प्रार्थितस्य देवस्यैतद्वचनम्। 'ईश ऐश्वर्ये' (धा.प.-१०२०) उत्तमैकवचनमिट्, टेरेत्वम् 'वैतोऽन्यत्र' (३.४.९६) इत्यैकारः। पशवो द्विपादश्चतुष्पादश्च। 'वायुं देवा अब्रुवन् सोमं राजानं हनामेति' (तै.स. ६.४.७.१) 'सोऽब्रवीद् वरं वृणै, मदग्रा एव वो ग्रहा गृह्यान्ता' इति (तै.सं. ६.४.७.१)। मद्ग्रहोऽग्रं प्रथमं येषां ते तथोक्ताः, ग्रहेः कर्मण्यात्मनेपदं यक्,

ग्रहिज्यादिना (६.१.१६) संप्रसारणम्, ह्रस्याडागमः पूर्ववदेत्वम् । 'देवाः सोममघ्नन् सोऽपूयदशक्यतामागमत' (तै.सं. ६.४.७.१) ते, वायमब्रुवन्निमं नः स्वदयेति, सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्तै इति (तै. सं. ६.४.७.२) अहं देवता येषां तानि तयोक्तानि। 'उच्यान्तै' इति वचेः 'वचिस्वपि' (६.१.१५) इत्यादिना सम्प्रसारणम्, शेषं पूर्ववत् । 'नेज्जिह्मायन्तः' इति । इच्छब्द आशङ्कां द्योतयति । जिह्माचरणेन नरकपातः सम्भाव्यते, स मा भूदित्यर्थः । जिह्मम् = कुटिलं पापम्, 'छन्दसि परेच्छायाम्' (वा० १८३) इति क्यच् । 'अश्वाघस्यात्' इति योगविभागेनात्वम् । वृत्तौ तु वस्तुमात्रं दर्शितम् । 'जिह्माचरणेन' इति । न पुनराचारे उपमानादत्र क्यजस्ति । हेतौ शतृप्रत्ययः ।

'लिङर्थ एवायम्' इति । हेतुहेतुमद्भावे कथम् ? उपसंवादे तावत्करणं हेतुः, दानं हेतुमत् । अन्यथा यदि मे भवानिदं कुर्यादिति लिङ न स्यात्, विभाषा तु लिङिति । अहमपि ते इदं दास्यामीति लृट् । भाष्ये तु ददातेरपि लिङ प्रयुक्तः । आशङ्काऽपि कारणतः कार्यानुसरणम्, तत्र कारणं हेतुः, कार्यं हेतुमत् । अथापि कारणमवधिः, दानमवधिमत् इत्यवध्यवधिमद्भाव उपसंवादे प्रतीयते, न हेतुहेतुमद्भावः, आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीत्युच्येत, तथापि लिङप्रयोगसिद्धयेऽवश्यं वक्तव्योऽत्र हेतुहेतुमद्भावः, अतो लिङर्थ एवायमित्यर्थः । 'नित्यार्थं तु वचनम्' इति । छन्दसि नित्योऽत्र लिङ दृश्यत इति मन्यते, तथाऽपि व्यवस्थितविभाषया सिद्धमिति चेत्, तदेव तर्हि वचनेन ज्ञाप्यते ॥

## ९. तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ।

'कथं ज्ञायते' इति । 'कर्तरि कृत्' (३.४.६७) इति वचनात् भावस्तुमर्थो नोपपद्यत इति प्रश्नः । अपकर्षः = अपनयः, स्वार्थश्च धातूनां भाव इति साध्यमानरूपः । स एव हि धातुवाच्यो भावः । घञादिवाच्यस्तु भावो धात्वर्थव्यतिरिक्तः सिद्धतारूपः । 'पिबध्यै' इति । यको 'बहुलं छन्दसि' (?) इति लुकि पिबादेशः । 'मादयध्यै' इति । यकः प्रसङ्गे व्यत्ययेन शप् ॥

## १०. प्रयै रोहिष्यै अव्यथिष्यै ।

## ११. दृशे विख्ये च ।

'योगविभागश्चिन्त्यप्रयोजनः ॥

## १२. शकि णमुल्कमुलौ ।

## १३. ईश्वरे तोसुन्कसुनौ ।

'वितृदः' इति । 'ओतृदिर् हिंसानादरयोः' (धा.पा. १४४६)

## १४. कृत्यार्थे तवैकेन्केन्यत्वनः ।

'कृत्यानामर्थो भावकर्मणी' इति । यद्यपि भव्यगेयादिषु कर्त्राप्यर्थः, वह्यं करणम्, स्नानीयं चूर्णमित्यादिषु करणादयः । तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानम्, किं तर्हि ? स्वरूपेण, अतः कृत्यतया विधानं भावकर्मणोरेवेति भावः । 'द्विदृक्षेण्यः' इति । दृशेः सन्नन्तात् केन्यः । 'शुश्रूषेण्यः' इति । शृणोतेः । 'सयादि-सूत्रेऽपि' इति । येन सयादयो विधीयन्ते तत्र 'तुमर्थे सेसेनसे' (३.४.९) इत्यत्रेत्यर्थः । 'तस्य तुमर्थादन्यत्र' इति । अन्यथाऽनेनैव तुमर्थे भावेऽपि सिद्धत्वादनर्थकं तत्स्यात् ॥

## १५. अवचक्षे च ।

'एशप्रत्ययः' इति । शित्करणं सार्वधातुकत्वार्थम्, तेन 'चक्षिङः ख्याञ्' (२.४.५४) न भवति ॥

## १६. भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।

संस्थानादीनामवधित्वेन लक्षणभावः । 'आ समाप्तेः' इति । सम्पूर्वो हि तिष्ठतिः समाप्तौ रूढः; 'सन्तिष्ठते पिण्डपितृयज्ञः' इत्यादौ दर्शनात् । 'आतमितोः' इति । 'तमु ग्लानौ' (धा.पा. १२०२) ॥

## १७. सृपितृदोः कसुन् ।

## १८. अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा ।

'तुमर्थे' इत्येव । 'अलंकृत्वा' इति । 'अमैवाव्ययेन' (२.२.२०) इति नियमादुपपदसमासाभावः । न कर्तव्यमित्यर्थः ।

'वासरूप इति चेत्' इति । पूर्वं तु प्रैषादिषु कृत्यानां वचनेन 'स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नास्ति' इति ज्ञापितत्वादिह तदभावमभिप्रेत्य प्राग्ग्रहणं विकल्पार्थमित्युक्तम् ॥

## १९. उदीचां माङो व्यतीहारे ।

'अमपित्य' इति । 'मेङ प्रणिदाने' (धा.पा. ९६१) क्त्वो ल्यपि 'मयतेरिदन्यतरस्याम्' (६.४.७०) इतीत्वं, ह्रस्वस्य तुक् । 'अपूर्वकालत्वात्' इति । पूर्वं ह्यसौ याचते, पश्चादपमयते । यदा त्वस्माद्वचनान्मयतेः क्त्वो भवति तदा 'समानकर्तृकयोः' (३.४.२१) इत्यादिना याचेर्न भवति, अनेन बाधितत्वात्, यथा—द्वितीय-द्विर्वचनेन प्रथमद्विर्वचनम् । अनभिधानाद्वा । 'मेङः' इत्यादि । मेङोऽयं कृतात्वस्य निर्देशः कृतः, न पुनः 'माङ माने' (धा.पा. १०८८) इत्यस्य, तस्य व्यतिहारे वृत्त्यसम्भवादित्यर्थः । यद्येवम्, मेङः इत्येव वक्तव्यम्, तत्रायमप्यर्थो व्यतीहारग्रहणं न कर्तव्यं भवति, तत्राह—'ज्ञापनार्थम्' इति । किं ज्ञाप्यत इत्याह—'नानुबन्धकृतम्'

इति । प्रयोजनमाह—'तेन' इति । यद्ययमर्थो न ज्ञाप्येत, ततः श्रूयमाणे पकारे दैप आत्वं न स्यात । अनेजन्तत्वात्, तनश्चावाविति प्रतिषेधे तस्य ग्रहणं न स्यात्, 'दाप् लवने' (धा पा. १०५९) इत्यस्यैव तु स्यात् ॥

## २०. परावरयोगे च ।

परावरशब्दयोः सम्बन्धिशब्दत्वाद्यदपेक्षं परावरत्वम्, तयोः पूर्वपरयोरेव परावराभ्यां योगो गम्यते, इत्याह—'परेण पूर्वस्य' इति । पूर्वशब्देनात्रावरो विवक्षितः । 'अप्राप्य नदीम्' इति । नद्याः पूर्वदेश इत्यर्थः । 'ततश्च नदी परा भवति' इति । परनदीयोगेन पर्वतो विशेष्यते । 'अतिक्रम्य पर्वतम्' इति । पर्वतस्य परस्तादित्यर्थः । ततश्चावरः पर्वतो भवति, तेनावरपर्वतयोगेन नदी विशेष्यते । अयमप्यपूर्वकालार्थ आरम्भः, अतिक्रमोऽत्र कीदृश इति चिन्त्यम् ॥

## २१. समानकर्तृकयोः पूर्वकाले ।

क्रियापेक्षत्वात कर्तृभावस्य धात्वधिकारेऽपि तदर्थस्यैव समानकर्तृकत्वं विज्ञायते, न धातोरित्याह—'समानः कर्ता ययोर्धात्वर्थयो' इति । समानशब्दोऽयमेकवाची, तत्रेति निर्धारणे सप्तमीं दर्शयति । षष्ठ्यामपि न दोषः । सप्तमी त्वाश्र्य । 'पूर्वकाले धात्वर्थे वर्तमानात्' इति । प्राभाकरास्तु पूर्वप्रयुज्यमानादिति व्याचक्षते, अनुष्ठाने पौर्वकाल्यं नाद्रियन्ते, तद्भाष्यवार्तिकविरोधादुपेक्ष्यम् । उक्तमं हि—आस्यं व्यादाय स्वपिति, चक्षुः संमील्य हसतीत्युपसङ्ख्यानमपूर्वकालत्वादिति । ननु च शक्तिः कारकम्, सा च प्रतिक्रियं भिद्यते, तत्कुतः समानकर्तृकत्वम् ? इत्यत आह—'शक्तिशक्तिमतोः' इति । इह समानकर्तृकयोरिति द्विवचननिर्देशः क्रियते, तेन द्वयोरेव पौर्वकाल्ये स्यात, बहूनां न स्यात, तत्राह—'द्विवचनमतन्त्रम्' इति । अवश्यं येन केनचिद्वचनेन निर्देशः कर्तव्यः, तत्र समानकर्तृकत्वस्य पूर्वकालत्वस्य च भेदाधिष्ठानत्वाद्भेदनिबन्धनयोर्द्विवचनबहुवचनयोः प्रथमभावित्वादद्विवचनं प्रवृत्तम्, न त्वेतत्तन्त्रमित्यर्थः । एवमपि लोकविज्ञानान्न सिध्यति, तद्यथा लोके—अमीषां ब्राह्मणानां पूर्वं आनीयताम् इत्युक्ते सर्वपूर्व एवानीयते, एवमिहापि सर्वपूर्वाया क्रियायाः प्राप्नोति, तस्मादेवं वक्तव्यम्—सर्वेषामेवात्र व्रजिं प्रति पौर्वकाल्यम्, स्नात्वा व्रजति, भुक्त्वा व्रजति, पीत्वा व्रजतीति । आख्यातवाच्या हि क्रिया विशेष्यत्वात् प्रधानम्, तेन तां प्रति सर्वासां विशेषणत्वात परस्परेणासम्बन्धः, तदुक्तम्—'गुणानां च परार्थत्वासम्बन्धः समत्वात स्यात्' इति । एवं च कृत्वा प्रयोगोऽप्यनियतो भवति—स्नात्वा भुक्त्वा पीत्वा व्रजति, पीत्वा स्नात्वा भुक्त्वा व्रजतीति ।

'भुक्तवति ब्राह्मणे' इति । ननु तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययः, क्तवतुस्तु कर्तरि ? एवं तर्ह्यस्मिन् विषये भावे न भवतीति प्रत्युदाहरणत्वं वाच्यम्, 'श्रीशैलशिखरं दृष्ट्वा सर्वपापैः प्रमुच्यते' इत्येवमादीनां कर्तृभेदविषयाणां प्रयोगाणामसाधुत्वमेव । 'व्रज त जल्पति च' इति । यौगपद्यादिह पूर्वकालता नास्ति । 'अपूर्वकालत्वात्' इत्यादि । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति, यदैव हसति तदैव संमीलयति, न वा स्वप्नस्यापरकालत्वात्, अवश्यं त्वसौ व्यादाय मुहूर्तमपि स्वपिति संमील्य च हसति, ततश्चोत्तरकालभावित्वापहासाद्यपेक्षं पौर्वकाल्यं तदाश्रयश्च प्रत्ययः । इह कस्मान्न भवति—पूर्वं भुङ्क्ते, ततो व्रजजीति ? स्वशब्देनोक्तत्वात् । 'विभाषाग्रे' (३.४ २४) इत्यनेनापि न भवति, किं कारणम् ? साधनपौर्वकाल्यविषयाणामग्रादीनां तत्र

ग्रहणम्, अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा ततो व्रजतीति। इह तु व्रज्यपेक्षं भोजनस्य यत्पौर्वकाल्यं तत्र क्त्वा-प्रत्ययश्चोद्यते, तत्पूर्वशब्देनोक्तम्। न च वचनसामर्थ्यादुक्तेऽपि प्रसङ्गः; साधनपौर्वकाल्यविषयेऽग्रचादावुपपदे चरितार्थत्वात् क्रियाविषयत्वाच्च कालव्यवहारस्य तद्द्वारकमेव साधनपौर्वकाल्यं द्रष्टव्यम्। उक्तं हि--

क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका (वा.प. ३.९.२) इति ।

इहास्यते भोक्तुमिति वासरूपेण लङ् भवति, यदा आसेः क्त्वा भवति तदा भुजेर्लडादय एव भवन्ति--आसित्वा भुङ्क्त इति, न तुमुन्। अनभिधानात्। आसित्वा भोक्तुमित्युक्ते प्रक्रमत इत्यादीनां सम्बन्धः प्रतीयते ॥

## २२. आभीक्ष्ण्ये णमुल् च ।

'द्विर्वचनसहितौ' इति। केन पुनरत्र द्विर्वचनमित्याह--'आभीक्ष्ण्ये द्वे भवत इत्युपसङ्ख्यानात् द्विर्वचनम्' इति। 'नित्यवीप्सयोः' (८.१.४) इत्यत्र तु वामनो वक्ष्यति 'तिङक्षु नित्यता अव्ययकृत्सु च' इति। तन्मते नित्यग्रहणादेवात्र द्विर्वचनम्। 'पायं पायम्' इति। 'आतो युक्' (३.३.१२८) ॥

## २३. न यद्यनाकाङ्क्षे ।

'अनाकाङ्क्षे' इति। पचाद्यजन्तेन नञ्समासः, तद्दर्शितम्। 'नापरं किञ्चिदाकाङ्क्षते' इति। 'क्त्वा तु पूर्वसूत्रविहितोऽपि' इति। णमुल् चेत्युक्तम्, तदपेक्षं पूर्वत्वमपिशब्दादनन्तरसूत्रविहितोऽपि आभीक्ष्ण्ये-नाभीक्ष्ण्ये च क्त्वामात्रस्य प्रतिषेध इत्यर्थः। एतच्च पूर्वकाले यत्प्राप्नोति, तन्न भवतीत्येवं प्रकरणापेक्षया प्रतिषेधविज्ञानाल्लभ्यते ॥

## २४. विभाषाऽग्रेप्रथमपूर्वेषु ।

अग्रशब्दो देशविशेषवचनोऽप्यस्ति--प्रभोरग्रे भुङ्क्ते इति, इह तु प्रथमशब्दसाहचर्यात् कालविशेष-वाचिनो ग्रहणम्। अनुकरणत्वाच्चाग्र इति विभक्तेर्लुगभावः--अस्यवामीयमिति यथा। 'आक्षीण्य इति नानुवर्तते' इति। अप्राप्तविभाषेयमित्यत्रेयं युक्तिः। तदनुवृत्तौ हि पूर्वसूत्रेण प्राप्ते विभाषा स्यात्, एवं च वृत्ता साधनपौर्वकाल्यविषया अग्रचादय इत्युक्तं भवति। क्रियापौर्वकाल्ये हि अग्रचादिभिरेव तस्योक्तत्वा-दाभीक्ष्ण्येऽपि क्त्वाणमुलोरप्राप्तिरिति 'आभीक्ष्ण्ये' इत्यनुवृत्तावप्यप्राप्तविभाषैव स्यात्। न च द्विर्वचन-मन्तरेणाभीक्ष्ण्यं द्योतयितुं शक्यमिति न तद्द्योतनायापि क्त्वाणमुलोर्विधानमुपपद्यते। नन्वननुवर्तमानेऽप्याभी-क्ष्ण्यग्रहणे पूर्वसूत्रस्यावकाशो यत्राग्रचादयो न सन्ति, अस्य तु यत्राभीक्ष्ण्यं नास्ति सोऽवकाशः; आभीक्ष्ण्ये चाग्रचादिषु च सत्सूभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोतीत्युभयत्र विभाषेयं युक्ता? एवं मन्यते--पूर्व-विप्रतिषेधेनाभीक्ष्ण्ये नित्य एव विधिर्भवतीति--अग्रेभोजंभोजं व्रजति, अग्रेभुक्त्वाभुक्त्वा व्रजति। एवं पूर्वप्रथ-मयोरपि द्रष्टव्यम्। नन्वेवं णमुल्यप्राप्ते क्त्वाप्रत्यये तु 'समानकर्तृकयोः' (३.४.२१) इत्यादिना प्राप्ते सत्ययमारम्भ इति पुनरप्युभयत्रविभाषैव युक्ता? नैतदस्ति; सह विहितौ यौ क्त्वाणमुलौ यद्विषये वासरूपवि-धेरभावो ज्ञापयितुमिष्टः, तावनन्तरसूत्रविहितौ क्त्वाणमुलावभिप्रेत्याप्राप्तविभाषेयमुच्यते, न तु क्त्वाणमुल्मात्रा-पेक्षया। 'क्त्वाणमुलौ प्रत्ययौ भवतः' इति। किमर्थं पुनः क्त्वा विधीयते, यावता नाभीक्ष्ण्येऽपि समानकर्तृकयो-रित्यंवासौ सिद्धः? सत्यम्; विभाषाग्रहणेन वासरूपविधेरभावो ज्ञाप्यत इति वक्ष्यति। न च केवलं णमुल्विधौ

तदभावो ज्ञापयितुमिष्यते. किं तर्हि ? क्त्वासहितणमुल्विधौ । तस्माण्णमुलः क्त्वासहितस्य विषियथा स्यादिति णमुल् चेत्यनुवृत्त्या क्त्वोऽप्यनुवादः क्रियते । एवं हि द्वयोः सह विधातुमुपादीयमानं विभाषाग्रहणं तादृश एव विषये वासरूपविधेरभावं ज्ञापयतीति सिद्धमिष्टम् । 'अग्रेभोजं व्रजति' इति । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः । 'आभीक्ष्ण्ये लडादयो न भवन्ति' इति । अग्रे भुङ्क्ते भुङ्क्ते ततो व्रजतीत्येवं न भवतीत्यर्थः ।

'उपपदसमासः कस्मान्न भवति' इति । प्राप्तविभाषायामस्यामग्रादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वम्, न तु प्रत्ययोत्पत्तौ, तयोः 'आभीक्ष्ण्ये णमुल् च' (३.४.२२) इत्यनेनाविशेषेण विहितत्वादित्यनुपपदत्वम् । अप्राप्तविभाषायां त्वग्रादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वान्निमित्तस्य चोपपदसञ्ज्ञाविधानादुपपदसमासः प्राप्नोतीति भावः । 'अमैव यत्तुल्यविधानम्' इति । एतच्च तत्रैव व्याख्यातम् ॥

## २५. कर्मण्याक्रोशे कृञः खमुञ् ।

उदाहरणेषु करोतिरुच्चारणे वर्तते, तस्य शब्दात्मकमेव कर्म भवति । तत्र चोरादिशब्दाः शब्दप्रधानाः । चोरङ्कारम । कोऽर्थः ? चोरशब्दमुच्चार्येत्यर्थः; तदाह--'चोरोऽसि' इत्यादि । 'चोरकरणम्' इति । चोरशब्दोच्चारणम् । 'आक्रोशसम्पादनार्थम्' इति । निन्दितशब्दोच्चारणमन्तरेण तस्य सम्पादयितुमशक्यत्वात् । 'न त्वसौ' इति । न हि चोरोऽसीति वचनेन चारः क्रियते ॥

## २६. स्वादुमि णमुल् ।

'स्वादुमीत्यर्थग्रहणम्' इति । एतच्च व्याख्यानाल्लभ्यते । 'स्वाद्वर्थेषु' इति । मान्तत्वमपि सर्वेषां भवति; अर्थे सम्भवात् । लवणसम्पन्नशब्दावपि स्वादुशब्दपर्यायौ । अथ 'स्वादुमि' इति मकारान्तनिपातनं किमर्थम्, यावता खमुञ् प्रकृतः, सोऽनुवर्तिष्यते, तत्र 'अरुर्द्विषदजन्तस्य मुम्' (६.३.६७) इति मान्तत्वं सिद्धमिति ? तत्राह—'मकारान्तनिपातनमीकाराभावार्थम्' इति । भावप्रत्ययविषये मान्तत्वे निपात्यमाने 'वोतो गुणवचनात्' (४ १ ४४) इति ङीप् न भवति, मकारान्तत्वादुकारान्तत्वाभावादित्यर्थः । 'चव्यन्तस्य' इति । खमुञ्यपि न सर्वत्र मुम् सिध्यति; तद्विधौ 'अनव्ययस्य' (६.३.६६) इत्यधिकारादिति भावः । एवं तर्हि मान्तत्वमेव निपात्यताम्, प्रत्ययस्तु प्रकृतः खमुञेव विधेयः ? नैतदस्ति; अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीप् स्यादेव । णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्यं चोत्तरत्र णमुल् विधेय इति लाघवाभावादिहैव कृतः । 'अस्वाद्वीं स्वाद्वीं कृत्वा' इति । द्वयोर्वाक्ययोस्तन्त्रेणोपादानमेतत् । स्वाद्वीं कृत्वा यवागूं भुङ्क्ते इतीकाराभावस्योदाहरणम्, अस्वादुं स्वादुं भुङ्क्त इत्यव्ययस्य । इह यदि क्त्वादयः प्रत्ययाः 'कर्तरि कृत्' (३.४ ६७) इति वचनात् कर्तरि स्युः, इह पक्त्वौदनो भुज्यते देवदत्तेनेति देवदत्तात् तृतीया न स्यात्, क्त्वाप्रत्ययेनाभिहितः कर्तेति । अथ क्त्वाप्रत्ययेनाभिधाने सत्यपि भुजिप्रत्ययेनानभिहितः कर्तेति कृत्वाऽनभिहिताश्रया विभक्तिर्भवति तृतीया ? यद्येवम्, ओदने द्वितीया प्राप्नोति किं कारणम् ? भुजिप्रत्ययेनाभिधानेऽपि क्त्व प्रत्ययेनानभिहितं कर्मेति । तथा यदि कर्मणि स्युः, पक्त्वौदनं भुङ्क्ते देवदत्तः इति देवदत्तात् तृतीया प्राप्नोति, ओदनात् प्रथमा---पक्त्वौदनो भुङ्क्ते देवदत्तेन, पक्त्वौदनं भुङ्क्ते देवदत्त इत्येव तु भवति तथाऽस्मिन् णमुल्य प स्वादुङ्कारं भुज्यते यावगूर्देवदत्तेनेति यवाग्वा द्वितीया न भवति, स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त इत्यत्रापि कर्मणि द्वितीया भवति, कर्तरि तृतीया च न भवति । एवमा तुमुनो

द्रष्टव्यम्। तथा 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३.३.१०), 'समानकर्तृकेषु तुमुन्' (३.३.१५८) इत्यत्रापि तुमुनि भोक्तुमोदनः पच्यते देवदत्तेन, इष्यते ग्रामो गन्तुं देवदत्तेन, भोक्तुमोदनं पचति देवदत्तः, ग्रामं गन्तुमिच्छति देवदत्त इति सर्वत्रानुप्रयोगात् यत्र लादयस्तदनुरोधेनैव कर्तृकर्मणोर्विभक्तिर्भवति। तस्मादव्ययकृतः समानाधिकरण इति वक्तव्यम्, केन सामानाधिकरण्ये ? अनुप्रयोगेण। एतदुक्तं भवति,—अनुप्रयुज्यमानाद्धातोर्यस्मिन् कारके लादयो विहिताः, तत्रैवाव्ययकृतोऽपि भवन्तीति। एवं ह्युभाभ्यां कर्तृकर्मणोरभिहितत्वाद्यथायथं विभक्तयः सिध्यन्ति।

वृत्तिकारस्त्विममर्थमन्यथा साधयितुमाह—'तुमर्थाधिकाराच्च' इति। तत्र सयादिसूत्रे तुमर्थग्रहणात् तुमुन् भावे भवतीति ज्ञापितम्, तदेव च तुमर्थग्रहणं 'शकधृषज्ञा' (३.४.६५) इति यावदनुवर्तते, अतः सर्व एते क्त्वादयो भावे भवन्तीति तत्र चोदयति—'यद्येवम्' इति। 'तृतीया कस्मान्न भवति' इति। एतच्चोपलक्षणम्, स्वादुङ्कारं यवागूः भुज्यते देवदत्तेनेत्यत्र कर्मणि द्वितीया कस्मान्न भवतीत्यपि द्रष्टव्यम्। 'अनभिहिते' (२.३.१) इति पर्युदासे चैतच्चोद्यम्,—तदा हि सत्यभिधानेऽनभिधाने च यतोऽनभिधानं तदाश्रया विभक्तिः प्राप्नोति। परिहरति—'भुजिप्रत्ययेन' इति। 'अनभिहिते' (२.३.१) इति प्रसज्यप्रतिषेध आश्रीयते इति भावः। तदा हि यतोऽभिधानं तदाश्रयः प्रतिषेधो भवति। ननु च शक्तिः कारकम्, अन्या च करणविषया शक्तिः, अन्या च भुजिविषया, तत्र यद्येकस्याः शक्तेरभिधानमनभिधानं च स्यात्, स्यादयं परिहारः, यतोऽभिधानं तदाश्रयः प्रतिषेध इति शक्तिभेदात्त्वयुक्तः ? इत्यत्राह—'न चास्मिन्' इति। किं कारणं भेदो न विवक्षितः ? इत्याह—'समानकर्तृकत्वं हि विरुध्यते' इति। ननु च मा नामास्मिन् प्रकरणे शक्तिभेदो विवक्षितः, 'अनभिहितेन' इत्यत्र कस्मान्न विवक्ष्यते ? असम्बद्धमेतत्। कथं हि तस्मिन्नेव प्रयोगे तदेव विवक्षाविवक्षे स्याताम्। किं च—'अनभिहिते' (२.३.१) इत्येकत्वादीनामाधारनिर्देशोऽनभिहिते कर्मादौ यदेकत्वादि तत्रेति, द्रव्यमेव चैकत्वादीनामाधारो न शक्तिः, अतस्तत्रापि द्रव्यमेवानभिहितमित्युच्यते, तस्य च शक्तिद्वारेणाभिधानानभिधानयोः सतोर्यतोऽभिधानं तदाश्रयः प्रतिषेधो भवतीति युक्तमेव। अभ्युपेत्याऽपि शक्तिभेदविवक्षां परिहारमाह—'प्रधानशक्त्यभिधाने च' इति। आख्यातपदवाच्या क्रिया विशेष्यत्वात् प्रधानम्, विशेषणभूता त्वप्रधानम्, तद्द्वारेण तद्विषययोः शक्त्योरपि गुणप्रधानभावः। तत्र प्रधानानुवर्तित्वाद्गुणानां तन्मुखप्रेक्षित्वात् तद्विरुद्धस्वकार्यारम्भाभावाद्यथायथं विभक्तिसिद्धिरित्यर्थः। उक्तं च—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रयत्नेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥ (वा.प. ३.७.८१-८२) इति।

वयं तु ब्रूमः—सकृत् श्रुतस्य युगपदुभाभ्यां सम्बन्धाभावादेकेनैव प्रधानेन शब्दोऽन्वय इति, इतरेण तु सन्निधानादार्थ इति॥

## २७. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्।

'कथं पुनरसौ सिद्धाप्रयोगः' इति। सिद्ध ओदन इत्यादौ सिद्धशब्दो निष्पन्नवचनः, ततश्च सिद्धश्चेदप्रयोगः,

कथमप्रयुज्यमानात् ततो णमुलविधिरिति प्रश्नः । 'सिद्धेसत्यारम्भो नियमार्थः' (का.प.सू वृ. ५९) इतिवत् प्राप्तवचनः सिद्धशब्दः इत्युत्तरम् । 'निरर्थकत्वात्' इति । निष्प्रयोजनत्वात् । 'एवमेव' इति । निरर्थक एव सन्नित्यर्थः। एतदेव स्फोरयति—'अन्यथा भुङ्क्ते' इति । 'यावनार्थः' इति । उदाहृणेष्वनुप्रयोगेषु या क्रिया तत्प्रकारवचना अत्रान्यथादयः । 'अन्यथा कृत्वा शिरो भुङ्क्ते' इति । अत्र तु विना करोतिना शिरसोऽन्यथाकारणं न प्रतीयते, भुजिक्रियागत एव प्रकारो गम्यते अतोऽवश्यं प्रयोज्यः करोतिः ॥

## २८. यथातथयोरसूयाप्रतिवचने ।

'यद्यसूयन पृच्छति प्रतिवक्ति' इति । पृच्छति सति यद्यसूयन् प्रतिवक्तीत्यर्थः । 'असु मानसोपतापे' (धा.प. १२०९ ?) कण्ड्वादिः । 'तत्र' इति । एवम्भूते विषये यत्प्रतिवचनं तदसूयाप्रतिवचनमित्यर्थः। 'यथाकारम्' इति । प्रष्टुमनर्हः सन् यदि पृच्छति तदेवमुत्तरम् । 'यथा कृत्वाऽहं भोक्ष्ये' इति । तत्त्वकथनमेतत् । कथं पुनरत्र क्त्वाप्रत्ययः, यावता 'सिद्धाप्रयोगे' इति वचनादनर्थकोऽत्र करोतिः, ततश्च भेदनिबन्धनस्य पौर्वकाल्यस्य समानकर्तृकत्वस्य चाभावान्नात्र प्राप्नोति, णमुल् पुनरुभयाभावेऽपि वचनसामर्थ्याद्भवति ? उच्यते; क्रियासामान्यवचनः करोतिस्तद्विषयप्रकारो यथातथाशब्दाभ्यामुच्यते, तत्र सामान्यस्य सन्निहिते विशेषे पर्यवसानत्तद्विषय एव प्रकार उक्तो भवति, ततश्च यथा भोक्ष्यते इति यावानर्थस्तावानेव सत्यपि करोतावित्येतावता सिद्धाप्रयोगत्वमुच्यते, न पुनरत्यन्तमभिधेयाभावात् ततश्च क्रियाभेदनिबन्धन उपपन्न एव क्त्वाप्रत्ययः । एवं च कृत्वा पूर्वसूत्रेऽपि वासरूपेण क्त्वा भवति । भाष्येऽपि तत्र तत्र प्रयुज्यते—'अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार उक्तः', 'कथं कृत्वा बाधकम्' इत्यादि ॥

## २९. कर्मणि दृशिविदोः साकल्ये ।

'कर्मण्युपपदे साकल्यविशिष्टे' इति । सकलस्य भावः साकल्यम्, तद्विशिष्टे कर्मण्युपपदे इत्यर्थः। 'कन्यादर्शं वरयति' इति । अत्र दर्शनविषयभूतानां सर्वासामेव कन्यानां वाक्यार्थेनान्वयात् साकल्यम्, सर्वाः कन्या वरयतीत्यत्रापि दर्शनविषयभूता इत्यर्थः । अतिशयप्रतिपादनपरं चैतत्; यस्मात् कस्याश्चित् परित्यागेऽपि भवत्येव । 'जानाति लभते विचारयति वा' इति । सत्तार्थस्य तु विदेरकर्मकत्वादग्रहणमिति भावः ॥

## ३०. यावति विन्दजीवोः ।

विन्देति विदेर्लाभार्थस्यानुकरणम्, तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम्' (७.१.५९) इति नुमस्ति। 'यावल्लभते तावद् भुङ्क्ते इत्यर्थः' इति । एतेनासाकल्यं दर्शयति, साकल्ये हि पूर्वेणैव सिद्धम् ॥

## ३१. चर्मोदरयोः पूरेः ।

कर्मणीत्यनुवृत्तेः पूरेरिति ण्यन्तस्येदं ग्रहणम् । केवलस्याकर्मकत्वादित्याह—'पूरयतेः' इति । 'उदरपूरं भुङ्क्ते' इति । उदरं पूरयन् भुङ्क्ते इत्यर्थः । एवमादिषु प्रायेण पौर्वकाल्यं नास्ति, तस्मात् 'पूर्वकाले' इति न सम्बन्धनीयमित्याहुः ॥

## ३२. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।

'गोष्पदपूरम्' इति । गोः पदं पूरयन् वृष्ट इत्यर्थः । वृषेरकर्मकत्वात् कर्तरि क्तः । अत्रापि 'पूर्वकाले' इति न सम्बन्धनीयमित्याहुः । 'सीतापूरम्' इति । सीता = लाङ्गलपद्धतिः ।

'अस्यग्रहणं किमर्थम्' इति । सन्निधानादेव पूरयतेरूलोपो विज्ञास्यते इति प्रश्नः । 'उपपदस्य मा भूत्' इति । अस्येत्यनुच्यमाने वर्षप्रमाणवदूलोपोऽपि समुदायविषयो विज्ञायेत—प्रकृत्युपपदसमुदाये सन्निहितो य ऊकारस्तस्य लोप इति, ततश्चोपपदस्यापि स्यादिति भावः ।

'ऊलोपश्चास्यान्यतरस्याम्' (३ ४.३२) इति शक्यमकर्तुम् । कथं गोष्पदप्रमिति ? 'प्रा पूरणे' (धा.पा १०६१) इत्यस्माद्धातोः 'आतोऽनुपसर्गे कः' (३.२.३), क्रियाविशेषणत्वात् कर्मत्वनपुंसकत्वे, न रूपभेदः, नार्थभेदः, न स्वरभेदः । कप्रत्यये थाथादिसूत्रेण (६.२.१४४) अन्तोदात्तत्वम्, णमुल्यूलोपे कृते पूर्वस्य स्वरभाजोऽभावात् 'लिति' (६.१.१९३) इत्यस्याप्रवृत्तौ प्रत्ययस्वरः, तस्य कृदुत्तरपदप्रकृतिस्वरेणावस्थानमित्यन्तोदात्तत्वमेव । ननु च णमुलि सति 'कृन्मेजन्तः' (१.१.३९) इत्यव्ययत्वाद्विभक्तीनां श्रवणं न भवति, तरपि च गोष्पदप्रतरमिति भवति, कल्पबादौ च गोष्पदप्रकल्प इति भवति, अज्ञातादिषु चाव्ययत्वादकज् भवति, के तु सति सर्वमेतन्न सिध्यति ? उच्यते; इष्यते तावद्विभक्तीनां श्रवणमेकेन गोष्पदप्रेणेति, तरबादिषु चोपन्यस्तानि रूपाणि नेष्यन्त एव । एतच्च भाष्ये ऊलोपप्रत्याख्यानादवसीयते ।

ननु च गोष्पदपूरमित्याद्यपि घञैव सिद्धम् ? न सिध्यति, यदि तावत् करणे घञं विधाय तदन्तेन कर्मणि षष्ठ्याः समासः क्रियते, ततः थाथादिस्वरेणान्तोदात्तत्वं स्यात् । अथ भावे घञि व्यधिकरणपदो बहुव्रीहिः क्रियते—गोष्पदस्य पूरणमस्मिन् वर्ष इति, ततः पूर्वपदप्रकृतिस्वरप्रसङ्गः । गोष्पदपूरन्तराम्, गोष्पदपूरङ्कल्पमित्यादि च न सिध्यति, तस्मात् 'वर्षप्रमाणे' इति वक्तव्यम् ॥

## ३३. चेले क्नोपेः ।

'अस्माद्धातोर्ण्यन्तात्' इति । पुका निर्देशादेव ण्यन्तत्वमवसीयते, व्याख्यानाच्चेल इत्यर्थग्रहणमित्याह—'चेलार्थेषु' इति । 'चेलक्नोपं वृष्टः' इति । चेलं क्नोपयन् शब्दाययन् वृष्ट इत्यर्थः । यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इति यावत् ॥

## ३४. निमूलसमूलयोः कषः ।

अत्र प्रकरणे समानकर्तृकत्वमेव । 'निमूलकाषम्' इति । कषतिर्हिंसार्थः । एकस्यैव धात्वर्थस्य सामान्यविशेषभावेन भेदे सति विशेषणविशेष्यभावः । निगतं मूलमस्य निमूलम् । सह मूलेन समूलं कषणं करोति, सह मूलेन कषतीत्यर्थः । एवं सर्वत्र प्रकरणे द्रष्टव्यम् ॥

## ३५. शुष्कचूर्णरूक्षेषु पिषः ।

## ३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः ।

'जीवग्राहम्' इति । जीवतीति जीवः, इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः ॥

## ३७. करणे हनः ।

'नित्यसमासार्थं च' इति । 'हिंसार्थानाम्' इत्यनेन णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२.२.२१) इति विकल्पितः समासः स्यात्, अतो हिंसार्थेऽप्यनेनैव णमुलेषितव्य इत्यर्थः ।

कथं पुनरिष्यमाणोऽपि लभ्यते, यावताऽहिंसार्थे हन्तौ सावकाशोऽयं विधिः, 'हिंसार्थानाम्' (३.४.४८) इत्यस्य तु हन्तिव्यतिरिक्तो हिंसार्थोऽवकाशः; हिंसार्थे हन्तावुभयप्रसङ्गे परत्वात् स एव विधिः प्राप्नोति ? तत्राह– 'पूर्वविप्रतिषेधेन' इति । कथं तर्हि 'हिंसार्थानाम्' इत्यत्रोदाहरिष्यते––दण्डोपाघातं गाः कालयति, दण्डेनोपघातं वेति ? अत्राहुः––यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेषणविशेष्यभावमनुभवति सोऽस्य विषयः; 'कषादिषु यथाविध्यनुप्रयोगः' (३.४.४६) इति वचनात् । अत्यन्तभिन्नधात्वर्थसम्बन्धे तु तेनैव णमुल् भवतीति । एवं च नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्चेति, कोऽर्थः ? यथाविध्यनुप्रयोगार्थः सन् नित्यस- समासार्थ इत्यर्थः ।

इह हिंर्हग्रहणं समूलग्रहणं च क्रियते, सकृदेव तु शक्यं कर्तुम्, कथम् ? एवं वक्ष्यामि—'जीवाकृतयो- र्ग्रहकृञः' (३.४.३६), 'शुष्कचूर्णरुक्षेषु पिषः' (३ ४.३५), 'निमूले कषः' (३.४.३४), 'समूले हनश्च' (३.४ ३७), चकारात् कषश्च, ततः करणे हनः इत्येव, यदेतत् कषादिषु यथाविध्यनुप्रयोग इति एतद्ग्रहावि- ष्विति वक्तव्यम् । तथा तु न कृतमित्येव ॥

## ३८. स्नेहने पिषः ।

व्याख्यानात् स्नेहने इत्यर्थग्रहणमित्याह––'स्नेहवाचिनि' इति । 'उदपेषम्' इति । 'पेषंवासवाहन- धिषु च' (६.३.५८) इत्युदकस्योदभावः । 'शुष्कचूर्ण' (३.४.३५) इत्यत्र स्नेहनग्रहणं न कृतम्, कर्मणि तत्र प्रत्ययः, इह तु करणे ॥

## ३९. हस्ते वर्त्तिग्रहोः ।

'जीवे ग्रहः, हस्ते च, वर्त्तेश्च' इति नोक्तम्, तत्र कर्मोपपदम्, इह तु करणम् । 'वर्तिर्ण्यन्तः' इति । निर्देश एवात्र प्रमाणम् । 'हस्तवर्त्तं वर्त्तयति' इति । हस्तेन वर्त्तयति, गुलिकां करोतीत्यर्थः ॥

## ४०. स्वे पुषः ।

'स्वपोषम्' इति । 'पित्पर्यायवचनस्य च' इति । स्वरूपेऽपि भवति ॥

## ४१. अधिकरणे बन्धः ।

## ४२. सञ्ज्ञायाम् ।

अनधिकरणार्थोऽयमारम्भः, पूर्वयोगस्त्वसञ्ज्ञार्थः । कथं तर्हि ग्रामे बन्ध इति ? वासरूपविधिना घञ् भविष्यति ॥

## ४३. कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।

'जीवेन नष्टः' इति । जीवेन करणेनापदं प्राप्त इत्यर्थः । 'पुरुषेणोढः' इति । पुरुषेण करणेन देशान्तरं प्रापितो देवदत्तादिरित्यर्थः ॥

## ४४. ऊर्ध्वे शुषिपूरोः ।

'ऊर्ध्वशोषं शुष्यति' इति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । 'ऊर्ध्वं पूर्यत इत्यर्थः' इति । ऊर्ध्वमुख एव सन् घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥

## ४५. उपमाने कर्मणि च ।

## ४६. कषादिषु यथाविध्यनुप्रयोगः ।

## ४७. उपदंशस्तृतीयायाम् ।

इतः प्रभृति पौर्वकाल्यमप्यस्ति । 'मूलकोपदंशं भुङ्क्ते' इति । ननु च नात्र तृतीयान्तस्योपदंशिना सम्बन्धः, न हि मूलकेनान्य उपदश्यते, किं तर्हि ? तदेवोपदश्यते, भुजिना तु सम्बन्ध उपपद्यते, तं प्रति करणत्वात्, किं तूपदंशिना सामर्थ्याभावात् प्रत्ययो न प्राप्नोति, उपपदसञ्ज्ञा च न स्यात्, तदभावादुपपदसमासोऽपि न प्राप्नोति, वचनस्य तु दशनैरुपदश्य भुङ्क्ते इत्यादिरवकाशः स्यात् ? इत्यत आह—'मूलकादि च' इति । सत्यं मूलकादेर्भुजिनैव शाब्दोऽन्वयः, उपदंशिना तु कर्मापेक्षायां सन्निधानाद्योग्यत्वाच्च वस्तुतः सम्बन्धोऽस्त्येव, भुजिं प्रति करणत्वमन्यथा नोपपद्यते, ततश्चायमर्थः—मूलकेन भुङ्क्ते, किं कृत्वा ? उपदश्य, किमुपदश्य ? तदेव मूलकमिति । यदि तु यत्र तृतीयान्तेनैव शाब्दोऽन्वयस्तत्रैवायं प्रत्ययोऽभिमतः स्यात्, करण इत्येव ब्रूयात्, यथा—'करणे हनः' (३.४.३७) इति । तस्मादार्थेन सम्बन्धेन सामर्थ्ये सति प्रत्ययादिकं सर्वं भविष्यति ॥

## ४८. हिंसार्थानां च समानकर्मकाणाम् ।

'धातुसम्बन्धे' (३.४.१) इत्यधिकारादनुप्रयोगधातुना समानकर्मत्वं विज्ञायते, इत्याह—'अनुप्रयोगधातुना समानकर्मकाणाम्' इति । 'कालयति' । 'कल विक्षेपे' (धा.प. १६०४) चुरादिः । 'दण्डताडम्' इति । 'तड आघाते' (धा.प. १५७९) चुरादिरेव । 'उपहत्य' इति । 'वा ल्यपि' (६.४.३८) इत्यनुनासिकलोपः, ह्रस्वस्य तुक् ॥

## ४९. सप्तम्यां चोपपीडरुधकर्षः ।

'उपशब्दः प्रत्येकम्' इति । पीडादीनां समाहारद्वन्द्वं कृत्वोपपूर्वः 'पीडरुधकर्ष' इत्युत्तरपदलोपी समासः । सौत्रः पुंल्लिङ्गनिर्देशः । कारणाधिकरणविवक्षाभेदेनोपपदेषु विभक्तिद्वयम् । कर्षतेरिति भौवादिकस्य, न कृषतेरिति; तौदादिकस्य शपा निर्देशात् । शपा निर्देशस्तु विहितगुणस्योच्चारणाद्विज्ञायते । सूत्रे तु पञ्चम्यर्थे प्रथमा, किं च स्याद्यदि तौदादिकस्य ग्रहणं स्यात्, यावतोभयोरपि विलेखनार्थत्वान्नार्थभेदो नापि रूपभेदः ? यद्यप्युभयोरपि विलेखने पाठः, तथापि तौदादिकस्य क्षेत्रविषये विलेखने वृत्तिः—पञ्चभिर्हलैः कृषतीति । तेन क्षेत्रे उपकृष्य हलेनोपकृष्यति तौदादिकात् क्त्वाप्रत्यय एव भवति, न णमुल् ॥

## ५०. समासत्तौ ।

"'सप्तम्याम्' 'तृतीयायाम्' इत्यनुवर्तते" इति । पूर्वसूत्रेऽपि स्वरितत्वादेव तृतीयाऽनुवर्तते, सप्तम्यां तु तस्या निवृत्तिर्मा विज्ञायीति चकारः क्रियते । तेन चानुकृष्टमुत्तरत्र नानुवर्तते इति न चोदनीयम् । 'युद्धसंरम्भात्' इति । कोपादिना मनःक्षोभपूर्वको वाक्कायविकारः = संरम्भः, युद्धार्थः संरम्भः युद्धसंरम्भः, अश्वघासादिवत् षष्ठीसमासः । 'अत्यन्तं संनिकृष्य युध्यन्ते इत्यर्थः' इति । संनिकर्षप्रतिपादनपरमेतत् केशग्रहणं भवतु, मा वा भूदिति ॥

## ५१. प्रमाणे च ।

'तृतीयासप्तम्योरित्येव' इति । अर्थानुवृत्तिप्रदर्शनमेतत्, न ह्येवंविधः शब्दः प्रकृतोऽस्ति । 'द्व्यङ्गुलोत्कर्षम्' इति । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' (५.४.८६) इत्यच्समासान्तः, द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः । ह्रस्वाः खण्डाः = खण्डिकाः ॥

## ५२. अपादाने परीप्सायाम् ।

'परीप्सा त्वरा' इति । 'ञित्वरा सम्भ्रमे' (धा.पा. ७७५) घटादिः, 'घटादयः षितः' (धातुपाठे ७६२ इत्यस्यानन्तरम्), षित्वादङ् । 'शय्योत्थायम्' इति । 'उदः स्थास्तम्भोः' (८.४.६१) इति तिष्ठतिसकारस्य तकारः, पूर्ववल्लुक् 'अवश्यकर्तव्यमपि' इति । अक्षिप्रक्षालनादिकम् । 'द्वितीयायां परीप्सायामित्येव' इति ।

'अनुदात्तं पदमेकवर्जम्' (६.१.१५८) इत्यत्रापि परीप्सा भवत्येव, कथम्? परिभाषेयम्, पदग्रहणं च परिभाषार्थम्। तेनोदात्तः स्वरितो वा यत्र विधीयते, तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यम्, न विलम्बितव्यमिति ॥

## ५३. द्वितीयायां च ।

## ५४. स्वाङ्गेऽध्रुवे ।

स्वाङ्गलक्षणं चतुर्थे वक्ष्यते—'अद्रवं मूर्तिमत्' (४.१.५४ सूत्रे) इत्यादि। 'अक्षिनिकाणम्' इति। 'कण निमीलने' (धा.पा. १७१५) चुरादिनिपूर्वः। 'उत्क्षिप्य शिरः कथयति' इति। ननु च ध्रुवमिति नित्यमुच्यते—ध्रुवा द्यौर्ध्रुवा पृथिवीति यथा; अध्रुवमनित्यम्, शिरश्चाप्यनित्यमेव, प्राणिनामेवानित्यत्वादत आह—'यस्मिन्नङ्गे' इति। अयं भावः—विशेषणसामर्थ्यात् प्रकर्षं आश्रीयते, प्रकर्षेण यदध्रुवमिति। प्रकर्षश्च जीवत्यपि प्राणिनि कदाचिदभाव इति ॥

## ५५. परिक्लिश्यमाने च ।

'परिक्लिश्यमाने' इति। 'क्लिशू विबाधने' (धा.पा. १५२२) इत्येतस्यैतद्रूपम्, न तु 'क्लिश उपतापे' (धा.पा. ११६१) इत्यस्य, परिश्च सर्वतो भाव इत्याह—'परिक्लेशः सर्वतो विबाधनम्' इति ॥

## ५६. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।

'अनवयवेन' इति। साकल्येन। 'पदार्थानाम्' इति। गेहादीनाम्। 'तात्पर्यम्' इति। पौनःपुन्यमाभीक्ष्ण्यमित्यर्थः। द्रव्यं व्याप्तिः' इत्यादिना व्याप्त्यासेवयोर्विषयविभागं दर्शयति। 'गेहानुप्रवेशम्' इति। ननु व्याप्तौ वीप्सा गम्यते, आसेवायां च नित्यत्वमिति, 'नित्यवीप्सयोः' (८.१.४) इति द्विर्वचनं प्राप्नोति, तत्कस्मान्न भवतीत्याह—'समासेन' इति। यद्यपि समास एनयोरर्थयोर्न विधीयते, तथापि स्वभावत एतयोस्तेनाभिधानम्, यथा—सप्तपर्णं इति, पर्वगताया वीप्सायाः—पर्वणिपर्वणि सप्त पर्णान्यस्येति। 'तथा च वक्ष्यति' इति। 'नित्यवीप्सयोः' (८.१.४) इत्यत्र वक्ष्यति भाष्यकारः। 'तिङक्षु नित्यता' इति। उपलक्षणम्, 'अव्ययकृत्सु च' इत्यपि द्रष्टव्यम्।

'क्त्वानिवृत्त्यर्थमिति चेत्' इति। 'आभीक्ष्ण्ये णमुल् च' (३.४.२२) इत्यनेन क्त्वाणमुलौ द्वावपि विहितौ, तत्र विश्यादिभ्यो णमुलेव यथा स्यात्, क्त्वाप्रत्ययो मा भूदित्येवमर्थं पुनर्णमुलुच्यत इति चेदित्यर्थः। दूषयति—'नेष्टत्वात्' इति। इष्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा—गेहमनुप्रविश्यानुप्रविश्यास्त इति। 'द्वितीयोपपदार्थं तर्हि' इति। अत्र हि 'द्वितीयायां च' (३.४.५३) इत्यधिकारात् द्वितीयान्तस्योपपदसञ्ज्ञा लभ्यते, किमर्थं पुनरुपपदत्वमिष्यते? इत्याह—'उपपदसमासः' इति। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२.२.२१) इति वचनात् 'पक्षे' इत्युक्तम्। 'तेन हि सत्युपपदाभावः' इति। सप्तमीत्यस्य कस्यचिदभावात् ॥

## ५७. अस्यतितृषोः क्रियान्तरे कालेषु ।

'असु क्षेपणे' (धा.पा. १२०९), 'ञितृषा पिपासायाम्' (धा.पा. १२२८)। 'क्रियामन्तरयतीति क्रियान्तरः' इति। व्यवधानवाचिनोऽन्तरशब्दात् 'तत्करोति' (वा. २००) इति णिचि 'कर्मण्यण्' (३.२.१) 'पाययति' इति। पिबतेर्णिचि 'शाच्छासाह्वा' (७.३.३७) इत्यादिना युक्। 'अत्यसनेन' इत्यादि। यच्चाद्य पानं यच्च द्व्यहे गते भविता, तन्मध्यवर्तित्वादत्यसनतर्षणयोः, एतदेव स्पष्टयन्नुदाहरणस्यार्थमाह—'अद्य पाययित्वा' इत्यादि। 'द्व्यहमुपोष्य' इति। उपपूर्वाद्वसेः क्त्वा ल्यप्, यजादित्वात् सम्प्रसारणम् 'शासिवसिघसीनां च' (८.३ ६०) इति षत्वम्, अत्रोपवासेन भोजनं व्यवधीयते। 'अहः' इति। 'कालाध्वनोः' (२.३.५) इति द्वितीया। कृत्स्नमहरिषूनत्यस्य क्षिप्त्वा गत इत्यर्थः। 'योजनमत्यस्य' इति। क्वचित् लुञ्चनादौ पाययित्वा योजनमतिक्रम्य पाययतीत्यर्थः॥

## ५८. नाम्न्यादिशिग्रहोः।

'आदिशेर्ग्रहेश्च' इति। एतेनाङो दिशिनैव सम्बन्धः, न ग्रहिणेति दर्शयति॥

## ५९. अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ।

'अयथाभिप्रेताख्याने' इति नञः प्रश्लेषः पश्चान्निर्देशाद्विज्ञायते, अन्यथाऽसन्देहार्थं पूर्वं निर्दिशेत्, अयथाभिप्रेतशब्दश्चाख्यानक्रियाविशेषणं यथाभिप्रेतं न भवति तथाख्यान इत्यर्थः। पुत्रजन्म प्रार्थयमानं ब्राह्मणं गत्वा केनचिद्गोपनीयवस्तोच्चैराख्यातम्—ब्राह्मण पुत्रस्ते जात इति, तन्मृष्यमाणो ब्राह्मण आह—'किं तर्हि' इति। पुत्रजन्माख्यानस्य प्रियत्वेऽपि आख्यानप्रकारस्यानाभिप्रेतत्वात् भवत्युदाहरणम्, अत एवायथाभिप्रेताख्यान इत्युक्तम्, न पुनरप्रियाख्यान इति। 'आचष्टे' इति। लट्, 'थासस्से' (३.४.८०), शपो लुकि 'स्कोः संयोगाद्योः' (८.२.२९) इति ककारलोपः, 'षढोः कः सि' (८.२.४१)। उदाहरणेऽयथाभिप्रेताख्यानं दर्शयति—'उच्चैर्नाम' इति। नामशब्दः प्रसिद्धौ, न पुनरिदं ब्राह्मणवाक्यमुक्तमिति 'उपदंशस्तृतीयायाम्' (३.४.४७) इत्यत्रैवमुक्तम्। 'समासार्थं वचनम्' इति। एतदेवोपपादयति—'तथा हि' इति। 'क्त्वा च' (२.२.२२) इत्यत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२ २.२१) इति वर्तते, तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो लभ्यते, न तु समानाधिसूत्रविहितेन, न हि तेन तृतीयाप्रभृतिषूपपदेषु क्त्वा विधीयत इत्यर्थः। णमुल्ग्रहणमनर्थकम्, प्रकृतो ह्यसौ तत्र क्त्वा चेति वक्तव्यम्? इत्यत्त आह—'णमुलधिकारे' इत्यादि। तुल्यकक्षत्वम् = तुल्यबलत्वम्। 'तेन' इत्यादि। यदि तु चकारेण यत्नेन णमुलनुकृष्येत, उत्तरत्र नानुवर्तेत; यत्नाभावात्। पुनर्णमुल्ग्रहणे तु द्वन्द्वनिर्दिष्टयोर्द्वयोरप्युत्तरत्रानुवृत्तिः सिद्धा भवति॥

## ६०. तिर्यच्यपवर्गे।

'तिर्यक्कृत्य' इति। तिरोऽञ्चतीति 'ऋत्विग्' (३.२.५९) इत्यादिना क्विन्। 'तिरसस्तिर्यलोपे' (६.३.९४) इति तिर्यादेशः। व्युत्पत्तिमात्रं चैतत् न त्वत्रावयवार्थोऽस्ति, समुदायो ह्ययमपवर्गे वर्तते तद्दर्शितम्। 'समाप्य गत इत्यर्थः' इति। 'तिर्यक्कृत्वा' इति। अनृजु कृत्वा, अग्रतः स्थितं पार्श्वे क्षिप्त्वेत्यर्थः।

'तिर्यंचि' इत्ययुक्तोऽयं निर्देशः असञ्ज्ञायां सत्याम् 'अचः' (६.४.१३८) इत्यकारलोपे तिरश्चीति भवितव्यम् ? अत आह—'तर्यंचीति शब्दानुकरणमेतत्' इति। 'अच' इत्यर्थवतोऽञ्चित्यस्य ग्रहणम्। स चार्थो लोकप्रसिद्धो गृह्यते; 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायात्। अतोऽञ्चेः स्वार्थे वर्तमानस्याल्लोपः। एतत्तु तत्र स्थितस्य शब्दरूपस्यानुकरणम, तेनानुकार्येण रूपेणार्थवन्न तु लौकिकार्थेन, तेन लोपाभाव इति भावः। नन्वेवमपि 'प्रकृतिवदनुकरणं भवति' (व्या.प. ११३) इति लोपः प्राप्नोत्येव, अत आह—'न च प्रकृतिवदनुकरणेन भवितव्यम्' इति। कस्मादित्याह—'अनुक्रियमाणरूपविनाशप्रसङ्गात्' इति। यादृशं रूपमनुकर्तुमिष्टं तादृशं न प्रतीयेत, लौकिक एव त्वर्थः प्रतीयेतेत्यर्थः। यत्र च यथा प्रकृतिवदनुकरणं भवतीत्याह—'एतदोऽश्' इत्यादि। यद्यनुक्रियमाणरूपविनाशेऽपि प्रकृतिवदनुकरणं स्यात् 'एतदः, अदसः' इत्यत्रोभयत्रापि त्यदाद्यत्वादिके प्रकृतिकार्ये सति एतस्य, अमुष्येति रूपं स्यात। ननु प्रयोजनानुवर्ति प्रमाणं ततश्चेल्लोपः प्राप्नोति कर्तव्य एवाऽयम् ? कथम् ? 'यत्तदेतेभ्यः' (*५.२.३९) इति त्यदाद्यत्वम् अस्यवामीयमिति यस्येति लोपः, गविस्यग्गसाहेत्यवादेशः, पटिनि करोतीत्यनुक्रियमाणरूपविनाशे सत्यपि 'अव्यक्तानुकरणस्यात इतौ' (६.१.९८) इति पररूपत्वं वा भवति। तस्मादुभयथा निर्देशदर्शनात् क्वचित् प्रकृतिवदनुकरणं भवति, क्वचिन्नेति वाच्यम्। तथा चास्मिन्नेव सूत्रे भाष्यम्—सौत्रो निर्देश इति॥

## ६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः।

'तस्प्रत्यये' इति बहुव्रीहिनिर्देश इत्याह—'तस्प्रत्ययो यतः स्वाङ्गात्, तदेवमुच्यते' इति। न च 'क्विन्प्रत्ययस्य कुः' (८.२.६२) इतिवत् कदाचित तस्प्रत्ययान्तत्वेन दृष्टे संप्रत्यतदन्तेऽपि स्वाङ्गे प्रसङ्गः, तस्प्रत्ययग्रहणसामर्थ्यात्। कर्मधारयो वाऽयम्—तस्प्रत्यये परतो यत् स्वाङ्गं तस्मिन्नुपपदे इति। वृत्तौ तु वस्तुमात्रं प्रदर्शनम्। 'यथासङ्ख्यमत्र नेष्यते' इति। व्याख्यानात्। 'मुखतः' इति। आद्यादित्वात् सप्तम्यर्थे तसिः।

'मुखे तस्यति' इत्यादि। 'तसु उपक्षये' (धा.पा. १२१२) इत्यस्मान्मुखशब्दे उपपदे 'अन्येभ्योऽपि दृश्यते' (३.२.१७८) इति क्विप्—मुखतः, 'अत्वसन्तस्य च' (६.४.१४) इति दीर्घो न भवति। अधातोरिति प्रतिषेधात्।

प्रत्ययाप्रत्ययपरिभाषयैवात्राप्रसङ्गात् नार्थः प्रत्ययग्रहणेन॥

## ६२. नाधार्थप्रत्यये च्व्यर्थे।

'नार्थो धार्थश्च' इति। नाधासहचरितोऽर्थो नाधाशब्दाभ्यामुक्तः, नार्थो यस्य स नार्थः, नार्थार्थ इत्यर्थः। एतेन धार्थो व्याख्यातः। 'प्रत्ययो यस्मात्' इति। यदि पञ्चम्यां विग्रहः क्रियते, ततः प्रकृतेरुपलक्षणं नाधार्थग्रहणं स्यादिति सम्प्रत्यतदन्तत्वेऽपि प्रकृतिमात्रे प्रसङ्गः ? न प्रसङ्गः, एवं हि विनञ्सङ्ख्यास्विति वक्तव्यं स्यात्, षष्ठ्या विग्रहः कर्तव्यः—नाधार्थः प्रत्ययो यस्य समुदायस्यावयव इति। ल्यब्लोपे वा पञ्चमी व्याख्येया—यं समुदायमुद्दिश्य नाधार्थः प्रत्ययो विधीयत इति। 'विनाकृत्य नानाकृत्य' इति। 'विनञ्भ्यां नानाञौ नसह' (५.२.२७) इति

* अनेन सूत्रेण वतुबेव विधीयते, नात्वम्, चिन्त्यम्।

नानाञौ। 'द्विधाकृत्य' इति। 'सङ्ख्याया विधार्थे धा' (५.३.४२)। 'द्वैधं कृत्य' इति। द्वित्र्योश्च धमुञ्' (५ ३.४५)। हिरुक्पृथक्शब्दौ विनार्थे।

'नाना कृत्वा काष्ठानि गतः' इति। पूर्वमेव नाना सन्ति काष्ठान्यन्यत्र कृत्वा गत इत्यर्थः। 'धार्थप्रत्ययग्रहणम्' इति। बहवो हि धार्थाः प्रत्ययाः, तत्रासत्यर्थग्रहणे प्रत्ययस्यैव ग्रहणं स्यात्, नान्येषाम्। तदर्थानामर्थग्रहणे तु तेषामपि भवति। यश्चाधादेशो धार्थः 'धमुञन्तात् स्वार्थे डदर्शनम्' (वा. ६१०) इति तदर्थमर्थग्रहणम्—द्वैधकृत्य, द्वैधकारं द्वैधभूय, द्वैधभावमिति। धमुञादीनां तु स्थानिवद्भावादेव सिद्धं तद्विधौ ध इत्यधिकारेणादेशपक्षस्याश्रयणात्। अथ नार्यमप्यर्थग्रहणं कस्मान्न भवतीत्यत आह—'ना पुनरेक एव' इति। ननु च नाप्रत्ययावपि द्वौ भवतः—निरनुबन्धकः, सानुबन्धकश्चेति। तत्रासत्यर्थग्रहणे निरनुबन्धकस्यैव ग्रहणं स्यात्, नेतरस्य? एवं मन्यते—तन्त्रावृत्त्येकशेषाणामन्यतमस्याश्रयणात्तस्यापि भविष्यति॥

## ६३. तूष्णीमि भुवः।

## ६४. अन्वच्यानुलोम्ये।

'अन्वग्भूय' इति। अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वाऽऽस्ते इत्यर्थः। 'अन्वग्भूत्वा' इति। पृष्ठतो भूत्वेत्यर्थः। अनुकूलोऽननुकूल इति शब्देन न स्पृश्यते॥

## ६५. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्।

अत्रानन्तरेणास्तिशब्देनैवार्थशब्दः सम्बध्यते, शकधृषज्ञानां घटार्हयोश्च पृथगुपादानात्, तदाह—'शकादिषूपपदेषु अस्त्यर्थेषु वा' इति। 'तुमुन् प्रत्ययो भवति' इति। भावे। 'अक्रियार्थोपपदार्थ आरम्भः' इति। 'क्रियार्थोपपदे तुमुन्ण्वुलौ' (३.३.१०) इत्यादिनैव सिद्धत्वात्। तत्र तावत् 'शक्नोति भोक्तुम्', 'धृष्णोति', 'जानाति' इति भोजने प्रावीण्यं गम्यते। 'ग्लायति भोक्तुम्' इति। तत्राशक्तिः। घटतेऽर्हतीति योग्यता। 'आरभते, प्रक्रमते' इति। भजेरेवाद्यावस्था। 'लभते भोक्तुम्' इति। अप्रत्याख्यातं भोजनं लभते इत्यर्थः। 'उत्सहते भोक्तुम्' इति। भोजने व्याप्रियत इत्यर्थः। 'अस्ति भोक्तुम्' इति। भोजनमस्तीत्यर्थः। प्रवीणो भोक्तुम्, कुशलो भोक्तुम्, पटुर्भोक्तुमित्यादौ पर्याप्तिविवक्षायामुत्तरसूत्रेण तुमुन् भवति॥

## ६६. पर्याप्तिवचनेष्वलमर्थेषु।

पर्याप्तिः = अन्यूनता, परिपूर्णतेत्यर्थः। अन्यूनता च द्विधा सम्भवति—भोजनस्य प्रभूततया वा, भोक्तुः समर्थतया वा, अतः सामर्थ्येनालमर्थेन विशिनष्टि। 'अलमर्थेषु पर्याप्तिवचनेषु' इति। 'पर्याप्तो भोक्तुम्' इति। भोजने न न्यूनीभवति समर्थ इत्यर्थः। 'पर्याप्तम्' इति। प्रभूतमित्यर्थः।

'शक्यमेवं कर्तुम्' इति। सुकरमेतदित्यर्थः। सम्भवमात्रं वाऽत्र विवक्षितम्—सम्भवत्येवं विषयीकरणमिति॥

## ६७. कर्तरि कृत् ।

किमर्थमिदमुच्यते ? कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् । यत्र वचनेनार्थो निर्दिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति, तद्यथा—'गुप्तिज्किद्भ्यः सन्' (३.१.५), 'यावादिभ्यः कन्' (५.४.२९) इति, एवमिमे कृतः स्वार्थे स्युः, स्वार्थे मा भूवन् कर्तरि स्युरिति । ननु च यमिच्छति स्वार्थे, आह तं भावे घञ् भवतीति ? तन्नियमार्थं भविष्यति—घञेव भावे नान्यः कृदिति । असति ह्येतस्मिन् सूत्रे घञर्थमेतावत् सूत्रं कर्तव्यम्—धातोर्घञ् भवतीति, तत्रानिर्दिष्टार्थत्वाद्भावे एव घञ् भविष्यतीति, ततः 'पदरुजविश' (३.३.१६) इति द्वितीयं सूत्रं कर्तव्यम्, ततश्च 'भावे' इति न कर्तव्यम्, क्रियमाणं तु नियमार्थं भविष्यति—घञेव भावे नान्यः कृदिति, ततश्चान्यः कृद्धात्वर्थाक्षिप्ते कर्तरि भविष्यति । स्यादेतत्—कर्मादीनामपि धात्वर्थेनाक्षेपात् तेष्वपि कृतः स्युरिति ? न; 'धः कर्मणि ष्ट्रन्' (३.२.१८१), 'करणाधिकरणयोर्ल्युट्' (३.३.११७), 'दाशगोघ्नौ सम्प्रदाने' (३.४.७३), 'भीमादयोऽपादाने' (३.४.७४) इत्यत्र 'ष्ट्रनेव कर्मणि नान्यः' इत्यादिको नियमो विज्ञास्यते । यद्येवं कर्मादि नियतं प्रत्ययास्त्वनियता इति कारकान्तरेऽपि ष्ट्रनादयः स्युः ? नैष दोषः; एकमिदं वाक्यम्—'धः कर्मणि ष्ट्रन्' (३.२.१८१) इति, तेन च कर्मणि विधीयमानः कथं कारकान्तरेऽपि स्यात् ! द्वितीयोऽपि वा नियमो विज्ञास्यते—'कर्मण्येव ष्ट्रन्' इति, एवं सर्वत्र । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणापि वचनं कर्तर्येव भविष्यति । 'कर्तरि भुवः खिष्णुच्खुकञौ' (३.२.५७), 'कर्तरि चर्षिदेवतयोः' (३.२.१८६) इत्युभयत्राऽपि करणनिवृत्त्यर्था कर्तृश्रुतिर्विध्यर्थैवेति खिष्णुजादिषु कर्तृनियमो न भविष्यति । तदेव तर्हि प्रयोजनम्—स्वार्थे मा भूवन्निति ? ननु चोक्तम्—'भावे इति नियमो विज्ञास्यते' इति ? स्वार्थादन्यः स भावो धात्वर्थस्य सिद्धता नाम । शुद्धे स्वार्थे कृतः स्युः, लः कर्मणि च भावे चेति । अयं तर्हि नियमो भविष्यति—ल एव भावे इति ? नायं नियमः शक्यो विज्ञातुम्, कर्तृकर्मणोर्निर्देशेनानिर्दिष्टार्थत्वात् लकाराः स्वार्थे न स्युः, 'अकर्मकेभ्यः' इति च वक्ष्यामीत्येवमर्थमेतत् स्यात् । अतः सुष्ठूक्तम्—कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानादिति ।

अत्र च द्वैधम्—एतद्वाक्यनिरपेक्षैः स्वैर्विधायकैर्वाक्यैर्विहितानां कृतां पश्चादेनेनार्थ आदिश्येत ? कृदुत्पत्तिवाक्यानां वायं शेषः स्यात्—ण्वुल्तृचौ कर्तरि नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कर्तरीति ? तत्राद्ये पक्षे यथाऽनेन तृजादीनामर्थ आदिश्यते, तथा ल्युनादीनामप्यादिश्येत, विशेषानुपादानात् । ततश्चैतेऽप्यनेन कर्तरि च स्युः, स्वेषु स्वेषु विधिवाक्येषु करणादीनामप्युपादानात् करणादिषु च । ननु च ल्युनादिषु करणादिरर्थो विशेषविहितत्वात् कर्तुश्च बाधको भविष्यति ? न; नानावाक्यत्वात् । इह 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति अभिन्नकालत्वादेकं वाक्यं विशिष्टदानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते । यदा तु पूर्वाह्णे ब्राह्मणभोजनप्रकरणे 'दधि ब्राह्मणेभ्यो दीयताम्' इत्युच्यते, अपराह्णे तु 'तक्रं कौण्डिन्याय दीयताम्' इति, न तदा बाध्यबाधकभावः । तथाऽस्मिन् पक्षेऽपि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो न लभ्यते । तस्माद् दुष्ट एवायं पक्ष इति द्वितीयपक्षमाश्रित्याह—'कृदुत्पत्तिवाक्यानामयं शेषः स्यात्' इति । प्रागुक्तो दोषस्तदवस्थ एव ? तत्राह—'येषु' इत्यादि । कुत एतदित्याह—'अर्थाकाङ्क्षत्वात्' इति । येषु वाक्येष्वर्थो न निर्दिश्यते तान्यर्थाकाङ्क्षाणि । तथा हि—'ण्वुल्तृचौ भवतः' इत्युक्तेऽर्थविषया आकाङ्क्षा जायते क्वैतौ भवत इति ? 'कर्तरि कृत्' इत्यस्याकाङ्क्षा भवति—कः कृत् कर्त्तरि भवतीति ? अतस्तृजादिविध्यनुपस्थाने शेषशेषिणोरुभयोरप्याकाङ्क्षापूर्तये ततस्तत्रैवोपतिष्ठत इत्यर्थः । 'ल्युनादिवाक्येषु' इति । उपतिष्ठत इत्यनुषङ्गः । कारणमाह—'साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वात्' इति । न च रक्तपटन्यायेनाकाङ्क्षोत्थापनेनोपस्थानं युज्यते; स्वत एव साकाङ्क्षे तृजादिविध्यनुपस्थानेन शेषस्यापि चरितार्थत्वात् । रक्तः पटो भवतीत्यत्र तु पटो भवतीत्यस्य निराकाङ्क्षत्वेऽपि रक्तपदार्थस्य साकाङ्क्षत्वादाकाङ्क्षोत्थापनेनान्वयः । न च विदेशस्थानां कथमेकवाक्यत्वमिति वाच्यम्; शास्त्रे

विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात् । यथा—द्वितीयेऽध्याये लुगुच्यते, तस्य चतुर्थषष्ठयोरलुगपवादः 'गोत्रेऽलुगचि' (४.१.८९), 'अलुगुत्तरपदे' (६.३.१) इति ॥

## ६८. भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।

'भव्य' इति । 'अचो यत्' (३.१.९७) गुणः, 'वान्तो यि प्रत्यये' (६.१.७९) इति वान्तादेशः । 'गेयो माणवकः साम्नाम्' इति । एतेन 'कै गै शब्दे' (धा.पा. ९१६-९१७) इत्यस्यैवं निपातनम्, न 'गाङ गतौ' (धा.पा.९५०) इत्यस्येति दर्शयति । एतच्च निपातनाल्लभ्यते । 'ईद्यति' (६.४.६५) इतीत्वम् । 'जन्य' इति । 'अचो यत्' (३.१.९७) इत्यत्र 'तकिशसिचतियतिजनीनामुपसङ्ख्यानाम्' (वा. २१३) इति वचनात् । 'आप्लाव्यः' इति । 'ओरावश्यके' (३.१.१२५) । 'आपात्यः' इति । 'ऋहलोर्ण्यत्' (३.१.१२४) ॥

## ६९. लः कर्मणि च भावे चाकर्मकेभ्यः ।

'लः' इति लङ्लटोरकारानुबन्धयोः सामान्येन ग्रहणमेकवचनं चेति शङ्कामपाकरोति—'ल इत्युत्सृष्टानुबन्धसामान्यमेकं गृह्यते' इति । 'प्रथमावहुवचनं चैतत्' इति । सामान्यस्यैकत्वेऽपि 'जात्याख्यायामेकस्मिन् बहुवचनम्' (१.२.५८) । अथादेशापेक्षया षष्ठ्येकवचनं कस्मान्नाश्रीयते—लः लस्य य आदेश इति, यथा—'लः परस्मैपदम्' (१.४.९९) इति ? उच्यते; एवं विज्ञायमाने लादेशानामनेनार्थो निर्दिश्येत, ततश्चाम्विषयस्य लकारस्यार्थो न निर्दिष्टः स्यात्, लुगत्रादेशः । न चाभावरूपस्य तस्यार्थविशनं युज्यते, ततश्चासौ 'कर्तरि कृत्' (३.४.६७) इति कर्तर्येव स्यात् । ननु च तस्य 'आमः' (२.४.८१) इति लुकाऽपहारे सत्यनुप्रयोगे ये लादेशास्तैरेव भावादीनामभिव्यक्तिर्भविष्यति ? नैतदस्ति; यावाद्धाम्विषयो लकारः कर्तर्येवेति स्थितम्, तदा विरोधाद्भावकर्मवाचिप्रत्ययपरोऽनुप्रयोगो नैव प्राप्नोति, अनस्यैव च सम्बन्धोपपत्तावादेश इत्यध्याहारो न युक्तः । तस्मात् प्रथमाबहुवचनान्तमेव युक्तम् । तत्र द्विविधो लकारः—तिङ्भावी, अतिङ्भावी च । तत्र तिङ्भाविनः कृत्सञ्ज्ञानिषेधात् 'कर्तरि कृत्' (३.४.६७) इत्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति, अतिङ्भाविनस्तु 'कर्तरि कृत्' इति वचनात् कर्तर्येव साधुत्वं प्राप्नोति, न भावकर्मणोः—आस्यमानं शय्यमानमित्यादाविति वचनमिदमारभ्यते ।

ननु च भावकर्मणोरात्मनेपदं विधीयते, 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८), ततश्च लकारस्य भावकर्मकर्तारोऽर्था अनुमास्यन्ते । यद्वा लकारस्य प्रयोगेऽसमवायादादेशानामेव तेऽर्था भविष्यन्ति, नार्थ एतेन ? इत्याशङ्क्याह—'सकर्मकेभ्यो भावे न भवन्ति' इति । अनारभ्यमाण एतस्मिन् यथा भावे विधीयमाना घञादयः सकर्मकेभ्योऽपि भावे भवन्ति—ओदनस्य पाकः, सूत्रस्य कृतिरिति, तथा 'भावकर्मणोः' (१.३.१३) इत्यनेन इत्यनेन भावे आत्मनेपदं सकर्मकेभ्योऽपि स्यात्, ततश्च पच्यते यवागूं देवदत्तेनेति प्रयोग प्राप्नोति, अतः 'भावे चाकर्मकेभ्यः' इति वक्ष्यामीत्ययमारब्धः । अथ तत्रैव 'भावकर्मणोरकर्मकात्' इत्युच्यते, तत्राकर्मकग्रहणं कर्तव्यं स्यात्, ननु चेहापि क्रियते ? इहावश्यं कर्तव्यम्—'तयोरेव कृत्यक्तखलर्था भावे चाकर्मकेभ्यः' इति, तस्मात् सकर्मकेभ्यो भावे माभूदित्येवमथमयमारम्भ इति स्थितम् । किं चाम्विषयस्य लकारस्यार्थदिशनार्थमपीदं वक्तव्यम् । इतरथा पूर्वोक्तदोषप्रसङ्गादित्यलमियता ॥

## ७०. तयोरेव कृत्यक्तखलर्थाः ।

'तयोर्भावकर्मणोः' इति । पूर्वसूत्रे साक्षात् श्रुतयोर्भावकर्मणोस्तच्छब्देन परामर्शः, न चकारेण सन्निधापितस्य कर्तुरिति भावः । अत एवोत्तरसूत्रे पुनः कर्तरि च' इत्युक्तम् । यदि ह्यनन्तरवाक्ये चकारेण सन्निधापितस्य कर्तुर्भावस्य चात्र प्रत्यवमर्शः स्यात्, तत्र कर्तृग्रहणमनर्थकं स्यात्; कर्तर्यनेनैव सिद्धत्वात् । 'एवकारः' इत्यादि । कृत्वात् कर्तरि कृत्याः प्राप्ता एवकरेण कर्तुरवकृष्यन्ते = व्यावर्त्यन्ते । ननु च तक्रकौण्डिन्यन्यायेन न कर्तुरपकर्षो भविष्यति, यथा 'वडवाया वृषे वाच्ये' (वा. ३८८) इत्यत्र वक्ष्यते—अपत्ये प्राप्तस्ततोऽपकृष्य वृषे विधीयते, अपत्ये त्वणेव भवति इति । सत्यम्; न्यायप्राप्त एवार्थ एवकारेणानूद्यते ।

'शयितम्' इति । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' (१.२.१९) इत्यकित्त्वाद्गुणो भवति ।

'भावे चाकर्मकेभ्य इति वर्तते' इति । वयं तु ब्रूमः—एवकारः कर्तुरपकर्षणाय न कर्तव्य इत्युक्तम्, तस्यात्रोपयोगः—ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यूनानतिरिक्तयोः कृत्यादयो भवन्तीति । यदि च सकर्मकेभ्यो भावे स्युः, तयोस्तादृशयोरेव तु न कृताः स्युरिति ।।

## ७१. आदिकर्मणि क्तः कर्तरि च ।

'आदिकर्मणि' इति । कर्मधारयः, कर्मशब्दश्च क्रियावचन इत्याह—'आदिभूतः क्रियाक्षण आदिकर्म' इति । साधनकर्म तु न गृह्यते, आदिशब्देन विशेषणात् । बहूनां समवाये आदिमध्यान्तभावः, साधनकर्म त्वेकमेवेति किं तत्रादिशब्देन । 'तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते' इति । एतेन 'निष्ठा' (३.२.३६) इत्यनेनैवादिकर्मणि क्तः सिद्धः, न पुनरादिकर्मणि निष्ठा वक्तव्येति दर्शयति । आद्ये हि क्रियाक्षणे भूते समूहव्यापारोपादेकदेशे समूहे चेति न्यायाद्वा धात्वर्थ एव भूतो भवतीति युक्त एव क्तः । 'प्रकृतः कटं देवदत्तः' इति । प्रारब्धवानित्यर्थः । 'प्रकृतं देवदत्तेन' इति । अत्र कर्मणोऽविवक्षितत्वेन धातोरकर्मकत्वाद्भाव एव क्तः । एवं प्रभुक्तं देवदत्तेनेत्यत्रापि ।।

## ७२. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।

'अनूषितः' इति । 'वसतिक्षुधोरिट्' (७.२.५२) । अनुप्राप्य जातोऽनुजातः । एवम् 'अनुजीर्णः' । सकर्मकेभ्यः कर्माविवक्षायां भावे क्तः ।।

## ७३. दाशगोघ्नौ सम्प्रदाने ।

'गोघ्नः' इति । अत्र दानपूर्वके हनने हन्तिर्वर्तते । 'अर्घार्हः' इति । अर्घः = मधुपर्कः, तदङ्गत्वेन गोहननं विहितम् । एतावद्गोरालम्भनस्थानम्—अतिथिः, पितरः, विवाहश्चेति । यदि सम्प्रदाने गोघ्न इति निपात्यते चाण्डालादेरपि तेनाभिधानं प्राप्नोति, अस्मै अपि ह्यागताय गां दातुमर्हन्ति सुहृदादयः ? अत आह—'निपातनसामर्थ्यात्' इति । 'असत्यपि च' इति । यथाऽपचत्यपि योग्यतया 'पाचकः' इत्युच्यते तथेहापीत्यर्थः ।।

## ७४. भीमादयोऽपादाने ।

'उणादिप्रत्ययान्ता एते' इति । बाहुल्यादेतदुक्तम्, प्रस्कन्दनप्रपतनयोरण्योणादिकत्वात् । 'ताभ्यामन्यत्रोणादय इति पर्युदासे प्राप्ते' इति । यद्यप्यसत्यस्मिन् सूत्रेऽपादानस्य प्रकृतत्वात् ताभ्यामिति निर्देशो नोपपद्यते, तथाप्ययमर्थस्तावत्तत्र वक्तव्यः—ततोऽपादानाच्चान्यत्रोणादय इति; ततश्च स्यादेव पर्युदास इत्यर्थः ॥

## ७५. ताभ्यामन्यत्रोणादयः ।

ननु च 'अन्यत्रोणादयः' इत्यप्युच्यते प्रकृतत्वादेव ताभ्यामन्यत्रेति विज्ञास्यते ? अत आह—'सम्प्रदानार्थः' इति । 'कृषितः' इत्यादिना कर्मणि वृत्तिं दर्शयति । अत्रेडागमश्चिन्त्यः । एवं 'तनितः' इत्यत्रापि ।

केचिदाहुः—'यस्य विभाषा' (७.२.१५) इतीट्प्रतिषेधोऽनित्यः, कृतिनृत्योरीदित्करणात् । तद्धि 'श्वीदितो निष्ठायाम्' (७.२.१४) इतीट्प्रतिषेधार्थं क्रियते तत्र 'सेऽसिति कृत' (७.२.५७) इति विभाषितेट्त्वादेव 'यस्य विभाषा' (७.२.१५) इतीट्प्रतिषेधो भविष्यतीति किमीदित्करणेन ।

अपर आह—चुरादावदन्तौ कृषितनी पठितव्याविति ॥

## ७६. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।

'स्वनिकायप्रसिद्धिः' इति । यथा यूपचषालादयो याज्ञिकानामेव प्रसिद्धास्तथा वैयाकरणानां निकाये एषा प्रसिद्धिः । निघण्टुषु तु अभ्यवहारपर्यायतया प्रत्यवसानशब्दस्य पाठो वैयाकरणप्रसिद्धिमूलः । 'इदमेषामासितम्' इति । 'अधिकरणवाचिनश्च' (२.३.६८) इति षष्ठी ।

'कथम्' इत्यादि । कर्तरि निष्ठां मन्यमानस्य प्रश्नः । 'अकारो मत्वर्थीयः' इति । अर्शआदेराकृतिगणत्वादच्प्रत्यय इत्यर्थः ।

इह द्विर्गत्यर्थाकर्मकग्रहणं च क्तग्रहणं च क्रियते, सकृदेव तु शक्यं कर्तुम्, कथम् ? एवं वक्ष्यामि—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य', ततो गत्यर्थाकर्मकेभ्यः कर्तरि च, चकारादधिकरणे च, अनुवृत्ताच्चकाराद्यथाप्राप्तं च, ततः 'श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (३.३.७२), कर्तरीत्येव, एतेभ्यश्च कर्तरि क्तो भवति चकाराद्यथाप्राप्तं च, अधिग्रहणग्रहणं तु नाऽत्रानुवर्तते, योगविभागकरणसामर्थ्यात्, तत आदिकर्मणि च कर्तरि क्तो भवति चकाराद्यथाप्राप्तं च, ततो दाशगोघ्नावित्यादि ? तथा तु न कृतमित्येव ॥

## ७७. लस्य ।

'अकार उच्चारणार्थः' इति । नानुबन्धः, अन्यथा लङ्लटोरेव ग्रहणं स्यात् । ततश्च परस्मैपदानां णलादयः, 'लाटो लङ्वत्' (३.४.८५), 'एरुः' (३.४.८६) इत्यादिकार्यविधानमनुपपन्नं स्यात्; लिङ्लोटोस्तिबादीनामभावात् । 'लकारमात्रं स्थानित्वेनाधिक्रियते' इति । ननु चेत्सञ्ज्ञायां लोपः प्राप्नोति ? वचनसामर्थ्यात्

सत्यापरीःसञ्ज्ञायां लोपो न भविष्यति। एवमपि लित्स्वरः प्राप्नोति ? णलो लित्करणं ज्ञापकम्—न लादेशेषु लित्स्वरो भवतीति। 'किं चेदम्' इति। लकारमात्रस्य ग्रहणं प्राप्नोतीति मन्यमानस्य प्रश्नः। 'धात्वधिकारोऽनुवर्तते' इति वक्ष्यमाणाभिप्रायेणाह—'दश लकाराः' इति। अक्षरसमाम्नाये यथानुपूर्व्याऽकारादयः, तथानुपूर्वीविशिष्टैरकारादिभिरनुबन्धैः कथ्यन्ते, न तु विधानक्रमेणेत्यर्थः।

'लकारमात्रस्य ग्रहणं कस्मान्न प्राप्नोति' इति। विशेषानुपादानात् प्राप्नोत्येवेति भावः। वर्णग्रहणेषु चार्थवद्ग्रहणपरिभाषा न प्रवर्तते, तथा च 'यस्येति' (६.४.१२८) लोपोऽनर्थकस्यापि भवति—दैवदत्तिरिति अकुर्वंह्यत्रेति यणादेशः। 'धात्वधिकारोऽनुवर्तते' इति। धातुग्रहणमनुवर्तत इत्यर्थः। एवमपि 'अग्निचिल्लुनाति—अत्रापि प्राप्नोति ? विहितविशेषणं धातुग्रहणम्। एवमपि 'शामामलिभ्यो लः' (?) औणादिकः—शाला, माला, मल्लः, अत्रापि प्राप्नोति ? 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (हे.प. १०३)। तथापि परिहारान्तरमाह—'कर्त्रादयः' इति। 'लः कर्मणि च' (३.४.६९) इत्यत्र निर्दिष्टा अर्थाः कर्तृकर्मभावा इहानुवर्तन्ते, तैश्च लकारो विशिष्यते—कर्त्रादिषु विहितस्य लस्येति, तेन विशिष्टविषयस्यैव लस्य ग्रहणम्, न सर्वस्य॥

## ७८. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्।

तिबादीनां समाहारद्वन्द्वः। 'पकारः स्वरार्थः' इति। प्रदर्शनमेतत्, 'सार्वधातुकमपित्' (१.२.४) इत्याद्यपि प्रयोजनम्। 'इटष्टकारः' इत्यादि। ननु 'इटोऽत्' (३.४.१०६) इत्यत्र लिङित्यनुवर्तते, तेनेकारस्यात्वविधानेऽपि नास्त्यतिप्रसङ्गः ? एवमपि तिबाद्यवयवस्य प्राप्नोति, यथा 'एरुः' (३.४.८६) इत्येतल्लोट इत्यनुवृत्तावपि तिबाद्यवयवस्य भवति। न हि तत्रावयवषष्ठी, लिङ इति तु स्थानषष्ठीत्यत्र प्रमाणमस्ति। अथ 'आद्यन्तौ टकितौ' (१.१.४६) इति देशविपर्ययष्टकारः कस्मान्न भवतीत्याह—'तिबादिभिः' इत्यादि। तुल्यत्वं = सदृशत्वम्, तच्चैकयोगनिर्दिष्टत्वेन। लस्य (३.४.७७) इत्येका षष्ठी, तत्र तिबादयः सप्तदशादेशाः स्थाने योगं प्रयोजयन्ति, तानेको नोत्सहते विहन्तुमित्यर्थः। 'महिङो ङकारः' इत्यादि। 'तिङ' इत्युपलक्षणम्। ताङित्यपि प्रत्याहारो भवति। चिनुमहे इत्यादौ तु गुणप्रतिषेधार्थो न भवति, 'सार्वधातुकमपित्' (१.२.४) इत्यनेनैव सिद्धत्वात्। यत्र ह्यार्धधातुकम्—'एषिषिमहि' इति, तत्र ङित्वार्थः कस्मान्न भवति ? प्रत्याहारे चरितार्थस्य समुदायानुबन्धस्यावयवानुबन्धत्वे प्रमाणाभावात्। नुनि कथम् ? तस्यापि हि नकारः 'न लोकाव्यय' (२.३.६९) इत्यत्र प्रत्याहारे चरितार्थः, 'औङ आपः' (७.१.१८) इत्यत्र च वक्ष्यते—'सामान्यग्रहणार्थो ङकारः, अन्यथा निरनुबन्धकस्य प्रथमाद्विवचनस्यैव ग्रहणं स्यात, न सानुबन्धकस्यौटः' इति, तच्च विरुध्येत; तस्यापि टकारस्य सुडिति प्रत्याहारे चरितार्थतया ओकारस्य निरनुबन्धकत्वात्। तस्मान्महिङो ङकारः प्रत्याहारार्थः, न त्ववयवानुबन्ध इत्याचार्याणां स्मृतिपरम्परैवात्र शरणम्॥

## ७९. टित आत्मनेपदानां टेरे।

'टितो लकारस्य स्थाने' इति। एतेन टितः, आत्मनेपदानामिति व्यधिकरणे षष्ठ्याविति दर्शयति। यदि तु प्रत्येकसम्बन्धादेकवचनमित्याश्रित्य टितामात्मनेपदानामित्याश्रीयते 'अकुर्वि' इत्यत्रापि प्रसज्जेतेति भावः।

'प्रकृतेः' इत्यादि। य एते तिबादयः प्रकृतास्तेषां मध्ये यान्यात्मनेपदानि विहितानीत्येवमात्मनेपदानि विशिष्यन्ते। न च तिबादीनां मध्ये शानच् संनिविष्टस्ततो न तस्य प्रसङ्ग इत्यर्थः। एवं च तङामित्येव

वक्तव्यम् । केचित्तु 'आने मुक्' (७.२.८२) इति निर्देशं ज्ञापकं वर्णयन्ति—तिङामेवैत्वं नान्येषामिति, इतरथा ह्यानयीति वक्तव्यं स्यात् । नेति वयम्, योऽलादेश आनः 'पूङ्यजोः शानन्' (३.२.१२८) तस्यायं निर्देशः स्यात्—पवमानः, यजमान इति ॥

## ८०. थासः से ।

'पेचिषे' इति । लिट्, 'अत एकहल्मध्ये' (६.४.१२०) इत्यादिना एत्वाभ्यासलोपौ, क्रादिनियमादिट् । इह 'थः सः' इति वक्तव्यम्, थकारस्य सकारे कृते परभागस्य टेरेत्वे सति सिद्धमिष्टम् । पचथः, पचथ—अत्रापि प्राप्नोति ? आत्मनेपदानाम्' इति वर्तते । एवमप्याथामस्थकारस्य प्राप्नोति ? धातोरिति वर्तते—धातोरनन्तरो यस्थकार इति । इहापि तर्हि न प्राप्नोति—पचसे, चिनुषे इति ? विकरणेन व्यवधानात् । क्व तर्हि स्यात् ? य एते लुग्विकरणाः, श्लुविकरणाः, श्नम्विकरणाः । तस्मात् 'थासः से' (३.४.८०) इति वक्तव्यम् । एवमपि सशब्द एवादेशो विधेयो टेरेत्वेनैव सिद्धम् ? ज्ञापकार्थम् । एतज्ज्ञापयति—आत्मनेपदानां य आदेशास्तेषां टेरेत्वं न भवतीति । तेन पक्ता, पक्तारौ, पक्तार इति डारौरसामेत्वं न भवति ॥

## ८१. लिटस्तझयोरेशिरेच् ।

पूर्वसूत्रे ज्ञापितम्—आत्मनेपदादेशानां टेरेत्वं न भवतीति, तेन इशिरच्—इत्येतावादेशौ न विहितौ । 'शकारः सर्वादेशार्थः' इति । अन्यथा धातोरित्यधिकारात् 'आदेः परस्य' (१.१.५४) इति तकारस्य प्रसज्येत । अथ 'शे' इत्येव कस्मान्नोक्तम्, शःरेजिति ह्युच्यते मात्रालाघवं भवति ? नैवं शक्यम्; 'शे' इति प्रगृह्यसञ्ज्ञा स्यात् । इह च 'पपे सोमम्' इति पिबादेशः प्राप्नोति, 'जग्ले, मम्ले' इत्यादौ चात्त्वं न स्यात् । एशि तु न दोषः, 'वर्णे यत् स्यात् तच्च विद्यात्तदादौ' इति न्यायात् ॥

## ८२. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।

'तिबादीनाम्' इति । एतच्च प्रकरणाल्लभ्यते, तेन यवसोर्णलादयो न भवन्ति । विधानसामर्थ्याद्वा यवसोर्णलाद्यभावः । 'लकारः स्वरार्थः' इति । अन्यथा प्रत्ययस्य पित्त्वादनुदात्तत्वेऽपि धातुस्वरे कृते द्विः प्रयोगो द्विर्वचनमिति द्वयोरप्युदात्तत्वं प्राप्नोति । 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८) इति नास्ति, यौगपद्येन सम्भवः पर्यायेण प्रसज्येत । 'णकारो वृद्ध्यर्थः' इति । इदमन्यथासिद्धम्, 'णलुत्तमो वा' (७.१.९१) इत्यत्र योगविभागः—अल् णिद्भवतीति, तत उत्तमो वा—वा णिद्भवतीति । 'पपाच' इति । कथमयं सर्वादेशः, यावता 'नानुबन्धकृतमनेकाल्त्वम्' (व्या.प. १४), ततश्च 'धातोः' (३.१.९१) इत्यधिकारात् 'आदेः परस्य' (१.१.५४) इति वकारस्य प्राप्नोति ? अनित्वात् सिद्धम् ? न ह्ययं णल्विधानसमये प्रत्यय इत्यनित्वात् णकारस्यानेकाल्त्वात्सर्वादेशः, ततो णकारस्येत्संज्ञेत्यानुपूर्व्यात्सिद्धम् । ननु च णकारो न कर्तव्य इत्युक्तम् ? एवं तर्हि लकार आदौ क्रियते तस्याप्यनित्वात् सिद्धम्, ल उत्तमो वेति वक्तव्यम्, एवम् आत औ ल्स्येति, हल्ङ्यादिसूत्रे चाप्यपृक्तं हलिति हल्ग्रहणं लिङ्गं सर्वादेशो णलिति, तद्धि पपाचेत्यादौ मा भूदिति । सर्वादेशत्वे च तदुपपद्यते । 'पपक्थ' इति । क्रादिनियमात् प्राप्त इट् 'उपदेशेऽत्वतः' (७.२.६२) इति प्रतिषेधान्न भवति । क्वचित् 'पेचिथ' इति पाठः, 'ऋतो भारद्वाजस्य' (७.२.६३) इति नियमादिट्, 'थलि च सेटि' (६.४.१२१)

इत्येवाभ्यासलोपो । 'पेच' इति । 'धातोः' (३.१.९१) इत्यधिकारात् 'तस्मादित्युत्तरस्य' (१.१.६७); 'आदेः परस्य' (१.१.५४) इति थकारस्याकारे द्वयोः 'अतो गुणे' (६.१.९७) पररूपत्वम् ॥

## ८३. विदो लटो वा ।

'विद ज्ञाने' इति । सत्ताविचारार्थयोरात्मनेपदित्वात् [तिबादीनामसम्भवः, लाभार्थस्यापि] विकरणेन व्यवधानादनन्तराणामसम्भव इति भावः ॥

## ८४. ब्रुवः पञ्चानामादित आहो ब्रुवः ।

'पञ्च णलादयः' इति । आदेशा अपि पञ्चैव, तत्राप्यादितो णलादयः पञ्च, न पुनरिच्छातः पञ्चेत्यर्थः । कथं पुनर्द्वितीयं पञ्चग्रहणमादिग्रहणं चान्तरेणादेशेष्वयं विशेषो लभ्यते, ननु सर्वैरेव णलादिभिः पञ्चानां स्थाने युक्तं भवितुम् ? उच्यते; पूर्वसूत्रे तावद्यथासङ्ख्यं प्रवर्तते, ततश्च तत्रैव निर्ज्ञातः स्थानिविशेषेण णलादीनां सम्बन्धः, त एवेहानुवर्तन्त इत्यत्रापि तथैव भविष्यति, ततश्च स्थानिसम्बन्धादिति पूर्वसूत्रे स्थानिविशेषेण सम्बन्धस्य निर्ज्ञातत्वादित्यर्थः । 'आत्थ' इति । 'आहस्थः' । 'परेषाम्' इति । थादीनाम् । ननु च 'ब्रुवः' इति यदेतत् पञ्चम्यन्तं तदेवार्थाद्विभक्तिविपरिणामो भवतीत्यादेशसम्बन्धे षष्ठ्यन्तं विज्ञास्यते, नार्थो ब्रुव इति पुनर्वचनेन ? तत्राह—'ब्रुवः' इति । 'पुनर्वचनम्' इत्यादि । 'परस्मैपदानामेव हि स्यात्' इति । असति श्रुते सम्बन्धिनि विभक्तिविपरिणामो भवति, इह तु 'परस्मैपदानाम्' इति श्रुतत्वात्तेषामेव स्यादित्यर्थः ॥

## ८५. लोटो लङ्वत् ।

'लोटो लङ्वत् कार्यं भवति' इति । अत्र लोडादेशेषु लोट्शब्दो वर्तते, लङादेशेषु च लङ्शब्दः, लोडादेशानां लङादेशवत् कार्यं भवतीत्यर्थः, तदाह—'तामादयः सलोपश्च' इति । यद्यप्येते लङ्याहत्य न विहितास्तथापि लङि दृष्टत्वादतिदिश्यन्ते । 'अडाटौ कस्मान्न भवतः' इति । लङ्येवाहत्य विहितत्वात् प्रस्तुतयोरेवातिदेशो युक्त इति प्रश्नः । 'तथा झेर्जुसादेशः' इति । कस्मान्न भवतीति विभक्तिविपरिणामेनानुषङ्गः । 'लङः शाकटायनस्य' (३.४.१११) इति जुस्भावोऽपि लङ एवाहत्य विहितः । इह तु जाग्रतु, विदन्तु, 'सिजभ्यस्तविदिभ्यश्च' (३.४.१०९) इति लङि दृष्टो जुस्भावः प्राप्नोति । 'वाग्रहणमनुवर्तते' इति । लोट इत्युपमेये षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते—लङो यत्कार्यं तल्लोटो भवतीति, न तु लङि यत्कार्यं तल्लोटोरित्यडाटोः परिहारान्तरम् । झेर्जुस्भावस्य तु परिहारान्तरम, 'लङः शाकटायनस्य' (३.४.१११) इत्यत्र स्वयमेव वक्ष्यति ॥

## ८६. एरुः ।

'लोडादेशानामिकारस्य' इति । अथ तु—लोडादेशो य इकारस्तस्य इत्यर्थोऽभिप्रेतः स्यादिट इत्येव ब्रूयात्, 'तुह्योः विदाङ्कुर्वन्तु' इति च निर्देशोऽनुपपन्नः स्यात् । अथेदानीमिटोऽपि व्यपदेशिवद्भावेनोत्वं कस्मान्न भवति ? पुनःप्रसङ्गविज्ञानात् टेरेत्वं भविष्यति । 'न वोच्चारणसामर्थ्यात्' इति । यदि हिन्योरुत्वं स्यात्

'सेहुं:', मेर्नुः' इत्येव ब्रूयात्, एवं हि प्रक्रियालाघवं भवतीति भावः। 'आनि लोट्' (८.४.१६) 'हुझल्भ्यो हेर्धिः' (६.४ १०१) इति लिङ्गं हिग्योरुत्वाभावस्य ॥

## ८७. सेर्ह्यपिच्च।

'लुनीहि' इति। पित्त्वाभावाङ्ङित्त्वे सति 'ई हल्यघोः' (६.४.११३) इतीत्त्वं भवति। 'राध्नुहि' इत्यत्र गुणाभावः। इह सेर्हिङ्च्चेति वक्तव्यम्। नन्वेवं ङित्त्वान्ङित्कार्यं भवतु स्थानिवद्भावेन पित्त्वमप्यस्तीत्यनुदात्तत्वमपि प्राप्नोति? 'ङिच्च पिन्न भवति' इति वचनान्न भविष्यति, यथा—अपि स्तुयाद् राजानमिति, अत्र 'उतो वृद्धिर्लुकि हलि' (७ ३ ८९) इति पिति विधीयमाना वृद्धिर्न भवति। ब्रूताद्भवानिति, ब्रुव इण्न भवति, किं च नाप्राप्ते पित्त्वे ङित्त्वमारभ्यमाणं तद्बाधिष्यते ॥

## ८८. वा छन्दसि।

'अपित्त्वं विकल्प्यते' इति। अनन्तरत्वात्। नादेश इति, व्यवहितत्वात्। 'युयोधि' इति। 'बहुलं छन्दसि' (२.४.७६) इति शपः श्लौ द्विर्वचनम्। अत्र पित्त्वान् ङित्त्वाभावे 'अङितश्च' (६.४.१०३) इति धिभावः ॥

## ८९. मेर्निः।

'उत्वलोपयोरपवादः' इति। यथाक्रमम् 'एरुः', (३.४.८६), 'लोटो लङ्वत्' (३.४.८५) इति प्राप्तयोः, 'इतश्च' (३.४.१००) इतीकारलोपस्यापि लङि दृष्टत्वादतिदेशतः प्राप्तिः। वयं तु ब्रूमः—'लोटो लङ्वत्' (३.४.८५) इति प्राप्तस्यादेशस्यापवाद इति ॥

## ९०. आमेतः।

'लोट्सम्बन्धिनः' इति। लोडादेशसम्बन्धिन इत्यर्थः। एतेन लोटंकारो विशेष्यत इति वर्णयति। एकारेण तु लोटि विशेष्यमाणे तदन्तविधौ सत्येकारान्तस्य लोट आम् विधीयमानोऽनेकाल्त्वात् सर्वादेशः स्यात्, तत्र हि 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या.प. १०६) इति परिहारो वाच्यः स्यादित्यर्थः ॥

## ९१. सवाभ्यां वामौ।

## ९२. आडुत्तमस्य पिच्च।

'स चोत्तमपुरुषः पिद्भवति' इति। आट एव पित्त्वं कस्मान्न विज्ञायते, तुल्यविभक्तिकयोर्हि युक्तः सम्बन्धः—'आट् पित्' इति? निरर्थकत्वात्। अनुदात्तत्वं तावदागमत्वादेव सिद्धम्; करवाणि, मार्जानीत्यादौ गुणवृद्ध्योरपि प्रत्यय एव निमित्तं न त्वागमः ॥

## ९३. एत ऐ ।

'इह कस्मात्' इति । गुणस्यान्तवद्भावेन लोड्ग्रहणेन ग्रहणादस्ति प्रसङ्ग इति भावः । 'बहिरङ्गलक्षणत्वात्' इति । द्विपदाश्रयत्वाद् गुणस्य बहिरङ्गत्वम्, ऐकारस्त्वेकपदाश्रयत्वादन्तरङ्गः, अत एव हेतोः 'आमेतः' (३.४.९०) इत्ययमपि विधिर्न भवति ॥

## ९४. लेटोऽडाटौ ।

'पर्यायेण' इति । न यौगपद्येन; अड्विधानसामर्थ्यात् अन्यथा सवर्णदीर्घत्वे सत्यड्विधानमकिञ्चित्करं स्यात् ॥

## ९५. आत ऐ ।

'करवैते' इति । 'छन्दस्युभयथा' (३.४.११७) इति सार्वधातुकत्वाद्विकरणः, आर्धधातुकत्वान्ङित्त्वाभावे विकरणस्य गुणः, करोतेश्चोत्वाभावः पवंते, अश्नवैथे, प्रवंते, विप्रत्यैथे ॥

## ९६. वैतोऽन्यत्र ।

'एतद्विषयम्' इति । षष्ठीसमासः । एवंविषयमिति तु युक्तः पाठः । उदाहरणानि 'उपसंवादाशङ्कयोश्च' (३.४.८) इत्यत्र व्युत्पादितानि । 'दधस' इति । 'थासः से' (३.४.८०), शपः श्लुः, अट् 'घोर्लोपो लेटि वा' (७.३.७०) इत्याकारलोपः ॥

## ९७. इतश्च लोपः परस्मैपदेषु ।

'परस्मैपदग्रहणम्' इत्यादि । अन्यथा टेरेत्वस्यावकाशः—'अन्ये लकाराः, लेटचपीकाराबन्यत्र इतो लोपस्य—परस्मैपदानि; इडादिषूभयप्रसङ्गे परत्वादितो लोपः स्यात् ॥

## ९८. स उत्तमस्य ।

'करवाव, करवाम' इति । पूर्ववद्गुणोत्वाभावौ, 'लेटोऽडाटौ' (३.४.९४) इत्याट् । 'उत्तरग्रहणम्' इत्यादि । इह वस्मस्ग्रहणमेव कर्तव्यम् । तत्रायमप्यर्थः—स इति न वक्तव्यं भवति, 'अलोऽन्त्यस्य' (१.१.५२) इत्येव सिद्धम् । यदा च पुरुषान्तरस्य स्थाने वस्मसौ भवतः, एतयोश्च स्थाने सकारान्तं पुरुषान्तरम्, तदाऽपि वाग्रहणानुवृत्त्यैव लोपालोपौ यथादर्शनं व्यवस्थितौ भविष्यतः । यथाक्रियमाणेऽप्युत्तमग्रहणे वाग्रहणं चानुवर्तते, उत्तरत्र नित्यग्रहणं स्यात्, 'नित्यं ङितः' (३.४.९९) ॥

## ९९. नित्यं ङितः ।

## १००. इतश्च ।

## १०१. तस्थस्थमिपां तांतंतामः ।

## १०२. लिङः सीयुट् ।

लिङशब्दोऽत्र लिङादेशेषु स्थानिवद्भावात् प्रयुक्त इत्याह—'लिङादेशानाम्' इति । सीयुट्सकारस्यार्धधातुके लिङि श्रवणम्, सार्वधातुके 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९) इति सलोपः । यकारस्याजादिषु श्रवणम्, अन्यत्र लोपः ॥

## १०३. यासुट् परस्मैपदेषूदात्तो ङिच्च ।

'परस्मैपदविषयस्य' इति । लिङः परेषां परस्मैपदानामसम्भवात् । 'सीयुटोऽपवादः' इति । नाप्राप्ते तस्मिन्नारम्भात्, तेन यासुटि कृते तस्य तिङ्भक्तत्वात् तदादेः सीयुटप्रसङ्ग इति न चोदनीयम् । 'सत्यपि हि सम्भवे सामान्यविधेर्विशेषविधिर्बाधकः' (व्या.प. २५) । कथं तर्हि 'कृषीष्ट' इत्यादिषु सुटि कृते सीयुड् भवति, ननु तत्रापि सुटा सीयुड् बाधनीयः ? अत्र परिहारं सुड्विधौ वृत्तिकारः स्वयमेव वक्ष्यति । 'आगमत्वादनुदात्तत्वे प्राप्ते' इति । अत एव यासुडुदात्तवचनाद्विज्ञायते—'आगमा अनुदात्ता भवन्ति' (व्या.प. १०५) इति, अन्यथा यासुट प्रत्ययभक्तत्वात् प्रत्ययस्वरेणैव सिद्धमुदात्तत्वम् । नैतदस्ति ज्ञापकम्, यानि पिद्वचनानि तदर्थमेतत् स्यात् । यद्येतावत् प्रयोजनम, अपिदित्येव ब्रूयात् । तदेतदुदात्तवचनं ज्ञापकमेव—'आगमा अनुदात्ता भवन्ति' (व्या.प. १०५) इति । 'तत्र तत्कार्याणां सम्भवात्' इति । 'ग्रहिज्यादिसूत्रे' (६.१.१६) अपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् प्रत्ययस्यैव ग्रहणम् । 'कुर्यात' इति । विकरणाश्रयो धातोर्गुणः, 'अत उत् सार्वधातुके' (६.४.११०) इत्युत्वम, 'ये च' (६.४.१०९) इत्युकारलोपः । 'कुर्युः' इति । 'झेर्जुस्' (३.४.१०८), 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९), 'उस्यपदान्तात्' (६.१.९६) ।

'स्थानिवद्भावादेव' इति । 'सार्वधातुकमपित' (१.२.४) इत्यतिदेशादिति नोक्तम् । पिदर्थत्वान्ङिद्वचनस्य । 'यासुटो ङिद्वचनम' इति । यासुडादेर्लिङो ङिद्वचनमित्यर्थः । इदानीमेव ह्युक्तम्—ङित्त्वं तु लिङ एव विधीयते इति ? एतच्च ज्ञापनम्—'पिच्च ङिन्न भवति' इत्येतदनाश्रित्योच्यते । तदाश्रयणे तु स्थानिवद्भावेन प्राप्तं ङित्त्वमौपदेशिकेन पित्वेन बाध्यते इति प्राप्त्यर्थमेव ङिद्वचनं स्यात ॥

## १०४. किदाशिषि ।

'तस्य यासुडागमो भवति, स चोदात्तः किद्भवति' इति । तस्य यासुड् भवति, स च लिङ्किद्भवतीत्यर्थः । अन्यथा 'प्रत्ययस्येदं कित्त्वं' इत्यनन्तरग्रन्थेन विरोधः स्यात् । 'प्रयोजनाभावात्' इति । 'वचिस्वपि'

(६.१.१५) इत्यत्रापि 'धातोः स्वरूपग्रहणे' इति प्रत्ययस्यैवेदं ग्रहणं स्यात्; अन्यथा वाचयति वाचिकं कथयति, वाजहातीत्यत्रापि स्यात् 'गुणवृद्धिप्रतिषेधस्तुल्यः' इति। किमर्थं तर्हि कित्त्वविधानमित्यत आह—सम्प्रसारणम्' इति। 'जागर्युः' इति। 'जाग्रोऽविचिण्णल्ङित्सु' (७.३.८५) इति गुणः॥

## १०५. झस्य रन्।

झस्येत्यकारोच्चारणात् सङ्घातस्यैव ग्रहणं न वर्णस्य, अन्यथान्तादेशविधाविव झः' इत्येव ब्रूयादिति मन्यमान आह—'लिङादेशस्य झस्य' इति। 'झोऽन्तापवादः' इति। झकारस्य योऽन्तादेशस्तस्यापवाद इत्यर्थः। 'झोऽन्तः' (७.१.३) इत्यस्य वा विषेरपवाद इत्यर्थः। ननु झवर्णस्यान्तादेशः समुदायस्य रन्निति कथं भिन्नविषययोर्बाध्यबाधकभावः? विरोधात्, येन नाप्राप्तिन्यायाच्च। झोऽन्तापवाद इत्युपलक्षणम्। कृषीरन्, तृषीरन्नित्यत्र 'आत्मनेपदेष्वनतः' (७.१.५) इत्यस्यापवादः। ननु चापवादविप्रतिषेधादङ्गाव एव प्राप्नोति, न; प्रतिपदविधेर्बलीयस्त्वात्, प्रतिपदविहितो हि रन्भावः। यद्वा—कृषीरन्, तृषीरन्नित्यत्रापि प्रवर्ततामङ्गावः, सत्यपि तु तस्मिन् पुनः प्रसङ्गविज्ञानात् सङ्घातस्य रन् भविष्यति॥

## १०६. इटोऽत्।

'नैवायमादेशावयवः' इति। तेन नास्येत्सञ्ज्ञया प्रयोजनम्, स्वयमेव निवृत्तत्वादित्यर्थः। प्रत्युतेत्सञ्ज्ञायां स्वरितत्वं स्यात्, 'न विभक्तौ तुस्माः' (१.३.४) इत्यत्राभ्युपगमवादेनोक्तम्—'किमोदिटोदिति चात्र प्रतिषेधो न भवत्यनित्यत्वादस्य' इति। 'अर्थवद्ग्रहणे' इत्यादि। लस्थाने य इडिति विशेषणादप्यागमस्येटो ग्रहणाभावः॥

## १०७. सुट् तिथोः।

'तिथोः' इति सप्तमी वा स्यात्? षष्ठी वा? आद्य पक्षे 'यस्मिन् विधिस्तदादावल्ग्रहणे' (व्या.प.१२७. वा.१४) इति तकारथकारादेः लिङादेशस्य सुटा भाव्यमिति कृषीष्ट कृषीष्ठा इत्यत्रैव स्यात्, कृषीयास्ताम्, कृषीयास्थामित्यत्र न स्यात्; सुटा च सीयुटो बाधः स्यात्, उभयोरपि लिङादेशभक्तत्वादितिद्वितीयं पक्षमाश्रित्याह—'लिङसम्बन्धिनोस्तकारथकारयोः' इति। एतदेव स्पष्टयति—'तिकारथकारौ' इति। 'लिङ तद्विशेषणम्' इति। लिङशब्देन तदादेशा उच्यन्ते। एवं लिङसम्बन्धिनोरित्यत्रापि। 'कृषीष्ट' इति। विध्यादौ लिङि सार्वधातुकत्वात् 'लिङः सलोपः' (७.२.७९) इति लोपेन सुटः श्रवणभावादाशिषि लिङेवोदाहृतः॥

## १०८ झेर्जुस्।

'झोऽन्तापवादः' इति। पूर्ववदुपपाद्येयम्। जागृयुरित्यादौ च पूर्ववदेव 'अदभ्यस्तात्' (७.१.४) इत्यस्यापि बाधः। 'पचेयुः' इति। 'अतो येयः' (७.२.८०) इतीयदेशः, शपा सह 'आद् गुणः' (६.१.८७)॥

## १०९. सिजभ्यस्तविदिभ्यश्च।

सत्ताविचारणार्थयोर्विदोरात्मनेपदित्वादसम्भव एव झेः, लाभार्थस्यापि विकरणेन व्यवधानादनभ्यस्य

झेरसम्भवः, तस्माल्लुग्विकरणस्यैव विधेर्ग्रहणमित्याह—'वेत्तेश्च' इति। 'अभ्यस्तविधिग्रहणमसिजर्थम्' इति। न चैवं लोडादिष्वपि प्रसङ्ग इत्याह—'ङित इति चानुवर्तते' इति ॥

## ११०. आतः।

'सिच आकारान्ताच्च परस्य झेः' इति। द्वाभ्यामनन्तरस्येत्यर्थः। 'कथम्' इति। आतः सिचा व्यवधानाद् द्वाभ्यामानन्तर्यं न सम्भवतीति प्रश्नः। 'सिज्लुगन्ताद् झेर्जुस्' (३.४.१०८) भवतीत्युक्तं भवति। 'अभूवन्' इति। 'भुवो वुग्लुङ्लिटोः' (६.४.८८) इति वुक्। 'तुल्यजातीयापेक्षत्वाच्च' इति। द्वाभ्यामानन्तर्यस्याश्रवणात् सिज्लुगन्तस्य ग्रहणमित्युक्तम्। तेन—सिज्लुगन्ताद्यदि भवति आत एवेति नियमाश्रयणात् श्रूयमाणे सिचि अकार्षुरित्यादावनाकारान्तादपि भवत्येवेत्यर्थः ॥

## १११. लङः शाकटायनस्यैव।

'अयुः, अवुः' इति। शपो लुक्, 'उस्यपदान्तात्' (६.१.९६) इति पररूपत्वम्।

'लङेव' इति। लुङ्लिङोस्तावद्भवितव्यम्, लृङस्तु स्यप्रत्ययेन झेर्व्यवधानमिति भावः। 'यान्तु, वान्तु' इति। 'लोटो लङ्वत्' (३.४.८५) इत्यत्र तु वाग्रहणानुवृत्त्याऽव्ययमर्थः साधितः। ननु च लङ्ग्रहणाद्यत्नाज्जुस्भावोऽयं लोटो मा भूत्, 'सिजभ्यस्त' (३.४.१०९) इत्ययं तु स्यादेव? तत्राह—'सिजभ्यस्त' इत्यादि। कथमित्यत्राह 'जुस्भावमात्रं हि' इति। कथं पुनः 'आतः' (३.४.११०) इत्यनुवर्तमाने जुस्भावमात्रं मुख्येन लङा शक्यं विशेषयितुम्? 'लङः' इति योगविभागः कर्तव्य इति मन्यते। ननु च 'आत इत्येतत् सिज्ग्रहणानुवृत्त्या नियमार्थम्' इत्युक्तम्, ततश्च 'आयुः' इत्यत्र केनचिदप्राप्तत्वाद्विध्यर्थमेतत् किमेवकारेण? इत्यत्राह—'एवकार उत्तरार्थः' इति। 'लिट् च' (३.४.११५), 'लिङाशिषि' (३.४.११६) इत्यत्रास्य प्रयोजनं दर्शयिष्यति ॥

## ११२. द्विषश्च।

द्विषिरदादिः ॥

## ११३. तिङ्शित्सार्वधातुकम्।

[1]'तरति नयति' इति। तिङः सार्वधातुकत्वाच्छप्, शपः सार्वधातुकत्वाद्धातोर्गुणः। 'रोदिति' इति। शपो लुकि 'रुदादिभ्यः सार्वधातुके' (७.२.७६) इतीट्। 'पवमानः', 'यजमानः' इति। पूर्ववच्छब्गुणौ ॥

## ११४. आर्धधातुकं शेषः।

'धातुसंशब्दनेन' इति। धातुशब्दमुच्चार्येत्यर्थः। अत्र हि यङ्विधौ यद्धातुग्रहणं शमिधातोरिति वा,

1. भवति इति मुद्रितः पाठः।

यच्च धातोरिति, तदुभयमनुवर्तते; तत्रैकेनाधातुप्रत्ययो व्यावर्त्यते, अपरेण धातुप्रत्ययो विशिष्यते, धातोरित्येवं यो विहित इति, तेनायमर्थः। 'लूभ्याम्, लूभिः, जुगुप्सते' इति । यद्यप्यत्र धातोरेव विहितस्तथापि धातुशब्दमुच्चार्य न विहित इति भवति प्रत्युदाहरणम् । शेषग्रहणम्—'तिङ शितोर्मा भूत्, अन्यत्रैकसञ्ज्ञाधिकाराभावात् प्रत्ययादिसञ्ज्ञानामिव समावेशः स्यात् ।

यद्यव्येकारोऽनुवर्तते शक्यं शेषग्रहणमकर्तुम् ॥

## ११५. लिट् च ।

'पेचिथ, शेकिथ' इति । 'ऋतो भारद्वाजस्य' (७.२.६३) इति नियमादिट्, 'थलि च सेटि' (६.४.१२१) इत्येत्वाभ्यासलोपौ । 'जग्ले, मम्ले' इति । आर्धधातुकत्वात् 'आतो लोप इटि च' (६.४.६४) इत्याकारलोपः । यदुक्तम्—'सार्वधातुकसञ्ज्ञाया अपवादः' इति, तद्विघटयति—'ननु च' इति । 'सत्यम्' इत्यादिना अपवादत्वं समर्थ्यते ॥

## ११६. लिङाशिषि ।

## ११७. छन्दस्युभयथा ।

'सर्वमेव प्रकरणम्' इति । 'तिङशित्सार्वधातुकम्' (३.४.११३) इत्यारभ्य चतुःसूत्रीप्रकरणम् ।

'भूभावो न भवति' इति । तदानीमेवार्धधातुकत्वात् 'श्नसोरल्लोपः' (६.४.१११) इत्यस्याभावः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
तृतीयाध्यायस्य चतुर्थः पादः ॥

—:०:—

समाप्तश्चायं तृतीयोऽध्यायः ॥

श्रीहरदत्तमिश्रविरचिता काशिकाव्याख्या

# पदमञ्जरी

—०—

## चतुर्थोऽध्यायः

### प्रथमः पादः

### १. ङ्याप्प्रातिपादिकात् ।

'अधिकारोऽयम्' इति । विधेयपरिभाष्ययोरनिर्देशाद्वक्ष्यमाणानां च स्वादीनां प्रकृत्यपेक्षत्वात्स्वरितत्वाच्च । 'आ पञ्चमाध्यायपरिसमाप्तेः' इति । अधिकारस्यावधिं दर्शयति । अधिकारोऽनेकप्रकारः—संज्ञाधिकारः, विशेषणाधिकारः, प्रकृत्यधिकारश्चेति, तत्र कीदृशोऽयमधिकारः ? इत्यत आह—'स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियते' इति । 'टब्डाप्चापामाविति' इति । सामान्यग्रहणमित्यनुषङ्गः । 'समाहारनिर्देशः' इति । समाहारद्वन्द्वेन तेषां ङ्यादीनामयं निर्देश इत्यर्थः । ततश्च समाहारस्यैकत्वादेकवचनमेव युक्तम्, न बहुवचनमिति भावः ।

किमर्थमिदमुच्यते ? ङ्याप्प्रातिपदिकात्परे स्वादयो यथा स्युरिति केवलानां प्रयोगो मा भूत् । 'परश्च' (३ १.२) इति वचनात् केवलानां प्रयोगो न भविष्यति ? इदं तर्हि प्रयोजनम्—ङ्याप्प्रातिपदिकादेव यथा स्युरिति प्रकृत्यन्तरान्मा भूवन् । असति ह्यस्मिन्नधिकारे धातुः, तिङन्तम्, वाक्यम्, सुबन्तं चेति ङ्याप्प्रातिपदिकव्यतिरिक्तापि चतुर्विधा प्रकृतिरस्ति, वक्ष्यमाणाश्च प्रत्ययाश्चतुर्विधाः—स्वादयः, टाबादयः, अणादयः, स्वार्थिकाश्चेति; तदिह चतुर्विधाभ्यः प्रकृतिभ्यश्चतुर्विधाः प्रत्यया मा भूवन्निति कर्त्तव्य एवायमधिकारः ।

न कर्त्तव्यः । ननु चासत्यस्मिन् धात्वधिकाद्धातोरेव स्युः, कृदुपपदसंज्ञे च स्याताम्, वासरूपविधिश्च स्यात ? न; निवृत्तत्वाद्धातुग्रहणस्य । यदि परं धातो रपि स्युः, तदपि न; कर्मादीनामभावात् । कर्मादिषु च कारकेष्वेकत्वादिकायां च संख्यायां स्वादयो विधीयन्ते, न च धात्वर्थस्य कर्मादिभिर्योगः सम्भवति । कथं तर्हि कर्मणि तव्यदादयो भवन्ति ? नैव धात्वर्थस्य कर्मत्वे तव्यदादयो भवन्ति, किं तर्हि धात्वर्थं प्रति यत्कर्म तस्मिन् वाच्ये—कर्त्तव्यः कट इति । स्वादयस्तु प्रकृत्यर्थस्य कर्मत्वे चरितार्था नान्यस्य कर्मत्वे भवितुमर्हति,

तव्यदादिभिश्च बाधितत्वाद्धातोः स्वादीनामभावः। ननु च धात्वर्थस्यैव कर्मत्वं दृष्टम्—सन्प्रकृतौ चिकीर्षतीत्यादौ? एवमपि संख्याभावः सिद्ध एव, अव्ययेभ्यस्तु 'अव्ययादाप्सुपः' (२.४.८२) इति ज्ञापकात् स्वादयो भवन्ति। यत्पुनः 'बहुषु बहुवचनम्' (१.४.२१) इत्यत्रोक्तम्—यत्र च संख्या सम्भवतीति, तदस्यां दशायां तथा नाश्रीयते। टाबादयस्तर्हि धातोर्मा भूवन्निति? स्त्रियां टाबादयो विधीयन्ते, न च धात्वर्थस्य स्त्रीत्वेन योगोऽस्ति। कथं तर्हि स्त्रियां क्तिन्नादयो विधीयन्ते? नैवात्र धात्वर्थस्य स्त्रीत्वे क्तिन्नादयः स्मर्यन्ते, कस्य तर्हि? यस्तस्य सिद्धत्वं नाम धर्मस्तस्य। क्तिन्नादिभिश्च बाधितत्वाट्टाबादीनामभावः॥

अणादयस्तर्हि धातोर्मा भूवन्निति? अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, न च धात्वर्थस्यापत्यादिभिर्योगोऽस्ति, समर्थविभक्त्यभावाच्चाणादीनामनुत्पत्तिः, 'तस्यापत्यम्' (४.१.९२), 'तेन रक्तम्' (४.२.१) 'तत्र भवः' (४.३.५३) इत्येवमादिभिः षष्ठ्यादिविभक्त्यन्तादणादयो विधीयन्ते, न च धातोर्विभक्तिः सम्भवति। स्वार्थिका अपि स्वार्थकैस्तुमुन्नादिभिर्बाधितत्वादेव धातोर्न भविष्यन्ति।

तिङन्तात्तर्हि स्वादयो मा भूवन्निति? तिङन्तेषु क्रिया प्रधानभूता, साधनं गुणभूतम्, तत्र प्रधानभूतायाः क्रियायाः कर्मादीनामभावात् स्वादयो न भविष्यन्ति। पचति भवति, भवति वं किञ्चिदाचार्याः क्रियमाणमपि चोदयन्तीत्यादौ कर्तृत्वं दृष्टमिति चेत्, एवमपि संख्याया अभावः सिद्ध एव। यस्तु गुणभूतः कर्ताऽभिधीयते; तत्र अभिहितत्वादेव विभक्त्यभावः सिद्धः। न च गुणभूतस्य कर्तुः क्रियान्तरावेशः सम्भवति; यतः पाचकं पश्येत्यादिवद् द्वितीयादयो भवेयुः। ननु पुत्रीयवदेतत् स्यात्, तद्यथा—पुत्रीयशब्दादन्तर्भूतक्रियावाचिनः कर्त्तरि लकार उत्पद्यते—पुत्रीयतीति। तथेहापि पचतिशब्दात् कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युरेव? नैष दोषः; उक्तमेतत्—प्रकृत्यर्थस्य कर्मत्वे चरितार्थाः स्वादयो नान्यस्य कर्मत्वे भवितुमर्हन्तीति। न चैकक्रियापेक्षयोर्भिन्नयोः साधनयोरेकस्मिन् पदे युगपदभिधानं सम्भवति। पुत्रीयशब्दस्तु जीवत्यादिधातुत्र-द्विशिष्टक्रियावचन इति, ततः कर्त्तरि लकारोत्पत्तिरविरुद्धा। अवश्यं चैतदेवं विज्ञेयम्—अर्थाभावादेव तिङन्ताद् द्वितीयादयो न भवन्तीति। यो हि मन्यते—ङ्याप्प्रातिपदिकाधिकारान्न भवन्तीति; रूपबाद्यन्तात्तस्य द्वितीयादयः स्युरेव, पचतिरूपं पश्य, पचतिरूपेण कृतमित्यादि, भवति ह्येतत् प्रातिपदिकम्। कथं तर्हि रूपबाद्यन्तात् प्रथमैकवचनमपि भवति? उक्तत्वात् संख्यायाः, न हि तत्कर्तुः संख्यायामेकवचनम्। यदि तथा स्यात् पचतेरूपं पचन्तिरूपमिति द्विवचनबहुवचने स्याताम्। 'प्रातिपदिकार्थ' (२.३.४६) इत्यत्र तु प्रातिपदिकग्रहणात् प्रातिपदिकमात्रानुबन्धिनी प्रथमा भवति। तत्राप्येकवचनमेव; 'एकवचनमुत्सर्गः करिष्यते' इति वचनात्। न चैवं तिङन्तेऽपि प्रसङ्गः; तस्याप्रातिपदिकत्वात्।

टाबादयस्तर्हि तिङन्तान्मा भूवन्निति? स्त्रियां टाबादयो विधीयन्ते, न च तिङन्ते प्रधानस्यार्थस्य स्त्रीत्वेन योगोऽस्ति। यदि परं साधनस्य स्त्रीत्वे टाबादयः स्युः पचेद्ब्राह्मणः, पचेरन् ब्राह्मण्य इति? तदपि न; स्वभावतो हि तिङन्तानि साधनाश्रयां संख्यामेवोपाददते, न लिङ्गम्। उक्तं च—

> एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।
> भिद्यते न तु लिङ्गाख्यो भेदस्तत्र [1]तदाश्रितः॥ (वा.प. ३.१२.१६) इति।

1. तदाश्रयः—मुद्रितपदमञ्जरीपाठः।

शोभनं पचतीत्यादौ क्रियाविशेषणस्यैव लिङ्गेन योगः, न क्रियायाः, तत्रापि नपुंसकेन। पचतिरूपमित्यादावपि रूपबाद्यन्तवाच्यायाः क्रियायाः स्वभावतो लिङ्गेन योगः, तत्रापि नपुंसकेन। विचित्रा हि शब्दानां शक्तयो यथादर्शनमभ्युपगन्तव्याः, न सामान्यतो दृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते। अवश्यं चैतदेवं विज्ञेयम्—स्त्रीत्वाभावात्तिङन्ताट्टाबादयो न भवन्तीति, अन्यथा पचतिरूपं ब्राह्मणीत्यादौ रूपबाद्यन्ताट्टाप् स्यादेव।

अणादयस्तर्हि तिङन्तान्मा भूवन्निति ? अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, न च तिङन्ते प्रधानस्यापत्यादिभिर्योगोऽस्ति। अप्रधानस्य त्वप्रधानत्वादेवापत्यादिभिर्योगाभावः, समर्थविभक्त्यभावाच्चाणाद्यभावः सिद्धः। अवश्यं चैतदेवं विज्ञेयम्, अन्यथा यः पचतिरूपं तस्यापत्यमिति रूपबाद्यन्तादणादयः स्युरेव।

स्वार्थिका अपि ज्ञापकात् तिङन्तान्न भविष्यन्ति, यदयं क्वचित् तद्धितविधौ तिङ्ग्रहणं करोति—'अतिशायने तमबिष्ठनौ' (५.३.५५) 'तिङश्च' (५.३.५६) इति। वाक्यादपि नैव स्वादयो भवितुमर्हन्ति; कर्मादीनामभावात्। न खलु क्रियारूपस्य संसर्गरूपस्य भेदरूपस्य वा वाक्यार्थस्य कर्मादिभिः स्त्रीत्वेनापत्यादिभिर्वा योगः सम्भवति। 'पश्य मृगो धावति' इत्यादौ दृष्टमिति चेत् ? एवमपि संख्यायोगाभावः सिद्धः। स्वार्थिका अप्यभिधानाभावान्न वाक्याद्भविष्यन्ति। तथा हि—'देवदत्तारोहाश्वम्' इत्यस्माद्वाक्यात् प्रागिवीयेष्वर्थेषु के सुब्लुकि च कृते वाक्यार्थस्यासत्त्वभूतत्वाच्छक्तिलिङ्गसंख्यायोगाभावात् स्वाद्युत्पत्तेरभावाद्देवदत्तारोहाश्वकेति भवितव्यम्, न चैवम्भूतेन वाक्यार्थगताः कुत्सादयो गम्यन्त इति।

सुबन्तादपि नैव स्वादयो भवितुमर्हन्ति। न हि स्वादिषु विधीयमानेषु तदन्ता प्रकृतिः सम्भवति, यथोक्तम्—'सनन्तान्न सनिष्यते' इति। किञ्च सुबन्तमपि संख्याप्रधानं कारकशक्तिप्रधानं वा, न चास्यापरैः कर्मादिभिर्योगः सम्भवति।

टाबादयोऽपि स्त्रीत्वाभावान्न भविष्यन्ति। अणादिषु पुनर्नास्ति विशेषः, सुबन्ताद्वोत्पत्तौ सत्यां प्रातिपदिकाद्वा। यथा चैतत्तथा 'समर्थानां प्रथमाद्वा' (४.१.८२) इत्यत्र प्रतिपादयिष्यामः। सर्वथा रूपबाद्यन्तात् प्रातिपदिकादप्यनिष्टः प्रत्ययो यद्वत् तद्वद्धात्वादिकादपीति नार्थ एतेनेत्याक्षेप्ता शङ्कते तावत्—'यद्यपि' इति। प्रत्ययपरत्वेन प्रकृतिर्लभ्यते। पारिशेष्याच्चेयमेव प्रकृतिर्लभ्यत इत्यर्थः।

परिहरति—'तथापि' इति। वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तत्र ङ्याप्प्रातिपदिकस्य विशेष्यत्वेन सम्प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः। 'इतरथा हि' इति। यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेतेत्यर्थः। 'समर्थविशेषणमेतत् स्यात्' इति। 'समर्थानां प्रथमाद्वा' (४.१.८२) इत्यधिकारात्। किं च समर्थम् ? सुबन्तम्। समर्थविशेषणे सति को दोषः ? 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इति फिन्। इह च प्रसज्येत—ज्ञानां ब्राह्मणानामपत्यमिति, एतद्धि समर्थं वृद्धम्। इह च न स्यात्—ज्ञयोर्ब्राह्मणयोरपत्यमिति, न ह्येतत् समर्थं वृद्धम्। अवृद्ध—'प्राचामवृद्धात्फिन् बहुलम्' (४.१.१६०), इह च प्रसज्येत—ज्ञयोर्ब्राह्मणयोरपत्यमिति, एतद्धि समर्थमवृद्धम्। इह च स्यात्—ज्ञानां ब्राह्मणानामपत्यमिति, न ह्येतत्समर्थमवृद्धम्। यत्र ह्यादेशादिवशेन संख्याविशेषाभिव्यक्तिर्भवति न भवति तत्र द्विवचनबहुवचनान्तानामपि वृत्तिः—तावकः, मामक इति। यथा इह च फिञुत्पद्यमानो बहुत्वमन्तरेण वृद्धत्वानुपपत्तेर्बहुत्वं गमयेत्, एवं फिन्नपि द्वित्वमिति स्यादेवायं प्रसङ्गः। अवर्ण—'अत इञ्' (४.१.९५), इहैव स्यात् दक्षस्यापत्यमिति, दक्षयोः दक्षाणामित्यत्र

तु न स्यात। स्वर—'अनुदात्तादेरञ्' (४.२.४४), इह च प्रसज्येत—वाचो विकारः, त्वचो विकारः, एतद्धि समर्थमनुदात्तादि 'सावेकाचः' (६.१.१६८) इति विभक्तेरुदात्तत्वात्। नन्वत्रैकाचो नित्यं मयटमिच्छन्तीति मयटा भाव्यम्? इदं तर्हि पञ्चानां विकार इति 'षट्त्रिचतुर्भ्यो हलादिः' (६.१.१७९) इति विभक्तेरुदात्तत्वे सति समर्थमनुदात्तादि, प्रातिपदिकं तु 'न्रः संख्यायाः' (फि.सू. २.२८) इत्याद्युदात्तम्। इह च न स्यात्—सर्वेषां विकार इति, 'सर्वस्य सुपि' (६.१.१९१) इत्याद्युदात्तं पदम्, प्रातिपदिकं त्वन्तोदात्तं निपातितम्। ठक्—'नौद्व्यचष्ठन्' (४.४.७), इह च प्रसज्येत—वाचा तरति, त्वचा तरति, एतद्धि समर्थं द्व्यच्। नौग्रहणं तु नियमार्थं स्यात्—औकारान्ताद्यदि भवति नौशब्दादेवेति। इह च न स्यात्—घटेन तरतीति। साम्ना तरतीत्यादौ पुनरुभयथापि सिद्धम्। ङ्याप्प्रातिपदिकग्रहणे तु सति तत्सामर्थ्यात्तस्यैव विशेषणं वृद्धादि भवति, समर्थाधिकाराच्च समर्थात् प्रत्ययः। तत्रैवमभिसम्बन्धः—वृद्धादि यद् ङ्याप्प्रातिपदिकं तस्मात् समर्थात् प्रत्यय इति।

'यस्मात्प्रत्ययविधिः' (१.४.१३) इति प्रत्ययविधौ पञ्चमीनिर्दिष्टस्य विधीयमाना अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरित्येतत्तु प्रयोजनं न भवति, कथम्? दवेन हि जानता यतः प्रत्ययो विहितास्तस्यैताः संज्ञाः पञ्चम्या निर्दिश्यतां मा वा निर्देशि। इह च 'कंसीयपरशव्ययोर्यञञौ लुक् च' (४.३.१६८) इति प्रातिपदिकात् परयोश्छयतोर्लुग्यथा स्यादौणादिकयोरुकारसकारयोर्मा भूदित्येतदपि न प्रयोजनम्, कथम्? 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (हे.प. १०३), उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीत्यर्थः। एतच्च 'अतः कृकमिकंस' (८.३.४६) इत्यत्र कमिग्रहणेनैव सिद्धे पुनः कंसग्रहणाद्विज्ञायते, तस्माद्वृद्धाद्येव प्रयोजनमधिकारस्य।

ङ्याब्ग्रहणं क्रियते; प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्। 'यूनस्तिः' (४.१.७७) युवतिरित्यस्य तु तद्धितान्तत्वात् प्रातिपदिकत्वम्। 'ऊङुतः' (४.१.६६) इत्युवर्णान्तादूङ् विधीयते, तत्रैकादेशस्यान्तवद्भावात् प्रातिपदिकत्वम्। 'श्वशुरस्योकाराकारलोपश्च' (वा. ३७०) इति श्वश्रूरित्यत्र 'श्वशुरः श्वश्र्वा' (१.२.७१?) इति निपातनाद्भिभवत्यादिसिद्धिः, एवं स्थिते चोद्यम्—'अथ' इति। न 'प्रातिपदिकग्रहणे' इति। नञः काक्वा प्रयोगात् सिद्धमेवेत्यर्थः। अनेकार्थत्वाद्वा निपातानाम्। ननुशब्दस्यार्थे न शब्दो द्रष्टव्यः। 'लिङ्गविशिष्टस्य' इति। लिङ्गनिमित्तप्रत्ययेनाधिकस्येत्यर्थः।

अस्याश्च परिभाषायाः प्रयोजनम्—सर्वनामस्वरसमासोपचारेष्ठवद्भावाः। सर्वनाम—भवच्छब्दस्य विधीयमाना सर्वनामसंज्ञा भवतीशब्दस्यापि भवति, 'सर्वनाम्नस्तृतीया च' (२.३.२७), भवता हेतुना, भवतो हेतोः, भवत्या हेतुना, भवत्या हेतोरिति। स्वर—'कुशूलकूपकुम्भशालं बिले' (६.२.१०२), कुशूलबिलं कुशूलीबिलम्। समास—'पुंवत्सदृश' (२.१.३१), मातृसदृशः, मातृसदृशी; 'सदृशप्रतिरूपयोः' (६.२.११) इति स्वरोऽप्यत्र भवति। तथा 'कुमारः श्रमणादिभिः' (२.१.७०)। कुमारीश्रमणा, कुमारश्रमणा, एवं युवतिर्वलिना, युववलिना। उपचार—'अतः कृकमिकंसकुम्भ' (८.३.४६), अयस्कुम्भः, अयस्कुम्भी। इष्ठवद्भाव—'णाविष्ठवत्प्रातिपदिकस्य' (वा. ८१३), कुमारीमाचष्टे कुमारयति। इह तु 'अचित्तहस्तिधेनोष्ठक्' (४.२.४७), हस्तिनीनां समूहो हास्तिकमिति, 'भस्याढे तद्धिते' (वा. ७३१) इति पुंवद्भावेन ङीपि निवृत्ते हस्तिशब्द एवायमिति ठक्सिद्धिः। 'तद्धिते' इत्येषा हि विषयसप्तमी। अवश्यं च पुंवद्भाव एवाश्रयणीयः, अन्यथा हस्तिनीशब्दाट्ठकि यस्येतिलोपस्य स्थानिवद्भावात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपो न स्यात्। इह च 'नेन्सिद्धबध्नातिषु च स्थण्डिलशायिनि' (६.३.१९) इति 'गतिकारकोपपदानां

कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या.प. १३८) इति वचनादनुत्पन्न एव ङीपि समासे सतोऽन्तमेवो-त्तरपदमित्यलुक्प्रतिषेधः सिद्धः। एवं 'शयवासवासिष्वकालात्' (६.३.१८) ग्रामेवासिनीत्यलुक्। तथा 'क्यङ्मानिनोश्च' (६.३.३६) 'स्वाङ्गाच्चेतोऽमानिनि' (६.३.४०) दर्शनीयमानिनी, दीर्घमुखमानिनी— मानिन्शब्द एवोत्तरपदमिति पुंवद्भावः सिद्धः। इह च 'तृजकाभ्यां कर्त्तरि' (२.२.१५) 'कर्त्तरि च' (२.२.१६) इति कर्त्तरि यो तृजकौ ताभ्यां योगे या षष्ठी तस्या येन सह समासः प्राप्तः स सर्वो न भवतीति विज्ञानादपां स्रष्ट्रीत्यत्रापि समासनिषेधः सिद्धः। यदि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (व्या.प. २९) भवति, अतिप्रसङ्गो भवति—'द्विषत्परयोस्तापे' (३.२.३९) द्विषतीतप इत्यत्रापि स्यात्, उक्तमत्र—'द्विषत्परयोरिति द्वितकारकोऽयं निर्देशः तकारान्तो द्विषच्छब्द' इति। इह च गार्ग्या अपत्यम्, वाक्ष्या अपत्यमिति 'यञिञोश्च' (४.१.१०१) इति फक्‌ परत्वात् स्त्रीभ्यो ढग्बाधते। इह च 'ञ्नित्यादिर्नित्यम्' (६.१.१९७) दाक्षिः, ग्लुचुकायनिरित्यस्यामवस्थायामाद्युदात्तत्वे कृते पश्चात् 'इतो मनुष्यजातेः' (४.१.६५) इति ङीषि सति शिष्टः प्रत्ययस्वर एव भवति—दाक्षी, ग्लुचुकायनी। न चास्यामवस्थायामाद्युदात्तत्वं पुनः प्रवर्त्तते; पूर्वमेव प्रवृत्तत्वात्। तथा बहवो गोमन्तोऽस्यां बहुगोमतीति प्रागेव बहुस्वरे प्रवृत्ते पश्चान्ङीप्, पित्त्वादनुदात्तो भवति। न च पुनरपि 'बहोर्नञ्वत्' (६.२.१७५) इत्यस्य प्रवृत्तिः पूर्वमेव प्रवृत्तत्वात् समासाच्चात्र ङीबुत्पन्न इत्युत्तरपदं न लिङ्गविशिष्टम्। इह तर्हि 'राजाहःसखिभ्यष्टच्' (५.४.९१) मद्राणां राज्ञीति टच् स्यात्, ततश्च 'भस्याढे तद्धिते' (वा. ७३१) इति पुंवद्भावेन ईकारे निवृत्ते टिलोपे च टित्वान्ङीपि मद्रराजीति स्यात्, मद्रराज्ञीति चेष्यते। तथा महती प्रिया यस्य महतीप्रिय इति पुंवद्भावप्रतिषेध-विषये 'आन्महतः' (६.३.४६) इत्यात्वं स्यात्। तथाऽऽर्ययोर्ब्राह्मणकुमारयोः, राजा च राजब्राह्मणीत्यत्रापि स्यात् तथा विभक्त्याश्रयं यत्कार्यं विभक्तौ परतो विभक्तेर्वा तत्रापि दोषः, यथा—'न गोश्वन्साववर्ण' (६.१.१८२) इति शुना, शुन इत्यत्र 'सावेकाचः' (६.१.१६८) इति प्राप्तं विभक्तेरुदात्तत्वं न भवति। तथा गौरादिङीषन्तात् शुन्या, शुन्यै इत्यादावपि 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इत्यस्यापि निषेधः स्यात्। 'उगिदचाम्' (७.१.७०) इति नुम् गोमतीत्यादावपि स्यात्। 'चतुरनडुहोराम्' (७.१.९८) अनडुहीत्यत्रेकारात्परः स्यात्। 'पथिमथ्यृभुक्षामात्' (७.१.८५) शोभनः पन्था अस्यामिति 'न पूजनात्' (५.४.६९) इति समासान्ते निषिद्धे ऋन्नेभ्यो ङीपि (४.१.५) भस्य टेर्लोपे सुपथीत्यत्रापि स्यात्। 'अङ्गाधिकारे तदन्तस्यापि ग्रहणात्' (पु.प.वृ. ८५) सुपन्था इतिवत् 'पुंसोऽसुङ्' (७.१.८९) सुपुंसीत्यत्रापि स्यात्। शोभनाः पुमांसोऽस्यामिति, उरःप्रभृतिषु पुमानिति विभक्त्यन्तस्य पाठादेकवचनान्तादेव नित्यं कप् भवति, बहुवचनान्तस्य तु 'शेषाद्विभाषा' (५.४.१५४) इति विकल्पित एवेति कबभावपक्षे पूङो ह्रस्वः, मसुश्च प्रत्ययः, आकार उच्चारणार्थः, तत्र प्रत्ययस्योगित्त्वात् 'उगितश्च' (६.३.४५) इति ङीप। 'सख्युरसम्बुद्धौ' (७.१.९२) 'अनङ् सौ' (७.१.९३) इति णित्वानङौ सखी सख्याविन्यादावपि स्याताम् 'सख्यशिश्वीति भाषायाम्' (४.१.६२) इति ङीविधानं तु सखीभ्यामित्याद्यर्थं स्यात्। 'विभाषा भवद्भगवदघवताम्' (वा. ९३५) इत्यत्र स्ववशब्दः सम्बुद्धाविति विशेष्यते, तत्र 'येन नाव्यवधानम्' (व्या.प. ४६) इत्येकेन वर्णेन व्यवाये ओत्वं प्रवर्त्तमानमिह न भवति—हे भगवति, हे अघवतीति, तदभावात्तत्सन्नियोगशिष्टस्य रुत्वस्याप्यभावः। 'श्वयुवमघोनामतद्धिते' (६.४.१३३) इत्यत्रापि 'अल्लोपोऽनः' (६.४.१३४) इत्यतः 'अनः' इत्यपकर्षा-द्युवतीः पश्येति सम्प्रसारणाभावः।

तदेवं लिङ्गविशिष्टपरिभाषायाः (व्या.प. २९) सन्ति प्रयोजनानि, सन्ति च दोषाः। यानि प्रयोजनानि तदर्थमेषा कर्त्तव्या, प्रतिविधेयं दोषेषु। प्रतिविधानं च 'शक्तिलाङ्गल' (वा २३५) इत्यत्र

घटग्रहणेनैव सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थमिति। तदेवं स्थितमेतत्—ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादिति।

परिहरति—'नैतदस्ति' इति। 'स्वरूपविधिविषये' इति। स्वरूपाश्रयो विधिः स्वरूपविधिः, स चासौ विषयश्च तत्रेत्यर्थः। किमुक्तं भवतीत्याह—'प्रातिपदिकस्वरूपग्रहणे सति' इति। कुत एतदित्यत आह–'तथा च' इति। यथा च युवञ्छब्दस्य जरतीशब्देन समासवचनमात्रार्थं ज्ञापकं तथा तत्रैव प्रतिपादितम्। 'तादृशमेव' इति। 'प्रातिपदिकस्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति यदुक्तं तदनुगुणमेवेत्यर्थः। यदि स्वरूपविधिविषये परिभाषेयम्, कथमिष्ठवद्भावः—कुमारीमाचष्टे कुमारयतीति? बाहुलकात् सिद्धिं मन्यते, चुरादौ हीदं पठ्यते—'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति। भाष्ये तु यथाकथंचित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्थितम्। तथा च 'सर्वप्रातिपदिकेभ्य इत्येके' (वा.१८७) इति क्विप् ङ्यन्तादपि भवति—यामिनयन्त्यहानीति।

'किञ्च' इत्यादिना प्रयोजनान्तरं समुच्चिनोति। 'कालितरा' इति। कालशब्दात् जानपदादिसूत्रेण (४ १.४२) ङीषि तरपि 'घरूपकल्प' (६.३.४३) इत्यादिना ह्रस्वः। किं पुनः कारणं तदन्तात्तद्धितविधानं सिध्यतीत्याह—'विप्रतिषेधाद्धि' इति। स्त्रीप्रत्ययस्यावकाशः—प्रकर्षाविवक्षायां कालीति, प्रकर्षप्रत्ययस्यावकाशः—स्त्रीत्वाविवक्षायां कालतर इति; उभयविवक्षायामुभयप्रसङ्गे परत्वात्तद्धितः स्यात्। ङ्याब्ग्रहणे तु सति तरब्विधौ प्रकृतित्रयाधिकारसामर्थ्यात्पूर्वं ङ्यापौ भवतः, पश्चात्तरबिति सिद्धमिष्टम्।

ननु च स्त्रीत्वस्यान्तरङ्गत्वात् तन्निमित्तः प्रत्ययोऽन्तरङ्गः, प्रकर्षस्तु बाह्यप्रतियोग्यपेक्षत्वाद्बहिरङ्गः, ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वम्। योऽप्यज्ञाताद्यर्थेषु 'प्रागिवात्कः' (५.३.७०) विधीयते सोऽप्यज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्ग एव, विभक्त्यन्तस्य हि सतः पश्चादज्ञातादियोगो भवति, विभक्तयश्च संख्याकर्माद्यपेक्षाः। प्रागेव संख्याकर्मादियोगाल्लिङ्गेन प्रातिपदिकं युज्यते। उक्तं च—'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्, समवेतस्य तु वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषानपेक्षमाणश्च पूर्णमात्मानमप्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्ते' इति; युक्तं चैतत्, तथा हि—नागृहीतविशेषणा विशेष्ये बुद्धिरिति पूर्वं विशेषणभूतः स्वार्थोऽभिधातव्यः, पश्चाद्विशिष्टं द्रव्यम्; तस्य धर्मित्वेन प्रधानत्वात्, ततो लिङ्गमन्तरङ्गत्वात्। संख्या हि भेदापेक्षत्वात् बहिरङ्गा, सापि तु सजातीयापेक्षा विजातीयकर्मादिकारकशक्त्यपेक्षेभ्यः कारकेभ्योऽन्तरङ्गेति ततस्तस्या अभिधानम्, ततः कारकाणाम्, एवं परिपूर्णार्थस्य पश्चात् कुत्सनादिभिर्योगः। स्वार्थादयो हि कुत्सनादिहेतवः, द्रव्यस्य पण्डितक इत्यादौ तथावसायात्। तदेवमन्तरङ्गः स्त्रीप्रत्ययः, बहिरङ्गास्तद्धिताः, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः? इह तर्हि 'वर्णे चानित्ये' (५.४.३१), 'रक्ते' (५.४.३२) 'कालाच्च' (५.४.३३) इत्यस्यावकाशः स्त्रीत्वाविवक्षायां कालक इति, स्त्रीप्रत्ययस्य कालीत्यवकाशः; कालिकेत्यत्रोभयप्रसङ्गे परत्वात् कन् स्यात्। तस्य चात्यन्तस्वार्थिकत्वान्न तदपेक्षं स्त्रीप्रत्ययस्यान्तरङ्गत्वमस्ति। नास्त्यत्र विशेषः, कालशब्दादप्युत्पत्तौ 'प्रत्ययस्थात्' (७.३.४४) इतीत्वे कालिकेति सिद्धम्? यदा तर्हि हरितशब्दात् 'न सामिवचने' (५.४.५) इति प्रतिषेधेन ज्ञापितोऽत्यन्तस्वार्थिकः कन् क्रियते तदा 'वर्णादनुदात्तात्' (४.१.३९) इति ङीब्नकारौ बाधित्वा परत्वात् कन् स्यात्, ततश्च हरिणिकेति न स्यात्। हरितशब्देन समानार्थो हरिणशब्दोऽस्ति, ततः कनीत्वे च भविष्यति, हरितशब्दात्तु हरितिकेति? अयं तर्हि—'लोहितान्मणौ' (५.४.३०) इत्यत्यन्तस्वार्थिकः कन् 'वर्णादनुदात्तात्' (४.१.३९) इति ङीब्नकारौ परत्वाद्बाधेत, ततश्च लोहितिकेत्येव स्यात्, न लोहिनिकेति; उभयमपीष्यते, तदर्थं ङ्याब्ग्रहणम्।

ननु च 'लोहितात्लिङ्गबाधनं च' (वा. ६.३०) इत्यनेनैवैतत्सिद्धम्, तत्र वक्तव्यं भवति, कथम् ? 'वर्णादनुदात्तात्' (४.१.३९) इत्यत्र वेति वर्तते, तत्र ङ्यावन्ताभ्यां लोहिनीलोहिताशब्दाभ्यां कनि विहिते यथायोगं ह्रस्वत्वेत्वयोः कृतयोर्लोहिनिका लोहितिकेति सिद्धमिष्टम्। तदेवं सति ङ्याब्ग्रहणे लिङ्गनिमित्तेन प्रत्ययेन विकल्पेन बाधा यथा स्यान्नित्यं मा भूदित्येवमर्थं तावन्न वक्तव्यम्—लोहितात्लिङ्गबाधनं वेति। नापि प्रतिपदविहितत्वेन कना लिङ्गनिमित्तस्य प्रत्ययस्य नित्ये बाधे प्राप्ते विकल्पेन बाधा यथा स्यादित्येवमर्थमपि वक्तव्यम्; ङ्याब्ग्रहणस्यानन्यार्थत्वात्। यदि ह्येतश्वेतशब्दाभ्यामत्यन्तस्वार्थिकः कन्निष्यते, तदा तत्र ङ्याब्ग्रहणस्य चरितार्थत्वाल्लोहितशब्दात्प्रतिपदविहितेन कना ङीपो नित्ये बाधे प्राप्ते तद्वक्तव्यम् ? तदापि वा न वक्तव्यम्, 'लोहितान्मणौ' (५.४.३०) इत्यस्यापि पुन्नपुंसकयोश्चरितार्थत्वात्। तदेवमत्यन्तस्वार्थिकोऽपि कन् ङ्यन्ताद्यथा स्यादिति ङीब्ग्रहणं तावत्कर्त्तव्यम्।

आब्ग्रहणं तु विस्पष्टार्थम्। तत्र समासान्तेषु दोषः—बहवो गोमन्तोऽस्यां नगर्यामिति बहुव्रीहौ कृते स्त्रिया अन्यपदार्थत्वाङ्ङीप् च प्राप्नोति कप् च, ङ्याब्ग्रहणान्ङीपि कृते कप् स्यात्, ततश्च बहुगोमतिकेति रूपं स्यात्, बहुगोमत्केति चेष्यते ? नैष दोषः; समासार्थादुत्तरपदात्कृत एव समासे समासान्ता भवन्ति पश्चात्तदन्तेन समासः, एवं हि समासं प्रत्यन्तावयवत्वमुपपद्यते समासान्तानाम्, तथा च 'न कपि' (७.४.१४) इत्यत्र वक्ष्यति तत्र चोत्तरपदे समासार्थाया विभक्तेः पुरस्तात्समासान्ता इति केचित्। परस्तात्समासान्तेषु सुब्लुकि तद्धितान्तत्वेन ततः सुपि सुबन्तस्य समास इत्यन्ये। सर्वथा बहुचर्मिकेतीत्वं प्राप्नोति, 'असुपः' (७.३.४४) इति प्रतिषेधात्, यथा बहुपरिव्राजका मथुरेति ? कर्त्तव्योऽत्र यत्नः। 'नञस्तत्पुरुषात्' (५.४.७१) इत्यादौ ग्रन्थविरोधं तत्र तत्र परिहरिष्यामः तदेवं स्थितमेतत्—तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणं विप्रतिषेधाद्धि तद्धितबलीयस्त्वमिति।

यद्येवम् 'यूनस्तिः' (४.१.७७), 'ऊङुतः' (४.१.६६) इति त्यूङोरपि ग्रहणं कर्त्तव्यं तदन्तात्तद्धितविधानार्थम्—युवतितरा। भाष्यकारप्रयोगात् 'तसिलादिष्वाकृत्वसुचः' (६.३.३५) इति पुंवद्भावो न भवति, सिद्धादिषु पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेति वा पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वेन बाधितत्वात्। ब्रह्मबन्धूतरा 'नद्याः शेषस्यान्यतरस्याम्' (६.३.४४) इति ह्रस्वाभावपक्षे 'जातेश्च' (६.३.४१) इति पुंवद्भावप्रतिषेधः। पूर्वत्र त्वनेन प्रतिषेधो न लभ्यते; यौवनस्याजातित्वात्। यावद्द्रव्यभाविनो हि जातिः, तथा च युवजानिरित्युदाहृतम्। नन्वत्रान्तरङ्गत्वादेव त्यूङौ भविष्यतः, अत्यन्तस्वार्थिके तु ब्रह्मबन्धुकेत्यत्र 'केऽणः' (७.४.१३) इति ह्रस्वे सति नास्ति विशेषः—ऊङन्ताद्वोत्पत्तौ सत्याम, उकारान्ताद्वा, युवतिशब्दादपि कनि पुंवद्भावेन भाव्यमिति नास्त्येव विशेषः। न चास्मात्कनिष्यत इत्यत्रापि प्रमाणमस्ति। तस्मान्नार्थस्त्यूङोर्ग्रहणेन॥

## २. स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्।

'उकारादयोऽनुबन्धाः' इत्यादि। तत्र प्रथमैकवचनस्योकारः 'एतत्तदोः सुलोपः' (६.१.१३२), 'दीर्घात्सुतिसि' (६.१.६७) इत्यत्र केवलस्य व्यञ्जनस्योच्चारयितुमशक्यत्वादुच्चारणार्थः। अत्र तु सूत्रे ओकारोपश्लेषाच्छक्यते सकारमात्रमुच्चारयितुम्। 'अनङ् सौ' (७.१.९३) इत्यत्र विशेषणार्थस्तु न भवति; व्यावर्त्यस्याभावात्। न च 'अनङ् सि' इत्युच्यमाने वर्णनिर्देशे च तदादिविधिसम्भवात् सप्तमीबहुवचनेऽपि प्रसङ्गः; 'सर्वनामस्थाने' (७.१.८६) इत्यनुवृत्तेः। जसो जकारोऽस्मिन्नेव सूत्रेऽसन्देहार्थोच्चारणार्थः; अन्यथा

द्यौकारस्यावादेशे सन्देहः स्यात्--किमौकारस्योच्चारणम्, अथाविस्यस्येति । 'जसः शी' (७.१.१७) इत्यादौ विशेषणार्थस्तु न भवति; 'असः शी' इत्युच्यमानेऽप्यतिप्रसङ्गाभावात्, जसादीनां सानुबन्धकत्वात् । शसश्शकार ओटष्टकारस्यासन्दिग्धोच्चारणार्थः; अन्यथा डकारष्टकार इति सन्देहः स्यात् । 'तस्माच्छसः' (६.१.१०३) इत्यादौ विशेषणार्थस्तु न भवति; जसादीनां सानुबन्धकत्वात् । 'टा' इत्यत्र टकारः 'टाङसिङसामिनात्स्याः' (७.१.१२) इति विशेषणार्थः, अन्यथा 'सुपां सुलुक्' (७.१.३९) इत्यादिना विहितस्याकारस्यापि ग्रहणं स्यात् । तदेवमेषां चतुर्णामुकारादय उच्चारणविशेषणार्थाः । इत्संज्ञाऽप्येषां प्रयोगे श्रवणं मा भूदिति, न पुनरित्कार्यं किञ्चदस्ति । औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः । ङेप्रभृतिषु ङकारः 'घेर्ङिति (७.३.१११) इति विशेषणार्थः । ङसेरिकारः 'युष्मदस्मद्भ्यां ङसोऽश्' (७.१.२७) इत्यत्र ग्रहणं मा भूदित्येवमर्थः । पकारः प्रत्याहारग्रहणार्थः' इति । 'उकारादयोऽनुबन्धा यथायोगमुच्चारणविशेषणार्थाः' इत्यनेनागतार्थत्वादिदमुक्तम् । एवं च--औटष्टकारः सुडिति प्रत्याहारार्थः' इत्यग्रिमग्रन्थेन भवितव्यम् ।

क्व पुनरिमेऽर्थे स्वादयो भवन्तीत्याह-'संख्याकर्मादयश्च' इति । 'शास्त्रान्तरेण' इति । 'बहुषु बहुवचनम्' (१.४.२१), 'कर्मणि द्वितीया' (२.३.२) इत्यादिना । 'तेन सहास्यैकवाक्यता' इति । पूर्वं त्ववान्तरवाक्यभेदापेक्षया शास्त्रान्तरेणेत्युक्तम् । आकांक्षायोग्यतावशेन भिन्नप्रकरणपठितानामप्येकवाक्यता भवत्येव । प्रकरणभेदेन तु पाठस्तिङादिविधिनाप्येकवाक्यत्वं यथा स्यादिति । 'बहुषु बहुवचनम्' (१ ४ २१) इत्यत्र तु भिन्नवाक्यत्वमाश्रित्योक्तम्--ङ्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वं संख्यावच्यत्वेन विधीयते इति । अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति च । एकवाक्यतायां तु विशिष्टे एवार्थे कर्मादिसम्बन्धिन्येकत्वादौ स्वादीनां विधानात् सामान्यविहितत्वं नोपपद्यते । तस्मात् 'अव्ययादाप्सुपः' (२.४.८२) इत्यव्ययादुत्पन्नस्य सुपो लुग्विधानाल्लिङ्गादव्ययेभ्योऽस्मिन् पक्षे स्वाद्युत्पत्तिः । उदाहरणानि यथायोगं स्वे स्वे वाक्ये प्रकटीकरिष्यन्ते ॥

## ३. स्त्रियाम् ।

'ङ्यापोरनेनैव विधानात्' इति । प्रातिपदिकमात्रमत्र प्रकरणेऽभिसम्बध्यत इत्यत्रायं हेतुः । प्रकरणापेक्षया चैतदुच्यते, सूत्रान्तरव्यापारसमये तु सूत्रान्तरविहितप्रत्ययान्ता प्रकृतिः सम्भवत्येव । ननु चात्र प्रकरणे सर्वत्र सति सम्भवे 'अतः' इति सम्बध्यते, न च ङ्याबन्तमदन्तम् । उक्तार्थत्वाच्च ङ्याबन्तात् ङ्यापोरप्रसङ्गः ? सत्यम्; न्यायस्तु निरूप्यते ।

चोदयते--'स्त्रियामित्युच्यते' इति । सप्तमीनिर्देशेन कार्यान्तरविधानार्थमनूद्यत इत्यर्थः । ततः किमित्याह--'केयं स्त्री नाम' इति । इह शास्त्रे स्त्रिया अपरिभाषितत्वाल्लौकिकस्त्रीग्रहणे च खट्वादावव्याप्तिप्रसङ्गात् प्रसिद्धवदनुवादोऽनुपपन्न इत्यर्थः । स्वरूपस्य च जिज्ञासितत्वात् प्रथमान्तेन प्रश्नः, कस्यां स्त्रियामिति पृच्छ्यमाने विशेषविषयः प्रश्नः स्यात् । स्त्रीग्रहणं च प्रसङ्गेन पुंनपुंसकयोरपि प्रदर्शनार्थम् । अत एवोत्तरे सामान्यविशेषाः स्त्रीत्वादय इति त्रयाणां स्वरूपं दर्शितम् । एवं च प्रथमोपनिपातिनि 'ह्रस्वो नपुंसके' (१.२.४७) इत्यत्र लिङ्गस्वरूपनिरूपणमुचितम्, तथा तु न कृतमित्येव । तत्र लौकिकानां लक्षणम्--

> स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
> उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥ इति ।

भूमादौ मतुप्, तथैव लोमश इति शः। स्तनकेशवत्त्वं च प्रसिद्धत्वादन्यस्यापि कुमार्यादिगतस्य स्त्रीप्रतिपत्तिहेतोरुपलक्षणम्। लोमशत्वं च पुंविज्ञानहेतोः कुमारादिगतस्य। उभयोरपि स्त्रीपुंसयोर्यदन्तरं सदृशं स्तनलोमाद्युभयव्यञ्जनं तन्नपुंसकमित्यर्थः। तेनाव्ययाख्यातार्थस्य स्त्रीपुंसत्वाभावेऽपि नपुंसकत्वं न भवति, अन्यथा 'तदभावे' इत्येतावत्युच्यते स्यात् प्रसङ्गः, तदभाव इत्यनेन कुक्कुटमयूर्यादेः स्त्रीपुंससमुदायरूपस्य द्वन्द्वार्थस्य नपुंसकत्वं न भवति। भवति हि समुदायः समुदायिनः सदृश इति स्यात् प्रसङ्गः। नायं प्रसङ्गः, 'परवल्लिङ्गम्' (२.४.२६) इत्यनेन समुदायस्य परवल्लिङ्गातिदेशात् ? सत्यम्; इदं तु वस्तुस्वरूपनिरूपणपरं द्रष्टव्यम्। तदनेन स्तनकेशादिसम्बन्धः, स्तनादय एव वा विशिष्टसंस्थानाः, तदुपव्यञ्जना वा जातयः स्त्रीत्वादय इत्युक्तं भवति।

अत्र पक्षे भ्रकुंसे टाप् प्रसज्येत, भ्रकुंसः = स्त्रीवेषधारी नटः, तस्य स्तनकेशसम्बन्ध उपलभ्यते, खरकुट्यादीनां च लोमशत्वात् पुंस्त्वे सति खरकुटीः पश्येत्यत्र नत्वं प्राप्नोति। खरकुटी = नापितगृहमुच्यते। ननु च स्वाभाविकपरिणामशालिभिः स्तनादिभिरत्र सम्बन्धो विवक्षितः, न यथाकथंचित्; स्तनादि च प्रसिद्धत्वादन्यस्याप्युपलक्षणमुक्तं तत्कुतोऽयं प्रसङ्गः ? एवं हि खट्वावृक्षौ न सिध्यतः, खट्वावृक्षादीनां स्तनलोमाद्यभावात्। स्यादेतत्—यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते, तद्वत्खट्वावृक्षयोः सदेव लिङ्गं नोपलभ्यत इति ? तन्न; वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाये उपलभ्यन्ते खट्वावृक्षयोस्तिलशस्तत्क्षणेऽपि लिङ्गं नोपलभ्यते। यथा तर्ह्यादित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या त्वनुमीयते, तथा खट्वावृक्षयोरपि सदेव लिङ्गं सूक्ष्मत्वान्नोपलभ्यते।

सतामपि हि भावानां षड्भिः प्रकारैरनुपलब्धिर्भवति—अतिसन्निकर्षात्; यथा—स्वचक्षुर्गतस्याञ्जनादेः। अतिविप्रकर्षात्, यथा उड्डीनस्य शकुनेः। मूर्त्यन्तर्धानात्, यथा—कुड्यादिव्यवहितस्य सुवर्णादेः। अन्धकारावृतत्वात्, यथा—अन्धकाराक्रान्तस्य घटादेः। इन्द्रियदौर्बल्यात्—तिमिराद्युपघाते चक्षुरादेः। अतिप्रमादात्—'प्रमादोऽनवधानता' (अमर. १ ६.३०), विषयान्तरव्यासक्तचित्तो हि सन्निकृष्टमप्यर्थं नोपलभते। सौक्ष्म्यं तु इन्द्रियदौर्बल्य एवान्तर्भूतम्, दिव्यचक्षुःश्रोत्रो हि सूक्ष्ममप्यर्थमुपलभते। एवं समानाभिहारोऽपि तत्रैवान्तर्भूतः, तद्यथा माषराशौ माषः प्रक्षिप्तः पृथङ्नोपलभ्यते। एवमभिभवोऽपि, तद्यथा—सौरीभिः प्रभाभिरभिभूतानि नक्षत्राणि दिवा नोपलभ्यन्ते। केन पुनरेतदवसीयते खट्वावृक्षयोः सदेव लिङ्गं नोपलभ्यत इति ? टबादेस्तत्कृतस्यानन्यकार्यस्य दर्शनात्, यद्येवम्, इतरेतराश्रयं प्राप्नोति—लिङ्गावगमाट्टाबादिशब्दप्रयोगः, तद्योगाल्लिङ्गावगतिरिति ? इन्द्रियदौर्बल्यं कदाचिदुपलब्धस्य कदाचिदनुपलम्भे कारणं शक्यमभिधातुम्, खट्वादिषु च लिङ्गस्य कदाचिदप्यनुपलम्भाल्लिङ्गविरहं खट्वादिवस्तुग्राहिणा प्रत्यक्षेण लिङ्गाभावनिश्चयात् तद्विरुद्धमनुमानं नोदेतुमर्हति। न हि शक्यते वक्तुम्—भिक्षुगृहं गजवद्देशत्वाद्गजशालावत्, प्रत्यक्षेणेन्द्रियदौर्बल्यात्तु गजो नोपलभ्यत इति, तस्मादसदेव लिङ्गं शब्दप्रयोगमहिम्ना खट्वादिषु प्रतीयते। भवत्वेवं श्रोतुः प्रतीतिः यस्त्वसौ प्रयोक्ता स केन लिङ्गमवगम्य तदनुरूपं शब्दं प्रयुङ्क्ते। किञ्च—कुमार्यर्थः, कुमारी वस्त्विति कुमार्यादिषु वस्तुशब्दयोः पुंनपुंसकयोरनुपपत्तिः। भाष्ये तु—

> आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।
> धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः॥

आविर्भावः = उपचयः, पुंस्त्वम्; तिरोभावः = अपचयः, स्त्रीत्वम्; अन्तरालावस्था स्थितिर्नपुंसकत्वमित्यर्थः। कस्य पुनराविर्भावादिकं लिङ्गम् ? सत्त्वरजस्तमसां गुणानां तत्परिणामरूपाणां च तदात्मकानां

शब्दस्पर्शरूपरसगन्धानाम् । शब्दादिसंघातरूपाश्च सर्वा मूर्त्तयः प्रतिक्षणपरिणामस्वभावाश्च सत्त्वादयो गुणा न स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठन्ते । एवं शब्दादय आकाशादयो घटादयश्च ।

उक्तञ्च—

सर्वमूर्त्यात्मभूतानां शब्दादीनां गणे गणे ।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥ (वा.प. ३.१३.१४) इति ।

क्वथितोदकवच्चैषामनवस्थितवृत्तिता ।
अजस्रं सर्वभावानां भाष्य एवोपवर्णिता ॥ (वा.प. ३.१३.१६) इति च ।

तथा—

रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
क्वचित्प्रलीयते काचित् कथंचिदभिवर्धते ॥ (वा.प. ३.१३.१५) इति ।

प्रवृत्तिमन्तः सर्वे हि तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥ (वा.प. ३.१४.३२४) इति च ॥

टाबाद्यन्तः शब्द एवैता अवस्था गोचरयतीत्यर्थः । पुरुषो यद्यप्यपरिणामी, तथापि—

अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् ॥ (वा.प. ३.१४.३२७)

ततश्च—

यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते ।
अन्वयातीव सोऽन्येषां प्रवृत्तिविषयाश्रया ॥ (वा.प. ३.१४.३२५)

सामान्यमपि गोत्वादि व्यक्तेरव्यतिरेकतः ।
प्रवृत्तिधर्मं तद्द्वारा शशशृङ्गादिवाक्षु तु ॥

तस्मादुक्तपदार्थस्य सम्भवाल्लिङ्गयोगिता ।
प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः ॥

पुन्नपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता ।

तदेवं सर्वपदार्थव्यापित्वादुपचयान्तरालावस्थास्त्रीणि लिङ्गानि । एवं च नक्षत्रे तारका तिष्यः, कुमार्यर्थो वस्तु इति एकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते; आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदा सम्भवात् । न चैवं तद्वृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गताप्रसङ्गः, न ह्यस्ति नियमः—यः शब्दो यत्रार्थे पर्यवस्यति तत्र विद्यमानः सर्व एवाकारस्तेन शब्देनाभिधातव्य इति, किन्तु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतावत् ।

तद्यथा—तक्षा, यथा, कृष्णः, कामुक इति तक्षादिशब्दानामेकार्थपर्यवसितानामपि व्यवस्थित एवाकारो वाच्यः। तथा लिङ्गेष्वपि द्रष्टव्यम्। उक्तं च—

सन्निधाने पदार्थानां किञ्चिदेव प्रवर्तकम्।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ (वा.प. ३.१३.२०) इति।

उपचीयते कुमारीत्यत्रापि कुमारीशब्दः स्वमहिम्ना कस्यचिद्धर्मस्यापचयमेवाह। शब्दान्तरप्रयोगात्तु धर्मान्तरस्योपचयः प्रतीयते। एवं क्षीयते वृक्ष इत्यत्रापचयः, तदेवं सर्वमनाकुलमिदं दर्शनम्।

वृत्तिकारस्तु लौकिकानामेवं प्रतिपत्तेरभावात्तत्प्रतिपत्त्यनुगुणं पक्षं दर्शयति—'सामान्यविशेषाः' इति। कानिचित्सामान्यानीत्यर्थः।

यद्वा—सत्ताव्यतिरिक्तेषु सामान्येषु सामान्यविशेषशब्दो रूढः। तिस्रोऽवान्तरजातय इत्यर्थः। उक्तं च—

तिस्रो जातय एवैताः केषांचित्समवस्थिताः।
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥
हस्तिन्यां वडवायां च स्त्रीत्वबुद्धेः समन्वयः।
अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥ (वा.प. ३.१३.४,५) इति।

ननु चैषां त्रयाणामपि सामान्यविशेषाणां सर्वार्थेषु सद्भावोऽभ्युपगन्तव्यः, न गोत्वादिवत् कतिपयेष्वेवार्थेषु, कथमन्यथार्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामेकस्मिन्नर्थे प्रयोगः स्यात्! ततश्च सर्वत्र त्रिलिङ्गप्रतिभासप्रसङ्ग इत्यत आह—'बहुप्रकारा व्यक्तयः' इति। व्यज्यन्ते सामान्यविशेषा आभिरिति व्यक्तयः= आश्रयाः। एतदुक्तं भवति—विचित्रत्वादाश्रयाणां व्यञ्जकानां कश्चिदाश्रयः कस्यचित्सामान्यविशेषस्य व्यञ्जकः, न सर्वः सर्वस्येति। तत्र चेतनेषु स्तनादिमती व्यक्तिः स्त्रीत्वस्य व्यञ्जिका, लोमशत्वादिमती पुंस्त्वस्य, उभयव्यञ्जना नपुंसकत्वस्य; अचेतनेषु कथम्, न हि तत्र किञ्चिदपि लिङ्गं व्यज्यते? तथा चेतनेऽप्यर्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामप्यनुपपत्तिः, दारशब्दस्य च पुंलिङ्गस्य भार्यायामनुपपत्तिः? अत आह—'क्वचिदाश्रयविशेषाभावात्' इति। तदभिव्यञ्जनसमर्थं आश्रयविशेषः। तत्राचेतनेषु सर्वत्रोपदेशादेवाभिव्यक्तिः। उपदेशः पुनर्लिङ्गानुशासनादिषु। अत्रैव दृष्टान्तमाह—'यथा ब्राह्मणत्वादयः' इति। ब्राह्मणक्षत्रियादिव्यक्तीनामत्यन्तसादृश्यादुपदेशादेव ब्राह्मणत्वादीनभिव्यक्तिर्भवति; नो खलु ब्राह्मणक्षत्रिययोः पुरोऽवस्थितयोरयं ब्राह्मणः, अयं क्षत्रिय इति प्रागेवोपदेशात् प्रत्यय उदेति। यथा गवाश्वव्यक्त्योरभावे शशविषाणादावप्युत्तरपदार्थद्वारकः सामान्ययोगः, सामान्यं जातिः, स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेत्यादौ सामान्येऽपि सामान्यान्तरस्य सद्भावः, यथा—गोत्वादौ सत्तासामान्यस्य। न ह्यस्माकं वैशेषिकाणामिव निःसामान्यानि सामान्यानि।

स्त्रीशब्दोऽयं शुक्लादिशब्दवद्गुणमात्रे गुणिनि च वर्तते, तत्र यदा गुणमात्रे स्त्रीशब्दो वर्तते तदा द्रव्यवाचिनः प्रातिपदिकात् स्त्रीत्वेऽभिधेये टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थं इति पक्षो भवति। यदा तु

स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदा परं पक्षद्वयं सम्भवति--स्त्रीत्वमुपलक्षणम्, विशेषणं वेति। तत्राद्य स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादय इति, अयं स्त्रीसमानाधिकरणादिति पक्षो भवति। द्वितीये तु स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात् प्रातिपदिकादिति प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षो भवति। तत्र स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः--भूतमियं ब्राह्मणी, प्रधानमियं ब्राह्मणी, आवपनमियमुष्ट्रिकेति। उभयोस्तु पक्षयोर्नैष दोषः, कथम् ? भूतादयः चैतन्यप्राधान्यसम्भवनवद्वृत्तयः, न तु स्त्रीत्वाङ्गीकारेण वर्तन्ते। तदेवमत्र पक्षे दोषदर्शनादितरयोरन्यतरदाश्रयणीयमित्याह--'स्त्रीत्व च' इति। 'उभयथापि युज्यते' इति। ननु प्रत्ययार्थपक्षे द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः, कथम् ? एकोऽयमर्थः स्त्रीत्वं नाम, तदेव च प्रकृत्यर्थोपसर्जनं प्रत्ययेनाभिधीयते, तस्यैकत्वादेकवचनमेव प्राप्नोति ? अनेकश्च प्रत्ययो नोपपद्यते--गार्ग्यायणी, कारीषगन्ध्या, कालितरेति कथम् ? एकोऽयमर्थः स्त्रीत्वं नाम तस्यैकेनोक्तत्वाद्द्वितीयः प्रत्ययो न प्राप्नोति--उक्तार्थानामप्रयोग इति ? स्त्रीशब्दे चेकारो न प्राप्नोति, संस्त्याने 'स्त्यायतेर्ड्रट्' (द.उ. ८.८८.?) इति ड्रट्प्रत्ययान्तेन स्त्रीशब्देनोक्तत्वात् संस्त्यानं स्त्रीत्वम् ? सामानाधिकरण्यं च न स्यात्--कुमारी देवदत्तेति, स्वस्वप्रकृत्यर्थावच्छिन्नयोः स्त्रीत्वयोः प्राधान्येनाभिधानात्, तत्र व्यतिरेकनिबन्धा षष्ठी प्राप्नोति, कुतः ? न तावदन्योऽन्यतः परस्परं गुणगुणिभावाभावात्, नापि स्त्रीप्रत्ययप्रकृतेः, टाबादिभिर्बाधितत्वात् ? यत्र तर्हि प्रतियोगिनि स्त्रीप्रत्ययः प्रतिषिध्यते तत्र षष्ठी प्राप्नोति--पञ्च ब्राह्मण्यः, स्वसाभिरूपेति ? पक्षान्तरे तु द्वयोरपि द्रव्यनिष्ठत्वाद्व्यतिरेकाभावः सामानाधिकरण्यं च भवति, द्रव्यस्य चानेकत्वाद्द्विवचन-बहुवचने अपि युक्ते। यथैव च प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे टाबादयो भवन्ति, तथानेकोऽपि प्रत्ययो नानुपपन्नः, तद्द्योतको हि तथा नानाप्रत्ययः, प्रदीपादेश्चानेकस्यापि द्योतकत्वं दृष्टम्। प्रत्ययार्थपक्षेऽपि न दोषः। यद्यपि स्त्रीत्वमात्रे वाच्ये प्रत्ययः क्रियते, तथापि स्त्रीत्वतदाश्रययोरभेदविवक्षया स्वाभाविकत्वाद्वा गुणप्रधानभावस्य द्वयोरपि दृष्टत्वेन सामानाधिकरण्यं वचनभेदश्च भविष्यति। गार्ग्यायणीत्यादौ च द्वाभ्यामेव स्त्रीत्वमभिधातुं शक्यते, नैकेन; स्वभावात्। यद्वा--ष्फस्य षित्करणसामर्थ्यान्ङीष् सिद्धः, ष्यङि 'यङश्चाप्' (४.१.७४) इति वचन-सामर्थ्याच्चाब् भविष्यति। तथा हि--अत्र यङ्ष्यङोः सामान्यग्रहणाय तदविघाताय च ष्यङोनुबन्धद्वयं कृतम्, कालितरेत्यत्रान्यः प्रकर्षयुक्तोऽन्यश्चाप्रकर्षयुक्तः; तत्रावस्थाभेदादेक एवार्थो भिद्यत इति प्रकर्षयुक्तस्यानभिहितं स्त्रीत्वमिति तदभिधानाय टाबपि भविष्यति। स्त्रीशब्देऽपि 'स्त्रियाम्' (४.१.३) इत्यस्मादेव निपातनादीकारः सिद्ध इति सुष्ठूक्तम्--उभयथापि युज्यत इति॥

## ४. अजाद्यतष्टाप्।

'अदन्ताच्च' इति। अकारान्तादित्यर्थः। स्वरूपग्रहणं तु न भवति; अच्छब्दान्तात् नीतत् परीतत् कलिङ्गादित्यादेः स्त्रीलिङ्गादिति, 'तदाद्याचिख्यासायाम्' (२.४.२१) इत्यादेर्निर्देशात्। 'पकारः सामान्यग्रह-णार्थः' इति। 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यादौ। पकारानुरोधस्तु टाब्डापोः स्वरार्थः। 'टकारः सामान्यग्रहणाविघातार्थः' इति। अन्यथैकानुबन्धकत्वादस्यैव ग्रहणं स्यात्, न तु डाप्चापोः। 'खट्वा' इति। कथं पुनरत्राकारान्ता प्रकृतिरवधार्यते, यावता नित्यमेवापमावन्तः स्त्रियां वर्तते ? शास्त्रात् प्रयोगाच्च। शाकटायनदर्शने हि सर्वेषामेव व्युत्पत्तिः। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ स्त्रीप्रत्यये लुप्ते प्रयोग एवाकारान्तत्वं दृश्यते। 'शुभंयाः, कीलालपाः' इति। 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति विच्। कः पुनरत्र टापि सति दोष इत्याह--'हल्ङ्याब्भ्य इति सुलोपः स्यात्' इति।

'क्वचिज्जातिलक्षणे' इति । गणपाठावसरे विभागं दर्शयिष्यति ।

'हलन्तानां तु' इत्यादि । 'अजादिग्रहणम्' इति । प्रकृतस्य प्रथमान्तस्यान्वयासम्भवात् तदर्थमजादिग्रहणमिति शेषः ।

'अमहत्पूर्वा' इति । महच्छब्दस्यानुकरणत्वाल्लौकिकार्थाभिधायित्वाभावात् 'आन्महतः' (६.३.४६) इत्यात्वं न भवति । 'पुंयोगे तु ङीषेव' इति । जातिग्रहणस्य प्रयोजनमाह । ननु पुंयोगे सोऽयमित्यभिसम्बन्धात् परशब्दः परत्र वर्तत इति गौणत्वादेव न भविष्यति ? तस्मात् सुखप्रतिपत्त्यर्थं जातिग्रहणम् । अमहत्पूर्वेत्यस्यार्थमाह—'महत्पूर्वस्य' इति । अत्रापि जातिरिति सम्बध्यते, इह प्रतिषेधो मा भूत्—महती शूद्रा महाशूद्रेति, न ह्यत्र महत्पूर्वः समुदायो जातिवचनः । क्व तर्हि प्रतिषेधः ? यत्र समुदायो जातौ वर्तते । तदिदं दर्शितम्—'महाशूद्रशब्दो ह्याभीरजातिवचनः' इति । यद्येवम्, समुदाये जातिवचने गौरखरादिवदवयवार्थाभावाद्व्युत्पत्तिमात्रं क्रियते, तत्रावयवार्थस्य स्त्रीत्वस्याविवक्षितत्वात् पुंसि समासे कृते टापः प्रसङ्ग इति ? तत्रामहत्पूर्वेति प्रतिषेधः सार्थकः । ततः किम् ? अमहत्पूर्वेत्यत्र जातिरिति न सम्बन्धनीयम् । कथं महती शूद्रा महाशूद्रेत्यत्रान्तरङ्गत्वाट्टापि कृते पश्चात्सुप्, सुबन्तस्य समासः, ततश्चाभिनिर्वृत्तत्वाट्टापः प्रतिषेधस्याप्रसङ्गः ? सत्यम्; विस्पष्टार्थमेवात्रापि जातिरिति सम्बध्यते । ननु च शूद्रशब्दः पठ्यते, कः प्रसङ्गो यन्महाशूद्रशब्दात् स्यात् ? अत आह—'तदन्तविधिर्न' इति । अतिधीवरी प्रतिपीवरी' इति । दधातेः पिबतेश्च 'आतो मनिन्क्वनिब्वनिपश्च' (३.२.७४) इति क्वनिपि कृते घुमास्थादि (६.४.६६) सूत्रेणेत्वम्, धीवानमतिक्रान्ता पीवानमतिक्रान्तेति प्रादिसमासः, अत्र 'वनो र च' (४.१.७) इति ङीब्रौ भवतः । असति तु ज्ञापने वन इति प्रत्ययग्रहणम् । अथापि कृद्ग्रहणम् ? सर्वथातिक्रान्तप्रधाने समासे न स्यात् । 'अतिभवती, अतिमहती' इति । 'उगितश्च' (४.१.६) इत्यत्रोगिदित्युगित्प्रातिपदिकस्यैव ग्रहणमित्यङ्गीकृत्येदं प्रयोजनं दर्शितम् । तत्र तु वक्ष्यति—'उगिदिति प्रातिपदिकप्रातिपदिकग्रहणम्, तेन ग्रहणवता, प्रातिपदिकेनेति निषेधाभावात्तदन्तविधिः' इति । यदाह—'उगिद्यस्य सम्भवति यथाकथञ्चिदिति तदन्तात् प्रातिपदिकात्' इति च ।

अतिमहतीत्यत्र शतृवद्भावादौणादिकादुगिल्लक्षणो ङीप् । केचिद्गौरादिपाठान्ङीषं वर्णयन्ति, तदयुक्तम्; अनुपसर्जनाधिकारात् । किञ्च, गौरादिपाठस्य प्रयोजनमपि न पश्यामः । ननु च महतीशब्दोऽन्तोदात्त इष्यते, सत्यम् 'शतुरनुमः' (६.१.१७३) इत्यत्र नद्यजाद्युदात्तत्वे 'बृहन्महतोरुपसंख्यानम्' (वा. ६९९) इत्यनेनैव सिद्धम्; विभक्त्युदात्तार्थं तदिति चेत् ? तदेव ङीबुदात्तार्थमपि भविष्यति । अतिमहतीत्यादौ च ङीबभावस्योक्तत्वान्ङीबुदात्तार्थमप्युपसंख्यानमेष्टव्यम्, यदि तदन्तविधिर्ज्ञाप्यते, पञ्चानामजानां समाहारः पञ्चाजी—द्विगोरपि टाप् प्राप्नोति ? अत्राहुः—'अजाद्यतः' (४.१.४) इति षष्ठी अजादीनामजन्तानां च या स्त्री तद्वाच्येऽर्थे यत् स्त्रीत्वं समवेतं तत्र टाबिति, प्रत्यासत्त्या च स्त्रीत्वविशेषोपलक्षणानामेव प्रकृतित्वं विज्ञायते इति मत्वा वृत्तिकारेणोक्तम्—'अजादिभ्यः प्रातिपदिकेभ्योऽदन्ताच्च' इति । न च पञ्चाजीत्यत्राजार्थे समवेतं स्त्रीत्वम्, किं तर्हि ? समाहारे ।

एवं चामहत्पूर्वेति प्रतिषेधः शक्योऽकर्तुम्, न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वम् । तदन्तविधिस्तु 'अनुपसर्जनात्' (४.१.१४) इत्यत्र ज्ञापयिष्यते । 'सत्प्राक्काण्ड' इति । पाककर्णेत्यत्र वार्तिकम्—'सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः' (ग.सू. ५३) इति; तत्रैव भाष्यम्—प्राक्पुष्पा च प्रत्यक्पुष्पा च' इति । तस्मादत्रापि प्राक्शब्दो न पठनीयः, सदक्काण्डेत्येव पठनीयम् ॥

## ५. ऋन्नेभ्यो ङीप् ।

'ङकारः सामान्यग्रहणार्थः' इति । 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यादौ ।

'पकारः सामान्यग्रहणाविघातार्थः' इति तु पूर्वानुसारेण गम्यमानत्वान्नोक्तम्, अत्रापि पकारानुरोधोऽनुदात्तार्थः ॥

## ६. उगितश्च ।

'यथाकथञ्चित्' इति । यदि वर्ण उगित् सम्भवति, यदि वा प्रत्ययः, अथापि प्रातिपदिकम्––सर्वथा यत्रैषामन्यतमः प्रकारः सम्भवतीत्येष यथाकथञ्चिदित्यस्यार्थः । एतदेव स्पष्टयति––'तदुगिच्छब्दरूपम्' इति । प्रत्ययाप्रत्यययोः प्रातिपदिकाप्रातिपदिकयोः शब्दरूपमन्यपदार्थः, न प्रातिपदिकमेव, नापि प्रत्यय एवेत्यर्थः । तत्रोगिता प्रातिपदिकस्य विशेषणात्तदन्तविधिर्भवतीत्याह––'तदन्तात्' इति । 'पचन्ती' इति । अत्र शतृप्रत्यय उगित् तदन्तं प्रातिपदिकम्––अतिभवती अतिमहतीत्यत्रापि भवति । 'ग्रहणवता प्रातिपदिकेन' (व्या.प. ८९) इत्ययं तु प्रतिषेधो यत्र सूत्रोपात्तं प्रातिपदिकस्यासाधारणं रूपं तत्रैव भवतीत्यत्रापि व्यपदेशिवद्भावेन भवति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शा.प. ६५) इत्ययं तु निषेधः प्रातिपदिकस्यैवासाधारणरूपग्रहणे अतिगोमतीत्यत्रापि भवति । प्रत्ययग्रहणपरिभाषा (भो.प. ७) तु प्रत्ययस्यैवासाधारणरूपग्रहणे भवति ।

'धातोस्तूगितः प्रतिषेधः' इति । वक्तव्य इति शेषः । स तर्हि वक्तव्यः ? न वक्तव्यः, 'उगिदचाम्' (७.१.७०) इत्यत्रोगित्त्वादेव सिद्धेऽञ्चतिग्रहणं नियमार्थम्––इह शास्त्रे उगितो यत्कार्यं विधीयते तद्धातोर्यदि भवति अञ्चतेरेवेति कार्यमात्रं नियम्यते, न नुमागम एव । अधातुग्रहणं चाधातुपूर्वस्यापि नुमर्थमिति तत्रैव वक्ष्यते ।

अपर आह––'उगितश्च' (४.१.६) इति योऽयं चशब्दः सोऽञ्चतेर्लुप्तनकारस्याकरणम्, विभक्तेश्च 'सुपां सुलुक्' (७.१.३९) इति लुक् भाविनं चाकारलोपमाश्रित्य चेति निर्देशः कृतः, ततश्चाञ्चतिग्रहणं नियमार्थम्––"अकारनकारलोपयोश्चातन्त्रत्वात् 'नाञ्चेः पूजायाम्' (६.४ ३०) इति लोपनिषेधविषयेऽपि ङीब्भवति, प्राञ्ची, प्रत्यञ्ची ब्राह्मणी" इति । 'उखास्रत्, पूर्णध्वत्' इति । 'क्विप् च' (३.२.७६), इत्यत्रानयोर्व्युत्पत्तिः कृता ॥

## ७. वनो र च ।

'वनः' इति क्वनिब्वनिब्ङ्वनिपां प्रत्ययानां सामान्येन ग्रहणम्, न 'वन षण सम्भक्तौ' (धा.पा.-४६३, ४६४), 'वनु याचने' (धा.पा. १४७०) इति धात्वोर्विजन्तयोः, कुतः ? 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' (हे.ग.प. ५९) इति । अत एव शुनो निष्क्रान्ता युवानमतिक्रान्ता निःशुनी अतियूनीत्यत्रापि न भवति, अनर्थकत्वाद्वा । 'शर्वरी' इति । 'शॄ हिंसायाम्' (धा.प. १४८८) 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५) इति वनिप् । 'परलोकदृश्वरी' इति । 'दृशेः क्वनिप्' (३.२.९४) ।

'वनो न हशः' इति। विहितविशेषणं हश्ग्रहणम्, हशन्ताद्धातोर्यो वन्विहितस्तदन्तात् प्रातिपदिकान्ङीब्रौ न भवत इत्यर्थः, तेन शर्वरीत्यत्र प्रतिषेधाभावः। तथा 'ओणृ अपनयने' (धा.प. ४५४) वनिपि 'विड्वनोरनुनासिकस्यात्' इत्यात्त्वे अवादेशे अवावन्नित्यत्र सम्प्रति हशः परत्वाभावेऽपि हशन्ताद्विहितत्वात् प्रतिषेधो भवत्येव—अवावा ब्राह्मणीति। एष एव स्थितः सिद्धान्तः।

बहुलं छन्दसि ङीब्रौ वक्तव्यौ–पञ्चरीरिषः। प्रईरिशवोस्तुट् च प्रेर्त्वरी ॥

## ८. पादोऽन्यतरस्याम्।

'पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यते' इति। उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवात्, तेन पादयते क्विबन्तस्य ग्रहणं न भवति। 'द्विपदी' इति। द्वौ पादावस्य इति बहुव्रीहौ 'संख्यासुपूर्वस्य' (५.४.१४०) इत्यकारलोपे 'पादः पत्' (६.४.१३०) इति पद्भावः ॥

## ९. टाबृचि।

'ऋचीत्यभिधेयनिर्देशः' इति। व्याप्तेः। विषयनिर्देशे हि ऋग्वेदविषय एव प्रयोगे स्यात्, नान्यत्र ॥

## १०. न षट्स्वस्रादिभ्यः।

'टाबृचि' (४.१.९) इति पादन्ताद्विहितस्य टापोऽत्राप्रसङ्गात् तदनन्तरस्य ङीपोऽयं प्रतिषेध इत्याशङ्कामपनयति—'यो यतः' इति। तत्र सर्वेभ्य एव ङीप्राप्नोति, टाप्तु नलोपे सत्यकारान्ततायामुपजातायां षड्भ्य एव। 'यो यः प्राप्तः' इति तु युक्तः पाठः, अन्यथा स ततो न भवतीति वाच्यं स्यात्, व्याप्तिश्च न गम्येत। 'पञ्च ब्राह्मण्य' इति। ननु चात्र ब्राह्मणीशब्दसामानाधिकरण्यात् स्त्रीत्वावगतिः, संख्याशब्दस्तु स्वमहिम्ना भेदगणनमाह। तथा हि—पञ्चेत्युक्ते नानात्वमात्रं द्रव्यस्य गम्यते, न लिङ्गविशेष; तथा च लिङ्गानुशासनेषु 'ष्णान्ता संख्या' (लि १८४) इत्यलिङ्गत्वमुक्तम्। यद्येवम्, एका, द्वे, बह्व्य इत्यत्रापि प्रत्ययो न स्यात्? संख्याशब्दत्वेन भेदगणनामात्रस्य शब्दार्थत्वात्। अथ तत्र स्त्रीत्वमपि शब्दार्थः? पञ्चादिष्वपि स्यात्। वक्तव्यो वा विशेषः—सति तस्मिन् प्रतिषेधे नान्तरेणानुप्रयोगं पञ्चेत्यादौ स्त्रीत्वाद्यभिव्यक्तिरिति लिङ्गानुशासनेऽवालिङ्गत्वमुक्तम्; असति तु प्रतिषेधे पञ्चादिभ्यः स्त्रीप्रत्ययो न भवति, एकादिभ्यस्तु भवतीति न शास्त्रैकशरणः प्रतिपत्तुमर्हति। ननु विभक्तौ परतः 'त्रिचतुरोः स्त्रियाम्' (७.२.९९) तिसृचतसृभावः, तत्र सन्निपातपरिभाषयैव (व्या.प. १२) ङीब्भावः सिद्धः, तत्किं तिसृचतसृशब्दयोः स्वस्रादिपाठेन? ज्ञापनार्थं तु। एतज्ज्ञापयति—अनित्या सन्निपातपरिभाषेति, तेन त्यदाद्यत्वे कृते टाब् भवति या, सा, इमे, द्वे इति।

ङीपोऽनन्तरस्यायं प्रतिषेधो युक्त इत्याश्रित्य चोदयति—'पटसंज्ञानाम्' इति। 'कस्मिन्न स्यात्' इति। अत इति हि प्राप्नोति, असिद्धो नलोपः, तस्यासिद्धत्वान्नैतदन्तम्। परिगणितेषु कार्येषु नलोपोऽसिद्धो भवति,

'नलोपः सुप्स्वर' (८.२.२) इत्यस्य नियमार्थत्वात्। नेदं तत्र परिगण्यते? इदमपि तत्र परिगण्यते, कथम्? सुबिति न सप्तमीबहुवचनेन प्रत्याहारः, किं तर्हि? यञश्चाबिति चापः पकारेण, ततश्च टापोऽपि प्रत्याहारेऽन्तर्भावात् तद्विधिरपि सुब्विधिरेवेति; तदेतदाह--'प्रत्याहाराच्चापा' इति। न स्यादित्यनुषङ्गः, कस्मान्न स्यादिति प्रश्नः। चापा प्रत्याहारान्न स्यादिति परिहारः। इदं चाचार्यदेशीयस्य वचनम्।

आचार्यसिद्धान्तं दर्शयितुमेतद्दूषयति--'सिद्धं दोषस्त्वित्त्वे' इति। सत्यं सिद्धमिदं चापा प्रत्याहारे, इत्त्वे तु दोषो भवति—बहूनि चर्माण्यस्याः बहुचर्मिकेति, कथम्? तत्र सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः--सुपो विधिः, सुपि विधिरिति; ततश्च यथा राजभ्यामित्यत्र 'सुपि च' (७.३.१०२) इति दीर्घत्वं न भवति, तथा टापि सुपि विधीयमानमित्त्वमपि सुब्विधिरिति तत्र कर्त्तव्ये नलोपस्यासिद्धत्वात् कात् पूर्वोऽकारो न भवतीतीत्त्वं न स्यादित्यर्थः। सिद्धान्तमाह—'तस्मान्नोभौ' इति। 'स्त्रियाम्' इत्यर्थमात्रमपेक्ष्य तत्र यदुक्तं, तन्न भवति, इत्येवं ङीप्टापावुभावपि प्रतिषेध्यावित्यर्थः। ननु च सकृत्प्रतिषेधस्य प्रवृत्तिः, स च स्वप्रवृत्तिसमये यस्य प्रसङ्गस्तमेव प्रतिषेधति, ततश्च पूर्वं ङीपि प्रतिषिद्धे नलोपे च कृते पश्चात्प्राप्नुवतष्टापः कथं प्रतिषेधः? आत्माश्रयो हि स्यात् स्वप्रवृत्तिमपेक्ष्य स्वप्रवृत्तिरिति। तस्मात् तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन द्विरस्य प्रवृत्तिः, तत्र द्वितीयया प्रवृत्त्या टापः प्रतिषेधः॥

## ११. मनः।

'अनिनस्मन्ग्रहणानि' इति। अन्, इन्, अस्, मन्--इत्येतेषां ग्रहणे अर्थवत्परिभाषा न व्याप्रियते, तेनैषामनर्थकानामपि ग्रहणं भवति। एभिश्चार्थवद्भिरनर्थकैश्च तदन्तविधिर्भवतीत्यर्थः। सीमन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्। अतिक्रान्ता महिमानमतिमहिमा, अत्रापीमनिच एवार्थवत्त्वम्, न तु मनः॥

## १२. अनो बहुव्रीहेः।

'अनुपधालोपी बहुव्रीहिरिहोदाहरणम्' इति। कुत एतत्? इत्याह--'उपधालोपिनो हि' इत्यादि। 'विभाषां वक्ष्यति' इति। 'अन उपधालोपिनोऽन्यतरस्याम्' (४.१.२९) इत्यनेन। 'सुपर्वा' इत्यादि। शोभनं पर्वास्याः, शोभनं चर्मास्या इति बहुव्रीहिः। अयं च 'न संयोगाद्वमन्तात्' (६.४.१३७) इत्यल्लोपस्य प्रतिषेधादनुपधालोपी।

'बहुव्रीहेरिति किम्' इति। समासादन्यत्र वाक्यमिति भावः।

अतिराजी' इति। 'राजाहःसखिभ्यः' (५.४.९१) इति टज्न भवति; समासान्तविधेरनित्यत्वात्॥

## १३. डाबुभाभ्यामन्यतरस्याम्।

'अन्यतरस्यांग्रहणं किम' इति। डापा मुक्ते प्रतिषेधो यथा स्यादित्येवमर्थं तावदेतन्न कर्त्तव्यम्, कथम्? डाबप्युच्यते, प्रतिषेधोऽपि तावुभौ वचनाद्भविष्यतः। यदि हि नकारान्तस्य श्रवणं न स्यात्

तदा डाप्वापवादेन ङीपो बाधात् प्रतिषेधोऽनर्थकः स्यात्। अथ डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवम-र्थमन्यतरस्यांग्रहणम् ? तदपि न; बहुराज्ञीत्यादौ 'अन उपधालोपिनोऽन्यतरस्याम्' (४.१.२८) इत्यनेनैव ङीपः सिद्धत्वात्। यत्र तर्हि तेन न सिध्यति—अतिशर्मेत्यादौ, तदर्थमेतत् स्यात् ? यद्येवम्, अनेनैवोपधा-लोपिनोऽपि सिद्धत्वात् 'अन उपधालोपिनः' इत्येतदनर्थकं स्यात्। एवं तर्हि तदन्यतरस्यांग्रहणं न करिष्यामीती-दमन्यतरस्यांग्रहणं क्रियते, कथम् ? अनेनैवान्यतरस्यांग्रहणेनोपधालोपिनोऽनुपधालोपिनश्च ङीपि प्रापिते सति 'अन उपधालोपिनः' इत्येतावदपि क्रियमाणं नियमार्थं भविष्यति—अनो बहुव्रीहेर्यन्ङीब्विधानं तदुपधालोपिन एवेति, ततश्च तदन्यतरस्यांग्रहणं न कर्त्तव्यं भवति ? तदवश्यं कर्त्तव्यम्, असति हि तस्मिन्ननेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्रात् डाप्प्रतिषेधङीप्सु त्रिष्वपि प्राप्तेषूपधालोपिनो डाप्प्रतिषेधौ बाधित्वा नित्यं ङीबेव यथा स्यादित्ये-वमर्थं तत्स्यात्। अतस्तदवश्यं कर्त्तव्यम्, इदं तु न कर्त्तव्यमिति प्रश्नः।

परिहरति—'बहुव्रीहौ' इति। अयमभिप्रायः—डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमिदं तावदन्यतरस्यांग्रहणम्। न च 'अन उपधालोपिनः' इत्यस्य वैयर्थ्यम्; नियमार्थत्वात्—अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति। तेन सुपर्वा, सुशर्मेत्यादावनेनान्यतरस्यांग्रहणेन प्रापितो ङीन्न भवति; बहुराज्ञी-त्यादावेव तु भवति। नन्वेवमिदमन्यतरस्यांग्रहणं मा भूत्, 'अन उपधालोपिनः' इत्येतदेव विध्यर्थमस्तु, को वा विशेषः ? अनेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्रान्ङीपि प्रापिते तन्नियमार्थं स्यात्, असति वास्मिन् डाप्प्रतिषेध-योरेव प्राप्तयोरुपधालोपिनोऽप्राप्तो ङीप् पक्षे विधीयते इति ? अयमस्ति विशेषः—अस्मिन्नन्यतरस्यांग्रहणे सति डाप्प्रतिषेधाभ्यां मुक्ते स्वेन स्वेन शास्त्रेण ङीप् भवन् वन्नन्तेषु 'वनो र च' (४.१.७) इत्यनेनैव भवतीति बहुधीवरीत्यादौ रेफोऽपि भवति। एवमनेन वन्नन्तादुपधालोपिनोऽनुपधालोपिनश्च बहुव्रीहेर्बहुधीवन् सुपर्वन्नित्या देर्ङीब्रेफयोः प्रापितयोरन्यत्र बहुराजन् सुशर्मन्नित्यादौ केवले ङीपि प्रापिते सति 'अन उपधालोपिनोऽन्यतरस्याम्' इत्येतन्नियमार्थं भवति, तेन च नियमेन सुशर्मेत्यादौ ङीब् व्यावर्त्यते। सुपर्वेत्यादौ ङीपि व्यावर्त्तिते तत्सन्नियोग-शिष्टत्वाद्रेफोऽपि न भवति। बहुराज्ञीत्यादौ तु यथाप्राप्तो ङीबवस्थितः, बहुधीवरीत्यादौ च 'वनो र च' इत्यनेन प्राप्तौ ङीब्रेफाववस्थिताविति सर्वमिष्टं सिध्यति। असति त्वस्मिन्, तस्मिंश्च विध्यर्थेऽपूर्व एव ङीप् तेन विधीयत इति वन्नन्ते बहुव्रीहौ 'ऋन्नेभ्यो ङीप्' (४.१.५) इत्येतत्सन्नियुक्तं 'वनो र च' इत्येतन्न प्रवर्त्तेतेति केवले ङीपि सति बहुधीव्नीति स्यात्। अतः 'अन उपधालोपिनः' इत्येतन्नियमार्थं यथा स्यात् स्वतन्त्रो विधिर्मा भूदित्येवमर्थमिहान्यतरस्यांग्रहणं क्रियत इति। तदिदम् 'अन उपधालोपिनः' इत्यत्र वृत्तिकारः स्पष्टयिष्यति। यद्यनेनान्यतरस्यांग्रहणेन पक्षे ङीबपि प्राप्यते दामेन्यादौ मन्नन्तादपि प्राप्नोति ? नैष दोषः; योगविभागः क्रियते—डाबुभाभ्यां भवति, ततः 'अन्यतरस्याम्; 'अनो बहुव्रीहेः' इत्येव वर्त्तते, 'मनः' इति निवृत्तम्॥

## १४. अनुपसर्जनात्।

प्रसज्यप्रतिषेधोऽयमित्याह—'उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोति' इति। पर्युदासे को दोषः ? कुक्कुटीपाद इत्यत्रापि न स्यात् पूर्वपदस्योपसर्जनत्वात्, न; अन्तरङ्गत्वात् प्रागेव ङीपि कृते तदन्तस्य समासः। न चेदानी-मुपसर्जनत्वे ङीपः पर्युदासः, पूर्वमेवाभिनिर्वृत्तत्वात्। किञ्च प्रसज्यप्रतिषेधेऽप्येष दोषः समानः। कुक्कुटीत्यत्रैव तर्हि न प्राप्नोति, किं कारणम् ? अन्वर्थमुपसर्जनम्, अप्रधानमुपसर्जनमिति ? अस्त्वेवम्; अनुपसर्जनं तूपसर्जना-दन्यत्सर्वम्, न तु प्रधानमेव, तेनापेक्षणीयस्याभावेऽप्यप्रधानादन्यत्वात् भविष्यति। यदा तर्ह्यधर्मानृताविवक्षि-तोपिवचनोऽनुपसर्जनशब्दस्तदा न प्राप्नोति, तस्मात् प्रसज्यप्रतिषेधः। 'अनुपसर्जनादित्येवं तत्' इति। उपसर्ज-नाच्च भवतीत्येवमित्यर्थः। वक्ष्यति—'टिड्ढाणञिति ङीप्' इति। कथं प्रथमान्तस्य वक्ष्यतीत्यनेन सम्बन्धः ?

अत्राहुः—वक्ष्यति टिड्ढाणञित्येतावान् ग्रन्थः। टिड्ढाणञिति वक्ष्यतीत्यर्थः। कः पुनरत्र प्रत्यय इत्यत्राह—'ङीप्' इति। एवं 'जातेरिति ङीष' इत्यत्रापि ग्रन्थच्छेदः, तत्र च पूर्वस्मिन् 'वक्ष्यति' इत्यनुषङ्गः। 'कुरुचरी' इति। 'चरेष्टः' (३.२.१६)। 'बहुकुरुचरा' इति। बहुव्रीहिः सर्वोपसर्जनः।

'कथं पुनः' इत्यादि। प्रत्युदाहरणे यदुपसर्जनं न तत् स्त्रियां वर्त्तते, यदा च स्त्रियां वर्त्तते तदा भवत्येव प्रत्ययः—बह्व्यः कुरुचर्योऽस्यां बहुकुरुचरीका, बहुकुक्कुटीका मथुरेति, यः स्त्रियां वर्त्तते बहुव्रीहिस्ततोऽटित्वादजातित्वाच्चाप्रसङ्गः। तथा हि—टित्प्रातिपदिकं गृह्यते, तच्च किञ्चित्साक्षाट्टिद्भवति, यथा—नदट्, चोरडिति; किञ्चित्त्ववयवटित्वद्वारेण। यत्र ह्यवयवटित्वमकिञ्चित्करं तत्र समुदायार्थं तद्विज्ञायते। स चावयवः क्वचिद्धातुः—स्तनन्धयीति, क्वचित्कृल्ल्युडादिः, क्वचित्तद्धितष्टचुटचुलादिः। तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थं तस्य टित्वमिति कुरुचरशब्द एव टित्, तत्कुतो बहुकुरुचरशब्दात्प्रसङ्ग इति प्रश्नः। परिहरति—'तदन्तविधिना' इति। ननु ग्रहणवता प्रातिपदिकेन (व्या.प. ८९) तदन्तविधिः प्रतिषिध्यते, ग्रहणं चोपादानमात्रम्, न तु स्वरूपेणोच्चारणमेव, तत्कथं तदन्तविधिः? स्यादेतत्—यत्र गृह्यमाणं रूपं प्रातिपदिकस्यैवासाधारणं तत्र तदन्तविधिप्रतिषेधः, इह चोरडित्यादि प्रातिपदिकमपि टित्, ल्युडादिप्रत्ययोऽपि, धेडिति धातुरपि, ततश्च यथा 'उगितश्च' (४.१.६) इत्यत्र वर्णोऽप्युगित्प्रत्ययोऽपि प्रातिपदिकमपीति तदन्तविधिर्भवति, तथेहापि प्रसङ्ग इति। स्यादयं प्रसङ्गो यदि टिता प्रातिपदिकं विशेष्येत, टिति च प्रातिपदिकेन विशेष्यमाणे नानेन विशेष्येण तदन्तविधिः, प्रातिपदिकेन चासम्भवादिति नैव बहुकुरुचरशब्दात्प्रसङ्ग इत्यत आह—'ज्ञापितं चैतत्' इति। 'शूद्रा चामहत्पूर्वा' (ग.सू. ४०; ४ १.४) इत्यत्र ज्ञापिमेतत्। अवश्यञ्चैतज्ज्ञापितमुत्तरत्रापि परिपालनीयमित्याह—'तथा च' इति। अनाश्रीयमाणे ज्ञापकेऽणन्ताद्विधीयमानो ङीप् प्रत्ययग्रहणपरिभाषया कारशब्दादेव स्यात्, न त्वणन्तात् कुम्भकारशब्दात्। ज्ञापकात्तु ततोऽपि भवतीत्यर्थः।

ननु च कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्याणन्तत्वम्? नेत्याह—'न चाण्' इति। 'कृद्ग्रहणम्' इति। किं कारणमित्यत्राह—'तद्धितोऽप्यणस्ति' इति। यत्र तु गृह्यमाणं रूपं कृत एवासाधारणं तत्रैषा परिभाषा। इह त्वौपगवीति तद्धितस्यापि ग्रहणमिति नायमस्या विषय इत्यर्थः। अथ कारशब्दादुत्पत्तौ सत्यां को दोषः? कौम्भकारेयो न सिध्यति, प्रत्ययग्रहणपरिभाषया कारीशब्दात् स्त्रीभ्यो ढकि तस्यैव वृद्धिस्वरौ स्याताम्। ष्यङः सम्प्रसारणवद्भविष्यति, तद्यथा—ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्धीपुत्र इत्यत्रापि भवति, स्त्रीप्रत्यये तदादिनियमाभावात्; तथा कारशब्दादप्युत्पत्तौ कुम्भकारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाद्भविष्यति, एवमपि कारीशब्दादपि कदाचित् स्यात्।

अथ ब्रूयाः—कारीशब्देन कुम्भशब्दः समसिष्यते, 'स्त्रीभ्यो ढक्' (४.१.१२०) इत्यत्र च 'ङ्याप्प्रातिपदिकात्' (४.१.१) इति त्रितयाधिकारसामर्थ्यात् स्त्रीप्रत्ययान्तात् प्रातिपदिकादिति प्रत्ययो विधास्यते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नमिति कुम्भकारीशब्दादेव ढगुत्पत्स्यते, ङ्याब्ग्रहणानुवृत्त्या च सौपर्णेय इत्यत्रापि भविष्यतीति? एवमपि ङ्याबनुवृत्तः सौपर्णेय इतिवत् कारीशब्दादपि स्यात् 'गतिकारकोपपदानाम्' (व्या.वृ. १३८) इति वचनाच्च ङ्यन्तेन समासो दुर्लभः, ततः कुम्भकारशब्दादेव ङीब्यथा स्यादित्युत्तरत्रापि तदन्तविधिरभ्युपगन्तव्यः। न च कुम्भकारशब्दादप्युत्पत्तौ तदादिनियमाभावात् कारीशब्दादपि तदादेशप्रत्ययप्रसङ्गः, किं कारणम्? 'स्त्रीप्रत्ययेनानुपसर्जनेन' (पु.वृ.४५) इत्यनेन, प्रत्ययग्रहणे यस्मात्स तदादेरधिकस्य ग्रहणमभ्यनुज्ञायते, न न्यूनस्यापि। ननु च सत्यप्युत्तरत्र तदन्तविधौ कुम्भकारीत्यत्र समुदायादपि

भवतु, केवलात् कारशब्दादपि प्रसङ्गः, यथा—औपगवीत्यादौ, ततश्च कौम्भकारेयः पक्षे दुष्यत्येव ? एवं तर्हि कारशब्दादव्युत्पत्तौ कुम्भेनैकार्थीभूतस्य तावतो निष्कृष्यापत्येनायोगात् तदादिनियमाभावाच्च समुदायादेव ढग्भविष्यति ।

यद्वा—कुम्भेनैकार्थीभूतस्य कारस्य स्त्रीत्वेनायोगात् स्त्रीप्रत्यय एव न भविष्यति, असति पुनरुत्तरत्र तदन्तविधौ स्त्रीप्रत्ययस्यात्राप्रसङ्गः, किं कारणम् ? यदणन्तं न तस्य निष्कृष्य स्त्रीत्वेन योगः, यस्य च स्त्रीत्वेन योगो न तदणन्तम्, अत उत्तरत्राप्यवश्यं प्रधानेन तदन्तविधिरभ्युपगन्तव्यः, तत्र यथा प्रधानेन भवति तथोपसर्जनेनापि स्यादिति प्रतिषेधोऽयमारभ्यते । तथा च पूर्वत्रोपसर्जनेनापि तदन्तविधिर्भवति, 'न षट्स्वस्रादिभ्यः' (४.१.१०)—प्रियपञ्चा द्रौपदीति, अतिक्रान्ता भवन्तमतिभवतीति । स्यादेतत्—पूर्वत्रोपात्तं तदन्तं वा 'स्त्रियाम्' (४.१.३) इत्यनेन विशेष्यते, 'टिड्ढाणञ्' (४.१.१५) इत्यादिषूपात्तमेव टिदादिकम्, तेन ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वान्न भविष्यति, कुम्भकारीत्यत्र त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि भविष्यति, नार्थ एतेनेति ? तन्न; त्वदुक्तस्य विषयविभागस्य दुर्ज्ञानत्वात्, अतो विषयविभागज्ञापनार्थमिदमारभ्यते ।

नन्वारब्धेऽप्यस्मिन्नेष विषयविभागः शक्य आस्थातुम्, पञ्चाजीत्यत्राजानामस्त्रीत्वेन तदन्तस्य स्त्रियां वृत्तेः 'अजाद्यतष्टाप्' (४ १.४) इति टाप्प्रसङ्गात् । अतो विशेषणविशेष्यभावं प्रति कामचारात् 'अजाद्यतष्टाप्' इत्यत्र 'टिड्ढाणञ' (४.१.१५) इत्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, 'वनो र च' (४ १.७) इत्यादावुपात्तं तदन्तस्य चेति नार्थ एतेन ? एवं तर्हि तदन्तविधिज्ञापनार्थमिदमारभ्यते । अमहत्पूर्वेत्येतत्तु शक्यमकर्त्तुम्, न हि महाशूद्रेत्यत्र समुदाये जातिवचने शूद्रशब्दः स्त्रियां वर्त्तते ।

अपर आह—लौकिकस्याप्रधानस्योपसर्जनस्येह ग्रहणम्, तेनापिशिलिना प्रोक्तम्, 'इञश्च' (४ २.११२) इत्यण्, ततोऽध्येत्र्याम् 'तदधीते' (४.२.५९) इत्यण्, तस्य 'प्रोक्ताल्लुक्' (४.२.६४) इति लुक्, आपिशिला ब्राह्मणी, अत्र 'इञश्च' (४.२.११२) इति विहितस्य प्रोक्तप्रत्ययस्याणोऽप्रधानत्वात् तदन्तान्ङीन्न भवति । नन्विदानीमध्येतृप्रत्यये लुप्ते प्रकृतिरेव तदर्थमाहेति प्रधानस्त्रियामध्येत्र्यामणन्तस्य वृत्तेः स्यादेव ङीप्प्रत्ययः ? स्यादेतदेवम्, यद्यणन्तादनुपसर्जनादित्युच्येत । वयं त्वणमेवानुपसर्जनत्वेन विशेषयिष्यामः—अण् योऽनुपसर्जन इति, अर्थद्वारकं चाणः प्राधान्यम्, अप्राधान्यं च । तदेतदुक्तं भवति—यस्मिन्नर्थेऽणुत्पन्नः स यदा प्राधान्येनोच्यते तदा तदन्तान्ङीब् भवति; यदा तु गुणभावेन, तदा नेति । इह चाध्येत्र्यां सङ्क्रान्तत्वात् प्रथमस्याणोऽर्थो गुणभूत इति तदाश्रयस्तावन्ङीन्न भवति । यस्त्वध्येत्र्यामुत्पन्नस्तदाश्रयोऽपि न भवति; तस्य लुप्तत्वात् । प्रत्ययलक्षणेनापि न भवति, अणाकारस्य विशेषणात् । 'टिड्ढाणञ्' (४ १.१५) इत्यत्र ह्युत इति वर्तते । तत्राणन्तावकारान्ताविति विज्ञायमाने स्यात् प्रत्ययलक्षणम्, अणा त्वकारे विशेष्यमाणे वर्णनिमित्तो ङीप्प्रत्ययः कथं प्रत्ययलक्षणेन स्यात ! ननु स्त्रियामित्यनुवृत्तेनाणं विशेषयिष्यामः—योऽण् स्त्रियां विहित इति ? एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणीति द्वितीयेऽणि 'प्रोक्ताल्लुक्' (४.२.६४) इति लुप्तेऽपि प्रथमोऽप्यण् स्त्रियामेवोत्पन्नः, तदन्ताद्ब्राह्मण्यां वर्त्तमानान्ङीप्प्रसङ्गः । तस्मात् प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतत् प्रयोजनं सूत्रस्येति ॥

## १५. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ।

'इह कस्मात्' इति । लडादेशस्य स्थानिवद्भावेन टित्त्वमस्तीति प्रश्नः । 'पवमाना, यजमाना' इति । ननु शानच्चादिषु लट इत्यस्य निवृत्तत्वादनादेशपक्षः स्थापितः, पवमानेत्यादिषु शानजुदाहर्तव्यः । 'द्व्यनुबन्धकत्वाल्लटः' इति । लडादिष्वकाराद्ययोऽप्यनुबन्धा इति भावः । एतेन लिड्लृटौ व्याख्यातौ--अनूचाना, यक्ष्यमाणेति ।

'ल्युडादिषु कथम्' इति । द्व्यनुबन्धकत्वात्तेषामपि ग्रहणेन न भाव्यमिति प्रश्नः । 'टित्करणसामर्थ्यात्' इति । न च लडादिष्वपि टित्करणसामर्थ्यमित्याह--'इतरत्र' इति । 'पठिता विद्या' इति । कथमित्यनुषङ्गः । इडष्टित्त्वमुभयार्थं स्यादिति प्रश्नः । 'आगमटित्त्वमनिमित्तम्' इति । आगमानां टित्त्वं ङीपो निमित्तं न भवतीत्यर्थः । कुत इत्यत आह--'ट्युट्युलौ तुट चेति लिङ्गात्' इति । यद्यागमटित्त्वं ङीपो निमित्तं स्यात्ततः सायन्तनीत्यादौ तुट आगमस्य टित्त्वान्ङीप् सिद्ध इति ट्युट्युलोष्टित्करणमनर्थकं स्यादिति भावः । ननु च 'पुराणप्रोक्तेषु' (४ ३.१०५) इति निर्देशेन यदा तुड्न भवति तदा ङीबयं तयोष्टित्त्वं स्यात् ? तन्न; पुराणशब्दाद्बह्वादिषु पाठान्ङीषा भवितव्यम्, अन्तोदात्तो हि पुराणीशब्दः--पुनःपुनर्जायमाना पुराणीति यथा । एवमपि न ज्ञापकम्, 'बह्वादिभ्यश्च' (४.१ ४५) इत्यत्र वेति वर्तते, ततश्च ङीषा मुक्ते ङीबयथा स्यादिति ट्युट्युलोष्टित्त्वं स्यादिति चिन्त्यमेतत् ।

'सौपर्णेयी' इति । सुपर्णशब्दात् पाककर्णादिङीषन्तात स्त्रीभ्यो ढक् (४.१.१२०) । ननु च सानुबन्धकत्वादस्य ग्रहणेन भवितव्यमत आह--'निरनुबन्धकः' इति । यद्यपि 'शिलाया ढः' (५.३.१०२) इति निरनुबन्धको ढशब्दोऽस्ति, स इह स्वभावान्नपुंसकलिङ्ग इति स्त्रियां नास्तीत्युक्तम् । योऽपि 'सभाया यः' (४.४ १०५), 'ढश्छन्दसि' (४.४.१०६) इति ढः, सोऽपि स्त्रियां न वर्तते, कथम् ? तत्र 'तत्र साधुः' (४.४.९८) इति वर्त्तते, कथं च स्त्री नाम सभायां साध्वी स्याद्यज्ञसभायां हि विदुषामधिकारः । ननु मा नाम भूद्यज्ञसभायां साध्वी, शालायां स्त्रीसभे च साध्वी भविष्यति, तत्र यज्ञसभायां साध्वी ब्राह्मणपरिषदित्यत्रापि प्रसङ्गः ? एवं तर्ह्येवंविधे विषये छन्दसि सभेयीशब्दस्य प्रयोगाभावोऽत्र हेतुः ।

'णेऽपि क्वचिदण्कृतं कार्यं भवति' इति । शीलम् 'छत्त्रादिभ्यो णः' (४.४.६२) इति यो णस्तत्राण्कृतं कार्यं भवतीति । कथम ? ज्ञापकात, यदयम् 'कार्मस्ताच्छील्ये' (६.४.१७२) इति टिलोपार्थं निपातनं करोति । यदि हि ताच्छीलिके णेऽण्कृतं कार्यं न स्यान्निपातनमनर्थकं न स्यात्, कर्मशब्दाच्छत्त्रादिलक्षणे णे कृते 'नस्तद्धिते' (६.४.१४४) इत्येव टिलोपस्य सिद्धत्वात् । न च 'अन' (६.४ १६७) इति प्रकृतिभावः, अणि हि स प्रकृतिभावः । 'चौरी, तपासी' इति । चुरातपःशब्दौ छत्त्रादिषु पठितव्यौ । क्वचिदित्यस्य व्यावर्त्यं दर्शयति--'दाण्डा, मौष्टा' इति । दण्डमुष्टिशब्दाभ्यां 'तदस्यां प्रहरणम्' (४.२.५७) इति णः ।

'औत्सी, औदपानी' इति । उत्सोदपानशब्दाभ्यां भवार्थे 'उत्सादिभ्योऽञ्' (४.१.८६) । अथ शार्ङ्गरवादिसूत्रे (४.१ ७३) पुनरञ्ग्रहणं किमर्थम्, यावताऽनेनैव सिद्धम्, न रूपभेदो न स्वरभेदः ? तत्राह--'गोत्रं च चरणैः सह' (म भा. २.२२५) इति जातिः; तत्रौत्सीत्यादौ चरितार्थमिमं ङीपं बाधित्वा जातिलक्षणो ङीष् प्राप्नोति । 'शार्ङ्गरवाद्यञः' इत्यादि । बिदस्यापत्यं बैदी, 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४.१.१०४)

यदि तर्हि तस्य निबन्धनमस्ति तदेवाञ्ग्रहणमस्तु, किमत्राञ्ग्रहणेन ? न वा जात्यधिकारात्, 'जातेः' (४.१.६३) इति हि तत्र वर्तते, अनधिकारे हि पुंयोगादाख्यायां (४.१.४८) ङीष्प्रसङ्गः—बैदस्य स्त्री बैदी ।

'ऊरुद्वयसी' इत्यादौ 'प्रमाणे द्वयसच्दघ्नञ्मात्रचः' (५.२.३७) ।

'पञ्चतयी' इति । 'संख्याया अवयवे तयप्' (५.२.४२) । द्वयसजादिषु अनुबन्धोच्चारणं प्रतिपादिकानां ग्रहणं मा भूत्—किमस्य द्वयसम्, किमस्य मात्रमिति । तयशब्दोऽपि तपतेः पचाद्यजन्तः सम्भवति ।

'ठनादिनिवृत्त्यर्थम्' इति । दण्डोऽस्या अस्ति 'अत इनिठनौ' (५.२.११५) दण्डिका, 'काश्यादिभ्यष्ठञ्ञिठौ' (४.२.११६) काशिकेत्यादौ मा भूदित्येवमर्थम् ।

'तादृशी' इति । 'त्यदादिषु दृशोऽनालोचनने कञ्च' (३.२.६०), 'आसर्वनाम्नः' (६.३.९१) । कञो ञकारोच्चारणम् 'आतोऽनुपसर्गे कः' (३.२.३) गोदेत्यादौ मा भूत् । 'इत्वरी' इति । 'इण्नशजिसर्तिभ्यः क्वरप्' (३.२.१६३) । 'अढचङ्करणी' इति । 'आढचसुभग' (३.२.५६) इत्यादिना ख्युन् ।

'नञ्स्नञीकक्तरुणतलुनानाम्' इति । भाष्ये तु 'कञ्क्वरपः' इत्येतावत् सूत्रम्, ख्युनः पाठोऽनार्ष इति तस्याप्युपसंख्यानमेव कृतम् । 'स्त्रैणी, पौंस्नी' इति । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (४.१.८७) । 'शाक्तीकी, याष्टीकी' इति । प्रहरणाधिकारे 'शक्तियष्टचोरीकक्' (४.४.५९) । 'तरुणी, तलुनी' इति । एतरवयोऽर्थं ग्रहणम्—तरुणी सुरेति, वयसि तु 'वयसि प्रथमे' (४.१.२०) इत्येव सिद्धम् ? न सिध्यति; गौरादिपाठाङ्ङीष् प्राप्नोति । तस्माद्वयस्यवयसि च ङीब्ङीषोर्विकल्पः । क्वचित् 'गौरादिपाठात सिद्धम्' इति पठचते, तद्रूपमात्रसिद्धचभिप्रायं द्रष्टव्यम्, स्वरार्थं तूपसंख्यानं कर्त्तव्यमेव ।।

## १६. यञश्च ।

'आपत्यग्रहणम्' इति । अपत्ये भव आपत्यः, यञ्, आपत्यादिति सूत्रं कर्त्तव्यमित्यर्थः । 'द्वैप्या' इति । भावादावर्थे यञ् ।

'योगविभाग उत्तरार्थः' इति । उत्तरत्र यञ एवानुवृत्तिर्यथा स्यात्, टिवादीनां मा भूदिति ।।

## १७. प्राचां ष्फ तद्धितः ।

'षकारो ङीषर्थः' इति । ननु च ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वान्ङीपा न भाव्यम् ? तत्राह—'प्रत्ययद्वयेन' इति । तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम्' इति । प्रातिपदिकसंज्ञा तु ङीषर्था । ननु च सिद्धोऽत्र ङीष्, पित्करणसामर्थ्यात्, धातोस्तु त्रपादेः षित्वमङ्विधौ चरितार्थमिति त्रपा, क्षमेत्यादौ ङीषभावः ? तदेतत्सान्यासिकं तिष्ठतु तावत् ।

'सर्वत्रग्रहणम्' इत्यादि । सर्वत्रग्रहणं तावदुत्तरसूत्रे न कर्तव्यम्, आरम्भसामर्थ्यादेव 'प्राचाम्' इत्यस्य निवृत्तौ सर्वत्र सिद्धत्वात्, अतस्तदिहापकृष्यते, तदयमर्थो भवति—सर्वत्र बाधकविषयेऽपि प्राचां मतेन यञन्तात्

ष्फो भवतीति । एवं सप्तम्यर्थोऽपि समञ्जसो भवति । 'आवट्याच्चापं वक्ष्यति' इति । असति पुनरपकर्षे आवट्याच्चाबुदीचां मते सावकाशः परत्वात् ष्फं बाधेत, सर्वत्रग्रहणात् ष्फ एव भवति । एवं च 'षाच्च यञः' (वा. ३७२) इति चाब्विषयेऽपि प्राचां ष्फ एव भवति—शार्कराक्ष्यायणी, पौतिमाष्यायणी, गौकक्ष्यायणीति ॥

## १८. सर्वत्र लोहितादिकतन्तेभ्यः ।

लोहितादीति पृथक्पदं लुप्तविभक्तिकम्, पूर्वत्र च प्राचां मते ष्फो विहितः, इह तु सर्वत्र मते । कोऽर्थः ? सर्वेषां मत इत्यर्थः, तदाह—'सर्वेषामाचार्याणां मते' इति । मतेनेति तृतीयान्तपाठे सूत्रे षष्ठ्यन्तात् त्रल् । 'स्वतन्त्रम्' इति । योऽन्यस्यावयवो न भवति तत् स्वतन्त्रं प्रातिपदिकम्, कः पुनरसावित्यत्राह—'कपिशब्दात्परः' इति । लौहित्यायनीत्यादिर्गर्गाद्यन्तर्गणः । बभ्रुशब्दोऽपि तत्रैव पठ्यते, यत्तु 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' (४.१.१०६) इत्यनेनैव भवति ।

'कण्वात्तु' इत्यादि । कण्वशब्दात्पूर्वः कतशब्दादुत्तरः शकलशब्द इष्यते, कतशकलकण्वेत्येवमेषां सन्निवेशः कार्य इत्यर्थः । किमेवं सति भवति ? इत्याह—'पूर्वोत्तरौ' इति । शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः पूर्वोत्तरयोर्गणयोस्तौ तथोक्तौ । पूर्वो गणो लोहितादिः शकलशब्दान्तो भवति, उत्तरश्च गणः शकलशब्दादिर्भवतीत्यर्थः । सत्यमेवं भवति, प्रयोजनं तु किम् ? इत्यत आह—'ष्फाणौ' इति ।

श्लोकं व्याचष्टे—'प्रातिपदिकेष्वन्यथा पाठः' इति । कपिकत, कुरुकत, अनडुह्, कण्व शकलेत्येवं गर्गादिषु गणसन्निवेशः । 'स एवं व्यवस्थापयितव्यः' इति । एवमिति श्लोकोक्तऽऽनुपूर्व्येत्यर्थः । अनडुह्कुरुकतशब्दावस्मात् स्थानादपकृष्यान्यत्र पाठ्यौ, शकलशब्दस्तु कतकण्वयोर्मध्ये पठितव्य इति यावत् । नन्वेवं गणद्वयादपि प्रच्युतः शकलशब्दः ष्फाणौ द्वावपि न प्रतिपद्येत, तत्राह—'कतन्तेभ्यः' इति । बहुव्रीहितत्पुरुषयोरेकशेष.' इति । कतस्यान्तः समीपभूतः कतन्त इति तत्पुरुषेण शकलशब्द उच्यते, शकन्ध्वादित्वात्निपातनाद्वा पररूपम् । तथा कतोऽन्तो येषां तानि कतन्तानीति बहुव्रीहिः, तत्र बहुव्रीहितत्पुरुषयोः सह विवक्षायां बहुव्रीहिः शिष्यते; 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति वचनात् । 'तथा' इत्यादि । 'कण्वादिभ्यः' इत्यपि बहुव्रीहितत्पुरुषयोरेकशेष इत्यर्थः । कण्वस्यादिः समीपभूतः कण्वादिः शकलशब्दः, कण्व आदिर्येषां तानि कण्वादीनि, ततः पूर्ववदेकशेषः । तत्र बहुव्रीहितत्पुरुषोर्मध्ये तत्पुरुषसमासेन । [1]'मध्यवर्ती' इति । गणद्वयस्य । प्रत्ययद्वयमपीति । ष्फाणावित्यर्थः । 'शाकलाः' इति । 'आपत्यस्य च' (६.४.१५१) इति यलोपः ।

अपर आह—पूर्वोत्तरौ तदन्तादी ग्राह्याविति शेषः, पूर्वो गणस्तदन्तो ग्राह्यः—सर्वत्र लोहितादिशकलान्तेभ्य इति, उत्तरो गणस्तदादिर्ग्राह्यः—शकलादिभ्यो गोत्र इति । एवं ष्फाणौ प्रयोजनमिति ॥

## १९. कौरव्यमाण्डूकाभ्यां च ।

'कौरव्यमाण्डूकयोः' इत्यादि । अस्मिन् सूत्रे आसुरेरपि ग्रहणं कर्तव्यम् । आसुरिकौरव्यमाण्डूकेभ्यश्चेति वक्तव्यमित्यर्थः ।

---

1. 'मध्यपाती'—काशिका

'आसुरायणी' इति। ष्फस्य तद्धितत्वात् 'यस्येति च' (६.४.१४८) इति इको लोपः। तदिदं तद्धितग्रहणमेव लिङ्गं भवति—आसुरेरपि ष्फ इति। यत्वाविष्वकारान्तेषु सवर्णदीर्घत्वेनापि रूपं सिद्धम्। 'शैषिकेषु चार्थेषु' इति। आसुरीप्रसङ्गादिदमत्रोक्तम्; अन्यथा द्विरासुरिग्रहणं कर्त्तव्यं स्यात्। 'आसुरीयः' इति। असुरस्यापत्यमासुरिः, तेन प्रोक्त आसुरीयः कल्प इति॥

## २०. वयसि प्रथमे।

'श्रुत्या' इति। श्रवणमात्रेण प्रकरणाद्यनपेक्षयेत्यर्थः। 'कुमारी' इति। प्रथमवयोवचन एवायम्, न पुंयोगाभावहेतुकः; पुंस्यपि प्रयोगात्। यस्तु वृद्धायां प्रयोगः—वृद्धकुमारीति, स पुंयोगाभावात्साधर्म्याद्वेदितव्यः।

'वयस्यचरमे' इति। चरमम् = अन्त्यम्, अचरमे = अनन्त्ये। इह केचिच्चत्वारि वयांसीच्छन्ति—कौमारम्, यौवनम्, मध्यत्वम्, वृद्धत्वमिति। यथाहुः—

'प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम्।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥ (चाणक्य—९३) इति।'

अन्ये तु त्रीणि—

'पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति॥ (मनु० ९.३) इति।'

अन्ये तु बालत्वमध्यत्ववृद्धत्वानि त्रीणि—

'आषोडशाद्भवेद्बालो यावत् क्षीरान्नवर्तकः।
मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते॥ (भरतः) इति।

एषु सर्वेषु दर्शनेषु यौवनं द्वितीयं वयो भवति, यौवनवचनौ वधूटचिरण्टशब्दौ, अतो न प्राप्नोति, तदाह—'द्वितीयवयोवचनावेतौ' इति। यदा तु द्वे एव वयसी उपचयापचयलक्षणे, तदेतन्न वक्तव्यम्; यौवनस्यापि प्रथमवयोरूपत्वात्।

'श्रुत्या वर्तते' इति यदुक्तं तस्य व्यावर्त्यं दर्शयति—'उत्तानशया लोहितपादिकेति, नैता वयः श्रुतयः' श्रुत्या = श्रवणमात्रेण नैते वयः प्रतिपादयन्तीत्यर्थः। इह तावदुत्तानशयेति क्रियाकारकसम्बन्धमात्रं प्रतीयते, तदेव च प्रवृत्तिनिमित्तम्। उत्तानादिषु कर्तृष्विति शेतेरच् प्रत्ययः, सर्वैव कदाचिदुत्ताना शेते, उच्यते चैवम्—उत्तानशयेति, तत्र नियमो गम्यते—अन्यथा स्वप्तुमसामर्थ्यादुत्तानैव शेत इति। एवमपि सन्देहः—बाला, वृद्धेति? तस्मादुत्तानैव शेत इति नियमे वृद्धत्वाभावे च प्रकरणाविनाऽवसिते बाल्यं गम्यते, लोहितपादिकेत्यत्रापि अन्यपदार्थमात्रं श्रुत्या प्रतीयते। प्रकरणाविना स्वभावत एवास्य रक्तौ पादौ नालक्तकादिनेति प्रतीतौ सत्यां

बालेति गम्यते । इतिशब्दः प्रकारे, एवं प्रकारा न वयःश्रुतय इत्यर्थः । अत एव बहुवचनम्, तेन द्विवर्षेत्यादावपि न भवति । अत्रापि प्रकरणादिना वयो गम्यते, परिमाणमात्रं तु शब्दार्थः, शालादावपि प्रयोगात् । द्वे वर्षे भूता इति ठञः 'वर्षाल्लुक् च' (५.१.८८), 'चित्तवति नित्यम्' (५.१.८९) इति लुक् ॥

## २१. द्विगोः ।

## २२. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।

'तद्धितलुकि सति' इति । परसप्तमी त्वेषा नोपपद्यते, अभावरूपेण लुका पौर्वापर्यासम्भवात् । 'सर्वतो मानं परिणाम्' इति । 'परिमाणं तु सर्वतः' इत्यस्य ग्रहणम् न परिच्छेदकमात्रस्येत्यर्थः ।

'पञ्चभिरश्वैः क्रीता' इति । तद्धितार्थे द्विगुः, आर्हीयष्ठक् ।

'कालः संख्या च न परिमाणम्' इति । न हि ताभ्यां सर्वत आरोहतः परिणाहतश्च मीयते । एवं च कालः संख्या चेति प्रदर्शनार्थत्वात् प्रमाणमपि परिमाणं न भवति, तथा चोत्तरसूत्रे 'काण्डशब्दस्यापरिमाणवाचित्वात्' इति वक्ष्यति, 'प्रमाणविशेषः काण्डम्' इति च । तेन द्वौ शमौ प्रमाणमस्या इति मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' (वा. ५५८,५५९) इति लुकि द्विशमा, त्रिशमेति भवति । यद्येवम्, उन्मानमपि परिमाणं न स्यात् ? कश्चिदाह—इष्टमेवैतत्, उन्मानमपि नैवात्र परिमाणग्रहणेन गृह्यते—द्वाभ्यां निष्काभ्यां क्रीता, प्राग्वतीयस्य ठञो 'द्वित्रिपूर्वान्निष्कात्' (५.१.३०) इति लुक्, द्विनिष्का, त्रिनिष्केति भवतीति । अपर आह—बिस्तकम्बल्यग्रहणं ज्ञापकम्—उन्मानमप्यत्र परिमाणग्रहणेन गृह्यत इति; तयोरुन्मानविशेषत्वात्, सुवर्णबिस्तौ हेम्नोऽक्षे, 'कम्बलाच्च संज्ञायाम्' (५.१.३) कम्बल्यमूर्णापलशतमिति । न्यासकारस्तु द्वौ बिस्तौ परिमाणमस्येति विगृह्णन् बिस्तं परिमाणं मन्यते । 'द्विवर्षा' इति । कृतव्युत्पादनमेतत् । 'द्विशता, त्रिशता' इति । द्वाभ्यां शताभ्यां क्रीतेति 'पणपादमाषशताद्यत्' इति नित्ये यति प्राप्ते 'शाणाद्वा' (५.१.३५) इत्यत्र 'शताच्चेति वक्तव्तम्' (वा. ५१०) इति वचनात् पक्षे 'संख्याया अतिशदन्तायाः कन्' (५.१.२२) इति कन्, तस्य 'अध्यर्धपूर्वात्' (५.१.२८) इति लुक् ।

'द्विबिस्ता' इति । परिमाणत्वे ठञो लुक्, उन्मानत्वे ठकः । 'द्व्याचिता' इति । आचितो दशभाराः स्युः । द्वावाचितौ पचति; 'आढकाचितपात्रात् खोऽन्यतरस्याम्' (५.१.५३), 'द्विगोष्ठंश्च' (५.१.५४) इति पक्षे ठन्खौ, ताभ्यां मुक्ते प्राग्वतीयष्ठञ्, तस्य पूर्ववल्लुक् । 'द्विकम्बल्या' इति । क्रीतार्थे ठञो लुक् । द्व्याढकी द्व्याचितेत्यनेन तुल्यम् ।

'पञ्चाश्वी' इति । समाहारे द्विगुः । इमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्, कथम् ? एवं वक्ष्यामि—परिमाणान्तात् तद्धितलुकीति; तन्नियमार्थं भविष्यति—परिमाणान्तादेव तद्धितलुकि ङीब्भवतीति, तेन द्व्याढकीत्यादौ च भविष्यति, पञ्चाश्वेत्यादौ च न भविष्यति, ततो बिस्ताचितकम्बल्येभ्यो नेति ? नैवं शक्यम्; विपरीतोऽपि नियमः सम्भाव्येत—परिमाणान्तात् तद्धितलुक्येवेति । तत्र को दोषः ? परिमाणात् समाहारे न स्यात्—द्विकुडवी, पञ्चाढकी । पञ्चाश्वेत्यादौ तु व्यावर्तकाभावात् स्यादेव ङीप् । तस्माद्यथान्यासमेवास्तु ॥

## २३. काण्डान्तात् क्षेत्रे ।

मानदण्डः = काण्डम् । 'द्विगोः' (४.१.२१) इत्यधिकारादेव पूर्वसूत्रवत्तदन्तविधौ सिद्धे किमर्थमन्तग्रहणम् ? अक्रियमाणेऽन्तग्रहणे क्षेत्र इत्येतत् काण्डस्यैव विशेषणं विज्ञायेत—क्षेत्रे यः काण्डशब्दः, तदन्तात् द्विगोरिति श्रुतत्वात न तदन्तस्य, यथोत्तरसूत्रे प्रमाणे यः पुरुषशब्दस्तदन्तादिति, ततश्चेह प्रसज्येत—द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्रीता द्विकाण्डी वडवेति; इह तु न स्यात्—द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिरिति । अन्तग्रहणे तु सति तदन्तस्यैव विशेषणं क्षेत्रम्, काण्डस्य; बहुव्रीहौ गुणभूतत्वात् ॥

## २४. पुरुषात्प्रमाणेऽन्यतरस्याम् ।

'प्रमाणे यः पुरुषशब्दः' इति । पञ्चारत्निः पुरुष इति शुल्बविदः, तत्र द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्देन सम्बन्धाज्जातिवचनोऽपि पुरुषशब्दः प्रमाणे वर्त्तते । वृत्तौ तु तत्स्वभावादेव प्रमाणे वृत्तिर्द्रष्टव्या ॥

## २५. बहुव्रीहेरूधसो ङीष् ।

"ऊधसोऽनङ्' इति । 'समासान्ते कृते' इति । समासार्थादुत्तरपदाद्भवन् समासान्तः पूर्वं भवति, ततः स्त्रीप्रत्ययः । 'अनो बहुव्रीहेः' इति । उपलक्षणमेतत् । 'अनो बहुव्रीहेः' (४.१.१२), 'डाबुभाभ्यामन्यतरस्याम्' (४.१ १३) इति चेत्यर्थः । 'कुण्डोध्नी' इति । कुण्डमिव ऊधोऽस्या इति विग्रहः, ङीषि 'अल्लोपोऽनः' (६ ४ १३४) इत्यकारलोपः ।

'प्राप्तोधाः' इति । 'प्राप्तापन्ने च द्वितीयया' (२ २.४) इति तत्पुरुषः, 'अत्वसन्तस्य' (६.४.१४) इति दीर्घः ।

'अन उपधालोपिनः' इत्यादि । असत्यां पुनरनुवृत्तौ मध्येऽपवादन्यायेन (व्या.प. १०) डाप्प्रतिषधयोरेवायं ङीष् बाधकः स्यात्, न 'अन उपधालोपिनः' (४.१.२८) इत्यस्य ङीपः ।

ननु च 'डाबुभाभ्याम्' (४.१.१३) इत्यत्रानेनान्यतरस्यांग्रहणेन ङीबपि प्राप्यते, 'अन उपधालोपिनः' (४ १.२८) इत्ययं तु नियम इत्यवादीति कुतोऽयमनिष्टप्रसङ्गः ? सत्यम्; 'अन उपधालोपिनः' (४.१.२८) इत्यस्य तु विधित्वाभ्युपगमेनैतदुक्तम् । इह बहुव्रीहेरूधसो ङीष् नश्चेति वक्तव्यम्; ऊधःशब्दान्ताद्बहुव्रीहेः स्त्रियां ङीष् भवति तत्सन्नियोगेन चान्त्यस्य नकारः, समासान्तप्रकरणे तु ऊधसोऽनङिति न वक्तव्यम्, 'धनुषोऽनङ्' इत्येव पठितव्यम् कः पुनरेवं सति गुणो भवति ? 'अन उपधालोपिनः' (४.१.२८) इत्यत्रास्यानुवृत्तिर्नाश्रयितव्या भवति; अपि च महोधाः पर्जन्यः, कुण्डोधो धैनुकमिति सिद्धं भवति, अन्यथा 'ऊधसोऽनङ्' (५.४.१३१) इत्यत्र स्त्रियामिति वक्तव्यं स्यात्तन आह—'समासान्तश्च स्त्रियामेव' इति । इष्यत इत्यनुषङ्गः, तत्रैव स्त्रियामिति वक्तव्यमित्यर्थः, इतरथा हि कब्विधिप्रसङ्गः । कपोऽवकाशोऽन्यो बहुव्रीहिः—अयवकः अव्रीहिकः, ङीषस्तु—विभाषा कप्, यदा न कप् सोऽवकाशः; कप्प्रसङ्गे उभयं प्राप्नोति परत्वात् कप् स्यात् ॥

## २६. संख्याव्ययादेर्ङीप् ।

'पूर्वेण ङीषि प्राप्ते ङीब्विधीयते' इति । यत्र पूर्वपदप्रकृतिस्वरस्तत्र बहुव्रीहौ । अन्तोदात्ते तु बहुव्रीहौ ङीब्ङीषोर्नास्ति विशेषः, सूध्नी, 'नञ्सुभ्याम्' (६.२.१७२) इत्यन्तोदात्तत्वम्, तत्राल्लोपे ङीबप्युदात्तनिवृत्तिस्वरेणोदात्तो भवति । 'द्व्यूध्नी' इत्यादि । द्वे ऊधसी यस्याः, अतिगतमूधोऽस्या, निर्गतमूधोऽस्या इति विग्रहः ।

'आदिग्रहणं किम्' इति । संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद्बहुव्रीहेरिति विज्ञायमाने द्व्यूध्नीत्यादि सिद्धमिति प्रश्नः । 'द्वित्रिधोध्नी' इति । असत्यादिग्रहणे 'संख्याव्ययाभ्याम्' इति पञ्चमीनिर्देशात् ताभ्यामनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात्, पदान्तरव्यवाये तु न स्यादिति भावः ॥

## २७. दामहायनान्ताच्च ।

'स्वरितेनाधिकारः' (१.३.११) इत्यत्र द्वौ पक्षौ—शब्दाधिकारः अर्थाधिकारश्चेति । तत्राद्ये पक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं स एवानुवर्तते, द्वितीये तु द्वन्द्वार्थस्यैकत्वात् तस्यैवानुवृत्तिः स्याद्वा न वा, तदिहाद्यं पक्षमाश्रित्याह—'संख्याग्रहणमनुवर्त्तते नाव्ययग्रहणम्' इति ।

'हायनो वयसि स्मृतः' इति । प्रकृतिरिति शेषः । हायनान्तो बहुव्रीहिर्वयसि गम्यमाने ङीपः प्रकृतिराचार्यैः स्मृत इत्यर्थः । 'त्रिहायना शाला' इति । प्राणिधर्मो वयः शालाया न सम्भवति । अथ मूलोदाहरणवत् 'त्रिचतुर्भ्यां हायनस्य' इत्यौपसंख्यानिकं णत्वं कस्मान्न भवतीत्यत आह—'णत्वं च' इत्यादि । बहुव्रीह्यधिकारादेव तदन्तविधिसिद्धेरन्तग्रहणं विस्पष्टार्थम् ॥

## २८. अन उपधालोपिनोऽन्यतरस्याम् ।

[1]ङीपि परत उपधालोपो यस्य सम्भवति स उपधालोपी ।

'ननु सिद्धा एव' इत्यादि । एतच्च 'डाबुभाभ्याम्' (४.१.१३) इत्यत्रैव व्याख्यातम् ।

'अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम्' इति । अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेत्येवं नियमार्थमित्यर्थः । अस्य च नियमस्यानुपधालोपिनो ङीब्निवृत्तिः फलमिति फलतः प्रतिषेधवाचो युक्तिः । 'बहुराजे' इति । 'औङ आपः' (७.१.१८) इति शीभावः । द्विवचननिर्देशो डापोऽभिव्यक्तये; एकवचने डाप्प्रतिषेधयो रूपस्य तुल्यत्वात् ।

'बहुमत्स्या' इति । 'सूर्यतिष्यागस्त्य' (६.४.१४९) इत्यादिना उपधालोपविधानादुपधालोप्येष बहुव्रीहिः । 'सुपर्वा' इति । 'न संयोगाद्वमन्तात्' (६.४.१३७) इति निषेधान्नायमुपधालोपी ॥

1. इति परतः—पदमञ्जरी मुद्रितपाठः–वाराणसी 'तारा'. (1966)

## २९. नित्यं संज्ञाछन्दसोः ।

ननु छन्दसि दृष्टमेवानुविधीयते नापूर्वमुत्प्रेक्ष्यते; तत्र च ङीबेव चेद् दृश्यते तस्य च लक्षणमस्ति, क इदानीं तदभावं प्रयोक्तुं प्रभवति, संज्ञाशब्दा अप्यनादिप्रयुक्ता नियतानुपूर्वीकास्तत्रापि ङीबेव चायं दृश्यते न तदभावः शक्यते कर्तुम्, किमर्थमिदं सूत्रम् ? संज्ञाछन्दसोरिति पदमुत्तरार्थं वक्तव्यम् । नित्यग्रहणमुत्तरत्र विकल्पनिवृत्त्यर्थम् ॥

## ३०. केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ।

'केवलेति भाषायाम्' इति । असंज्ञाविषये इति भावः । 'मामकी' इति । ममेयमिति 'युष्मदस्मदोरन्यतरस्यां खञ्च' (४.३.१) इत्यण्, 'तवकममकावेकवचने' (४.३.३) इति ममकादेशः, तत्राणन्तत्वात् 'टिड्ढाणञ' (४.१.१५) इत्येव सिद्धे नियमार्थं मामकग्रहणम्—संज्ञाछन्दसोरेव ङीब्नान्यत्रेति । 'मामिका' इति । टापि 'मामकनरकयोरुपसंख्यानम्' (वा.८४७) इतीत्वम् । 'भागधेयी' इति । भागशब्दात्पुंल्लिङ्गात् स्वार्थे धेयप्रत्ययः, स्वार्थिकाश्च क्वचिदतिवर्त्तन्ते प्रकृतितो लिङ्गमिति स्त्रीलिङ्गता । 'पापा' इति । अभेदोपचारात् तद्वति वर्तमानः पापशब्दोऽभिधेयवल्लिङ्गः । 'अवरी' इत्यत्र द्वितीयो वर्णो दन्त्योष्ठ्यः, न पवर्गः । 'आर्येण कृता' इति । प्राक् सुबुत्पत्तेः समासेऽकारान्तत्वम् । 'भेषजी' इति । भिषज इयमित्यणि आदिवृद्धेरभावोऽस्मादेव निपातनादेकारः । एवं च भेषजग्रहणमपि नियमार्थम् ॥

## ३१. रात्रेश्चाजसौ ।

'कथम्' इत्यादि । दीर्घान्ताज्जसि 'दीर्घाज्जसि च' (६.१.१०५) इति पूर्वसवर्णदीर्घप्रतिषेधाद्यणादेशे 'रात्र्यः' इति प्रयोग उपपद्यते, ह्रस्वान्तस्य तु 'जसि च' (७.३.१०९) इति गुणे 'रात्रयः' इति रूपं स्यात् । दीर्घान्तश्च रात्रिशब्दः संज्ञाछन्दसोरपि जसि न सम्भवति, अजसाविति प्रतिषेधात्, किं पुनर्भाषायामिति प्रश्नः । 'ङीपयम्' इत्यादि । बह्वादिषु रात्रिशब्दो न पठ्यत इति चेत, तत्राह—'तत्र हि' इति । कृत इकारः कृदिकारः, तदन्ताङ्ङीप् भवति 'दृजागृभ्यां विः' दर्विः, दर्वी; यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति—कृतिः, हृतिः । 'सर्वतः' इति । कृदिकारादकृदिकाराच्चेत्यर्थः । यस्तु क्तिन्नर्थस्तस्मान्न भवति—'आक्रोशे नञ्यनिः' (३.३.११२), अकरणिः, अहरणिः रात्रिशब्दोऽयम् 'रशादिभ्यां त्रिप्' (द.उ. १.३६) इति व्युत्पत्तिपक्षे कृदिकारान्तः, अव्युत्पत्तिपक्षे 'सर्वतोऽक्तिन्नर्थात्' (ग.सू. ५१) इति ङीष् । सूत्रं तु ङीबर्थम्—रात्री व्यख्यत् (ऋ. १०.१२७.१), रात्रीभिरस्मा अहभिर्दशस्येत् (ऋग्वेद. १०.१०.९); अत्राद्युदात्तत्वं भवति ॥

## ३२. अन्तर्वत्पतिवतोर्नुक् ।

'निपातनसामर्थ्याच्च' इति । कार्यान्तरवदर्थविशेषवृत्तिरपि लभ्यत इति भावः । कस्मिन्विशेष इत्यत्राह—'अन्तर्वत्पतिवत्' इति । 'गर्भभर्तृसंयोगे' इति । 'अन्तर्वत्' इति । गर्भसंयोगे, गर्भिण्यामित्यर्थः । 'पतिवत्' इति । भर्तृसंयोगे, भर्तृमत्यामित्यर्थः, जीवत्पत्यामिति यावत् । 'इह न भवति अन्तरस्यां शालायां विद्यते' इति । अस्मिन् विषये एवंविधं वाक्यमेव भवति, न तु मतुबादीत्यर्थः । क्वचित् 'अन्तर्वती शाला' इति पठ्यते, तदयुक्तम्; अत्र मतुबभावस्योक्तत्वात् । 'पतिमती पृथिवी' इति । स्वामिपर्यायोऽत्र पतिशब्दः ।

'मतुब्निपात्यते' इति अधिकरणप्रधानस्यान्तःशब्दस्यास्तिनाऽसमानाधिकरण्यान्न प्राप्नोतीति कृत्वा ।

'वत्वं तु सिद्धम्' इति । 'मादुपधायाश्च' (८.२.९) इत्यनेनादुपधत्वात् ।

'अन्तर्वत्पतिवतोः' इत्यादि । एतयोः शब्दयोर्निपातनान्मतुब्वत्वे भवतः, नुक्तु विधीयते यथाक्रमं गर्भिण्यां जीवपत्यां चाभिधेयायाम्––जीवः पतिरस्याः जीवपतिः, 'विभाषा सपूर्वस्य' (४.१.३४) इति ङीन्नकारयोरभावपक्षे रूपम् । तत्र 'ङिति ह्रस्वश्च' (१.४.६) इति नदीसंज्ञापक्षे 'इदुद्भ्याम्' (७.३.११७) इति ङेरामादेशः, जीवपत्यामिति भवति । 'वा तु छन्दसि नुग्विधिः' । छन्दसि विषये तु विकल्पेन नुग्विधिर्भवति––अन्तर्वती, अन्तर्वत्नी । पुंस्यपि दृश्यते––सोऽन्तर्वानभवत् ॥

## ३२. पत्युर्नो यज्ञसंयोगे ।

यद्यत्र यज्ञशब्देन पतिशब्दस्य सम्बन्धात् यज्ञसंयोग इत्यर्थः स्यात्, यज्ञस्य पतिरियं ब्राह्मणीत्यत्रैव स्यात्, अस्ति ह्यत्रार्थद्वारकः सम्बन्धः, स्वरूपेण चानन्तर्यलक्षणः । अथ यज्ञवाचिना संयोगो यज्ञसंयोगः ? तथापि पत्नीसंयाज इत्यादावेव स्यात्, न त्विदमस्य पत्नीत्यादौ । तस्माद्यज्ञशब्दस्य योऽर्थस्तेन पतिशब्दार्थस्य सम्बन्धो यज्ञसंयोग इत्याह––'यज्ञेन संयोगः' इति । अन्यथा 'यज्ञशब्देन' इत्यवक्ष्यत् । एवं च पतिशब्दार्थस्येत्यप्युक्तं भवति, न हि पतिशब्दस्य यज्ञेनार्थेन वाच्यवाचकभावः सम्बन्धान्तरं वा सम्भवति । 'तत्साधनत्वात्' इति । देवतोद्देशेन स्वद्रव्यत्यागः=यागः । मध्यकं च दम्पत्योर्धनम्, 'कुटुम्बिनौ धानस्येशाते जायापत्योर्न विभागो विद्यते' इति हि स्मर्यते, ततश्च त्यागे भार्याया अप्यनुमतिरपेक्ष्यत इति तत्रास्या अनुमत्या साधनत्वम् । पत्न्यवेक्षितमाज्यं भवतीत्यादौ च साक्षादेव कर्तृत्वं मदभिलाषितसाधनतया मदर्थं कर्मेत्येवंरूपोऽधिकारलक्षणसम्बन्धोऽस्तीत्याह––'फलग्रहीतृत्वात्' इति । कर्तृत्वमात्रं विवक्षितम्, न स्त्रीत्वमिति ङीब्न कृतः । 'कर्तरि च' (२.२.१६) इति समासप्रतिषेधः कर्मणि षष्ठ्या एव, न शेषषष्ठ्या इति तस्यानेनोपपन्नः समासः । 'फलगृहीतत्वात्' इति पाठे गृहीतं फलं ययेति बहुव्रीहौ फलशब्दस्य जातिवचनत्वान्निष्ठायाः पूर्वनिपाते 'जातिकालसुखादिभ्य परवचनम्' (वा. ११६) इति गृहीतशब्दस्य परनिपातः ।

'कथम्' इत्यादि । शूद्रस्यैव यज्ञेऽनधिकृतत्वाद्यज्ञेनासंयोगात्कथं तद्भार्याया यज्ञसंयोग इति प्रश्नः । 'उपमानात्' इति । अग्निसाक्षिकं यत्पाणिग्रहणं तद् वृषलादीनामप्यस्ति, तदाश्रयमुपमानम् ॥

## ३४. विभाषा सपूर्वस्य ।

सहशब्दोऽयमस्ति तुल्ययोगे, यथा––सशिष्यो गुरुरागत इति; अस्ति च विद्यमानवचनः, यथा––'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति, इत्थम्भूतलक्षणे तृतीया (२.३.२१), विद्यमानेष्वेव पुत्रेष्वित्यर्थः । तत्र पूर्वशब्दोऽप्यस्ति व्यवस्थावचनः––पूर्वं मथुरायाः पाटलिपुत्रमिति; अस्ति चावयवशब्दः––पूर्वं कायस्येति । तत्र तुल्ययोगे सहशब्दः, पूर्वशब्दश्च व्यवस्थायामिति पक्षे ग्रामस्य पतिरियमिति वाक्ये प्राप्नोति, पूर्वस्य चापि प्राप्नोति, विद्यमानवचनसहशब्दः पूर्वशब्दश्च व्यवस्थावचन इति पक्षे पूर्वस्य मा भूत्, वाक्ये तु स्यादेव । अवयववचनः पूर्वशब्दः तुल्ययोगे सहशब्द इति पक्षे वाक्येऽपि स्यात्, तत्रापि पतिशब्दस्य पूर्वोऽवयवः पकारस्तस्यापि स्यात्,

तस्माद्विद्यमानवचनः सहशब्दः पूर्वशब्दश्चावयववचन इति पक्ष आश्रीयते। 'तेन सह' (२.२.२८) इत्यत्र 'तुल्ययोगे' इति विशेषणस्य प्रायिकत्वात् समासः। एवं च स्थिते 'सपूर्वस्य' इति पतिशब्दविशेषणं नोपपद्यते, कथम्? पकारेण सपूर्वत्वमव्यभिचारादविशेषणम्। शब्दान्तरं तु पतिशब्दस्यावयवो न सम्भवति, ततश्च सामर्थ्यात् प्रातिपदिकं पतिशब्देन विशेष्यते, न तु तेन। '[1]पतिशब्दः' इति। पतिशब्देन तदन्तस्य ग्रहणम्, अनुपसर्जनग्रहणेनापि तदन्तं प्रातिपदिकमेव विशेष्यते, न विशेषणभूतः पतिशब्दः, अन्यथा बहुव्रीहौ न स्यात्—जीवः पतिरस्याः जीवपतिर्जीवपत्नीति। षष्ठी समास एव तु स्यात्—आशापतिः, आशापत्नीति। तदेतत् सर्वमालोच्याह—'पतिशब्दान्तस्य (प्रातिपदिकस्य) सपूर्वस्यानुपसर्जनस्य' इति। 'ग्रामस्य पतिरियम्' इति। असति सपूर्वग्रहणे तदन्तविधेरभावादत्रैव स्यात्। अथाप्यमहत्पूर्वेति ज्ञापकात्तदन्तेऽपि भवेत् केवलस्यापि स्यादेव। तस्मात् 'सपूर्वस्य' इति वक्तव्यम्॥

## ३५. नित्यं सपत्न्यादिषु।

'यानि समानादिपूर्वपदानि पत्यन्तानि प्रातिपदिकानि ते सपत्न्यादयः। कुत एतत्? समानादीनामेव गणे पाठात्, सपत्न्यादीनां चापाठात्। यद्येवम्, समानादिष्विति वक्तव्यम्, पूर्वग्रहणानुवृत्तेः, समानादिषु पूर्वेष्ववयवेषु सत्स्वित्यर्थः? सत्यम्; समानस्य सभावार्थं तु 'सपत्न्यादिषु' इत्युक्तम्। क्वचित्तूदाहरणान्तरं समानादिष्विति वक्तव्यं सभावार्थमेवमुक्तमिति वृत्तावेव पठ्यते।

अपर आह—समवायोच्चारणसामर्थ्यात्सपत्नीभार्य इत्यत्र पुंवद्भावो न भवतीति नात्राप्तोक्तिरस्ति। किञ्च—सभावार्थं समवायोच्चारणमिदमिति सामर्थ्यमपि चिन्त्यम्। तथा हि सपत्नि, निःसपत्निः, सपत्न्यृच्छति, सपत्न्या, सपत्न्यै इत्यादावपि ह्रस्वयणादेशौ न स्याताम्। तस्मात्सभावार्थमेव सपत्न्यादिष्वित्युक्तम्। 'नित्यग्रहणं विस्पष्टार्थम्' इति। आरम्भसामर्थ्यादेव नित्यं भविष्यतीति भावः। 'दासाच्छन्दसि' इति। दासपत्नीरहिगोपाः।

## ३६. पूतक्रतोरै च।

यद्ययमैकारः प्रत्ययः स्यादुत्तरसूत्रे उदात्तवचनमनर्थकं स्यात्; प्रत्ययत्वादेव सिद्धेः। तस्मादादेशोऽयं विज्ञायत इत्याह—'ऐकारश्चान्तादेशः' इति।

'त्रय एते योगाः' इति। 'पुंयोगादाख्यायाम्' (४.१.४८) इत्यत्रानुवर्तयितव्या इत्यर्थः। इह करणसामर्थ्याच्च ङीप्सहिता एवानुवर्तन्ते, तेन यदा पुंयोगात् स्त्रियां पूतक्रत्वादयो वर्तन्ते तदा ङीषं बाधित्वा ऐकारादिसहितो ङीब्भवति॥

## ३७. वृषाकप्यग्निकुसितकुसीदानामुदात्तः।

'वृषाकपिशब्दो मध्योदात्तः' इति। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' (फि.सू. ४२) इतिवचनात्।

---

1. पतिशब्दान्तस्य—काशिका।

अस्यार्थः—अन्ते एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बह्वृषः शब्दस्य गुरुरुदात्तो भवतीति। 'बह्वृषः' इति बह्वच इत्यर्थः। योऽस्माकं चकारेण प्रत्याहारः सोऽन्येषां षकारेण। 'अग्न्यादिषु पुनः' इति। 'फिषः' इत्यनेनाग्न्यादीनामन्तोदात्तत्वम्। फिषिति प्रातिपदिकस्याचार्यसंज्ञा। ये तु कुसोदेति मध्ये गुरुमधीयते तेषां 'लघावन्ते' इति मध्योदात्तप्रसङ्गः॥

## ३८. मनोरौ वा।

'[1]ऐकारश्चोदात्तः' इति। औकारस्त्वनुदात्त एव। 'वाग्रहणेन द्वावपि विकल्प्येते' इति। यदा च द्वावपि न भवतस्तदा ङीबपि न भवति; सन्नियोगशिष्टत्वात्। 'मनुशब्द आद्युदात्तः' इति। 'मन ज्ञाने' (धा.पा. ११७६), 'भृमृशीतृचरित्सरितनिधनेमिमस्जिभ्य उः' (द उ. १-९२) इति वर्तमाने 'धान्ये नित्' (द.उ. १-९४) इति च, 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (द.उ. १-९५) इति उप्रत्ययः, नित्वादाद्युदात्तत्वम्, भरुः, मरुः, शयुः, तरुः, चरुः, त्सरुः, तनुः, धनुः, मयुः, मद्गुः, न्यङ्क्वादिपाठात् कुत्वम्—प्रथमस्योदाहरणानि। शरुः, स्वरुः, स्नेहुः, त्रपु, असुः, वसुः, हनुः, क्लोदुः, बन्धुः, मनुः—इति द्वितीयस्य॥

## ३९. वर्णादनुदात्तात्तोपधात्तो नः।

'वर्णानां तणतिनितान्तानाम्' इति। तशब्दान्तानामेतादीनां णशब्दान्तानां शोणादीनां तिशब्दान्तानां निशब्दान्तानां पृश्निप्रभृतीनां तकारान्तानां च पृषत्प्रभृतीनां वर्णवाचिनामादिरुदात्तो भवतीत्यर्थः। 'गतिस्वरेण' इति। 'गतिरनन्तरः' (६.२.४९) इत्यनेन। 'घृतादित्वात्' इति। 'घृतादीनि' (फि.सू. २१) इति फिषि पठ्यते। 'पिशङ्गात्' इति। 'लघावन्ते' (फि.सू. ४२) इति मध्योदात्तत्वादुत्तरसूत्रेण ङीपि प्राप्ते ङीब्विधीयते।

'असितपलितयोः' इति। 'वर्णानां तणतिनितान्तानाम्' (फि.सू. ३३) इत्याद्युदात्तावेतौ।

'छन्दसि' इत्यादि। 'तो नः' इति नकारे प्राप्ते क्नशब्दं ङीप्सहितमिच्छन्ति। 'भाषायामपीष्यते' इति। भाष्ये तु नैतत्प्रदर्शितम्। अवदातशब्दो न वर्णवाची, किं तर्हि? विशुद्धवाची एवं ह्याह—

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च।
एतत्त्रयं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्॥ इति।

तेनावदातेत्यत्र ङीब्न भवति॥

## ४०. अन्यतो ङीष्।

सारङ्गकल्माषशब्दौ 'लघावन्ते' (फि.सू. ४२) इति मध्योदात्तौ, 'शप आक्रोशे' (धा.पा. १०००), 'कल तृपः' (द.उ. ८-१०७) 'शपेर्बश्च' (द.उ. ८.१०८) इति कप्रत्ययः, पकारस्य बकारः, प्रत्ययस्वरेण

1. 'ऐ' उदात्तः—काशिका.

मध्योदात्तः शबलशब्द । खट्वाशब्दो निःस्वरेणाद्युदात्तः, 'खट् काङ्क्षे' (धा पा. ३०९), 'अशूप्रुषिलटिकटिकणिखटिविशिभ्यः क्वन्' (द उ. ८.१२५) । कृष्णशब्दोऽन्तोदात्तः, 'कृषेर्वर्णे' (द.उ. ५-३७) इति नक्प्रत्ययः, इलचि प्रकृते 'कपेश्च' ( ? ) इति उणादिषु सूत्रम् । कपिः सौत्रो धातुः, कपिलशब्दोऽन्तोदात्तः ॥

## ४१. षिद्गौरादिभ्यश्च ।

'षिद्भ्यः प्रातिपदिकेभ्यः' इति । ष्वुनादेः प्रत्ययस्य षित्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवतीति प्रातिपदिकानां षित्वम्, धातोस्तु त्रपादेः षित्वमङ्विधौ चरितार्थमिति व नेन प्रातिपदिकं षिद्भवति । 'रजकी' इति 'शिल्पिनि ष्वुन्' (३.१.१४५) इत्यत्र व्युत्पादितम् ।

गौरादिषु गौरशब्दस्य वर्णवाचिनोऽप्यन्तोदात्तत्वात् पाठः । मत्स्यादीनां योपधानाम् 'अयोपधात्' (४.१.६३) इति जातिलक्षणस्य ङीषः प्रतिषेधात् पाठः । अन्येषां जातिशब्दानां स्त्रीविषयार्थः पाठः । 'श्वन्तक्षन्' इति एतयोर्ङीपि प्राप्ते । 'अनडुही, अनड्वाही' इति । अनकारान्तत्वादप्राप्ते ङीषि सप्रत्ययषयोः पाठः, ङीपि परतो विकल्पेनान्यथा स्यात् । 'एषणः करणे' इति । करणसाधन एषणशब्दो ङीषमुत्पादयति—इष्यतेऽनयेत्येषणी । अधिकरणे ल्युडिति टित्वान्ङीबेव भवति । अन्येषामपि ल्युडन्तानां ङीपि प्राप्ते पाठः । मेघशब्दस्याजातिवाचित्वात्, गौतमस्य शार्ङ्गरवादित्वान्ङीनि प्राप्ते वचनात् पक्षे सोऽपि भवति । आयस्थूणशब्दः शिवाद्यणन्तः । भौरिक्य दय इञन्ताः, तेषाम् 'अणिञोः' (४.१.७८) इति ष्यङ्प्राप्तौ । आपिच्छिका नाम राजानः, 'जनपदशब्दात्क्षत्रियादञ्' (४.१.१६८), तस्य '[1]अतश्च' (४ १ १७७) इति लुकि कृते प्रत्ययलक्षणेन ङीप्प्राप्नोति। अग्रे हायनमस्य आग्रहायणः, प्रज्ञादित्वात् स्वार्थिकोऽण्, अस्मादेव निपातनाण्णत्वम्—आग्रहायणः, ङीपि प्राप्ते पाठः । केचिदाग्रहायणीति इकारान्तं पठन्ति, तस्य प्रयोजनम्—आग्रहायणीभार्य इत्यादौ पुंवद्भावो मा भूदित्याहुः । एतेन प्रत्यवरोहणीति व्याख्यातम् । 'सुमङ्गलात् संज्ञायाम्' इति । 'केवलमामक' (४.१.३०) इति ङीपि प्राप्ते पक्षे सोऽपि भवति । स्वरे विशेषः; सुमङ्गलशब्दो बहुव्रीहिः, तत्र 'नञ्सुभ्याम्' (६.२.१७२) इत्यन्तोदात्तत्वान्ङीप्यपि सत्युदात्तनिवृत्तिस्वरेण भाव्यमिति नास्ति विशेषः । तथा च छन्दसि । सुमङ्गलीरियं वधूः (ऋ. १०.८५.३३) इत्यन्तोदात्तत्वं दृश्यते । तस्माज्जातिवचनोऽव्युत्पन्नः स्त्रीविषयः सुमङ्गलशब्दः 'लघावन्ते' (फि.सू. ४२) इति मध्योदात्तो द्रष्टव्यः । तरुणतलुनयोः 'नञ्स्नञीकक्ख्युंस्तरुण' (वा. ३३८) इति ङीपि प्राप्ते पक्षे सोऽपि भवति । बृहन्महच्छब्दयोरनर्थकः पाठ इति प्रागेवोक्तम् । ऋष्यणन्तः सौधर्मशब्दः । 'रोहिणी नक्षत्रे' इति । नक्षत्रादन्यत्र रोहिता । 'रेवती नक्षत्रे' इति । रयिरिति धननाम, रयिर्विद्यतेऽस्या इति मतुपि 'रयेर्मतौ बहुलम्' (वा. ६६५) इति सम्प्रसारणम्, निपातनाद्वत्वम् । नक्षत्रादन्यत्र ङीब्भवति । विकलादीनां टापि प्राप्ते । 'कटाच्छ्रोणिवचने' । कटी श्रोणिः, अन्यत्र कटा । 'पिप्पल्यादयश्च' इति । गणसूत्रम् । 'पिप्पली हरीतक्यादिकं' तु तस्योदाहरणप्रदर्शनम् । 'पृथिवी' इति । 'प्रथेः षिवन्सम्प्रसारणं च' (द.उ. ८.१२४) इति षित्वादेव सिद्धे प्रत्ययान्तस्य पाठः पुंवद्भावनिवृत्त्यर्थः—पृथिवीभार्य इति । स्त्रीविषयस्यास्य पुंवद्भावप्राप्तिश्चिन्त्या । क्रोष्टुशब्दस्य 'स्त्रियां च' (७.१.९६) इति तृज्वद्भावः । क्रोष्ट्रीत्यत्र निरूपणीयमस्ति 'स्त्रियां च' (७.१ ९६) इत्यत्र निरूपयिष्यामः ।

---

1. 'आतश्च'—मुद्रितः पाठः—तारा. वाराणसी. (1966)

'षित्वादेव सिद्धे' इति। 'मातरि षिच्च' (वा. ४.२.३६) इति। वार्त्तिककारवचनात् षित्त्वम्, निपातनसामर्थ्याद्वा। उक्तं हि—

> धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च
> अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्॥ इति।

'दंष्ट्रा' इति। येषामजादिषु दंष्ट्रेति पाठो नास्ति तेषामिदं प्रयोजनम्॥

## ४२. जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु।

वर्ततेऽनया सा वृत्तिः = जीविका। 'स्वरे विशेषः' इति। तमेव दर्शयति—'उत्सादिपाठादञि कृते' इति। अमत्रम् = भाजनम्। 'कुण्डान्या' इति। क्रियाशब्दोऽयम्। 'कुडि दाहे' (धा.पा. २७०), 'गुरोश्च हलः' (३.३.१०३) इत्यकारप्रत्ययः। अमत्रपर्यायस्तु कुण्डशब्दो नपुंसके नियतः। यस्तु 'पत्यौ जीवति कुण्डः स्यात्' (मनु. ३.१७४) इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव—कुण्डीयं न गोलीति। अमत्रवाचिनस्तु जातिशब्दादपि स्त्रीविषयत्वान्ङीष् विधीयते। 'आवपनं चेत्' इति। यत्र धान्यादि प्रक्षिप्य नीयते सा गोणी, यस्याः पुनर्यादृच्छिकं नाम सा गोणा। 'स्थलान्या' इति। कृत्रिमा पुरुषव्यापारेण निष्पादिता, यथा—स्थलयोदकं परिगृह्णन्तीति। 'भाजी' इति। 'भज विश्राणने' (धा.पा. १७३३) चुरादिः, 'ण्यासश्रन्थो युच्' (३.३.१०७) इति युचि प्राप्तेऽस्मादेव निपातनात् स्त्रियामण्येरच्। 'श्राणा' इति। 'श्रा पाके' (धा.पा.- १०५३), क्तः, 'संयोगादेः' (८.२.४३) इति नत्वम्। 'स्थौल्यं चेत्' इति। द्रव्ये वर्तमानस्य नागशब्दस्य स्थौल्यं चेत् प्रवृत्तिनिमित्तमित्यर्थः। 'नागशब्दो गुणवचनः' इति। गजवाची नागशब्दस्ततःसहचरितं स्थौल्यमुपादाय स्त्र्यन्तरे प्रयुक्त उदाहरणम्। सर्पे दृष्टस्तद्गतं दैर्घ्यमुपादाय स्त्र्यन्तरे प्रयुक्तः प्रत्युदाहरणमित्यर्थः। 'वर्णश्चेत्' इति। प्रवृत्तिनिमित्तमित्यर्थः। 'कालान्या' इति। यस्या यादृच्छिकीयं संज्ञा। 'नीलान्या' इति। नील्या रक्ता शाटी, 'नील्या अन्वक्तव्यः' (वा. ३९८) इत्यन्। 'अयोविकारश्चेत्' इति। 'फाल' इति यस्याभिधानम्। 'कुशान्या' इति। छन्दोगाः स्तोत्रिया गणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति। 'कामुकान्या' इति। यस्या मैथुनादन्यत्कामयितुं शीलम्। 'मैथुनेच्छावती भण्यते' इति। कामुकशब्दस्य 'लषपतपद' (३.२.१५४) इति कर्तरि व्युत्पादितत्वात्, इच्छामात्रे वृत्त्यभावात्। सूत्रे तु प्रवृत्तिनिमित्तमात्रं निष्कृष्योक्तम्। मैथुने इच्छा यस्याः सा मैथुनेच्छेति व्यधिकरणपदो बहुव्रीहिराश्रयणीय इति भावः। 'केशवेशः' इति। केशसन्निवेशविशेष इत्यर्थः॥

## ४३. शोणात् प्राचाम्।

शोणशब्दोऽयं वर्णवाची 'वर्णानां तणतिनितान्तानाम्' (फि.सू. ३३) इत्याद्युदात्तः, तत्र 'अन्यतो ङीष्' (४.१.४०) इत्येव सिद्धे नियमार्थं वचनम्—प्राचामेव नान्येषामिति॥

# ४४. वोतो गुणवचनात् ।

'गुणमुक्तवान् गुणवचनः' इति । 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भूते कर्तरि ल्युटं दर्शयति। स पुनर्यः प्राग्गुणमभिधाय इदानीमनुक्तोऽप्यभेदोपचाराद्वा तद्वति वर्त्तते स वेदितव्यः । 'शुचिः' इति । उत इत्यस्मिन्नसत्त्वेऽपि पट्वीत्यादिसिध्यर्थमेवात इत्यस्यासम्बन्धो व्याख्येयः, ततश्चेहापि प्रसङ्ग इति भावः ।

'गुणवचनान्ङीप्' इति । 'मनोरौ वा' (४.१.३८) इत्यस्यानन्तरमिदं पठितव्यमित्यर्थः । उत्तरसूत्रं 'बह्वादिभ्यो वा' इति पठितव्यम् ।

'आद्युदात्तार्थम्' इति । आद्युदात्तेषु गुणवचनस्य ङीब्विधानस्य प्रयोजनमित्यर्थः । अन्तोदात्तेषु 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इति ङीबप्युदात्त इति नास्ति विशेषः । आद्युदात्तेषु ङीबनुदात्त एवावतिष्ठते। 'वस्वी' इति । 'शृस्वस्निहि' (द.उ. १–९५) इत्यादिना वसेरुप्रत्ययः, नित्त्वादाद्युदात्तो वसुशब्दः, गुणवचनश्चायं नैर्मल्यवचनः । प्रशस्तवचन इत्यन्ये । तथा च अतिशयेन वसुर्वसिष्ठो भवति । पटुशब्दोऽप्याद्युदात्तः, 'धान्ये नित्' (द.उ. १–९४) इत्याधिकारे 'फलिपाटिनमिमनिजनां गुक पटिनाकिधतश्च' (द.उ. १–१०३) इति उप्रत्ययः, फलेर्गुगागमः, पाटेश्च पटिरादेशः, फल्गुः, पटुः, नाकुः, मधुः, जतु–इत्युदाहरणानि । मृदुशब्दस्त्वन्तोदात्तः, 'म्रद क्षोदे' (धा.प. ७६७) 'कृभ्रंश्च' (द.उ. १–१०७) इत्यधिकारे 'प्रथिम्रदिभ्रस्जां 'सम्प्रसारणं सलोपश्च' (द.उ. १–११३) इति इति कुप्रत्ययः, पृथुः, मृदुः । 'भ्रस्जेः सलोपः सम्प्रसारणञ्च' (द.उ. १–११३), न्यङ्क्वादित्वात् (७.३.५३) कुत्वम्, भृगुः । 'खरुः' इति । 'खरुः कन्या पतिंवरा' इति निघण्टुः ( ? ), तत्र पाणिग्राहोत्कण्ठाभिधायित्वाद्गुणवचनत्वम् । तपरकरणं किम ? पटुमिच्छति पटूयति, पटूयतेः क्विप्, पटूः स्त्री–-अत्र मा भूत् । यद्यप्ययं सम्प्रति क्रियावचनः, तथापि पूर्वं गुणमुक्तवानिति कृत्वा स्यात् प्रसङ्गः ।

इह 'उतः' इति विशेषणाद्वचनग्रहणाच्च शास्त्रीयोऽदेङ्गुणो न गृह्यते । लोके तूपसर्जनं गुण उच्यते, शास्त्रेऽपि यस्य गुणस्य हि भावादिति विशेषणमात्रं गुणो गृह्यते, शुक्लादौ च प्रसिद्धतरो गुणशब्दः, वैशेषिकादयस्तु रूपरसादयश्चतुर्विंशतिर्गुणा इति प्रतिपन्नाः; तदिह जिघृक्षितं गुणं लक्षयति–-'सत्त्वे निविशते' इत्यादि । सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वम् = द्रव्यम् । तत्र यो निविशते = समवैति स गुणः । 'यो निविशते स गुणः' इत्युच्यमाने गुणक्रियाजात्योर्गुणत्वप्रसङ्गात्सत्त्व इत्युक्तम् । एवमपि सत्ता जातिर्गुणः स्यात्, सा हि द्रव्यगुणकर्मसु त्रिष्वपि समवैति ? तदर्थं द्रव्य एवेत्यवधारणं द्रष्टव्यम् । एवमपि द्रव्यत्वजातिर्गुणः स्यात् सत्त्वे निवेशात् तत्रैव च निवेशात ? इत्यत आह–'अपैति' इति । ततः सत्त्वादपैति = अपगच्छति, क्वचिद्वा कदाचिद्वा न भवतीत्यर्थः । यथा– आम्रफले श्यामता पूर्वमुपैति, रक्ततायां तत्र जातायामपैति च । द्रव्यत्वजातिस्तु सर्वदा द्रव्ये निविशते नापैति, यदि हि कदाचित् क्वचिद्वा न स्याद्द्रव्यमेवं तन्न स्यात् । एवमपि गोत्वादिजातिर्गुणः स्यात्, सा हि सत्त्वे निविशते, अपैति च, ततोऽश्वादिष्वभावात् ? इत्यत आह–-पृथग्जातिषु' इति । पृथगिति पृथक्पदम्, पृथग्भूतासु जातिष्वित्यर्थः । जात्याधारेषु द्रव्येषु दृश्यमानो जातिषु दृश्यत इत्युपचर्यते, समासे तु सति 'जात्यन्ताच्छः' (५.४.९) इति निष्प्रत्याधिकारपरिगणितश्छः प्रसज्येत । तदेवमुक्तलक्षणोपेतो यः पृथग्जातीयेषु दृश्यते स गुणः, न चैवंरूपा गोत्वादिजातिः । यद्यपि खण्डमुण्डादिरूपेण खण्डमुण्डादयः पृथग्जातीयाः, तथापि गोत्वेन तासामेकजातीयत्वमेव । ये त्वपैतीत्यस्य सत्त्वेऽवाधारे तत्परित्यागमर्थमाहुः, तेषां 'पृथग्जातिषु' इत्यनर्थकम्; गोत्वादिजातेरप्यपैतीत्यनेनैव व्यावृत्तिसिद्धेः । तस्मात्पूर्वोक्त एवार्थः ।

एवमपि हि क्रिया गुणः स्यात्, सा हि द्रव्ये निविशते यथा सक्रियं तत्रैव च निविशते, अपैति च ततो यथा निष्क्रियं द्रव्यं पृथग्जातीयेषु गवाश्वादिषु दृश्यते ? अत आह—'आधेयश्च' इति । आधेयः = निष्पाद्यः, यथा—पाकनिक्षिप्तेषु घटादिषु रक्ततागुणः । अक्रियाजः = अनुत्पाद्यः, यथा—तेजःपरमाणुषु स एव रक्ततागुणः । तदेवमाश्रयभेदेनोत्पाद्यानुत्पाद्यस्वभावो गुण इति नित्योत्पाद्यस्य कर्मणो गुणत्वाभावः ।

एवमपि द्रव्यं गुणः प्राप्नोति, तदपि शरीरादिकं पादादिषु द्रव्येष्वेव पृथग्जातीयेषु निविशते संयोगविनाशे च ततोऽपैति, आधेयं चाक्रियाजम्, अवयविद्रव्यस्योत्पाद्यत्वादाकाशादेश्चानुत्पाद्यत्वादित्यत आह—'सोऽसत्त्वप्रकृतिर्गुणः' इति । य उक्तलक्षणोपेतः सत्त्वप्रकृतिर्न भवति = द्रव्यस्वभावको न भवति, स गुण इत्यर्थः । अत्रोत्तरार्द्धेनैव सर्वजातीनां व्यावृत्तिसिद्धेः पूर्वार्द्धं व्यर्थम्, जातीनां नित्यत्वेनोत्पाद्यस्वाभावात् ? नैतदेवम्; असति पूर्वार्द्धे न जातिर्व्यावर्तते, यथा—तैजसानां परमाणूनां यद्रूपम्, यच्चेष्टकादिपाक्यद्रव्यगतम्—तदुभयं मिलितमुत्पाद्यानुत्पाद्यस्वभावमित्युभयोरपि गुणत्वं भवति, न पुनः प्रत्येकम्; उभयस्वभावत्वात् । तथा पाक्यद्रव्यरूपं जातिश्च—इत्युभयं मिलितमुत्पाद्यानुत्पाद्यस्वभावमिति जातिरपि गुणः स्यादेव, न हि सजातीयत्वे सतीति विशेषणमुपात्तम्, अतः पूर्वार्द्धेन जातिव्यावृत्तिः ।

नन्वेवमपि 'पृथग्जातिषु दृश्यते' इत्यनेनैव सर्वजातिव्यावृत्तिसिद्धेः पूर्वकं विशेषणद्वयं व्यर्थमेव, तस्मात् 'सत्त्वे निविशते' इति स्वभावकथनम् । ततः 'अपैति' 'पृथग्जातिषु दृश्यते' इति च विकल्पेन जातीर्व्यावर्त्तयतः, अपैतीत्यस्य च तत्रैव कियन्तञ्चित् कालं स्थित्वा तमाधारं त्यजतीत्ययमर्थः ।

तदेवम् 'सत्त्वे निविशते अपैति आधेयश्चाक्रियाजश्च' इत्येकं लक्षणम् । 'सत्त्वे निविशते पृथग्जातिषु' इत्यादिकं चापरमिति लक्षणद्वयमनुसर्त्तव्यम् ॥

## ४५. बह्वादिभ्यश्च ।

'शक्तिः शस्त्रे' इति । शक्तिशब्दः शस्त्रेऽभिधेये ङीषमुत्पादयति—शक्तिः, शक्ती । शस्त्र इति किम् ? शक्तिः = सामर्थ्यम् । अन्ये शक्तिशस्त्री इति शब्दद्वयं पठन्ति—शस्त्रिः, शस्त्री । 'इतः प्राण्यङ्गात्' इत्यादीनि त्रीणि वाक्यानि यथोत्तरमधिकविषयाणि । तत्रोत्तरं वाक्यद्वयं 'रात्रेश्चाजसौ' (४.१.३१) इत्यत्रैव व्याख्यातम् । इकारान्तात् प्राण्यङ्गवाचिनो वा ङीष् भवति—धमनिः, धमनी । 'सर्वतोऽक्तिन्नर्थात्' (ग.सू. ५१) इत्येव ङीषि सिद्धे शकट्यादीनामिकारान्तानां पाठः प्रपञ्चार्थः । पद्धतिशब्दः क्तिन्नन्तः, पादस्य हतिः पद्धतिः, 'हिमकाषिहतिषु च' (६.३.५४) इति पद्भावः । अहन्निति पठ्यते, न स केवलः स्त्रियां वर्त्तते, तस्मात्तदन्तो बहुव्रीहिरुदाहार्यः—दीर्घमहरस्याः दीर्घाह्नी शरत्, पाठसामर्थ्यात् 'अनुपसर्जनात्' (४.१.१४) इति न प्रवर्तते । अस्य ङीषो विकल्पितत्वाड्डाप्प्रतिषेधावपि भवतः, 'अन उपधालोपिनः' (४.१.२८) इति ङीप् च ।

'बहुशब्दो गुणवचनः' इति । अन्तोदात्तश्च 'लङ्घिबंह्योर्नलोपश्च' (द.उ. १.११४) इत्युप्रत्ययान्तः । किमर्थं तर्हि तस्येह पाठः ? इत्यत आह—'तस्य' इति ॥

## ४६. नित्यं छन्दसि ।

'नित्यग्रहणमुत्तरार्थम्' इति । इह त्वारम्भसामर्थ्यादेव नित्यो विधिः सिद्धः, योगारम्भश्चान्यप्रयोजनः ॥

## ४७. भुवश्च ।

'विभ्वी, प्रभ्वी' इति । 'विप्रसंभ्यो ड्वसंज्ञायाम्' (३.२.१८०) इति डुप्रत्ययान्ताङ्ङीष् । 'स्वयम्भूः' इति । भवतेः क्विप् ।

'ह्रस्वादेवेयम्' इति । यद्येवं 'घेर्ङिति' (७.३.१११) इति गुणे कृते 'भोः' इति निर्देशः प्राप्नोति, तत्राह—'सौत्रोऽयं निर्देशः' इति । गुणस्यैव कृतस्य छान्दस उवङादेश इत्यर्थः ॥

## ४८. पुंयोगादाख्यायाम् ।

'पुंसा योगः पुंयोगः' इति । योगः = सम्बन्धः । 'पुंयोगाद्धेतोः' इति । हेतौ पञ्चमीं दर्शयति । आख्याग्रहणं गुणभूतेनापि पुंसैव सम्बध्यते; अन्येन सम्बन्धासम्भवात् । गणकादयो हि शब्दाः पुंयोगात् स्त्रियां वर्तमाना न पुंयोगस्याख्या भवन्ति, स्त्रियां च पुंयोगमन्तरेण न प्रवर्तन्ते इति स्त्रिया अपि नाख्यास्तदाह—'पुंस आख्याभूतम्' इति । भूतग्रहणेनैतद्दर्शयति—यत्प्रातिपदिकं प्राक् पुंसो वाचकमभूत्, सम्प्रति तु पुंयोगाद्धेतोः स्त्रियां वर्तते इति । 'गणकी' इत्यादि । गणयतीति गणकः, ण्वुल् । प्रतिष्ठते प्रष्ठः, 'प्रष्ठोऽग्रगामिनि' (८.३.९२) इति षत्वम् । कथं पुनरेते पुंशब्दाः ? इत्यत आह—'पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात्' इति । गणयति, प्रतिष्ठत इति व्युत्पत्त्या पुंसि रूढा एते, न स्त्री गणयति, प्रतिष्ठते वा । महामात्रशब्दस्यापि प्रवृत्तिनिमित्तं हस्तिपकानामाज्ञापनम् । हस्तिपकाधिपतिर्हि महामात्रः । या तु स्वयं गणयति प्रतिष्ठते वा, न तस्यां पुंयोगाच्छब्दप्रवृत्तिः, अपि तर्हि स्वयमेव क्रियासम्बन्धादिति टापैव तत्र भाव्यम् । कथं तर्हि स्त्रियां प्रवृत्तिरत्यत आह—'तद्योगात्' इति । कोऽर्थः ?

> तस्येदमिति सम्बन्धादिति चेत्तद्धितो भवेत् ।
> ङीषेव बाधकः स्याच्चेन्नित्यं बाधः प्रसज्यते ॥

गणकस्येयमिति भेदसम्बन्धे विवक्षिते 'तस्येदम्' (४.३.१२०) इति तद्धितः प्राप्नोति । अथ नाप्राप्ते तद्धिते ङीषारभ्यमाणस्तस्य बाधक इत्युच्यते, कदाचिदपि तद्धितो न स्यात्, उभयमपि स्विष्यते—प्राष्ठी, प्रष्ठीति ? स्यान्मतमेतत्—'एतदेव ङीष्विधानं ज्ञापकम्—भेदविवक्षायामपि तद्धितमन्तरेण प्रष्ठादयः स्त्रियां वर्तन्ते' इति । तेन 'न केवला प्रकृतिः प्रयोक्तव्या' (हे.प. १३५) इति नियमोऽत्र बाध्यते, सति हि तद्धिते प्राष्ठीत्यणि ङीपेव सिद्धः, तस्य चोदात्तनिवृत्तिस्वरेणोदात्तत्वमिति किं ङीष्विधानेनेति ? तन्न; येऽनीकारान्तास्तद्धिताः—भानोरियं भानवीयेति, तदर्थमेतत् स्यात् । एवं तर्ह्याख्याग्रहणं ज्ञापकम्—नात्र तद्धितोत्पत्तिरिति, न हि तद्धितान्तः प्रकृत्यर्थे पुंसि वर्त्तते ? एवमपि ज्ञापकेन तद्धितस्य नित्यं बाधात् प्राष्ठीति न स्यात् । तस्माददुष्ट एवायं पक्षः ।

एवं तर्हि यथा—मञ्चाः क्रोशन्ति, गौर्वाहीकः, गङ्गायां घोषः, यष्टीः प्रवेशयेत्यादौ तात्स्थ्यात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्याच्चातस्मिन्नपि तत्त्वाध्यारोपेण तच्छब्दप्रवृत्तिस्तद्वदत्रापि प्रष्ठादिसाहचर्यात् तच्छब्दप्रवृत्तिर्भविष्यति ? तत्राभेदेन भेदसम्बन्धस्य निवृत्तत्वान्न तद्धितप्रसङ्गः। विवक्षिते च भेदे तद्धितोत्पत्त्या प्राष्ठीत्यादि भविष्यति ? तत्राहुः—यत्स्वया धर्मश्चरितव्यः सोऽनया सहेति भार्यायाः शास्त्रसिद्धं साहचर्यमिति तस्यामेवैतन्ङीब्विधानमिति। भट्टिकाव्ये तु दुहितृष्वपि दृष्टः प्रयोगः—

> 'कौसल्ययाऽसावि सुखेन रामः
>
> प्राक्केकयीतो भरतस्ततोऽभूत्।' (भ.का. १.१४) इति।

केकयस्य दुहिता केकयी, जनपदशब्दादपत्यप्रत्यये तु कैकयीति प्राप्नोति, न च तस्य 'अतश्च' (४.१.१७७) इति लुक्, 'न प्राच्यभर्गादि' इति प्रतिषेधात्तत्। तस्मात्सोऽयमित्यभिसम्बन्ध इत्ययमेव पक्षो ग्राह्यः।

यद्वा—यथा स्वामिदासौ पचत इति स्वामिनः संविधातृत्वात् पक्तृत्वम्, दासस्य तु साक्षात्; तथा पुरुषः साक्षात्प्रतिष्ठते स्त्र्यपि संविधातृत्वात् पुरुषगतायाः प्रस्थानक्रियायास्तस्यामारोपात् प्रतिष्ठत इति, तस्यामेव प्रष्ठशब्दो व्युत्पाद्यते, न तु पुरुषे व्युत्पादितः सन् तेन सहाभेदोपचारात्तस्यां वर्तते। न चैतावता पुंयोगादेव हेतोः स्त्रियां वर्तत इत्यस्य हानिः, साक्षात् स्वयमकर्तृत्वात्। अत्र पक्षे प्रस्थ इति स्थिते सुबन्तस्य समासः, सुप् च संख्यानिमित्तम्, प्रातिपदिकं च पूर्वं लिङ्गमभिधत्ते, पश्चात् संख्यामिति तन्निमित्तसुबपेक्षात् समासात् प्रागेवोत्तरपदात् स्थशब्दाट्टाप्प्रसङ्गः, न च स्थशब्दादप्यनेनैव ङीष् लभ्यते, प्रष्ठशब्दो हि पुंस आख्या, न तु स्थशब्दमात्रम् ? नैष दोषः; 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या.प. १३८) इति कृदन्तावस्थायामेव समासः, सा पुंस आख्येति ङीष् भविष्यति। परिभाषाप्रयोजनानि 'उपपदमतिङ्' (२.२.१९) इत्यत्र प्रतिपादितानि।

'देवदत्ता' इति। स्त्रिया एव कस्याश्चिदेषा संज्ञा। 'परिसृष्टा, प्रजाता' इति। प्रसूतेत्यर्थः। 'पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते' इति। परिसर्गः, प्रसवः, प्रजन इत्यर्थान्तरम्। स च न पुंयोगमन्तरेण सम्भवति, तस्मात् पुंयोगाद्धेतोः स्त्रियां वर्तते। 'परिसृष्टा, प्रजाता' इति। द्वौ प्रकृतौ। 'एते शब्दाः' इति बहुवचनं तु एवंजातीयकाः शब्दाः प्रसूतादयस्तदपेक्षं द्रष्टव्यम्। 'गोपालिकादीनाम्' इति। सिद्धये इति शेषः।

'सूर्याद्देवतायां चाब्वक्तव्यः' इति। ङीष एव प्रतिषेधे वक्तव्ये चाब्विधानमन्तोदात्तार्थम्। सूर्यशब्दोऽपमाद्युदात्तः, तत्र टापि सति आद्युदात्तत्वमेवावतिष्ठेत। 'सूरी' इति। सूर्यस्य स्त्री मानुषी कुन्त्यादिः, 'सूर्यतिष्य' (६.४.१४९) इति यलोपः॥

## ४९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्।

'येषाम्' इति। इन्द्रादीनां मृडान्तानां मातुलाचार्ययोश्च। 'अन्येषाम्' इति। हिमादीनाम्।

'हिमारण्ययोर्महत्त्वे' इति। महत्त्वयोगेनानयोः स्त्रीत्वम्, अन्यत्र नपुंसकत्वम्।

'दुष्टो यव' इति पाठः । 'यवानी' इति । जात्यन्तरमेवाभिधीयते, अयमेव च दोषो यद्युत यवत्वजातेरभावे तदाकारानकृतिः ।

'यवनाल्लिप्याम्' इति । केचिज्जनपदिनो यवनास्तेषां लिपिः, 'तस्येदम्' (४.३.१२०) इत्यणो बाधको ङीष् । लिपिशब्दः स्त्रीलिङ्गः ।

'उपाध्यायमातुलाभ्यां वा' इति । उपाध्यायमातुलाभ्यां यो ङीष् तत्सन्नियोगेनानयोर्वाऽऽनुगागमो भवतीति वक्तव्यमित्यर्थः । तत्रोपाध्यायस्याप्राप्तो मातुलस्य तु नित्यं प्राप्त आनुग्विकल्प्यते ।

'आचार्यादणत्वं च' इति । क्षुभ्नादिषु पठितव्यमित्युक्तं भवति ।

'अर्यक्षत्रियाभ्यां वा' इति । ङीषानुकौ द्वावप्यप्राप्तौ विकल्प्येते । 'स्वार्थ एवायं विधिः' इति । यदि तु पुंयोगेऽयं विधिः स्याच्छूद्रापि क्षत्रियस्य भार्या क्षत्रियाणी स्यात्, ब्राह्मणभार्या च क्षत्रियाणीन स्यात् । तस्मात् स्वार्थ एव स्त्रीत्वविशिष्टोऽयं विधिः ।

'मुद्गलात्' इति । ङीषो लित्त्वादानुगाकारस्य लित्स्वरः । अथ किमर्थमानुग्विधीयते, न अनुगेवोच्येत, अकारोच्चारणसामर्थ्यादतो गुणे पररूपं बाधित्वा सवर्णदीर्घत्वं भविष्यति, अन्यथा नुगेवोच्येत, यथैव तर्हि पररूपं न भवति तथैव सवर्णदीर्घत्वमपि न स्यात् ? नैष दोषः; यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, तस्मादानुगेव वक्तव्यः ।

अपर आह--'इन्द्रमाचष्टे इन्द्रयति, इन्द्रयतेः क्विप्, णिलोपः, इन्द्रः स्त्री इन्द्राणी, अत्र दीर्घस्य श्रवणम्, दीर्घोच्चारण सामर्थ्यादत इत्याधिकारो बाध्यते' इति, एवमपि क्विबन्तः पुंस आख्या न भवति ॥

## ५०. क्रीतात्करणपूर्वात् ।

पूर्वशब्दोऽवयववचन इत्याह—'करणं पूर्वमस्मिन्' इत्यादि । व्यवस्थावाचिनि तु पूर्वशब्दे करणं पूर्वस्मादिति वाच्यं स्यात् । एवं च क्रीतस्य करणवाचिशब्दान्तरमवयवो नोपपद्यत इति तद्व्यतिरिक्तमेव, प्रातिपदिकं करणपूर्वत्वेन विशेष्यते, क्रीतशब्देनापि विशेषितस्यैव विशेषणात् तदन्तविधिरित्याह—'क्रीतशब्दान्तात्प्रातिपदिकात्' इति । यदि तु व्यवस्थावाचिनं पूर्वशब्दमाश्रित्य क्रीतशब्दो विशेष्यते—करणं पूर्वमस्मादिति, ततो वाक्येऽपि स्यात्—अश्वेन क्रीतेति । तस्मादवयववाची पूर्वशब्दः, प्रातिपदिकं च विशेष्यमिति सम्यगुक्तम् । 'वस्त्रक्रीती' इति । 'गतिकारकोपपदानाम्' (व्या.प. १३८) इति वचनात् प्रागेव सुबुत्पत्तेः क्रीतशब्देन सह समासः ।

'टाबन्तेन समासः' इति । एकादेशस्य पूर्वं प्रत्यन्तवत्त्वात् कृदन्ततया अविघातादविरुद्धष्टाबन्तेन समासः । अथ टाबन्तेनापि समासे कस्मादेवात्र न भवति ? तत्राह—'अत इति' इति । ननूदाहरणवत्प्रागेव टाबुत्पत्तेरत्रापि समासः प्राप्नोति, वक्तव्यो वा विशेषः ? अत आह—'गतिकारकोपपदानाम्' इत्यादि । न तत्र बहुलग्रहणमस्तीति चेत्तत्राह—'कर्तृकरणे कृता बहुलम्' इति । 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्यनेन

तावदत्र समासः, स च बहुलग्रहणात् प्राक् सुबुत्पत्तेः क्वचिद्भवति, क्वचिदुत्पन्ने सुपीति मन्यते। एतावतैव च 'बहुलं तदुच्यते' इति सामान्येनोक्तम्, न पुनः 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्ययमेव समासः प्राक् सुबुत्पत्तेरिष्यते। यथा तु भाष्यं तथा नेतद्वक्ष्यते॥

## ५१. क्तादल्पाख्यायाम्।

'अल्पाख्यायामिति समुदायोपाधिः' इति। ननु चाल्पैरभ्रैर्विलिप्तेति पूर्वपदार्थस्यैवाल्पता गम्यते, न विलिप्तार्थस्य? एवं मन्यते—अभ्राणामल्पत्वे सति तद्विलेपनस्याल्पत्वमवश्यम्भावीति। 'अभ्रविलिप्ती' इति। वृत्तौ गतार्थत्वादल्पशब्दस्याप्रयोगः।

'चन्दनानुलिप्ता' इति। बहुलेन चन्दनेनानुलिप्तेत्यर्थः। कृद्ग्रहणपरिभाषया समुदायस्य क्तान्तत्वम्॥

## ५२. बहुव्रीहेश्चान्तोदात्तात्।

'बहुव्रीहिर्योऽन्तोदात्तः' इति। अत्र 'क्तात्' (४.१.५१) इत्यनुवृत्तिसामर्थ्यात् प्रत्ययग्रहणपरिभाषा, कृद्ग्रहणपरिभाषा च न प्रवर्त्तते इति बहुव्रीहेः क्तान्तत्वम। 'शङ्खभिन्नी' इति। 'निष्ठा' (२.२.३६) इति पूर्वनिपातो न भवति; 'जातिकालसुखादिभ्यः परवचनम्' (वा. ११६) इति वचनात्। शङ्खादयो हि जातिवचनाः, अत एव 'जातिकालसुखादिभ्यः' (६.२.१७०) इत्यन्तोदात्तत्वं भवति। 'गलोत्कृत्ती' इति। 'कृती छेदने' (धा पा. १४३५), उत्पूर्वात् क्तः। गलमुत्कृत्तमस्या इति विग्रहः।

'पादपतिता' इति। 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समासः, थाथादिस्वरेणान्तोदात्तत्वम्।

'अन्तोदात्ताज्जातप्रतिषेधः' इति। अन्तोदात्ताद्बहुव्रीहेर्ङीब्विधाने जातशब्दान्तात् प्रतिषेधो वक्तव्यः, स त्वन्तग्रहणादेव सिद्धः। कथम्? इहान्तग्रहणं न कर्त्तव्यम्, वर्णावनुदात्तावितिवदुदात्तान्तादिति विज्ञास्यते, तत् क्रियते नित्ययोगे यथा बहुव्रीहिर्विज्ञायेत। दन्तजातादौ तु 'वा जाते' (६.२.१७१) इति विकल्पेनान्तोदात्तत्वम्।

[1]'पाणिगृहीत्यादीनामर्थविशेषे' इति। सिद्धये इति शेषः। अग्निसाक्षिकं यस्याः पाणिर्गृह्यते सा पाणिगृहीतीति भवति। 'कथञ्चित्' इति। यथोक्तप्रकारादन्येन प्रकारेणेत्यर्थः।

'अबहुनञ्' इत्यादि। बह्वादिपूर्वपदाद्बहुव्रीहेर्ङीष् न भवतीति वक्तव्यमित्यर्थः। 'बहुकृता' इति। बहूनि कृतान्यनयेति विग्रहः, 'बहोर्नञ्वदुत्तरपदभूम्नि' (६.२.१७५) इत्यन्तोदात्तत्वम्। 'अकृता, सुकृता' इति। न विद्यते कृतमनया, शोभनं कृतमनयेति विग्रहः, 'नञ्सुभ्याम्' (६.२.१७२) इत्यन्तोदात्तत्वम्। 'मासजाता' इति। मासो जातोऽतीतोऽस्याः। सुखं जातं प्राप्तमनया, दुःखं जातमनयेति विग्रहः। सुखादयः 'सुखादिभ्यः कर्तृवेदनायाम्' (३.१.१८) इत्यत्र पठिता गृह्यन्ते। अथ वा—बहुव्रीहेश्च जातिपूर्वादिति वक्तव्यम्,

1 'पाणिगृहीत्यादीनां विशेषे'—मुद्रितपाठः—तारा. वाराणसी १९६६

बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु प्रतिषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यते इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः ॥

## ५३. अस्वाङ्गपूर्वपदाद्वा ।

'शार्ङ्गजग्धी' इत्यादि । शार्ङ्गं जग्धमनया, पलाण्डुर्भक्षितोऽनयेति विग्रहः । शार्ङ्गीविरभक्ष्यजातिः । सर्वत्र 'जातिकालसुखादिभ्यः' (६.२.१७०) इत्यन्तोदात्तत्वम् ।

'वस्त्रच्छन्ना' इति । 'छद अपवारणे' (धा.प. १९३५) चुरादिः, 'वा दान्तशान्त' (७.२.२७) इत्यादिना छन्नशब्दो निपातितः, अत्र 'अनाच्छादनात्' (६.२.१७०) इति प्रतिषेधात् पूर्वपदप्रकृतिस्वरत्वमेव भवति ।

'प्रवृद्धा च' इत्यादिना विग्रहविशेषेण तत्पुरुषं दर्शयति ।

## ५४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।

'अतिकेशी' इति । अतिक्रान्ता केशानिति तत्पुरुषः, 'एकविभक्ति च' (१.२.४४) इति केशशब्दस्योपसर्जनत्वम् । 'अशिखा' इति । असत्युपसर्जनग्रहणेऽत्रैव प्राप्नोति, न मूलोदाहरणेषु; 'अनुपसर्जनात्' (४.१.१४) इत्यधिकारात् । अथ बहुव्रीह्यधिकारादत्र न भविष्यतीत्युच्येत ? अतिकेशीत्यत्रापि तर्हि न स्यात् । 'अङ्गगात्र' इत्यादिभाष्येऽनुक्तमप्येतत् प्रयोगबाहुल्याद्वृत्तिकारेणोक्तम् ।

यद्यत्र स्वमङ्गं स्वाङ्गं गृह्येत—श्लक्ष्णमुखा शाला, अत्रापि प्राप्नोति, मुखस्य शालाङ्गत्वात्; दीर्घकेशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाभावात् ? तदव्याप्त्यतिव्याप्तिपरिहारार्थं स्वाङ्गं परिभाष्यते—'अद्रवम्' इति । तत्र प्राणिस्थं स्वाङ्गमित्यनेन श्लक्ष्णमुखा शालेत्यत्र न भवति । एवमपि बहुकफा—अत्र प्राप्नोति ? तदर्थमाह—'अद्रवम्' इति । द्रवतीति द्रवम्, ततोऽन्यदद्रवम् । एवमपि बहुज्ञाना—अत्रापि प्राप्नोति ? अत आह— 'मूर्तिमत्' इति । असर्वगतद्रव्यपरिमाणा मूर्तिः, असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्तिः, स्पर्शवद्द्रव्यपरिमाणं मूर्तिरित्यन्ये, सा यस्यास्ति तन्मूर्तिमत् । एवमपि बहुशोभा—अत्र प्राप्नोति ? इत्यत आह—'अविकारजम्' इति । विकारः = वातादिवैषम्यम्, ततो यज्जायते तन्न भवतीत्यविकारजम् । शोफस्तु श्वयथुसंज्ञको विकारजः । यदि प्राणिस्थं स्वाङ्गम्, रथ्यादिपरिगतानां केशानां स्वाङ्गत्वं न स्यात्, सम्प्रत्यप्राणिस्थत्वात् ततश्च दीर्घकेशी रथ्येति न सिद्ध्यत्यत आह—'अतत्स्थम्' इति । सम्प्रत्यप्राणिस्थमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वाङ्गं भवत्येवेत्यर्थः । एवमपि प्रतिमावयवानां मुखादीनां स्वाङ्गत्वं न प्राप्नोति, अप्राणिस्थत्वात्, ततश्च दीर्घमुखी प्रतिमेत्यत्र न सिद्ध्यति ? तत्राह—'तेन चेत्' इति । अतत्स्थमित्यनुषङ्गः । अप्राणिस्थमपि मुखादि स्वाङ्गं तेन चेन्मुखादिना तदप्राणिद्रव्यं तथा युतं भवति यथा प्राणिद्रव्यमित्यर्थः । अन्येषां पाठः— 'तस्य चेत्तत्तया युतम्' इति । तत्रार्थः—अप्राणिस्थमपि मुखादि स्वाङ्गं तस्य चेदप्राणिनः तन्मुखादि तथा युतं भवति तादृशं संस्थानं भवति यादृशं संस्थानं प्राणिन इत्यर्थः ॥

## ५५. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।

'सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव' इति । कथम्? नासिकोदरयोस्तावदयं योगः पुरस्तादपवादन्यायेनानन्तरं बह्वज्लक्षणमेव प्रतिषेधं बाधते, ओष्ठादिष्वपि मध्येऽपवादन्यायेन (व्या.प १०) पूर्वं संयोगोपधलक्षणमेव प्रतिषेधं बाधते, न सहादिलक्षणम्; अतोऽसौ भवत्येव—सनासिका, अनासिका, विद्यमाननासिकेति । 'बिम्बोष्ठी' इति । 'ओत्वोष्ठयोर्वा समासे पररूपं वक्तव्यम्' (वा. ६८७) इति पररूपम् ।

'कबरपुच्छी' इति । कबरम् = नानावर्णं पुच्छमस्याः स मयूरी । मणिः पुच्छमस्याः मणिपुच्छी, विषं पुच्छमस्याः विषपुच्छी वृश्चिकी । उलूक इव पक्षोऽस्याः, उलूक इव पुच्छमस्या इति विग्रहः ॥

## ५६. न क्रोडादिबह्वचः ।

'कल्याणक्रोडा' इति । अश्वानामुरः क्रोडा, स्त्रीलिङ्गोऽयम् । तत्र बहुव्रीहौ पूर्वपदस्य पुंवद्भावः, उत्तरपदस्योपसर्जनह्रस्वत्वम् । 'कल्याणनखा' इति । अग्रन्थोऽयम्; 'नखमुखात्संज्ञायाम' (४.१.५८) इति प्रतिषेधात्, असंज्ञायां ङीष् दुष्टत्वात्, तस्मात् 'कल्याणोखा' इति पाठः । उखेति हि पठ्यते—'क्रोडा बालखुरोखाः शफो गुदं भगगलौ च' इति ॥

## ५७. सहनञ्विद्यमानपूर्वाच्च ।

पूर्वग्रहणमकृत्वा 'सहनञ्विद्यमानेभ्यः' इत्युच्यमाने सहादिभ्यः परं यत्स्वाङ्गं तदन्तान्ङीष् न भवतीत्यर्थो भवति, ततश्चेह प्रतिषेधः प्रसज्येत—विद्यमानं मुखमस्य विद्यमानमुखः, कल्याणो विद्यमानमुखोऽस्याः कल्याणविद्यमानमुखीति, भवति ह्येतद्यथोक्तविशेषणम्; इह च न स्यात्—विद्यमानकल्याणमखेति, न ह्यत्र यथोक्तं विशेषणमस्ति, तस्मात् पूर्वग्रहणम् ॥

## ५८. नखमुखात्संज्ञायाम् ।

'शूर्पणखा' इति । 'पूर्वपदात्संज्ञायामगः' (८.४.३) इति णत्वम् । एवं च शूर्पणखा वा राक्षसी शूर्पनखी वा । यदि योगमात्रं न संज्ञा—शूर्पनखी, संज्ञायाम्—शूर्पणखा; न पुनः शूर्पणखीति णत्वङीषोः समावेशः साधुः ॥

## ५९. दीर्घजिह्वी च च्छन्दसि ।

'निपातनं नित्यार्थम्' इति । 'दीर्घजिह्वात्' इत्युच्यमाने प्रकृतस्य ङीषो विकल्पितत्वादिहापि विकल्पो विज्ञायते ॥

## ६०. दिक्पूर्वपदान्ङीप् ।

दिक्पूर्वपदान्ङीपोऽनुदात्तत्वम्, 'स्वाङ्गाच्च' (४.१.५४) इत्यादिना विहितस्य ङीष एवास्मिन् विषयेऽनुदात्तत्वं वक्तव्यम्, ङीब्विधाने ह्यन्यत्रापि ङीष्विषयान्ङीप्प्रसङ्गः । अपूर्वे हि ङीपि विधीयमाने प्राग्गुल्फा, प्राग्जघनेति ङीष्विषयादन्यत्रापि ङीप्प्राप्नोति; ङीषः प्रतिषेधाभावात् ? इत्यस्मिन् पूर्वपक्षे इदमाह—'विधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते' इति । तत्र विधिविषयापेक्षायाः फलं दर्शयति—'यत्र ङीष्विहितः' इति । 'स्वरे विशेषः' इति । ङीपः पित्त्वादनुदात्तत्वं भवति, ङीषस्तु प्रत्ययाद्युदात्तत्वप्रसङ्गः । 'प्राङ्मुखा' इति । ङीपा मुक्ते 'स्वाङ्गाच्चोपसर्जनात' (४ १ ५४) इति ङीषपि न भवति, कथम् ? उक्तमेतत्—'यत्रोत्सर्गापवादौ द्वावपि विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्तते' इति ।

प्रतिषेधापेक्षायाः फलं दर्शयति—'इह न भवति' इति । एवं च कृत्वा वाक्यभेदः कर्त्तव्यः—दिक्पूर्वपदादसंयोगोपधस्वाङ्गान्तान्नामिकाद्यन्तान्ङीष् भवति; क्रोडादिबह्वज्न्तात्तु नेति अपरः कल्पः, अत्र ङीषनुवर्त्तते, तस्य दिक्पूर्वपदादिति पञ्चम्या षष्ठी प्रकल्प्यते, दिक्पूर्वपदादुत्तरस्य ङीषो ङीबादेशो भवतीत्यर्थः । तेन यत्र ङीष् तत्रैव ङीबिति सिद्धम् । एवं चोत्तरत्र ङीषेव स्वर्यत इत्युपपन्नं भवति ॥

## ६१. वाहः ।

'सामर्थ्यात्' इति । कर्मण्युपपदे वहेर्ण्विधानात केवलस्य वाहः सम्भवो नास्तीत्येतत्सामर्थ्यम् । 'दित्यौही' इति । 'छन्दसि सहः' (३ २.६३) 'वहश्च' (३ २.६४) इति ण्विः, उपधावृद्धिः, ङीषि 'वाह ऊठ्' (६.४.१३२), तत्र सम्प्रसारणमित्यनुवृत्तेः 'सम्प्रसारणाच्च' (६.१.१०८) इति पूर्वरूपत्वम्, 'एत्येधत्यूठ्सु' (६.१.८९) इति वृद्धिः ॥

## ६२. सख्यशिश्वीति भाषायाम् ।

भाषायामित्युच्यते, तत्रैतन्न सिध्यति—सखी सप्तपदी भव, आ धेनवो धुनयन्तामशिश्वीरिति ? नैष दोषः; इतिकरणोऽत्र क्रियते, स भिन्नक्रमो भाषायामित्यस्यानन्तरं द्रष्टव्यः, स च प्रकारे वर्तते, तेन छन्दस्यपि क्वचिद्भविष्यति । भाषाग्रहणं तु नित्यार्थम् ॥

## ६३. जातेरस्त्रीविषयादयोपधात् ।

अस्त्रीविषयादित्यनञ्भावे विषयशब्द इत्याह—'न च स्त्रियाम्' इति । स्त्रियामेव यस्य नियमेन वृत्तिस्तत्स्त्रीविषयम्, ततोऽन्यदस्त्रीविषयमित्यर्थः ।

इह लौकिकजातिग्रहणे ब्राह्मणत्वादीनां गोत्रस्य च नाडायनादेर्जातित्वे वादीनां विप्रतिपत्तेः, चरणशब्दानां च कठादीनामध्ययनक्रियासम्बन्धनिबन्धनत्वेन पाचकादिवत् क्रियाशब्दत्वेनाव्याप्तिरित्यभिमतां जातिं लक्षयति—'आकृतिग्रहणा जातिः' इति । गृह्यतेऽनेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते, पश्चादाकृति-

शब्दसमवधाने स्त्रीत्वं प्रतीयमानं बहिरङ्गत्वात् प्रत्ययस्य निमित्तं न भवति। ग्रहणमाकृतिर्यस्या इति ग्रहणरूपोद्देशेनाकृतिणरूपता विधीयते, न त्वाकृतिरूपोद्देशेन ग्रहणरूपतेत्यर्थः। आकृतिः = संस्थानम्, सा ग्रहणं यस्याः साऽऽकृतिग्रहणा, अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः। अनेन गोत्वादिजातिर्लक्षिता। ब्राह्मणत्वादिजातिस्तु न संगृहीता भवति, ब्राह्मणक्षत्त्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाऽऽह--'लिङ्गानां च' इति। सर्वाणि लिङ्गानि न भजतीत्ययमर्थो विवक्षितः। तत्र सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वान्नञो णिच्प्रत्ययः, समासश्च। 'लिङ्गानाम्' इति कर्मणि षष्ठी। अप्राप्तप्रापणार्थं चेदं वचनम्, न त्वाकृतिग्रहणेत्यस्य सङ्कोचकम्; तेन तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवत्येव। इह कस्मान्न भवति--देवदत्तः, देवदत्तेति? उपदेशापेक्षमिदं लक्षणम्। कोऽर्थः? असर्वलिङ्गेषु येषु जातिवाचित्वमाचार्या उपदिशन्ति तेष्वेव भवतीत्यर्थः। आकृतिग्रहणाया जातेरेकत्वनित्यत्वप्रत्येकपरिसमाप्तत्वलक्षणान धर्मानाह--'सकृत्' इति। एकस्मिन् पिण्डे सकृदुपदिष्टा 'अयं गौ' इति पिण्डान्तरे निर्ग्राह्या, निश्चेतुं शक्येत्यर्थः। यदि चैका न स्यात्, नैव गृह्येत। तथा नित्यत्वाभावेऽपि पिण्डेन सह विनाशात् पिण्डान्तरे न गृह्येत। यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात्, तस्मिन्नपि तावत्पिण्डे सर्वात्मना न गृह्येत यत्राख्याता, किं पुनः पिण्डान्तरे! कथं पुनरेकमेव वस्तु बहुत्र युगपत् कार्त्स्न्येन वर्त्तते, न हि देवदत्तस्तदानीमेव स्रुघ्ने भवति मथुरायां च? दृश्यते चेत् को दोषः न हि दृष्टेऽनुपपन्नं नाम! 'गोत्रम्' इति। अपत्यमित्यर्थः। चरणशब्देन शाखाध्यायिनो ह्युच्यन्ते गोत्रस्यानाकृतिग्रहणत्वात् सर्वलिङ्गत्वाच्च पृथगुपादानम्, 'नाडायनं नपुंसकम्' इति दर्शनात्। चरणशब्दस्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्द एव, न जातिशब्दः।

'कुक्कुटी, सूकरी' इति। आकृतिग्रहणाया जातेरुदाहरणम्। 'ब्राह्मणी, वृषली' इत्यसर्वलिङ्गायाः। तत्र ब्राह्मणीति रूपोदाहरणम्। शार्ङ्गरवादिष्वस्य पाठाद्वृषलीत्येतदेव ङीष उदाहरणम्। 'नाडायनी, चारायणी' इति। गोत्रलक्षणायाः 'नडादिभ्यः फक्' (४.१.९९)। अपत्यमात्रस्य ग्रहणादनन्तरापत्येऽपि भवति--अवन्ती, कुन्तीति, 'इतो मनुष्यजातेः' (४.१.६५) इति ङीष्भवति। इह तु कुलस्यापत्यं कुलीना ब्राह्मणीति ङीष् न भवति; अजादिषु दर्शनादित्याहुः। 'कठी' इति। कठेन प्रोक्तम्, वैशम्पायनान्तेवासित्वाणिनिः, तस्य 'कठचरकात्' (४.३.१०७) इति लुक्, ततः 'तदधीते' (४.२.५९) इत्यण्, तस्य 'प्रोक्ताल्लुक्' (४.२.६४) इति लुक्। 'बह्वृची' इति। बह्वृच ऋचोऽस्या इति बहुव्रीहिः, 'बह्वृचश्चरणाख्यायाम्' ( ? ) इत्यकारः समासान्तः। कथं पुनः स्त्री नामाधीते? सा नामाभिगीष्ट तद्वंश्यत्वात्तु ताच्छब्द्यं भविष्यति, यथा--अनधीयमाने माणवके।

अत्रापरं जातिलक्षणमुक्तं भाष्ये--

> प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
> असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥ इति॥

सत्त्वस्य प्रादुर्भावविनाशाभ्यां याऽऽविर्भावतिरोभावौ प्राप्नोति, यावद्द्रव्यभाविनीत्यर्थः। गुणैश्च युगपद्द्रव्येण सम्बध्यते यथा निर्गुणं द्रव्यं न भवति, तथा जातिरहितमपीत्यर्थः। 'बह्वर्थाम्' इति। अर्थशब्दो विषयवाची, बहुविषयां बहुव्यक्तिव्यापिनीमित्यर्थः। 'असर्वलिङ्गाम्' इति। पूर्ववल्लक्षणान्तरम्। तत्र यथा पूर्वलक्षणं तथा कुमारीभार्या इति भवितव्यम्, कथम्? कौमारस्यायावद्द्रव्यभावित्वेऽपि आकृतिग्रहणत्वाद्भवति जातिः, ततश्च 'जातेश्च' (६.३.४१) इति पुंवद्भावप्रतिषेधः। वृद्धा, स्थविरेत्यादौ च जातिलक्षणो ङीप्प्राप्नोति, यथा पुनरुत्तरं तथा कौमारादिकं जातिर्न भवति; अयावद्द्रव्यभावित्वात्। तत्र पूर्वकं लक्षणं

भाष्यकारस्याभिमतम्, नोत्तरम्; अपर आहेत्यभिधानात् । तथा च ङ्याप्सूत्रे (४.१.१) युवतितरेत्यत्र 'तसिलादिषु' (६.३.३५) इति प्राप्तस्य पुंवद्भावस्य 'जातेश्च' (६.३.४१) इति निषेध आश्रितः । अत एव वृत्तिकारेणाप्येतदेव लक्षणमुपन्यस्तमिति केचिदाहुः । एवमपि युवजानिरित्यत्र पुंवद्भावो न प्राप्नोति, तस्माद् द्वितीयमेव लक्षणं साधीयो मन्यामहे । अत एव वृद्धा, स्थविरेति जातिलक्षणो ङीष्न भवति । युवतितरेत्यत्र तु भाष्यकारप्रयोगात् पुंवद्भावाभावः ।

'मुण्डा' इति । गुणशब्दोऽयम । 'मक्षिका' इति । स्त्रियामेवायं नियमः । इह कस्मान्न भवति—माला, बलाकेति ? मालाशब्दो मलनं माल इति घञन्तः पुंल्लिङ्गः, क्षेत्रविशेषे नपुंसकः, स्रजि स्त्रीलिङ्गः । बलाकाशब्दो हि बलां कायतीति यौगिकः सर्वलिङ्गः, बकजातिवचनः स्त्रीलिङ्गः । नात्र यथाकथंचिदस्त्रीलिङ्गविषयत्वं विवक्षितम, किं तर्हि ? यस्मिन् प्रवृत्तिनिमित्ते स्त्रीलिङ्गस्तस्मिन्नेव निमित्ते यल्लिङ्गान्तरेऽपि वर्त्तते तदस्त्रीविषयम् । यथा पुनरयं शब्दार्थस्तथा 'स्त्रियाः पुंवत्' (६.३.३४) इत्यत्र वक्ष्यामः । तेन निमित्तभेदेन नानालिङ्गेषु नायं विधिर्भवति । यद्येवम्, द्रोणी, कुटी, पात्रीत्यत्र न प्राप्नोति ? द्रोणशब्दः प्रमाणविशेषे पुंल्लिङ्गः; गवाविन्यां तु स्त्रीलिङ्गः; कुटशब्दो घटे पुंल्लिङ्गः, गेहे तु स्त्रीलिङ्गः; पात्रशब्दो भाजनसामान्येऽर्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्रीलिङ्गः, गौरादिपाठात् सिद्धम् ।

'हयगवय' इत्यादि । गौरादिष्विदानीन्तनैर्हयादयः प्रक्षिप्ता इति वार्त्तिककारवचनाद्विज्ञायते ॥

## ६४. पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ।

'स्त्रीविषयत्वादेतेषाम्' इति । पूर्वत्र समानायामाकृतौ यदस्त्रीविषयमित्याश्रयणान्निमित्तभेदेन नानालिङ्गानामेषां न सिध्यतीति भावः । ओदनपाकादयः संज्ञाशब्दा यथाकथञ्चिद्व्युत्पाद्याः ॥

## ६५. इतो मनुष्यजातेः ।

'अवन्ती, कुन्ती' इत्यादि । अवन्तिकुन्तिशब्दाभ्यामपत्येऽर्थे 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१) तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' (४.१.१७६) इति लुक् । 'दाक्षी, प्लाक्षी' इति । 'अत इञ्' (४.१.९५) ।

'विट्, दरत्' इति । विट्शब्दाज्जनपदशब्दात् क्षत्रियादञ्, दरच्छब्दात् 'द्व्यञ्मगध' (४.१.१७०) इत्यादिनाण, तयोः 'अतश्च' (४.१.१७७) इति लुक् । उदाहरणसिद्धयेमेव 'अतः' इत्यस्यानुवृत्तिर्न शक्याऽऽश्रयितुमित्यत्रापि प्रसङ्गः ।

'औदमेयी' इति । उदकं मेयमस्य उदमेयः 'उदकस्योदः संज्ञायाम्' (६.३.५७) इत्युदभावः, 'तस्यापत्यम्' (४.१.९२), 'अत इञ्' (४ १.९५) ।

'सौतङ्गमी, मौनिचित्ती' इति । सुतङ्गममुनिचित्तशब्दाभ्यां 'तेन निर्वृत्तम् (४.२.६८) इत्यर्थे इञ्प्रत्ययः ॥

## ६६. ऊङुतः ।

'कुरुः' इति । 'कुरुनादिभ्यो ण्यः' (४.१.१७२) तस्य 'स्त्रियामवन्ति' (४.१.१७६) इत्यादिना लुक् । 'ब्रह्मबन्धूः, जीवबन्धूः' इति । वृत्तस्वाध्यायहीनायां ब्राह्मणजातावेतौ बहुव्रीही वर्त्तेते ।

'ङकारः' इत्यादि । 'नोधात्वोः' इत्युच्यमाने यवाग्वा, यवाग्वै—अत्रापि 'उदात्तयणो हल्पूर्वात्' (६.१.१७४) इति प्राप्तस्य विभक्त्युदात्तस्य निषेधः स्यात्, वर्णग्रहणे ह्यर्थवद्ग्रहणपरिभाषा (व्या.प. १) नोपतिष्ठते । अथ दीर्घोच्चारणं किमर्थम्, न 'उङुतः' इत्येवोच्येत, सवर्णदीर्घत्वेन सिद्धम ? न सिध्यति; सत्यपि सवर्णदीर्घत्वे, 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इति ह्रस्वत्वं प्राप्नोति । न प्राप्नोति किं कारणम् ? 'उभयत आश्रयणे नान्तादिवत्' (व्या.प. ५१), तथा हि एकदेशस्यान्तवत्त्वेन प्रतिपदिकसंज्ञा सम्पाद्या, 'अप्रत्ययः' (१.२.४५) इति निषेधात् ; आदिवत्त्वेन च स्त्रीप्रत्ययत्वं सम्पाद्यम् । इह तर्हि 'ब्रह्मबन्धूच्छत्रम्—यवतुकोरसिद्धत्वादह्रस्वलक्षणो नित्यस्तुक् प्रसज्येत, दीर्घोच्चारणात्त्वेकादेशस्यासिद्धत्वेऽपि दीर्घ एवायमिति 'दीर्घात्, पदान्ताद्वा' (६.१.७५,७६) इति विकल्पः सिध्यति ? एतदपि नास्ति प्रयोजनम्; पदान्तपदाद्योरेकादेशोऽसिद्धः, न चैष पदान्तपदाद्योरेकादेशः । तस्मादनर्थकं दीर्घोच्चारणम् ? इत्याशङ्क्याह—'दीर्घोच्चारणं कपो बाधनार्थम्' इति । 'शेषाद्विभाषा' (५.४.१५४) इति कपोऽवकाशः—अयवकः, अव्रीहिकः; ऊङोऽवकाशः—कुरूरिति; ब्रह्मबन्ध्वादेर्बहुव्रीहेरुभयप्रसङ्गे परत्वात् कप् प्राप्नोति, दीर्घोच्चारणान्न भवति, कथम ? उकारद्वयं दीर्घेण निर्दिष्टम्, तत्र द्वितीय उकारः कपो बाधनार्थः । 'अध्वर्युः' इति । अध्वरं यातीति 'मृगय्वादयश्च' (द.उ. १.१२१) इत्युणादिषु दर्शनात् कुप्रत्ययोऽध्वरशब्दस्यान्तलोपश्च । चरणलक्षणेयं जातिः, अध्वर्युशाखाध्यायिनि वंशे भवेत्यर्थः ।

'अप्राणिजातेश्च' इति । अत्र 'उतः' इति नापेक्ष्यते, तेनालाबू-कर्कन्धूशब्दाभ्यां दीर्घान्त ॰ ऽमपि भवति । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (द.उ. १.१६४) इति वर्तमाने 'णिन्कशिपद्यर्तेः' (द उ. १.१६८) इत्यतो णिदिति च, 'नञि लम्बेर्नलोपश्च' (द.उ. १.१७०), 'लबि अवस्रंसने' (धा.पा. ३७९) तस्मान्नञ्पूर्वादूप्रत्ययो भवति नलोपश्च, णित्वाद्वृद्धिः, 'अन्दूदृम्भूकर्कन्धूः' (द.उ. १.१७६) इति निपातनादूकारान्तः कर्कन्धूशब्दः । एवमलाबू—कर्कन्धूशब्दौ दीर्घान्तौ । ऊङ्विधानमलाब्वा, कर्कन्ध्वा इत्यादौ 'नोङ्धात्वोः' (६.१.१७५) इति विभक्त्युदात्तत्वप्रतिषेधार्थम् । 'कृकवाकुः' इति । 'कृके वचः कश्च' (द.उ. १.९१) कृकशब्द उपपदे वकेर्धातोरुण् प्रत्ययो भवति, कश्चान्तादेशः । 'रज्जुः' इति । 'सृजेरसुम् च' (द उ. १ १००), आदिलोपः प्रकृतः, सृजेरुप्रत्ययः, आदेश्च लोपोऽसुगागमश्च, ऋतो यणादेशः, सकारस्य जश्त्वचर्त्वे, सृज्यतेऽसौ रज्जुरिति । 'हनुः' इति । 'युस्निहि' (द.उ. १.९५) इत्यादिना हन्तेरुप्रत्ययः ।।

## ६७. बाह्वन्तात् संज्ञायाम् ।

## ६८. पङ्गोश्च ।

'श्वशुरस्य' इति । पुंयोगलक्षणस्य ङीषोऽपवाद ऊङ् विधीयते, 'शावशेराप्तौ' (द उ. ८.२५)

शुशब्देऽश्नोतेरुरन् प्रत्ययो भवति। किमिदं शु इति? आशुशब्दस्यायमादिलोपो निपातितः। आश्वाप्तव्यः श्वशुरः, तस्य स्त्री श्वश्रूः, 'श्वशुरः श्वश्र्वा' (१.२.७१) इत्यादिनिपातनाद्विभक्त्यादि प्रातिपदिककार्यं भवति ॥

## ६९. ऊरूत्तरपदादौपम्ये।

उपमीयतेऽनयेत्युपमा, तद्भाव औपम्यम्। कथं 'विचकरे च करेणूकरोरुभिः' इति? निरङ्कुशाः कवयः; 'करेण वरोरुभिः' इति पाठः—करेण विचकरे वरोरुभिरिति ॥

## ७०. संहितशफलक्षणवामादेश्च।

संहितशब्दः सहितपर्यायः, लक्षणशब्दोऽर्शआद्यच्प्रत्ययान्तः, वामशब्दः शोभनपर्यायः।

'सहितसहाभ्यां च' इति। 'समो वा हिततततयोः' इति मलोपे सति यः सहितशब्दस्तस्य संहितग्रहणेनैव सिद्धम्, एकदेशविकृतस्यानन्यत्वात्। यस्तु सह हितेन वर्तते इति व्युत्पन्नः सहितशब्दस्तस्येदं ग्रहणमित्याहुः। 'सहोरूः' इति। सहेते इति सहौ, तादृशावूरू यस्या इत्यर्थः। विद्यमानस्य वा सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः ॥

## ७१. कद्रुकमण्डल्वोश्छन्दसि।

गुग्गुल्वादीनां छन्दसि व्यत्ययेन स्त्रीत्वम्। पतयालुशब्दः 'स्पृहिगृहि' (३.२.१५८) इत्यादिनाऽऽलुजन्तः ॥

## ७२. संज्ञायाम्।

## ७३. शार्ङ्गरवाद्यञो ङीन्।

'एतेऽणन्ताः' इति। शृङ्गरु, कपट, गुग्गुलु, ब्रह्मन्—इत्येतेभ्यः प्राग्दीव्यतोऽण्, गोतमशब्दादृष्यण्, गौरादिष्वप्ययं पठितः। 'एते ढगन्ताः' इति। बाह्वादित्वमुक्तम्। कमण्डलुशब्दाच्चतुष्पाद्भ्यो ढञ्, इतरेभ्यस्तु शुभ्रादिलक्षणो ढक्। 'एतौ फगन्तौ' इति। वात्स्यशब्दात् गर्गादियञन्ताद्यूनि 'यञिञोश्च' (४.१.१०१) इति फक्। ननु न स्त्रियां युवसंज्ञा, 'गोत्राद्यून्यस्त्रियाम्' (४.१.९४) इति वचनात्, गोत्रे च 'एको गोत्रे' (४.१.९३) इति नियमः? एवं तर्हि वात्स्यायनशब्दस्यास्मिन् गणे पाठसामर्थ्यात् स्त्रियां युवसंज्ञा भविष्यति, गोत्र एव वा प्रत्ययद्वयम्। मुञ्जशब्दो नडादिः। 'जातिः' इति। गोत्रलक्षणा। 'ढगन्तः' इति। कोकसाशब्दः शुभ्रादिः। 'ञ्यङन्तौ' इति। 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१) इति कवि—शिविभ्यां ञ्यङ्, 'यङश्चाप्' (४.१.७४) अत्र प्राप्नोति। 'एहि, पर्येहि' इति। 'ईह चेष्टायाम्' (धा.पा ६३२) आङ्पूर्वात्परिपूर्वाच्च 'सर्वधातुभ्य इन्' इतीन् प्रत्ययः, अश्मरथशब्दो गर्गादिः, उदपानशब्दः शुण्डिकादिः, उत्सादिश्च, तत्राह—'शुण्डिकाद्यणन्तः प्रयोजयति' इति। अन्ते तु ङीपो ङीनो वा नास्ति विशेषः।

'जातिः' इति । अराल-चण्डालयोरसर्वलिङ्गत्वाज्जातित्वम् । वतण्डशब्दस्य गोत्रत्वात् । वतण्डस्यापत्यं स्त्री 'वतण्डाच्च' (४.१.१०८) इति यञ, 'लुक् स्त्रियाम्' (४.१.१०९) इति तस्य लुक् । 'भोगवद्गौरिमतोः' इति । मत्वन्तत्वात् 'उगितश्च' (६.३.४५) इति ङीपि प्राप्ते वचनम् । ननु भोगशब्दो घञन्तः, गौरिशब्दः 'अत इञ्' (४.१.९५) इतीञन्तः, तौ ञित्स्वरेणाद्युदात्तौ, ताभ्यां मतुप्, पित्त्वादनुदात्तः, ततश्च न ङीब्ङीनोरत्रास्ति विशेषः ? तत्राह—'घादिषु नियम्' इति । उगिल्लक्षणे ङीपि सति 'नद्याः शेषस्यान्यतरस्याम्' (६.३.४४), 'उगितश्च' (६.३.४५) इति विकल्पेन ह्रस्वत्वं स्यात्, ङीनि तु सति 'घरूपकल्प' (६.३.४३) इति नित्यं सम्भवति । कथं भवति, यावता उगितः परा या नदी तस्या विकल्पो विहितः, ङीनपि ह्युगितः परा नदी, भोगवद्गौरिमतोरुगित्वात् ? नैष दोषः; 'उगितश्च' (६.३.४५) इति इत्यर्थेऽयं चशब्दः, उगित इत्येवमुगित्संशब्दनेन या नदी विहिता न चानेन विहितो ङीनेवं विहिता नदी भवति । यथा तु 'युवोरनाकौ' (७.१.१) इत्यत्र भाष्यम्, तथोगितः परा या नदीत्येतदेव स्थितम् । संज्ञाया अन्यत्र ङीबेव भवति ह्रस्वश्च विकल्पितः ।

'नृनरयोर्वृद्धिश्च' इति । नृशब्दादृन्नेभ्यो ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम् । वृद्धिश्चेति, वक्ष्यामीति च अन्यतरस्य ग्रहणेऽपि नारीतीष्टं सिद्धम्, अन्यतरस्यानिष्टनिवृत्त्यर्थं तु द्वयोरुपादानम् । तत्र नरशब्देऽन्त्यस्य वृद्धौ सत्यां यस्येतिलोपादानर्थक्यमिति यस्येति लोपस्तावद्भवति, तत्र कृते रेफस्य वृद्धिः प्राप्नोति, का ? अविशेषात्पर्यायेण सर्वैव ? नैष दोषः, 'स्थानेऽन्तरतमः' (१.१.५०) इत्यत्रान्तरतमे स्थाने षष्ठीत्यपि पक्षो व्याख्यातः, ततो नृनरयोरिति यैषा षष्ठी सा वृद्धेरन्तरतमे नृनरावयवे स्थानिन्यनुसंह्रियते । यत्र च षष्ठी तत्रादेश इत्यकारस्यैव भविष्यति । अत्र पुत्रशब्दं केचित् पठन्ति, न स केवलः स्त्रियां वर्तत इति तदन्तस्य समासस्य ग्रहणम् । तत्रापि बहुपुत्रा, अतिपुत्रेत्यादावनुपसर्जनाधिकारान्न भवति । क्व तर्हि भवति ? पुत्रप्रधाने । ननु पुत्रप्रधाने समासे सैव पुंल्लिङ्गता ? सत्यम्; 'सूतोग्रराजभोजमेरुभ्यो दुहितुः पुत्रड्वा' (वा. ७५३) इति वार्त्तिककारेण यत्र पुत्रडादेशो विहितस्तान्युदाहरणानि । सूतपुत्री, राजपुत्रीति—अत्र स्वभावात् पुत्रशब्दो दुहितृशब्देन समानार्थः, न पुत्रडादेश इति पठतामभिप्रायः ।

अन्ये तु 'प्रद्योतपुत्री शैलपुत्रीति वार्तिकविषयादन्यदेव ङीन उदाहरणम्, पुत्रडादेशस्तु ङीपि स्वरार्थः' इति मन्यन्ते, नात्राप्तभाषितमस्ति ॥

## ७४. यङश्चाप् ।

पकारः 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यत्र सामान्यग्रहणार्थः, स्वरस्तु परत्वाच्चित्स्वर एव भवति । 'ष्यङः ष्यङश्च सामान्यग्रहणम्' इति । यद्यपि ष्यङ् स्त्रियामेव विधीयते, तथापि ङित्करणसामर्थ्यात्तस्याप्यत्र ग्रहणमिति भावः । 'आम्बष्ठ्या' इत्यादि । अम्बष्ठादिभ्योऽपत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१) । शर्कराक्षपूतिमाषगो-'कारीषगन्ध्या' इति । स्वादिसूत्रे व्युत्पादितम् । वराहशब्दात् 'अत इञ्' (४.१.९५) । कक्षशब्दा गर्गादयः ।

ननु च गौकाक्ष्यशब्दः क्रौड्यादिषु पठ्यते, ततः ष्यङि 'यङ' इत्येव चाप् सिद्धः ? मा पाठि, तत्र 'पाच्च यञः' (वा. २७३) इत्यनेनैव शार्कराक्ष्यादिवद्गौकाक्ष्येति सिद्धम् । यद्येवम्, गौकाक्षीपुत्रः—ष्यङः

सम्प्रसारणं न प्राप्नोति ? नात्र सम्प्रसारणमिष्यते, गौकाक्ष्यापुत्र इत्येव भवति। एवं हि सौनागाः पठन्ति—'ष्यङः सम्प्रसारणे गौकक्ष्यायाः प्रतिषेधः' ॥

## ७५. आवट्याच्च ।

## ७६. तद्धिताः ।

'युवतिः' इति । तद्धितसंज्ञायां सत्यां 'कृत्तद्धितसमासाश्च' (१.२.४६) इति प्रातिपदिकसंज्ञा भवति। 'बहुवचनम्' इत्यादि । 'प्रत्ययः' (३.१.१) इत्यादिवदेकवचन एव कर्त्तव्ये बहुवचनेन संज्ञिनां बहुत्वसूचनादनुपतोऽपि तद्धितः परिगृह्यत इति मन्यते। स्त्रीप्रत्ययानामादितस्तद्धिताधिकारे क्रियमाणे 'प्राचां ष्फ तद्धितः' (४ १.१७) इत्यत्र तद्धितग्रहणं न कर्त्तव्यम्, 'यस्येति च' (६.४.१४८) इत्यत्र चकारग्रहणम्, 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यत्र तु तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणं कर्तव्यमेव ? सत्यम्; ङीबादीनां ङकारस्येत्संज्ञा न स्यात्, 'अतद्धिते' (१.३.८) इति प्रतिषेधात् । सत्यामपि वा पट्वीत्यादौ 'ओर्गुणः' (६.४.१४६) स्यात् । तस्माद्यथान्यासमेवास्तु ॥

## ७७. यूनस्तिः ।

'युवतिः' इति । त्यन्तात् 'इतो मनुष्यजातेः' (४.१.६५) इति ङीष्न भवति; तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वात्, यौवनस्य वाऽजातित्वात् ॥

## ७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।

इह सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति, तेन 'गोत्रे' 'अनार्षयोः' इति चाणिञ्मात्रस्य विशेषणम्, 'गुरूपोत्तमयोः' इत्येतत्तदन्तस्य, तदाह—'गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः' इति। यद्यप्यपत्याधिकारादन्यत्र लौकिकस्य गोत्रस्य ग्रहणम्, तथाप्यत्र पारिभाषिकस्य ग्रहणम्; लौकिकग्रहणस्य 'अनार्षयोः' इति पर्युदासाश्रयणेनैव सिद्धत्वात् । इहायं ष्यङ प्रत्ययो वा स्यात् ? आदेशो वा ? प्रत्ययविधावपि हि 'गापोष्टक्' (३.२ ८) इत्यादौ षष्ठीदर्शनात्, उत्तरत्र 'क्रौड्यादिभ्यश्च' (४.१.८०) इति पञ्चमीनिर्देशाच्च प्रत्ययपक्षेऽपि सम्भवत्येव। तत्राद्यपक्षे उदमेघस्यापत्यं स्त्री, 'अत इञ्' (४.१.९५), औदमेघि इति स्थिते तदन्तात् ष्यङि विहिते औदमेघ्यायाश्छात्रा औदमेघाश्छात्राः, औदमेघ्यानां सङ्घः, 'इञश्च' (४.२.११२) 'सङ्घाङ्कलक्षण' (४.३.१२७) इति च इञन्ताद्विधीयमानोऽण् न स्यात्। अथापि लिङ्गविशिष्टपरिभाषया इञन्ताद्विधीयमानोऽण् ष्यङन्तादपि स्यात् एवमपि 'आपत्यस्य च तद्धितेऽनाति' (६ ४.१५१) इति यलोपो न स्यात्, ष्यङोऽनापत्यत्वात् ? नैष दोषः; 'भस्याढे तद्धिते' (वा. ७३१) इति पुंवद्भावात्प्रागेवाण उत्पत्तेः ष्यङ निवर्तते, तस्मिन् निवृत्ते 'इञः' (४.२.११२) इत्यण् भविष्यति, यकारस्य च श्रवणं न भविष्यति। इह तर्ह्यौदमेघ्याया अपत्यम् 'स्त्रीभ्यो ढक्' (४.१.१२०) औदमेघेय इति यलोपो न स्यात्, पुंवद्भावश्च नास्ति, 'अढे' (वा. ७३१) इति प्रतिषेधात् ? इतीममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—'ष्यङादेशो भवति' इति ।

नन्वस्मिन् पक्षे उडुलोम्नोऽपत्यं स्त्री बाह्वादिषु लोमन्शब्दस्य पाठात् केवलस्यपत्येन योगाभावात् समर्थ्यात् तदन्तस्य ग्रहणादिञि तस्य ष्यङादेशे सति 'ये चाभावकर्मणोः' (६.४ १६८) इति प्रकृतिभावात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपो न स्यात्, ततश्चौडुलोमन्येति स्यात्, औडुलोम्येति चेष्यते, प्रत्ययपक्षे इञा व्यवधानान्नास्ति प्रकृतिभावः, यस्येति लोपेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव ? नैष दोषः; नाकृते टिलोपे ष्यङ् प्राप्नोति, किं कारणम् ? अगुरूपोत्तमत्वात्, तस्मादिञ्येव टिलोपः ततो गुरूपोत्तमत्वम्, ततः ष्यङित्यानुपूर्व्यात् सिद्धम् । अयं तर्हि दोषः—प्रत्ययग्रहणपरिभाषयाऽणिञन्तयोर्ग्रहणम्, तयोर्विधीयमानः ष्यङनेकाल्त्वात् सर्वादेशः प्राप्नोति ? 'ङिच्च' (१.१.५३) इत्यन्त्यस्य भविष्यति, तातङ्न्यायेन सर्वादेशः प्राप्नोति । यत्र हि ङकारस्य प्रयोजनान्तरमपि सम्भाव्यते तत्र 'ङिच्च' (१.१.५३) इत्येतदनन्यार्थङित्त्वेष्वन- ङादिषु सावकाशं बाधित्वा 'अनेकाल्शित्सर्वस्य' (१.१.५५) इत्येतद्भवति, यथा तातङि । इह च सर्वादेशत्वेऽपि 'यङश्चाप्' (४.१.७४) इति विशेषणं प्रयोजनं सम्भवति, तस्मात्सर्वादेशः प्राप्नोति, तत्राह--'निर्दिश्यमानस्य' इत्यादि ।

यद्ययमुत्तमशब्दो व्युत्पन्नः स्यात्, तदोच्छब्दात्तमपि कृते 'किमेत्तिङव्ययघात्' (५.४.११) इत्या- म्प्राप्नोति ? न वा द्रव्यप्रकर्षत्वात् । उच्छब्दो हि ससाधनक्रियावचन उद्गते वर्तते, तस्य क्रियाद्वारकः प्रकर्षः—अतिशयेनोद्गत इति, ततश्च द्रव्यनिष्ठत्वात् प्रकर्षस्य 'अद्रव्यप्रकर्षे' (५.४ ११) इति प्रतिषेधो भविष्यति । एवमपि तमपः पित्त्वादाद्युदात्तत्वप्रसङ्गः ? न वोञ्छादिषु पाठात्, उञ्छादिषु हि उत्तमशश्वत्तमौ सर्वत्रेति पठ्यते । एवमपि स तावत्पाठः कर्त्तव्यः, क्रियामात्रस्य च प्रकर्षे उत्तमामित्याम्प्रसङ्गश्च, अतोऽनभिधानादुच्छ- ब्दात्तमपोऽनुत्पत्तिरेषितव्या । किञ्च व्युत्पन्न उत्तमशब्दश्चतुष्प्रभृतिषु वर्तते, कथम् ? ऊर्ध्वमुच्चारित उद्गतः, स च प्रथमोच्चारितमपेक्षते, ततश्च त्रिषु द्वावुद्गतौ, तयोश्च द्वितीयोऽतिशयेनोद्गतः, द्वयोश्च सम्प्रधारणायां तरपा भाव्यम्, ततश्च यत्रोद्गता एव त्रयस्तत्रैव स्यात्—कारीषगन्ध्येत्यादौ; वाराह्येत्यादौ तु न स्यात्—तदेवं व्युत्पत्तिपक्षे दोषं पश्यन्नव्युत्पत्तिपक्षमाश्रित्याह—'उत्तमशब्द' इति । 'स्वभावात्' इति । न व्युत्पत्तिवशा- दित्यर्थः । त्रिप्रभृतीनामिति वचनाद्दाक्षी प्लाक्षीत्यादौ न भवति ।

'टिड्ढाणञिति ङीबेव भवति' इति । प्राप्तिमात्राभिप्रायेणैवमुक्तम् । अत्र हि जातित्वात् 'शार्ङ्ग- रवाद्यञः' (४.१.७३) इति ङीना भाव्यम् । 'वासिष्ठी' इति । 'ऋष्यन्धक' (४.१.११४) इत्यादिनाण् ।

'आहिच्छत्री' इति । जातादावर्थेऽण् । एवमत्रादेशपक्षः स्थापितः ।

यद्येवम्, हस्तिशिरसोऽपत्यम्, बाह्वादित्वादिञ्, 'अचि शीर्षः' (६.१.६२) इति शीर्षादेशः, इञः ष्यङादेशः ततः स्थानिवद्भावेन शीर्षशब्दस्य शिरोग्रहणेन ग्रहणात् 'ये च तद्धिते' (६.१.६१) इति शीर्षन्नादेशः प्राप्नोति ? अस्तु; 'नस्तद्धिते' (६.४.१४४) इति टिलोपो भविष्यति । 'ये चाभावकर्मणोः' (६.४.१६८) इति प्रकृतिभावः प्राप्नोति, ततश्च हास्तिशीर्षण्येति स्यात्, प्रत्ययपक्षे त्विञाऽव्यवहितत्वान्नास्ति शीर्षन्नादेशः, यस्येति लोपेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव, तेन हास्तिशीर्ष्येति सिद्ध्यति, तस्मात् प्रत्ययपक्ष आश्रयणीयः । तदेतत् 'ये च तद्धिते' (६.१ ६१) इत्यत्र वामनो वक्ष्यति—'यदि प्रत्ययः, कथमौदमेघ्येति इति, आपत्याद्धि हितः ष्यङ् सोऽप्यापत्य एव, तत्र यलोपे सिद्धम्' इति ।

जयादित्यस्तु मेने—शीर्षदिशसन्निपातेन ष्यङ्, स तद्विघातं न करिष्यतीति। यद्येवम्, अजादिप्रत्ययनिबन्धः शीर्षदिशः कथं तमजादिं विहन्यात्? ततः किम्? ष्यङादेशोऽपि न प्राप्नोति, अनित्या सन्निपातपरिभाषा, तेन ष्यङ् भवति, शीर्षदिशश्च न भविष्यति। अयं तर्ह्यादेशपक्षे दोषः—अनुबन्धौ कर्त्तव्यौ यङश्चाबिति सामान्यग्रहणतदविघातार्थौ, अन्यथाऽणादेशे ष्यङि 'टिड्ढाणञ्' (४.१.१५) इत्यादिना ङीप् स्यात्, इञादेशे तु 'इञ उपसंख्यानम्' (वा. ३६८) इति ङीष्प्रसङ्गः? नैष दोषः; 'टिड्ढाणञ्' (४.१.१५) इत्यत्रात इति वर्तते, तत्र चाणाऽकारो विशेष्यते—अण्योऽकार इति। तत्र ष्यङादेशे 'अनल्विधौ' (१.१.५६) इति स्थानिवद्भावाभावान्ङीन्न भविष्यति। अणन्तादकारान्तादिनि हि विज्ञायमाने स्वाश्रयमकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यान्ङीपः प्रसङ्गः। 'इञ उपसङ्ख्यानम्' (वा. ३६८) इत्यत्रापि 'इतो मनुष्यजातेः' (४.१.६५) इत्यतः 'इतः' इत्यपेक्ष्यते—इञ्य इकारः तदन्तादिति। इञन्तादिकारान्तादिति वा विज्ञायमाने ष्यङादेशे सति वाराह्येत्यादिविकाराभावान्ङीषभावः सिद्धः। एवमपि स्वरार्थश्चावेष्टव्यः, अन्यथा इञादेशः ष्यङ् स्थानिवद्भावेन ञित्, टाबपि पित्त्वादनुदात्त इति ञित्स्वरेणाद्युदात्तं पदं स्यात्। स्यादेतत्—इञो अकारस्येत्संज्ञायाः प्रागेव प्रतिपदविधानात् ष्यङादेशः करिष्यते, तत्र ञित्स्वराभावात् प्रत्ययस्वरे सति टाप्यपि सिद्धः स्वर इति, यद्येव तर्हि ञित्स्वरो न भवति एवं वृद्धिरपि न स्यात्, अतो अकारस्य सत्यामित्संज्ञायामादेश इत्यास्थेयम्, ततश्च स्वरे दोषप्रसङ्गाच्चावश्यमनुबन्धौ कर्त्तव्यावेव। प्रत्ययपक्षे तु सतिशिष्टे ष्यङः प्रत्ययस्वरे कृते तदन्तावपि सिद्धमिष्टम्, न रूपभेदो न स्वरभेदः। ननु च ष्यङैव स्त्रीत्वस्य द्योतितत्वाट्टान्न स्यात्? नैष दोषः; यथा गार्ग्यायणीत्यादौ द्वाभ्यां स्त्रीत्वं द्योत्यते, तथाऽत्रापि द्वयोरेव सामर्थ्यमिति टाबपि भविष्यति। 'ष्यङः सम्प्रसारणम्' (६.१.१३) इत्यत्र विशेषणार्थं तर्हि त्वयाप्यनुबन्धौ कर्तव्यौ, इह मा भूत्—पाशानां समूहः पाश्या, 'पाशादिभ्यो यः' (४.२.४९), पाश्यापतिरिति? एवं तर्ह्येकोऽनुबन्धः करिष्यते, क एकः? षकारे ङीष्प्रसङ्गः। ङकारे 'यङः सम्प्रसारणम्' इत्युच्यमाने लोलूयापुत्र इत्यत्रापि प्राप्नोति? अप्रत्ययादित्यकारेऽतो लोपे च सति अकारेण व्यवहितत्वान्न भविष्यति। वाराहीपुत्र इत्यत्रापि तर्हि टापा व्यवधानम्? एकादेशस्य पूर्वं प्रत्यन्तवत्त्वान्नास्ति व्यवधानम्। ननु 'ष्यङः सम्प्रसारणम्' (६.१.१३) इत्यत्र 'लिटि धातोः' (६.१.८) इत्यतो धातुग्रहणमनुवर्त्तते, 'आदेच उपदेशेऽशिति' (६.१.४५) इत्यात्वं धातोर्यथा स्यात्, गोभ्यामित्यादौ मा भूदित्येवमर्थम्। तत्र यङन्तस्य धातोः पुत्रपत्योरनन्तरयोः सम्प्रसारणं भवतीत्युक्ते यो धातुर्लोलूयादिर्नासावनन्तरः, यश्चानन्तरो वाराह्यादिर्न स धातुः, तत्र धातुत्वानन्तर्ययोरन्यतररूपपरित्यागेन भवत्सम्प्रसारणं यथा वाराहीपुत्र इत्यादौ असत्यपि धातुत्वे आनन्तर्यमात्राश्रयणेन भवति, तथा लोलुयापुत्र इत्यत्रासत्यप्यानन्तर्ये धातुत्वाश्रयणेन स्यात्।

अथ ब्रूयाः—यङ्धात्वोर्न परस्परेण विशेषणविशेष्यभावः, अपि तर्हि समुच्चयः—पुत्रपत्योरनन्तरस्य यङो धातोश्चेति? तत्र वाराहीपुत्र इत्यादौ भविष्यति, न तु लोलूयापतिरित्यादौ; धातोर्व्यवधानात्। ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवानुवृत्तिः सम्पद्यत इति। यद्येवम्, वाक्पतिरित्यत्र वचेः सम्प्रसारणप्रसङ्गः? एवं तर्हि धातोरिति निवर्त्तिष्यते, आत्वं पुनर्गवादेः प्रातिपदिकस्य न भवति; उपदेशाभावात्। स्वरूपज्ञापनप्रधानो निर्देशः = उपदेशः। 'गोद्व्यचः' (५.१.३९) 'नोद्व्यचः' (४.४.७) इत्यादौ तु कार्यान्तरार्थमुच्चारणम्, न स्वरूपज्ञापनार्थम्। तदेवं प्रत्ययपक्ष एक एवानुबन्धः कर्त्तव्यः। अत्र संग्रहश्लोकाः—

पुंवद्भावाद्यजादौ यलुगणपि परस्मिन् ष्यङि ह्यौवमेघे
स्वार्थे ष्यङ् तद्यलुग्ढे क्रमत इह भवेदौडुलोम्या परस्मिन्।

ष्यङशोर्षाधीनलाभस्तदभिविहितये न प्रभूर्हास्ति शोर्ष्ये
सर्वदिशोऽपि तातङ्ङिव न यङणिञोः स्थानिनोरुक्तिहेतोः ॥

स्त्र्युक्तावष्यात्परस्मिन्निह सुलभ इति ष्ङौ विधेयौ न वा ये
ऽणादेशे ङीनिवृत्त्यै त्वण इञ इति चेद्द्वौ विशेष्यौ न दोषः ।
जित्यावादेरुदात्तः प्रजसति सहजादेशने वृद्धयभावः
पाश्यापुत्रे निवृत्त्यै यण इक इह षित्त्वेकके ङीष्यङोस्तु ॥

लोलूयापुत्र इत्यद्व्यवहित इतरत्रापि दीर्घोन्तवत्स्याद्
धात्वानन्तर्ययोगे विधिरिति स यथानन्तरेऽघो तथा घोः ।
धात्वानन्तर्ययोश्चेन्मिथ इह न हि तेऽपेक्षिता वाक्यताविक्
धोर्नान्ताभिक्रियात्वे ह्युपविशिरिति गोर्नो तदेवं ममैकः ॥

## ७९. गोत्रावयवात् ।

गोत्रशब्दोऽयमस्ति पारिभाषिकः 'अपत्यं पौत्रप्रभृति गोत्रम्' (४ १.१६२) इति, अस्ति च लौकिकोऽपत्यमात्रवचनः, अस्ति च व्युत्पन्नः—गूयन्ते शब्द्यन्तेऽनेन स्वसन्तानप्रभवा इति प्रधानभूत आदिपुरुषः, स्वप्रभवस्यापत्यं सन्तानस्य संज्ञाकारी गोत्रमित्युच्यते, यथा—भरतः, रघुः, यदुरिति। अवयवशब्दोऽप्यस्ति एकदेशे यत्सम्बन्धादवयवीति समुदाय उच्यते; अस्ति च पृथग्भावे, अवयुत्यानुवाद इत्यादावयपूर्वस्य यौतेः पृथग्भावेऽपि दर्शनात्; अस्ति चाप्रधाने—अवयवभूतोऽयमस्मिन् ग्राम इति। तत्र पारिभाषिके गोत्रे एकदेशे चावयवे च वचनमनर्थकमिदं स्यात्, कथम्? पौत्रप्रभृत्यपत्यसमुदायो गोत्रं तदवयवश्चतुर्थादिस्तदपि गोत्रमेव, तद्वाचिनो ऽणिञन्तात् पूर्वेणैव सिद्धः ष्यङ्। अथ कस्मिंश्चिन्महागोत्रे यान्यवान्तरगोत्राणि, यथा—भार्गवगोत्रस्य च्यवनादीनि, ते गोत्रावयवास्तेभ्यगुरूपोत्तमार्थोऽयमारम्भः। यद्येवम् सप्तर्षीणामगस्त्याष्टमानामष्टौ महागोत्राणि प्रवराध्याये पठ्यन्ते तद्व्यतिरिक्तेभ्यः सर्वेभ्यः ष्यङः प्रसङ्गः; न चैतदिष्टम्, अगुरूपोत्तमेभ्योऽपि पुणिकादिभ्य एवेष्यते। पृथग्भाववचने त्ववयवशब्दे गोत्रादन्यवाचिनोऽणिञन्तात् ष्यङि विधीयमाने पूर्वसूत्रे गोत्रग्रहणमनर्थकम्। अथाप्रधानवचनोऽवयवशब्दः, परिभाषिकमेव गोत्रं प्रवराध्याये पाठाच्चाप्राधान्यम्, ततोऽयमर्थः स्यात्—येऽणिञन्ता गोत्रापत्यवाचिनः प्रवराध्याये न पठ्यन्ते तेभ्यः ष्यङिति। तत्रानृषिभ्यो गुरूपोत्तमेभ्यः पूर्वेणैव सिद्धः, अगुरूपोत्तमेभ्यस्तु संज्ञाकारिभ्य एवेष्यते. पारिभाषिके च गोत्रे संज्ञाकारित्वं विशेषो न लभ्यत इति। इहापि प्रसज्येत—तुषजको नाम कश्चित् तस्य गोत्रं स्त्री 'अत इञ्' (४.१.९५) तौषजकी, अपत्यमात्रे तु गोत्रे यद्येकदेशोऽवयवस्त-तोऽपत्यसमुदायस्य पौत्रप्रभृत्यपत्यमवयव इति तद्वाचिनोऽणिञन्तात् पूर्वेणैव सिद्धः। पृथग्भावे त्वपत्यादन्यवाचिन आहिच्छात्रादेरेव प्रसङ्गः। अप्रधाने त्वप्रधानापत्यवाचिनोऽणिञन्ताद्गुरूपोत्तमात्स सर्वत्रेष्यते. किन्तु संज्ञाकारिभ्यः, तत्रापि गोत्रे। व्युत्पन्ने गोत्रे एकदेशवचनोऽवयवशब्दो न सम्भवति, न हि येन पुरुषेण स्वसन्तानप्रभवा गूयन्ते तदवयवाद्वस्तपादादेर्गोत्रेऽणिञोऽसम्भवः। अथ गोत्रं च तदवयवश्चेति कर्मधारयस्तदा भार्गवादिगोत्रेषु येऽवान्त-रव्यपदेशकारिणश्च्यवनादयस्तेभ्यः प्रसङ्गः। पृथग्भावे च ये संज्ञाकारिभ्यः पृथग्भूतास्तुषजकादयस्तेभ्य एव स्यात्। अत एवमेषु पक्षेषु दोषसम्भवाद्व्युत्पन्नो गोत्रशब्दः, अप्रधानवचनोऽवयवशब्दः, कर्मधारयश्च समासः।

निपातनाद्विशेषणस्य परनिपातः, प्रवराध्यायेऽपाठाच्च प्राधान्यम् । तदेतदाह--'गोत्रावयवा गोत्राभिमताः' इति । गोत्रमित्येवमभिमताः, गोत्राभिधायिन इत्येव लोके प्रसिद्धाः, न पुनः प्रवराध्याये पठिता इत्यर्थः । काः पुनस्ता इत्यत्राह--'कुलाख्याः' इति । कुलमाख्यायते आभिरिति कुलाख्याः, पुणिकादिभिर्हि कुलमाख्यायते--पुणिका वयं गोत्रेणेत्येवमादि । 'ततः' इति । तयोक्तविशेषणविशिष्टाभ्यः कुलाख्याभ्यः । 'अगुरूपोत्तमार्थं आरम्भः' इति । 'गुरूपोत्तमयोः' (४.१.७८) इति निवृत्तम, अन्यत्सर्वमनुवर्तत इति भावः । 'पौणिक्या' इत्यादि । पुणिक-भुणिक-मुखरतादेभ्यः, 'अत इञ्' (४.१.९५), तस्य ष्यङादेशः । 'ते क्रौड्यादिषु द्रष्टव्याः' इति । अवृद्धत्वात् तस्येति भावः ॥

## ८०. क्रौड्यादिभ्यश्च ।

'ष्यङ्प्रत्ययो भवति' इति । क्रौड्यादिभ्य इति पञ्चमीनिर्देशात् प्रत्ययपक्षेऽप्यत्र दोषाभावाच्चैवमुक्तम् । 'अगुरूपोत्तमार्थः' इत्यादि । तत्र कौड्यादयः प्राक्चौपयतशब्दादत इञन्ताः, चौपयतप्रभृतयः प्राक् सौधातकिशब्दादणन्ताः, सौधातकिशब्दः 'सुधातुरकङ् च' (४.१.९७) इति इञन्तः । 'सूत युवत्याम्' इति । सूतशब्दः ष्यङमुत्पादयति युवत्यां प्राप्तयौवनायामभिधेयायाम्--सूत्या, अन्यत्र क्रियाशब्दाट्टाब् भवति--सूता, जातिवाचिनस्तु ङीष् भवति--सूती । 'भोज क्षत्रिये' इति । जातिलक्षणस्य ङीषोऽपवादः--भोज्या, क्रियाशब्दात्तु टाबेव भवति--भोजयतीति भोजा, ततः परे इञन्ताः । गौकक्ष्यशब्दो गर्गादिष्वञन्तः ॥

## ८१. दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।

देवा यज्ञा यष्टव्या अस्य देवयज्ञः, शुचिर्वृक्षोऽस्य शुचिवृक्षः, सत्यमुग्रमस्य सत्यमुग्रः, निपातनाद्विशेष्यस्य पूर्वनिपातो मुमागमश्च, कण्ठे विद्धमस्य कण्ठे वा विद्धः' अमूर्धमस्तकात्' (६.३.१२) इत्यलुक् । 'काण्डेविद्धिभ्यः' इत्यन्ये पठन्ति, काण्डेन विद्धः, 'कर्तृकरणे कृता बहुलम्' (२.१ ३२) इति समासः, निपातनात् काण्डशब्दस्यैकारः । सर्वे इञन्ताः ॥

## ८२. समर्थानां प्रथमाद्वा ।

प्रत्येकमत्र पदानां स्वरित्वं प्रतिज्ञायते, न समुदायस्यैकमित्याह--'त्रयमपि' इति । अत्र च प्रयोजनम्--एकस्य निवृत्तावपरस्य निवृत्तिर्मा भूदिति । एतदेव स्पष्टयति--'समर्थानामिति च' इति । 'स्वार्थिकप्रत्ययावधिश्चायम्' इति । स्वस्याः प्रकृतेरर्थे भवाः स्वार्थिकाः, अध्यात्मादिः, भाष्यकारप्रयोगाद् द्वारादिकार्याभावः स्वशब्दस्य तु द्वारादिषु पाठादस्ति प्रसङ्गः । तदाविधिर्हि तत्र भवति; आद्यज्विशेषणत्वाद् द्वारादीनाम्, यथा--द्वारपालस्येदं दौवारपालमिति । 'प्राग्दिशो विभक्तिरिति यावत' इति । तत आरभ्य हि स्वार्थिकाः प्रत्यया विधीयन्ते, किं पुनः कारणं स्वार्थिकेष्वेव न प्रवर्तते ? इत्याह--'स्वार्थिकेषु' इत्यादि । तत्र समर्थनामिति सम्बद्धार्थानां चेत्यर्थः । तत्र वाक्ये सम्बद्धार्थता, व्यपेक्षा हि तत्र सामर्थ्यम्, अपेक्षा आकाङ्क्षा, अन्योन्यापेक्षा = व्यपेक्षा । अनयाऽऽकाङ्क्षासन्निधियोग्यत्वेषु सत्सु यः सम्बन्धः स लक्ष्यते । वृत्तौ संसृष्टार्थता । एकार्थीभावो हि तत्र सामर्थ्यम् । वृत्तौ ह्युपसर्जनपदानि स्वार्थमुपसर्जनीकृत्य प्रधानार्थपराणि भवन्ति, यथा--गङ्गायां घोष

इति गङ्गापदं गङ्गोपसर्जनं तीरमाह । तथौपगव इत्यत्रोपगुशब्दः स्वार्थोपसर्जनमपत्यमाह । अत एव ऋद्धस्योपगव इति ऋद्धत्वमुपगोर्विशेषणं न भवति । यत्र हि शब्दः पर्यवस्यति तत्रैव विशेषणसम्बन्धः । यदि च वाक्यवद्वृत्तावपि स्वार्थ एव पर्यवस्येत्तद्वदेव विशेषणसम्बन्धो भवेत्, प्रधानपदान्यप्युपसर्जनविशिष्टमेव स्वार्थं ब्रुवते । यदि तु वाक्यवद्वृत्तावपि प्रधानपदानि स्वार्थमेव ब्रुवीरन् ततो यथोपगोरपत्यं देवदत्तः कल्याणश्चेत्युभाभ्यामपत्यार्थस्य सम्बन्धः, तथौपगवः कल्याणश्चेत्यप्युच्यते स्यात्, न चैवम् । अतो यादृशस्य सम्बन्धस्य भावादयं विशेषः स एकार्थीभावः । न च स्वार्थिकेषु प्रकृत्यर्थादर्थान्तरं सम्भवति यत्प्रत्यायनाय शब्दान्तरं प्रयुज्येत, येन सह समर्थता स्यात् । एतेन प्राथम्यं व्याख्यातम् । अतः प्रतियोग्यपेक्षया सामर्थ्यप्राथम्ययोरभावात् स्वार्थिकेषु नास्योपयोग इति सिद्धम् । 'विकल्पोऽपि तत्रानवस्थितः' इति । क्वचित् प्रवर्त्तते । एतच्च षडक्षादिसूत्रे (५.४.७) वक्ष्यते । इह 'प्रथमात्' इत्येतद्विशेषणं शास्त्रवाक्यगतमाश्रीयते, न विग्रहवाक्यगतम्; अनियतत्वात् । वाक्ये हि प्रयोगोऽनियत इति सर्वेषां प्राथम्यसम्भवात् । कदाचिदपत्यवद्वाचिनोऽपत्ये प्रत्ययः स्यात्, कदाचिदपत्यवाचिनस्तद्वति । अयं च प्रकारोऽसत्यपि 'प्रथमात्' इत्यस्मिल्लभ्यत इत्यनर्थकं तत्स्यात् ।

ननु च यस्मिन्वाक्ये यत्प्रथमोच्चारितं तस्मिंस्तत एव यथा स्यात, चरमोच्चारितान्मा भूदित्येतत्प्रयोजनं स्यात् ? तन्न; न हि वृत्तिवाक्ययोः सहप्रयोगः, ततश्च वाक्यगते प्राथम्ये व्यवस्थापके सति वृत्तेः प्रयोगो न नियत इति व्यर्थमेव 'प्रथमात्' इति विशेषणं स्यात्, तस्माच्छास्त्रवाक्यगतमेव प्राथम्यं व्यवस्थापकमित्याह—'लक्षण-वाक्यानि' इत्यादि ।

'समर्थानामिति निर्धारणे षष्ठी' इति । ततश्च निर्धारणस्य तुल्यजातीयविषयत्वात् प्रथमात् समर्थात् प्रत्ययो भवति, तत्र 'समर्थात् प्रथमात्' इति वक्तव्ये 'समर्थानां प्रथमात्' इति वचनं प्रधानपदस्याप्युपसर्जनपदे-नैकार्थीभावप्रतिपादनार्थम्; अन्यथा वाक्यवद्वृत्तावपि प्रधानपदस्यान्येनापि सम्बन्धः शङ्क्येत । यदि तर्हि लक्षणवाक्ये प्रथमोच्चारितात् प्रत्ययः, एवं सति 'तस्यापत्यम्' (४.१.९२) इत्यादौ सर्वनाम प्रथमानिर्दिष्टमिति तत एव प्रत्ययः स्यात्, नोपग्वादेः, न हि तल्लक्षणवाक्ये प्रथमनिर्दिष्टमित्यत आह—'तस्य' इति । सामान्यमित्यादि विशेषलक्षणम्, विशेषोपलक्षणमित्यर्थः । 'तस्यापत्यम्' (४.१.९२) इत्यादौ हि विशेषा एव निर्देष्टुमिष्टाः, तेषां तु सर्वेषां प्रत्येकमुपादाने गौरवं स्यात्, एकस्योपादानेऽनुपात्ताद्विशेषान्तराद्व स्यात्, यथा—अद्भिः संस्कृत-मित्यादाविति सर्वेषामुपलक्षणत्वेन तस्येत्यादिकमुपात्तम् । 'तस्योपग्वादेः' इति । न तु स्वयं कार्यितया, न हि तस्येत्यस्य सामान्यवचनस्य प्रकरणाद्यभावेन विशेषेऽनवस्थितस्यापत्यं प्रति सम्बन्धिविशेषप्रतिपादनेन सम्बन्ध्यन्त-रव्यवच्छेदाख्य उपकारः सम्भवति । सम्बन्धिसामान्यं त्वपत्यशब्दस्य सम्बन्धिशब्दत्वादेवावगतम्, अतो यत्सूत्रे साक्षात्प्रथमोच्चारितमिति साक्षात्प्रथमोच्चारितं सामान्यवाचि न तस्मात्प्रत्ययः, यस्माच्च प्रत्ययो न तत्सूत्रे साक्षात्प्रथमोच्चारितमिति अगत्या उपलक्षगतं प्राथम्यमुपलक्ष्याणां विज्ञायते । तदाह—'तदीयं प्राथम्यं विशेषाणां विज्ञायते' इति ।

'कम्बल उपगोः' इत्यादि । यथाऽपत्यशब्दस्य पूर्वपराभ्यां यथेष्टमभिसम्बन्धो भवति, एवमणोऽपि सम्भाव्येतेति भावः । अत्र च प्रत्यये सत्यनर्थकस्यापि समुदायस्य तद्धितान्तत्वेन प्रातिपदिकसंज्ञायामेकत्वाद्यभावेऽपि विभक्तौ विज्ञाय-मानःयां नात्र प्रसङ्गः ? नैतदेवम्; न हि लक्षणवाक्ये विभक्त्युच्चारणम्, सम्बन्धप्रतिपादनार्थंसामान्यस्य सम्बन्धासम्भवात्, किं तर्हि ? षष्ठ्यन्तात् प्रत्ययविध्यर्थम् । तथापि विशेषोपलक्षणद्वारेण सम्बन्धः स्यात् ? एवमपि ऋद्धस्योपगोरपत्यमित्यादौ सापेक्षावपि स्यादेव । समर्थपरिभाषया तर्हि व्यवस्था भविष्यति ? स्यादेवं

अव्ययेभ्य इव स्वादयः स्युः । ननु 'तस्यापत्यम्' (४.१.९२) इति श्रूयमाणसम्बन्ध्यपेक्षायां विभक्तौ विज्ञाय-

यद्येतस्मात् सूत्रात्प्रागेव सुबन्तात्तद्धिता इति व्यवस्थितं स्यात्। इह तु ङ्याप्प्रातिपदिकाधिकारात् षष्ठ्यादिविभक्त्यर्थवृत्तेस्तत एव तद्धिताः स्युः। सति त्वस्मिन् सम्बन्धप्रतिपत्तेर्विभक्त्यायत्तत्वात् सुबन्तादेव तद्धिता भवन्ति, न चैवं सति पदकार्यप्रसङ्गः। तथा हि—राजन्ये वार्त्रघ्न इत्यादौ भसंज्ञयोपजातया लुप्तविभक्त्याश्रयापि पदसंज्ञा एकसंज्ञाधिकाराद् बाधिष्यते। राजत्वं राजतेत्यादौ तु प्रातिपदिकादप्युत्पत्तौ 'स्वादिषु' (१.४.१७) इति पदसंज्ञा भवत्येव। ननु तद्धितलुकि सर्वनामस्थाने दोषः, काश्यपेन प्रोक्तमधीयते 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' (४.३.१०३), 'छन्दोब्राह्मणानि' (४.२.६६) इति तद्विषयतायाम्। 'तदधीते तद्वेद' (४.२.५९) इति द्वितीयान्तात् काश्यपिन्शब्दादुत्पन्नस्याणः प्रोक्ताल्लुकि (४.२.६४) यद्यपि काश्यपिन इत्यादौ भसंज्ञाया लुप्तविभक्तिनिमित्ताया अपि पदसंज्ञाया बाधाददोषः, काश्यपिभ्यामित्यादौ तु भवत्येव पदसंज्ञा; तथापि काश्यपिनौ काश्यपिन इत्यादौ सर्वनामस्थाने भसंज्ञाया अभावाल्लुप्तामन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञा स्यात्। न चासर्वनामस्थान इति प्रतिषेधः, किं कारणम्? स्वादिषु (१.४.१७) इति या प्राप्तिस्तस्या एव स निषेधः। एवं तर्हि 'असर्वनामस्थाने' इति विभज्यते, प्रसज्यप्रतिषेधश्चाश्रीयते, 'अनन्तरस्य विधिर्वा' (व्या.पा. १९) इत्येतन्नाश्रीयते, तेन सर्वनामस्थाने परतः पूर्वास्याद्यर्वेर्या च यावती पदसंज्ञा स्वादिष्विति वा सुबन्तमिति वा सा सर्वा प्रतिषेत्स्यते। यद्येवम्, राजा दण्डीत्यादौ सावपि न स्यात्, 'यचि भम्' (१.४.१८) इत्यतोऽचीत्येतदसर्वनामस्थाने इत्यत्रापेक्ष्यते, तेनाजादावेव सर्वनामस्थाने सर्वा पदसंज्ञा निषेत्स्यते? सौ हलादौ स्वादिष्विति वा सुबन्तमिति वा भविष्यतीत्यदोषः। तदेवं सत्यस्मिन् वचने सुबन्तात्तद्धिते न कश्चिद्दोष इति स्थितम्।

अत एव पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ 'घकालतनेषु' (६.३.१७) इत्यलुक् विधास्यते। ननु सत्यप्यस्मिन् स्वार्थिकेष्वस्याव्यापारात् कथं सुबन्तात्तरप् स्यात्? एवं तर्ह्यर्थक्रम एवायमीदृशो यदुत पूर्वं विभक्त्या योगः पश्चात्तरपा। उक्तं हि प्रियकुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्त इति। एवं च कृत्वाऽलुग्विधानमप्युपपद्यते। यदि तु तदेवालुग्विधानं ज्ञापकम्, तस्यापत्यमित्यादौ न विभक्त्यर्थमात्रे तात्पर्यम्, किन्तु षष्ठ्यादिविभक्त्यन्ता एवोपलक्षयितुमिष्टाः। ङ्याप्प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणत्वेनैवोपयुज्यत इति, तथा सति पदविधित्वात् समर्थपरिभाषयैव व्यवस्था सिद्ध्यति। किञ्च—अनाभिधानादसामर्थ्ये न भविष्यति, नार्थः समर्थवचनेन।

इदं तर्हि प्रयोजनम्—यदर्थाभिधानसमर्थं तस्माद्यथा स्यात्। किं पुनस्तत्? कृतवर्णानुपूर्वीकं पदम्—सौत्थितिः, वैक्षमाणिरिति, अत्र सवर्णदीर्घत्वे कृते प्रत्ययो भवति, सु+उत्थित, वि+ईक्षमाण—इत्यस्यामवस्थायां न भवति। यदि स्यात्, सावुत्थितिः, वायीक्षमाणिरिति प्राप्नोति, 'वार्णादाङ्गं बलीयः' (व्या.प. ३९) इति वृद्धिप्रसङ्गात्। नन्वन्तरङ्गत्वाद्वार्णेषु कृतेषु प्रत्ययो भविष्यति? एवं तर्ह्येतदर्थं समर्थवचनं कुर्वन्नेतज्ज्ञापयति—अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीयाः' (व्या.प. ८४) कृतमपि शास्त्रं निवर्तयन्तीति। व्यूहः = शास्त्रकार्यम्, तदन्तरङ्गत्वात् प्राप्तमपि पश्चादस्य निमित्तविघातो भविष्यतीति बुद्ध्या न कृतं यैस्तेऽकृतव्यूहाः, एवम्भूता भवन्ति पाणिनीया इत्यर्थः। कृतमपीत्यत्र वाशब्दोऽध्याहार्यः कृतमपि वा शास्त्रकार्यं निवर्त्तयन्ति निमित्ताभाव उत्पत्स्यमाने इत्यर्थः। तेन पुपुष इत्यादि सिद्धं भवति। अत्रान्तरङ्गत्वात् पूर्वकृतोऽपीडागम एतत्परिभाषावशान्निवर्तते, पूर्वमेव वा न क्रियते, ततः शसि सम्प्रसारणे कृते वलादित्वाभावाद्विडभावः। 'प्रथमान्तात्' इति। प्रथमानिर्दिष्टादपत्यविशेषवचिनो देवदत्तादिशब्दादित्यर्थः। अन्यथा 'सास्य देवता' (४.२.२४) इति यथा इन्द्रो देवतास्य ऐन्द्रः स्थालीपाक इति प्रथमान्तात् षष्ठ्यर्थे प्रत्ययो भवति, एवमिहापि स्यात्—देवदत्तोऽपत्यमस्य दावदत्तिरुपगुरिति।

'वाग्रहणं किम्' इति । वृत्तिवाक्ययोर्व्यपेक्षैकार्थीभावलक्षणादर्थभेदादेव बाध्यबाधकभावो न भविष्यतीति प्रश्नः । 'वाक्यमपि यथा स्यात्' इति । तद्यथा गोशब्देन गावीशब्दो निवर्तते सत्यामपि स्त्रीत्वप्रतिपत्तौ, तथेहाप्युपगवमानयेत्युक्ते य एवानीयते 'उपगोरपत्यमानस्य' इत्युक्ते स एवेति प्रधानार्थभेदाद्वृत्त्या वाक्यं बाध्येतेति भावः । 'यद्येवं समासवृत्तिस्तद्धितवृत्त्या बाध्येत' इति । 'यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तते' इति राज्ञोऽनन्तरो राजानन्तर इत्यादिषु सावकाशा समासवृत्तिस्तद्धितवृत्त्या बाध्येत, यथा—दाक्षिरित्यणप्रत्यय इत्येति भावः । 'एतदपि' इति । समासवृत्त्याख्यं कार्यमित्यर्थः ॥

## ८३. प्राग्दीव्यतोऽण् ।

'तेन दीव्यतीति वक्ष्यति' इति । यदि तस्येदमनुकरणं प्राग्दीव्यतेरिति वक्तव्यम्, कथं प्राग्दीव्यत इति निर्देशः ? अत आह—'तदेकदेश' इति । भवति हि समुदायगुणीभूतस्याप्येकदेशस्य पृथक्कृत्यानुकरणम्, यथा—सत्यवामीयमित्यत्रेति भावः । 'प्रत्ययः' (३.१.१) इत्यादिवदणित्येवाधिकारे सति 'अत इञ्' (४.१.९५) इत्यादिनापवादप्रकरणेन विच्छिन्नस्याणः 'तेन रक्तं रागात्' (४.२.१) इत्यादिष्वर्थेषूपस्थानं न स्यात् । तस्मादधिकारपरिमाणख्यापनार्थं प्राग्दीव्यत इत्युक्तम् । 'त्रिष्वपि दर्शनेषु' इत्यादि । नन्वधिकारपक्षेऽपि प्रतियोगमुपस्थानादत इञ् अण्वेत्यणपि प्राप्नोति, परिभाषापक्षेऽपि प्राग्दीव्यतीयाः प्रकृतयस्ताभ्यः सर्वेभ्योऽण् परिभाष्यमाणः केनापवादविषये न स्यात्, एवं विधिपक्षेऽपि सर्वत्र प्रसङ्गः ? एवं मन्यते—यदयं 'पीलाया वा' (४.१ ११८) इति सूत्रमारभते, तज्ज्ञापयति—नापवादविषयेऽण् भवतीति; अन्यथा 'द्व्यचः' (४.१.१२१) इति ढक् सिद्धः, अनेन चाणित्यनर्थकं तत्स्यादिति । 'उदश्वितोऽन्यतरस्याम्' (४.२.१९) इति विकल्पवचनमप्यस्मिन्नर्थे लिङ्गम् ।

वयं तु ब्रूमः—'प्राग्दीव्यतः' इति नेदं दीव्यतीतिशब्दैकदेशस्य दीव्यच्छब्दस्यानुकरणम्, किं तर्हि ? तदर्थोऽर्थो निर्दिश्यते—दीव्यतोऽर्थात् प्रागिति । तत्र दिवेर्लटि कृतेऽर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्यप्रथमान्तेन सामानाधिकरण्याल्लटः शत्रादेशः कृतः । तत्रावधेरर्थत्वादवधिमन्तोऽप्यर्था एव प्रतीयन्ते, सजातीयविषयत्वेन प्रसिद्धतरत्वादवध्यवधिमद्भावस्य, ततश्च प्राग्दीव्यतो येऽर्थास्तेष्वेवास्य त्रिष्वपि पक्षेषु व्यापारः । तत्र समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानोऽपवादोऽणं बाधत इति सिद्धमिष्टम् ॥

## ८४. अश्वपत्यादिभ्यश्च ।

'प्राग्दीव्यतीयेषु' इति । 'अपपरिबहिरञ्चवः पञ्चम्या' (२.१.१२) इत्यव्ययीभावाद्भवार्थे 'वृद्धाच्छः' (४.२.११४) । 'अव्ययानां भमात्रे' (वा. ८४२) इति टिलोपो न भवति; 'लुङ्मुखस्वरोपचाराः' इति परिगणनात् । अत एवाव्ययात्त्यबपि न भवति, 'अमेहक्वतसित्रेभ्यः' इति परिगणनाद्वा । गणपतिशब्दस्यात्र पाठागाणपत्यो मन्त्र इत्यपशब्दः । एतेन क्षैत्रपत्यं व्याख्यातम् । 'क्षैत्रपत्यं चरुं निर्वपेत्' इति तु छान्दसम् । क्षत्रपत्यं प्राप्नोतीति, छन्दोवदृषयः कुर्वन्ति ॥

## ८५. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।

पतिशब्दस्योत्तरपदशब्देन बहुव्रीहौ कृते पश्चाद्द्वन्द्वः, न तु द्वन्द्वस्योत्तरपदशब्देन बहुव्रीहिरित्याह— 'पत्युत्तरपदाच्च' इति । एतच्च प्रत्यासत्तेर्व्याख्यानाद्वा लभ्यते । अदितिग्रहणं तु तदुत्तरपदपरिग्रहार्थं स्यात्, न ह्यदित्युत्तरपदं दित्युत्तरपदं भवति । पत्यन्तादिति नोक्तम्, बहुच्पूर्वान्मा भूदिति ।

'वाङ्मतिपितृमताम्' इति । कुर्वादिषु मतिपितृमच्छब्दयोः पाठोऽपत्यार्थो भाषायामपि ण्यो यथा स्यादिति । अनेन तु छन्दसि सर्वेष्वेव प्राग्दीव्यतीयेषु ण्यविधिः । केचिद्वाक्शब्दमपि तत्रैव पठन्ति, तेन 'याना वाच्या एते वत्साः' इति प्रयोगोपपत्तिः ।

'यमाच्च' इति । यमशब्दोऽपि सूत्रे पठितव्य इत्यर्थः ।

'पृथिव्या ञाञौ' इति । ञाञोः स्त्रियां विशेष इत्याह—'पार्थिवा, पार्थिवी' इति ।

'स्थाम्नः' इति । बलवचनोऽयम् । तस्य केवलस्य यद्यप्यपत्येन योगो नास्ति, जातादिना तु योगः संभवत्येव । सर्वेषु च प्राग्दीव्यतीयेष्वयं विधिः, तस्मादश्वत्थाम इति भाष्योदाहरणादत्र तदन्तविधिर्भवति । 'अश्वत्थामः' इति । अश्वस्येव स्थाम यस्येति बहुव्रीहौ अकारष्टिलोपः, पृषोदरादित्वात्सकारस्य तकारः ।

'लोम्नोऽपत्ये बहुषु' इति । बाह्वादिष्वयं पठ्यत इतीञि प्राप्ते बहुष्वकारः, केवलस्यापत्येनायोगात् सामर्थ्यात्तदन्तविधिः । 'उडुलोमाः' इति । उडूनीव लोमान्यस्य, शरा इव लोमान्यस्येति बहुव्रीहिः । ननु बाह्वादिलक्षणे इञ्यपि कृते तस्य बह्वच इति लुकि सुबन्तादिञुत्पन्न इति प्रत्ययलक्षणेन 'सुबन्तं पदम्' इति पदसंज्ञायां नलोपेन सिद्धम् ? सिद्ध्यतु नामेदम्; उडुलोमैः, उडुलोमेभ्य इत्येवमादौ सुब्विधौ नलोपस्यासिद्धत्वादैसादिर्न स्यात्, इञो लुगपि प्राच्यभरतगोत्रादन्यत्र न सिध्यति, न चात्र पदसंज्ञा, 'असर्वनामस्थाने' (१.४.१७) इति निषेधात् । यथा च प्रत्ययलक्षणेन प्राप्तायाः सुबन्तमित्यस्या अपि पदसंज्ञायाः स निषेधस्तथोक्तं पुरस्तात् ।

'सर्वत्र' इति । नापत्य एव । यद्वा प्राग्दीव्यतीयेऽन्यत्र च, तेन गवा चरतीत्यत्रापि गव्य इति भवति । 'गोरूप्यम्' इति । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (४.३.८१), 'मयट् च' (४.३.८२) इति रूप्यमयटौ । 'ण्यादयः' इति । येन नाप्राप्तिन्यायेन (व्या.प. ४९) अण एव ण्यादयोऽपवादाः, अणपवादैस्तु ढगादिभिः सह सम्प्रधारणायां परत्वात्त एव स्युरिति वार्त्तिकारम्भः । अर्थविशेषोऽपत्यादिलक्षणं निमित्तं यस्य सोऽर्थविशेषविशेषलक्षणः । यस्तु तस्येदमित्यर्थसामान्यलक्षणोऽणपवादः स परत्वाद्भवति, उष्ट्रपतिर्नाम पतत्रं तस्येदमौष्ट्रपतम्, 'पत्त्राध्वर्युपरिषदश्च' (४.३.१२३) इत्यञ् भवति, न तु ण्यः । 'दितेरपत्यम्' इति । अत्र 'इतश्चानिञः' (४.१.१२२) इति ढक् न भवति, ढोलेय इत्यादावेव तु भवति । 'वानस्पत्यम्' इति । अचित्तादिलक्षणष्ठञ् न भवति, आपूपिकादावेव तु भवति ।

'कथं दैतेयः' इति । '[1]अत्र तर्हि' इति । गम्यमानत्वान्न प्रयुक्तम् । यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन भवन्ति, कथं तर्हि दैतेयः सिध्यतीत्यर्थः । 'दितिशब्दात्' इत्यादि । ननु 'प्रातिपदिकग्रहणे

1. नास्ति. काशिका. तारा. 1966.

लिङ्गविशिष्टस्यापि ग्रहणम्' (व्या.प. २९) इति ङीषन्तादपि ण्य एव प्राप्नोति ? तत्राह—'लिङ्गविशिष्ट-परिभाषा चानित्या' इति । अन्ये तु भाष्यवार्त्तिकयोरनुक्तत्वाद्दैतेय इत्यसाधुरिति स्थिताः ॥

## ८६. उत्सादिभ्योऽञ् ।

'तदपवादानां च' इति । इञादीनाम् । 'बष्कयाऽसे' इति । बष्कयशब्दोऽञमुत्पादयति, असे, असमास इत्यर्थः । पूर्वाचार्यसंज्ञेयम्, बाष्कयः । अस इति किम् ? गोबष्कयिः । ग्रहणवता प्रातिपदिकेन (व्या.प ८९) तदन्तविधिप्रतिषेधादेवात्र न भविष्यति ? ज्ञापनार्थं तु । एतज्ज्ञापयति—भवत्यत्र तदन्तविधिरिति । किं सिद्धं भवति ? धेनुशब्दोऽत्र पठ्यते, तदन्तादपि भवति—अधेनूनां समूह आधेनवमिति । 'उदस्थानाद्देशे' इति । उदस्थानशब्दोऽञमुत्पादयति देशे वाच्ये—औदस्थानो देशः । देशादन्यत्र यदृच्छया कश्चिदुदस्थानः, तस्यापत्य-मौदस्थानिः । 'पृषदंशे' इति । पृषच्छब्दोऽञमुत्पादयति अंशे वाच्ये—पार्षतोंऽशः, अंशादन्यत्राणेव भवति । 'ग्रैष्मी त्रिष्टुप्' इति । ग्रीष्मो देवता अस्या इत्यशेषार्थविवक्षायामौत्सर्गिकोऽणेव भवति, ग्रीष्मे भवेत्यादिशेष-विवक्षायां तु ऋत्वणैव सिद्धम् । न ह्यनेनाञा शैषिकस्याणो बाधप्रसङ्गः, अर्थविशेषलक्षणानामेव प्रत्ययानां ण्यादिभिर्बाधनात् । ऋत्वण् तु शेषमात्रे विधानान्नार्थविशेषलक्षणः, कक्षान्तरप्राप्तश्च । कथम् ? 'कालाट्ठञ्' (४.३.११) अणोऽपवादः, तस्याप्यृत्वण् । 'छन्दश्चेह वृत्तं गृह्यते' इति । यस्य त्रिष्टुबादयो विशेषाः । 'न वेदः' इति । तेन वेदविषयेऽपि वृत्तेऽभिधेयेऽञः प्रतिषेधादणेव भवति—ग्रैष्मी त्रिष्टुबिति ॥

## ८७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।

'स्त्रीशब्दात्पुंस्शब्दाच्च' इति । स्त्र्यधिकारविहितानां टाबादीनां 'पुंसि संज्ञायां घः' (३.३ ११८) इत्येतदधिकारविहितानां च प्रत्ययानां ग्रहणं न भवति, स्त्रीपुंस्शब्दयोरस्वरितत्वात् । नापि स्त्रीपुंसार्थग्रहणम्, 'स्व रूपं शब्दस्य' (१.१.६८) इति वचनात् । 'पौंस्नम्' इति । 'संयोगान्तस्य लोपः' (८.२.२३) इति पुंस्शब्दसकारस्य लोपः, तत्र कर्त्तव्येऽनुस्वारस्यासिद्धत्वात् सकारस्य संयोगान्तत्वात् । अत एव संयोगान्तलोप-प्रसङ्गान्नञेवोभाभ्यां न विधीयते । एवं हि मा भून्नञ्, मा च भूत्स्नञ्, अञ् प्रकृतस्तत्रैतावदस्तु स्त्रीपुंसयोर्नुक्चेति; तत्रायमप्यर्थः, स्त्रैणी पौंस्नी अञ इतीकारः सिद्धो भवति ? नैवं शङ्क्यम्; स्त्रैणाः, पौंस्नाः—'यञञोश्च' (२.४ ६४) इति बहुषु लुक् प्राप्नोति । इह च स्त्रैणानां सङ्घः 'सङ्घाङ्कलक्षणेष्वञ्यञिञाम्' (४.३.१२७) इत्यण् प्राप्नोति ? नैष दोषः; उभयत्रापि गोत्र इति वर्त्तते, लौकिकस्य च गोत्रस्य ग्रहणं ऋषिप्रजनं च लोके गोत्रमुपचरन्ति न च स्त्र्यर्थिनामपि पुंशब्दवाच्यं सामान्यम् । 'नस्तद्धिते' (६.४.१४४) इति टिलोपस्तर्हि प्राप्नोति ? 'प्रकृत्यैकाच्' (६.४.१६३) इति प्रकृतिभावो भविष्यति, 'इष्ठेमेयस्सु' (६.४.१५४) इति तत्रानुवर्तते । एवं तर्हि नुग्विधानसामर्थ्याट्टिलोपो न भविष्यति ? यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, तत्र टिलोपार्थमेव नुग्विधानं स्यात् । स्त्रीशब्दस्यापि नुगेव लोपस्य निमित्तम्, अन्यथा यस्येति लोपात्परत्वाद्वृद्धिः स्यात् यथा—श्रीर्देवता अस्य श्रायं हविरिति । तस्माद्यथान्या-समेवास्तु ।

'योगापेक्षं च' इति । स्त्रीपुंसाभ्यामित्ययं योगो वत्यर्थे न प्रवर्त्तत इत्येवं ज्ञापनशरीरम्, न तु स्नञ्, वत्यर्थे न प्रवर्त्तत इत्यर्थः । कथं स्त्रीत्वं स्त्रीता पुंस्ता चेति ? 'आ च त्वात्' (५.१.१२०) इत्यत्र परिहारो भविष्यति ॥

## ८८. द्विगोर्लुगनपत्ये ।

'द्विगोरिति षष्ठी' इति । आनन्तर्यलक्षणायां तु पञ्चम्यां पञ्चकपालस्य पुरोडाशस्येदम् 'तस्येदम्' (४.३.१२०) इत्यण्, पाञ्चकपालमित्यत्रापि प्राप्नोतीति भावः । षष्ठ्यपि यद्यानन्तर्ययोगे स्यात्स एव दोषो यः पञ्चम्याम्, ततश्च षष्ठ्याश्रयणमनर्थकं स्यादिति मत्वाऽऽह—'द्विगोर्यः सम्बन्धी निमित्तत्वेन' इति । यस्य तद्धितस्यार्थे 'तद्धितार्थोत्तरपद' (२.१.५१) इति द्विगुर्विहितः स निमित्तत्वेन सम्बन्धी । 'पञ्चकपालः' इति । 'संस्कृतं भक्षाः' (४.२.१६) इत्यत्रार्थे विवक्षिते द्विगुः, अण्, तस्य लुक् । 'द्विवेदः' इति । 'तदधीते तद्वेद' (४.२.५९) इत्यत्रार्थे द्विगुः ।

'द्वैदेवदत्तिः' इति । द्वयोर्देवदत्तयोरपत्यम्, 'अत इञ्' (४.१.९५), अपतनादपत्यम्, यस्य पित्रादिषु द्वौ देवदत्तसंज्ञकौ स एवमुच्यते, एकस्य वा दत्तपुत्रोऽन्यस्य साक्षात्पुत्रः ।

'द्विगुनिमित्तविज्ञानात्' इति । द्विगुनिमित्तस्य प्रत्ययस्य लुग्विधानादित्यर्थः । 'पञ्चकपालस्येदम्' इति । अत्र संस्कृतार्थे यः प्रथममुत्पन्नः प्रत्ययः स एव द्विगोर्निमित्तं न द्वितीय इति तस्य लुग्न भवति । 'अथ वा' इत्यादि । पूर्वं लुगित्यनेनोपस्थापितस्य प्रत्ययस्य द्विगोरित्यनेन वैयधिकरण्यमाश्रित्य व्याख्यातम्, इदानीं सामानाधिकरण्यमित्येष विशेषः । कथं पुनर्द्विगोरेव लुग् लभ्यत इत्याह —'द्विगोरिति स्थानषष्ठी' इति ।

'ननु च' इत्यादि । 'प्रत्ययस्य लुक्श्लुलुपः' (१.१.६१) इति प्रत्ययादर्शनस्य लुगादयः संज्ञा विहिताः, ततश्च द्विगोर्लुगिति नैव समञ्जसमिति भावः । 'उपचारेण तु' इत्यादि । अतस्मिंस्तद्रूपारोपः = उपचारः, परत्र परशब्दप्रयोगः = लक्षणा, उपचारेण निमित्तेन या लक्षणा तयेत्यर्थः । अन्ये तूपचारेणेत्यस्य विवरणं लक्षणयेत्येतदित्याहुः । अद्विगुरूपस्तद्धितो द्विगुरूपतया यथा बुद्ध्या विवक्ष्यते सा लक्षणा उपचार एवेति । उपचारस्य निबन्धनं द्विगुनिमित्तत्वम् । भवति हि कारणे कार्योपचारः—आयुर्घृतमिति यथा । 'द्विगुनिमित्तकोऽपि तर्हि' इत्यादि । कार्येऽपि कारणवदुपचारो दृश्यते, यथा—पुरातनं कर्म भुज्यत इति, ततश्च द्विगुर्यस्य प्रत्ययस्य निमित्तं सोऽपि गुणकल्पनया गुणशब्देनोपचारस्य निमित्तभूतो धर्मो विवक्षितः, तन्निमित्ता कल्पना गुणकल्पना, सा पुनरुपचारात्मिका बुद्धिः, तया कस्मान्न द्विगुरित्युच्यते ? अर्हत्येवायमेवंविधं वचनमित्यर्थः । परिहरति—'न तस्य' इति । तत्र हि सन्निहितमपि द्विगुत्वं प्रत्ययोत्पत्तौ नोपयुज्यते, न ह्यसौ द्विगोरित्येवं विधीयते, किं तर्हि ? प्रातिपदिकादित्येवमित्यर्थः । 'इतरस्तु' इति । प्रत्ययः, यस्य लुग्दर्शितः । 'द्विगुत्वस्यैव निमित्तम्' इति । तदर्थे हि समासो विधीयते, तस्यैव च द्विगुसंज्ञा, तेनासौ द्विगुत्वस्यैव निमित्तम् ।

'यद्येवम्' इत्यादि । उभयोरपि पक्षयोरेतच्चोद्यम् । न ह्यत्र द्विगोर्निमित्तत्वेन सम्बन्धी तद्धितः, नापि द्विगुनिमित्तत्वादुपचारेण तद्व्यपदेशार्हः, अत्र हि समाहारे द्विगौ निष्पन्ने पश्चात्तद्धित उत्पद्यते, स च द्विगोर्निमित्तं न भवतीति चोद्यार्थः । परिहरति—'नैवात्र तद्धित उत्पद्यते' इति । अनभिधानादिति भावः । यदि नोत्पद्यते, कथमस्मिन्नर्थे पञ्चकपाल इति रूपसिद्धिस्तस्मादुत्पद्यत एवात्र तद्धितः, तस्य च लुग्विधेयः ? इत्यत आह —'त्रैशब्द्यं हि' इति । त्रय एव शब्दास्त्रैशब्द्यम् = चातुर्वर्ण्यादिः । इह ह्यस्माभिस्त्रैशब्द्यं साध्यम्, तच्च पञ्चकपालीशब्दात्तद्धितोत्पत्तिमन्तरेणापि सिद्ध्यतीति नास्मात्तद्धित उत्पद्यते । तानेव त्रीन् शब्दान् दर्शयति—'पञ्चसु कपालेषु' इति । 'द्वयोः शब्दयोः' इति । यः समाहारे द्विगुः, यश्च तद्धितार्थे, द्वावपि तौ समानार्थौ,

तयोरेकेन पूर्वेण विग्रहः। अवधारणमत्र द्रष्टव्यं विग्रह एव, न तद्धितोत्पत्तिः; अनभिधानात्। अपरस्मात् पञ्चकपालादुत्पत्तिः। सोऽयमव्यविकन्याय उच्यते; तद्यथा अवेर्मांसमित्यविशब्देन विग्रह एव, अविकशब्दादुत्पत्ति-र्विग्रहश्च आविकमविकस्य मांसमिति।

'सा च व्यवस्थितविभाषा' इति। एवं कृत्वा त्रैविद्यः, पाञ्चनदम्, षाट्कुल इत्यत्रापि लुग्न भवति। अथ वा—त्र्यवयवा विद्या त्रिविद्या, शाकपार्थिवादिः, तामधीते त्रैविद्यः, विद्यात्रयरूपस्य च समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदाभावः। पञ्चानां नदीनां समाहारः पञ्चनदम्, 'नदीभिश्च' (२.१.२०) इत्यव्ययीभावः 'गोदावर्याश्च नद्याश्च' इत्यच्समासान्तः, पञ्चनदे भवः पाञ्चनदः। अथ वा—अभिधाने हि सति समाहार-द्विगोरपि भवत्येव तद्धितः। तथा षण्णामार्यादिपुरुषाणां कुलानि तत्र भवः षाट्कुलः। अव्यविकन्यायाच्च तिस्रो विद्या अधीते, पञ्चसु नदीषु भवः, षट्सु कुलेषु भव इति विग्रह एव; न द्विगुः, नापि तद्धितः॥

८९. गोत्रेऽलुगचि।

पूर्वत्रोत्तरत्र च लुग्विधानादिह नञ् प्रश्लिष्यते। 'यस्कादिभ्यो गोत्र इत्यादिना' इति। 'प्राग्दीव्यतः' (४.१.८३) इत्युपजीवनाय तु प्रकरणोत्कर्षः, प्रसज्यप्रतिषेधश्चायम्। 'अचि' इति। यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयं प्राप्नोति—गार्गीया वात्सीया इति च्छे परतोऽलुका भवितव्यम्, अलुकि च सति वृद्धत्वा-च्छेन भवितव्यमिति। ननु न छे परतोऽलुग्विधीयते, किं तर्हि? अजादिमात्रे, तत्र य एवाजादिः सम्भवति तत्रैवालुग्भविष्यति, तद्यथा—गर्गाणां छात्राः, 'प्राग्दीव्यतोऽण्' (४.१.८३) तत्र परतः 'यञञोश्च' (२.४.६४) इति प्राप्तस्य लुकः प्रतिषेधे गार्गा इति भवति। यद्यप्यत्र सत्यसति वा लुकि नास्ति विशेषः, 'आपत्यस्य च तद्धिते' (६ ४ १५१) इति यलोपविधानात्। इह त्वत्रेरपत्यानि बहूनि 'इतश्चानिञः' (४.१ १२२) इति ढकः 'अत्रिभृगु' (२.४.६५) इति लुकि कृतेऽत्रीणां छात्रा इत्यणि परतः प्रतिषेधे सति आत्रेया इति भवति, असति तु प्रतिषेधे आत्रा इति स्यात्? स्यादेतदेवं यदि लुप्तस्य प्रत्ययस्य पुनः प्रादुर्भावो विधीयेत, इह त्वलुगिति वचनाल्लुकः प्रतिषेधो विधेयः, प्राप्तस्य चानभिनिवृत्तस्य प्रतिषेधेन निवृत्तिः शक्यते कर्त्तुम्, ततश्च यद्यत्राणजादिरभिप्रेतः स्यात्, प्रागेव लुकः प्रवृत्तिरभ्युपगन्तव्या; अन्यथा वृद्धत्वाच्छ एव स्यात्, लुक् चेत्प्रवृत्तः प्रतिषेधः किं करिष्यति! यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुङ्क्था इति, किं तेन कृतं स्यात्! तदिहाजादौ प्रवृत्तेऽलुका भवितव्यम्, अलुकि च प्रवृत्तेऽजादिना भवितव्यमिति व्यक्तमितरेतराश्रयम्। विप्रतिषेधा-त्सिद्धम्, लुकोऽवकाशो यत्र प्राग्दीव्यतीयार्थो न विवक्ष्यन्ते—गर्गा वत्सा इति, छस्यावकाशः—शालीय इति; गार्गीय इत्यत्रोभयप्रसङ्गे परत्वाच्छो भविष्यति। तत्र परतो लुकः प्रतिषेधः, अन्तरङ्गो लुगपत्यबहुत्वमात्रा-पेक्षत्वात्, बहिरङ्गश्छः प्राग्दीव्यतीयार्थापेक्षित्वात्, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः। एवं तर्ह्युच्यते चेवमजादौ परतो लुग्भवतीति। यदि च तावत्येव निमित्तमस्तीति बहुत्वमात्रापेक्षो लुक् प्रवर्त्तेत प्रतिषेधविधान-मनर्थकं स्यादिति यावत्प्राग्दीव्यतीयोऽजादिर्नोत्पद्यते तावल्लुग्न प्रवर्तत इति कल्प्यते, ततश्च वृद्धत्वाच्छे सति लुकि प्रतिषिद्धे गार्गीय इति सिद्धमिष्टम्। विषयसप्तम्यां तु न किञ्चिदसमञ्जसम्, गर्गाणां छात्रा इत्यर्थविवक्षायाम-जादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव लुकि प्रतिषिद्धे वृद्धत्वाच्छो भवतीति, तस्माद्विषयसप्तमीमाश्रित्याह— 'प्राग्दीव्यतीये प्रत्यये विषयभूते' इति। 'खारपायणीयाः' इति। खरपस्यापत्यानि बहूनि 'नडादिभ्यः फक्' (४.१.९९), तस्य 'यस्कादिभ्यो गोत्रे' (२.४.६३) इति प्राप्तस्य लुकः प्रतिषेधः।

'कौवलम्, वादरम्' इति । कुवलीबदरीशब्दौ गौरादिङीषन्तावन्तोदात्तौ, ताभ्यां फले विकारे 'अनुदात्तादेश्च' (४.३.१४०) इत्यञ्, तस्य 'फले लुक्' (४.३.१६३) इति प्राप्तस्य लुकः तस्येदमित्यर्थ-विवक्षायां प्रतिषेधो न भवति, तेनावृद्धत्वादणेव भवति । 'गर्गरूप्यम्' इति । यद्यत्रालुक् स्यात्, गार्ग्यरूप्य-मिति स्यात् ।

'गार्गीयम्' इति । 'तस्मै हितम्' (५.१.५) इति प्राक्क्रीताच्छः ।

विषयसप्तम्या एव फलं दर्शयति—'गोत्रस्य' इत्यादि । गोत्रस्येति गोत्रप्रत्ययस्येत्यर्थः । 'बहुषु लोपिनः' इति । बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः । 'बहुवचनान्तस्य प्रवृत्तौ' इति । प्रवृत्तिः = अर्थान्तरसङ्क्रान्तिः, बहुवचनान्तस्य सतोऽर्थान्तरसङ्क्रान्तौ सत्यामित्यर्थः । 'द्व्येकयोः' इति । यत्रार्थान्तरे सङ्क्रान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः । सा चार्थान्तरसङ्क्रान्तिस्तदन्त यदा यूनि प्रत्यय उत्पद्यते तस्य च लुक् क्रियते तदा भवति । लुप्ते हि युवप्रत्यये प्रकृतिरेव तदर्थमाहेति भवति सङ्क्रान्तिः । 'बिदानाम्' इति । बिदस्यापत्यानि बहूनि, 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४.१.१०४), बिदाः, तेषां बिदानामपत्यं युवा युवानौ वेति विवक्षायाम् 'अतः' (४.१.९५) इति इञि विवक्षिते गोत्रप्रत्ययस्याञो लुकः प्राप्तस्यानेन प्रतिषेधः । इञः 'ण्यक्षत्रियार्ष' (२.४.५८) इति लुकि बैदः, बैदाविति भवति । परसप्तमीपक्षे त्वलुग्न प्राप्नोति; अजादेरभावात् ।

इदमिह सम्प्रधार्यम्—इञो लुक् क्रियतामयं वालुगिति ? परत्वादलुग्भवति । इञो लुगनित्यः, कृतेऽप्यस्मिन्नलुकि प्राप्नोति अकृतेऽपि, अयं पुनरलुगनित्यः, न हीञो लुकि कृते प्राप्नोति; अजादेरभावात् ? प्रत्ययलक्षणेन भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् ? नात्र वर्णो निमित्तम्, किं तर्हि ? प्रत्ययः, तस्यैव तु विशेषणमचीति । तत्र यथा हलादौ पिति सार्वधातुके विधीयमानः 'तृणह इम्' (७.३.९२) अतृणेडित्यत्रापि भवति प्रत्ययलक्षणेन तद्वदिहापि भविष्यति ? सत्यम्; विषयसप्तमीपक्षे नैवं क्लेशोऽनुभवनीयो भवति । ननूभयोरपि पक्षयो रेहापि न प्राप्नोति—बिदानामपत्यं बहवो माणवका बिदा इति ? नैष दोषः; द्वे अत्र बहुत्वे—युवबहुत्वं गोत्रबहुत्वं च, तत्र गोत्रबहुत्वाश्रयस्य लुकः प्रतिषेधोऽस्तु पुनर्युवबहुत्वाश्रयो लुग्भविष्यति । लुग्विधौ हि लौकिकस्य गोत्रस्य ग्रहणम्, युवापि च लोके गोत्रमित्युपचर्यते—गार्ग्यायणोऽस्मि गोत्रेणेति ।

अथ युवबहुत्वाश्रयस्यापि लुकः पुनः प्रतिषेधः कस्मान्न भवति ? विषयसप्तम्यां तावद्यस्यामवस्थायां लुक् प्राप्तः तस्यामवस्थायां यदि कश्चिदजादिर्विषयभूतस्ततोऽलुका भवितव्यम्, इह चाजादिर्विषयभूत उत्पन्नो लुप्तश्च, पश्चाद्युवसु बहुषु सङ्क्रान्तौ सत्यां लुक् प्राप्तः, न चास्यामवस्थायां कश्चिदाजादिर्विषयभूत इति पुनर्लुग्न भविष्यति । परसप्तम्यामपि गोत्रे वर्त्तमानस्यालुग्भवत्यजादौ परतः । कस्मिन्नजादौ ? प्राग्दीव्यतो येऽर्थास्तेषु योऽजादिस्तस्मिन्नित्युच्यमाने यस्मिन् गोत्रे वर्तमानस्य लुक् प्राप्तस्तद्व्यतिरिक्ते प्राग्दीव्यतीयेऽर्थे योऽजादिस्तत्रेति गम्यते । इह चेञेवाजादिस्तदर्थ एव च गोत्रे लुगिति प्रतिषेधो न भविष्यति ।

यद्वा—'समर्थानां प्रथमात्' (४.१.८२) इत्यतः प्रथमादिति वर्त्तते, तच्च षष्ठ्यन्तं विपरिणम्यते, प्रथमार्थवृत्तित्वाच्च प्राथम्यमाश्रीयते, तदयमर्थो भवति—प्रथमस्य गोत्रप्रत्ययस्य लुग्न भवति, यस्मिन्नर्थे प्रत्यय उत्पन्नस्तत्रैवार्थे वर्तमानस्य यो लुक् प्राप्तः स न भवति । इह तु द्वितीयमर्थमुपसङ्क्रान्तस्य लुक् प्राप्त इति न प्रतिषिध्यते । अवश्यं चैतदेवं विज्ञेयम्—प्रथमस्य लुक् प्रतिषिध्यत इति, अन्यथा अत्रेरपत्यम् 'इतश्चानिञः'

(४.१.१२२) इति ढक्, तस्यापत्यं बहवो युवानः, अत इञः (४.१.९५) 'ण्यक्षत्रियार्ष' (२.४.५८) इति लुक्, ढकः 'अत्रिभृगु' (२.४.६५) इति लुक्, अत्रयः; भरद्वाजशब्दाद्विदाद्यञ्, तदन्ताद्युवबहुत्वे इञो लुक्, अञः 'यञञोश्च' (४.१.१०१) इति लुक्, अत्रयश्च भरद्वाजाश्च अत्रिभरद्वाजास्तेषां मैथुनिकाद् द्वन्द्वाद्वुन्—अत्रिभरद्वाजिकाः, तत्रालुक् प्राप्नोति; कुत्सादृष्यणः 'अत्रिभृगु' (२.४.६५) इति लुक्, कुशिकादञन्तादिञो लुकि कुशिकाः कुत्सकुशिकिकाः, वसिष्ठकश्यपिकाः, भृग्वङ्गिरसिकाः। अथ वा–गोपवनादिषु गर्गभार्गविकाशब्दः पठ्यते, भार्गवशब्दस्य युवबहुत्वे प्राप्तस्य लुकः प्रतिषेधार्थं तन्नियमार्थं भविष्यति—एतस्यैव द्वितीयमर्थमुपसङ्क्रान्तस्यालुग्भवतीति। नैव वा पुनरत्र युवबहुत्वे वर्त्तमानस्यालुक्प्राप्नोति, किं कारणम्? गोत्र इत्युच्यते, यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, इह तु पारिभाषिकस्य ग्रहणम्, युवशब्दसाहचर्यात्; अन्यथा गोत्रयुवसञ्ज्ञयोः समावेशे योऽयं दोषो वक्ष्यते—शालङ्केरपत्यं 'यञिञोश्च' (४.१.१०१) इति फक्; तस्य 'पैलादिभ्यश्च' (२.४.५९) इति लुक्, शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायाम् 'गोत्रेऽलुगचि' (४.१.८९) इत्यलुक् प्राप्नोति, ततश्च 'यूनि लुक्' (४.१.९०) इत्यस्य 'फक्फिञोरन्यतरस्याम्' (४.१.९१) इति विकल्पितत्वात् पक्षे फकः श्रवणं प्राप्नोतीति स तदवस्थ एव स्यात्, असमावेशेऽपि यूनो लौकिकगोत्रत्वादेवालुक्प्रसङ्गात्। तदेवं गोत्रस्य बहुषु लोपिन इत्यादि न वक्तव्यमिति स्थितम्।

'एकवचनद्विवचनान्तस्य' इत्यादि। एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य वा बहुष्वर्थेषु युवसंज्ञिकेषु प्रवृत्तौ सङ्क्रान्तौ सत्यामित्यर्थः। 'लोपः' इति। लुगित्यर्थः। लोपे हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः। ननु च युवबहुत्वाश्रयो 'यञञोश्च' (२.४.६४) इत्येवात्र लुक् सिद्धस्तत्राह—'न ह्यत्राञ्बहुषूत्पन्नः' इति। अञ्यो बहुषु, यञ्यो बहुष्विति विज्ञायमाने लुग्न सिध्यतीत्यर्थः। यदा त्वञन्तं यद्बहुषु, यञन्तं यद्बहुष्विति विज्ञायते; तदाञन्तस्य बहुषु युवसु वृत्तेर्लौकिकस्य च गोत्रस्यापत्यमात्रस्य तत्र ग्रहणात्सिद्ध एव लुक्। तथा च—गार्ग्यश्च वात्स्यश्च वाज्यश्च गर्गवत्सवाजाः, बैदश्च और्वश्च भारद्वाजश्च बिदोर्वभारद्वाजा इति यञञोरुत्पत्तिवेलायामबहुत्वेऽपि द्वन्द्वे युगपदधिकरणवचनतया यञन्तस्याञन्तस्य बहुत्वोपजननाल्लुग्भवति। न चैवं काश्यपस्यैकस्य बह्व्यः प्रतिकृतयः काश्यपा इति 'इवे प्रतिकृतौ' (५.३.९६) इति विहितस्य कनः 'जीविकार्थे चापण्ये' (५.३.९९) इति लुप्, 'हरीतक्यादिषु व्यक्तिः' (वा. १९) इति वचनाद्युक्तवद्वचनाभावेऽञन्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गः; गोत्रबहुत्वे लुग्विधानात्॥

## ९०. यूनि लुक्।

अत्रापि यद्यचीति परसप्तमी स्यात्, प्रत्ययस्य यथेष्टप्रसङ्गः। युवप्रत्यये श्रूयमाणे यः प्राप्नोति स तावत्कर्तव्यः, तत्र कृते युवप्रत्ययस्य लुकि तस्य श्रवणं प्राप्नोति, विषयसप्तम्यां त्वजादौ विषयभूत एव युवप्रत्यये लुप्ते यो यतः प्राप्नोति ततः स स भवतीति सिद्धमिष्टम्। एतच्चोदाहरणेषु व्यक्तीकरिष्यते, तदेतदाह—'अजादौ प्रत्यये विवक्षिते' इत्यादि। 'इञश्चेत्यण् भवति' इति। परसप्तम्यां तु वृद्धाच्छ एव स्यात्।

'फेश्छ च' इति। 'यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः' इति परिगणनं भाष्यकारेण नाश्रितम्, तेन तैकायनेरपि छो भवति। 'तैकायनीयाः' इति। अत्र परसप्तम्यामप्यदोषः, 'ण्यक्षत्रियार्षञितः' (२.४.५८) इत्यत्र तु वृत्तिकारेणाणो लुगुदाहृतः—तैकायनिः पिता तैकायनिः पुत्र इति, स परिगणनाश्रयेण द्रष्टव्यः, तदा च तैकायनीया इत्यनुदाहरणम्।

'कापिञ्जलादाः' इति । अत्रापि परसप्तम्यां वृद्धाच्छः स्यात् । एवं ग्लौचुकायना इत्यत्रापि द्रष्टव्यम् । इह तु औपगवेर्यूनश्छात्रा इञो लुकि वृद्धाच्छो भवति, परसप्तम्याम् 'इञश्च' (४.२.११२) इत्यण् स्यात् । नैतदस्य योगस्योदाहरणम्, कथम् ? 'इञश्च' इत्यत्र 'गोत्रे' (४.२.१११) इति वर्त्तते, तेनेदं विशेषणिष्यामः—गोत्रे य इञ् विहित इति । परिभाषिकं च गोत्रं गृह्यते, कथम् ? 'कण्वादिभ्यो गोत्रे' (४.२.१११) इत्यत्र तावत् 'गोत्रे कुञ्जादिभ्यः' (४.१.९८) इत्यस्य गोत्रस्यानुवादः—कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तादण् भवतीति, तत्र च पारिभाषिकं गृह्यते तस्यैव चानुवादः, तदेव च 'इञश्च' इत्यत्राप्यनुवर्त्तते, तत्कुतो युवप्रत्ययान्तादणः प्रसङ्गः ? अवश्यं चैतदेवं विज्ञेयम्, अन्यथा लुप्तेऽपीञि प्रत्ययलक्षणेनाण् स्यादेव ।

इमानि तर्ह्यत्रोदाहरणानि—यत्खच्छान्ताः । यत्—'राजश्वशुराद्यत्' (४.१.१३७), श्वशुरस्यापत्यं श्वसुर्यः, तस्यापत्यं श्वाशुरिस्तस्य छात्रा इति लुकि 'प्राग्दीव्यतोऽण्' (४.१.८३) भवति, श्वाशुरः, अन्यथा 'वृद्धाच्छः' (४.२.११४) स्यात्; 'कुलात्खः' (४.१.१३९) कुलीनः, तस्यापत्यं कौलीनिः, तस्य छात्राः, इञो लुकि कौलीनः; 'स्वसुश्छः' (४.१.१४३), स्वस्रीयः, तस्यापत्यं स्वास्रीयिः, तस्य छात्रा इञो लुकि स्वस्रीयाः ? नैतान्युदाहरणानि; 'अब्राह्मणादगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्' (वा.१७४) इतीञो लुकि कृते श्वशुर्यः पिता श्वशुर्यः पुत्रः, कुलीनः पिता कुलीनः पुत्रः, स्वस्रीयः पिता स्वस्रीयः पुत्र इति भवितव्यम् । न च ब्राह्मणगोत्रे कश्चिदवृद्धिनिमित्तः प्रत्ययः सम्भवति, यत इञि कृते छः प्राप्नोति; वृद्धिनिमित्ते तु गोत्रप्रत्यये नास्ति विशेषः, यतः श्रूयमाणेऽपीञि छेन भवितव्यम्; लुप्तेऽपि तस्मिन् गोत्रप्रत्ययान्तस्यापि वृद्धत्वाच्छेन भवितव्यम्, तद्यथा-औपगवीया इति । तदेवमिञ उदाहरणं न सम्भवतीति स्थितम् ।

यदि तु पूर्वसूत्रे लौकिकस्य गोत्रस्य ग्रहणं तदा स्यादेवेञ उदाहरणम् । तथा हि—श्वशुर्यादिभ्य उत्पन्नस्येञः सत्यप्यौपसंख्यानिके लुकि तस्य प्राग्दीव्यतीयविवक्षायां 'गोत्रेऽलुगचि' (४.१.८९) इति प्रतिषेधेन पुनः प्रादुर्भावादिञाश्रयः 'वृद्धाच्छः' (४.२.११४) स्यात्, यदि तस्य 'यूनि लुक्' (४.१.९०) इति लुग् क्रियेत । अतोऽस्मादिञ उदाहरणत्वप्रतिषेधादध्यवसीयते—पारिभाषिकं गोत्रं पूर्वसूत्रे भाष्यकारस्याभिमतमिति ।

किमर्थं पुनरिदमुच्यते, यावता यूनोऽपि गोत्ररूपे विवक्षिते गोत्रप्रत्ययेनाभिधानात् तन्निबन्धन एव प्रत्ययो भविष्यति, अर्थप्रकरणादिना च युवविशेषसिद्धिः, अवश्यं चार्थप्रकरणादिनैव विशेषोऽवसातव्यः, आरब्धेऽप्यस्मिन् सूत्रे शब्दस्य साधारणत्वात । न हि ज्ञायते—किं भागवित्तेश्छात्रा भागवित्ताः ? आहोस्विद्भागवित्तिकस्येति ? यदा तर्हि विशेषविवक्षा, तदापि भागवित्ता इत्येव यथा स्यात्, भागवित्तिकीया इति जातुचिन्मा भूदित्येवमर्थमिदम् ॥

## ९१. फक्फिञोरन्यतरस्याम् ।

किमर्थमिदम्, यावता युवरूपविवक्षायां गार्ग्यायणीया इति, गोत्ररूपविवक्षायां च गार्गीया इति, अर्थप्रकरणादिना च विशेषावसायः, आरब्धेऽप्यस्मिन् सूत्रेऽयमाश्रयणीयः, गार्गीया इति शब्दस्य साधारणत्वात् ? इत्यत आह—'पूर्वसूत्रेण' इति । 'यूनि लुक्' (४.१.९०) इत्येतदारम्भणीयमित्युक्तम्, तस्मिंश्चारभ्यमाणे यदीदं नोच्येत, फक्फिञोरपि नित्यमेव लुक् स्यात्, ततश्च गार्ग्यायणीया इति न स्यात् । तस्मादिदमप्यारम्भणीयमित्यर्थः ॥

## ९२. तस्यापत्यम् ।

'अर्थनिर्देशोऽयम्' इति । प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यरूपः प्रत्ययार्थोऽनेन निर्दिश्यत इत्यर्थः । तेन समर्थविभक्तेरपि षष्ठ्या निर्देशो दर्शित एव । 'पूर्वैरुत्तरैश्च' इति । पूर्वैस्तावदणादिभिः सम्बद्ध्यते; असंयुक्तविधानात्, अन्यथा 'तस्यापत्यमत इञ्' इत्येकं योगमेव कुर्यात्, यतस्त्वसंयुक्तं करोति, ततो ज्ञायते पूर्वैः सम्बद्ध्यत इति । उत्तरैरपि सम्बद्ध्यते; स्वरितत्वात् साकाङ्क्षत्वाच्च तेषाम् । 'तस्येति षष्ठीसमर्थात्' इति । तस्येति सामान्यं षष्ठ्यन्तविशेषोपलक्षणार्थम्, 'समर्थानाम्' (४.१.८२) इति च निर्धारणे षष्ठी । तत्र तुल्यजातीयस्य निर्द्धारणादयमर्थः सम्पद्यते--षष्ठ्यन्तात् समर्थादिति । 'अपत्यमित्येतस्मिन्नर्थे' इति । प्रथमान्तस्यापत्यशब्दस्यान्यथासम्बन्धानुपपत्तेरयमध्याहारो लब्धः । 'यथाविहितम्' इति । 'यथार्थे यदव्ययम्' (का.वृ २.१ ६) इति वीप्सायामव्ययीभावः । 'प्राग्दीव्यतोऽण्' (४.१.८३) इत्यादिभिर्यो यतो विहितः स तस्मादित्यर्थः । इह 'तस्य' इति पुंनपुंसकयोरन्यतरेणायं निर्देशः क्रियते, एकवचनान्तेन च, तेन लिङ्गान्तराद्वचनान्तराच्च न स्यात्--सुमातुरपत्यं सौमात्रः, क्षत्त्रस्यापत्यं क्षात्त्रिः, उपगोरपत्यमौपगव इति । अपत्यमिति चैकवचनेन नपुंसकेन च निर्देशः क्रियते, तेनैकस्मिन्नेवापत्ये स्यात्, न द्वयोः, नापि बहुषु, नपुंसक एव स्यात्, न स्त्रीपुंसयोरित्याशङ्क्याह--'प्रकृत्यर्थं' इत्यादि । प्रकृत्यर्थ उपग्वादिर्विशेषः; तस्येत्यस्य विशेषोपलक्षणार्थत्वात् । 'अपत्यमात्रं च' इति । मात्रशब्दोऽयं लिङ्गवचनयोर्व्यवच्छेदाय । 'लिङ्गवचनादिकम्' इति । आदिशब्देन कालस्य ग्रहणम्; अत्र हि वर्तमानकालेन निर्देशोऽस्तीति प्रतीतेः, यथोक्तम्--यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यत इति । ततश्च तस्य कालस्य विवक्षायां कालान्तरे न स्यात् । 'सर्वमविवक्षितम्' इति । नान्तरीयकत्वादुपादानस्यावश्यं हि केनचिल्लिङ्गादिना निर्देशः कर्त्तव्यः ।

'तस्येदमित्यपत्येऽपि' इति । अणादीनां विधानं सिद्धमिति शेषः । तस्येदंविशेषा ह्यपत्यसमूहविकारादयः; सम्बन्धसामान्येऽपि सर्वविशेषान्तर्भावात्, ततश्च 'तस्येदम्' (४.३.१२०) इत्यनेनैवापत्येऽप्यणादीनां विधानं सिद्धम्, तत्किं योगविभागेनापत्येऽणादयो विधीयन्ते, न 'तस्यापत्यमत इञ्' इत्यपवादैः संयुक्त एवापत्यार्थो निर्दिश्यते इति चोद्यार्थं परिहरति--'बाधनार्थं कृतं भवेत्' इति । 'तस्येदम्' (४.३.१२०) इत्यनेन विधीयमानानामणादीनां यो बाधकश्छः, तस्य बाधनार्थमपत्येऽणादीनां विधानं कृतं भवेदित्यर्थः । ननु शैषिकश्छः, अपत्यादिचतुर्थपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः, तत्कथमपत्ये छस्य प्रसङ्गो येन तद्बाधनार्थमिदम् ? इत्याह--'उत्सर्गः शेष एवासौ' इति । यदि योगविभागमकृत्वा 'तस्यापत्यमत इञ्' इत्युच्येत तदा प्रकृतिविशेषसम्बद्धस्यैवापत्यार्थस्योपयोगः, अतोऽन्योऽपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः । योगविभागे तु--अपत्यार्थस्याणादिविधावुपयोगाच्छेषत्वाभावाच्छस्याप्राप्तिरेव, सैवात्राप्राप्तिर्बाधेत्युच्यते । उत्सर्ग इति प्रकृतिसामान्यसम्बद्धः सामान्यभूतोऽपत्यार्थं उक्तः । बाधनार्थस्योदाहरणमाह--'वृद्धान्यस्य प्रयोजनम्' इति । 'श्यामगवः' इति । श्यामा गावोऽस्य श्यामगुरिति ॥

## ९३. एको गोत्रे ।

एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानसाधारणवाची; अन्यार्थे तावत्--'एकान्याभ्यां समर्थाभ्याम्' (८.१.६५), 'प्रजामेका रक्षत्यूर्जमेका' (तै.आ. ८ ९.१३), 'एकान् बन्धूरपराभिरासुः' 'इत्येके मन्यन्ते', 'यजुष्येकेषाम्' (८.३.१०२) इति; केचित्त्वनयोः प्रयोगयोः केचिच्छब्दपर्याय एकशब्द इत्याहुः ।

'एकः पार्थो धनुष्मताम्' इति प्रधानार्थे। 'आद्यन्तवदेकस्मिन्' (१.१.२१), 'एकहलादौ' (६.३.५९), 'एकहल्मध्ये' (६.४.१२०) इत्यसहायार्थे। 'एको द्वौ बहवः' इति सङ्ख्यार्थे। 'एकेऽल्पप्राणाः' इति प्रथमार्थे। 'तैनैकदिक्' इति समानार्थे। 'देवदत्तयज्ञदत्तावेकधनौ' इति साधारणार्थे। तत्र सङ्ख्यावचनः साधारणवचनः, प्रथमवचनो वा गृह्यते; अर्थान्तराणामसम्भवात्। गोत्रं पारिभाषिकम्; कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्, अपत्याधिकारे गोत्रग्रहणाच्च।

किमर्थमिदमुच्यते, पौत्रप्रभृत्यपत्ये विवक्षिते मूलप्रकृतेरुपग्वादेरेव प्रत्ययो यथा स्यात्, औपगवादेः प्रत्ययान्तान्मा भूदिति। नैतदस्ति प्रयोजनम्, सन्विधिवदेतद्भविष्यति, तद्यथा—गोतेर्विधीयमानः सन् सनन्तान्न भवति, तत् कस्य हेतोः? आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, न च सनि विधीयमाने सनन्तो धातुः सम्भवति, तद्वदिहाप्यपत्यप्रत्यये विधीयमाने पत्यप्रत्ययान्ता प्रकृतिः सम्भवतीति ततः प्रत्ययो न भविष्यति? विषम उपन्यासः; एकः सन् प्रत्ययः, विधायकं च लक्षणमेकमेव तत्र सूत्रम्, न तस्मिन्विधीयमाने तदन्ता प्रकृतिः सम्भवतीति।

इह पुनः 'तस्यापत्यम्' (४.१.९२) 'अत इञ्' (४.१.९५) 'यञिञोश्च' (४.१.१०१) इति बहूनि लक्षणानि, प्रत्ययाश्च बहवः; तत्र कस्मिंश्चित् प्रत्यये विधीयमाने प्रत्ययान्तरेण तदन्ता प्रकृतिः सम्भवत्येव, तथा च गुपादीनां सनः सन् भवति—जुगुप्सिषते इति? किं पुनः स्याद्यद्येतन्नारभ्येत? उच्यते; इह केचिन्मन्यन्ते—पुत्रशब्दपर्यायोऽपत्यशब्दः; निघण्टुषु तथा पाठाल्लोके च दृष्टत्वात्। तद्यथा पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित्पृच्छति—कस्य पुत्रोऽयमिति, कस्यापत्यमिति? स देवदत्तस्य यज्ञदत्तस्य वेत्युत्पादयितारं व्यपदिशति, नात्मानम्, ततश्च यथा पितामहं प्रति पुत्रो न भवति तथापत्यमिति। उत्पादयितैवैकोऽपत्येन युज्यते, न तु पितामहादयोऽपीति। अन्ये तु—क्रियानिमित्तकोऽपत्यशब्दः, न पतन्त्यनेनेत्यपत्यमिति औणादिको यत्प्रत्ययः, यस्य च येनापतनं तत्तस्यापत्यम्। व्यवहितजनितोऽपि पौत्रादिः पितामहादेरपतनहेतुर्भवति, श्रूयते हि—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, एष वा अनृणो यः पुत्री' इति, एतेन पुत्रमुत्पाद्य पितृणामनृणो भवतीति प्रतिपादनात् पुत्रोत्पादितया प्रजया पितृणामुपकारो दृश्यते। स्मर्यते च—

"पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥" (मनुस्मृतिः ९–१३७) इति।

इतिहासेषु च जारत्कारवादिषु महती वार्ता—व्यवहितजनितोऽप्युपकारक इति। सूत्रकारश्च शब्दविदां मूर्द्धाभिषिक्तः सूत्रयति—'अपत्यं पौत्रप्रभृति गोत्रम्' (४.१.१६२) इति, ततो विज्ञायते क्रियानिमित्तकोऽप्यपत्यशब्द इति; अन्यथा यथा पौत्रप्रभृतिः पुत्र इत्यनुपपन्नं तादृगेव तत्स्यात्। एवं सति साक्षात्परम्परया वा यस्य य उत्पाद्यः स तं प्रत्यपत्यमिति सर्वेऽपि पितामहादयोऽप्यपत्येन युज्यन्ते, तूत्पादयितैवेति। तत्राद्ये पक्षे यद्येतन्नारभ्येत, ततस्तत्र तत्रापत्ये तत्तत्पितृवचनात्स स प्रत्ययः स्यात, तद्यथा—उपगोरौपगवः, तस्यौपगविः, तस्यौपगवायनः। एवं शततमेऽपत्ये एकोनशततमपत्यप्रत्ययाः—इत्यनिष्टं प्राप्नोति, इष्टं च न सिद्ध्यति—औपगव इति, तृतीयादेरुपगुं प्रत्यनपत्यत्वात्। द्वितीये तूपगोः पञ्चमः पूर्वेषां चतुर्णामपत्यं ततो यद्युपगोः प्रत्ययस्तदौपगव इतीष्टं तावत्सिद्ध्यति; अनिष्टमपि च प्राप्नोति, तच्चानिष्टमनियतमौपगविः, तत औपगवायनः, तत औपगवायनिरिति। पञ्चमे त्रीण्यनिष्टानि, षष्ठे चत्वारीत्येवं यावतिथमपत्यमभिधित्सितम्, तावन्ति द्व्यूनान्यनिष्टानि प्राप्नुवन्ति, तद्यथा—शततमेऽष्टौ नवतिश्चेति। एवं स्थिते इदमारभ्यते।

आरभ्यमाणेऽप्यतस्मिन् यदि प्रथमः पक्ष आश्रीयते ततो विध्यर्थमेतत् स्यात्, नियामर्थं वा ? कथं चेदं विध्यर्थं कथं वा नियमार्थम् ? यदि गोत्रशब्देन पौत्रप्रभृत्यपत्यसमुदाय एकैकमपत्यमभिधीयते ततो विध्यर्थम्, तर्हि तथा नियमार्थः सम्भवति, एकस्मिन्नपत्येऽनेकप्रत्ययप्रसङ्गस्याभावात्। न तावदेकस्मिन् प्रयोगे एकस्याः प्रकृतेरनेकप्रत्ययप्रसङ्गः; एकेनैवोक्तत्वात् तस्यार्थस्य। नापि प्रयोगभेदेन नानाप्रकृतिभ्यो नानाप्रत्ययप्रसङ्गः, सर्वदा स्वपितृवचनादेव प्रसङ्गादिति परमप्रकृतेस्तृतीयादावपत्येऽप्राप्तः प्रत्ययो विधीयते। कथं पुनः 'एको गोत्रे' (४.१.९३) इत्येतावति वचने परमप्रकृतेः प्रत्ययो विधीयत इति शक्यं विज्ञातुम्, यावता यथा परमप्रकृतेरयोगादप्राप्तः, एवमौपगवाच्चतुर्थादाविति, ततः किं न विधीयते वचनव्यक्तिभेदात् ? एवं ह्यत्र वचनं व्यज्यते—गोत्र एकः प्रत्ययो भवति, यत एक एव प्रत्ययः कर्तुं शक्यते, तत एव प्रत्ययो भवतीत्यर्थः। एकग्रहणसामर्थ्याज्जायमर्थो लभ्यते। ननु विधीयमानेऽपि प्रत्यये प्रकृतिप्रत्ययावसम्बद्धौ स्याताम् ? वचनसामर्थ्यादपत्यापत्यस्यापत्यत्वोपचारात् प्रत्ययो भविष्यतीत्यदोषः।

मुख्येऽपत्ये चरितार्थः प्रत्ययो न स्यादिति विधानव्यमपि, अस्मिन् पक्षे सर्वेभ्यौपगव इतीष्टं सिद्धचति, प्रत्ययमालाप्रसङ्गस्तदवस्थ एव। न ह्यनेन तत्तत्पितृवचनात् प्राप्तः प्रत्ययः प्रतिषिद्धचते। तथा पञ्चमेऽपत्ये उपगुशब्दादनेन प्रत्यये विहिते तस्यापत्यमिति षष्ठ औपगविः स्यात्। यदा तु 'अपत्यं पौत्रप्रभृति गोत्रम्' (४.१.१६२) इत्यपत्यशब्देन पौत्रप्रभृत्यसमुदायं लक्षयित्वा तस्यैव गोत्रसंज्ञा विधीयते, एकैकस्मिन्नपत्ये गोत्रशब्दप्रयोगः, समुदायेषु वृत्ताः शब्दा अवयवेष्वपीति न्यायात्। अत्रत्येन वा गोत्रशब्देनावयवधर्मेण समुदायव्यपदेशात् पौत्रप्रभृत्यपत्यसमुदायोऽभिधीयते तदा नियमार्थम्—गोत्रसमुदाये एक एव प्रत्ययो भवतीति।

यद्यप्येकैकस्मिन्नपत्ये एकैकः प्रत्ययः प्राप्नोति, तथापि पौत्र एकस्तदपत्ये चापर इति सकलनिरूपणे बहवः प्रत्ययाः कृताः स्युरिति नियम उपपद्यते। अस्मिन् पक्षे दोषः—अनन्तरापत्यप्रत्ययान्तात्तृतीये प्रत्ययः प्राप्नोति, गोत्रशब्दोपादानेन हि नियमः क्रियते—गोत्र एक एवेति, ततश्च गोत्रेऽनेकः प्रत्ययो मा भूत्। अनन्तर एकस्तृतीये चापर इत्येवमनेकः कस्मान्न स्यात् ? एवमपि गोत्रे एक एव हि कृतो भवति। अथ वा—गोत्रसमुदाये एक एवेत्यनेन किं क्रियते ? तृतीयादेश्चतुर्थादौ प्राप्तः प्रतिषिध्यते। यदि तृतीयादेः स्यात्समुदायेऽनेकः प्रत्ययः कृतः स्यादिति। यस्त्वनन्तरस्तृतीये प्राप्तः सोऽभ्यनुज्ञायते—एक एवेतीतरव्यावृत्तौ नियमेषु तात्पर्यम्। ततश्च यतः प्रत्यये क्रियमाणे समुदायेऽनेकः प्रत्ययः कृतो भवति ततो न भवतीत्येव वचनार्थो भवति। एवं चतुर्थस्यापत्यप्रत्ययेनाभिधानं न प्राप्नोति, द्वितीयादुत्पन्नस्तृतीयमेवाचष्टे न तृतीयादुत्पद्यत इति, किन्तु औपगवेरपत्यमिति वाक्यमेव। पञ्चमादेस्तु वाक्येनाप्यभिधानं न प्राप्नोति, न हि तत्तत्पितृवचनः कश्चिदपत्यप्रत्ययान्तः शब्दोऽस्ति येन विगृह्येत। परमप्रकृतेश्च तृतीयादौ न कुत्रचित् प्रत्ययः प्राप्नोति, अयोगात्। तदेवमस्मिन् पक्षे परमप्रकृतेरुत्पत्तिर्वक्तव्या, अनन्तराच्च तृतीये प्राप्तस्य प्रतिषेधो वक्तव्यः।

स्यादेतत्—न परमप्रकृतेरुत्पत्तिर्वक्तव्या, अभेदोपचारेणैव सिद्धेः। अभेदोपचारश्चोपगवौपगवयोरौपगवतदपत्ययोर्वा। तदेवं शततमेऽप्यपत्येऽभेदोपचारपरम्परया औपगव इत्यभिधानं सिध्यति, न चैवमभेदोपचारेणैवेष्टस्य सिद्धेः सूत्रस्य वैयर्थ्यम्, भेदविवक्षायां प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थत्वादिति ? एवमप्यनन्तरस्य तृतीयस्य च भेदविवक्षायां तृतीय औपगविः स्यात्, तथाऽनन्तरे तृतीयादौ च यत्र प्रत्ययो भिद्यते, यथा—गर्गादौ, तत्राप्यनिष्टप्रसङ्गः। यदि तावद् गार्ग्ये गर्गोपचारस्तदा तदपत्यमपि गार्गिः स्यात्, गार्ग्यश्चेष्यते। तदेवं यथापि गार्ग्यस्तदपत्यस्य चाभेदोपचारः, एवमपि गार्गिः स्यादितीत्यादौ विषये दोषवानेवाभेदोपचारः। तदेवं प्रथमपक्षे विधौ नियमे च दोषप्रसङ्गाद् द्वितीयः पक्ष आश्रीयते, तत्रापि नियमः। यद्यप्येकैकस्मिन् प्रयोगे एकस्याः

प्रकृतेरेक एव प्रत्ययः प्राप्नोति, तथाऽनुपगोः पञ्चमे पूर्वाभ्यश्चतसृभ्यः प्रकृतिभ्यः प्रयोगभेदेन नानाप्रत्ययप्रसङ्गे नियमः क्रियते—एक एवेति । तदिदमुक्तम्—'भेदेन प्रत्ययप्रसङ्गे नियमः क्रियते' ।

ननु न ज्ञायते—क एको भवतीति, यो वा परमप्रकृतेर्यो वा प्रत्ययान्तादिति ? नन्वेक इत्युच्यते, यश्च प्रत्ययान्तात् प्राप्तः प्रत्ययः स्यादनेकः कुतः स्यात् । क्व ? न तावत्पञ्चमे; पूर्वेषां प्रत्ययानामस्मिन् प्रयोगे प्रसङ्गोऽपत्यान्तरविषयत्वात् । अथ गोत्रसमुदाये केनासौ निवार्येत ? न तावदनेनैव, न हि गोत्रसमुदायो गोत्रग्रहणेन गृह्यते । अथापि गृह्येत, एवमपि न ज्ञायते—यो वा परमप्रकृतेः, यो वाऽनन्तरादिति ? यदि पुनर्गोत्रग्रहणं न क्रियते, क्रियमाणं वाऽपत्यमात्रपरं विज्ञायते, न स्यादेष दोषः; अपत्ये समुदाये एक एवेति नियमात् । अपत्याधिकारे गोत्रग्रहणात्त्वेष दोषो जायते ? नैष दोषः; अपत्यमिति वर्तते, गोत्रेऽपत्ये एक एवापत्यप्रत्ययो भवतीति वचनव्यक्तिः । यदि च प्रत्ययान्तात्प्रत्ययः स्यादपत्यप्रत्ययोऽनेको गोत्रे कुतः स्यात्, सामर्थ्येन वा प्रत्ययो विशेष्यते—गोत्राभिधाने समर्थानां मध्ये एक एवेति । यदि च प्रत्ययान्तात् प्रत्ययः स्याद् गोत्राभिधानसमर्थोऽनेकः कुतः स्यात् प्रथमस्यापि समर्थत्वात् । यद्यप्यस्मिन् प्रयोगेऽपत्यान्तरे वर्तते पञ्चमं प्रत्यपि सामर्थ्यं तावदस्ति, यदि वा 'तस्यापत्यम्' (४.१.९२) इत्यादिलक्षणैरेक एव प्रत्ययः कर्त्तव्यः, क्व ? गोत्रे, यस्मिन् प्रत्यये गोत्रमभिधित्सितं तत्रेत्यर्थः । प्रत्ययान्ताच्च प्रत्यये तस्मिन्नेव प्रयोगे प्रकृतिरूपसम्पादनायापि तावदनेकः कुतः स्यात् ।

यदि वा प्रथमवचन एकशब्दः, कश्च प्रथमः ? यमकृत्वा प्रत्ययान्तरं कर्तुं न शक्यते । साधारणवचनो वा, अपत्याधिकाराच्च यः सर्वापत्यसाधारणः स एव गोत्रे भवतीति, गर्गशब्दाद्यञेव भवतीति । गर्गशब्दाद्यो यञ् प्राप्तः स एव भवति, न प्रकृत्यन्तरेभ्यः प्राप्ताः प्रत्यया इत्यर्थः, तदाह—'प्रत्ययो नियम्यते' इति । प्रत्ययान्तरं बाध्यत इत्यर्थः । एतेन प्रकृतिर्नियम्यते इत्यपि व्याख्यातम् ।

'अथ वा' इत्यादि । अस्मिन् पक्षे प्रथमवचन एकशब्द इति दर्शितम् । 'प्रथमा प्रकृतिः' इति । सूत्रे तु शब्दापेक्षया पुंल्लिङ्गनिर्देश इति दर्शितम् । 'एक एव शब्दः' इति । अथ वा—अस्मिन् पक्षे साधारणवचन एकशब्दः परमप्रकृतिश्च सर्वप्रत्ययसाधारणी, सङ्ख्यावचनो वा प्रथमातिक्रमे कारणाभावात् परमप्रकृतिरेकशब्देन गृह्यते । 'अनयोः पक्षयोः प्रथमा प्रकृतिः' इति । एकशब्दस्यार्थतो विवरणं द्रष्टव्यम् ॥

## ९४. गोत्राद्यून्यस्त्रियाम् ।

अत्राप्यनारभ्यमाणेऽस्मिन् योगे उत्पादयितर्यनस्त्ययुश्ते गोत्रसंज्ञाया युवसंज्ञया बाधितत्वादसति पूर्वसूत्रव्यापारे चतुर्थे तृतीयात्पञ्चमे चतुर्थात्षष्ठे पञ्चमादित्येवं प्रत्ययान्तादेव प्रत्ययप्रसङ्ग इत्यनिष्टमेव प्राप्नोति । व्यवहिते च पञ्चमादौ यूनि तृतीयानुत्पत्तिर्न प्राप्नोति, तं प्रत्यनपत्यत्वादितीष्टं न सिध्यति । सर्वेषु स्वपत्ययुक्तेषु पञ्चमे यूनि पूर्वेभ्यश्चतुर्भ्यः प्रत्ययः प्राप्नोति । तत्र यदा तृतीयात्तदा गार्ग्यायण इतीष्टं तावत्सिध्यति, अनिष्टमपि प्राप्नोति; प्रकृत्यन्तरेभ्योऽपि प्रत्ययप्रसङ्गादित्यत इदमारभ्यते ।

अत्रापि यदि पूर्वः पक्ष आश्रीयते ततो विध्यर्थमेतत्स्यात्; नियमार्थं वा ? यदि युवशब्देनैकमपत्यमुच्यते, तत एकस्मिन् यूनि गोत्रादगोत्राच्च प्राप्त्यभावात् चतुर्थेन व्यवहिते पञ्चमादौ यूनि गोत्राद्विध्यर्थं भवति ।

अथ चतुर्थप्रभृत्यपत्यसमुदायो युवशब्देनोच्यते, ततो गोत्राच्चतुर्थे चतुर्थादगोत्रात्पञ्चम इति गोत्रादगोत्राच्च युवसमुदाये प्रत्ययप्रसङ्गे गोत्रादेवेति नियमार्थं भवति। तत्र विधौ गार्ग्यायण इतीष्टं सिध्यति, प्रत्ययमालाप्रसङ्गदोषः स्यादेव; तदिपतृवचनात्प्राप्तस्य प्रत्ययस्यानिषिद्धत्वात्। नियमे चतुर्थादेः प्राप्तस्य प्रत्ययस्य प्रतिषेधोऽयं सम्पद्यते—यदि चतुर्थादेः स्याद्युवसमुदाये गोत्रादपि प्रत्ययः कृतः स्यादिति, ततश्च नानिष्टप्रसङ्गः; किन्तु पञ्चमादौ यूनि गोत्रादुत्पत्तिर्न प्राप्नोति, तं प्रत्यनपत्यत्वादिति पञ्चमस्य वाक्येनाभिधानं स्यात्—गार्ग्यायणस्यापत्यमिति। षष्ठस्य तु वाक्येनापि न सिद्ध्यति, न हि तदिपतृवचनोऽपत्यप्रत्ययान्तः शब्दोऽस्ति, येन विगृह्येत। तदेवमत्रापि द्वितीयः पक्ष आश्रीयते, नियमश्च, तदाह—'अयमपि नियमः' इति। 'गोत्रादेव' इति। यून्येवेत्येव विपरीतं नियमो न भवति; 'एको गोत्रे' (४.१.९३) इति नियमाद्यूनोऽन्यत्र गोत्रप्रत्ययस्य प्रसङ्गाभावात्। 'न परमप्रकृत्यनन्तरयुवभ्यः' इति। अन्यथा प्रयोगभेदेन तेभ्योऽपि स्यात्।

'किं पुनरत्र प्रतिषिध्यते' इति। सर्वस्मिन्नपि प्रतिषिध्यमाने दोषदर्शनात् प्रश्नः। तमेव दोषमाविष्करोति—'यदि नियमः' इति। तदेकवाक्यत्वात्प्रतिषेधस्येति भावः। 'स्त्रियामनियमः प्राप्नोति' इति। परमप्रकृत्यनन्तरयुवलक्षणाः प्रत्ययाः प्रयोगभेदेन पर्यायेण स्युरित्यर्थः। 'अथ युवप्रत्ययः प्रतिषिध्यते' इति। अस्त्रियामिति योगविभागेन प्रसज्यप्रतिषेधाश्रयेण चेति भावः। 'गोत्रप्रत्ययेनाभिधानं न प्राप्नोति' इति। तद्यथा 'गर्गादिभ्यो यञ्' (४.१.१०५) गार्गी गार्ग्यायणी, अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यात्। किं कारणमनभिधानं प्राप्नोतीत्यत आह—'गोत्रसञ्ज्ञाया युवसंज्ञया बाधितत्वात्' इति। यथा च बाधस्तथा तत्रैव वक्ष्यते। स्यादेतत्—युवप्रत्ययस्य स्त्रियां लुक्करिष्यते, कथम्? 'यूनि लुक्' (४.१.९०) इत्यस्यानन्तरं स्त्रियां चेति वक्ष्यामि, यूनि लुगित्यत्र, 'प्राग्दीव्यतः' (४.१.८३) इत्येतन्निवृत्तम्। यद्वा 'वतण्डाच्च, लुक् स्त्रियाम्, यूनि च' इति वक्ष्यामि, लुक् स्त्रियामित्येव, ततश्च गार्ग्यशब्दादुत्पन्नस्य फको लुकि कृते लुप्तस्याप्ययं प्रकृतिरेवाहेति यञन्तात्स्त्रियां वर्तमानाङ्ङीष्फो भविष्यत इति? एवमप्यौपगवशब्दादत इञो लुकि कृते, अनुपसर्जनाधिकारादण्योऽनुपसर्जनमित्युच्यमान ईकारो न प्राप्नोति; अनर्थस्याप्रधानत्वात्, यूनि सङ्क्रान्तत्वात्। मा भूदेवमण्योऽनुपसर्जनमिति, अणन्तादनुपसर्जनादित्येवं भविष्यति? नैवं शक्यम्; इह हि दोषः स्यात्—आपिशलिना प्रोक्तं व्याकरणम्, 'इञश्च' (४.२.११२) इत्यण्, तदधीते आपिशला ब्राह्मणी, 'तदधीते' (४.२.५९) इत्यणः प्रोक्ताल्लुकि (४.२.६४) अणन्तस्याध्येत्र्यां प्रधानस्त्रियां सङ्क्रान्तत्वाङ्ङीप् प्राप्नोति, तस्मादण्योऽनुपसर्जनमित्येवाश्रयणीयम्, स्त्रियां योऽण्विहित इति वा। तथा च सत्यौपगवीतीकारो न प्राप्नोति। यद्यप्यत्र प्रत्ययलक्षणेन इञ उपसंख्यानमितीकारः स्यात्, इह तु ग्लुचुकायनेरपत्यमौत्सर्गिकस्याणो लुकि ङीन्न प्राप्नोति, 'इतो मनुष्यजातेः' (४.१.६५) इति ङीष् भविष्यति। इह तर्हि यस्कस्यापत्यं शिवाद्यण् (४.१.११२) यास्कः, तस्यापत्यं स्त्री, 'अणो द्व्यचः' (४.१.१५६) इति फिञ्, स्त्रियां लुकि ईकारो न प्राप्नोति? न ह्यत्र लुप्तः प्रत्यय ईकारस्य निमित्तम्, यश्च श्रूयते न स स्त्रियां विहित उपसर्जनं च। तर्हि का गतिः? इत्यत आह—'तस्मात्' इति। 'युवसंज्ञैव प्रतिषिध्यते' इति। ननु 'यूनि यदुक्तं तत्स्त्रियां न भवति' इत्युक्तम्, न च युवसंज्ञा यून्युक्ता, न हि युवसंज्ञायाः प्राग्युवसंज्ञाऽस्ति? चतुर्थादेर्जीवद्वंश्यस्यापत्यस्योपलक्षणं युवशब्द इत्यदोषः।

अपर आह—स्वरूपपरो युवशब्दः, परिभाषा चेयम्—यत्र युवशब्दः श्रूयते तत्र 'अस्त्रियाम्' (४.१.९४) इत्युपतिष्ठते। 'जीवति तु वंश्ये युवा अस्त्रियाम्' इति वा व्यक्तमेव पठितव्यमिति॥

## ९५. अत इञ् ।

'अकारान्तात् प्रातिपदिकात्' इति । 'अत सातत्यगमने' (धा.पा. ३८) इत्यस्य वाऽच्छब्दान्तानां वा कुर्वंवादीनां ग्रहणं न भवति, यदि स्यात्छिववादिषु येषामस्येञो बाधनार्थः पाठः, शिवप्रोष्ठप्रौष्ठिकप्रभृतीनां तेषां पाठोऽनर्थकः स्यात् । व्यपदेशिवद्भावादिहापि भवति—अस्यापत्यमिरिति, यस्येति लोपे (६.४.१४८) प्रत्ययमात्रस्य श्रवणम् । इह तु—एरपत्यमस्य युवेति, 'यञिञोश्च' (४.१.१०१) इति फकि यस्येति लोपं बाधित्वा परत्वादादिवृद्धौ कृतायाम्—आयायन इति भवति ॥

## ९६. बाह्वादिभ्यश्च ।

'क्वचित्' इति । अजीगर्त्तादिषूदङ्क्पर्यन्तेष्वदन्तत्वात् पूर्वेणेञ् प्राप्तः, तस्य 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४) इत्यण् बाधकः प्राप्तः । अन्ये सर्वेऽनकारान्ताः, तेषु च बाहुप्रभृतिषूवर्णान्तेषु, पुष्करसदादिषु हलन्तेषु चाण् प्राप्तः । चूडाशब्दात् 'द्व्यचः' (४.१.१२१) इति ढक्, वृकलादिभ्यस्तन्नामिकण्प्राप्तः । शिरस्, लोमन्निति तदन्तयोर्ग्रहणम् । 'सम्भूयोम्भोमितौजसां सलोपश्च' इत्येव वक्तव्ये पृथक् सलोपश्चेति वचनं वैचित्र्यार्थम् । उदञ्चु इति पठ्यते, तत्र नायमुकारान्तात् प्रत्ययः; किन्तु विवक्षान्तात् प्रत्ययः, नलोपाभावस्तु निपात्यते—उदीचोऽपत्यमौदञ्चिः । एतत्सर्वं पैलादिष्वौदञ्चिशब्दपाठाद्विज्ञायते ।

'बाह्वादिप्रभृतिषु' इति । प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादीनां ग्रहणम् । लोके विदितो लौकिको गोत्रभावः, संज्ञाकारित्वम् आदिपुरुषत्वमित्यर्थः । एतच्च न्यायसिद्धम्, कथम् ? अर्थवद्ग्रहणे नानर्थकस्य (व्या.प. १) इति अर्थवतां बाह्वादीनां ग्रहणम्, स चार्थः प्रसिद्धः; झटिति प्रतीतेः । स्मृतिशास्त्रस्य चार्थतोऽनादित्वादनाद्यर्थाभिधायिनामेव ग्रहणं न्याय्यम् । 'बाहुर्नाम कश्चित्' इति । एवं कुञ्जो नाम नडो वा, तस्मादिञेव भवति—कौञ्जिः, नाडिरिति । यत्तु कार्यं न स्वरूपोपादानेन विधीयते, किन्तु प्रकारान्तरेण; तदिदानीन्तनार्थाभिधायिनामपि भवति, 'अत इञ्' (४.१.९५), दैवदत्तिरिति । 'सम्बन्धिशब्दानां च' इति । कार्यापेक्षया षष्ठी, सम्बन्धिशब्दानां श्वशुरादीनां यत्कार्यमुच्यते तस्य तत्सदृशे प्रतिषेधो भवति । 'संज्ञाश्वशुरस्य' इति । संज्ञाया यः श्वशुरः, न सम्बन्धेन । 'श्वाशुरिः' इति । उणादिषु नावश्यं व्युत्पत्तिकार्यं भवति, तेन 'शावशेराती' (द'उ. ८.२५) इति व्युत्पन्नस्य श्वशुरशब्दस्य 'न य्वाभ्याम्' (७.३.३) इत्येष विधिर्न भवति । तथा 'मातृपितृभ्यां स्वसा' (८.३.८४) इति षत्वं धान्यमातरि न भवति । इदमपि न्यायसिद्धम्; संज्ञाश्वशुरस्यादिमत्त्वात्सम्बन्धिशब्दस्यानादित्वात् । मातृपितृभ्यामित्यत्रापि प्रसिद्धतरत्वाज्जननीवाचिनो ग्रहणम् । उक्तं च—

> अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
> शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ इति ।

'चकारोऽनुक्तसमुच्चयार्थः आकृतिगणता मस्य बोधयति' इति । पठितशब्दापेक्षः समुच्चय इति भावः ॥

## ९७. सुधातुरकङ् च ।

'व्यासवरुड' इत्यादि । वेदं व्यस्यतीति वेदव्यासः, 'कर्मण्यण्' (३.२.१), तस्यैकदेशप्रयोगः—व्यास इति, भीमसेनो भीम इतिवत् । वरुडादयो जातिविशेषाः । तर्हि वक्तव्यम ? न वक्तव्यम्; प्रकृत्यन्तराण्येवैतानि स्वार्थिककन्प्रत्ययान्तानि, अव्ययिकन्यायेन च कन्, न हि तैर्विषयमेव भवति । व्यासशब्दादृषिवाचिनोऽपि बाह्वादेराकृतिगणत्वादिञ् भवति ॥

## ९८. गोत्रे कुञ्जादिभ्यश्च्फञ् ।

'चकारो विशेषणार्थः' इति । यद्यत्र चकारो न क्रियेत ततो 'व्रातफञोरस्त्रियाम्' (५.३.११३) इति वक्तव्यम्, ततः 'अश्वादिभ्यः फञ्' (४ १.११०) इत्यस्याग्रहणं स्यात् । 'कौञ्जायन्यः' इति । स्वस्य ञ्यः, बहुषु तु 'ञ्यादयस्तद्राजाः' (५.३.११९) इति तद्राजत्वात् 'तद्राजस्य बहुषु' (२ ४.६२) इत्यादिना लुक् ।

किं पुनरत्र ञित्स्वरो भवति ? उत चित्स्वरः ? इत्यत्राह—'एकवचनद्विवचनयोः' इति । तत्र हि ञ्यप्रत्ययः श्रूयते, स च पश्चाद्भावीति तन्निबन्धनो ञित्स्वरः सतिशिष्टः । बहुवचने तु ञ्ये निवृत्ते सम्प्रधारणा—ञित्स्वरो वा, चित्स्वरो वेति ? तत्र परत्वाद् ञित्स्वरः प्राप्नोति, चित्करणसामर्थ्याच्चित्स्वरो भविष्यति । ञित्करणसामर्थ्याद् ञित्स्वरः प्राप्नोति ? अस्त्यन्यत् ञित्करणस्य प्रयोजनम्, किम् ? वृद्ध्यर्थो ञकारः । चित्करणेऽपि तर्ह्यस्त्यन्यत्प्रयोजनम्, किम् ? विशेषणम् । शक्योऽत्र विशेषणार्थोऽन्योऽनुबन्ध आसंक्तुम् । तत्र चकारानुरोधाच्चित्स्वरो भविष्यति । वृद्ध्यर्थोऽपि तर्ह्यन्योऽनुबन्धः शक्य आसंक्तुम्, तत्र ञकारानुरोधाद् ञित्स्वरः प्राप्नोति ? एवं स्थिते इदमुच्यते—'परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यते' इति । एवं मन्यते—स्वरे योगविभागः कर्त्तव्यः, इदमपि 'चितः' (६ १.१६३)—चितोऽन्त उदात्तो भवति, ततः 'तद्धितस्य' (६.१.१६४) चित इत्येव तद्धितस्य चितोन्त उदात्तो भवति । किमर्थमिदम् ? परत्वात् प्राप्तस्य ञित्स्वरस्य बाधनार्थम् । ततः 'कितः' (६.१.१६५), कितश्च तद्धितस्यान्त उदात्तो भवतीति । यदि तु च्फप्रत्ययः क्रियते, तद्धितस्येति योगविभागः शक्योऽकर्त्तुम् । अथैवं कस्मान्न क्रियते 'गोत्रे कुञ्जादिभ्यश्च्फञ्, बहुषु फक्, नडादिभ्यश्च' इति ? नैवं शक्यम्; इह हि दोषः स्यात्—कौञ्जायनाना-मपत्यं माणवकः कौञ्जायन्यः, कौञ्जायन्यौ; एकेन यशब्दः श्रूयते, द्व्येकयोर्हि च्फञ्विधीयते । यदा तु च्फअन्तात् ञ्यो विधीयते तदा यून्युत्पन्नस्येञः 'ण्यक्षत्रियार्षञितः' (२.४.५८) इति लुकि कृते 'तद्राजस्य' (२.४.६२) इति ञ्यस्य लुकि प्राप्ते 'गोत्रेऽलगचि' (४.१.८९) इति प्रतिषेधाद्यशब्दस्य श्रवणं भवति । तथा कौञ्जायन्य-स्यापत्यानि बहूनि, अत इञो लुकि तद्राजस्यैव बहुषु वर्तमानत्वाद् ञ्यस्य लुकि कौञ्जायना इति भवति ॥

## ९९. नडादिभ्यः फक् ।

'शलङ्कु शलङ्कं च' इति । द्वे अपि प्रथमान्ते । शब्दरूपापेक्षया नपुंसकनिर्देशः । 'शलङ्कु' इत्येतच्छब्द-रूपं 'शलङ्कं' भवति । तद्रूपेण परिणमते इत्यर्थः । 'इञेवान्यत्र' इति । बाह्वादेराकृतिगणत्वादिति भावः । 'इञो भावस्य' इति । शलङ्कभावापत्तेर-भ्युपेत्यापि गोत्रमात्रे फको विधानम्; परिहारमाह—'अथ वा' इति । ण्युपलक्षणमेतत्, पूर्वत्र परिहारे तस्याः स एव पाठो ज्ञापको वेदितव्यः ।

'अग्निशर्मन् वृषगणे' इति। अग्निशर्मन्शब्दः फकमुद्गादयति वृषगणे गोत्रे, आग्निशर्मायणो भवति वार्षगण्यश्चेत्, आग्निशर्मोऽन्यः। 'अमुष्य' इति पठ्यते, तत्रादःशब्दे प्रातिपदिकमात्रे पठितव्ये विभक्त्यन्तस्य पाठादुत्पन्नेऽपि फकि लुग्न भवति। आमुष्यायणा, आमुष्यपुत्रिकेत्यलुग्विधावस्य ग्रहणं न कर्त्तव्यं भवति। 'कृष्णरणौ ब्राह्मणवासिष्ठयोः' इति। कार्ष्णायनो भवति ब्राह्मणश्चेत्, कार्ष्णिरन्यः। राणायनो भवति वासिष्ठश्चेत्, राणिरन्यः। 'क्रोष्टु क्रोष्टं च' इति। क्रौष्टायनः॥

## १००. हरितादिभ्योऽञः।

'हरितादिभ्यः', 'अञः' इति व्यधिकरणे पञ्चम्यौ। हरितादिभ्यः परो योऽञ् तदन्तात्प्रातिपदिकादित्यर्थः। वृत्तिकारोऽप्येतदेव वस्तुतो व्याचष्टे--'हरितादिभ्योऽञन्तेभ्यः' इति। 'हरितादिभ्यो गोत्रापत्येऽञ्प्रत्ययो भवति' इत्ययं त्वर्थो न भवति; बिदादिषु पाठात्।

'सामर्थ्यात्' इति। गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो न भवतीत्येतत्सामर्थ्यम्। तस्माद्गोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते। न चैवं गोत्राधिकारस्य विच्छेद इत्याह--'गोत्राधिकारे' इति। उत्तरार्थं गोत्रग्रहणमनुवर्त्तत एवेत्यर्थः॥

## १०१. यञिञोश्च।

'गोत्रग्रहणेन यञिञौ विशेष्येते' इति। गोत्रे यौ यञिञौ विहिताविस्येवम्। न चैवं प्रत्ययार्थस्यापत्यस्याविशेषितत्वादपत्यमात्रे प्रत्ययप्रसङ्ग इत्याह--'तदन्ताद्यून्येवायं प्रत्ययः' इति। एवकारः पौनर्वचनिकः--न केवलं पूर्व एव प्रत्ययो यूनि भवति, अयमपि यून्येवेति। कस्मात्? इत्याह--'गोत्राद्यूनीति वचनात्' इति॥

## १०२. शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु।

शरद्वदादीनां भृग्वादिवंशप्रभवानां कृत्रिमा अपि पुत्राः सन्ति, स्ववंशप्रभवा अपि, तत्रापत्यविशेषणं क्रियते। तत्र भृगुः शरद्वतोऽपत्यं न भवति; पूर्वभावित्वात्। एवं शुनकस्य वत्सः, तस्माद्भार्गवश्च वात्स्यश्च आग्रायणश्चेति द्वन्द्वे युगपदधिकरणवचनतया वर्त्तिपदस्या बहुषु वृत्तेरत्रिभृग्विति 'यञञोश्च' (२.४.६४) इति गोत्रापत्यस्य लुक्, तदाह--'भार्गवश्चेद्वात्स्यश्चेत्' इति। 'दार्भिः' इति। दर्भशब्द ऋषिवचनो न भवति, बाह्वादिषु वा पाठ्यः॥

## १०३. द्रोणपर्वतजीवन्तादन्यतरस्याम्।

पूर्वमुक्तम्--गोत्राधिकारश्च शिवादिभ्योऽण् (४.१.११२) इति यावदिति, इहाप्युक्तम्--गोत्र इत्येवेति, तत्र नोदयति--'कथम्' इति। 'नैवात्र' इति। यस्य ग्रहणमूरीकृत्य भवनानन्तर्यं दोषमाह, स नैव गृह्यत इत्येवशब्दस्यार्थः। महाभारते द्रोणो महाभारतद्रोणः। 'अनादिः' इति। इदानीमेव ह्युक्तम्--बाह्वादिप्रभृतिष्वित्यादि। नन्वेवं प्रयोगस्यास्यन्तमनुपपत्तिः? इत्यत आह--'इदानीं तु' इति। अर्वाचीनादित्यर्थः, न

पुनर्महाभारतद्रोणो वृत्तिकारेण समानकालः, अनादेरिदानीन्तनस्य च द्रोण इति श्रुतिः समाना। तत्रानादि-द्रोणस्य ये वंश्या अश्वत्थाम्ना समानकालास्ते द्रौणायना इत्युच्यन्ते। तत्र यद्‌दृष्टं गोत्रत्वं तदश्वत्थाम्न्यपि द्रोणशब्दवाच्यापत्यत्वात् स्खलितबुद्धयः प्रतिपत्तारोऽध्यारोपयन्ति। तेनाध्यारोपेणाश्वत्थामनि तथा द्रौणायन इत्येतद्गोत्रप्रत्ययेनाभिधानं भवति ॥

## १०४. अनृष्यानन्तर्ये बिदादिभ्योऽञ्।

'गोत्रे इत्येव' इति। एतेन येऽत्र ऋषिशब्दा बिदोर्वप्रभृतयस्तेभ्यो गोत्र एवान्यथा स्यादिति गोत्र इत्येतदिहानुवर्त्तनीयमिति दर्शयति—'ये पुनः' इत्यादि।

'कथं पुनर्गोत्राधिकारे सत्ययमर्थो लभ्यते ? इत्यत्राह—'अनृष्यानन्तर्ये इत्यस्यायमर्थः' इति। 'अनृषि' इति पञ्चम्या लुका निर्देशः, 'आनन्तर्ये' इति स्वार्थे ष्यञ्। एवं च पौत्रा इत्यादावनन्तरस्यैवाभिधानम् न गोत्रस्य, नापत्यसामान्यस्य च। 'यद्ययमर्थः' इति। अस्मिन्ह्यर्थेऽनृषिभ्योऽनन्तरापत्ये विध्यर्थमिदं भवति, ततश्च ऋष्य-पत्यनैरन्तर्ये, ऋषयश्च तेऽपत्यानि च ऋष्यपत्यानि, तेषां नैरन्तर्ये, ऋषिरूपाण्यपत्यानि निरन्तराणि यत्र तस्मिन् विषये प्रतिषेधो न कृतः स्यात्, तत्र को दोषः ? इत्यत्राह—'तत्रेदम्' इति। कश्यप ऋषिस्तस्यापत्यमप्यृषिः, एवम् 'सप्त नैरन्तर्येण ऋषयस्तेषां सप्तम इन्द्रहूर्नाम तत्र काश्यपानाम्' (वं.ब्रा. २.२४) इति प्रयोगो नोपपद्यते; अञि सति 'यञञोश्च' (२.४.६४) इति लुक्प्रसङ्गात्। तस्मात् 'अनृष्यानन्तर्ये' इत्यस्य ऋषीणा-मानन्तर्येऽव्यवधाने प्रत्ययो न भवतीत्ययमर्थो व्याख्येय इति भावः। प्रयोगं तावदुपपादयति—'अनन्तरापत्यरूपेण' इति। अपत्यसामान्यरूपेणेत्यर्थः न पुनर्ऋष्यणनन्तरापत्ये विधीयते। तत्र यथा 'अभून्नृपः' इत्यादौ वस्तुतो भूतविषयेऽपि सामान्यविवक्षया लुङ्भवति, तद्वदिहापि वस्तुतो गोत्रेऽपि तद्रूपतिरस्कारेणापत्यसामान्यरूपविवक्षया ऋष्यण्भवतीत्यर्थः। किं पुनः कारणमियं क्लिष्टकल्पनाऽऽश्रीयते ? इत्याह—'अवश्यं चैतदेवं विज्ञेयम्' इति। ऋषीणामपत्यानां नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः। 'कौशिको विश्वामित्र इति दुष्यति' इति। किं कारणम् ? विश्वामित्रस्तपस्तेपे—नानृषिः स्यामपि तु ऋषिरेव स्यामिति, तत्र भवानृषिः सम्पन्नः; स पुनस्त-पस्तेपे—नानृषेः पुत्रः स्यामिति, तत्रभवान् गाधिरप्यृषिः सम्पन्नः; स पुनस्तपस्तेपे—नानृषेः पौत्रः स्यामिति, तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः। तदेतदृष्यानन्तर्यं सम्भवति।

'परस्त्री परशुं च' इति। द्वितीयानिर्देशादापद्यते इति शेषः। परस्त्रीशब्दः प्रत्ययमुत्पादयति, परशुं आदेशमापद्यते, परस्त्रियाः अपत्यं पारशवः, ब्राह्मणस्य शूद्रायामूढायामुत्पन्नः, सा च जातितः परस्त्री भवति। यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः स भवति कल्याण्यादिः, अनुशतिकादिश्च। पारशव इत्यत्र पूर्वोत्तरपदसम्प्र-मोहादनुशतिकादिकार्याभावः ॥

## १०५. गर्गादिभ्यो यञ्।

'अपत्यसामान्ये भविष्यति' इति। अन्ये तु—'मनुतन्तुशब्दसमुदाय एकः न तु द्वौ शब्दौ पठितौ' इति वदन्ति, तथा च ब्राह्मणे—मानुतन्तव्यमुवाचेति प्रयोगः। कालवमनुतन्तुकुशिकानामिति च प्रवरे।

'कथं मानवी' इति। लोहितादिपाठान्नित्येन ष्फेण भाव्यमिति भावः। 'अनन्तरापत्यविवक्षायां तु' इति। गोत्रस्यापीति बोद्धव्यम्, तथा च जामदग्न्याः, वात्सा इति प्रवरे प्रयोगः। 'वाजाऽसे' इति। वाजशब्दो यञमुत्पादयति, असे = असमासे। समासे तु सौवाजिः, 'ग्रहणवता प्रातिपदिकेन' (व्या.प. ८९) इत्यस्यानित्यत्वज्ञापनार्थः—'असे' इति प्रतिषेधः॥

## १०६. मधुबभ्र्वोर्ब्राह्मणकौशिकयोः।

गण एव बभ्रुकौशिक इति वक्तव्यम्, एवं हि द्विर्बभ्रुग्रहणं न कर्त्तव्यं भवति ? तथा तु न कृतमित्येव॥

## १०७. कपिबोधादाङ्गिरसे।

'कापेयः' इति। 'इतश्चानिञः' (४.१.१२२) इति ढक्। 'बौधिः' इति। अनृषित्वादिञ्, बाह्वादिर्वा॥

## १०८. वतण्डाच्च।

'किमर्थम्' इति। 'वतण्डाल्लुक् स्त्रियाम्' इत्येव कस्मान्नोक्तम्, किमर्थो योगविभाग इति प्रश्नः। परिहरति—'शिवादिष्वपि' इति। वतण्डो नाम ऋषिः, तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः। तत्र यथाऽनाङ्गिरसे समावेशो भवति, एवमाङ्गिरसेऽपि स्यादिति तन्निवृत्त्यर्थो योगविभाग इत्यर्थः॥

## १०९. लुक् स्त्रियाम्।

'वातण्ड्यायनी' इति। लोहितादिलक्षणः ष्फः। 'वातण्डी' इति। ऋषित्वात् ण्यन्त भविष्यति॥

## ११०. अश्वादिभ्यः फञ्।

'ये त्वत्र गोत्रप्रत्ययान्ताः पठ्यन्ते' इति। वैल्य, आनडुह्य, आत्रेय—इत्येते। तत्र वैल्यशब्दः 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१) इति ञ्यङन्तः, विलिर्नाम राजर्षिः, आनडुह्यशब्दो गर्गादियञन्तः, आत्रेयः 'इतश्चानिञः' (४.१.१२२) इति ढगन्तः।

'शप आत्रेये' इति। शपशब्दात्फञ भवति आत्रेयश्चेत्, शापायनः। आत्रेयादन्यत्र शापिः, अनृषित्वादिञ्, बाह्वादिर्वा। अन्ये स्वणमेव प्रत्युदाहरन्ति। 'पुंसि जातः' इति। पुंसीति प्रकृतिविशेषणम्, जातस्यापत्यं जातायनः। स्त्रियां तु जाताया अपत्यं जातेय इति ढगेव भवति, अन्यथा लिङ्गविशिष्टपरिभाषया (व्या प.२९) फञेव स्यात्। 'आत्रेय भारद्वाजे' इति। आत्रेयायनो भवति भारद्वाजश्चेत्, अन्यत्रात इञः 'ण्यक्षत्रिय' (२.४.५८) इति लुक्। 'भारद्वाजात्त्रेये' इति। अत्रिगोत्रजो यदा भारद्वाजगोत्रजेन पुत्रत्वेन स्वीक्रियते तदा प्रत्ययः। स ह्यात्रेयश्च भवति भारद्वाजस्य च गोत्रं भवति। भारद्वाजायन आत्रेयश्चेत्, भारद्वाजोऽन्यः, बिदाद्यञेव भवति॥

## १११. भार्गात्त्रैगर्त्ते ।

## ११२. शिवादिभ्योऽण् ।

'यथायथम्' इत्यादि । तत्रादन्तेष्विञोऽपवादः, मुनि–सन्धि–भूमिप्रभृतिषु 'इतश्चानिञः' (४.१.१२२) इति ढकः, स्त्रीप्रत्ययान्तेषु 'स्त्रीभ्यो ढक्' (४.१.१२०) 'द्व्यचः' (४.१.१२१) इति प्राप्तस्य ढकः, गङ्गाविपाट्शब्दयोस्तु यस्मिन् प्राप्ते स वृत्तिकारेणैवोक्तः, जरत्कारुशब्दस्य तु पाठे प्रयोजनं चिन्त्यम् । केचिदाहुः– शुभ्रादिष्वयं पठनीयः, जरत्कारेय इति यथा स्यात्, तत्र तु ढका समावेशार्थोऽस्य पाठ इति ।

'ण्यप्रत्ययस्य तु बाधो नेष्यते' इति । अत्र हेतुं 'उदीचामिञ्' (४.१.१५३) इत्यत्र वक्ष्यति ।

'शुभ्रादिढका च' इति । 'शुभ्रादिभ्यश्च' (४.१.१२३) इत्यत्र वक्ष्यति––'चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डवेय इत्यादि सिद्धं भवति' इति, तदभिप्रायेणेदमुक्तम् । रवण-विश्रवणशब्दौ पठ्येते, तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे वा वृत्तिविषये तत्समानार्थे, विश्रवसोऽपत्यं वैश्रवणो रावणः ।

'द्व्यचो नद्याः' इति । नदीवाचिनो ये द्व्यचः कुल्याप्रभृतयस्तेभ्यस्तन्नामिकाणोऽपवादे 'द्व्यचः' (४.१.१२१) इति ढकि प्राप्तेऽण् भवति । 'त्रिवेणी त्रिवणं च' इति । त्रिवेण्या अपत्यं त्रैवणः, तन्नामिकाणि सिद्धे आदेशार्थं वचनम् । अथाण्ग्रहणं किमर्थम्, न यथाविहितमित्येवोच्येत, एवमुच्यमाने इञादय एव स्युस्ते विहिताः, पुनरारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यति ? इदं तर्हि प्रयोजनम्––ऋष्टिषेण-शब्दोऽत्र पठ्यते, तत्र यथाविहितमित्युच्यमाने 'अत इञ्' (४.१.९५) प्राप्तः, तस्य सेनान्तलक्षणो ण्यो बाधकः प्राप्तः, तत्रारम्भसामर्थ्यादिञ् प्रसज्येत, पुनरण्ग्रहणादणेव भवति ॥

## ११३. अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।

अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे यत्परिभाषितं तस्यापि ग्रहणं दृष्टम्, वृद्धस्य च पूजायाम् 'वृद्धो यूना' (१.२.६५) इति, इह तु प्रत्यासत्तेरेतच्छास्त्रसिद्धस्यैव वृद्धस्य ग्रहणमित्याह––'वृद्धिर्यस्य' इति । 'अवृद्धाभ्य इति शब्दधर्मः' इति । वृद्धपर्युदासे सति नञिवयुक्तन्यायेन तत्सदृशस्यैव शब्दस्य सम्प्रत्ययात् । स्त्रीलिङ्गनिर्देशस्तु 'नदीमानुषीभ्यः' इत्यनेन सामानाधिकरण्यात् । कथं पुनरर्थवृत्तेः शब्दवृत्तिना सामानाधि-करण्यम् ? अभेदोपचारात् । अवृद्धशब्दवाच्यत्वान्नदीमानुष्य एवावृद्धा उक्ताः । 'नदीमानुषीभ्य इत्यर्थधर्मः' इति । स्वरूपग्रहणं तु न भवति, बहुवचननिर्देशात्, वृद्धपर्युदासाच्च संज्ञानद्या अपि ग्रहणं न भवति; लौकिकार्थ-वृत्तिना मानुषीशब्देन साहचर्यात् । 'तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्शः' इति । ता अवृद्धाः प्रकृतयो नामानि यासां नदीमानुषीणामिति बहुव्रीहिः । तदेवं त्रिभिरपि पदैरर्थ एव निर्दिश्यते, तन्नार्थात् प्रत्ययविधानानुपपत्तेस्तद्वाचिनीभ्यः प्रकृतिभ्यः प्रत्ययो विज्ञायते । तदिदमुक्तम्––'तेनाभेदात् प्रकृतयो निर्दिश्यन्ते' इति । तेनार्थेनाभेदात् । एतदुक्तं भवति––अवृद्धशब्दवाच्यास्तन्नामिका या नदीमानुष्यस्ताभ्योऽण्प्रत्ययो भवति, कोऽर्थः ? तद्वाचिनीभ्यः प्रत्ययो भवतीति । तदेतदाह––'अवृद्धानि यानि' इत्यादि । एवं च कृत्वा––अवृद्धेभ्यो नदीमनुषीनामभ्य इति वक्तव्यम्, तथा तु न कृतमित्येव । 'ढकोऽपवादः' इति । स्त्रीलिङ्गनिर्देशात् भिन्नोढ्यपशो-णादिष्वयं विधिनं भवतीति भावः ॥

## ११४. ऋष्यन्धकवृष्णिकुरुभ्यश्च ।

'ऋषयः प्रसिद्धा वसिष्ठादयः' इति । ऋषयः = मन्त्रदर्शिनः, ते च प्रसिद्धा वसिष्ठादयः, यथा इन्द्रादयो देवताः, तेन तेन परिभाषणीया इति भावः । 'वंशाख्या' इति । केषाञ्चिद्वंशानामेता आख्या इत्यर्थः । एवं केचिद्वंशा आख्यायन्त इति यावत् । 'मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' (व्या.प. १०) इत्यभिप्रायेणाह—'ढकोऽपवादः' इति । 'अत्र्यादिभ्यः' इति । तत्र ऋष्यणोऽवकाशः—वासिष्ठः, 'इतश्चानिञः' (४.१.१२२) इति; ढकोऽवकाशः—डुलेरपत्यं डौलेयः; आत्रेय इत्युभयप्रसङ्गे परत्वाड्ढग्भवति । सेनान्तलक्षणस्य ण्यास्यावकाशः—हारिषेण्यः, अत्र हि 'एति संज्ञायामगात्' इति षत्वस्यासिद्धत्वात् सेनान्तमेतद्भवति, ऋष्यणः स एव; जातसेनो नाम ऋषिः, तस्मादुभयप्रसङ्गे परत्वाण्ण्यो भवति—जातसेन्यः । एवमुदीचामिञ्—जातसेनिः, अन्धकाणोऽवकाशः—श्वाफल्कः, ण्यस्य स एव, उग्रसेनादन्धकादुभयप्रसङ्गे परत्वाण्ण्यो भवति—औग्रसेन्यः । वृष्ण्यणोऽवकाशः—वासुदेवः, ण्यस्य स एव; विष्वक्सेनाद्वृष्णेर्वैष्वक्सेन्यः । कुर्वणोऽवकाशः—नाकुलः, ण्यस्य स एव, भीमसेनात् कुरोर्भैमसेन्यः ।

'काकतालीयन्यायेन' इति । यदृच्छया । 'असङ्करेण' इति । शब्दान्तरैरसङ्कीर्णा इत्यर्थः । सङ्कलिताः संहृताः । 'सुबहवः' इति । व्युत्पिपादयिषिताः सर्वे इत्यर्थः । अनित्योऽपाश्रयणापि नित्यस्यान्वाख्यानं दृष्टम्, यथा—शकाश्रयेण कालस्य । 'अथ वा' इत्यादि । 'त्रिपुरुषानूकं नाम कुर्यात्' इत्यनेन न्यायेनान्धकादिवंशा अपि नित्या एव । 'तेषु ये शब्दाः' इति । अन्धकादिष्वेवाद्यत्वेऽपि ये शब्दाः प्रयुज्यन्ते तेभ्य इत्यर्थः ।।

## ११५. मातुरुत्संख्यासम्भद्रपूर्वायाः ।

'द्वैमातुरः' इति । तद्धितार्थे द्विगुः, पश्चात्तद्धितः । एकस्या औरसः सुतोऽपरस्याः कृत्रिम इति द्वैमातुरत्वम् । 'साम्मातुरः' इति । प्रादिसमासात्तद्धितः । 'भाद्रमातुरः' इति । विशेषणसमासावण् ।

'तेन' इत्याविनार्थापेक्ष्यस्य स्त्रीलिङ्गनिर्देशस्य फलं दर्शयति । 'धान्यमातुः' इति । धान्यं यो मिमीते स धान्यमाता, याजकादित्वात् षष्ठीसमासः । धान्यमातरि यो मातृशब्दस्तस्य ग्रहणं न भवतीत्यर्थः, तेन सम्मिमीते तस्यापत्यं साम्मात्र इत्युत्वं न भवति, न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः । सम्बन्धिशब्दस्य हि प्रसिद्धतरत्वात्तस्यैव ग्रहणं न्याय्यम् ।

'संख्यासम्भद्रपूर्वाया इति किम्' इति । न तावत्केवलात्प्रसङ्गः, न हि मातुरपत्यमिति विशेषणं सम्भवति; अपत्ये मातृसम्बन्धस्याव्यभिचारात् । तेन तदन्तस्य ग्रहणात् संख्यादिपूर्वस्य तावत्सिद्धमिति प्रश्नः । अन्यपूर्वस्यापि स्यादित्युत्तरम् । 'सौमात्रः' इति ।

क्वचिदस्यानन्तरं ग्रन्थः—'शुभ्रादिपाठाद्वैमात्रेयः' इति । तेन विपूर्वो मातृशब्दो न प्रत्युदाहर्तव्य इति भावः । वयं ब्रूमः—'स्त्रीभ्यो ढक्' (४.१.२०) स्त्रीप्रत्ययविज्ञानादसत्यर्थग्रहणे इह न भवति । ऐडविडो दारदः (४.१.१२० सूत्रे) इत्यस्यानन्तरमयं ग्रन्थः, इह तु लेखकैः प्रमादाल्लिखित इति ।।

## ११६ कन्यायाः कनीन च ।

'ढकोऽपवादः' इति । 'द्व्यचः' (४.१.१२१) इति प्राप्तस्य । 'कन्याया अपत्यं कानीनः' इति । शास्त्रोक्तविवाहसंस्कारपूर्वस्य पुरुषसम्प्रयोगस्याभावः कन्याशब्दनिमित्तं नाक्षतयोनित्वम् । या तु विवाहसंस्कारेण विना पुरुषेण सम्प्रयुज्यते सा कन्यात्वं न जहाति । तेनैतन्न नोदनीयम्—यदि कन्या नापत्यम्, अथापत्यं न सा कन्या, कन्या चापत्यं चेति विप्रतिषिद्धमिति । अपर आह—मुनिदेवतामहात्म्याद्या पुंयोगेऽपि न कन्यात्वं जहाति, यथा—कुन्ती, यथा—सत्यवती, सात्रोदाहरणमिति, तदाह—'कानीनः कर्णः, कानीनो व्यासः' इति ॥

## ११७. विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।

अत्र वत्सादीनां मूलप्रकृतीनां विकर्णादीन् प्रत्यपत्यत्वायोगादपत्यप्रत्ययान्तानां वात्स्यादीनां शब्दानां द्वन्द्वे युगपदधिकरणवचनतया प्रत्येकं बहुत्वोपजननात्तस्य बहुत्वस्य लोपिभिरेव कृतत्वादपत्यप्रत्ययस्य लुका निर्देशः, तदाह—'वैकर्णो भवति वात्स्यश्चेत्' इत्यादि ॥

## ११८. पीलाया वा ।

## ११९. ढक्च मण्डूकात् ।

## १२०. स्त्रीभ्यो ढक् ।

'स्त्रीग्रहणेन' इत्यादि । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात् । स्त्र्यर्थस्यापि ग्रहणं न भवति; विमातृशब्दस्यार्थस्य शुभ्रादिषु पाठात् । तस्य तु स्त्र्यर्थत्वं विधवाशब्दसाहचर्याद्विज्ञेयम् । किञ्च—स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते, स्वरितेन चाधिकारावगतिर्भवति, तेन टाबादिस्त्रीप्रत्ययान्तानामेव ग्रहणं युक्तम् । षित्त्वादयस्तु व्यवधानान्न गृह्यन्ते । 'ऐडविडः, दारदः' इति । इडविट्शब्दात् 'जनपदशब्दात्क्षत्रियादञ्' (४.१.१६८), दरच्छब्दात् 'द्व्यञ्मगध' (४.१.१७०) इत्यण्, तयोः स्त्रियाम् 'अतश्च' (४.१.१७७) इति लुक्, ततस्तदपत्येऽणेव भवति ।

'वृषे वाच्ये' इति । वृषः बीजाश्व, तेन चार्थेन विशेषविहितेनापत्यलक्षणऽर्थे ढका बाध्यते, तेनापत्येऽणेव भवति । 'वाडवः' इति । चतुष्पाल्लक्षणो ढञपि न भवति; अचतुष्पाद्वाचित्वात् ।

'अण् कुञ्चा' इति । वृष इति नापेक्ष्यते, अपत्य एवायं विधिः । ढकोऽपवादः । कुञ्चा च कोकिला च समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् ॥

## १२१. द्व्यचः ।

'तन्नामिकाणोऽपवादः' इति । अन्यत्र पूर्वेणैव सिद्धत्वात् ॥

## १२२. इतश्चानिञः ।

## १२३. शुभ्रादिभ्यश्च ।

'यथायोगम्' इत्यादि । तत्रादन्तेष्विञोऽपवादः, शलाकादिषु तन्नामिकाणः, विधवाशब्दात्तु क्षुद्रालक्षणस्य ढ्रकः,चतुष्पादादिषु चतुष्पाल्लक्षणस्य ढञः, गोधाशब्दाद्गोधाया ढ्रकः; वचनात् सोऽपि भवति । क्वचिदौत्सर्गिकस्याणः । 'पाण्डवेयः' इति । 'ढे लोपोऽकद्र्वाः' (६.४ १४७) इति लोपो न भवति; कद्रूपर्युदासेन स्त्रीलिङ्गस्य ग्रहणात् पाण्डवशब्दाड्ढा प्रत्ययः ।

'लक्षणश्यामयोर्वासिष्ठे' इति । लाक्षणेयो भवति वासिष्ठश्चेत्, लाक्षणिरन्यः; श्यामेयो वासिष्ठः, श्यामायनोऽन्यः, अश्वादित्वात् फञ् ॥

## १२४. विकर्णकुषीतकात्काश्यपे ।

## १२५. भ्रुवो वुक्च ।

## १२६. कल्याण्यादीनामिनङ् ।

## १२७. कुलटाया वा ।

'कुलान्यटतीति कुलटा' इति । मूलविभुजादिषु दर्शनात्कः प्रत्ययः । पचाद्यच् तु न लभ्यते; अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेत्यण्प्रसङ्गात् ।

'या तु कुलान्यटन्ती शीलं भिनत्ति' इति । एकत्र कुले प्रविष्टा स्वैरिणी या कुलान्तरमटति सा दुःशीला कुलटेत्यर्थः । 'क्षुद्राभ्यो वेति परत्वात्' इति । क्षुद्राः = अङ्गहीनाः शीलहीनाश्च । या पुनर्भिक्षालिप्सया सुशीलापि कुलान्यटति, तस्या इह ग्रहणम् ॥

## १२८. चटकाया ऐरक् ।

स्त्रीलिङ्गनिर्देशात्पुंल्लिङ्गान्न प्रसज्यत इत्याह—'चटकाच्चेति वक्तव्यम्' इति । एवं च पुंल्लिङ्गनिर्देश एव कर्तव्यः, लिङ्गविशिष्टपरिभाषया (का.तन्त्र.प.सू. १८) स्त्रीलिङ्गादपि भविष्यति; तथा तु न कृतमित्येव ।

'स्त्रियामपत्ये लुग्वक्तव्यः' इति । 'चटकाया अपत्यम्' इति । चटकस्यापीति द्रष्टव्यम् । 'चटका' इति । 'लुक्तद्धितलुकि' (१.२.४९) इति टापो लुकि कृते पुनरजादिलक्षणष्टाप् कर्तव्यः ॥

## १२९. गोधाया ढ्रक् ।

## १३०. आरगुदीचाम् ।

'रका सिद्धत्वात्' इति । 'न लक्षणेन पदकारा अनुवर्त्याः' इत्यवग्रहेऽपि नास्ति विशेषः । 'ज्ञापकार्थं तु' इति । भावप्रधानो ज्ञापकशब्दः । ज्ञापनार्थमिति वा पाठ्यम् । 'जाडारः, पाण्डारः' इति । ह्रस्वान्तावयं प्रत्यय इति रका नास्ति सिद्धिः ॥

## १३१. क्षुद्राभ्यो वा ।

'अङ्गहीनाः' इति । काणादयः । 'शीलहीनाः' इति । अनिपन्नपुंस्का दासीप्रभृतयः ॥

## १३२. पितृष्वसुश्छण् ।

## १३३. ढकि लोपः ।

'कथं पुनः' इत्यादि । ढग्विधौ टाबादिस्त्रीप्रत्ययान्तानां ग्रहणाच्छ्वश्रादिष्वस्यापाठात् प्रश्नः । 'एतदेव' इत्यादि । न ह्यसतो निमित्तभावः सम्भवति ॥

## १३४. मातृष्वसुश्च ।

'पितृष्वसुरित्येतदपेक्ष्यते' इति । चकारेणानुकृष्यत इत्यर्थः । तदनुवृत्तौ योऽर्थः सम्पद्यते, तं दर्शयति—'पितृष्वसुर्यदुक्तम्' इति । किं पुनस्तदित्याह—'छण् प्रत्ययो ढकि लोपश्च' इति । तेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या.प. १९) इति ढकि लोप एव प्राप्नोति, न तु छणिति न चोदनीयमिति भावः ॥

## १३५. चतुष्पाद्भ्यो ढञ् ।

कमण्डलुशब्दश्चतुष्पाद्वचनोऽस्ति, दृश्यते हि—कमण्डलुपद आवधीतेति । जम्बुः = शृगालः ॥

## १३६. गृष्ट्यादिभ्यश्च ।

'अणादीनाम्' इति । आदिशब्देन ढकः । बहुवचनं तु प्रकृतिभेदेन तयोरेव बहुत्वात् तत्राजवस्ति–मित्रयु शब्दयोरणोऽपवादः, शेषाणां 'इतश्चानिञः' (४.१.१२२) इति ढकः ।

'गृष्टिशब्दो यः' इति । सकृत्प्रसूता स्त्री सैव गृष्टिर्न धेन्वादिश्चतुष्पादेवेति भावः । अपर आह—सकृत्प्रसूतत्वसाधर्म्येणाचतुष्पदीष्वपि गौणो गृष्टिशब्द इति ॥

## १३७. राजश्वशुराद्यत् ।

'क्षत्रियजातिश्चेत्' इति । प्रकृतिप्रत्ययसमुदायेन क्षत्रियजातिश्चेद् गम्येतेत्यर्थः । 'राजन्यः' इति । 'ये चाभावकर्मणोः' (६.४.१६८) इति प्रकृतिभावः । 'राजनोऽन्यः' इति । स पुनर्वैश्यशूद्रयोरुत्पन्नः, 'अन' (६.४.१६७) इति प्रकृतिभावः ॥

## १३८. क्षत्राद्घः ।

'घप्रत्ययो भवति' इति । घशब्द एव, न तरप्तमपौ, अन्यथा सर्वत्रैव प्रत्ययविधौ घ इति तरप्तमपोर्ग्रहणात् प्रत्ययादेर्घकारस्येयादेशवचनमनुपपन्नं स्यात्, न च 'तुग्राद्घन्' (४.४.११५) 'घच्छौ च' (४.४.११७) इति घन्घावाववकाशौ, तत्रापि संज्ञाशब्दः सानुबन्ध उपात्तः । अनुबन्धस्तु संज्ञ्यर्थ इति सम्भवात्, 'ङमुणिनत्यम्' (८.३.३२) इतिवत् । 'किमिदम्भ्यां वो घः' (५.२.४०) इत्यत्रापि तरप्तमपोरेवादेशत्वं विज्ञायेत । 'अयमपि जातिशब्द एव' इति । राजन्यजात्यभिधाने घो भवति, वैश्यशूद्रयोरुत्पादिते तु इञेवेत्यर्थः ॥

## १३९. कुलात्खः ।

'उत्तरसूत्रे' इत्यादि । पूर्वपदप्रतिषेधस्यतत्प्रयोजनम्—आढ्यकुलादेर्मा भूदिति । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधा (व्या.प. ८९) देवाढ्यकुलादेर्न भविष्यति, पश्यति त्वाचार्यः—नायं प्रतिषेधः कुलशब्दे प्रवर्तत इति । तेनात्र तावत्तदन्तस्य ग्रहणम् 'येन विधिस्तदन्तस्य' (१.१.७२) इत्यत्र स्वरूपमित्यनुवृत्तेः केवलस्यापि ग्रहणम् । सामान्यापेक्षं च ज्ञापकम्—'प्रातिपदिकश्रुतिमती परिभाषा कुलशब्दे न प्रवर्तते' इति, तेन 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शाक.प.६५) इत्यस्या अप्रवृत्तिः । 'कुलीनः' इति । उत्तरसूत्रेऽन्यतरस्यांग्रहणात् केवलादप्यनेन खो भवति । प्रशस्तो वंशः = कुलम्, तस्यापत्यं तत्प्रभवस्यापत्यमित्यर्थः ॥

## १४०. अपूर्वपदादन्यतरस्यां यड्ढकञौ ।

ननु च पूर्वपदशब्दः समासावयवे रूढः, न तस्य कुलशब्दे प्रसङ्गः ? इत्यत आह 'समास[1]सम्बन्धिनः' इत्यादि । समाससम्बन्धिपूर्वपदं कुलशब्दस्यापि कथञ्चित्सम्बन्धि भवति, द्वयोरप्येकसमासावयवत्वात् । व्यवस्थावचनस्तु नैवात्र शंकनीयः; पूर्वपदशब्दस्य समासावयवे रूढत्वात् । तेन 'देवदत्तः कुलीनः' इत्यादौ वाक्ये प्रतिषेधाशङ्का न कार्या ।

'बहुच्पूर्वादपि' इति । अपूर्वादित्युच्यमाने बहुकुलशब्दो बहुचा सपूर्व इति, ततः प्रत्ययो न स्यात् । किञ्च—देवदत्तः कुलीन इत्यादावपि प्रतिषेधः स्यात् । तस्माद्रूढिपरिग्रहार्थमपि पदग्रहणं कर्त्तव्यम् ॥

---

1. सम्बन्धि—काशिका, न्यासश्च ।

## १४१. महाकुलादञ्खञौ ।

## १४२. दुष्कुलाड्ढक् ।

## १४३. स्वसुश्छः ।

## १४४. भ्रातुर्व्यच ।

## १४५. व्यन्सपत्ने ।

ननु च 'नित्यं सपत्न्यादिषु' (४.१.३५) इति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितः, तत्कथं पुंल्लिङ्गस्य प्रयोगस्तत्राह—'सपत्नशब्दः' इत्यादि । 'इवार्थे' इति । सादृश्ये, यथा पत्नी दुःखहेतुस्तथा शत्रुरपी-त्येतत्सादृश्यम् । 'समुदायेन चेत्' इति । एतेन समुदायार्थः सपत्नो न प्रकृत्यर्थः, नापि प्रत्ययार्थविशेषणम्, अनर्थकावेवात्र प्रकृतिप्रत्ययाविति दर्शयति । अथानुवृत्तस्यापत्यस्य विशेषणमेव सपत्नः कस्मान्न भवति ? तत्राह—'अपत्यार्थोऽत्र नास्त्येव' इति । एतदेवोदाहरणेन स्पष्टयति—'पाप्मना भ्रातृव्येण' इति । न हि पाप्मा भ्रातुष्पुत्रो भवति, अतः सपत्नमात्रे भ्रातृव्यशब्दस्य दर्शनादपत्यार्थोऽत्र नास्ति । किञ्च, योऽपि सपत्नो भ्रातुरपत्यं सम्भवति, सोऽप्याद्युदात्ताद्भ्रातृव्यशब्दात् सपत्नरूपेणैव प्रतीयते, नापत्यरूपेण । तथा च भ्रातृव्यो भ्रातृव्य इति सहप्रयोगोऽपि व्यन्व्यदन्तयोर्भवति, अतः सुष्ठूक्तम्—'अपत्यार्थो नास्त्येव' इति ॥

## १४६. रेवत्यादिभ्यष्ठक् ।

'ढगादीनामपवादः' इति । तत्र रेवतीशब्दो ङीषन्तः, अश्व, मणि, द्वारशब्दोपपदात्पालयतेः कर्मण्यणि ङीप्, तेषु ढक्प्राप्तः । 'वञ्चु प्रलम्भने' (धा.पा. १७०३), अस्माद्वृकोपपदात् 'कर्त्तर्युपमाने' (३.२.७९) इति णिनिः, अस्मादण्प्राप्तः वृककर्णदण्डोपपदाद्ग्रहेः 'कर्मण्यण्' (३.२.१), कुक्कुटस्येवाक्षिणी यस्य स कुक्कु-टाक्षः, एष्विञ् प्राप्तः ॥

## १४७. गोत्रस्त्रियाः कुत्सने ण च ।

पारिभाषिकस्य गोत्रस्य ग्रहणमित्याह—'अपत्यं पौत्र' इति । लौकिकस्य त्वपत्यमात्रस्य ग्रहणं न भवति, यदि स्यात् 'तत्स्त्रियाः' इत्येव ब्रूयात्; तच्छब्देन प्रकृतस्यापत्यस्य परामर्शादेव तदर्थलाभात । 'गार्गः' इति । गार्गीशब्दो 'यञश्च' (४.१.१६) इति ङीबन्तः' तस्य 'भस्याऽढे तद्धिते' (वा. ७३१) इति पुंवद्भावेन पुंशब्दस्यातिदेशात् गार्ग्यशब्दाद्गोत्रस्त्र्यभिधायिनः प्रत्ययः, 'यस्येति च' (६.४.१४८), 'आपत्यस्य च तद्धितेऽ-नाति' (६.४.१५१) इत्यल्लोपयलोपौ । 'ग्लौचुकायनः' इति । ग्लुचुकायनस्यापत्यम् 'प्राचामवृद्धात्फिन् बहु-लम्' (४.१.१६०) इति फिन्, 'इतो मनुष्यजातेः' (४.१.६५) इति ङीष्, तस्य पुंवद्भावेन निवृत्तिः, ततः प्रत्ययः, णस्य निरकरणमत्र वृद्ध्यर्थम्, गार्ग्यादौ प्रकृतेरेव वृद्धत्वात् । इह तु वतण्डस्यापत्यं गोत्रं स्त्री, 'वतण्डाच्च, लुक् स्त्रियाम्' (४.१.१०८,१०९) वतण्डी, तस्या अपत्यं वातण्डो जाल्म इति पुंवद्भावेन ङीनि निवृत्ते

'लुक् स्त्रियाम्' (४.१.१०९) इत्यस्य 'गोत्रेऽलुगचि' (४ १.८९) इति प्रतिषेधाद्वातण्डयशब्दादेव प्रत्ययः। इह च गार्ग्या अपत्यं स्त्री गार्गी, सा भार्या यस्य स गार्गीभार्य इति 'जातेश्च' (६ ३.४१) इत्येव पुंवद्भाव-प्रतिषेधसिद्धिः, 'गोत्रं च चरणैः सह' (म.भा. २ २२५ का. ४.१.६३) इत्यपत्यमात्रं गृह्यते, तेन वृद्धिनि-मित्तस्य चेति पुंवद्भावप्रतिषेधो न प्रयोजनम्। किञ्च—गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः, 'अस्त्रियाम्' (४.१.९४) इति युवसंज्ञाया निषेधाद्गोत्रसंज्ञैवावतिष्ठते, तत्र 'एको गोत्रे' (४.१.९३) इति नियमान्नैव गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययः सम्भवति, तेन नास्ति गार्गी, नतरां गार्गीभार्यः।

अपर आह—अस्ति गार्गी, कथम्? गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रम्; न हि सा गर्गस्यापत्यं पौत्रप्रभृतेश्चापत्यस्य गोत्रसंज्ञा विधीयते, तदभावात् 'एको गोत्रे' (४.१.९३) इति नियमाभावः, ततश्च णस्य भावादस्ति गार्गेति।

ये तु नास्ति गार्गेत्याहुः, ते मन्यन्ते—मातृवंशः पितृवंशश्च द्वावपि वंशौ प्रतीयमपत्यं भवति; अपात-हेतुत्वात्। ततश्च गार्ग्या अपत्यं या स्त्री सा गर्गस्यापत्यं भवत्येव, पौत्रप्रभृतिग्रहणं च व्यवहितापत्योपलक्षणम्, तेन गर्गापेक्षया तस्या गोत्रत्वात् 'एको गोत्रे' (४.१.९३) इति नियमात् प्रत्ययान्तराभाव इति। वृत्तौ तु क्वचित्पठ्यते—'गोत्राद्यूनीति यूनि प्रत्ययो भवति' इति। तदप्यस्मिन्नेव पक्षे घटते, तदाह—'गार्ग्या अपत्यं पुमान् युवा भवति गार्गेयो माणवकः' इति। मातामहादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा॥

## १४८. वृद्धाट्ठक्सौवीरेषु बहुलम्।

अत्र 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (१.१.७३) इति वृद्धं गृह्यते, न त्वपत्यमन्तर्हितं वृद्धमिति शास्त्रा-न्तरपरिभाषितम्। उत्तरसूत्रे हि वक्ष्यति—फिञो ग्रहणं न फिनः, वृद्धाधिकारादिति। 'सौवीरेष्विति प्रकृतिविशे-षणम्' इति। 'गोत्रस्त्रियाः' (४.१.१४७) इत्यतो गोत्रग्रहणानुवृत्तेर्गोत्रप्रत्ययान्ता या प्रकृतिस्तस्या विशेषण-मित्यर्थः। 'वृद्धात्सौवीरगोत्रात्' इति। इदमपि पारिभाषिकस्यैव वृद्धस्य ग्रहणे घटते, अन्यथा सौवीरेषु यद्वृद्धं तस्मादिति वक्तव्यम्। 'भागवित्तायनः' इति। 'यञिञोश्च' (४.१.१०१) इति फक्। तृणबिन्दोरपत्यमिति औत्सर्गिकोऽण् तार्णबिन्दवः, ततष्ठक्। पूर्वठग्रहणं णेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह ग्रहणम्।

'भागपूर्वपदो वित्तिः' इति। वित्त्यन्त इत्यर्थः। भागवित्तिशब्द इति यावत्। 'गोत्राट्ठब्बहुलं ततः' इति। 'गोत्र स्त्रियाः' (४.१.४७) इत्यतो गोत्रग्रहणानुवृत्त्या गोत्रवचनात् प्रातिपदिकाद्बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्य एव भवति, नान्येभ्य इति परिगणनश्लोकार्थः।

ननु गोत्रग्रहणमनुवर्त्तते, यच्च सौवीरगोत्रवृत्तिप्रातिपदिकं तद्वृद्धमेव, तत्किमर्थं वृद्धग्रहणम्? अत आह—'वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम्' इति। तद्धि गोत्रग्रहणं स्त्रिया विशेषणम्, अतस्तदनुवृत्तौ स्त्रीग्रहणमप्यनुवर्त्तेत, वृद्धसामर्थ्यात्तु गोत्रग्रहणमेवानुवर्त्तते, न स्त्रीग्रहणमिति व्याचक्षते। अपत्यमन्तर्हितं वृद्धमित्यस्य तु वृद्धस्य ग्रहणेऽसमञ्जसोऽयं ग्रन्थः स्यात्, 'औपगविः' इति।

ननु च परिगणनादेवात्र न भविष्यति ? तन्न; न हि सूत्रकारोऽर्वाचीनपरिगणनाश्रयेणातिप्रसङ्गनिवारणं मन्यते, वाग्रहण एव कर्त्तव्ये यद्बहुलग्रहणं कृतं तस्य प्रयोजनमाह—'बहुलग्रहणम्' इत्यादि। वैचित्र्यमेव दर्शयति—'गोत्रस्त्रिया इत्यारभ्य' इति। 'तत्रान्त्यः सौवीरगोत्र एव' इति। अयमेवार्थो यत्नसाध्यः॥

## १४९. फेश्छ च ।

'यमुन्दश्च' इत्यादि। अत्र वार्ष्यायणीति शब्दरूपापेक्षया नपुंसकनिर्देशः। 'फिञः' इति। फिञन्ता इत्यर्थः। 'स्मृता' इति। एते त्रयः फिञन्ताः प्रकृतयः स्मृता इत्यर्थः। 'सौवीरेषु च कुत्सायाम्' इति। पुनश्चकारो वृत्तभङ्गभयान्न पठितः। बहुलग्रहणात्सिद्धोऽयमर्थः पूर्वं वृत्तिकृता दर्शितः, इदानीं तु श्लोकवार्त्तिककारेणेत्यपौनरुक्त्यम्। सुयामशब्दोऽपि तिकादिः। वृषस्यापत्यं वार्ष्यायणिः। अयमपि तिकादिरेव, 'दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति वचनादायनादेशे कृते युडागमः॥

## १५०. फाण्टाहृतिमिमताभ्यां णफिञौ ।

'तेन यथासंख्यमिह न भवति' इति। एवं च कृत्वा णस्य णित्करणमर्थवद्भवति, तद्धि मिमतशब्दे वृद्ध्यर्थम्। यथासंख्ये तु फाण्टाहृतेर्वृद्धत्वाण्णित्करणमनर्थकं स्यात्। इह तु फाण्टाहृनाभार्य इति गार्गीभार्य इतिवत्पुंवद्भावप्रतिषेधादिकं द्रष्टव्यम्। यथा तु वार्त्तिकं तथा यथासंख्यमत्रेष्यते, यथाह—फाण्टाहृतेर्णस्य णित्करणानर्थक्यं वृद्धत्वात्', 'प्रातिपदिकस्य पुंवद्भावप्रतिषेधार्थं तु', 'उक्तं वा' इति॥

## १५१. कुर्वादिभ्यो ण्यः ।

ननु च 'कुरुनादिभ्यो ण्यः' (४.१.१७२) इत्येव कुरुशब्दाण्ण्यः सिद्धः, किमर्थमिह पठ्यते ? अत आह—'कुरुशब्दादपरोऽपि' इति। सत्यमपरोऽपि ण्यप्रत्ययो भविष्यति। 'स तु क्षत्रियात्' इत्यनेनार्थभेदमाह। 'तद्राजसंज्ञकः' इत्यनेन रूपभेदमाह। 'तिकादिषु पाठात्' इति। कुरुकौरव्यशब्दौ द्वावपि पठ्येते।

'कारिणस्तु रथकारशब्दात्' इति। कारिणः = शिल्पिनः। रथकारजातिस्तु शिल्पवृत्तिर्न भवतीति मन्यते।

'तस्य पुंवद्भावो न भवति' इति। 'भस्याऽढे तद्धिते' (वा. ७३१) इति विधीयमानः, यदि हि स्यात् 'नस्तद्धिते' (६ ४ १४४) इति टिलोपः स्यात्। कस्मान्न भवतीत्याह—'स्त्रीप्रत्यय निर्देशसामर्थ्यात्' इति। पुंल्लिङ्गात्त्वनभिधानान्न भविष्यतीति पुंल्लिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि सिद्धः प्रत्ययः, पुंल्लिङ्गात्त्वनभिधानान्न भविष्यतीति भावः।

'वामरथशब्दः' इत्यादि। तस्येति प्रकरणाण्ण्यवामरथस्य कण्वादिवत्स्वरवर्जमिति गणवाक्यं व्याचष्टे—'वामरथशब्दः' इत्यादि। तस्येति प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम्। 'कण्वादिवत्' इति। केवलानां तेषां कस्यचित्कार्यस्याविधानाद्यञन्तानां कण्वादीनां यत्कार्यं तस्यातिदेशः। 'लुगादिकम्' इति। कण्वादिषु यञन्तेषु दृष्टमात्रस्य कार्यस्यातिदेशः, न तु कण्वादिस्वप्रयुक्तस्य,

अत एव स्वरवर्जमित्याह । तेन लुगादिकमप्यतिदिश्यते, न तु 'कण्वादिभ्यो गोत्रे' (४.२.१११) इत्येव प्रत्ययविधिः । 'वामरथाः' इति । 'यञञोश्च' (२.४.६४) इति बहुषु लुक् । यञश्च 'प्राचां ष्फ तद्धितः' (४.१.१७), यूनि 'यञिञोश्च' (४.१.१०१) इति फक्; शैषिकेष्वर्थेषु छे प्राप्ते 'कण्वादिभ्यो गोत्रे' (४.२.१११), 'सङ्घाङ्कलक्षणेषु' (४.३.१२७) इति चाण् भवति । 'सम्राजः क्षत्रिये' इति । सम्राजोऽपत्यं साम्राज्यो भवति, क्षत्रियश्चेत्; साम्राजोऽन्यः ॥

## १५२. सेनान्तलक्षणकारिभ्यश्च ।

लक्षणेति स्वरूपग्रहणमित्याह--'लक्षणशब्दात्' इति कारित्यर्थग्रहणमित्याह--'कारिवचनेभ्यश्च' इति । साधु कुर्वन्तीति कारिणः = शिल्पिनः । 'नापित्यः' इति । प्राचां मते ण्य उदाहृतः । उदीचां तु मते परत्वात् 'उदीचां वृद्धात्' (४.१.१५७) इति फिञेव भवति—नापितायनिरिति ॥

## १५३. उदीचामिञ् ।

'ताक्षणः' इति । 'षपूर्वहन्धृतराज्ञामणि' (६.४.१३५) इत्यल्लोपः । 'ताक्षण्यः' इति । 'ये चाभावकर्मणोः' (६.४.१६८) इति प्रकृतिभावः । इह 'सेनान्तलक्षणकारिभ्यो वा' इति वक्तव्यम्, नार्थोऽनेनेञ्वचनेन, नापि शिवादिषु तक्षन्शब्दस्य पाठेन, ण्ये हि विकल्पिते ये यतः प्राप्नोति स ततो भवतीति तक्षणः 'प्राग्दीव्यतोऽण्' (४.१.८३), अन्येभ्यश्च 'अत इञ्' (४.१.९५) भविष्यति ? नैवं शक्यम्; एवं हि जातसेनादिभ्य ऋष्यादिलक्षणोऽण् प्राप्नोति ॥

## १५४. तिकादिभ्यः फिञ् ।

'क्षत्त्रियवचनः' इति । यः 'कुरुनादिभ्यो ण्यः' (४.१.१७२) इति व्युत्पादितः । 'औरसशब्देन' इति । उरसा शेते उरसः क्षत्त्रियः, पृषोदरादित्वाद्रूपम् तस्यापत्यम् 'जनपदशब्दात्क्षत्त्रियात्' (४.१.१६८) इत्यञ् ।

किं पुनरेवं प्रत्ययेन क्षत्त्रियवचनस्य ग्रहणं व्याख्यायते ? इत्यत्राह--'तथा च' इति । 'उदाहृतम्' इति । पूर्वैरपि वृत्तिकारैरित्यर्थः ।

तिकनोतेरिगुपधात्कः तिकः । किं तवास्तीति प्रवर्त्तते कितवः, पृषोदरादिः । सम्पूर्वाज्जानातेः 'आतश्चोपसर्गे' (३.१.१३६) इति कः, स्त्रियां टाप्, संज्ञा । बालैर्बद्धा शिखास्य स बालशिखः । द्वौ शब्दावित्यन्ये, बलतेर्णिजन्तादच् बालः तस्य बालायनिः । शिखाशब्देन तद्वान् लक्ष्यते, शैखायनिः । उरशशब्दो व्युत्पादितः । 'शट रुजायाम्' (धा.पा. २९९) पचाद्यच्, ततो गर्गादित्वाद्यञ्--शाटचः, ततो यूनि फिञ् । सिन्धुशब्दात् 'द्व्यञ्मगध' (४.१.१७०) इत्यण् सैन्धवः, अत्रापि यूनि फिञ् । यममृनत्तीति यमुन्दः शकन्ध्वादिः । प्रशस्तं रूपमस्यास्ति 'रूपादाहतप्रशंसयोर्यप्' (५.२.१२०) रूप्यः । ग्रामे भवो ग्राम्यः । नील वर्णे, इगुपधात्कः नीलः । 'अम रोगे' (धा.पा. १७२०), औणादिक इत्रः, अमित्रः । गोकक्ष्यो गर्गादियञन्तः । 'कृग्रोरुः' (द.उ १ १०९) कुरुः । देवस्येव रथोऽस्य देवरथः । तिले तिलः, तितिलः, पृषोदरादिः, ततो मत्वर्थीय इन्, तितिलिनोऽपत्यमौत्सर्गिकोऽण्, 'नस्तद्धिते' (६.४.१४४) इति टिलोपः, तैतिलः । औरसशब्दो

व्युत्पादितः। 'कुरुनादिभ्यो ण्यः' (४.१.१७२), कौरव्यः। भूरि अस्यास्ति भूरिको व्रीह्यादिः, तस्यैव पक्षे कपिलकादित्वाल्लत्वं भूलिकः ताभ्यामत इञ् भौरिकिः, भौलिकिः। 'चुप मन्दायां गतौ' (धा.पा. ४०३) ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चौपयतः, एवं चैतयतः। 'चिट परप्रेष्ये' (धा.पा. ३१५) ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चैटयतः। 'शीकृ सेचने' (धा.पा. ७५), णिजादि पूर्ववत्, शैकयतः। क्षितमाचष्टे क्षितयन्, तस्यापत्यं क्षैतयतः। ध्वजोऽस्यास्ति ध्वजवान्, तस्यापत्यं ध्वाजवतः। द्वौ शब्दावित्यन्ये 'ध्वज गतौ' (धा.पा. २२१) ण्यन्तात्पचाद्यच्, ध्वाजः; वनोतेस्तः, वतः। 'चदि आह्लादने' (धा.पा. ६८), ततो रमस् चन्द्रमाः, तस्यापत्यं चान्द्रमसायनिर्बुधः। शोभतेऽसौ शुभः, इगुपधात्कः। गमेर्गन्, गङ्गा। वृञ एण्यः, वरेण्यः। सर्वधातुभ्यो मनिन्, यानं यामा, शोभनं यामास्य सुयामा। आरदो नाम जनपदः, ततोऽपत्ये 'जनपदशब्दात्' (४.१.१६८) इत्यञ्–आरदः। वह्यं करणम्, वह्यमेव वह्यका, निपातनादित्वाभावः। खलाय हिता खल्या, 'खलयव' (५.१ ७) इति यत्। 'वृषु सेचने' (धा.पा. ७०६) इगुपधात्कः–वृषः। लोमानि कामति लोमका। उदकमिच्छत्यात्मन उदन्यः, 'अशनायोदन्यधनाया' (७ ४ ३४) इत्युदकस्योदन्भावः, ततः पचाद्यच्। यज्ञयोगाद्यज्ञः। एते तिकादयः॥

## १५५. कौशल्यकार्मार्याभ्यां च।

कोसलशब्दात् 'वृद्धेत्कोसलाजादाञ् ञ्यङ्' (४.१.१७१), कर्मारशब्दात् कारिलक्षणो ण्यः (४.१.१५२), एतयोरिह ग्रहणमिति शङ्कामपाकरोति–'परमप्रकृतेरेव' इति। कथं तर्हि विकृतं प्रकृतिरूपं श्रूयते? तत्राह–'प्रत्ययसंयोगेन तु' इति। न चेयं स्वमनीषिकेत्याह–'तथा च' इति। 'युड वादिष्टस्य' इति। पूर्वान्तकरणे वागव्यायनिः, ओर्गुणो न स्यात, अतः परादिकरणम्। 'आदिष्टस्य' इति। कृतायनादेशस्येत्यर्थः। एतस्मिन्ननुच्यमानेऽनवकाशत्वाद्युटि कृतेऽनादित्वादायनादेशो न स्यात॥

## १५६. अणो द्व्यचः।

'कार्त्रायणिः' इति। कर्तुरपत्यमित्यण्, कार्त्रः, ततो यूनि फिञ्, तस्याब्राह्मणगोत्रादिति लुग्न भवति, 'अत इञ्' इत्यादावगोत्रे चरितार्थं वचनविधानसामर्थ्यात्। अपर आह–कर्तुश्छात्रः कार्त्रः, 'तस्यापत्यम्' (४.१.९२) इत्यादावगोत्रे चरितार्थं वचनमिति। अपर आह–अपत्यग्रहणमावर्तते, तत्रैकेनाण् विशेष्यते, अपरेण प्रत्ययार्थो निर्दिश्यते, ततश्चापत्यस्यैवाणो ग्रहणादस्त्येव वचनसामर्थ्यमिति॥

## १५७. उदीचां वृद्धादगोत्रात्।

'कारिशब्दादपि' इति। कारिलक्षणस्योदीचामिञोऽवकाशः–ताम्तुवायिः; फिञोऽवकाशः–आम्रगुप्तायनिः, नापितादुभयप्रसङ्गे फिञ् भवति। 'याज्ञदत्तिः' इति। 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' (वा. १५)। पक्षे याज्ञदत्तायनिरिति भवत्येव॥

## १५८. वाकिनादीनां कुक्च।

'यदिह वृद्धगोत्रम्' इति। वाकिन गारेध काक–इत्येते त्रयः। वचनं वाकः सोऽस्यास्ति वाकिनः,

बर्हिणवदुपपाद्यः। अगारे एधते गारेधः, पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपम्। कायतेः काकः, 'अन्येषामपि' इति कः। कर्कटस्यापत्यं कार्कट्यः, गर्गादिः, कुर्वादिर्वा। लङ्घयतेर्लङ्का, अस्मादेव निपातनाद् घस्य कादेशः। वर्मचर्मशब्दौ व्रीह्यादी।

'इञाद्यपवादः' इति। वर्मिचर्मिणोरण् प्राप्तः, लङ्काशब्दात् 'द्व्यचः' (४.१.१२१) इति ढक् प्राप्तः, यञन्तात् 'यञिञोश्च' (४.१.१०१) इति फक्; शेषेभ्य इञ् प्राप्तः, 'वर्मिचर्मिणोर्नलोपश्च' (ग.सू. ८१) इति कुकि कृते प्रातिपदिकस्यानकारान्तत्वान्नलोपो न प्राप्नोतीति विधीयते। यदि पुनरयं कुक् परादिः क्रियते, आयनादेशो न स्यात्; फस्यानादित्वात्। यदा च लिङ्गविशिष्टपरिभाषया (व्या.प. २९) वर्मिणीचर्मिणी-शब्दाभ्यां प्रत्ययो भवति, तदा 'भस्याऽढे तद्धिते' (वा. ७३१) इति पुंवद्भावो न स्यात्॥

## १५९. पुत्रान्तादन्यतरस्याम्।

'पूर्वेणैव प्रत्ययः सिद्धः' इति। तेनासाविह विधीयते। कथं तर्हि पञ्चम्या निर्देश इत्याह––'पुत्रान्तात्' इत्यादि॥

## १६०. प्राचामवृद्धात्फिन्बहुलम्।

'विकल्पार्थाः' इति। विकल्पप्रयोजनम्। तत्राऽऽचार्योपादानं मतान्तरे प्रत्ययस्याभावं द्योतयति, बहुलग्रहणं तु क्वचित्प्रवृत्त्या विकम्, अन्यतरस्यांशब्दस्तु विकल्पमेव, तेषामेकेनैव सिद्धयतीति प्रकरणाद्विकल्प इति गम्यते। किमर्थं तर्हि सर्वेषां ग्रहणम्? तत्राह––'तत्र' इति। 'बहुलग्रहणं वैचित्र्यार्थम्' इति। पारिशेष्या-दन्यस्य ग्रहणं विकल्पार्थमित्युक्तं भवति। वैचित्र्यमेव दर्शयति––'क्वचित्' इति॥

## १६१. मनोर्जातावञ्यतौ षुक्च।

'तथा च' इति। अपत्यार्थे तु सति 'यञञोश्च' (२.४.६४) इति बहुषु लुक् प्रसज्येत; लौकिकस्य गोत्रस्य तत्र ग्रहणात्।

'अपत्ये कुत्सिते' इति। णत्वविधानार्थमिदम्, अणः सिद्धत्वात् न च 'न दण्डमाणवान्तेवासिषु' (४.३.१३०) इति णत्वसिद्धिः, अर्थविशेषस्यानिश्चयात्। अनधीतवेदत्वान्मूढत्वम्। विहिताकरणात् प्रतिषिद्धसेवनाच्च कुत्सितत्वम्॥

## १६२. अपत्यं पौत्रप्रभृति गोत्रम्।

'तद्गोत्रसंज्ञं भवति' इति। अपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं युक्ता, न संज्ञेति चेत्? न; लिङ्गवती परिभाषा भवति, यथा 'इको गुणवृद्धी' (१.१.३) इति विध्यन्तर-शेषभूता वा, यथा––'विप्रतिषेधे परं कार्यम्' (१.४.२) इति, न चेयं तथा; किञ्च वृद्धयादयोऽपि सर्वार्थ-प्रत्यायनयोग्याः संज्ञिविशेषे शक्त्यवच्छेदेन नियम्यन्ते। अथ च ताः संज्ञास्तथेयमपि भविष्यति। उक्तञ्च––

व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्धयादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत् ॥ इति । (वा.प. २.३६५, ३६६)

यदि पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा क्रियते, गर्गस्यापि प्राप्नोति, सोऽपि कञ्चित्प्रति पौत्रो भवत्येव, तत्र को दोषः ? 'गोत्राद्यून्यस्त्रियाम' (४.१.९४) इति यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव तु यूनीष्यते ? नैष दोषः; इहापत्यग्रहणं न कर्तव्यम्, पौत्रस्यापत्यत्वात् तत्प्रभृतेरपत्यस्यैव ग्रहणं सिद्धम्, तत् क्रियते--अपत्यरूपेण प्रतिभासमानस्य यथा स्यात्, वस्तुतोऽपत्यस्य मा भूदित्येवमर्थम् । अतोऽपत्यरूपेण प्रतिभासमानस्य गर्गस्य न भविष्यति । ननु चासत्यप्यपत्यग्रहणे पौत्रप्रभृतिरूपेण प्रतिभासमानस्य संज्ञाया विज्ञानात् तेन रूपेणाप्रतिभासमानस्य गर्गस्य न भविष्यतीति किमपत्यग्रहणेन ? यद्येवम्, औपगवस्यापि न स्यात, सोऽपि ह्यपत्यरूपेण प्रतिभासते, न तु पौत्रप्रभृतिरूपेण, अपत्यमात्रे प्रत्ययविधानाद्गार्ग्यादेरेव तु स्यात्--यत्र गोत्र एव प्रत्ययः । कुतश्चायमर्थो लभ्यते--पौत्रप्रभृतिरूपेण प्रतिभासमानस्येति ? तद्ग्रहणसामर्थ्यादिति चेत्, सर्वस्यापि यत्किञ्चित्प्रति वस्तुतः पौत्रप्रभृतित्वाव्यभिचारात् पौत्रप्रभृतिग्रहणं न कर्त्तव्यं भवति । तद्ग्रहणसामर्थ्यादयमर्थो लभ्यत इति ? तन्न; संज्ञिनिर्देशार्थत्वादचेतनव्यावृत्त्यर्थत्वाच्च । 'गोत्रम्' इत्येतावति ह्युच्यते कस्य संज्ञा स्यात्, रथादीनां च वस्तुतोऽपि पौत्रप्रभृतित्वं नास्ति । अतो वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूत्; अपत्यरूपेण प्रतिभासमानस्य यथा स्यादित्येवमर्थं त्वपत्यग्रहणं कर्त्तव्यम् । सम्बन्धिशब्दत्वाच्च पौत्रप्रभृत्यपत्यशब्दयोर्यं प्रति पौत्रप्रभृतित्वमपत्यत्वं च तमेव प्रति गोत्रसंज्ञा विज्ञायते । तेनाङ्गिरसः पौत्रे गर्गस्यानन्तरे न भवति 'गर्गादिभ्यो यञ्' (४.१.१०५) । तदेतत्सर्वमुक्तम् ।

'सम्बन्धिशब्दत्वात्' इत्यादि । 'यस्य यदपत्यम्' इति । प्रतिभासत इति भावः । तदयमत्र सूत्रार्थः--वस्तुतः पौत्रप्रभृतिरपत्यरूपेण प्रतिभासमानोऽर्थो यं प्रत्यपत्यरूपेण प्रतिभासते यं च प्रति वस्तुतः पौत्रप्रभृतिः तं प्रति गोत्रसंज्ञ इति ।

'अपत्यमिति [1]व्यपदेशाय' इति । संज्ञिन इति शेषः । अपत्यरूपेण प्रतिभासमानस्य संज्ञिनो व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः । इह कस्मान्न भवति--गर्गापत्यस्य तृतीयादेरपत्यमिति, अत्र हि गर्गापत्यशब्देन गर्गं प्रत्यपत्यरूपेण प्रतिभासमानस्य वस्तुतः पौत्रप्रभृतेर्गर्गं प्रति गोत्रसंज्ञायां सत्यां गर्गस्य चतुर्थे जीवद्वंश्ये 'गोत्राद्यूनि' (४.१.९४) इति गर्गापत्यशब्दात् प्रत्ययः प्राप्नोति ? नैष दोषः; संज्ञाप्रकरण एवास्मिन् कर्तव्येऽपत्यप्रत्ययेषु 'तस्यापत्यम्' (४.१.९२) इत्यारभ्य विधीयमानेषु मध्ये संज्ञाकरणं प्रत्ययवाच्यस्यापत्यस्य परिग्रहार्थम् । यदिदं प्रत्ययार्थत्वेन निर्दिष्टमपत्यं तद्गोत्रसंज्ञमिति, तेनापत्यशब्देन प्रतिभासमानस्यापत्यस्य संज्ञा न भविष्यति । ननु च 'ते तद्राजाः' (४.१.१७४) इत्यत्र तच्छब्देनाञादीनामेव परिग्रहो यथा स्यात् पूर्वेषां मा भूदिति मध्ये संज्ञाकरणं स्यात् । यद्येतावत्प्रयोजनं स्यात् 'अञादयस्तद्राजाः' इत्येव ब्रूयात्, तस्मादुक्तमेव साक्षात्प्रयोजनमस्मिन् प्रकरणे संज्ञाकरणस्य । स्थिते त्वेवमुक्तमपि प्रयोजनं भवत्येव, अत एव तत्र वक्ष्यति--गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वादिति ॥

---

1. व्यपदेशोऽयं--काशिका, न्यासश्च ।

## १६३. जीवति तु वंश्ये युवा ।

'अभिजनप्रबन्धो वंशः' इति । अभिजनाः = पित्रादयः, अभिजायन्ते येभ्यः पुत्रादय इति कृत्वा। प्रबन्धः = सन्तानः । 'तत्र भवो वंश्यः' इति । दिगादित्वात् । पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः, यद्यत्रापि पूर्ववत् 'पौत्रप्रभृति' इत्येतत्सामानाधिकरण्येनापत्यं विशेषयेत्, तृतीयस्यापि जीवद्वंश्यस्य युवसंज्ञा स्यात्; तत्र को दोषः ? युवसंज्ञया गोत्रसंज्ञाया बाधितत्वाद्गर्गादिभ्यो यञ् स्यात्, न कश्चिदपत्यप्रत्ययः । किं कारणम् ? गोत्रादेव यूनीति नियमात्, नानन्तराच्च मूलप्रकृतेः । तस्माद्वाक्येनैवाभिधानं प्राप्नोति—गर्गस्यापत्यं गार्ग्योऽपत्यमिति । एतेनोपगोस्तृतीयो जीवद्वंश्यो व्याख्यातः; तस्माद्वैयधिकरण्येन विशेषणमित्याह—'पौत्रप्रभृति' इति । '[1]षष्ठी विपरिणस्यते' इति । अत्र च व्याख्यानमेव शरणम् ।

'तु शब्दोऽवधारणार्थः' इति । अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह—'युवैव भवति न गोत्रम्' इति । असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमात् कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात् । अस्तु, को दोषः ? यस्कस्यापत्यं गोत्रम् 'शिवादिभ्योऽण्' (४.१ ११२) तदन्ताद्यूनि 'अणो द्व्यचः' (४.१.१५६) इति फिञ्, वृद्धौ, यस्येति लोपे कृते यास्कायनिरिति । बहुषु 'यस्कादिभ्यो गोत्रे' (२.४.६३) इति फिञो लुक् प्रसज्येत; एकदेशविकृतस्यानन्यत्वात् । यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्य लुगुच्यते, न चात्रानन्तरः फिञ् । शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्माद्विधौ स्थानिवद्भावाद्यस्कादिभ्योऽनन्तरस्य विहित स्येति वा विज्ञास्यते । इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनः, तस्य च्छात्राः काण्व्यायनीया इति, 'कण्वादिभ्यो गोत्रे' (४.२.१११) इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात् । इह च औपगवस्यापत्यमौपगविरिति 'गोत्राद्यूनि' (४.१ ९४) इति प्रतिपदविधानात् 'एको गोत्रे' (४.१ ९३) इति नियमो बाधिष्यते । यदि बाध्यते, औपगवेर्यूनोऽपत्यमिति चतुर्थस्य यूनो गोत्रत्वात् पञ्चमे यूनि फक् प्राप्नोति ? नैष दोषः, पञ्चमे यूनि विवक्षिते उत्पन्नस्येञः 'यूनि लुक्' (४.१.९०) इति लुकि कृते औपगवशब्दादणन्तात् पुनरपीञेव भविष्यति । इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्यर्थविवक्षायां 'फक्फिञोरन्यतरस्याम्' (४.१.९१) इति फको लुगभावपक्षे तदन्तादिञ् प्राप्नोति ? किञ्च औपगवेरपत्यमित्यत्रापि लुप्तेऽपीञि प्रत्ययलक्षणेन फक्प्राप्नोति ? एवं तर्हि 'गोत्राद्यूनि' (४.१.९४) इत्यत्र एकग्रहणमनुवर्तिष्यते, तेनानेकः प्रत्ययो न भविष्यति । यस्तर्हि 'गोत्रेऽलुगचि' (४.१.८९) इत्यलुक् सोऽस्त्रीणां यूनां छात्र इत्यादौ प्राप्नोति, यूनोऽपि गोत्रत्वात् ? प्राप्नोतु तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति ? नैवं शक्यम्, फक्फिञोर्हि दोषः स्यात्—शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शलङ्कादेशश्च, ततः शालङ्केरपत्यं युवा 'यञिञोश्च' (४.१.१०१) इति फक् 'पैलादिभ्यश्च' (२.४ ५९) इति लुक्, ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां 'गोत्रेऽलुगचि' (४.१.८९) इति पैलादिषु लुकः प्रतिषेधे सति 'यूनि लुक्' (४.१.९०) इति नित्ये प्राप्ते 'फक्फिञोरन्यतरस्याम्' (४ १ ९१) इति पक्ष फकः श्रवणप्रसङ्गः । असत्यां तु यूनो गोत्रसंज्ञायाम् 'गोत्रेऽलुगचि' (४.१.८९) इत्यस्याप्रवृत्तौ पैलादिषु लुग्भवत्येव । 'फक्फिञोरन्यतरस्याम' (४.१.९१) इत्ययं तु विकल्पो 'यूनि लुक्' (४.१.९०) इत्यस्यानन्तरस्य, न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत 'इञश्च' (४ २.११२) इत्यण्—शालङ्का

1. षष्ठ्या विपरिणम्यते—काशिका.

इति भवति। तथा पीलाया अपत्यम् 'पीलाया वा' (४.१.११८) इत्यण्, पैलः, तस्यापत्यं युवा 'अणो द्व्यचः' (४.१.१५६) इति फिञ्, तस्य 'पैलादिभ्यश्च' (२.४.५९) इति लुक् ततः पैलस्य यूनश्छात्राः पैलीया इति ॥

## १६४. भ्रातरि च ज्यायसि।

'कनीयान् भ्राता' इति। भ्रातृज्यायः–शब्दयोः सम्बन्धिशब्दत्वादयमर्थो लभ्यते। 'अकारणत्वात्' इति। यः साक्षात्परम्परया वा कारणं भवति, स लोके 'वंश्य' इत्युच्यते। 'गार्ग्ये जीवति' इति। ज्यायसि भ्रातरि जीवतीत्यर्थः। एवं वात्स्यायनादावपि द्रष्टव्यम् ॥

## १६५. वान्यस्मिन् सपिण्डे स्थविरतरे जीवति।

'सप्तमपुरुषावधयः' इति। आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तमपुरुषोऽवधिर्येषां ते तथोक्ताः। प्रायेण तु पूरणप्रत्ययो न पठ्यते, 'सप्तपुरुषावधयः' इत्येव पठ्यते, न तत्र समीचीनमर्थं पश्यामः। समानः पिण्डो येषामिति सपिण्डाः, निपातनात् सभावः। 'स्मर्यन्ते' इति। तद्यथा—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' (मनुस्मृतिः–५–६०) इति सप्तमेऽतीते विनिवर्तत इत्यर्थः। 'उभयत्र' इति। जनने मरणे चेत्यर्थः।

'एवमादिकायां क्रियायाम्' इति। आदिशब्देन 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते' इत्यादिका क्रिया गृह्यते। 'जीवदेव' इति। वस्तुव्याख्यानमेतत्। सूत्रे तु जीवतीत्याख्यातपदम्, तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात्सप्तमी व्याख्येया। 'तरब्निर्देशः' इति। असति तस्मिन् स्थविरशब्दाद्वयःप्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदुपादानसामर्थ्यात्, यथा गोतरः, अश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसम्बन्धिनः प्रकर्षे तरब्भवति तथाऽत्रापि। स्थानम् = पदम्, पितृत्वादिकम्।

'स्थानवयोन्यूने' इति। स्थानेन वयसा च न्यूने इत्यर्थः। ननु च ज्यायसीत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, 'प्रशस्यस्य श्रः' (५.३.६०), 'ज्य च' (५.३.६१), 'वृद्धस्य च' (५.३.६२) इत्युभयोर्ज्यादेश-विधानात्? नन्न; न हि सकृत्प्रयुक्तः शब्दोऽनेकार्थमभिधातुं समर्थः। एवमपि तरब्निर्देशो न कर्त्तव्यः, ज्यायसी-त्यनुवृत्तेरेव स्थानप्रकर्षलाभात्? एतदपि नास्ति; स्थविर इति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यानुवृत्तेरेव दुर्ज्ञानत्वात्। 'जीवतीति किम्' इति। श्रुतं प्रकृतं चोभयमधिकृत्य प्रश्नः। अत एवभयोः प्रयोजनं दर्शयति—'मृते मृतो वा' इति। तत्र मृत इति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोऽर्थः ॥

## १६६. वृद्धस्य च पूजायाम्।

'अपत्यमन्तर्हितम्' इत्यादि। एतच्चापत्यग्रहणेन वृद्धस्य विशेषणादिह परिभाषितस्य शब्दात्मकस्या-पत्यत्वासम्भवात् विज्ञायते। 'पूजायां गम्यमानायाम्' इति। का पुनरत्र पूजा? यद्युवत्वमेव। यद्यपि युवशब्दो-ऽनपेक्षितप्रवृत्तिनिमित्तमेव संज्ञा, तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोऽपि प्रत्यायितं भवतीति पूजा भवति। 'संज्ञासामर्थ्यात्' इति। गोत्रस्य सतो युवसंज्ञा विधीयते, गोत्रसंज्ञा

चेत्प्रवृत्ता 'एको गोत्रे' (४.१.९३) इति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहितत्वाद-प्राप्तोऽपि प्रत्ययोऽस्माद्वचनाद्भवतीत्यर्थः। इह पूर्वत्र सामानाधिकरण्येन संज्ञाविधानात् प्रक्रमाभेदाय तथैव संज्ञा विधातुं युक्ता, कोऽयं वृद्धस्येति षष्ठीनिर्देशः इत्यत्राह—'वृद्धस्य' इति। 'षष्ठीनिर्देशः' इति। इतिकरणो हेतौ; वार्त्तिककारीयं चेदं सूत्रम्। वृत्तिकारेण तु सूत्रेषु प्रक्षिप्तम्। एतेनोत्तरसूत्रं व्याख्यातम्॥

## १६७. यूनश्च कुत्सायाम्।

'निवृत्तिप्रधानो विकल्पः' इति। न पुनः प्रवृत्तिप्रधान इति; पूर्वमेव प्रवृत्तत्वात्। यदाह—'यूनश्च' इति। न ह्यप्रवृत्तायां तस्यामेष निर्देश उपपद्यते। ननु च निवृत्तिरप्यनिवृत्ता या न शक्यते कर्तुम्, यो हि भक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात्। तस्मात् 'यूनश्च' इति निर्देशो युवसंज्ञाद्विषयो लक्षणार्थः। जीवद्वंश्यस्य चतुर्थादेरिति, न तु युवसंज्ञाशिष्टस्य निर्देश इति वक्तव्यम्। एवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा तु प्रवृत्तिरसत्यपि सूत्रे लभ्यत इति मत्वा निवृत्तिप्रधान इत्युक्तम्। 'युवसंज्ञायां प्रतिषिद्धायाम्' इति। तस्या अभावपक्ष इत्यर्थः। 'गार्ग्यो जाल्मः' इति। का पुनरत्र कुत्सा ? गोत्रत्वारोपिणामेव, अजीवद्वंश्या हि गोत्रसंज्ञकाः, ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा॥

## १६८. जनपदशब्दात्क्षत्रियादञ्।

'जनपदशब्दो यः क्षत्रियवाची' इति। नन्वेते पञ्चालादयः शब्दाः क्षत्रियशब्दा एव, तत्सम्बन्धात्तु 'तस्य निवासः' (४.२.६९) इति तद्धिते कृते 'जनपदे लुप्' (४.२.८१) इति च लुपि जनपदे वर्तन्ते, तत्कथमपरकालया जनपदशब्दतया नित्यक्षत्रियशब्दता लक्ष्यते ? कः पुनराह—क्षत्रियसम्बन्धादेव ते जनपदे वर्तन्त इति, सूत्रकारस्तावत् 'लुब्योगाप्रख्यानात्' (१.२.५४) इति वदन् क्षत्रियेष्विव जनपदेऽपि स्वाभाविकी पञ्चालादिशब्दस्य प्रवृत्तिरित्याह—'पाञ्चालः' इति। यदि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्य विशेषणं जनपदत्वम् न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव। 'ऐक्ष्वाकः' इति। इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे (६.४.१७४) टिलोपो निपातितः।

'द्रौह्यवः' इति। क्षत्रियवचन एवायं न जनपदशब्दः। 'ब्राह्मणस्य पञ्चालस्य' इति। बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम्।

'क्षत्रियसमानशब्दात्' इति। समानः शब्दो यस्य समानशब्दः, क्षत्रियेण यस्य समानशब्दस्तस्माज्जन-पदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेयेऽपत्यवत्प्रत्ययो भवति। अवृद्धादपीति प्राप्तस्य वुञोऽपवादः। क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते। 'मागधः' इति। 'द्व्यञ्मगध' (४.१.१७०) इत्यण्॥

## १६९. साल्वेयगान्धारिभ्यां च।

## १७०. द्व्यञ्मगधकलिङ्गसूरमसादण्।

## १७१. वृद्धेत्कोसलाजादाञ्ञ्यङ् ।

'ङ्यण्वक्तव्यः' इति । ङकारष्टिल्लोपार्थः, णकारो "वृद्धिनिमित्तस्य" (६.३.३९) इति पुंवद्भाव-प्रतिषेधार्थः । 'अन्यस्मात्' इति । गुणवचनाद्युधिष्ठिरपितृवचनाच्च । 'पुरोरण्वक्तव्यः—पौरवः' इति क्वचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात्प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे 'द्व्यञ्मगध' (४.१.१७०) इत्येव सिद्धम् ॥

## १७२. कुरुनादिभ्यो ण्यः ।

आदिशब्दो नकारेणैव सम्बध्यते, न कुरुशब्देन; तदादेर्जनपदस्याभावात् तदाह—'कुरुशब्दान्नकारादिभ्यश्च' इति । 'अणञोरपवादः' इति । कुरुशब्दात् 'द्व्यञ्मगध' (४.१.१७०) इत्यणोऽपवादः, नादिभ्यस्त्वञः । 'नैषध्यः' इति । कथं 'नैषधोऽर्हति चेदघम्' इति ? स्वच्छन्दवाच ऋषयः । कथं 'स नैषधस्यार्थपतेः सुतायाम्' इति ? निरङ्कुशाः कवयः । शेषविवक्षायां वोभयत्राण् समर्थनीयः ॥

## १७३. साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।

सल्वा क्षत्रियेति पाठः, तन्नामिकेति वचनात्, इदं हि तन्नामिकाणः प्राप्त्यर्थमुक्तम् । न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात्, सलेवंप्रत्ययः । 'अणपीष्यते' इति । साल्वावयवे अपवादो साल्वादिति निर्देशात्, न च निपातितोऽण् ढकोऽपवादः, 'साल्वेयगान्धारिभ्यां च' (४.१.१६९) इति निर्देशात् । 'तेभ्यः क्षत्रियवृत्तिभ्यः' इति । 'जनपदशब्दात्क्षत्रियात्' (४.१.१६८) इत्यनुवृत्तेरेतल्लभ्यते ।

'उदुम्बरास्तिलखलाः' इति श्लोकः प्रदर्शनार्थः । तेन बुस, अजमीढ, आजकन्द—इत्येतेभ्योऽपि भवति, तथा च भाष्य उदाहृतम्—बौसिः, आजमीढिः, आजकन्दिरिति । 'साल्वावयवसंज्ञिताः' इति । साल्वावयव इत्येवं शब्दिता इत्यर्थः ।

## १७४. ते तद्राजाः ।

'तथा चैवोदाहृतम्' इति । तत्र 'तद्राजस्य बहुषु तेनैवास्त्रियाम्') (२.४.६२) इत्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम् ॥

## १७५. कम्बोजाल्लुक् ।

'चोलः, शकः' इति । 'द्व्यञ्मगध' (४.१.१७०) इत्यस्याणः । 'केरलः' इत्यत्राञः ॥

## १७६. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।

'अवन्ती, कुन्ती' इति । लुकि कृते 'इतो मनुष्यजातेः' (४.१.६५) इति ङीष् । 'कुरूः' इति । (४.१.६६) ॥

## १७७. अतश्च ।

'तकारो विस्पष्टार्थम्' इति । असति हि तस्मिन् 'अस्य' इति निर्देशः स्यात्, ततश्च सन्देहः स्यात्— किमयं वर्णनिर्देशः ? आहोस्विदिदम इति ? इदमश्च निर्देशेऽनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात् 'तपरस्तत्कालस्य' (१.१.७०) इति संज्ञाकरणाच्च । कथं 'माद्रीसुतौ पुष्पफले समृद्धे' इति ? स्वच्छन्दवाच ऋषयः, मद्रीसुतावित्येव वा पाठ्यम् ।

'अवन्त्यादिभ्यो लुग्वचनात्' इति । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात्; अनेनैव सिद्धत्वात् । तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद्भवति ॥

## १७८. न प्राच्यभर्गादियौधेयादिभ्यः ।

'पाञ्चाली' इत्यादि । पञ्चालादयः शरावत्याः प्राञ्चो जनपदाः । भर्गादिग्रहणमप्रागर्थम् । भृञो गः, भर्गः । कृञ उः, करुः, तमोषति = द्वेष्टि, मूलविभुजादित्वात्कः, करूषाः । चिनोतेः कयः आदेश्च कः, बहुलवचनादित्संज्ञाभावः, केकयः । कश्मेरिः, साल्वशब्दो निरुक्तः । शोभनानि स्थलान्यस्य सुस्थलः । उरसा शेते उरशः । 'कुर्वादिभ्यो ण्यः' (४.१.१७२) कौरव्यः । 'यौधेयी' इत्यादि । युधाया अपत्यम्, शुभ्राया अपत्यम्, 'द्व्यचः' (४.१.१२१) इति ढक् । शुभ्राशब्दात् 'शुभ्रादिभ्यश्च' (४.१.१२४) इति; ततः स्वार्थे 'पर्श्वादियौधेयादिभ्यम्' (५.३.११७) इत्यञ् । यद्यञो लुक् स्याड्ढग्लक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे 'शार्ङ्गरवाद्यञः' (४.१.७३) इति ङीनि सत्याद्युदात्तं भवति ।

'कस्य पुनः' इति । अस्य वक्ष्यमाणोऽभिप्रायः, तमेव प्रकाशयति—'कथं पुनः' इति । परिहरति— 'एतदेव पर्शुः' इति । पर्शुः क्षत्रियो जनपदेन समानशब्दः, तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, 'द्व्यञ्मगध' (४.१.१७०) इत्यण्, तस्य 'अतश्च' (४.१.१७७) इति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक् । एवं 'रक्षाः' इति । रक्षसः क्षत्त्रियस्यापत्यम, स्त्रीत्वविशिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, 'अत्वसन्तस्य' (६.४.१४) इति दीर्घः । 'आसुरी' इति । जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक्, जातिलक्षणो ङीप् । ज्ञापकत्वमेव द्रढयति—'तथा चोक्तम्' इति । वार्त्तिककारेणैतदुक्तम् । यौधेयादिषु त्रयो निरुक्ताः; ज्यया सहितो बाणो यस्याः सा ज्याबाणा, तस्या अपत्यं ज्याबाणेयः । 'ज्यावानेयः' इत्यन्ये पठन्ति, तत्र ज्यावानो यस्या ज्यावाना । 'घृ क्षरणे (धा.पा. १०९६) 'धृ धारणे' (धा.पा. ९००) आभ्यां क्तिजन्ताभ्यां 'इतश्चानिञः' (४.१.१२२) इति ढक्, घार्त्तेयः, धार्त्तेयः । त्रयो गर्त्ता येषां ते त्रिगर्त्ताः । 'भृञोऽतच्' भरतः, वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य सः उशीनरः, 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां

चतुर्थाध्यायस्य प्रथमः पादः ॥

—०—

# अथ चतुर्थाध्यायस्य

## द्वितीयः पादः

### १. तेन रक्तं रागात् ।

रञ्जिरयमस्त्येवाभिष्वङ्गे--भोजने रक्त इति; अस्ति वर्णविशेषे--रक्ता गौः, लोहितेत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने--रक्तः पट इति । तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह--'शुक्लस्य' इत्यादि । एतच्चाभिधानस्वाभाव्याल्लभ्यते । 'रज्यतेऽनेन रागः' इति । 'घञि च भावकरणयोः' (६.४.२७) इति नलोपः । भावसाधनस्तु रागशब्दो न भवति, न हि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति । 'रागविशेषवाचिनः' इति । स्वरूपग्रहणं तु न भवति; उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात् ।

'रागादिति किम्' इति । अनभिधानादेव कर्तृवाचिनो न भविष्यति. 'दैवदत्तं वस्त्रम्' इति ह्युक्ते स्वस्वामिभावस्यैव सम्प्रत्ययादिति प्रश्नः । लक्षणैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युत्तरम् ।

'कथम्' इति । न ह्यत्र वर्णान्तरमाहितमिति प्रश्नः । 'उपमानात्' इति । रूपसादृश्यनिमित्तात् ॥

### २. [1]लाक्षारोचना ट्ठक् ।

शकलकर्दमयोर्वार्तिके दर्शनात्सूत्रे प्रक्षेपः ।

'नील्याः' इति । ओषधिविशेषो नीली, अण्बाधनार्थंवचनम् । नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति ।

'पीतात्' इति । रागविशेषवाची पीतशब्दः । इदमपि वचनमण्बाधनार्थमेव । स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्दो गुणवचनो वस्त्रे लभ्यते ॥

### ३. नक्षत्रेण युक्तः कालः ।

इह पारमर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम्--

> आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
> भिन्नमावृतिभेदेन कालं कालविदो विदुः ॥ इति ॥

1 लाक्षारोचनाशकलकर्दमाट्ठक् काशिका ।

वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तञ्च—

व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥ इति ।

द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति, किं कारणम् ? अप्राप्तिपूर्विका प्राप्तिः = योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति। द्रव्यपक्षे तावद्द्वयोरपि नक्षत्रकालयोर्नित्यत्वात् कालस्य च सर्वगतत्वान्न कदाचिद्वियोगः। क्रियापक्षेऽपि नक्षत्रगतायाः क्रियायाः कालाख्यायाः समवायलक्षणो योगोऽव्यभिचारादविशेषणम् । सूर्यादिगतायास्त्वसम्भवादविशेषणम् । यदि तु यथाकथञ्चिद्योगः, तदा व्यभिचाराभावः। न हि सोऽस्त्यहोरात्रो यः पुष्येण न युक्तः। तस्मात् 'नक्षत्रेण युक्तः कालः' इत्यनुपपन्नो निर्देशः ।

कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादेर्युक्तान्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमाः पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र। तत्र युक्तवद्भावे दोषः, मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिध्यतः, युक्तस्यैव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति—'कथं पुनः' इति। न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता; ज्योतिर्मात्रवचनत्वान्नक्षत्रशब्दस्य । ये तु पुष्यादीनामावस्थिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुः, तेषामयं प्रश्नोऽनुपपन्नः। 'पुष्यादिसमीपस्थे' इति। मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः। तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसंख्या एव चन्द्रमसि वर्त्तन्ते, यथा—मञ्चादयः, मञ्चान् स्त्रियः पश्येति। तेन युक्तवद्भावविषयेऽपि दोषाभावः। 'पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः' इति। यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात्; पुष्यसमीपेन तु कादाचित्कः, पुष्यसमीपतायाः कादाचित्कत्वात्। 'पौषी' इति। 'सूर्यतिष्य' (६.४.१४९) इत्यादिना यलोपः ॥

## ४. लुबविशेषे।

यद्यविशेषे लुब् भवति, इहापि प्राप्नोति—पौषी रात्रिः, पौषमहरिति, अत्राप्यद्य ह्यो वेति विशेषो न गम्यते। 'अथ रात्रिरहः' इति। विशेषावसायात्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्यात्—अद्य पुष्यो ह्यः कृत्तिका इति, अद्यत्वादिविशेषावसायात्; 'पुष्ये पायसमश्नीयात्' इत्यादावेव तु स्याद्यत्र न मनागपि विशेषावगमः ? अत आह—'न चेत्' इत्यादि। रात्र्यादिरित्यादिशब्देन मुहूर्त्तादेः परिग्रहः। 'विशेषोऽभिधीयते' इति। प्रत्ययान्तेन। एतदेव स्पष्टयति—'यावान्' इति। कियांश्च कालो नक्षत्रेण युज्यते ? इत्याह—'अहोरात्रः' इति। षष्टिनाडिकात्मक इत्यर्थः। तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्त्तते। तदेतदेवं यावान् कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः। एतच्च प्रत्ययान्तेऽनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते। प्रसज्यप्रतिषेधश्चायम्। तेन पौषोऽहोरात्र इत्यत्र समुदायेनापि प्रतीयमानोऽवयवद्वयात्मकः प्रतीयत इति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी, मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति ? ज्ञापकात्सिद्धम्, यदयं 'विभाषा फाल्गुनी श्रवणाकार्त्तिकीचैत्रीभ्यः' (४.२.२३) इति निर्दिशति,

तज्ज्ञापयति—पौर्णमास्यां लुबन भवतीति। श्रवणाशब्दात्तु भवति—'श्रवणाकार्त्तिकी' (४.२.२३) इति निर्देशादेव। कथं तर्हि श्रावण्यां पौर्णमास्यामिति ? अबाधकान्यपि निपातनानि भवन्ति ॥

## ५. संज्ञायां श्रवणाश्वत्थाभ्याम् ।

'विशेषार्थोऽयमारम्भः' इति। न तु संज्ञायां नियमार्थः; विधिसम्भवे नियमायोगात्, 'श्रवणाकार्त्तिकी' (४.२.२३) इत्यसंज्ञायामपि लुपो दर्शनाच्च।

'लुपि युक्तवद्भावः कस्मान्न भवति' इति। श्रवणा रात्रिरित्यत्र। 'निपातनात्' इति। ङीप्त्वत्र प्रत्ययलक्षणेन न भवति; 'अण् योऽकारः' इति विज्ञानात् ॥

## ६. द्वन्द्वाच्छः ।

नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिणम्यते, तच्च द्वन्द्वस्य विशेषणमित्याह—'नक्षत्रद्वन्द्वात्' इति। 'राधानुराधीया रात्रिः' इति। एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः। 'अद्य राधानुराधीयम्' इति। अद्येत्यस्यालिङ्गत्वेऽपि तद्विशेषणस्य नपुंसकत्वम्, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते। 'छः' इति। ननु युगपत्प्राप्त्योर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुप्संज्ञा, तस्य कथं प्रत्ययेन सह प्रसङ्गः ? तस्मादयमत्रार्थः—'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' (व्या.प. १०) इति, एवमयं लुबण एव भवति, नास्य छस्य। तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते च्छ इति बाधकत्वम्। 'परत्वात्' इति। यतोऽयं परस्तेन लुबस्य न भवति, तेन तद्विषयेऽप्यसौ श्रूयत इति ॥

## ७. दृष्टं साम ।

यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तेन दृष्टमित्युच्यते ॥

## ८. कलेर्ढक् ।

'सर्वत्र' इति। न केवलमग्नेः 'सास्य देवता' (४.२.२४) इत्यस्मिन्नेवार्थे ढक्, नापि केवलं दृष्टं सामेत्यस्यत्रैवार्थे कलेर्ढक्; अपि तु सर्वेष्वेव प्राग्दीव्यतीयेष्वित्यर्थः।

संग्रहश्लोके 'जाते च द्विरण् डिद्वा विधीयते' इति पाठः। जातेऽर्थे योऽण् विधीयते स वा डिद्भवतीत्यर्थः।

'न विद्यायाः' इति। विद्यावाचिन ईकन्न भवतीत्यर्थः।

'गोत्रादङ्कवत्' इति। अङ्के यो दृष्टः प्रत्ययः स सर्वोऽतिदिश्यते, न त्वङ्क एवाहृत्य विहितः, तेन 'सङ्घाङ्कलक्षणेषु' (४.३.१२७) इत्यस्याणः 'गोत्रचरणाद्वुञ्' (४.३.१२६) इत्यस्य च वुञोऽतिदेशः ॥

## ९. वामदेवाड् ड्यड्ड्यौ ।

'डित्करणं किमर्थम्' इति । यस्येति लोपेनैव सिद्धिं मत्वा प्रश्नः । 'अनयोर्ग्रहणं माभूत्' इति । अथ क्रियमाणेऽपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति ? तत्राह—'अननुबन्धक' इति । 'अननुबन्धकस्य ग्रहणे न सानुबन्धकस्य' (शा.प. ४८) इति यग्रहणे ड्यड्ड्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया (व्या प. ५२) तु यद्ग्रहणे ड्यतो ग्रहणाभावः । 'अवामदेव्यम्' इति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति ।

संग्रहश्लोके 'अतदर्थे' इत्यनेन 'ययतोश्चातदर्थे' (६.२.१५६) इत्येतत्सूत्रं लक्ष्यते । 'नञ्स्वरे' इति । नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं; तस्मिन्विधीयमाने इत्यर्थः ॥

## १०. परिवृतो रथः ।

'चार्मणः' इति । 'अन्' (६.४ १६७) इति प्रकृतिभावः । 'परिवृतो रथः' इति । तदेकान्तग्रहणम्, येन परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यम् । तेन चर्मवस्त्रादावेव भवति, इतरथा छात्त्रादावपि प्रसङ्ग इत्याह—'समन्ताद्वेष्टितः' इत्यादि । वृणोतिर्वेष्टने । परिः सर्वतो भावे । 'यस्य न कश्चिदवयवः' इति । बाहुल्याभिप्रायमेतत्, न हि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः । ननु तत्कारी चायं यदाह—'छात्त्रैः परिवृतः' इति । तद्द्वेषी च, यदाह—'समन्ताद्वेष्टितः' इत्यादि । नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृतः इव परिवृतः ॥

## ११. पाण्डुकम्बलादिनिः ।

'मत्वर्थीयेनैव सिद्धे' इति । यो हि येन परिवृतः स तस्यास्ति । 'अणो निवृत्त्यर्थम्' इति । यद्येतन्नारभ्यते, परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत ॥

## १२. द्वैपवैयाघ्रादञ् ।

'द्वीपिव्याघ्रयोः' इति । 'विरूपाणामपि समानार्थानाम्' (१.२.६४ वा. २३*) एकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वान्न भविष्यतीति समाधातव्यम् । चर्मणैव रथस्य परिवरणं सम्भवति, न विकारमात्रेणेति 'चर्मणी' इत्युक्तम् । द्वीपिव्याघ्रशब्दाभ्याम् 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४) इत्यञ्प्रत्ययः, द्वीपिनष्टिलोपः ॥

## १३. कौमारापूर्ववचने ।

'अपूर्ववचने' इति । अपूर्वशब्दो भावप्रधानः । अपूर्वत्वस्य वचनमपूर्ववचनम्; तस्मिन्नपूर्ववचने । कस्य पुनरपूर्वत्वोक्ताविस्याह—'पाणिग्रहणस्य' इति । एतच्च निपातनसामर्थ्याल्लभ्यते । 'उभयतः' आद्यावित्वात्तसिः ।

*'एकार्थानामपि विरूपाणाम्'—इति वार्तिकम् ।

स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव, न पुंस इत्यर्थः। तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते--उभयोरपि निपातनमिति। स्त्रिया एवापूर्वत्वमित्येतत्तु निपातनबलाल्लभ्यते। 'अपूर्वपतिम्' इति। यस्याः पाणिर्न केनचिद्गृहीतपूर्वः साऽपूर्वपतिः, न विद्यते पूर्वः पतिरिति कृत्वा, तामुपपन्नः = प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः। स तु पूर्वकृतोद्वाहो भवतु मा वा भूत्। 'अपूर्वपतिः' इति। अयमपि बहुव्रीहिः, अत्रापि पुरुषः पूर्ववत्।

'कौमार' इत्यादि। कौमारेति निपात्यतेऽपूर्ववचने किमत्र निपात्यते? कुमार्या अण् विधीयते। कदा? अपूर्वत्वं यदा तस्याः। यदा कुमार्या अपूर्वत्व न पुंसस्तदेत्यर्थः। 'कुमार्यां भवतीति वा' इति। अनेन योगः प्रत्याख्यायते; यः कुमारीमुपयच्छते तस्यामसौ भवति, तदायत्तत्वाद्धर्माचरणादेः, ततश्च 'तत्र भवः' (४.३.५३) इत्येवाण् सिद्धः। यद्यपि व्याण्यद्यपि कुमार्यां भवति तथापि सत्यभिधाने 'तत्र भवः' इति भवत्येव। सूत्रारम्भेऽपि ह नाऽसौ दण्डवारितः, एवं तावत्कौ म र इति सिद्धम्। स्त्रियामपि सिद्धम्, कथम्? कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसौ भवन् कौमारव्यपदेशं लभते सैवाभिधीयते न स्त्र्यन्तरम्, एतच्च सूत्रारम्भेऽप्यङ्गीकर्त्तव्यम्॥

## १४. तत्रोद्धृतममत्रेभ्यः।

अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते तेन सप्तमीसमर्थाद्विभक्तिर्नोपपद्यते। 'भुक्तोच्छिष्टम्' इति। शिष्टमेवोच्छिष्टम्, यथा उच्छिनष्टि न सर्वं जुहोति भुक्तशिष्टमित्यर्थः। 'यस्योद्धरणमिति प्रसिद्धिः' इति। 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भूते कर्मणि ल्युट्। शरावेषूद्धृतः' इति। उद्धृत्य निहित इत्यर्थः॥

## १५. स्थण्डिलाच्छयितरि व्रते।

'शास्त्रितः' इति। सञ्जातशास्त्र इत्यर्थः। यद्वा--तृतीयासमर्थाद्विधानेऽर्थे 'प्रातिपदिकाद्धात्वर्थे' (ग.सू १८६; धा.पा. १९१५) इति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः। 'स्थण्डिले शयितुं व्रतमस्य' इति। तुमुनत्र वक्तव्यः; व्रतस्याक्रियारूपत्वात्॥

## १६. संस्कृतं भक्षाः।

संस्कृतमित्येतत् कर्मसामान्ये व्युत्पाद्यते तेन नपुंसकलिङ्गमेकवचनं च, भक्षा इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुल्लिङ्गं बहुवचनं च। तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात् संस्कृतमित्येतद्भवति, अत एव विरम्य सम्बन्धं दर्शयति--'यत्तत्संस्कृतम्भक्षास्ते चेद्भवन्ति' इति, अणो यत्कर्म णो चेत् स कर्त्तेतिवत्, तच्छब्दस्य प्रतिनिर्दिश्यमानलिङ्गता। 'खर विशदम्' इति। खरम् = कठिनम्, विशदम् = विभक्तम्। [1]'भक्षशब्देनोच्यते' इति। यद्यप्यब्भक्षो वायुभक्ष इति भक्षयतेरन्यत्रापि प्रयोग, भक्षशब्दस्तु तत्रैव प्रसिद्ध इति भावः॥

1. 'भक्षम्' इत्युच्यते--काशिका।

## १७. शूलोखाद्यत् ।

'शूलोखात' इति । समाहारद्वन्द्वः, उखा = पात्रविशेषः । यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह ग्रहणं न भवति; स्वाङ्गे संस्कर्तव्यस्याभावात् । '¹कथं मुख्योऽग्निः' इति । न ह्यसौ भक्षः, भवार्थे दिगादित्वाद् द्रष्टव्यः ॥

## १८. दध्नष्ठक् ।

'इह तु दधि केवलमाधारभूतम्' इति । यथा शूले संक्रियमाणस्य मांसस्य शूलम् । यद्यप्यत्र दध्यपि संस्कारकम्, तथापि न तद्विवक्षितम्, किन्तु तदाधारस्य द्रव्यान्तरेण य संस्कारः स एव विवक्षित इति भावः ॥

## १९. उदश्वितोऽन्यतरस्याम् ।

'औदश्वित्कः' इति । 'इसुसुक्तान्तात् कः' (७.३.५१) ॥

## २०. क्षीराड्ढञ् ।

अत्र संस्कृतमित्येव सम्बध्यते, न भक्षा इति; तेन यवाग्वामपि भवति । 'क्षैरेयी' इति । 'टिड्ढाणञ्' (४.१.१५) इत्यादिना ङीप् ।

## २१. सास्मिन्पौर्णमासीति संज्ञायाम् ।

'ततश्चेद्विवक्षा' इति । ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेदेवं प्रत्ययो भवति, नान्यथेत्यर्थः । 'संज्ञायामिति समुदायोपधिः' इति । एतदेव स्पष्टयति---'प्रत्ययान्तेन चेत्' इति । 'पौषी पौर्णमासी' इति । 'लुबविशेषे' (४.२.४) इति पौर्णमास्यां लुब्न भवतीति पूर्वमेवोक्तम् । 'भृतकमासे च' इति । भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादव्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति । वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः ।

'तुल्यमेव फलम्' इति । किं पुनस्तत्रेत्याह---'प्रयोगानुसारणम्' इति । ल्यब्लोपे पञ्चमी । संज्ञाशब्देन तुल्यताम्' इति । तुल्यफलतामित्यर्थः । 'इतिकरणस्य ज्ञापयितुम्' इति । किं पुनरिदं ज्ञापकसाध्यम् ? तत्राह---'न ह्ययम्' इति । ज्ञापनस्य प्रयोजनं दर्शयति--'संज्ञार्थत्वे तु' इति । संज्ञाशब्देन तुल्यफलत्वे इत्यर्थः । 'प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यते' इति । संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शास्त्रे 'संज्ञायाम्' इत्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते ।

'पूर्णमासादण्' इति । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादेराकृतिगणत्वादस्मादेव वा निपातनादण् । 'मा इति चन्द्रमा उच्यते' इति । चन्द्रमःशब्दैकदेशप्रयोगः, सत्यभामा भामेतिवत् ॥

## २२. आग्रहायण्यश्वत्थाट्ठक् ।

अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, 'पूर्वपदात्संज्ञायाम्' (८.४.३) इति णत्वम् । "अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः' इति । निपातनात् पौर्णमास्यामपि लुप् ।।

## २३. विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।

## २४. सास्य देवता।

'यागसम्प्रदानं देवता' इति । यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः, स्वार्थिकश्च तल्; तथापि समुदायशक्त्या देवताशब्दो यागे दर्शपूर्णमासादौ यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्तते, न स जातिविशेष इत्यर्थः । 'देयस्य पुरोडाशादेः स्वामिनी' इति । विवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्तिं दर्शयति, एवं च कृत्वा 'वाय्वृतुपित्रुषसो यत्' (४.२.३१), 'कालेभ्यो भववत्' (४.२.३४) इति वचनमुपपद्यते, न ह्यृतुषु पितृषु उषसि वा जातिरस्ति । तथा पितृदेवत्यम्, देवदेवत्यमिति प्रयोगोऽप्येवमेवोपपद्यते ।

'कथम' इति । पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः । 'मन्त्रस्तुत्यामपि' इत्यादि । नानेनौपचारिकत्वं प्रयोगस्योच्यते, अपि तु मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु 'नैरुक्तानाम्' इत्येतावान्विशेषः । 'उपचरन्ति' इति । ब्रुवते, प्रयुञ्जत इत्यर्थः ।

'कथम्' इत्यादि । पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः । 'उपमानात्' इति । काषायौ गर्दभस्य कर्णावितिवद्गौणोऽयं प्रयोग इत्यर्थः । 'सेति प्रकृते' इति । प्रकृतं हि साग्रहणं संज्ञया सम्बद्धमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ।।

## २५. कस्येत् ।

किमो विभक्तौ कादेशं कृत्वा कस्येति निर्दिष्टमित्याशङ्कामपनयति—'कशब्दः' इति । एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः । कस्मै अनुब्रूहीति, 'न कस्मै देवाय हविषा विधेम' इति तु छान्दसः स्मैभावः, यदिन्द्राग्नी अवमस्यामित्यादिवत् । 'कायम्' इति । इत्वे कृते यस्येति लोपः प्राप्तः परत्वादादिवृद्ध्या बाध्यते, श्रौदेवतास्य श्रायमितिवत् । 'सोमाट्ट्यण्' (४.२.३०) इत्यत्र कग्रहणे च क्रियमाणे यद्यपि यस्येति लोपात् परत्वाद्वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव ।।

## २६. शुक्राद्घन् ।

## २७. अपोनप्त्रपान्नप्तृभ्यां घः ।

"'अपोनपात्, अपांनपात्' इति देवतानामधेये" इति । पृषोदरादित्वादनयोः साधुत्वम् । 'तयोस्तु

1. वाक्यमिदं नास्ति—काशिका ।

प्रत्ययसन्नियोगेन' इति। एवं च अपोनपाते अनुब्रूहि, अपांनपातेऽनुब्रूहि, अपोनपात्तं यज, अपां नपातं यजेति सम्प्रैषः। वेदे तु अपोनप्त्रे स्वाहेति छान्दसः प्रयोगः ॥

## २८. छ च।

'योगविभागः' इत्यादि। पूर्वसूत्र एव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ, प्रकृती अपि द्वे इति स्यात्सङ्ख्यातानुदेशः। 'शतरुद्रीयम्' इति। शतशब्दोऽनन्तवचनः, शतं रुद्रा देवताऽस्येति घच्छौ, तयोर्विधानसामर्थ्यात् 'द्विगोर्लुगनपत्ये' (४.१.८८) लुग्न भवति ॥

## २९. महेन्द्राद्घाणौ च।

'महेन्द्रादण् च' इत्युच्यमानेऽनन्तरश्छ एव समुच्चीयेत, न व्यवहितो घ इति पुनर्ग्रहणम् ॥

## ३०. सोमाट्ट्यण्।

'सौमी' इति। टित्त्वान्ङीप्, 'हलस्तद्धितस्य' (६.४.१५०) इति यलोपः ॥

## ३१. वाय्वृतुपित्रुषसो यत्।

'वायव्यम्' इति। 'ओर्गुणः' (६.४.१४६), 'वान्तो यि प्रत्यये' (६.१.७९) 'पित्र्यम्' इति। 'रीङृतः' (७.४.२७) इति रीङ, यस्येति लोपः ॥

## ३२. द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च।

'अणो ण्यस्य चापवाद' इति। वास्तोष्पतिशब्दात् पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्योऽणः। 'द्यावापृथिव्यौ' इति। 'दिवो द्यावा' (६.३.२९), 'दिवसश्च पृथिव्याम्' (६.३.३०) इति द्यावादेशः। 'शुनासीरौ' इति। 'देवताद्वन्द्वे च' (७.३.२१) इत्यनङादेशः। 'शुनो वायुः, सीर आदित्यः' इति। अन्ये तु एकमेव शुनसीरमिन्द्रस्य गुणममन्यन्त, यथाहाश्वलायनः—'इन्द्रो वा शुनासीरः' इति। मन्त्रलिङ्गञ्च भवति—'इन्द्रं वयं शुनासीरमस्मिन् यज्ञे हवामहे' इति। मरुतोऽस्य सन्ति मरुत्वानिन्द्रः। 'अग्नीषोमीयम्' इति। 'ईदग्नेः सोमवरुणयोः' वास्तोः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात साधुः। गृहमेधशब्दमकारान्तं बह्वृचा मन्यन्ते। 'मरुद्भ्यो गृहमेधेभ्य उत्तरा' इत्याश्वलायनः। 'गृहमेधास आगत' इति च मन्त्रलिङ्गम्। 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति तु तैत्तिरीयकम्। तत्र चेकारान्तो मकारान्तो वेति विप्रतिपन्नाः ॥

## ३३. अग्नेर्ढक्।

कलेर्ढगस्यत्रोक्तमेवार्थं स्मारयति—'प्राग्दीव्यतीयेषु इति' ॥

## ३४. कालेभ्यो भववत् ।

'कालविशेषवाचिभ्यः' इति । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात् । 'वत्करणम्' इत्यादि । असति वत्करणे 'कालेभ्यो भवः' इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये प्रत्यया विधास्यन्ते ते 'सास्य देवता' (४.२.२४) इत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात्, ततश्च 'कालाट्ठञ्' (४.३.११) इति ठञिन्द्रादेरपि प्राप्नोति । अथ पुनरेवं सम्बन्धः—भवे ये प्रत्यया विधास्यन्ते ते भवन्ति कालेभ्यो देवताभ्य इति ? एवमपि भवप्रत्यया न विशेषिताः स्युः, ततश्च 'दिगादिभ्यो यत्' (४.३.५४) इति यत्प्रत्ययोऽपि भवे विहितः कालवाचिभ्योऽस्मिन्नर्थे प्राप्नोति । अथाप्येवं सम्बन्धः—कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति तत्र सकृत् श्रुतस्य [illegible]स्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद्दुर्लभः । अथापि लभ्येत, एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योऽण् मुहूर्त्तादेरपि प्राप्नोति । वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेऽर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टम् ॥

## ३५. महाराजप्रोष्ठपदाट्ठञ् ।

महाराजो वैश्रवणः, प्रोष्ठपदशब्दात्पूर्वेण नक्षत्राणि प्राप्ते वचनम्, नवयज्ञ आग्रयणम् । 'पूर्णमासादण्' इति । अस्मिन्वर्त्तत इत्येव । 'पौर्णमासी' इति । पूर्णो मासोऽस्यां तिथौ वर्तत इति विग्रहः, एवंच च व्युत्पत्तिः 'सास्मिन्पौर्णमासी' इत्यत्रापि दर्शिता ॥

## ३६. पितृव्यमातुलमातामहपितामहाः ।

'पितृमातृभ्याम्' इति । स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङोऽभावश्च । 'डामहच्' इति । कथं तर्ह्याकारेऽवग्रहः—माता+महः, पिता+मह इति ? तस्मान्महप्रत्ययः पितृमातृभ्यां निपातितस्तयोश्चानङादेश इति केचित् । वृत्तिकारस्तु संहितापाठस्यैव नित्यत्वात् 'न लक्षणेन पदकारा अनुवर्त्याः' इति न्यायेनावग्रहो मा कारीति मन्यते । 'मातरि षिच्च' इति । षित्त्वमुपसङ्ख्येयमित्यर्थः । न पुनः षकारोऽनुबन्धः कर्त्तव्य इति देशाभावात्—मातामहा इत्यपि मन्त्रे दृश्यते ।

'अवेर्दुग्धे' इति । दुग्धं क्षीरम् । सोढादीनाम् 'आदेशप्रत्यययोः' (८.३.५९) इति षत्वं न भवति, सकारोच्चारणसामर्थ्यात् ।

'निष्फलस्तिलः' इति । सस्यावस्थायां फलरहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ॥

## ३७. तस्य समूहः ।

सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति—'किमिहोदाहरणम्' इति । काकशुकवकशब्दा आद्युदात्ताः 'प्राणिनां कुपूर्वाणाम्' (फि सू. २.३०) इत्यनेन, अस्यार्थः—अधिकरणे षष्ठ्यौ, अयादिः प्राक् शकटेरित्यत

आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणंस्यते, प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति। तत्र शौकमित्यनुदाहरणम्; खण्डिकादिषु पाठात्। बकशब्दस्तूदाहार्यः ॥

## ३८. भिक्षादिभ्योऽण्।

'अण्ग्रहणं बाधकबाधनार्थम्' इति। भिक्षाशब्दोऽयम् 'गुरोश्च हलः' (३.३.१०३) इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततः 'अनुदात्तादेः' (४.२.१४०) इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राञ् स्यात्पुनर्वचनमनर्थकं स्यात्? नानर्थकम्; परत्वाद्धि तत्तल्लक्षणष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरण्ग्रहणादणेव भवति। 'गार्भिणम्' इति। 'भस्याऽढे तद्धिते' (वा. ७३१) इति पुंवद्भावेन ङीपो निवृत्तिः, ततोऽणि 'इनण्यनपत्ये' (६.४.१६४) इति प्रकृतिभावात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपाभावः। 'तस्य ग्रहणसामर्थ्यात्पुंवद्भावो न भवति' इति। यदि स्यात्, 'सिद्धत्वात्प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते पुंवद्भावेन भवितव्यम्। युवशब्दश्च 'कनिन्युवृष' (द.उ. ६-५१) इति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिक एवाण् सिद्ध इति तस्येह पाठोऽनर्थकः स्यात्। 'यौवतम्' इति। यथा तु वार्त्तिकं तथा पुंवद्भाव इष्यते। आह हि—'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' इति ॥

## ३९. गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्।

'अपत्याधिकारादन्यत्र' इति। यद्येवम्, राजन्यमनुष्ययोरुपादानमनर्थकम्, गोत्र इत्येव सिद्धम्। न तावपत्यप्रत्ययान्तौ; जातेः प्रत्ययार्थत्वात्। उक्तं हि—'राज्ञोऽपत्ये जातिग्रहणम्' (वा. ३९२) 'मनोर्जातावञ्यतौ षुक् च' (४.१.१६१) इति। किं तर्ह्युच्यते 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (वा. ८१४) इति यलोपो न भवतीति; यावताऽनापत्यप्रत्ययकारत्वेनैव न भविष्यति? सत्यम्; अपत्यार्थत्वमभ्युपेत्यैतदुच्यते। यद्यपत्यार्थत्वमभ्युपेयते, राजन्यमनुष्ययोर्ग्रहणमनर्थकम्? नानर्थकम्; ज्ञापनार्थत्वात्, एतज्ज्ञापयति—नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति न वक्तव्यम्। 'औपगवकम्' इति। यथात्र परोऽप्यनुदात्तादेरञ् न भवति, तथा 'खण्डिकादिभ्यश्च' (४.२.४५) इत्यत्र वक्ष्यते ॥

## ४०. केदाराद्यञ्च।

## ४१. ठञ् कवचिनश्च।

## ४२. ब्राह्मणमाणववाडवाद्यन्।

'नकारः स्वरार्थः' इति। 'ञ्नित्यादिर्नित्यम्' (६.१.१९७) इत्याद्युदात्तत्वं यथा स्यात्। किमर्थं पुनर्ब्राह्मणादिभ्यो यन्विधीयते, न प्रकृतो यञेव विधीयते, न हि वृद्धेषु यञो यनो वा विशेषोऽस्ति—तदेव रूपम्, स एव स्वरः, ठञस्तस्वरितत्वादननुवृत्तिः? ज्ञापनार्थं तु। एतज्ज्ञापयति—अन्येभ्योऽप्ययम्। किं सिद्धं भवति? पृष्ठादुपसंख्यानं चोदयिष्यति तन्न वक्तव्यं भवति।

'पृष्ठानां समूहः' इति । पृष्ठशब्द स्तुतिविशेषवचनः । 'पृष्ठ्यः षडहः' इति । तद्वति तदुपचारः । 'णस्वक्तव्यः' इति । सकारः पदसंज्ञार्थः, तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति ॥

## ४३. ग्रामजनबन्धुसहायेभ्यस्तल् ।

## ४४. अनुदात्तादेरञ् ।

'अचित्तात्परत्वात् ठका भवितव्यम्' इति । चित्तवन्त उदाहृताः, कपोतमयूरशब्दो 'लघावन्ते' (फि.सू. २-४२) इति मध्योदात्तौ, इगुपधात्कः, तरतेः सन्वत्तुक् चाभ्यासस्येति किप्रत्ययान्तस्तित्तिरिशब्दः प्रत्ययस्वरेणान्तोदात्तः । सन्वद्भावेनाद्युदात्तत्वं न भवति; 'उणादयो बहुलम्' (३.३.१) इति बहुलवचनात् ॥

## ४५. खण्डिकादिभ्यश्च ।

'क्षुद्रकाश्च' इति । क्षुद्रकस्यापत्यानि, जनपदशब्दादिति विहितस्य तद्राजस्य लुक्, मालवात्तु वृद्धलक्षणस्य ञ्यङः । 'पूर्वेणाञि सिद्धे' इति । समासान्तोदात्तत्वे सति शेषनिघातेनानुदात्तादित्वात् ।

'ननु च परत्वात्' इति । अभ्युपेत्य गोत्रत्वमेतदुक्तम्, तदेव तु नास्तीत्याह—'न च गोत्रसमुदायो गोत्रम्' इति । तत्र च यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यत इति काशिकोसलाया इत्यत्र छ एव भवति, वुञ् जनपदलक्षणो वुञ्, तद्वदत्रापि गोत्रलक्षणो वुञ् न प्राप्नोतीति भावः । स्यादेतत्—मा भूत्समुदायो गोत्रम्, मालवशब्दस्तु गोत्रं भवति, ततश्च तदन्तविधिना समुदायादपि वुञ् प्राप्नोतीति ? तत्राह—'न च' इति । 'येन विधिस्तदन्तस्य' (१.१.७२) इत्यत्र हि 'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्तम् । 'एवं तर्हि' इत्यादि । कथमेकेन यत्नेनोभयं शक्यं ज्ञापयितुम् ? शक्यमित्याह, अन्यथानुपपत्त्या ज्ञापकं भवति, उभयेन च विना नास्मादञ्विधानमुपपद्यत इति । किमत्रानुपपन्नम् ? तत्र पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनमौपगवकं कापटवकमिति । वुञोऽवकाशः यदाद्युदात्तम्—ग्लुचुकस्यापत्यं ग्लुचुकायनिः, 'प्राचामवृद्धात्फिन्' (४.१.१६०) तेषां समूहो ग्लौचुकायनकमिति; अञस्तु कापोतमित्याद्यगोत्रमवकाशः; गोत्रादनुदात्तादेरुभयप्रसङ्गे परत्वादञ् स्यात्, अस्मात्तु ज्ञापकाद्वुञेव भवति तदन्तविधिज्ञापनस्य प्रयोजनम्—वनहस्तिनां समूहो वानहस्तिकम् । 'गोधेनुकम्' इति । 'जङ्गलधेनुवलजान्तस्य' (७.३.२५) इत्युत्तरपदवृद्धिविकल्पः ।

पुनरस्यैव नियमार्थत्वं वर्णयिष्यन् कथमेकेन यत्नेनोभयं लभ्यम्—ज्ञापनं च नियमश्च ? इत्याशङ्क्याह—'क्षुद्रकमालवादित्येतावता' इति । योगविभागेन यत्नद्वयमाश्रीयत इत्यर्थः । 'क्षौद्रकमालवी, क्षौद्रकमालवकम्' इति । उभयत्रापि मालवादुत्पन्नस्य ञ्यङः 'गोत्रेऽलुगचि' (४.१.८९) इति लुकि प्रतिषिद्धे 'आपत्यस्य' (६.४.१५१) इति यलोपः ।

'अञ्सिद्धिरित्यादि अनुदात्तादेः' इति । हेतुगर्भं विशेषणम्; यतोऽयं क्षुद्रकमालवशब्दोऽनुदात्तादिस्तेन तस्मादनुदात्तादेरित्येवाञः सिद्धिरस्ति । कोऽर्थः तस्य गणपाठेनेति शेषः । न किञ्चित्प्रयोजनमित्यर्थः । गोत्रलक्षणो वुञ् प्राप्नोति, अतस्तद्बाधनार्थः पाठ इति चेत्तत्राह—'गोत्रवुञ्' इति । गोत्राद्वुञ् विधीयते, न च तत्क्षुद्रकमाल-

वेतिशब्दरूपगोत्रमित्यर्थः। 'तदन्तात्' इति। मालवशब्दस्य गोत्रत्वात्तदन्तविधिना प्राप्नोत्येव। [1]'न स सर्वतः' इति। आद्यादित्वात् सप्तम्यन्तात्तसिः, स तदन्तविधिः सर्वत्र न भवतीत्यर्थः। 'तदन्तत्वे' इति। तदन्तविधिरस्तीत्यस्मिन्नर्थ इत्यर्थः। 'तथा च' इति। धेनुरनञिकमुत्पादयतीति आपिशलेः सूत्रम्। अत्र वृद्धचर्योऽनुबन्धो मृग्यः, इकस्यैव चेसुसुक्तान्तात्परस्य कादेशो द्रष्टव्यः। अर्थमात्रं वा भाष्यकारेण निर्दिष्टम्। इकमिति ठकमित्यर्थः। धेनूनां समूहो धैनुकम्। अनञिति किम्? अधेनूनां समूह आधेनवम्, उत्सादिपाठादञ्। यद्यपि धेनुशब्दः सूत्रे पठ्यते, तथापि वत्कयास इति लिङ्गाद्धेनुशब्दादपि भवति। तत्र यदि सामूहिकेषु तदन्तविधिर्न स्यात्, अनञिति प्रतिषेधोऽनर्थकः स्यात्।

प्रयोजनान्तरमप्याह—'सेनायाम्' इति। 'यथा' इति। पूर्वविप्रतिषेधेन वुञाऽञो बाधा यथा स्यादित्येवमर्थश्च तस्य गणे पाठ इत्यर्थः। उलूकशब्दोऽत्र पठ्यते स 'लघावन्ते' (फि.सू. २.४२) इति मध्योदात्तः। छन्दसि तु यदुलूको वदति मोघमेतत्, इत्या उलूक आपप्तदिति यदाद्युदात्तत्वम्, तच्छान्दसम्। भाषायां तु मध्योदात्तमेव, तत्र पूर्वेणैवाञ् सिद्धः, तस्मादेवं वक्तव्यम्—औलूक्यशब्दो गर्गादियञन्तः, यतः 'यञञोश्च' (२.४.६४) इति बहुषु लुकि कृते रूपम्, तदिह पठ्यत इति। असति हि तस्य पाठे उलूकानां समूह इत्यर्थविवक्षायां 'गोत्रेऽलुगचि' (४.१.८९) इति लुकः प्रतिषेधादौलूक्यशब्दाद्गोत्राश्रयो वुञ् प्राप्नोति। शुकशब्दोऽत्र पठ्यते, 'तस्य समूहः' (४.२.३७) इत्यत्र तु 'यस्य च नान्यत्प्रतिपदविधानमस्ति' इत्युक्त्वोदाहृतम्—काकं शौकमिति, तस्मात्तत्र शौकमित्यस्य स्थाने बाकमिति पठितव्यम्। बकशब्दः 'प्राणिनां कुपूर्वाणाम्' (फि.सू.-२.३०) इत्याद्युदात्तः। युगवरत्रेति पठ्यते, तत्सङ्घातविगृहीतार्थमिच्छन्ति—यौगवरत्रम्, यौगम्, वारत्रमिति, तत्र सङ्घातपक्षे 'जातिरप्राणिनाम्' (२.४.६) इति द्वन्द्वैकवद्भावे नपुंसकह्रस्वत्वे सति युगवरत्रेति दीर्घनिर्देशोऽनुपपन्नः, तस्माद्युगसहिता वरत्रेति समासः कर्तव्यः, जातिपरत्वाभावाद्वा एकवद्भावाभावः॥

## ४६. चरणेभ्यो धर्मवत्।

'गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्ते' इति। ननु च न तत्र धर्मग्रहणमस्ति, तत्कथं धर्मवदित्यतिदेशो युज्यत इत्याह—'तत्रेदम्' इति। इदमेव धर्मवदितिवचनं लिङ्गमस्ति, तत्र चरणाद्धर्माम्नाययोरिति। 'वतिः सर्वसादृश्यार्थः' इति। असति तस्मिन् 'चरणेभ्यो धर्मः' इत्युच्यमाने यदि तावदेवं सम्बन्धः, चरणेभ्यो धर्मे ये प्रत्यया विधास्यन्ते ते भवन्ति, समूह इति समूहप्रकृतिरविशेषिता स्यात्, ततश्च काकादिभ्योऽपि वुञादयः प्रसज्येरन् अथ पुनरेवं सम्बन्धः—धर्मे ये प्रत्यया विधास्यन्ते ते चरणेभ्यः समूहे भवन्तीति? एवमपि धर्मप्रत्यया न विशेषिता स्युः, ततश्च 'तस्येदम्' (४.३.१२०) इति विधास्यमाना अणादयोऽपि कठादिभ्य आपद्येरन्। अथाप्येवं सम्बन्धः—चरणेभ्यो धर्मे ये प्रत्ययास्ते भवन्ति चरणेभ्य एव समूह इति? तत्र सकृत् श्रुतस्य चरणशब्दस्यैवमुभयसम्बन्ध एव तावद्दुर्लभः, अथापि लभ्येत? एवमपि यः कश्चिद्धर्मे प्रत्ययो यतः कुतश्चिच्चरणशब्दात् स्यात्, 'कौपिञ्जलहास्तिपदादण्' (४.३.१३२) कठादिभ्योऽपि स्यात्, वतिनिर्देशे तु सति सर्वसादृश्यपरिग्रहो भवति। तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया धर्मे विधास्यन्ते, इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव भवन्तीति न किञ्चिदनिष्टम्। 'काठकम्, कालापकम्' इति। गोत्रचरणाद्वुञ्। 'छान्दोग्यम्' इति। 'छन्दोगौक्थिक' (४.३.१२९) इति ञ्यः। 'आथर्वणम्' इति। 'आथर्वणिकस्येकलोपश्च' (४.३.१३३) इत्यण्, इकलोपश्च॥

---

1. 'न च सर्वतः' इति मूलपाठः.

## ४७. अचित्तहस्तिधेनोष्ठक् ।

'अणञोरपवादः' इति । अचित्तार्थेषु येननाप्राप्तिन्यायेनाणोऽपवादः । कपोतादिषु चित्तवत्सु चरितार्थस्याञोऽपि परत्वाद्बाधक इत्यर्थः । हस्तिधेनुशब्दयोस्तु प्रत्ययस्वरेणान्तोदात्तयोरनुदात्तादिलक्षणस्याञोऽपवादः । हस्तिशब्दः 'हस्ताज्जातौ' (५.२.१३३) इतीनिप्रत्ययान्तः । धेनुशब्दः 'धेटो नुश्च' (द.उ.१.१४५) इति नुप्रत्ययान्तः । 'आधेनवम्' इति । उरसादिपाठादञ्, 'जङ्गलधेनुवलजान्तस्य' (७.३.२५) इति पक्षे वृद्ध्यभावः ॥

## ४८. केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।

## ४९. पाशादिभ्यो यः ।

यप्रत्ययान्तं स्वभावतः स्त्रीलिङ्गम् । वातशब्दोऽत्र पठ्यते—वातानां समूहो वात्या, पृथग्वातावयवानामयुक्तोऽत्र समूहः, तस्माच्छीघ्रत्वे प्रत्ययो वक्तव्यः ? नैष दोषः; एकस्यापि वातावयविनो दिग्भेदेन भेदोऽध्यारोपः, तदाश्रयश्च समूहः । अथ वा—प्रतिदिशं वातावयविन एव भिद्यन्ते, तथा च प्रतिभासः—पूर्वो वातः, उत्तरो वातः, सर्वतो वान्ति वाता इति । आह च—वायोर्वायुसम्मूर्छनं नानात्वे लिङ्गमिति ॥

## ५०. खलगोरथात् ।

अथ कस्मात्खलादयोऽपि पाशादिष्वेव न पठिताः, एवं हि विभक्तिर्नोच्चारयितव्या भवति ? तत्राह—'पाशादिष्वपाठः' इति ॥

## ५१. इनित्रकट्यचश्च ।

योगविभागो यथासङ्ख्यार्थः, अन्यथा इनित्रकट्यचस्त्रयश्चकाराद्यश्चेति चत्वारः प्रत्ययाः, प्रकृतयस्तु तिस्र इति वैषम्यं स्यात् ।

'खलादिभ्यः' इति । खलादयः प्रयोगतो गम्याः । एतेऽपि प्रत्ययाः स्वभावतः स्त्रियामेव ॥

## ५२. विषयो देशे ।

ननु च विषयस्य देशत्वाव्यभिचाराद्देश इति विशेषणं व्यर्थमित्यत आह—'विषयशब्दोऽयम्' इति । अत्यन्तशीलितः = अत्यन्ताभ्यस्तः । 'तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम्' इति । यद्येवम्, देशग्रहणमेवास्तु मा भूद्विषयग्रहणम् ? नैवं शक्यम्; देशशब्दोऽपि नानार्थः, देशनं देश इति क्रियाशब्दस्यापि भावात् । 'शिबीनां विषयो देशः शैबः' इति । कथं शिबयो देश इति ? निवासविवक्षायाम् 'तस्य निवासः' (४.२.६९), 'जनपदे लुप्' (४.२.८१) इति लुपि भविष्यति । नन्वर्थभेदो भवति, शिबीनां निवासो जनपद इत्यत्र स्वस्वामिभावो न प्रतीयते, अन्यदीयेऽपि जनपदे निवाससम्भवात्; शिबीनां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते, न तु निवासार्थः, तत्रावसतामपि स्वामित्वसम्भवात् ? सत्यम्; य एवासौ येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते, न निवासमात्रे । अत्र चाभिधानस्वाभाव्यं हेतुः । एवं च शिबीनां विषयः शैब इत्यस्मिन्नर्थे शिबय इत्यपि

भवति। एवं वसातीनां विषयो वासातः, तेषामेव निवासो वसातयः। तथा गान्धारीणां विषयो गान्धारः, निवासो गान्धारयः। अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्रा इति—निवासरूपतैव विवक्ष्यते, न विषयरूपता।

एवं 'राजन्यादिभ्यो वुञ्' (४.२.५३) इत्यत्रापि विषयविवक्षायां राजन्यकम्, निवासो राजन्याः। तत्रैव बैल्वतादिषु विषयविवक्षैव, तेन बैल्वतकम्, आम्बरीषपुत्रकमित्याद्येव भवति। सर्वत्र चाभिधानशक्तिरेव हेतुः, तदाह—विषयाभिधाने जनपदे लुप्, बहुवचनविषयाद्गान्धार्यादिभ्यो वा राजन्यादिभ्यो नित्यम्, न वाभिधेयस्य निवासविषयत्वात्। निवासविवक्षायां लुप्, विषयविवक्षायां तु प्रत्यय इति॥

## ५३. राजन्यादिभ्यो वुञ्।

## ५४. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ।

## ५५. सोऽस्यादिरिति च्छन्दसः प्रगाथेषु।

छन्दस इति न स्वरूपग्रहणम्, नापि मन्त्रब्राह्मणयोः, कस्य तर्हि? अक्षराणामियतावचनश्छन्दःशब्दोऽस्ति, यस्य जगत्यादयो विशेषास्तस्य ग्रहणम्; प्रगाथानामादौ तस्यैव सम्भवात्; तेन पङ्क्त्यादिशब्देभ्यः प्रत्ययः। यत्र द्वे ऋचौ तिस्रः क्रियन्त इति चतुर्थषष्ठौ पादौ बार्हतो प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येविस्येव मादिना प्रकारेण। तद्यथा—यज्ञायज्ञा वः प्रियं मित्रं शंसिषों प्रियं मित्रं न शंसिषमूर्जे निपातमिति। तत्र योऽयमुच्चारणप्रकारस्तद्ग्रथनम्। 'प्रग्रथनात्' इति। प्रगाथशब्दप्रवृत्तिनिमित्तं दर्शयति, प्रग्रथ्यत इति प्रगाथः, 'अकर्तरि च कारके' (३.३.१९) इति कर्मणि घञ्, पृषोदरादित्वाद्रेफनकारयोर्लोपः। [1]'प्रागाणाद्वा' इति। 'कृत्यचः' (८.४ २९) इति णत्वम्, 'कै गै शब्दे' (धा.पा. ९१६,९१७), प्रगीयत इति प्रगाथः, 'उषिकुषिगर्तिभ्यस्थन्' (द उ. ६.२९)। 'त्रैष्टुभम्' इति। कुटीर इति स्वार्थिकस्यापि रप्रत्ययस्य यथा भिन्नलिङ्गता, तथेहापि नपुंसकत्वं द्रष्टव्यम्।

## ५६. संग्रामे प्रयोजनयोद्धृभ्यः।

'समर्थानां प्रथमाद्वा' (४.१ ८२) इति वचनात् संग्रामवाचिभ्यः प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्यस्तदर्मनिर्दिष्टेभ्य इत्याशङ्क्याह—'सोऽस्येति समर्थविभक्तिः' इत्यादि। 'प्रथमासमर्थविशेषणम्' इति। तेन विशेष्यद्वारेण प्रयोजनयोद्धार एव प्रथमानिर्दिष्टाः। 'प्रत्ययार्थविशेषणं संग्रामः' इति। तेन तद्द्वारेण संग्रामस्त्व-रमनिर्दिष्टः॥

## ५७. तदस्यां प्रहरणमिति क्रीडायां णः।

## ५८. घञः सास्यां क्रियेति ञः।

'अस्यामिति प्रत्ययार्थः स्त्रीलिङ्गः' इति। तेन लिङ्गस्य विवक्षितत्वं दर्शयति। 'घञन्तास्क्रियावाचिनः'

1. प्रग्रथनात्प्रकर्षगानाद्वा—इति काशिका.

इति । भावे यो घञ् तदन्तावित्यर्थः । 'श्येनम्पाता' इति । पतनं पातः, श्येनानां पात इति । कर्तरि षष्ठ्याः समासः, ततो ञः, 'श्येनतिलस्य पाते ञे' (६.३.७१) इति मुम् । 'प्राकारः' इति । द्रव्यवचनोऽयं कर्मणि घञन्तः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६.३.१२२) इति प्रशब्दस्य दीर्घत्वम् । 'सामान्येन चेदं विधानम्' इति । एतदेवोदाहरणेन द्रढयति—'दण्डपातः' इति ॥

## ५९. तदधीते तद्वेद ।

इह योऽयं ग्रन्थमधीते स तं स्वरूपतो वेत्ति, यश्च वेत्ति सोऽवश्यमधीते—इत्यन्यतरोपादानेन सिद्धम्, किमर्थमिमावर्थावुपदिश्येते, नैतयोरावश्यकः समावेशः, अध्ययनम् = शब्दपाठः, अर्थावबोधः = वेदनम्, भवति च—कश्चित्संपाठं पठति नार्थं वेत्ति, कश्चिच्चार्थं वेत्ति न सम्पाठं पठति ।

'द्विस्तद्ग्रहणम्' इत्यादि । 'तदधीते वेद' इत्युच्यमाने समुच्चयो विज्ञायेत, ततश्च यस्तदधीते वेद च तत्रैव स्यात्, यस्तु केवलमधीते वेद वा न तत्र स्यात्; द्विस्तद्ग्रहणे तु वाक्यभेदेनाधीयानविदुषोः पृथक्प्रत्ययविधानं सिध्यति । ननु च 'तदस्य तदस्मिन् स्यात्' (५.१.१६) इत्यत्र नानार्थनिर्देशे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति द्विस्तद्ग्रहणेन न्यायो व्युत्पादयिष्यते, अत एव 'तेन दीव्यति' (४.४.२) इत्यत्र प्रत्ययं प्रत्ययो भवति ? न ब्रूमः—इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति, किं तर्हि ? उत्तरत्र 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४.२.६०), 'वसन्तादिभ्यष्ठक्' (४.२.६३) इत्यत्रापि, किं च कारणं न स्यात् ? क्रतुशब्दः कर्मनामधेयं वसन्तादयोऽप्यर्थाः, न तेषामध्ययनं सम्भवति, तस्य शब्दविषयत्वात्, तत्सहचरिते तु ग्रन्थे सम्भवति, गौणत्वात्तु न गृह्यते, मुख्य एव स्वर्थे वेदनं सम्भवतीति तेभ्यो विदुष्येव स्यात्, नाध्येतरि । पुनस्तद्ग्रहणात्तु यत्नाद्गौणस्यापि ग्रहणात्तत्रापि भवति ॥

## ६०. क्रतूक्थादिसूत्रान्ताट्ठक् ।

'क्रतुविशेषवाचिभ्यः' इति । स्वरूपस्य तु ग्रहणं न भवति, यदि स्यादुक्थादिष्वेव पठेत् । क्रतुसामान्यवाचिनामपि सोमयागादीनां पर्यायाणां न भवति; उक्थादिषु यज्ञशब्दस्य पाठात् । तस्माद्विशेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि प्रत्ययः; तत्प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरि । 'वार्त्तिकसूत्रिकः' इति । वृत्तौ साधु वार्त्तिकम्, 'कथादिभ्यष्ठक्' (४.४.१०२) वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात्प्रत्ययः । एवं 'सांग्रहसूत्रिकः' इति । कल्पसूत्रमिति कर्मधारयः, समाहारद्वन्द्वो वा ।

'यज्ञायज्ञीयात्परेण' इति । एनपा योगे पञ्चमी चिन्त्या, एनबपि परशब्दात्पाक्षिकः, यद्वा तद्विधौ 'दिक्शब्देभ्यः' (५.३.२७) इत्येवानुवर्त्तते । 'न च 'उत्तराधरदक्षिणादातिः' (५.३.३४) इति नानुवर्त्तते, तेनोक्थान्यधीयत इति वाक्यमेव भवति । तान्यधीयाने प्रत्यय इष्यते' इति । ठग्, अण्–च प्रत्ययद्वयमपि नेष्यते, तेनोक्थान्यधीयत इति वाक्यमेव भवति । अत्र च अभिधानमेव शरणम्, सामलक्षणं प्रातिशाख्यम् । 'औक्थिक्यं' इति । औक्थिकानामाम्नायः, इत्यर्थः, 'छन्दोगौक्थिक' (४.३.१२९) इति ञ्यः । 'औक्थिक्यशब्दाच्च प्रत्ययो न भवति' इति । अध्येतरि प्रत्यय इत्यर्थः, इदं प्रसङ्गादुक्तम् । 'सूत्रान्तात्' इति । अत्यल्पमिदमुच्यत इत्याह—'विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम्' इति । 'विद्या च' इत्यादिवाक्येनातिप्रसक्तस्यापवादः । अङ्गादिपूर्वो विद्याशब्दः प्रत्ययं नोत्पादयतीत्यर्थः । 'त्रैविद्यः' इति । व्यवयवा विद्या त्रिविद्या, तामधीते त्रैविद्यः । तिस्रो विद्या अधीत इति तु विग्रहे 'द्विगोर्लुगनपत्ये' (४.१.८८) इति लुक्प्रसङ्गः ।

'यावक्रीतिकः' इति । यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतशब्देनोच्यते, एवं प्रैयङ्गवमधिकृत्य कृतमुपचारात्प्रैयङ्गवमुच्यते । 'वासवदत्तिकः' इति । वासवदत्तामधिकृत्य कृता आख्यायिका, 'अधिकृत्य कृते ग्रन्थे' (४.३.८७) इत्यत्रार्थे 'वृद्धाच्छः' (४.२.११४), तस्य 'लुबाख्यायिकाभ्यो बहुलम्' (वा. ४६७), इति लुप्, ततोऽनेन ठक् । एवं 'सौमनोत्तरिकः, ऐतिहासिकः' इति । इति हासीदिति यत्रोच्यते स इतिहासः, पृषोदरादित्वात्साधुः ।

'सर्वसादेः' इति । सर्वादिः, सादेर्द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति, लुग्भवतीत्यर्थः, अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः, 'द्विगोश्च' (४.१.२१) इत्यनेन 'द्विगोर्लुगनपत्ये' (४.१.८८) इत्ययमेव लुक् स्मारितः । 'सर्ववेदः' इति । सर्ववेदानधीते इत्यणो लुक् । 'सवार्त्तिकः' इति । वार्त्तिकान्तमधीते इति अन्तवचने सहशब्दस्याव्ययीभावः, 'अव्ययीभावे चाकाले' (६.३.८१) इति सभावः, ततोऽणो लुक् ।

'अनुसूः' इति । अनुसूशब्दश्छन्दकमुत्पादयति, लक्ष्यलक्षणशब्दो चेत्यर्थः । 'आनुसुकः' इति । अनुसूमधीत इति ठक्, तस्य 'इसुसुक्तान्तात् कः' (७.३.५१) इति कादेशः, 'केऽणः' (७.४.१३) इति ह्रस्वः ।

'पदोत्तरपदात्' इति । पदशब्द उत्तरपदं यस्य स तथोक्तः, पूर्वपदमधीते पूर्वपदिकः। एवमुत्तरपदिकः ।

'शतषष्टेः' इति । शतशब्दात् षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् भवति । षकारो ङीषर्थः ॥

## ६१. क्रमादिभ्यो वुन् ।

## ६२. अनुब्राह्मणादिनिः ।

'ब्राह्मणसदृशः' इति । 'यथार्थे यदव्ययम्' (२.१ ६) इति सादृश्येऽव्ययीभावः ।

चोदयति—'मत्वर्थे' इति । परिहरति—'तत्रैतस्मात्' इति । दूषयति—'अनभिधानात्' इति । साक्षात्परिहारमाह—'अणो निवृत्त्यर्थं तु वचनम्' इति । क्वचित्तु मत्वर्थ इत्यादि न पठ्यते ॥

## ६३. वसन्तादिभ्यष्ठक् ।

'वसन्तसहचरितः' इति । यत्र वसन्तो वर्ण्यते यो वा वसन्तेऽध्येयः । वसन्तसाहचर्यात्ताच्छब्द्यं लभते । उक्थादिष्वेते पठितव्याः, ते वा वसन्तादिषु ? तथा तु न कृतमित्येव । अथर्वन्शब्दोऽत्र पठ्यते, स उपचारेण प्रोक्ते ग्रन्थे वर्तते । अथर्वणमधीते आथर्वणिकः 'दाण्डिनायनहास्तिनायन' (६.४.१७४) इति निपातनात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपाभावः ॥

## ६४. प्रोक्ताल्लुक् ।

'प्रोक्तसहचरितः' इति । अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यायोगान्मुख्यार्थासम्भवाद्गौणस्य ग्रहणमित्यर्थः । अपर आह—प्रोक्तशब्द इह स्वर्यते, तेन तदधिकारविहितः प्रत्ययो गृह्यत इति । यदि वा प्रोक्ते

भ्यः प्रोक्त इति सौत्रोऽयमतद्धितनिर्देशः । 'पाणिनीयम्' इति । ननु पणोऽस्यास्तीति पणी, तस्यापत्यं पाणिनः, पाणिनस्यापत्यं पणिनो युवा पाणिनिः, ततः 'तेन प्रोक्तम्' (४.३.१०१) इत्यर्थविवक्षायां 'यूनि लुक्' (४.१.९०) इति इञो लुकि कृते प्रत्ययलक्षणेन 'इञश्च' (४.२.११२) इत्यण् प्राप्नोति ? नैष दोषः; 'इञश्च' इत्यत्र 'कण्वादिभ्यो गोत्रे' (४.२.१११) इत्यतः 'गोत्रे' इत्यनुवर्तते, तेनेञं विशेषयिष्यामः——गोत्रे य इञ् विहितस्तदन्तादिति । तत्र च पारिभाषिकं गोत्रं गृह्यते, तेन यूनीञो न भविष्यति, ततो वृद्धाच्छः; आपिशलिशब्दात् 'इञश्च' इत्यण्, उभयत्राध्येतृप्रत्ययस्य लुक् । नन्वत्र लुकि सति, असति वा तदेव रूपमिति नास्ति विशेषः ? तत्राह——'स्त्रियां स्वरे च विशेषः' इति । असति लुकि स्त्रियाम् 'टिड्ढाणञ्' (४.१.१५) इत्यादिना ङीप् स्यात् अण्स्वरेणान्तोदात्तत्वं च । लुकि तु सति टाब्भवति, छस्वरेण मध्योदात्तत्वं च । आपिशले तु स्वरे नास्ति विशेषः, यथा तु लुकि सत्यापिशलेत्यत्र ङीब्न भवति, तथा 'अनुपसर्जनात्' (४.१.१४) इत्यत्र प्रत्यपादि ॥

## ६५. सूत्राच्च कोपधात् ।

'अष्टकं सूत्रम्' इति । अष्टावध्यायाः परिमाणमस्य, 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' (५.१.५८) इति 'संख्याया अतिशदन्तायाः कन्' (५.१.२२) ।

'संख्याप्रकृतेरिति वक्तव्यम्' इति । संख्या प्रकृतिर्यस्य प्रत्ययस्य तदन्तात्कोपधादिति वक्तव्यमित्यर्थः । 'कालापकमधीते कालापकः' इति । कलापिना प्रोक्तमधीयते कालापाः, 'कलापिनोऽण्' (४.३.१०८), 'नान्तस्य टिलोपे सब्रह्मचारि' (वा. ४६९) इत्यौपसंख्यानिकष्टिलोपः, ततः 'तदधीते' (४.२.५९) इत्यण्, प्रोक्ताल्लुक् (४.२.६४) । कालापानामाम्नाय इति 'गोत्रचरणाद्वुञ्' (४.३.१२६), कालापकम्, ततः 'तदधीते' इत्यण्, तस्य लुग्न भवति । यदि स्यात् ञित्स्वरेणाद्युदात्तत्वं स्यात्, लुगभावे त्वण एव स्वरो भवति, स्त्रियां च ङीब्भवति ।

'चतुष्टयम्' इति । चत्वारोऽवयवा अस्य 'संख्याया अवयवे तयप्' (५.२.४२), 'ह्रस्वात्तादौ तद्धिते' (८.३.९९) इति मूर्धन्यः ॥

## ६६. छन्दोब्राह्मणानि च तद्विषयाणि ।

'प्रोक्तग्रहणमनुवर्तते' इति । तद्ध्यनुवर्तमानमेव पूर्वसूत्र आरम्भसामर्थ्यान्न सम्बध्यते । 'छन्दांसि च ब्राह्मणानि च' इति । तद्वाचीनि शब्दरूपाणीत्यर्थः । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात्, अप्रोक्तप्रत्ययान्तत्वाच्च । 'प्रोक्तप्रत्ययान्तानि' इति । प्रोक्तादिति पञ्चम्यन्तं प्रकृतं प्रथमाबहुवचनान्तं विपरिणम्यते, 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यादिति भावः । 'अध्येतृवेदितृप्रत्ययविषयाणि' इत्यनेनैतद्दर्शयति——तच्छब्देनाध्येतृवेदितृप्रत्ययः परामृश्यते, विधेयतया प्रधानत्वात्; नाध्येतृवेदितारावर्थौ, तयोः प्रत्ययविधौ गुणभावादिति । किं सिद्धं भवति ? अध्येतृविषयमपि वाक्यं निवर्तितं भवति । 'अनन्यभावो विषयार्थः' इति । ग्रामसमुदायादिवृत्तिस्तु विषयशब्दोऽसम्भवान्न गृह्यते । अत्र यद्यधीते वेदेत्यनुवर्तेत, ततोऽध्येतृवेदितृविवक्षायामेव तद्विषयता विधीयेत, ततश्च तद्विषयमेव वाक्यं निवर्तयेत्, न क्रियान्तरविषयम्, नापि स्वातन्त्र्यमुपाध्यन्तरयोगं

च । यदाह—तत्र 'यथाधिकारात्तद्विषयप्रसङ्गः' इति । तस्मात्प्रोक्तग्रहणमेवानुवर्त्तते, नाधीयते वेदेति। तच्छब्देन च प्रत्ययः परामृश्यते, विषयशब्दश्च अनन्यभावार्थः । तेन सर्वमेतत्स्वातन्त्र्यादि निवर्तते । आह च—'सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात्' इति । प्रोक्तग्रहणमेवाधिक्रियते, नाधीते वेदेत्येतावर्थाविस्यर्थः ।

इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता दृश्यते—स्वातन्त्र्यम्, उपाध्यन्तरयोगः, वाक्यम्, अध्येतृवेदितॄः प्रत्यय इति । स्वातन्त्र्यं तावत्—पाणिनिना प्रोक्तं पाणिनीयमिति । प्रोक्तार्थ एव वृत्तिः, उपाध्यन्तरयोगः। महत्पाणिनीयमिति वाक्यम् । पाणिनीयमधीयत इति प्रत्ययः—पाणिनीयाश्छात्रा इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानां नित्यमध्येतृवेदितृप्रत्ययान्ततेष्यते, न तु स्वातन्त्र्यादि, तदर्थमिदमारभ्यते, तदाह—'तेन' इति । एवं च कृत्वाऽर्थद्वयस्यापि तन्त्रेण विग्रहः कर्त्तव्य इति दर्शयति । कठेन प्रोक्तमधीयते कठाः वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य 'कठचरकाल्लुक्' (४.३.१०७) इति लुक्, ततः 'तदधीते' (४.२.५९) इत्यण्, ततस्तस्यापि 'प्रोक्ताल्लुक्' (४.२.६४) इति लुक् । मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थे औत्सर्गिकोऽण् । शेषं यथायोगं पूर्ववत् । ऋचाभः = वैशम्पायनान्तेवासी । एवं ताण्ड्यः । वाजसनेयशब्दः शौनकादिः । 'ताण्डिनः' इति । 'आपत्यस्य' (६.४.१५१) इति यलोपः । 'भाल्लविशब्दः' इञन्तः । शाट्यशब्दाद्गर्गादियञन्तात् 'यञिञोश्च' (४.१.१०१) इति फक् । ऐतरेयशब्दः शुभ्रादिढगन्तः, तेभ्यः 'पुराणप्रोक्तेषु' (४.३.१०५) इति णिनिः, सर्वत्राध्येतृप्रत्ययस्य लुक् ।

'ब्राह्मणविशेषप्रतिपत्त्यर्थम्' इति । ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वम् । 'याज्ञवल्क्यानि' इति। याज्ञवल्क्यशब्दः कण्वादिः, सुलभादौत्सर्गिकोऽण्, अत्र स्वातन्त्र्यं भवति । 'पुराणप्रोक्तेषु' (४.३.१०५) इत्यत्र वक्ष्यति—'याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्याख्यानेषुवार्ता' इति । 'काश्यपिनः कौशिकिनः' इति। 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' (४.३.१०३) । 'पाराशरिणः' इति । पाराशर्यशब्दाद्गर्गादियञन्तात् 'पाराशर्यशिलालिभ्याम्' (४.३.११०) इति णिनिः । पूर्ववद्यलोपः । 'कर्मन्दिनः' इति । 'कर्मन्दकृशाश्वादिनिः' (४.३.१११) । पिङ्गशब्दात् 'पुराणप्रोक्तेषु' (४ ३.१०५) इति णिनिः ॥

## ६७.तदस्मिन्नस्तीति देशे तन्नाम्नि ।

'इतिकरणस्ततश्चेद्विवक्षा' इति । ननु तन्नामग्रहणादेवातिप्रसङ्गो न भविष्यति ? तन्न; द्विविधं नाम—कदाचित्केनचित्सङ्केतितम्, नित्यं व्यवहारानुपाति । तत्र द्वितीयस्य परिग्रहार्थमितिकरणः क्रियते, भूमादिविशेषपरिग्रहार्थं च । 'तन्नाम्नि' इत्येतत्तु नामधेयताविरोधिनो बलीयसोऽपि प्रत्ययान् बाधितुम्, अन्यथा नाप्राप्ते मतुप्यारम्भात्तस्यायं बाधकः । तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः ॥

## ६८. तेन निर्वृत्तम् ।

निर्वृत्तमित्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ॥

## ६९. तस्य निवासः ।

'ऋजुनावाम्' इति । ऋज्वी नौर्येषां तेषामित्यर्थः ॥

## ७०. अदूरभवश्च ।

अदूरमन्तिकं तत्र भवतीत्यदूरभवः, निपातनात्सप्तमीसमासः । 'विदिशायाः' इति । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (२.३.३४) इति षष्ठी । 'चकारः' इत्यादि । असति तु तस्मिन्नान्तर्यादयमेवार्थ उत्तरत्र सम्बध्येत ॥

## ७१. ओरञ् ।

अरडुः = क्षत्रियविशेषः । 'नद्यां तु मतुप्परत्वात्' इति । आरडवमित्यादिरस्यावकाशः, 'नद्यां तु मतुप्' (४.२.८५) इत्यस्योदुम्बरावतीत्यादिः ॥

## ७२. मतोश्च बह्वजङ्गात् ।

'चातुरर्थिकः' इति । चतुर्णामर्थानां समूहश्चातुरर्थी, तत्र भवः, अध्यात्मादित्वाट्ठञ् । तद्धितार्थे द्विगौ तु ठञो लुक् स्यात् ।

'अङ्गग्रहणं किम्' इति । 'मतोश्च बह्वचः' इत्येवास्तु, व्यधिकरणे पञ्चम्यौ, बह्वचो यो विहितो मतुप् तदन्तादिति विज्ञायमाने सिद्धयत्येव विवक्षितमिति प्रश्नः । 'मतुबन्तविशेषणं मा भूत्' इति । अन्यथा सामानाधिकरण्ये सम्भवति, वैयधिकरण्यस्यायुक्तत्वात् तस्यैव विशेषणं स्यादिति भावः । अस्ति चेदिदानीं क्वचिदबह्वच् मत्वन्तो यदर्थं बह्वज्ग्रहणं स्यात् ? अस्तीत्याह—स्ववान्, स्ववान् ॥

## ७३. बह्वचः कूपेषु ।

## ७४. उदक्च विपाशः ।

'महती सूक्ष्मेक्षिका' इति । एवं नाम स्वरेप्याचार्योऽवहित इति आचार्यस्य प्रशंसैषा ॥

## ७५. सङ्कलादिभ्यश्च ।

## ७६. स्त्रीषु सौवीरसाल्वप्राक्षु ।

## ७७. सुवास्त्वादिभ्योऽण् ।

'अणः' इति । 'अण्ग्रहणरहितसूत्राभिप्रायमेतत् । तस्य तु प्रयोजनं स्वयमेव वक्ष्यति--'अण्ग्रहणं मतुपो बाधनार्थम्' इति । तेन वस्तुतो मतुपोऽप्ययमपवादः । अथाण्ग्रहणं किमर्थम्, न सुवास्त्वादिभ्यो यथाविहितमित्येवोच्येत, पुनर्वचनाद्धि को विहितो न च 'प्राप्नोति स एव भविष्यति स चाणेव ? तत्राह--'अण्ग्रहणम्' इति । असत्यण्ग्रहणे मध्येऽपवादन्यायेन (व्या.प. १०) यथाविहितमित्युच्यमानोऽणञ एव बाधकः स्यात्, नदीमतुपा तु परत्वाद्बाध्येत, पुनरण्ग्रहणात्तु मतुपो विषये भवतीत्यर्थः । किञ्च--'ओरञ्' (४.२.७१) इत्यस्य नद्यां मतुप्परत्वाद्बाधक इत्युक्तम्, तत्रासत्यण्ग्रहणे यथाविहितमित्युच्यमाने नद्यां 'ओरञ्' एव स्यात्, वचनं तु मतुपो बाधनार्थं स्यात् । तस्मादेतदर्थमप्यण्ग्रहणं कर्त्तव्यम् ॥

## ७८. रोणी ।

'केवलस्तदन्तश्च' इति । अन्यथा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्' (व्या.प. ८९) केवलादेव स्यात्, न तदन्तात् । रोणीति पुनः शास्त्रनिरपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिह सूच्यत इति परिभाषाया अनपेक्षणात्तदन्तादपि भवति । ननु च रोणीति नेदं प्रातिपदिकम्, स्त्रीप्रत्ययान्तत्वात्; न च 'ग्रहणवता प्रातिपदिकेन' इत्यत्र लिङ्गविशिष्टस्य ग्रहणम्, येन स्त्रीप्रत्ययान्तेनापि तदन्तविधिः प्रतिषिध्येत, स्वरूपविधिविषया परिभाषेयं प्रातिपदिकस्य स्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्युक्तत्वात् ? यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं भवतीति भाष्यकारपक्षः, तदाश्रयेणैतदुक्तम् । एवं च वृत्तिकारस्याप्ययमेव पक्षः । ङ्याप्सूत्रे तु परपक्षो वर्णित इति गम्यते । किं सिद्धं भवति ? कुमारीमाचष्टे कुमारयति – 'णाविष्ठवत्' (वा.८१३) इति टिलोपः सिद्धो भवति ॥

## ७९. कोपधाच्च ।

## ८०. वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।

सूत्रे कुमुदशब्दो द्विरुपादीयते, तत्रारीहणकृशाश्वर्श्यकुमुदाश्च काशतृणादयश्चेति द्वन्द्वयोर्द्वन्द्वकरणादेकशेषाभावः । 'कुमुदादिषु' इति । ऋश्यादेरनन्तरेषु औत्सर्गिकोऽपि तत इष्यत इत्यादि यदुक्तं तदेवाप्तप्रयोगेण द्रढयति--'तथा चोक्तम्' इति । 'लुपि युक्तवत्' (१.२.५१) इत्यत्र भाष्यकारेणैतदुक्तम् । अथास्मात्प्रयोगाद्विशेषविहितानामेव पक्षे लुब्भवतीति कस्मान्नोच्यते ? तथा वा भवतु; सर्वथा चातूरूप्यमेवात्र नः समीहितम् ॥

## ८१. जनपदे लुप् ।

## ८२. वरणादिभ्यश्च ।

## ८३. शर्कराया वा ।

'कुमुदादिषु' इति । ऋश्याद्यनन्तरेषु । 'पाठसामर्थ्यात्' इति । नित्ये हि लुपि गणयोरस्य पाठोऽनर्थकः स्यात् । 'शर्करा' इति । अणो लुप् । 'शार्करम्' इति । तस्यैव श्रवणम् । 'शर्करिकम्' इति । कुमुदादित्वाट्ठच् । 'शार्करकम्' इति । वराहादित्वात्कक्; 'केऽणः' (७.४.१३) इति ह्रस्वः । 'शार्करिकम्, शर्करीयम्' इति । उत्तरसूत्रेण ठक्छौ ॥

## ८४. ठक्छौ च ।

## ८५. नद्यां मतुप् ।

'तदस्यास्त्यस्मिन्' (५.२.९४) इति मतुपि सिद्धे वचनमिदं तदस्मिन्नस्तीति (४.२.६७) प्राप्तस्याणो बाधनार्थं निवृत्ताद्यर्थं च, तत्सूचितम्—'चातुरर्थिकः' इति । 'देशस्य विशेषणं नदी' इति । यद्यपि 'विशिष्टलिङ्गः' (२.४.७) इत्यत्रोक्तम्—'नदीग्रहणमदेशत्वात् जनपदो हि देशः' इति; इह तु नद्यां देश इति; सम्बन्धसामर्थ्यादजनपदो देशग्रहणेन गृह्यते, एवं च पर्वतेष्वपि चातुरर्थिको भवति । अन्ये त्वाहुः—नद्यपि देश एव, लोकप्रसिद्धेः; 'विशिष्टलिङ्गः' इत्यत्र तु नदीग्रहणं यस्य द्वन्द्वस्य सर्वं एवावयवो नदीवचनस्तत्परिग्रहार्थम्, यत्र कश्चिदवयवो नदीवचनः, कश्चिदन्यदेशवाची—तत्र मा भूदित्येवमर्थमिति । 'उदुम्बरावती' इत्यादौ 'मतौ बह्वचोऽनजिरादीनाम्' (६.३.११९) इति दीर्घत्वम् । 'भागीरथी' इति । 'तेन निर्वृत्तम्' (४.२.६८) इत्यण् ॥

## ८६. मध्वादिभ्यश्च ।

## ८७. कुमुदनडवेतसेभ्यो ड्मतुप् ।

कुमुद्वानित्यादौ वत्वं 'मादुपधायाश्च' (८.२.९) इति वत्वम् । अथ वकारादिरेव कस्मान्न विहितः ? ज्ञापनार्थम्, एतज्ज्ञापयति—अन्येभ्योऽप्ययं भवतीति । तेन महिष्मानिति सिद्धं भवति, महिषाच्चेति न वक्तव्यं भवति । एतेनैतदपि निरस्तम्—प्रकृतस्यैव मतुपो डित्वातिदेशेन सिद्धमिति, न हि डित्वातिदेशे पूर्वोक्तं ज्ञापनं समर्थितं भवति ॥

## ८८. नडशादाड् ड्वलच् ।

शादशब्दो वोपधः, 'पङ्कोऽस्त्री शादकर्दमौ' (अम.को १.९.९) इति ॥

## ८९. शिखाया वलच् ।

'शिखाया वलज्वक्ष्यति' इति । 'दन्तशिखात्संज्ञायाम्' (५.२.११३) इत्यनेन । 'तददेशार्थं वचनम्' इति । इदं तु निर्वृत्ताद्यर्थम्, देशे तन्नाम्न्यणो बाधनार्थं च ॥

## ९०. उत्करादिभ्यश्छः ।

## ९१. नडादीनां कुक् च ।

'तक्षन्नलोपश्च' इति । यदि पुनरयं कुक् परादिः क्रियेत, नान्तस्य पदत्वादसिद्धो नलोपः; किन्तु कुटि प्रत्ययादेरादेशानुपपत्तिः, छस्याप्रत्ययादित्वादीयादेशो न प्राप्नोति ॥

## ९२. शेषे ।

'उपयुक्तादन्यः शेषः' इति । शब्दार्थकथनमेतत् । तस्यैव प्रकरणादागतं विशेषमाह—'अपत्यादिभ्यः' इति । एते ह्यत्रोपयुक्ताः । चतुर्थ्यर्थपर्यन्तेभ्यः' इति । चत्वारोऽर्थाः 'तदस्मिन्नस्ति' (४.२.६७) इत्यादयः पर्यन्तो येषामिति, त्रिपदो बहुव्रीहिः । 'चातुरर्थ्यपर्यन्तेभ्यः' इति पाठे समाहारद्विगोश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । ये तु पठन्ति—'चातुरर्थपर्यन्तेभ्यः' इति, ते प्रज्ञादेराकृतिगणत्वादणमिच्छन्ति । किमर्थं पुनः शेषवचनम् ? शेषे घादयो यथा स्युः, अपत्यादिषु मा भूवन् । चिरनिवृत्ता अपत्यादयः ? चतुर्ष्वर्थेषु तर्हि मा भूवन्; अन्यथा 'ओरञ्' (४.२.७१) इत्यादयः 'नडादीनां कुक् च' (४.२.९१) इत्येवमन्ता यथा चतुरर्थेषु भवन्ति, तथा घादयोऽपि 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (४.३.२४) इत्येवमन्तास्तत्रैव स्युः । न ह्यकस्मात्प्रकरणं विच्छिद्यते। निवर्तिष्यते तर्हि चतुरर्थाः ? अस्वरितत्वाल्लिङ्गाच्च, यदयमुत्करादिषु कांश्चिद्वृद्धान् शब्दान् पठति—आर्द्रका, शालेति; अन्यथा 'वृद्धाच्छः' (४.२.११४) इत्येव सिद्धः स्यात् । स्वार्थे तर्हि घादयो मा भूवन् ? अनिर्दिष्टार्थत्वाद्धि स्वार्थ एव स्युः, नामी अनिर्दिष्टार्थाः । जातादिष्वर्थेषु घादयोऽनुवर्तिष्यन्ते ? यद्यनुवर्त्तन्ते या या परा प्रकृतिः तस्यास्तस्याः पूर्वः पूर्वः प्रत्ययः प्राप्नोति । नार्थनिर्देशं प्रति द्वयद्वयोरन्योऽन्यमभिसम्बन्धो भवति । लिङ्गाच्च, यदयं क्वचिच्चकारेण प्रकृतं समुच्चिनोति 'रङ्कोरमनुष्येऽण् च' (४.२.१००) इति, तज्ज्ञापयति—न पूर्वः पूर्वः प्रत्ययः परस्याः परस्याः प्रकृतेर्भवतीति । अथ वा—लौकिकोऽधिकारोऽपेक्षालक्षणः । न च घादीनां प्रकृत्यन्तरापेक्षा, नापि ग्रामादीनां प्रत्ययान्तरापेक्षा, तस्मादप्रयोजनमेतत्स्वार्थे मा भूवन्निति । तदेव तर्हि प्रयोजनम्—अपत्यादिषु तर्हि मा भूवन्निति । ननु चोक्तम्—चिरनिवृत्ता अपत्यादयश्चातुरर्थी च नापेक्ष्यत इति ? न ब्रूमोऽपत्यादीनामत्राभिसम्बन्ध इति, किं तर्हि ? तस्येदमित्यनेनापत्यादिष्वपि प्राप्नुवन्ति । कथम् ? इत्याह—'तस्येदंविशेषा ह्यपत्यसमूहादयः' इति । यथा 'तस्येदम्' (४.३.१२०) इत्यनेन पाणिनीयाश्छात्रा इति छात्रादिषु विशेषेषु प्रत्ययो भवति, एवमपत्यादिष्वपि विशेषेषु घादयः स्युः; विशेषेषु सामान्यभावात् ।

ननु च विशेषशब्दसन्निधौ सामान्यशब्द उपात्तः, तत्र विशेषे पर्यवस्यति—कौण्डिन्यो ब्राह्मण इति, विशेषान्तरे वा—दधि ब्राह्मणेभ्यस्तक्रं कौण्डिन्यायेति । तत्रापत्यादिविशेषसन्निधावुपात्तं तस्येदमिति सामान्यम्, यद्यपत्यादिष्वेव पर्यवस्येत् सामान्योपादानं व्यर्थं स्यादिति विशेषान्तर एव पर्यवसास्यति ।

किञ्च यद्यपत्यादिष्वपि घादयः स्युः, 'प्राग्दीव्यतोऽण्' (४.१.८३) इत्यत्रैवाणादिभिः सह विधीयेरन्, लिङ्गञ्चापत्यादिषु घादयो न भविष्यन्ति, किं लिङ्गम् ? 'फेश्छ च' (४.१.१४९) इत्यत्र 'फेर्वा' इत्येव ठग्विधानार्थं वक्तव्यम्, ठका मुक्ते 'वृद्धाच्छः' (४.२.११४) इति तावच्छः सिद्धः, तदेव छविधानं ज्ञापनार्थम्—न ह्यपत्यादिषु घादयो भविष्यन्ति । तथा गोत्रचरणाद्वुञिति (४.३.१२६) समूह इवमर्थान्तर्भूते वुञि सिद्धे 'गोत्रोक्षोष्ट्र' (४.२.३९) इति पुनर्विधानमपि लिङ्गमस्यार्थस्य; तथा 'राजन्यादिभ्यो वुञ्' (४.२ ५३) इति

राजन्यादिषु दैवयातशब्दः पठ्यते, स च देवयातूनामपत्यानि दैवयातवा इति गोत्रप्रत्ययान्तः; तथाऽरीहणादिषु भास्त्रायणशब्दो गोत्रप्रत्ययान्तः पठ्यते, तत्रापि 'गोत्रचरणाद्वुञ्' (४.३.१२६) इत्येव सिद्धः; तदेतैर्लिङ्गै-रपत्यादिषु घादयो न भविष्यन्ति। तदेवमेतत्प्रयोजनं नोपपद्यत इति प्रयोजनान्तरमाह—'किञ्च' इति। असति हि शेषग्रहणे प्रथमेनैवार्थेन सम्बन्धमनुभवतां कृतार्थता विज्ञायेत, द्वितीयादिषु स्वर्थेषु 'प्राग्दीव्यतः' (४.१.८३) इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः, शेषशब्दस्तूपयुक्तावन्यतमान् जातादीनर्थान् वशीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति। अतः साकल्यार्थमपि विशेषवचनं कर्त्तव्यम्। 'लक्षणं चाधिकारश्च' इति। तत्र 'तस्येदम्' (४.३.१२०) इत्येव चाक्षुषादयः सिध्यन्ति, पार्षदा-दयस्तु 'संस्कृतं भक्षाः' (४.२.१६) इति, तस्माल्लक्षणत्वं नातीवोपयुज्यते॥

## ९३. राष्ट्रावारपाराद्घखौ।

'विगृहीतादपीष्यते' इति। सूत्रे तु सङ्घातस्यैव ग्रहणम्; अन्यथा वैषम्यात् संख्यातानुदेशो न स्यात्। 'विपरीताच्च' इति। इयमपीष्टिरेव॥

## ९४. ग्रामाद्यखञौ।

ग्रामशब्दः कत्र्यादिषु पठ्यते, तेन ढकञपि भवति॥

## ९५. कत्त्र्यादिभ्यो ढकञ्।

'कात्त्रेयकः' इति। कुत्सितास्त्रयः कत्त्रय इति बहुव्रीहिर्वा। अस्मादेव निपातनात्कोः कद्भावः, तेन कद्भावे 'त्रौ उपसंख्यानम्' इति न वक्तव्यं भवति। 'कुल्याया यलोपश्च' इति। केचित्तु तृतीयं वर्णं लकारं पठन्ति, अन्ये तु डकारम्॥

## ९६. कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु।

अयं योगः शक्योऽवक्तुम्। कथम्? कौलेयकः श्वा, यदा कुलशब्दः श्वकुले वर्त्तते तदा तस्यापत्यमपि श्वैव भवति, तत्र 'अपूर्वपदादन्यतरस्याम्' (४.१.१४०) इति ढकञा सिद्धम्; कुक्षिग्रीवाशब्दाभ्याम् 'दृतिकुक्षिक-लशिवस्त्यस्त्यहेर्ढञ्' (४.३.५६) इति ढञि कृते अस्यलङ्कारयोः स्वार्थिकः कन् भविष्यति॥

## ९७. नद्यादिभ्यो ढक्।

गणे नदीति स्वरूपग्रहणम्, न संज्ञा; नद्याः मह्यादीनां पृथक् ग्रहणात्। 'पौरेयम्' इत्यादिषु पुरि भवम्, वने भवम्, गिरौ भवमिति विग्रहः। 'उभयमपि दर्शनं प्रमाणम्' इति। उभयथाऽप्याचार्येण शिष्याणां प्रतिपादितत्वात्॥

## ९८. दक्षिणापश्चात्पुरसस्त्यक् ।

दक्षिणाशब्दः 'दक्षिणादाच्' (५.३.३६) इत्याजन्तोऽव्ययं गृह्यते; पश्चात्पुरोभ्यां साहचर्यात् । तेन न टाबन्तस्य प्रवीणवाचिनो ग्रहणम् ॥

## ९९. कापिश्याः ष्फक् ।

'बाह्लचुर्दिपर्दि' इति । 'अवृद्धादपि' (४.२.१२५) इति वुञि प्राप्ते वचनम् ॥

## १००. रङ्कोरमनुष्येऽण् च ।

रङ्कवो नाम जनपदः, ततः 'प्राग्दीव्यतोऽण्' (४.१.८३) प्राप्तः, तस्य 'अवृद्धादपि' (४.२.१२५) इति वुञ् बाधकः, तस्य 'ओर्देशे ठञ्' (४.२.११९), ततः 'कोपधादण्' (४.२.१३२), ततः 'कच्छादिभ्यश्च' (४.२.१३३) इत्यण् प्राप्तः, ततः ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य कच्छादिषु पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः । 'मनुष्ये परत्वात्' इति । उत्कृष्टत्वादपवादत्वादित्यर्थः । 'कच्छादिपाठादमनुष्येऽणपि सिद्धः' इति । ननु च मनुष्यतत्स्थयोर्वुञ्विधानार्थस्तत्र पाठः स्यात्, ततश्च तद्व्यतिरिक्ते विषये ष्फगेव स्यात्, यत्राण् विधीयते ? नैतदस्ति; कच्छादिपाठस्योभयार्थत्वे बाधकाभावात् । 'नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते' इति । यस्त्वमनुष्यशब्दो रक्षःपिशाचादिषु रूढः, न तस्यैव ग्रहणम्; अनभिधानादिति मन्यते, अथैवं कस्मान्न विज्ञायते—परत्वादेव वुञि सिद्धे मनुष्यप्रतिषेधो ज्ञापयति—'मनुष्यतत्स्थयोः' (४.२.१३४) इत्यस्याप्येतौ ष्फगणौ बाधकाविति, तेन तत्स्थे ष्फगणावेव भवतो न वुञिति ? तन्न; अनिष्टत्वात् । न हि तत्स्थे ष्फगणाविष्येते, किं तर्हि ? वुञेव । 'राङ्कवः कम्बल इति ष्फन्न भवति' इति । यथा तु वार्त्तिकं भाष्यं च तथात्र ष्फगिष्यते, मनुष्यप्रतिषेधश्च प्रत्याख्यातः । यथाऽऽह—'रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्, तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वादणग्रहणानर्थक्यं च कच्छादिभ्योऽण्विधानात्' इति । 'विशेषविहितेन च ष्फका' इति । अन्यथा कच्छादिपाठस्य प्राणिनि चरितार्थत्वात् प्राणिनि ष्फगेव स्यात् ॥

## १०१. द्युप्रागपागुदक्प्रतीचो यत् ।

'द्यु' इति दिव उत्वेन निर्देशः । द्युशब्दस्य तु ग्रहणं न भवति, व्याख्यानात् । 'अवाच्यम्' इति । अवाची दक्षिणा दिक् ।

'अव्ययात्तु कालवाचिनः' इति । यथाव्ययात्कालवाचिनः 'कालाट्ठञ्' (४.३.११) इति ठञ्न भवति; न्यायस्य तुल्यत्वात् ॥

## १०२. कन्यायाष्ठक् ।

## १०३. वर्णौ वुक् ।

'तत्समीपो देशो वर्णुः' इति । 'अदूरभवश्च' (४.२.७०) इत्यर्थे 'सुवास्त्वादिभ्योऽण्' (४ २.७७) इत्यण्, तस्य 'जनपदे लुप्' (४.२.८१) इति लुप् । 'तद्विषयार्थवाचिनः' इति । स वर्णुर्देशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः । विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति ॥

## १०४. अव्ययात्त्यप् ।

'अमेह' इति । योऽव्ययात्त्यब्विहितः सोऽमादिभ्य एव स्मृत इत्यर्थः ।

अमाशब्दः समीपवाची स्वरादिः, अमा समीपे भवोऽमात्यः । 'औपरिष्टः' इति । उपरिष्टाद्भव इत्यणि कृते 'अव्ययानां भमात्रे टिलोपः' (वा. ८४२) इति टिलोपः । परतःशब्दः 'विभाषा परावराभ्याम् (५.३.२९) इत्यतसुजन्तः, तत्र भवः । 'आरातीयः' इति । 'बहिषष्टिलोपश्च' (वा. ३७८) इत्यनित्यत्वज्ञापनादत्र टिलोपाभावः ।

'त्यब्नेर्ध्रुवे' इति । निशब्दाद् ध्रुवे वाच्ये त्यब्भवति । नियतं सर्वकालं भवो नित्यः ।

'निसो गते' इति । निःशब्दाद्गते वाच्ये त्यब्भवति । 'निष्ट्यः' इति । 'ह्रस्वात्तादौ तद्धिते' (८.३.९९) इति षत्वम्, तकारस्य ष्टुत्वम् एवमाविर्भूतमाविष्टयम् ।

'अरण्याण्णः' इति । अणि सति ङीप् स्यादिति णो विधीयते ।

'दूरेत्यः' इति । 'तत आगतः' (४.३.७४) इत्यत्रार्थे एत्यः ।

'उत्तरादाहञ्' इति । आद्युदात्तार्थं वचनम् । 'औत्तराहम्' इति । 'उत्तराच्च' (५.३.३८) इत्याहि-प्रत्ययः, उत्तराहिशब्दात्परिगणनेन त्यपोऽभावादणि सति सिद्धम् ॥

## १०५. ऐषमोह्यःश्वसोऽन्यतरस्याम् ।

'ठञपि तृतीयो भवति' इति । विधिवाक्यापेक्षं तृतीयत्वम्, प्रत्ययापेक्षया तु ठञ् चतुर्थः, 'श्वसस्तुट् च' (४.३.१५) इत्यत्र विकल्पाधिकारात् ट्युट्युलावपि भवतः ॥

## १०६. तीररूप्योत्तरपदादञ्ञौ ।

अञञपोः स्त्रियां विशेषः—काकतीरी चाणारूप्या । 'बहुच्पूर्वान्मा भूत्' इति । अन्यथा बहुतीरशब्दा-दपि स्यात् । उत्तरपदशब्दस्य तु समासविषये नियतत्वान्नास्ति बहुच्पूर्वात्प्रसङ्गः ॥

## १०७. दिक्पूर्वपदादसंज्ञायां ञः।

'असंज्ञायाम्' इति। न चैवमसंज्ञाया इति पञ्चम्या निर्देशः, विषयसप्तम्यापि तदर्थलाभादित्याह— 'संज्ञाविषयात्' इति। 'पौर्वशालः'। इति पूर्वस्यां शालायां भव इति तद्धितार्थे समासः, ततः प्रत्ययः। 'पदग्रहणम्' इत्यादि। 'दिक्पूर्वात्' इत्युच्यमाने स्वरूपं स्यात्, ततश्च दिग्गज इत्यादेरेव स्यात्। पदग्रहणे तु सति दिग्विशेषवाचिनां ग्रहणं भवति, कथम्? व्यधिकरणपदो बहुव्रीहिः—दिशः पूर्वपदमस्मिन्निति, 'दिशः' इति वाचकापेक्षया षष्ठी, दिशो वाचकं पूर्वपदमस्मिन्नित्यर्थः॥

## १०८. मद्रेभ्योऽञ्।

मद्रशब्दो जनपदवचनः, बहुवचननिर्देशो जनपदवाचिनः परिग्रहार्थः, तेन मद्रपर्यायो न गृह्यते। 'पौर्वमद्रः' इति। मद्रैकदेशे मद्रशब्दस्य वृत्तेर्दिक्शब्देन सामानाधिकरण्ये सति 'तद्धितार्थे' (२.१.५१) इति समासः॥

## १०९. उदीच्यग्रामाच्च बह्वचोन्तोदात्तात्।

'शैवपुरम्' इति। 'प्रस्थपुरवहान्तात्' (४.२.१२२) इति वुञ् न भवति; 'वृद्धात्' (४.२.१२०) इति तत्र वर्तते॥

## ११०. प्रस्थोत्तरपदपलद्यादिकोपधादण्।

'उदीच्यग्रामलक्षणस्याञोऽपवादः' इति। ततोऽन्यत्र व्रीहिप्रस्थगिरिप्रस्थ-कारिकादावौत्सर्गिक एवाण्, कंलासप्रस्थ-काकशाकादिषु वृद्धेषु 'वृद्धाच्छः' (४.२.११४) भवति, देशवाचिनि तु मालाप्रस्थादौ 'प्रस्थपुर-वहान्ताच्च' (४.२.१२२) इति वुञ्, इक्ष्वाकुप्रभृतिषु जनपदवुञोऽपवादः 'कोपधादण्' (४.२.१३२) इत्यण्व-क्ष्यते, अरीहणकादौ च 'वृद्धादकेकान्त' (४.२.१४१) इति छो भवति, तस्मादञोऽपवाद इति सुष्ठूक्तम्। उत्तरपदग्रहणादिह न भवति—उत्तरो माहकिप्रस्थ उत्तरमाहकिप्रस्थः, तत्र भव इति। 'प्रस्थान्तात्' इति तूच्यमानेऽत्रापि स्यात्।

'अण्ग्रहणं बाधकबाधनार्थम्' इति। यद्यण्ग्रहणं न क्रियेत, तदा यदत्र वृद्धं वाहीकग्रामवाचि तस्मात् 'प्राग्दीव्यतोऽण्' (४.१.८३) इत्यणि प्राप्ते 'वृद्धाच्छः' (४.२.११४) प्राप्तः, तस्मिन् 'वाहीकग्रामेभ्यश्च' (४.२.११७) इति ठञ्ञिठाभ्यां बाधिते पुनर्विधानाच्छ एव स्यात् तस्माद्बाधकमपि तं छं बाधित्वा अण्ग्रहणाद-णेव भवति।

यकृल्लोमशब्दः पठ्यते, यकृल्लोम्नि भवः याकृल्लोमः, 'अन्' (६.४.१६७) इति प्रकृतिभावो न भवति, गणे नलोपनिपातनादित्याहुः॥

## १११. कण्वादिभ्यो गोत्रे ।

'गोत्रमिह न प्रत्ययार्थः' इति । शेषाधिकारस्य बाधप्रसङ्गात् । 'न च प्रकृतिविशेषणम्' इति । कण्वादीनामगोत्रप्रत्ययान्तानां गोत्रे वृत्त्यसम्भवात् । 'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितः' इति । प्रतिपदविहितो यञेव गृह्यते । एवं च कृत्वा गोत्रमपि पारिभाषिकं गृह्यते, न स्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्यपत्यमात्रस्य ग्रहणम्—कण्वो देवताऽस्येति । ननु 'कण्वादिभ्यः' इत्युच्यमाने कथमणन्तात् प्रसङ्गः ? कथं वा यञन्तेभ्यः स्यात्, येनेष्टं तावत् सिध्यति ? एव मन्यते—केवलेभ्यः कण्वादिभ्य औत्सर्गिक एवाण् सिध्यति, छापवादस्त्वाद्योगस्य कण्वाद्यवयवे तद्धितान्ते कण्वादिशब्दो वर्तिष्यत इति ॥

## ११२. इञश्च ।

'गोत्र इत्येव' इति । पूर्वत्र पारिभाषिकस्य गोत्रस्य ग्रहणमित्युक्तम्, इहापि तदेवानुवर्तते, तेनात्रापि पारिभाषिकस्यैव ग्रहणादिह न भवति—पाणिनेर्यूनश्छात्राः पाणिनीया इति । 'सौतङ्गमेरिदम्' इति । सुतङ्गमशब्दाद्वुञ्छणादिसूत्रेण (४.२.८०) चातुरर्थिक इञ् । अत्रापत्यत्वमेव नास्तीति सुतरामगोत्रत्वाद्भवति प्रत्युदाहरणम् ॥

## ११३. न द्व्यचः प्राच्यभरतेषु ।

ननु च भरताः प्राच्या एव, तत्किमर्थं तेषां स्वशब्देन ग्रहणम् ? तत्राह—'ज्ञापकादन्यत्र' इति । 'बह्वच इञः प्राच्यभरतेषु' (२.४.६६) इत्यत्रायमर्थो ज्ञापितः—'अन्यत्र प्राच्यग्रहणे भरतानां ग्रहणं न भवति' इति ।

अपर आह—ज्ञापकादन्यत्रेत्यन्वयः, अन्यत्रास्यार्थस्य ज्ञापितत्वादित्यर्थः ॥

## ११४. वृद्धाच्छः ।

'अव्ययतीर' इत्यादि । अव्ययात्त्यब्भवतीत्यस्यावकाशः—अमात्य, छस्यावकाशः—शालीयो मालीयः, आराच्छब्दाच्छो भवति—आरातीयः । 'अमेहक्वतसित्रेभ्यः' (म.भा. २.२९२; ४.२.१०४) इति परिगणनमनपेक्ष्यायं विप्रतिषेधः । तीरोत्तरविधेरवकाशः—काकतीरः, छस्य स एव; वायसतीराच्छो भवति, वायसतीरीयः । रूप्योत्तरविधेरवकाशः—चाररूप्यः, छस्य स एव; माणिरूप्याच्छः प्राप्तः, तं चापि योपधलक्षणो वुञ् बाधते—माणिरूप्यकः । प्राप्तिमात्राश्रयेण तु छस्य रूप्योत्तरपदलक्षणस्य च अस्य विप्रतिषेध उक्तः । वाडवकर्णाच्छो भवति—वाडवकर्णीयः । कोपधविधिः—उदीच्यग्रामलक्षणस्य विधेरवकाशः—शिवपुर-शैवपुरः, स तस्माद्धि परत्वस्तस्यावकाशः—निलीनक-'प्रस्थोत्तरपदपलद्यादिकोपधादण्' (४.२.११०) इत्ययं विवक्षितः, स तस्माद्धि परत्वस्तस्यावकाशः—नैलीनकम्, उलूका अस्मिन् सन्ति 'तदस्मिन्नस्ति' (४.२.६७) इत्यण्, औलूको नाम ग्रामस्तत्र भवः, तस्माच्छो भवति—औलूकीयः । यस्तु 'कोपधादण्' (४.२.१३२) इत्यण्, स जनपदवुञोऽपवादः (४.२.१२४), तस्यापि 'वृद्धादकेकान्त' (४.२.१४१) इत्यत्र 'कोपधग्रहणं सोसुकाद्यर्थम्' (वा. ४४२) इति विहितश्छो बाधको भवति ॥

## ११५. भवतष्ठक्छसौ ।

'ठक्छस् इत्येतौ' इति । सित्करणादवसीयते—छसोऽयं निर्देशः, न शस इति, शसि हि स्वादिपदत्वेनैव सिद्धम् । 'सकारः पदसंज्ञार्थः' इति । तेन भवदीय इत्यत्र जश्त्वं भवति । 'भावत्कः' इति । 'इसुसुक्तान्तात् कः' (७.३.५१) । प्रक्रियालाघवार्थं कर्कि विधातव्ये ठग्विधानं स्त्रियां ङीबर्थम्—भावत्की ।

'अवृद्धात्तु भवतः' इति । शत्रन्तात् । क्वचित्तु भवतः शतुरित्येव पाठः ॥

## ११६. काश्यादिभ्यष्ठञ्ञिठौ ।

'वृद्धादित्येव' इति । कथं तर्ह्यवृद्धेभ्यो युवराजादिभ्यः प्रत्यय इत्यत आह—'ये तु' इति ।

यद्यवृद्धेभ्यो वचनप्रामाण्यात् प्रत्ययौ भवतः, किमर्थं तर्हि वृद्धाधिकारः ? इत्यत आह—'देवदत्तशब्दः' इत्यादि । 'कथं भाष्ये उदाहृतम्' इति । यद्यपि तत्र स्वयमपि छप्रत्ययमुदाहरत्येव, तत्तु भाष्यकारप्रामाण्येन, न न स्वातन्त्र्येणेति 'भाष्ये' इत्युक्तम् ।

'आपदादिपूर्वपदात्' इति । आपदादिराकृतिगणः । 'कालात्' इति । कालशब्दान्तादित्यर्थः ॥

## ११७. वाहीकग्रामेभ्यश्च ।

'छस्यापवादौ' इति । एवं च ये छेनैव बाधिता अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविषयास्तद्विषयेऽप्येतावेव भवतः, न चेवन्येन बाधः, तद्यथा—आराग्राम वाहीकग्रामः आरात्की, आरात्का, 'इसुसुक्तान्तात् कः' (७ ३.५१) । तथा कास्तीरं नाम वाहीकग्रामः कास्तीरिकी, कास्तीरिका । इह तु दाशरूप्यं नाम वाहीकग्रामः, 'धन्वयोपधात्' (४.२.१२१) इति वुञ ठञ्ञिठौ बाधते—दाशरूप्यकः । तथा शकलान्यस्मिन् सन्ति शाकलं नामोदीच्यग्रामः भूयो वाहीकग्रामः, ततष्ठञ्ञिठौ भवतः—शाकलिकी, शाकलिका । इह तु सौसुकं नाम वाहीकग्रामः प्रस्थोत्तरपदादि (४.२.११०) सूत्रेण प्राप्तं कोपधलक्षणमणं छो बाधते, परत्वात्तमप्यपवादत्वात् 'वृद्धादकेकान्त' (४.२.१४१) इत्यत्र 'कोपधग्रहणं सौसुकाद्यर्थम्' (वा. ४४२) इति कोपधलक्षणश्छो बाधते, सौसुकीयः ॥

## ११८. विभाषोशीनरेषु ।

## ११९. ओर्देशे ठञ् ।

'नैषादकर्षुकः, शाबरजम्बुकः' इति । निषादकर्षू-शबरजम्बूशब्दाभ्यां ठञ्, 'इसुसुक्तान्तात् कः' (७.३ ५१), 'केऽणः' (७.४.१३) इति ह्रस्वः ॥

## १२०. वृद्धात्प्राचाम् ।

'वृद्धादेव प्राचाम्' इति । विपरीतस्तु नियमो न भवति—प्राचामेव वृद्धादिति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावात् यत्र पूर्वसूत्रस्यातिप्रसङ्गः स्यात् । 'आढकजम्बुकः' इति । पूर्ववत्कादेशह्रस्वत्वे ॥

## १२१. धन्वयोपधाद्वुञ् ।

'धन्ववाचिनः' इति । धन्वविशेषवाचिन ऐरावतादेरित्यर्थः स्वरूपस्य पर्यायाणां च ग्रहणं न भवति, वृद्धाधिकारात् । 'पारेधन्वकः' इति । 'पारे मध्ये षष्ठ्या वा' (२.१.१८) इत्यव्ययीभावः, [1]'अनश्च' (५.४.१०८) इति टच् समासान्तः, वुञि यस्येति लोपः । यदि तु धन्वशब्दो नपुंसकलिङ्गः, ततः 'नपुंसकादन्यतरस्याम्' (५.४.१०९) इति टजभावपक्षे वुञि 'नस्तद्धिते' (६.४.१४४) इति टिलोपः । साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण (४.२.८०) ण्यन्तौ ॥

## १२२. प्रस्थपुरवहान्ताच्च ।

'वृद्धादिति वर्तते' इति । यद्येवमन्तग्रहणमनर्थकं प्रस्थादीनामवृद्धत्वादेव तदन्तविधिर्भविष्यति ? नैतदस्ति; 'वा नामधेयस्य' (वा. १५) इति प्रस्थादीनामेव पदानां वृद्धत्वसम्भवात् अथाप्येवंनाम्नो देशस्याभावः, तथापि यथा पूर्वसूत्रे धन्वविशेषणं तथेहापि सम्भाव्येत—नावीपुरं नाम वाहीकेषु ग्रामः, तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ, अयमपि वुञ् छस्यापवादः । इह स्वपरत्वादविप्रतिषेधाद्वुञ् भवति । एवं च पातनप्रस्थकः, कौञ्जीवहक इत्यत्रापि वुञेव भवति ॥

## १२३. रोपधेतोः प्राचाम् ।

'ईकारान्ताच्च' इति । ह्रस्वस्य तु ग्रहणं न भवति, तदन्तस्य प्राग्देशवाचिनोऽसम्भवात् । [2]'ऐकचक्राः' इति । एकचक्रा नाम प्राग्देशे नगरी, तत्र 'एङ् प्राचां देशे' (१.१.७५) इति वृद्धसञ्ज्ञा, ककन्देन निर्वृत्ता नगरी काकन्दी 'स्त्रीषु सौवीरसाल्वप्राक्षु' (४.२.७६) इत्यण् । 'तपरकरणं विस्पष्टार्थम्' इति । न तु ह्रस्वप्लुतयोर्निवृत्त्यर्थम्; तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्, ईकारस्यानण्त्वेन तयोरग्रहणाच्च । असति तु तकारे 'रोपधयोः' इत्युच्यमाने किमत्र गृहीतमिति विस्पष्टं न ज्ञायेत । तकारे तु सति वर्णनिर्देशो निश्चीयते, तत्रैव तस्य प्रसिद्धत्वात् । 'ईकाररोपधयोः' इति निर्देशे गौरवप्रसङ्गः ॥

## १२४. जनपदतदवध्योश्च ।

'तदवधिरपि जनपद एव गृह्यते' इति । स चासववधिरिति कर्मधारय आश्रीयते, न तु तस्यावधिस्तदवधिरिति षष्ठीसमास इत्यर्थः । तथा हि सति मौञ्जो नामावधिभूतो ग्रामः, तत्र भवो मौञ्जीय इत्यत्रापि स्यात् । कस्य पुनरसाववधिरिति चेत् ? सन्निधानाज्जनपदस्यैवेति विज्ञायते ।

---

1. 'अचश्च' इति मुद्रितः पाठः 2. 'ऐकचक्रः' इति मुद्रित पाठः

'गर्त्तोत्तरपदाच्छं बाधित्वा' इति। अन्यथा तु गर्त्तोत्तरपदाच्छो भवतीत्यस्यावकाशः—वृकगर्त्तीयः, जनपदवुञोऽवकाशः—आङ्गकः; त्रिगर्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात्, ततश्च गर्त्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्ध इति पूर्वविप्रतिषेधः पठितव्यो भवति। 'त्रैगर्त्तकः' इति। उत्तरसूत्रेण (४.२ १२५) वुञ्। एतेनोत्तरत्र तदवधिग्रहणस्योपयोगं दर्शयति ॥

## १२५. अवृद्धादपि बहुवचनविषयात्।

'अण्छयोरपवादः' इति। अवृद्धादणोऽपवादो वृद्धाच्छस्य। इहावृद्धादपि बहुवचनादित्येव सिद्धम्; यौगिको बहुवचनशब्दः—बहूनामर्थानां वचनो बहुवचन इति। यदि वा बहुवचनाद्बहुवचनान्तादित्यर्थः, नार्थो विषयग्रहणेन ? तत्राह—'जनपदैकशेषबहुत्वे' इति। जनपदस्यैकशेषवशेन यद्बहुत्वं तत्रेत्यर्थः। 'वर्तन्यः' इति। अवयवभेदेन भेदमाश्रित्य एकशेषः। नायं नित्यबहुवचनान्तः; द्व्येकयोरपि दर्शनात्। 'तक्रकौण्डिन्यन्यायेन' इति। पूर्वसूत्रे (४.२.१२४) हि जनपदसामान्ये वृद्धाद्वुञ् विहितः; यथा—ब्राह्मणसामान्ये दधिदानम्। इह तु बहुवचनविषये विशेषेऽवृद्धाद्वुञ्, यथा—कौण्डिन्ये तक्रदानम्, ततश्च बहुवचनादपि वृद्धाद्वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद्वुञ् वृद्धाद्वुञो बाधकः स्यादित्यपिशब्देन समुच्चीयत इत्यर्थः। इह बहुवचनविषयादित्येतावता सिद्धमवृद्धार्थोऽयमारम्भः। वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम् ॥

## १२६. कच्छाग्निवक्त्रगर्त्तोत्तरपदात्।

कच्छशब्दार्थमुत्तरपदग्रहणम्। स हि केवलोऽपि कूलाख्ये देशे वर्तते, इतरेषां तु केवलानां देशवृत्त्यसम्भवादेव तदन्तविधिः सिद्धः। कच्छाद्यन्तादित्युच्यमाने बहुच्पूर्वादपि स्यादित्युत्तरपदग्रहणम् ॥

## १२७. धूमादिभ्यश्च।

'अणोदेरपवादः' इति। अवृद्धेभ्यो धूमादिभ्योऽणोऽपवादः, वृद्धेभ्यश्छस्य, उदीच्यग्रामेभ्यस्त्वञः, वाहीकग्रामेभ्यष्ठञ्ञिठयोः। 'कूलात्सौवीरेषु' इति। कौलको भवति सौवीरेषु, कौलमन्यत्र ॥

## १२८. नगरात् कुत्सनप्रावीण्ययोः।

'केनेदं मुषितम्' इति प्रश्नः, 'इह नगरे मनुष्येण' इत्युत्तरम्। 'सम्भाव्यत एतत्' इत्यादि प्रष्टुर्वचनम्। 'संज्ञानगरं पठ्यते' इति। माहिष्मतीशब्दसाहचर्यात् संज्ञानगरं संज्ञाभूतो नगरशब्द इत्यर्थः ॥

## १२९. अरण्यान्मनुष्ये।

'औपसंख्यानिकस्य' इति। 'अरण्याण्णो वक्तव्यः' (वा. ४३७) इत्युपसंख्यानप्राप्तस्य।

'मनुष्ये' इत्यल्पमिदमुच्यते, इत्याह—'पथ्यध्याय' इति। 'आरण्यकोऽध्यायः' इति। येऽरण्येऽधीयते उपनिषद्भागः स उच्यते। विहारः क्रीडा ॥

## १३०. विभाषा कुरुयुगन्धराभ्याम् ।

'कुरुशब्दः कच्छादिषु पठ्यते' इति । कथं तर्हि कुरुशब्दाद्वुञः प्राप्तिरुक्ता, ताभ्यामवृद्धादपीति नित्यं वुञि प्राप्त इति ? आद्यप्राप्त्यभिप्रायेण तदुक्तम्, न पुनर्योऽनेन विकल्पेन बाध्यते तदभिप्रायेण । येऽपि पठन्ति—वुञि सिद्ध इति, प्राप्त इत्यर्थः । यथा सिद्धे सत्यारम्भो नियमार्थ इति कुरुशब्दार्थं विभाषाग्रहणं न कर्तव्यमिति प्रतिपादयिष्यन्नाह—'कुरुशब्दः कच्छादिषु पठ्यते' इति । ततः किमित्यत्राह—'तत्र' इति । किमर्थं तर्हि विभाषाग्रहणमित्याह—'सैषा' इति । ननु युगन्धरशब्दादपि 'अवृद्धादपि' (४.२.१२५) इति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते ? नैवं शक्यम्; विपर्ययोऽपि स्यात् । युगन्धरशब्दान्नित्यो वुञ्, 'अवृद्धादपि' इत्यनेन तु विभाषित इति पुनरारम्भो ह्येवमप्युपपद्यते । 'मनुष्यतत्स्थयोस्तु' इति । एतच्च कच्छादिषु पाठसामर्थ्याल्लभ्यते, अन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात् ॥

## १३१. मद्रवृज्योः कन् ।

मद्रशब्दः 'स्फायितञ्चि' (द.उ. ८.३१) इति रक्प्रत्ययान्तः, 'वृजी वर्जने' (धा.पा. १८१२) [1]'इगुपधात्कित्' (द.उ. १-४८) इति [2]किप्रत्ययान्तो वृजिशब्दः । 'जनपदवुञोऽपवादः' इति । 'अवृद्धादपि' इति ॥

## १३२. कोपधादण् ।

किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्त्तते ? इत्यत आह—'अन्यत्र' इति । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानुवृत्तिः न त्वदेशनिवृत्त्यर्था । नन्वदेशवाचिनः प्राग्दीव्यतीय एवाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थम्, तत्किमुच्यते—अन्यत्र पूर्वेणैवेति, सत्यम्; सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राण्विधिर्युक्तः, अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमित्येवोच्येत, आरम्भसामर्थ्याद्धि यो विहितो न च प्राप्नोति स एव भविष्यति ? इत्यत आह—'अण्ग्रहणम्' इति । इक्ष्वाकुशब्दात् 'ओर्देशे ठञ्' (४.२.११९) प्राप्तः, तस्मिन् जनपदवुञा बाधिते यद्यण्ग्रहणं न क्रियेत पुनर्वचनाद् वुञेव स्यात्, अण्ग्रहणे त्वणेव भवति । 'ऐक्ष्वाकः' इति । दाण्डिनायनादिसूत्रेण (६.४.१७४) टिलोपः, एवं चाण्ग्रहणादेवायमोर्देशे ठञो बाधको न परत्वात् ॥

## १३३. कच्छादिभ्यश्च ।

'वुञादेरपवादः' इति । ये जनपदवाचिनो बहुवचनविषयाः, तेभ्यो वुञोऽपवादः, सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः । साल्वशब्दः पठ्यते—जनपदलक्षणो वुञ् मा भूदिति । 'अपदातौ साल्वात्' (४.२.१३५) 'गोयवाग्वोश्च' (४.२.१३६) इति नियमार्थं भविष्यति—अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ॥

1. 'इगुपधात्किः' इति मुद्रितपाठः, 2. 'किप्रत्ययान्तो' इति मुद्रितपाठः

## १३४. मनुष्यतत्स्थयोर्वुञ् ।

## १३५. अपदातौ साल्वात् ।

पादाभ्यामततीति 'पादस्य पदाज्यातिगोपहतेषु' (६.३.५२) इति पदादेशः, न पदातिरपदातिः। अपदातिः अश्वारोहादिः । 'अपदातावेव मनुष्ये तत्स्थे च' इति । द्वन्द्वनिर्दिष्टत्वेन तत्स्थे चेत्युक्तम्, न तु तत्स्थस्य पदातेः सम्भवोऽस्ति । अपदातौ साल्वादेवेत्येव तु विपरीतनियमो न भवति; 'गोयवाग्वोश्च' (४.२.१३६) इत्यारम्भात् ॥

## १३६. गोयवाग्वोश्च ।

## १३७. गर्तोत्तरपदाच्छः ।

'वाहीकग्रामलक्षणम्' इति । यद्यपि 'वाहीकग्रामेभ्यश्च' (४.२.११७) इति ठञ्ञिठौ विहितौ, तथाप्यसृष्टानुबन्धयोस्तयोष्ठरूपाविशेषाद्वाहीकग्रामलक्षणमित्येकवचननिर्देशः । 'श्वाविद्गर्त्तीयम्' इति । श्वानं विध्यतीति व्यधेः क्विप्, सम्प्रसारणम्, 'नहिवृति' (६.३.११६) इति दीर्घः, श्वाविधां गर्तः श्वाविद्गर्तः ॥

## १३८. गहादिभ्यश्च ।

'अणादेरपवादः' इति । तत्र माहकिप्रस्थशब्दात् 'प्रस्थपुरवहान्ताच्च' (४.२.१२२) इति वुञोऽपवादः, वाल्मीकिप्रभृतिभ्य इञन्तेभ्यः 'इञश्च' (४.२.११२) इत्यणः, शेषेभ्य औत्सर्गिकस्याणः । 'सम्भवापेक्षम्' इति । येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेव विशेषणम्, न त्वन्तस्थपूर्वपदादीनामित्यर्थः । 'पृथिवीमध्यस्य' इति । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यः, न मध्यान्तरवाचीत्यर्थः । 'चरणसम्बन्धेन निवासलक्षणोऽण्' इति । चरणसम्बन्धेन योऽण्विधीयतेऽण् चरण इत्यनेन स निवासलक्षणो द्रष्टव्यः । 'सोऽयं निवासः' इत्यत्रैवार्थे भवतीत्यर्थः; तेन पृथिवीमध्यं निवास एषां कठादीनां चरणानामित्यत्रार्थे मध्यमा इति भवति ।

'मुखपार्श्वतसोर्लोपः' इति । मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति, स च 'अलोऽन्त्यस्य' (१.१.५२), तत्र कृते यस्येति लोपः, लोपवचनम्, 'अव्ययानां भमात्रे टिलोपः' (वा. ८४२) इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इति सिद्धं भवति ॥

## १३९. प्राचां कटादेः ।

## १४०. राज्ञः क च ।

## १४१. वृद्धादकेकान्तखोपधात् ।

'आरीहणकीयम्, द्रौहणकीयम्' इति । 'तेन निर्वृत्तम्' (४.२.६८) इत्यत्रार्थे वुञ्छणादिसूत्रेण (४.२.८०) यो वुञ् तदन्ताभ्यां प्रत्ययः, उदाहरणद्वयमकान्तस्य दर्शितम् । 'वृद्धाच्छः' (४.२.११४)

इत्येव ह्यत्र छः सिद्धः, न ह्येतौ जनपदवाचिनौ, येन कोपधावणः प्रसंगः स्यात् । इदं त्वत्रोदाहरणं द्रष्टव्यम्—ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनः 'ब्राह्मणकोष्णिके संज्ञायाम्' (५.२.७१) इति निपातनात् साधुः, तत्र जातो ब्राह्मणकीय इति । 'अकेकान्तग्रहणे कोपधग्रहणम्' इति । सूत्रेऽकेकान्तग्रहणमपनीय कोपधादिति वक्तव्यम्, व्यापकत्वाल्लघुत्वाच्चेत्यर्थः ॥

## १४२. कन्थापलदनगरग्रामह्रदोत्तरपदात् ।

अन्तग्रहणेनैव सिद्धम्, नार्थ उत्तरपदग्रहणेन । न च बहुच्पूर्वे प्रसङ्गः, 'प्राचां देशे' इत्यधिकारात् ॥

## १४३. पर्वताच्च ।

## १४४. विभाषाऽमनुष्ये ।

यद्यत्र नञः प्रश्लेषो न स्यादसन्देहार्थम् 'मनुष्ये विभाषा' इत्येव ब्रूयात्, लाघवे विशेषाभावादिति मत्वाऽऽह—"अमनुष्येऽभिधेये' इति । अमनुष्यशब्दो यौगिकोऽत्र गृह्यते, न तु रक्षःपिशाचादिषु रूढ इति दर्शयत्युदाहरणेन । 'पार्वतीयानि फलानि' इति ॥

## १४५. कृकणपर्णाद्भारद्वाजे ।

'न गोत्रशब्दः' इति । कुत इत्याह—'प्रकृतिविशेषणं चैतत्' इति । चशब्दो हिशब्दार्थे ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थाध्यायस्य द्वितीयः पादः ॥

—०—

1. अमनुष्ये वाच्ये–काशिका.

# अथ चतुर्थाध्यायस्य

## तृतीयः पादः

### १. युष्मदस्मदोरन्यतरस्यां खञ्च ।

षष्ठीनिर्देश उत्तरार्थः । 'एते त्रयः प्रत्यया भवन्ति' इति । ननु चान्यतरस्यांग्रहणेन खञ्छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते, तदनुत्पत्तावपवादाभावात्स्वशास्त्रेण 'प्राग्दीव्यतः' (४.१.८३) इत्यनेनैवाण् भवति, तत्कुतोऽनेन प्रत्ययत्रयस्य विधानम्, छोऽपि तर्हि नैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव—यद्यन्योऽपि कश्चित्प्राप्नोति सोऽपि भवतीति, ततश्छोऽपि स्वशास्त्रेण 'वृद्धाच्छः' (४.२.११४) इत्यनेनैव भवति, एक एव स्वपूर्वः खञ् विधीयते । अथ यस्य प्रवृत्तावस्य तात्पर्यं स सर्वोऽनेन विधीयत इति छस्यानेन विधानम् । यद्येवम्, अणोऽप्यनेनैव विधानम्, न खञ्छयोरनुत्पत्तिमात्रेऽन्यतरस्यांग्रहणस्य तात्पर्यम्, तस्य महाविभाषयैव सिद्धत्वात्, किं तर्हि ? अणः प्रवृत्तावपि । तस्मात्तात्पर्यतस्त्रय एते प्रत्यया भवन्तीत्युक्तम्, प्रत्येकं प्रत्ययत्रयं विधीयत इति च । तत्र खञ्प्रत्ययो भवतीत्यनेन खञ एवापूर्वस्य विधानमिति दर्शितम् । अन्यतरस्यांग्रहणाद्यथाप्राप्तं चेत्यनेनाणोऽभ्यनुज्ञानम् । त्यदादित्वाद्युष्मदस्मदोश्छे प्राप्त इत्यनेनापि छस्याभ्यनुज्ञानम् । भाष्ये तु योगविभागेन यथासंख्याभावः प्रतिपादितः—'युष्मदस्मदोः' इत्येको योगः, अत्र 'गर्तोत्तरपदाच्छः' (४.२.१३७) इत्यतश्छोऽनुवर्तते; ततः 'खञ्च' इति द्वितीयो योगः ।।

### २. तस्मिन्नणि च युष्माकास्माकौ ।

'साक्षात्' इति । प्रत्यक्षेण विहितः, स्वरूपोपादानेन विहित इत्यर्थः । हेतुगर्भं चेदं विशेषणम्—यतः साक्षाद्विहितः ततः खल्वेव निर्दिश्यत इति । तस्मिन्नित्युक्ते तत्रैव झटिति प्रत्ययो भवति, न चानुकृष्टश्छ इति । चकारो हि समीपवर्तिनः खञः सहायतामात्रमभिधाय निवर्तते । तत्र सहायस्यानिर्देशात् प्रकृतान्वेषणम्, तत्र 'गर्तोत्तरपदाच्छः' (४.२.१३७) इति यावदन्वेषणे छस्य प्रतीतिश्चिरेण भवति, तेन च नासौ प्रत्यवमर्शार्हः । यदा तु यथासंख्यनिरासाय पूर्वसूत्रे योगविभागस्तदा नैव चकारेण छस्यानुकर्षणमिति न तस्य परामर्शशङ्का ।

'निमित्तयोः' इत्यादि । द्वे हि निमित्ते—खञणौ, निमित्तिनावपि द्वावेव—आदेशौ, ततश्च साम्याद्यथासंख्येन भवितव्यमिति मत्वा प्रश्नः । 'योगविभागः करिष्यते' इति । खञणोर्युष्माकास्माकौ' इति वक्तव्ये 'तस्मिन्नणि च' इति वचनाच्चकारेण वाक्यभेदस्य सूचनादादेशयोर्निमित्ताभ्यां प्रत्येकमनभिसम्बन्ध इत्यर्थः ।।

### ३. तवकममकावेकवचने ।

'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैकवचनस्य ग्रहणम्' (व्या.प. ६), तस्य च कृताकृतप्रसङ्गित्वेन 'सुपो धातुप्रातिपदिकयोः' (२.४.७१) इति लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलक्षणेन

समर्थयितव्या । तदपि प्रत्ययलक्षणं विघटयन्नाह--'ननु च' इति । 'वचनात्' इति । यदि पुनरेकवचनपरत्वेनाप्यस्मौ विशेष्येयाताम्, को दोषः ? इह च स्याताम्--युष्माकं छात्रो यौष्माकीणः, आस्माकीन इति; इह च न स्याताम्--तव छात्रास्तावकीनाः, मामकीना इति । तस्मात्पूर्वसूत्रे खञ्परतया विशेष्येते--युष्मदस्मदी, एकवचनपरतयापि ते एवात्र विशेष्येते, ततश्च वचनादास्माकीनः--प्रत्ययलक्षणं भवतीत्येषैव गतिः ।

'अन्वर्थग्रहणम्' इति । एकोऽर्थ उच्यते येन तदेकवचनम् । अत्र च पक्षे 'एकवचने' इति प्रथमाद्विवचनान्तम्, न सप्तम्यन्तम ॥

## ४. अर्धाद्यत् ।

बल्यर्थं वस्तु बालेयम् तस्यार्धम् = एकदेशः, तत्र भवं बालेयार्द्धिकम् ॥

## ५. परावराधमोत्तमपूर्वाच्च ।

'सपूर्वपदाट्ठञ् वक्तव्यः' (वा. ४४३) इत्यौपसंख्यानिके ठञि प्राप्ते वचनम् ।

'अर्द्धादिति वर्त्तते' इति । ततश्च परावराधमोत्तमेभ्यः परो योऽर्द्धशब्द इत्येवं विशेषणसामर्थ्यादेवार्द्धशब्दस्य परावरादिपूर्वता विज्ञायते, तत्किं पूर्वग्रहणेन ? एवमनन्तरोक्तस्य चोद्यस्यैवैतत्समर्थनं परिहरति--'परावरशब्दो' इति । 'अस्मात्तु पूर्वग्रहणाद्यत्प्रत्यय एव भवति' इति । पूर्वविप्रतिषेधसूचनद्वारेणेति भावः ॥

## ६. दिक्पूर्वपदाट्ठञ्च ।

'अणोऽपवादः' इति । सौत्रीं प्राप्तिमभिप्रेत्यैतदुक्तम्, 'सपूर्वपदाट्ठञ् वक्तव्यः' (वा. ४४३) इत्युक्तत्वात् ।

'पदग्रहणम्' इत्यादि । 'दिक्पूर्वात्' इत्युच्यमाने स्वरूपविधिः स्यात्, ततश्च दिगर्धे जात इत्यत्रैव स्यात् । पदग्रहणे तु सति--पद्यतेऽनेनेति पदम्, दिशः पदं पूर्वमस्मादिति निपातनात्समासः ॥

## ७. ग्रामजनपदैकदेशादञ्ठञौ ।

'पौर्वार्द्धाः' इति । ग्रामस्य पूर्वस्मिन्नर्द्धे भव इति तद्धितार्थे समासः, ततः प्रत्ययः । यद्यप्यर्द्धशब्दो ग्राममपेक्षते, तथाप्यस्य नित्यसापेक्षत्वात् प्रधानत्वाच्च वृत्तिद्वयमप्यविरुद्धम्--समासवृत्तिः, तद्धितवृत्तिश्च । ठञ्ग्रहणं किमर्थम्, नाञ्चेत्येवोच्येत ? न चैवमुच्यमाने यतोऽपि समुच्चयप्रसङ्गः; पूर्वसूत्रे चानुकृष्टत्वात् । तस्माद्विस्पष्टार्थं ठञ्ग्रहणम् ॥

## ८. मध्यान्मः ।

## ९. अ साम्प्रतिके ।

'साम्प्रतिकं युक्तं न्याय्यमुचितं सममुच्यते' इति । कस्यचित् कश्चित् प्रसिद्ध इत्यनेकशब्दोपादानम् । सम्प्रतिशब्द इदानीमित्यत्रार्थे प्रसिद्धोऽपि न्याय्येऽपि वर्तते । दृश्यते हि—'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथ वा एष सम्प्रति यज्ञो यत्पञ्चरात्र इति' न न्यूनो नातिरिक्तः, सम इत्यर्थः । स च प्रज्ञादौ पठ्यते । तेन साम्प्रतम्, सम्प्रतीति च पर्यायौ ।।

## १०. द्वीपादनुसमुद्रं यञ् ।

'अनुसमुद्रम्' इति । 'अनुर्यत्समया' (२.१.१५) इत्यव्ययीभावः । सप्तम्यन्तं चैतत्, तद्द्वीपस्य विशेषणम्, तदाह—'समुद्रसमीपे यो द्वीपः' इति ।।

## ११. कालाट्ठञ् ।

'कालविशेषवाचिनः' इति । स्वरूपस्य च पर्यायाणां च ग्रहणं न भवति; सन्धिवेलादिसूत्रेण (४.३.१६) सन्धिवेलात्रयोदशीप्रभृतिभ्योऽवृद्धेभ्योऽण्विधानात् । तद्धि ठञो बाधनार्थः, अर्थग्रहणे च तेभ्यष्ठञः प्रसङ्गः ।

इह 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः' (व्या.प. ४) इति न्यायान्मुख्यया वृत्त्या ये काले वर्त्तन्ते मासोऽर्द्धमास इति, तत एवायं प्रत्ययः स्यात्; न तु गौणवृत्त्या कालवृत्तेः, कदम्बपुष्पसाहचर्यात् कदम्बः कालः, व्रीहिपलाल-साहचर्याद्व्रीहिपलालं काल इत्यादेरित्याशङ्क्याह—'यथाकथंचित्' इति । येन केनचित्प्रकारेण । एतदेव स्पष्टयति —'गुणवृत्त्यापि' इति । परत्र परशब्दप्रवृत्तेर्यन्निबन्धनं स गुणः, तन्निबन्धना वृत्तिर्गुणवृत्तिः । एतच्च सन्धिवेलादि-सूत्रेऽनेन कालग्रहणेन नक्षत्राणि यद्विशिनष्टि ततो लभ्यते । न हि मुख्यार्थः कालशब्दोऽस्ति नक्षत्राणां सम्भवति । पुष्यादिसमीपस्थेन हि चन्द्रमसा योगाल्लाक्षितलक्षणया पुष्यादिशब्दानां काले वृत्तिः । सेव च 'लुबविशेषे' (४.२.४) इति लुब्विधानेनाप्यन्वाख्यायते पौषादिनिवृत्त्यर्थम्, न त्वेतावता कालस्तेषां मुख्योऽर्थः ।।

## १२. श्राद्धे शरदः ।

'श्राद्धे इति कर्म गृह्यते' इति । श्रद्धाऽस्मिन्विद्यत इति 'प्रज्ञाश्रद्धार्चा' (५.२.१०१) मत्वर्थीयोऽणः, श्रद्धया सम्पाद्यं पित्र्यं कर्म श्राद्धशब्देन उच्यत इत्यर्थः । 'न श्रद्धावान् पुरुषः' इति । यदा स एव णः षष्ठ्यर्थे भवति तदा पुरुषवृत्तिः श्राद्धशब्दः । कथं पुनः शब्दसाधारण्येऽप्ययं विशेषो लभ्यते ? इत्याह—'अनभिधानात्' इति । 'शारदिकं श्राद्धम्' इति । यदत्र विहितं तत्तत्र भवमिति भवे प्रत्ययः ।।

## १३. विभाषा रोगातपयोः ।

## १४. निशाप्रदोषाभ्यां च ।

## १५. श्वसस्तुट् च ।

'तस्य च' इति । ठञः, न तु श्वःशब्दस्य । कुत एतत् ? ठञो विधेयत्वेन प्राधान्यात् । स च तुडागम इकादेशे कृते भवतीति वेदितव्यम् । ननु चान्तरङ्गत्वादिकादेशात्प्राक् ठञस्तुट् प्राप्नोति, इकादेशस्त्वङ्गाधिकारे विधानदङ्गसंज्ञायामभिनिर्वृत्तायां पश्चाद्भवन् बहिरङ्गः, तुटि च कृते प्रत्ययादेष्ठस्येकादेशविधानाद्यथा कर्मठ इत्यत्र न भवति एवमत्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते; नैवं शक्यम्, 'इसुसुक्तान्तात् कः' (७.३.५१) इति कादेशः स्यात्, तस्मादस्तु परादिरेव । कथमिकादेशः ? ज्ञापकात् सिद्धम्, यदयं वुञ्छणादिषु ठचश्चित्करणं करोति, तज्ज्ञापयति--अन्तरङ्गेभ्योऽपि पूर्वमिकादेश एव भवतीति । यदि न स्यात्, प्रत्ययसंज्ञासन्नियोगशिष्टे प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वं स्यात् । 'टयुटयुलावपि भवतः' इति । 'सायंचिरम्' (४.३.२३) इत्यादिना श्वःशब्दोऽव्ययम्, कालवाची चेति कृत्वा । 'शौवस्तिकम्' इति । द्वारादित्वाद्वृद्धिप्रतिषेधः, ऐजागमश्च ॥

## १६. सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।

'अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम्' इति । असत्यण्ग्रहणे सन्धिवेलादिभ्यो यथाविहितमित्युच्यमाने यद्यप्यारम्भसामर्थ्यात्कालाट्ठञ् न भवति; तथापि सन्धिवेलादिषु पठितात् पौर्णमासीशब्दात्स्वात्यादेश्च वृद्धाच्छः स्यात्, वचनं तु कालाट्ठञो बाधनार्थं स्यात् । तस्मादण्ग्रहणं कर्तव्यं वृद्धाच्छस्य बाधनार्थम् । 'सौवातम्' इति । 'अत सातत्यगमने' (धा.पा. ३८) सुपूर्वात् 'अज्यतिभ्यां च' इतीण्, प्रत्ययः, स्वात्या युक्तः काल इत्यण्, तस्य 'लुबविशेषे' (४.२.४) इति लुप् ततो भवादावर्थेऽनेनाण्, 'न य्वाभ्याम्' (७.३.३) इति वृद्धिप्रतिषेधः, ऐजागमश्च । जातार्थे तु 'श्रविष्ठाफल्गुनी' (४.३.३४) इति लुकि स्वातिरिति भवति । 'तैषम्' इति । अत्रापि जातार्थे पूर्ववल्लुका भवितव्यमिति भवादौ प्रत्ययः, 'तिष्यपुष्ययोर्नक्षत्राणि (यलोप)' (वा. ८०८) इति यलोपः । 'संवत्सरात्फलपर्वणोः' इति । सांवत्सरं फलं पर्व वा, सांवत्सरिकमन्यत् ॥

## १७. प्रावृष एण्यः ।

प्रवर्षतीति प्रावृट्, क्विपि 'नहिवृति' (६.३.११६) इत्यादिना दीर्घः । प्रावृण्यः' इति । भवार्थे प्रत्ययः, जाते तु प्रावृषष्ठपं वक्ष्यति । 'रषाभ्याम्' (८.४.१) इत्येव सिद्धे प्रत्यये णकारोच्चारणम्--प्रावृषेण्यमाचष्टे प्रावृषेण्ययतेः क्विप, णिलोपः, 'लोपो व्योर्वलि' (६.१.६६) इति यलोपः, प्रावृषेणित्यत्र णत्वार्थम्; अन्यथा 'पदान्तस्य' (८.४.३७) प्रतिषेधः स्यात् ॥

## १८. वर्षाभ्यष्ठक् ।

'वार्षिकं वासः' इति । 'कालात्साधुपुष्प्यत्पच्यमानेषु' (४.३.४३) इति साध्वर्थे ठक् ॥

## १९. छन्दसि ठञ् ।

'नभश्च नभस्यश्च वार्षिकावृतू' इति । 'तस्येदम्' (४.३.१२०) इत्यत्रार्थे प्रत्ययः ऋतुशब्दस्य ऋत्ववयवयोर्मासयोर्वर्तते, वर्षर्तोरेतौ मासावयवावित्यर्थः ॥

## २०. वसन्ताच्च ।

## २१. हेमन्ताच्च ।

## २२. सर्वत्राण् च तलोपश्च ।

'हैमनम्' इति । यदा तशब्दस्य समुदायस्य लोपस्तदा 'अन्' (६.४.१६) इति प्रकृतिभावात् 'नस्तद्धिते' (६.४.१४४) इति टिलोपो न भवति । यदा तु तकारस्यानेन लोपोऽकारस्य तु यस्येति लोपः, तदा तस्य 'असिद्धवदत्राभात्' (६.४.२२) इत्यसिद्धत्वात् स्थानिवद्भावाच्च टिलोपाभावः ।

'ननु च छन्दसीति नानुवर्तिष्यते' इति । अस्वरितत्वात् । 'सैव' इत्यादि । यासावस्वरितत्वादनुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते, किमर्थम् ? इत्याह—'प्रयत्नाधिक्येन' इति । ननु च तत एवास्वरितत्वात्पूर्वसूत्रेऽपि छन्दसीति नानुवर्त्तिष्यते, तस्माद्विस्पष्टार्थमेव सर्वत्रग्रहणम् । 'भाषायामपि ठञं स्मरन्ति' इति । भाष्ये तु नैतदिष्यते, तथा हि—सूत्रमिदं प्रत्याख्यातम्, कथम् ? हेमन्तपर्यायो हेमन्शब्दोऽस्ति—हेमन्नागनीगन्ति कर्णौ, तस्मादेतौ हेमन्नशुष्यतः, यदि हेमन् प्रमीयते हेमन्तो भवति' इत दर्शनात्, तत्र भाषायां हेमन्,–हेमन्तशब्दयो-र्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम्, छन्दसि तु हेम्नो हैमनम्, हेमन्तस्य 'हेमन्ताच्च' (४.३.२१) इति ठञि हैमन्तिकम्, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पुरु.प. ५६) इति हेमन्तशब्दादेवाणि हैमन्तमिति रूपत्रयं सिद्धमिति । सूत्रकारेण तु भाषायामेतद्वृत्तिविषयादन्यत्रर्तुवाचिनो हेमञ्छब्दस्य प्रयोगाभावात्तलोपो विहितः यथाप्राप्तं च ऋत्वणिति, अनन्तरस्तु ठञ् सर्वत्रग्रहणस्य पूर्वत्रान्वयेनैव सर्वत्र सिद्धिरिति नासौ समुच्चीयते । 'कः पुनरनयोर्विशेषः' इति । न कश्चिदिति भावः । 'त्रीणि रूपाणि भवन्ति' इति । पूर्वेण ठञि एकम्, अनेनाण्तलोपयोर्द्वितीयम्, ऋत्वणि यस्येति लोपे परमिति त्रीणि रूपाणि ॥

## २३. सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।

इह 'युवोरनाकौ' (७.१.१) इत्यङ्गाधिकारे विहितत्वादनादेशो बहिरङ्गः, तुडागमस्तु प्रत्ययसन्नि-योगेन विधानादन्तरङ्ग इति तेनैव तावद्भवितव्यम्, तत्र कृतेऽनादेशो न प्राप्नोति किं कारणम् ? अङ्गस्य निमित्तं यो युस्तस्यानादेशः, तुटि त्वत्र सति त्युशब्दोऽङ्गस्य निमित्तं न युशब्दमात्रम्, ततश्च यथा मृत्युरित्यत्रानादेशो न भवति, तथात्रापि न स्यात् । यदि पुनरयं तुक् पूर्वान्तः क्रियते ? नैवं शक्यम्; प्रातस्तनमित्यत्र हि विसर्जनीयो न स्यात्, अपदान्तत्वात् । तस्मात्परादिरेवायं कर्त्तव्यः, तत्र चानादेशो न प्राप्नोति ? तत्राह—'तयोश्चादिष्टयोस्तुडागमो भवति' इति । आदिष्टयोरिति कृतादेशयोरित्यर्थः । एष चार्थ आदिष्टशब्दस्य अर्शआद्यच्प्रत्ययान्तत्वेन लभ्यते, आदिश्यत इत्यादिष्टः, स ययोरस्ति तावादिष्टौ,

तयोराविष्टयोरिति । एतच्च 'घकालतनेषु' (६.३.१७) इति निर्देशाल्लभ्यते, न ह्यनाविष्टयोस्तुड्विधाने तनशब्द उपपद्यते । प्रातस्तनमित्यत्र वृद्धाच्छं परत्वाद्बाधत इति नोक्तम्; छस्य बाधकमपि ठञं बाधमानयोष्टयुट्युलोरुत्कृष्टबलयोर्दुर्बलेन छेन सह सम्प्रधारणाभावात् । 'मकारान्तं पदमव्ययम्' इति । स्वरादिषु पठितम् । 'अन्तकर्मणः' इति । अन्तक्रियस्य, 'षोन्तकर्मणि' इत्यस्येत्यर्थः । यद्यप्यसाववसानमात्रवाची, घञन्तस्तु सायशब्दो दिवसान्तवचन इति न कालाधिकारस्य बाधशङ्का । 'प्रत्ययसन्नियोगेन' इति । अन्यत्र स्वकारान्त एव, यथा—सायाह्णः, सायतर इति । आह च—संख्याविसायपूर्वस्याह्नस्येति । 'एकारान्तत्वम्' इति । निपात्यत इत्यनुषङ्गः । यत्र सप्तम्यर्थो नास्ति—प्राह्णः सोढोऽस्येत्यादौ, तदर्थं निपातनम् । जातादिके त्वर्थे 'घकालतनेषु' (६.३.१७) इत्यलुका सिद्धम् ।

'चिरपरुत्परारिभ्यः' इति । चिरशब्दस्य सूत्र उपादानात् ट्युट्युलावपि भवतः, न तु 'क्रियत्तद्बहुषु कृञोऽज्विधानात्' इतिवत्सूत्रस्य बाधः । परुत् = पूर्वस्मिन् संवत्सरे, परारि = पूर्वतरे । प्रत्नशब्दः पुराणवचनः ।

'अग्रपश्चाड्डिमच्' इति । केचिदग्रादिशब्दमपि पठन्ति—अग्रादिपश्चादिति, ते 'मध्यान्मः' (४.३.८) इत्यत्रादेश्चेति वक्तव्यमिति न पठन्ति । डित्करणं पश्चादित्यत्र टिलोपार्थम् । 'अव्ययानां भमात्रे टिलोपः' (वा. ८४२) इत्यस्यैवायं प्रपञ्चार्थः ॥

## २४. विभाषा पूर्वाह्णापराह्णाभ्याम् ।

'सप्तम्या अलुक्' इति । 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यत्र निरणायि—सुबन्तात्तद्धितोत्पत्तिरिति; तत्तत्रैव द्रष्टव्यम् । यदि सुबन्तात्तद्धित उत्पद्यते, कथं पूर्वाह्णतन इत्यत्र भवति ? तत्राह—'यदा तु' इति ॥

## २५. तत्र जातः ।

'तेषामतःप्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते' इति । तदिदमुभयमनिर्देश्यम्, कथम् ? 'शेष इति लक्षणं चाधिकारश्च' इत्युक्तम्, तत्र लक्षणतया चाक्षुषं रूपमित्यादाविव जातादिष्वप्यर्थेष्वणादयः सिद्धाः, अधिकारतया च घादय इत्यर्थास्तावन्न निर्देश्याः प्रत्ययार्थेन चाभिधानस्वाभाव्येन समर्थविभक्तयोऽपि लभ्यन्ते इति तन्निर्देशोऽपि न कर्त्तव्य एव । नियमार्थमिति चेन्न; अनिष्टत्वात् । तत्रैतत्स्यात्—जातादिष्वेव तद्धिता यथा स्युः, तत्रास्ते तत्र शेत इत्यादौ मा भूवन्निति जातादयोऽर्था अनुक्रम्यन्त इति ? तच्च नैवम्; अनिष्टत्वात् । अन्यत्रापि हि तद्धिता इष्यन्ते—चाक्षुषं रूपम्, श्रावणः शब्दः, चातुर्दशं रक्षः, दार्षदाः सक्तव इति । यत्र तु नेष्यन्ते, तत्रास्त इत्यादौ तत्रानभिधानान्न भविष्यन्ति, यथा—अङ्गुल्या खनतीत्यादौ । तस्मान्नार्थो जाताद्यनुक्रमणेन ।

अपवादविधानार्थं तु, प्रावृषष्ठबादीनपवादांस्तत्र तत्रासङ्करेण वक्ष्यामीति अवश्यानुक्रमितव्या अर्थाः, तेऽन्यार्थाः सन्तो योगविभागेनाणादीनामप्यर्था निर्दिश्यन्ते ।

विस्पष्टार्थम्, यानि पुनरपवादान्यर्थादर्शनानि, यथा—'कृतलब्धक्रीतकुशलाः' (४.३.३८) इति, तानि शक्यान्यवक्तुम् ॥

## २६. प्रावृषष्ठप् ।

## २७. संज्ञायां शरदो वुञ् ।

'समुदायेन चेत्' इति । प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा भवतीत्यर्थः । 'कृतलब्धक्रीतकुशला इति तावत्' इति । यावच्छब्दोऽवधिद्योतको निपातः ॥

## २८. पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।

## २९. पथः पन्थ च ।

## ३०. अमावास्याया वा ।

'एकदेशविकृतस्यानन्यत्वात्' इति । 'अमावस्यदन्यतरस्याम्' (३.१.१२२) इत्यत्र 'अमापूर्वस्य वसेर्ण्यति पक्षे वृद्ध्यभावो निपात्यते' इत्युक्तम् । ण्यति च 'अत उपधायाः' (७.२.११६) इति सामान्येन वृद्धिविधानात्, अमावास्याशब्दस्य न्याय्यत्वादवृद्ध्युपधस्तस्यैवैकदेशविकार इति भावः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधमधीयते, तेषां दीर्घोपधस्य न स्यात्; अतद्विकारत्वात् ॥

## ३१. अ च ।

किमर्थो योगविभागः, न च 'अमावास्याया वा' (४.३.३०) इत्युच्येत, चकाराद्वुञ्, वावचनादुभयोरभावेऽणपि भविष्यति ? सत्यम्; उत्तरत्र तु विकल्पानुवृत्तिः शङ्क्येत । योगविभागे तु सन्धिवेलाद्यणोऽभ्यनुज्ञानाय पूर्वसूत्रे वाग्रहणसामर्थ्यादस्यापि विकल्पसिद्धेरिह वाग्रहणं नानुवर्त्यमिति व्यवधानादुत्तरत्र विकल्पस्य निवृत्तिः सिद्धा भवति ॥

## ३२. सिन्ध्वपकराभ्यां कन् ।

## ३३. अणञौ च ।

योगविभागो यथासंख्यार्थः ॥

## ३४. श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ।

कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः, न बह्वर्थाभिधाननिमित्तस्य बहुलाशब्दस्य; श्रविष्ठादिभिः साहचर्यात् । 'चित्रा' इति । 'लुक्तद्धितलुकि (१.२.४९) इति लुकि कृते पुनष्टाप् ।

'गौरादिपाठान्ङीष्' इति । 'रेवती नक्षत्रे, रोहिणी नक्षत्रे' इति तत्र पठ्यते, न चेमौ नक्षत्रवाचिनौ; जातार्थवृत्तित्वात् । तस्मात् गौरादिषु पिप्पल्यादयश्च' इति पाठात्तेषां चाकृतिगणत्वादत्र ङीषित्यर्थः ।

'टानौ वक्तव्यौ' इति । स्त्रियामित्यपेक्ष्यते, टकारो ङीबर्थः, नकारः स्वरार्थः, विधानसामर्थ्याच्चानयो-र्लुग्न भवति ।

'छणपि वक्तव्यः' इति । अत्र च 'स्त्रियाम्' इति नापेक्ष्यते ॥

## ३५. स्थानान्तगोशालखरशालाच्च ।

'गोशालः' इति । 'विभाषा सेना' (२.४.२५) इति नपुंसकत्वे ह्रस्वत्वम् । तत्साहचर्यात्खरशाल-स्यापि नपुंसकस्य ग्रहणम्, न तु द्वन्द्वैकवद्भावेन ह्रस्वत्वम् । एकादेशस्य पूर्वं प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरि-भाषया स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव । यद्यपि टाबन्तयोरपि पाठे एकादेशविकृतस्यानन्यत्वान्नपुंसकाभ्यामपि लुक् सिध्यति, लाघवार्थं तु ह्रस्वस्य पाठः ॥

## ३६. वत्सशालाभिजिदश्वयुक्छतभिषजो वा ।

'वत्सशाला' इति । ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम् । 'बहुलग्रहणस्यैवायं प्रपञ्चः' इति । अश्व-युक्शतभिषक्शब्दावभिप्रेत्यैतदुक्तम्; अन्ययोरनक्षत्रवाचित्वात् । 'अभिजित्' इति । यद्यपि नक्षत्रमप्यस्ति–– 'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामिति' मुहूर्तमप्यस्ति ॥

## ३७. नक्षत्रेभ्यो बहुलम् ।

वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लुग्व्यवस्थायां सिद्धायाम्, बहुलवचनं क्वचिदण्यदेवेत्येतदर्थम्, तेन टानौ वक्तव्यावित्यादि सिद्धं भवति । 'रोहिणः' इति । 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' (वा. ४५०) इत्येतत्तु स्त्रियां नियमेन लुगर्थं, न तु स्त्रियामेव लुगर्थम् ॥

## ३८. कृतलब्धक्रीतकुशलाः ।

'यद्यत्र कृतं जातमपि तत्तत्र भवति' इति । यद्यपि जातं सर्वं कृतं न भवति, स्वयं जातस्यापि भावात्; कृतं सर्वं जातं भवति, न ह्यजननस्वभावं क्रियते, यथा––व्योमेति भावः । 'यच्च क्रीतं लब्धमपि तत्तत्र भवति' इति । अत्रापि लब्धं सर्वं क्रीतं न भवति; दानादिनापि लाभसम्भवात् । क्रीतं तु लब्धमेव; क्रयस्यापि लाभहेतुत्वादित्यर्थः । 'तत्किमर्थं भेदेनोपादनं क्रियते' इति । जातलब्धाभ्यामेव गतमिति प्रश्नः । 'शब्दार्थस्याभि-न्नत्वात्' इति । परव्यापारोपहितं रूपं कृतमित्युच्यते, तद्रहितं तु जातमिति; तथा मूल्यप्रदानरूपो यः स्वीकर्तुर्व्यापारस्तदुपहितं रूपं क्रीतमित्युच्यते, तद्रहितं तु लब्धमिति । तत्र यथा––विक्लिन्न ओदनः, पक्व ओदन इति शब्दार्थभेदः, तथात्रापीत्यर्थः । एतदेव स्पष्टयति––'वस्तुमात्रेण' इति । वस्तुत इत्यर्थः । एतदुक्तं भवति–– कृतमपि वस्तुतो जातं भवति, शब्देन तु रूपान्तरमभिधीयते । एवं क्रीतं वस्तुतो लब्धं भवतीत्येतावत्, शब्देन तु रूपान्तरमभिधीयत इति द्रष्टव्यम् । उपसंहरति––'शब्दार्थस्तु भिद्यत एव' इति । तत्राक्रियमाणे कृतक्रीतयोरु-पादाने यथा––क्वायं घटः, कृतः, क्रीतो वा इति पृष्टे सृष्टो जातो लब्ध इति चोत्तरं न प्रयुज्यते; तथा तद्धितोऽपि न स्यात् । तस्मात् कृतक्रीतयोस्तद्धितेनाभिधानाय भेदेनोपादानमिति ॥

## ३९. प्रायभवः ।

प्रायेण भवः; 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समासः ।

'तत्र भवेन कृतार्थत्वात्' इति । यत्प्रायभव इत्यस्य साध्यम्, 'तत्र भवः' (४.३ ५३) इत्यनेनैव साधितत्वादित्यर्थः । यो हि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति 'तत्र भवः' इत्येव सिद्धम् । शङ्कते-- 'अनित्यभवः प्रायभव इति चेत्' इति । यस्तत्र कदाचिद्भवति कदाचिन्न स प्रायभवः, यस्य तु नियत आधाराधेयभावः स 'तत्र भवः' इति पृथगुपादानसामर्थ्याद्भेद आश्रीयत इति यद्युच्यतेत्यर्थः । निराकरोति—'मुक्तसंशयेन तुल्यम्' इति । यं भवान् मुक्तसंशयं न्याय्यं तत्रभव उदाहरणं मन्यते—स्रौघ्नो देवदत्त इति, तेनैव तुल्यम् । सोऽपि हि कदाचित्तस्मादुपदेशादभिनिष्क्रामति । तत्र चेद्युक्ता तत्र भवता, इहापि युक्ता दृश्यताम् । अथैतदपि प्रायभवस्योदाहरणम्—स्रौघ्नो देवदत्त इति । तत्रभवनस्य किमुदाहरणम् ? तत्र नित्यभवः स्रौघ्नः प्राकार इति । यद्येवम्, 'तत्र भवः' (४.३.५३) इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन् दृष्टापचारे न स्यात्, दृश्यते च--

वानरोऽहं महाभागे दूतो रामस्य धर्मतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।। (रामा.सु.का.स–३६.श्लो–२) इति ।

तस्मात्तत्रभवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावादनर्थकं प्रायग्रहणम् ? इदं तर्हि प्रयोजनम्--'उपजानूपकर्णोपनीवेष्ठक्' (४.३.४०) प्रायभवे यथा स्यान्नित्यभवे मा भूत्—उपजानु भवं गड्वितिं । अथेदानीं जानुसमीपस्यशरीरावयववाचिन उपजानुशब्दात्तत्र भव इति प्रकृत्य 'शरीरावयवाद्यत्' (४.३.५५) इति यत् कस्मान्न भवति ? अनभिधानात् । ठगपि तर्ह्यनभिधानादेव न भविष्यति ? तदेवं स्थितम्—एतत् प्रायग्रहणमनर्थकम्, तत्रभवेन कृतार्थत्वादिति ।।

## ४०. उपजानूपकर्णोपनीवेष्ठक् ।

उपजान्वादयः सामीप्येऽव्ययीभावाः, समाहारद्वन्द्वस्य सौत्रः पुंल्लिङ्ग निर्देशः ।।

## ४१. सम्भूते ।

'अवक्लृप्तिः प्रमाणानतिरेकश्च' इति । सकृत्प्रयुक्तस्याप्यनेकार्थत्वमविरुद्धम्, तन्त्राद्याश्रयणादिति भावः । तत्रावक्लृप्तिः = सम्भावना, इदमेवं भवेदिति बुद्धिः; प्रमाणानतिरेकः = आधारपरिमाणादाधेयपरिणाणस्यानतिरेकता, यस्यां सत्यां सर्वमाधेयमाधारेऽनुप्रविशति । 'स्रौघ्नः' इति । देवदत्त इदानीं स्रुघ्ने सम्भाव्यत इत्यर्थः; स्रुघ्नप्रमाणाद्वाऽनतिरिच्यते सेनादिकोऽर्थ इत्यर्थः ।।

## ४२. कोशाड्ढञ् ।

'कौशेयं वस्त्रम्' इति । ननु च न वस्त्रं कोशे सम्भवति, वस्त्रदशायां तत्कारणस्य कोशस्य परावृत्तत्वात्; न च कोशान्तरे वस्त्रस्य सम्भवः, न च तत्रेष्यते, तस्माद्विकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति वार्त्तिकमेव

दारणम्। 'तस्य विकारः' (४.३.१३४) इत्यत्र प्रकरणे 'एण्या ढञ्' (४.३.१५९) इत्यस्यानन्तरं 'कोशाड्ढञिति वक्तव्यम्' इत्यर्थः। 'अर्थानुपपत्तिः' इति। कौशेयशब्दस्य योऽर्थो लौकिकः सूत्रवस्त्रलक्षणस्तस्यानुपपत्तिः स्यात्, लौकिकोऽर्थः शास्त्रेण नानुसृतः स्यात्। कृमिरेव स्वभिधेयः प्राप्नोति स हि कोशे सम्भवति। किञ्चाविशेषाभिधानात् खड्गकोशावपि प्रत्ययः प्रसज्येत, इत्यत आह–'रूढिरेषा' इति। रूढिशब्देषु नावश्यमवयवार्थोऽन्वेष्यः, यथा तैलपायिकादिष्विति मन्यते। सूत्रकारेण तु सत्कार्यवादाश्रयेण सम्भूते प्रत्ययो विहितः; तत्र हि कारणदशायामपि कार्यस्य सत्त्वात् तत्र तत्सम्भवति तदनुपपन्नम्। कार्यकारणयोर्हि तादात्म्यमभिसम्बन्धः, न त्वाधाराधेयभावः॥

## ४३. कालात्साधुपुष्प्यत्पच्यमानेषु।

'कालविशेषवाचिभ्यः' इति। स्वरूपग्रहणं तु न भवति; उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात्॥

## ४४. उप्ते च।

सूत्रे भूतकालस्याविवक्षां दर्शयति। 'हेमन्ते उप्यन्ते' इति। 'योगविभाग उत्तरार्थः' इति। उत्तरयोगयोरुक्त एव प्रत्ययो यथा स्यात्, साध्वादिषु मा भूत्॥

## ४५. आश्वयुज्या वुञ्।

वुञो ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च, अश्वयुग्भ्यां युक्तेति पाठः, अश्वयुजोर्द्वित्वात् 'नमोऽश्विभ्यामश्वयुग्भ्याम्' (तै.ब्रा. ३.१.२.११) इति दर्शनात्। 'अश्विनीपर्यायः' इति पाठः। 'तारा अश्वयुगश्विनी' (अमर. १.२.२२) इत्यमरसिंहः। 'अश्वनीपर्यायः' इति प्रसिद्धः पाठः। तत्राशुपूर्वादनेरौणादिक इन्प्रत्ययः, पृषोदरादित्वादादेर्ह्रस्वः॥

## ४६. ग्रीष्मवसन्तादन्यतरस्याम्।

## ४७. देयमृणे।

## ४८. कलाप्यश्वत्थयवबुसाद्वुन्।

मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तिर्न सम्भवति, तत्कथम् 'कालविशेषवाचिभ्यः' इत्युक्तम्? अत आह—'कलाप्यादयः शब्दाः' इति। अश्वत्थेन वृक्षेण कालस्य सम्बन्धोऽव्यभिचारादविशेषणमिति 'फले लुक्' (४.३.१६३) इति लुगन्तोऽश्वत्थशब्द इत्याह—'यस्मिन्नश्वत्थाः फलन्ति' इति। अपकृष्टो यवो यवबुसं जात्यन्तरं वा यवादिवत्, यवानामेव वा बुसं यवबुसम्॥

## ४९. ग्रीष्मावरसमाद्वुञ् ।

अवरसमिति विशेषणसमासः । न चावरशब्दो दिग्वाची, येन 'दिक्संङ्ख्ये संज्ञायाम्' (२.१.५०) इति नियमात्समासो न स्यात् । 'आवरसमकम्' इति । आगामिनां संवत्सराणामाद्यवत्सरे देयमित्यर्थः । अपर आह— अतीते वत्सरे देयं यद्यापि न दत्तं तदावरसमकमिति ।।

## ५०. संवत्सराग्रहायणीभ्यां ठञ्च ।

'वेति वक्तव्ये' इति । वुणि विकल्पिते पक्षे यथा प्राप्तष्ठञेव भविष्यतीति मन्यते । 'ठञ्ग्रहणम्' इत्यादि । असति ठञ्ग्रहणे सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोः' (ग.सू. १०४) इति पाठात्फले ऋणत्वेन विवक्षिते वुञा मुक्तेऽणेव स्यात्, ठञ्ग्रहणात्तु ठञेव भवति ।।

## ५१. व्याहरति मृगः ।

व्याहरति = शब्दायते ।।

## ५२. तदस्य सोढम् ।

'अस्य' इति । नेयं सोढापेक्षया कर्त्तरि षष्ठी, 'न लोकाव्यय' (२.३.६९) इति प्रतिषेधात्, किं तर्हि ? कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी । 'निशासहचरितमध्ययनम्' इति । कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ।।

## ५३. तत्र भवः ।

'कालादिति निवृत्तम्' इति । 'तत्र जातः' (४.३.२५) इति प्रकृतं तत्रग्रहणं कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतम् 'सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहि' इत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितम् ? नेत्याह; शक्यं हि तदन्यत्रापि पठितुम् ।।

## ५४. दिगादिभ्यो यत् ।

'सेनामुख्यम्' इति । यदन्तस्य सेनाशब्देन षष्ठी समासः, न तु सेनामुखशब्दात्प्रत्ययः, तदन्तविध्यभावात् ।।

## ५५. शरीरावयवाच्च ।

'शरीरं प्राणिकायः' इति । 'व्याकरणस्य शरीरम्' इत्यादिकस्तु प्रयोगो गौणः । 'अणोऽपवादः' इति । वृद्धात्तु छं परत्वाद्बाधते; पादे भवं पद्यम्, 'पद्यत्यतदर्थे' (६.३.५३) इति पद्भावः । नासिकायां भवं नस्यम्,

'नस् नासिकाया यत्तस्क्षुद्रेषु' (वा. ६६९) इति नस्भावः। कथम् 'वेगो जङ्घोरस्यः' इति ? कथं च न स्यात्, न शरीरावयवसमुदायः शरीरावयवग्रहणेन गृह्यते। न च तदन्तविधिरस्ति ? निरङ्कुशाः कवयः ॥

## ५६. दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।

दृतिश्चर्मविकारः, शरीरावयवश्च। कुक्षिशब्दो धूमादिः, वस्तिर्नाभेरधः शरीरावयवः। आहेयं विषादि।

'अस्तिशब्दः प्रातिपदिकम्' इति। विभक्तिप्रतिरूपं निपातसंज्ञकम्; तच्च तिङन्तेन समानार्थम्—अस्तिक्षीरा गौरिति, धनवचनं च अस्तिमानिति ॥

## ५७. ग्रीवाभ्योऽण् च ।

'धमनीवचनः' इति। धमनीसङ्घातवचन इत्यर्थः। स च यदोद्भूतावयवभेदे सङ्घाते वर्तते तदा बहुवचनम्, यदा तु तिरोहितावयवभेदे सङ्घाते वर्त्तते तदैकवचनान्तः प्रयोगः ॥

## ५८. गम्भीराञ्ञ्यः ।

'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति। 'प्राग्दीव्यतः' (४.१.८३) इत्यत्रोक्तम्—'देवस्य यञञौ, बहिषष्टिलोपश्च' इति। तच्चावश्यं वक्तव्यम्—अर्थान्तरेऽपि यथा स्यादिति। तस्यैव प्रपञ्चार्थम्, इह तु बहिर्देवयोर्ग्रहणम् ॥

## ५९. अव्ययीभावाच्च ।

'किं तर्हि परिमुखादेः' इति। कथं पुनः सामान्योक्तावयं विशेषो लभ्यत इत्याह—'परिमुखादीनां च' इति। चशब्दो हेतौ। दिगादेरनन्तरं परिमुखादिगणः पठ्यते, तस्य नान्यत्प्रयोजनं सम्भवति अव्ययीभावग्रहणस्य परिमुखादिविशेषणतयाऽन्वयसम्भवात्, तस्मात्परिमुखादेरेव भविष्यति, न सर्वस्मादव्ययीभावात्। यद्येवम्, परिमुखादेरित्येव वक्तव्यमत आह—'तेषमेव' इति। 'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यप्रत्ययः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवति। उत्तरार्थं चावश्यमव्ययीभावग्रहणं कर्तव्यम्; तत्र ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततः 'अपपरिबहिरञ्चवः पञ्चम्या' (२.१.१२) इत्यव्ययीभावः। अथ सर्वतो भावः, ततोऽस्मादेव निपातनादव्ययीभावः। उपपूर्वेषु सामीप्येऽनुपूर्वेषु 'अनुर्यत्समया' (२.१.१५) 'यस्य चायामः' (२ १.१६) 'पश्चादर्थे यदव्ययम्' (२.१.६) इति च यथाभिधानं समासः ॥

## ६०. अन्तःपूर्वपदाट्ठञ् ।

'आध्यात्मिकम्' इति। 'अनश्च' (५.४.१०८) इति टच् समासान्तः। 'आधिदैविकम्, आधिभौतिकम्' इति। अनुशतिकादित्वादुभयपदवृद्धिः। 'अध्यात्मादिराकृतिगणः' इति। एवं च समानशब्दादित्यादिरस्यैव प्रपञ्चः।

'ऊर्ध्वशब्देन समानार्थं [1]ऊर्ध्वंदमशब्दः' इति । स चैतद्वृत्तिविषय एव । अपर आह—'ठञ्सन्नियोगेन दमशब्द उत्तरे ऊर्ध्वशब्दस्यैव मान्तत्वं निपात्यते' इति ।

'ऊर्ध्वंदेहाच्च' इति । नात्र मान्तत्वम् ।

'ऐहलौकिकम्' इति । पूर्ववदुभयपदवृद्धिः ।

'मुखतीयम्, पार्श्वतीयम्' इति । मुखपार्श्वशब्दाभ्यां सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः, तत ईयः, अव्ययत्वाट्टिलोपः । अयं गहादिपाठस्यैव प्रपञ्चः । एतेन परं व्याख्यातम् ।

'मध्यमीयौ' इति । गहादिषु 'मध्यमध्यमं चाण् चरणे' (ग.सू. ९९) इति यत्पठितं तत्र 'पृथिवीमध्यवाची मध्यशब्दो गृह्यते' इत्युक्तम्, भवार्थे तु ततोऽन्यत्रापि मध्यमीयमिति यथा स्यादिति मीयप्रत्ययवचनम् । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति भवति, न मध्यान्तरवाचिनः । तथा गहादिपाठेन पृथवीमध्यं निवास एषामित्यस्मिन्नेवार्थे मध्यमा इति सिध्यति, मध्यान्तरवाचिनो भवार्थेऽपि यथा स्यादिति मण् प्रत्यय उक्तः ।

'मध्यो मध्यंदिनण् चास्मात्' इति । मध्यशब्दो मध्यभावमापद्यते दिनण्चास्मात् प्रत्ययो भवतीत्यर्थः ।

'स्थाम्नः' इति । स्थामन्शब्दान्तादित्यर्थः । 'अश्वत्थामा' इति । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे 'स्थाम्नोऽकारः' (वा. ३८१) इत्यकारः, तस्यानेन लुक् ।

'वृकाजिनः' इति । अणो लुक् ।

'समानस्य तदादेश्च' इति । आनन्तर्यलक्षणा षष्ठी । 'अध्यात्मादिषु' इति । विषयसप्तमी । 'ऊर्ध्वन्दमाच्च देहाच्च' इति । ऊर्ध्वशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् 'ऊर्ध्वदेहाच्च, और्ध्वदेहिकम्' इति । स्थाम्नो लुगजिनात्तथेति पाठे उभयत्रापि तदन्तविधिः ।

## ६१. ग्रामात्पर्यनुपूर्वात् ।

## ६२. जिह्वामूलाङ्गुलेश्छः ।

## ६३. वर्गान्ताच्च ।

## ६४. अशब्दे यत्खावन्यतरस्याम् ।

'वासुदेववर्गीयः' इति । 'वृद्धाच्छः' (४.२.११४) इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः ॥

---

1. 'ऊर्ध्वंशब्दः'—मुद्रितः पाठः.

## ६५. कर्णललाटात्कनलंकारे ।

## ६६. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।

'तस्येति षष्ठीसमर्थात्' इति । ननु चाधिकारार्थोऽयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथाविहितविधानार्थत्वं व्याख्यायते ? उच्यते–तात्पर्यतोऽपवादविधानायाधिकारस्यानुषङ्गिकेऽणादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः । अत एव 'कृतलब्धक्रीतकुशलाः' (४.३.३८) इत्यादीन्यनपवादान्यर्थविशेषनानि भवन्ति । 'तत्र भवे च' इति । अयमनुवादः; एतस्मिन्नेव विशेषे 'तत्र भवः' (४.३.५३) इति विहितत्वात् । ननु च व्याख्यानस्य प्रत्ययार्थस्य समीपे श्रूयमाणश्चशब्दस्तत्समानजातीयस्यैव प्रत्ययार्थस्य समुच्चयं करोति; न समर्थविभक्तेः; यथा 'केदाराद्यञ्च' (४.२.४०) इति प्रत्ययसमीपवर्तिना प्रत्यय एव समुच्चीयते, न प्रकृतिः; 'ठञ्कवचिनश्च' (४.२.४१) इति प्रकृतिरेव न प्रत्ययः; ततश्चेह तस्येत्युपादानाद्भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः, तत्राह––'वाक्यार्थसमीपे' इति । इहेतिकरणः क्रियते––प्रकृतं वाक्यार्थं प्रत्यवमर्शामीति । प्रत्यवमर्शस्य च प्रयोजनम्––तत्तुल्यजातीयस्यैव समुच्चयो यथा स्यादित्येतदेवेति भावः । एवमेव च न्यायं निरूपयितुं पूर्वम् 'तत्र भवे च' इत्यनुवादः कृतः ।

'व्याख्यातव्यनाम्न इति किम्' इति । व्याख्यानशब्दस्य सम्बन्धिशब्दत्वाद्यत्प्रतिव्याख्यानं तदेव तस्येत्यनेन निर्दिष्टमिति गम्यत इति मत्वा प्रश्नः । 'पाटलिपुत्रं सुकोशलया व्याख्यायते' इति । नेयं कर्तरि तृतीया, किं तर्हि ? करणे सुकोशलया करणभूतया पुरुषैर्व्याख्यायत इत्यर्थः । कथमित्याह–'एवंसन्निवेशम' इति । तादृशो हि पाटलिपुत्रे प्राकारादिसन्निवेशो यादृशः सुकोशलायाम्, तेन तया तद्व्याख्यायते । यद्येवम्, तस्य व्याख्यातव्यस्य पाटलिपुत्रशब्दो नामापि भवति, तत्कथं प्रत्युदाहरणम् ? अत आह–'न तु' इति । यदिह व्याख्यातव्यमभिप्रेतम्, न तस्य नाम भवतीत्यर्थः । किं पुनरिहाभिप्रेतम् ? यद्व्याख्यातव्यतया लोके प्रसिद्धं ग्रन्थात्मकम्, एतदर्थमेव हि व्याख्यातव्यनामग्रहणं कृतम्, व्याख्यातव्यमात्रस्य व्याख्यानशब्दस्य सम्बन्धिशब्दत्वेनैवाक्षेपसिद्धेः । ननु च भवार्थेनैतत्स्यात्; न हि तत्राक्षेपतो व्याख्यातव्यस्य लाभः ? एवं तर्हि नामग्रहणं प्रसिद्ध्युपसंग्रहार्थं भविष्यति ।

'भवव्याख्यानयोः' इति । नात्रायमर्थः––योऽयं भवव्याख्यानयोर्युगपदधिकारः सोऽपवादविधानार्थं इति; पूर्वमधिकारस्यास्याव्याख्यातत्वात् । तस्माद्भवव्याख्यानयोर्युगपधिकारोऽयं न त्वणादीनामर्थनिर्देश इत्यर्थः । किमर्थोऽधिकारस्तत्राह––'अपवादविधानार्थः' इति । अणादीनां चायमर्थनिर्देशः कस्मान्न भवति ? तत्राह––'कृतनिर्देशौ हि तौ' इति । एकः 'तत्र भवः' (४.३.५३) इति, अपरः 'तस्येदम्' (४.३.१२०)––इत्येवं कृतनिर्देशौ हि तावर्थौ । तस्मात्तदर्थमेतन्न भवति । पूर्वं त्वधिकारार्थतयावश्यकर्तव्यस्यानुषङ्गिकमर्थनिर्देशार्थमिदमिति व्याख्यातम् ॥

## ६७. बह्वचोऽन्तोदात्ताट्ठञ् ।

'अणोऽपवादः' इति । वृद्धाच्छं तु परत्वाद्बाधते । सामस्तं नाम शास्त्रं तस्य व्याख्यानं सामस्तिकम् । षत्वादिविषायकं शास्त्रं षत्वादिशब्देनोच्यते । नतः = अनुदात्तः, अनतः = उदात्तः । 'अन्तोदात्ताः प्रकृतयः' इति । उदाहृतयोर्द्वित्वेऽप्येवञ्जातीयापरप्रकृत्यपेक्षं बहुवचनम्, ताश्च कुत्वषत्वादयः ।

'गतिस्वरेण' इति। 'गतिरनन्तरः' (६.२.४९) इत्यनेन। उदात्त इति वर्णग्रहणम्, तेन सिद्धस्तदन्तविधिः, यथा 'वर्णादनुदात्तात्' (४.१.३९) इत्यत्र। तस्मादन्तग्रहणं विस्पष्टार्थम् ॥

## ६८. क्रतुयज्ञेभ्यश्च।

अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम्। 'अनन्तोदात्तार्थं आरम्भः' इति। तत्र राजसूय वाजपेयशब्दौ कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तौ, राजा सूयते, राज्ञा वेह सूयते, क्यप्; तत एव निपातनात्समासः, षष्ठीसमासो वा। पीयतेऽस्मिन्निति पेयः 'कृत्यल्युटो बहुलम्' (३.३.११३) इत्यधिकरणे यत्; वाजो यवागूर्भवः, तस्य पेयः पायो वाजपेय इति। स्तुतिः = स्तोमः, अग्नेस्तोमोऽस्मिन्निति बहुव्रीहिः, 'परादिश्च परान्तश्च' (मा.भा. ३.१४०) इत्यन्तोदात्तः। नवैर्व्रीहिभिर्यजनं नवयज्ञः = आग्रयणम्, 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इति समासः, 'कृदुत्तरपदप्रकृतिभावेन नञ एव स्वरोऽवतिष्ठते' इत्यन्तोदात्तः। अल्पपर्यायः पाकशब्दः, पाकश्चासौ यज्ञश्च पाकयज्ञः, समासस्वरेणान्तोदात्तः। सत्यप्यार्थ एतस्यारम्भे, अन्तोदात्तावपि यज्ञाभिधायिनः परत्वादनेनैव ठञ्प्रत्ययो युक्त इत्यन्तोदात्तानामुपन्यासः।

'क्रतुभ्य इत्येव सिद्धः' इति। क्रतुयज्ञयोः पर्यायत्वादिति भावः। 'असोमयागेभ्योऽपि' इति। अन्यथा क्रतुशब्दस्य सोमयागे रूढत्वादन्यत्र न स्यात्, यज्ञग्रहणात्तु तेभ्योऽपि भवति। एवं केवलयज्ञग्रहणेऽपि स एव दोषो यः केवलक्रतुग्रहणे, तस्माद्गौणमुख्यपरिग्रहार्थमुभयोरुपादानम् ॥

## ६९. अध्यायेष्वेवर्षेः।

'ऋषिशब्दाः प्रवरनामधेयानि' इति। होत्राध्वर्युणा च प्रव्रियन्त इति प्रवराः = भृग्वादयः, तद्यथा भार्गवच्यावनाप्नवानौर्वजामदग्नेति होता, जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः। एतेन यद्यपि मन्त्रदर्शिष्वृषिशब्दः प्रसिद्धः, तथापि प्रवराध्यायपठितानामेव ग्रहणमिति दर्शयति। 'वसिष्ठस्य व्याख्यानः' इति। वसिष्ठेन दृष्टो मन्त्र उपचाराद्वसिष्ठ इत्युक्तः।

'वासिष्ठी ऋक्' इति। भवार्थेऽण्। एवकारः सर्ववाक्यानां सावधारणत्वज्ञापनार्थः ॥

## ७०. पौरोडाशपुरोडाशात् ष्ठन्।

'पुरोडाशाः पिष्टपिण्डाः' इति। 'दाशृ दाने' (धा.पा. ८८२) कर्मणि घञ्, पुरो दास्यन्ते दीयन्त इति पुरोडाशाः, पृषोदरादित्वात्समासः, दकारस्य च डकारः, एतेनैतदाह—आकृतिवचनः पुरोडाशशब्दः, न यूपाहवनीयादिवददृष्टनिमित्त इति। 'तेषां संस्कारको मन्त्रः' इति। 'मखस्य शिरोऽसि' इत्येवमादिः। 'पुरोडाशसहचरितो मन्त्रः पुरोडाशः' इति। मन्त्र एव हि व्याख्यातव्यो न पुरोडाशः ॥

## ७१. छन्दसो यदणौ।

अत्र भवव्याख्यानौ द्वावर्थौ, यदणौ प्रत्ययावपि द्वावेव, तथापि यथासंख्यं न भवति; 'तस्य व्याख्याने'

(४.३.६६) इति यदणौ भवतः, 'तत्र भवः' (४.३.५३) इति चेत्येवं समुच्चयात्। 'द्व्यचः इति ठकि प्राप्ते' इति। उत्तरसूत्रे द्व्यज्ग्रहणेन ठकि प्राप्त इत्यर्थः॥

## ७२. द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्।

'अणादेरपवादः' इति। आदिशब्देन ठञः। तत्र ऋक्छब्दे द्व्यक्षु चाणोऽपवादः, पुरश्चरणशब्दोऽपि स्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः। असिप्रत्ययो हि सप्तम्यन्तादुत्पद्यत इति पुरःशब्दः कारकम्, 'पुरोऽव्ययम्' (१.४ ६७) इति वा गतिः। तेन तस्मादप्यण एवापवादः। ब्राह्मणादिष्वन्तोदात्तेषु ठञोऽपवादः, ऋकारान्तेष्वप्यणोऽपवादः। ये तु तत्र बह्वचोऽन्तोदात्तास्तेषु परत्वादयं ठञं बाधते। 'नामाख्यातग्रहणं सङ्घात-विगृहीतार्थम्' इति। आख्यातार्थं विगृहीतग्रहणम्; नामशब्दात्तु द्व्यच्त्वादेव सिद्धम्॥

## ७३. अणृगयनादिभ्यः।

'ठञादेः' इति। आदिशब्देन ठकः छस्य च ग्रहणम्। तत्र विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकोऽपवादः, व्याकरणशब्दाद्वृद्धाच्छस्य, शेषा बह्वचोऽन्तोदात्ता, तेष्वञः। अथाण्ग्रहणं किमर्थम्, न ऋगयनादिभ्यो यथाविहितमेवोच्येत, वचनप्रामाण्याद्यतो विहितो न च प्राप्नोति अन्येन बाधितत्वात्, स एवाण् भविष्यति? अत आह—'अण्ग्रहणम्' इति। असत्यण्ग्रहणे यद्वृद्धमन्तोदात्तं बह्वच्, यथा—वास्तुविद्येति तस्माद्वृद्धाच्छे ठञा बाधिते पुनर्वचनाच्छ एव स्यात्, अण्ग्रहणात्त्वणेव भवति।

'[1]ऋगयन' इति। 'पूर्वपदात्संज्ञायामगः' (८.४ ३) इति णत्वं न भवति, 'अगः' इति प्रतिषेधात्। अयनशब्दश्च भावसाधनोऽभेदोपचाराद्ग्रन्थे वर्त्तते, 'अनो भावकर्मवचनः' (६.२.१५०) इत्यन्तोदात्तः। पदव्याख्यानशब्दः 'मन्क्तिन्व्याख्यान' (६.२.१५१) इत्यन्तोदात्तः। छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः। [2]छन्दोभाषेति कृत्स्वरेणान्तोदात्तः। छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः। पुनरुक्तशब्दस्थाथादिस्वरेण। निरुक्तशब्दः 'संज्ञायामनाचितादीनाम्' (६.२.१४६) इति। निगमशब्दो गोचरादिसूत्रे घान्तो निपातितोऽन्तो-दात्तः। वास्तुविद्या, क्षत्त्रविद्या, अङ्गविद्येति समासस्वरेण। उत्पातोत्पादशब्दौ थाथादिस्वरेण। अतेः सरन्, वसेः सम्पूर्वाच्चिचविति संवत्सरशब्दोऽन्तोदात्तः। मुहूर्त्तनिमित्तशब्दौ प्रातिपदिकस्वरेण। उपनिपूर्वात्सदेः क्विप्, उपनि-षच्छब्दः कृत्स्वरेणान्तोदात्तः॥

## ७४. तत आगतः।

'तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यते' इति। मुख्यत्वादेव। अपादानसंज्ञा तु नान्तरीय-कस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते॥

---

1 'ऋगयनम्' इति—इति मुद्रितः पाठः।
2 छन्दो भावेति—इति " "

## ७५. ठगायस्थानेभ्यः ।

'आय इति स्वामिग्राह्यो भागः' इति । एत्येनं स्वामी, स्वामिनं वाऽयमेतीति कृत्वा ।।

## ७६. शुण्डिकादिभ्योऽण् ।

'आयस्थानठकोऽपवादः' इति । उपलक्षणमेतत् । कृकणशब्दात् 'कृकणपर्णाद्भारद्वाजे' (४.२.१४५) इति छस्याप्यपवादः । तीर्थशब्दाद्धूमादिलक्षणस्य वुञोऽप्यपवादः । उदपानशब्दादुत्सादाद्यञोऽप्यपवादः ।

अथाणग्रहणं किमर्थं न शुण्डिकादिभ्यो यथाविहितमेवोच्चेत, वचनसामर्थ्याद्धि, यो विहितो न च प्राप्नोति, अन्येन बाधितत्वात्, स एवाण् भविष्यति ? अत आह—'अण्ग्रहणम्' इति । उदपानशब्द इह पठ्यते, स चोत्सादिः, तत्रासत्यण्ग्रहणे आयस्थानठकं बाधित्वा 'उत्सादिभ्योऽञ्' (४.१.८६) इत्यञेव स्यात् । अण्ग्रहणा-त्वणेव भवति ।।

## ७७. विद्यायोनिसम्बन्धेभ्यो वुञ् ।

'विद्यायोनिकृतः' इति । बहुव्रीहौ गतार्थत्वात् कृतशब्दस्याप्रयोगः ।।

## ७८. ऋतष्ठञ् ।

एषूदाहरणेषु 'इसुसुक्तान्तात्कः' (७.३.५१) । एवं च प्रक्रियालाघवाय कञेवायं विधेयः, तथा तु न कृतमित्येव ।।

## ७९. पितुर्यच्च ।

'पित्र्यम्' इति । 'रीङृतः' (७.४.२७), 'यस्येति च' (६.४.१४८) ।।

## ८०. गोत्रादङ्कवत् ।

'अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यते' इति । कथं मुख्ये सम्भवति लक्षणाश्रीयते ? व्याख्यानमत्र शरणम् । अपर आह—अङ्के यद्दृष्टं तदतिदिश्यते न त्वङ्क आहत्य विहितम् । 'गोत्रचरणाद्वुञ्' (४.३.१२६) इत्ययमपि वुञ् तस्येदमिति सामान्ये विहितोऽप्यङ्कादिव्यतिरिक्ते विषयेऽङ्केऽपि दृष्ट इति तस्याप्यतिदेश इति । 'औपगवकम्' इति । वुञ उदाहरणम् । अणस्तु—वैदम्, गार्ग्यम्, वात्समिति । वतिः सर्वसादृश्यार्थः; 'कालेभ्यो भववत्' (४.२.३४), 'चरणेभ्यो धर्मवत्' (४.२.४६) इति यथा ।।

## ८१. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।

'समादागतम्' इति । समाद्धेतोरागतमित्यर्थः । तत्र 'हेतौ' (२.३.२३) इति तृतीया प्राप्नोति, ज्ञापकात् सिद्धम्, यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह तज्ज्ञापयति–भवति हेतौ पञ्चमीति । नैतदस्ति ज्ञापकम्, यत्र 'विभाषा गुणे' (२.३.२५) इति पञ्चमी, तदर्थमेतत् स्यात्--जाड्यादागत इति ? तस्मात् 'विभाषा गुणे' इत्यत्र विभाषेति योगविभागादगुणवचनादपि पञ्चमी भवति ॥

## ८२. मयट् च ।

'योगविभागो यथासंख्यनिरासार्थः' इति । विकल्पार्थेनान्यतरस्यांग्रहणेन रूप्यमयटोः पक्षेऽभावः प्रतिपाद्यते, तदभावे स्वशास्त्रेणैव प्राप्तः प्रत्ययो भवति । तेन रूप्यमयटोरेवानेन विधानादसति योगविभागे स्यादेव यथासंख्यमिति भावः ॥

## ८३. प्रभवति ।

'प्रकाशते' इति । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते; 'तत्र जातः' (४.३.२५) इत्यनेन गतत्वात् ॥

## ८४. विदूराञ्ञ्यः ।

अयुक्तोऽयं निर्देश इत्याह--'ननु च' इति ।

'वालवायो विदूरं च' इति । वालवायशब्दः प्रत्ययमुत्पादयति, विदूरं चादेशमापद्यते, सूत्रे त्वादेश एव निर्दिष्टः, तेनानुरूपः स्थानी वालवायशब्द आक्षिप्यते, यथा—शिवादिषु विश्रवणरवणेत्यादेशाभ्यां पठिताभ्यां विश्रवःशब्दः । 'प्रकृत्यन्तरमेव वा' इति । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकः, स एवात्र प्रकृतिरित्यर्थः । 'न वै तत्रेति चेत्' इति । चेच्छब्दोऽक्षमायाम्, पर्वतवाची विदूरशब्दो न प्रसिद्ध इति चेद्ब्रूयात्स जित्वरीवदुपचारेत् = व्यवहरेत्, यथा---वणिज एव मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एव वालवायं विदूरमुपचरन्ति । नियतपुरुषापेक्षापि प्रसिद्धिर्भवतीत्यर्थः ॥

## ८५. तद्गच्छति पथिदूतयोः ।

प्राप्तिफले परिस्पन्दे गमिर्वर्तते, न च पथः परिस्पन्दोऽस्ति तस्मात्पुरुषवर्ति गमनं पथ्युपचर्यत इत्याह-- 'तत्स्थेषु' इति । 'अथ वा' इति । प्राप्तावपि गमिर्वर्तते, यथा देवभूयङ्गत इति ॥

## ८६. अभिनिष्क्रामति द्वारम् ।

'द्वारमभिनिष्क्रमणक्रियायाम्' इति । अनेनैतदाह--तत्स्थेऽभिनिष्क्रामत्सु करणभूते द्वारे तदारोपाद् द्वारमेवाभिनिष्क्रामतीत्युच्यत इति । अभिनिष्क्रमणं द्वारमिति नोक्तम्; तद्धितेति द्वितीयाधिकारात्, तदा हि कृद्योगलक्षणा षष्ठी प्राप्नोति ।

## ८७. अधिकृत्य कृते ग्रन्थे ।

'आख्यायिकाभ्यः' इति । तादर्थ्ये चतुर्थी, आख्यायिका = गद्यप्रबन्धभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुग्भवतीत्यर्थः । न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभादभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते, क्वचिन्न ॥

## ८८. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।

'इन्द्रजननादिराकृतिगणः' इति । तेन 'विरुद्धभोजनीयमध्यायं व्याख्यास्यामः' इति सिद्धं भवति ॥

## ८९. सोऽस्य निवासः ।

इह यस्य स्रुघ्नो निवासः स्रुघ्नेऽसौ भवति, ततः 'तत्र भवः' (४.३.५३) इत्येव सिद्धम्, शब्दार्थभेदात्तु पृथगुपादानम् ॥

## ९०. अभिजनश्च ।

'[1]अभिजनाः पूर्वबान्धवाः' इति । अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः = पित्रादयः । बन्धुशब्दः प्रज्ञादिः । 'तत्सम्बन्धाद्देशोऽपि' इति । यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे । कः पुनरसौ देशः ? इत्याह—'यस्मिन्' इति । 'तदिह' इत्यादि । तदिति वाक्योपन्यासे । कथं पुनर्मुख्येऽभिजने सम्भवति गौणात्प्रत्ययो भवति ? इत्याह—'निवासप्रत्यासत्तेः' इति । प्रत्यासन्नेनानन्तरसन्निहितेन निवासशब्देनाभिजनस्य विशेषणादित्यर्थः । इह हि निवासे योऽभिजन इति विशेषिते, तस्माद्देशवाचिन एव प्रत्ययः ।

'निवासाभिजनयोः को विशेषः' इति । अभिजनस्यापि निवासभूतस्य ग्रहणान्नास्त्येव विशेष इत्यर्थः । 'तत्र' इति । यत्र स्वयं निवसति स तस्य निवासः । यत्र तु पूर्वैः पित्रादिभिरुषितं सोऽभिजन इत्यर्थः ॥

## ९१. आयुधजीविभ्यश्छः पर्वते ।

'आयुधजीविभ्य इति तादर्थ्ये चतुर्थी' इत्यादि । यदि तु 'आयुधजीविभ्यः' इति पञ्चमी स्यात्, पर्वतादिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात्, ततश्चायमर्थः स्यात्—आयुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेऽभिधेये छो भवतीति, तत्र सोऽभिजन इत्यधिकारो बाध्येत ॥

## ९२. शण्डिकादिभ्यो ञ्यः ।

'अणादेरपवादः' इति । आदिशब्देन छादेः । तत्र यदि शण्डिकादयः पर्वतशब्दाः, ततः पूर्वेण छः प्राप्तः; अथ जनपदशब्दाः, ततो 'अवृद्धादपि बहुवचनविषयात्' (४.२.१२५) इति वुञ्, शण्डिकाशब्दात्कोपधादण् प्राप्तः ॥

---

1. अभिजनः पूर्वबान्धवः—काशिका.

## ९३. सिन्धुतक्षशिलादिभ्योऽणञौ ।

'सिन्धुवर्णुप्रभृतयः' इति । प्रभृतिशब्देन मधुमत्, कम्बोज, साल्व, कश्मीर, गन्धार---इत्येते गृह्यन्ते । किष्किन्धादिभ्यश्चतुर्भ्यः 'अवृद्धादपि' (४.२.१२५) इति वुञि प्राप्ते वचनम् । तक्षशिलादिष्वपि वृद्धेभ्यश्छः प्राप्तः, शेषेभ्यः 'प्राग्दीव्यतोऽण्' (४.१.८३) ॥

## ९४. तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।

## ९५. भक्तिः ।

## ९६. अचित्ताददेशकालाट्ठक् ।

'अचित्तवाचिनः' इति । स्वरूपग्रहणं तु न भवति, देशकालप्रतिषेधात् । तत्साहचर्याद्देशकालयोरपि स्वरूपग्रहणं न भवति ॥

## ९७. महाराजाट्ठञ् ।

## ९८. वासुदेवार्जुनाभ्यां वुन् ।

'छाणोरपवादः' इति । 'वासुदेवशब्दः संज्ञा' इति वक्ष्यति; तेन तत्रोत्तरस्य वुञोऽप्राप्तिः । अर्जुनशब्दोऽपि यो वृक्षविशेषवचनो वर्णविशेषवचनो वा, न तत्र वुञः प्राप्तिः; क्षत्रियवचनादपि बहुलवचनाद्वुञोऽप्राप्तिरेवेति भावः ।

'ननु च' इत्यादि । वसुदेवस्यापत्यम्, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४) इत्यण् । 'न चात्र' इति । न तावद्वृद्धौ विशेषः; प्रागेव वृद्धत्वात् । योऽपि 'वृद्धिनिमित्तस्य' (६.३.३९) इति पुंवद्भावप्रतिषेधः, सोऽस्यापि 'न कोपधायाः' (६.३.३७) इत्यस्त्येव । 'संज्ञैषा देवताविशेषस्य' इति । वसत्यस्मिन् सर्वमिति व्युत्पत्त्या परमात्मन एवा संज्ञा । 'न क्षत्रियाख्या' इति । उपलक्षणमेतत्, नापि गोत्राख्येत्यपि द्रष्टव्यम् ।

प्रासङ्गिकं प्रयोजनान्तरं वासुदेवग्रहणस्य दर्शयति---'अजाद्यदन्तम्, अल्पाच्तरमिति च' इति । इतिकरणः प्रत्येकमभिसम्बध्यते । यद्यप्येतज्ज्ञाप्यते, तथापि 'श्वयुवमघोनामतद्धिते' (६.४.१३३) इति निर्देशात् क्वचिदन्यथाऽपि भवति ॥

## ९९. गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।

'गोत्रक्षत्रियाख्येभ्यः' इति । आङ्पूर्वात्ख्यातेर्मूलविभुजादित्वात्कः । 'आख्याग्रहणम्' इति । आङ्पूर्वस्य ख्यातेर्ग्रहणमित्यर्थः । 'यथाकथञ्चित्' इति । क्षत्रियशब्दसामानाधिकरण्याद्येषां क्षत्रिये वृत्तिः; यथा---शूरः क्षत्रिय इति, तेभ्यो मा भूदित्यर्थः ॥

## १००. जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ।

जनपदिनां जनपदवाचिनां शब्दानां जनपदवत् जनपदवाचिनां शब्दानामिव, जनपदेन जनपदवाचिना शब्देन, समानशब्दानां समानश्रुतीनाम्, बहुवचने बह्वर्थाभिधाने । वृत्तेरप्येष एवार्थः । 'प्रत्ययः प्रकृतिश्च' इति । अनेन सर्वशब्दस्यार्थो वर्णितः । 'जनपदिनो जनपदस्वामिनः' इति । स्वस्वामिभावसम्बन्धे मत्वर्थीयं दर्शयति । 'अङ्गा जनपदाः' इत्यादिना दृष्टान्ते प्रवृत्तिप्रकारमाह । 'तद्वत्' इत्यादिना तूदाहरणम् । सर्वत्र बहुत्वर्थेषु 'द्व्यञ्मगध' (४.१.१७०) इत्यादिना विहितस्याणः 'तद्राजस्य बहुषु' (२.४.६२) इति लुकि कृते समानशब्दादवृद्धादपि बहुवचनेति वुञि विवक्षिते 'गोत्रेऽलुगचि' (४.१.८९) इति वचनादाङ्गशब्दाद्वुञ् ।

'पञ्चाला ब्राह्मणाः' इति । अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः, तत्रातिदेशाभावादणेव भवति ।

'सर्वग्रहणम्' इत्यादि । असति सर्वग्रहणे प्राधान्यात् प्रत्ययस्यैवातिदेशः स्यात्, न प्रकृतेः । वतिनिर्देशस्तु यैर्जनपदैर्ये जनपदिनस्तेषां तज्जनपदप्रत्यय एव यथा स्यात्, जनपदान्तरप्रत्ययो मा भूदित्येवमर्थं स्यात् । न त्वनेन प्रकृत्यतिदेशो लभ्यते, तस्मात्तदर्थं सर्वग्रहणं क्रियते । 'स च द्व्येकयोः प्रयोजयति' इति पाठः । स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोः प्रयोजयति, न बहुषु; तत्र रूपस्याभिन्नत्वात् । यदाह—'बहुवचने समानशब्दानाम्' इति । द्व्येकयोस्तु जनपदवाचिनो रूपं वृद्धम्, जनपदिवाचिनस्त्ववृद्धमिति तत्रैव सर्वग्रहणस्य प्रयोजनमित्यर्थः । 'अतिदेशः प्रयोजयति, अतिदेशं प्रयोजयति' इति वा पाठे न समीचीनमर्थं पश्यामः । 'वृद्धिनिमित्तेषु' इत्यादि । तत्र ह्यतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति नास्ति विशेषः ।

'मद्रवृज्योः कनि विशेषः' इति । तत्रवृद्ध्यसम्भवात् । 'प्रकृतिनिर्ह्रासे कृते' इति । निर्ह्रासः अपचयः, अल्पत्वमित्यर्थः । 'मद्रकः, वृजिकः' इति । असति तु प्रकृत्यतिदेशे माद्रकको वार्ज्यक इति स्यात् ।

'बहुवचनग्रहणम्' इत्यादि । समानशब्दताया यो विषयस्तस्य लक्षणं प्रदर्शनं तदर्थम् । 'अन्यथा हि' इति । यदि बहुवचनग्रहणं न क्रियते । 'यत्रैव' इति । बहुवचने, तत्रैव हि तद्राजस्य लुकि कृते समानशब्दता भवति । 'एकवचनद्विवचनयोर्न स्यात्' इति । लुगभावेन समानशब्दताया अभावात् । ननु सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोः प्रयोजयतीत्युक्तम्, तत्कथं द्व्येकयोर्न स्यात्? तस्मात् सर्वग्रहणाद्यत्र क्वचित्समानशब्दानां सर्वत्रातिदेशः सिद्धः । अस्यैवार्थस्य विस्पष्टप्रतिपत्त्यर्थं 'बहुवचने' इत्युपलक्षणमुपात्तम् ॥

## १०१. तेन प्रोक्तम् ।

'प्रकर्षेणोक्तम्' इति । अध्यापनेनार्थव्याख्यानेन वा [1]प्रकर्षेण प्रकाशितमित्यर्थः । प्रकर्षेणेति वचनाद् ग्रामे ग्रामे यद्यपि काठकादिकं देवदत्तादिभिः प्रोच्यते, तथापि तेभ्यः प्रत्ययो न भवति । 'न तु कृतम्' इति । प्रपूर्वो वचिः करणेऽपि वर्तते इति भावः । मधुरायां भवो माधुरः, ततो वृद्धाच्छे प्राप्ते 'कलापिनोऽण्' (४.३.१०८) इत्यण्ग्रहणादधिकविधानार्थादण्प्रत्ययः । 'पाणिनीयम्' इति । स्वयमन्येन वा कृतं यत्पाणिनिना प्रोक्तं तदुच्यते ॥

---

1. प्रकर्षेणाप्रकाशितमित्यर्थः—मुद्रितः पाठः

## १०२. तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।

'छन्दसि चायमिष्यते' इति । छन्दस्यभिधेय इत्यर्थः । 'तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवति' इति । न केवलं छणेव, अपि त्वणपि न भवत्यनभिधानादित्याहुः । कथं पुनरिष्यमाणोऽपि छन्दसि लभ्यः ? इत्याह—'शौनकादिभ्यः' इति ॥

## १०३. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।

'णकार उत्तरत्र वृद्ध्यर्थः' इति । इह तु पूर्वमेव वृद्धेः सिद्धत्वात् । योऽपि 'वृद्धिनिमित्तस्य' (६.३.३९) इति पुंवद्भावप्रतिषेधः, सोऽपि न प्रयोजनम्, णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामवृत्तेः । वृत्तावपि 'जातेश्च' (६.३.४१) इति सिद्धत्वात्, चरणत्वेन जातित्वात् । 'तस्यापि च' इति । कथं छन्दोब्राह्मणानामुच्यमाना तद्विषयता कल्पस्य भवति ? तत्राह—'शौनकादिभ्यः' इति । ननु च तत्रानुवृत्तौ सत्यामप्यस्य योगस्य न कल्पः छन्दो भवति, नापि ब्राह्मणम् ? अत आह—'छन्दोऽधिकारविहितानां च' इति । 'छन्दोब्राह्मणानि' (४.२.६६) इत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयता भवतीत्यर्थः । यत्तु 'छन्दोब्राह्मणानि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनम्, तत्प्रकारान्तरं द्रष्टव्यम् । 'इदानीन्तनेन गोत्रकाश्यपेन' इति । न ह्यसावृषिः; अमन्त्रदर्शित्वात् ॥

## १०४. कलापिवैशम्पायनान्तेवासिभ्यश्च ।

'कलाप्यन्तेवासिनाम्' इत्यादि । सूत्रे त्वभेदोपचाराश्रयो निर्देशः । 'कलाप्यन्तेवासिनश्चत्वारः' इत्यादि । ननु च शिष्यशिष्येष्वपि शिष्यव्यवहारो लोके दृश्यते, तत्कथमियन्त एवेति नियमः ? तत्राह—'प्रत्यक्षकारिणः' इति । क्रियासामान्यवचनः करोतिः प्रकरणादिहाध्ययने वर्तते । 'कलापिखाण्डायनग्रहणात्' इति । एतदेव विवृणोति—'तथा हि' इति । वैशम्पायनस्यान्तेवासी कलापी, यदि चान्तेवास्यन्तेवासिनोऽपि गृह्येरन्, कलापिग्रहणमनर्थकम्, 'वैशम्पायनान्तेवासिभ्यः' इत्येव सिद्धम्; कलाप्यन्तेवासिनामपि वैशम्पायनान्तेवासित्वात् । तथा वैशम्पायनान्तेवासी कठः कठान्तेवासी खाण्डायनः, तत्र व्यवहितानामपि ग्रहणे वैशम्पायनान्तेवासित्वादनेनैव सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फलः स्यात् । उदाहरणेषु छन्दोब्राह्मणानीति तद्विषयता, अध्येतृप्रत्ययस्य 'प्रोक्ताल्लुक्' (४.२.६४) इति लुक् ।

'उलपेन चतुर्थेन' इति । सहयोगे तृतीया । कलापिन इदं कालापकम्, 'गोत्रचरणाद्वुञ्' (४.३.१२६) । तत्र 'धर्माम्नाययोः' इति पठ्यते, तस्मादिहोच्यमानाच्छिष्यसमूहे प्रयोगः । 'आलम्बिश्चरकः प्राचाम्' इति । आलम्बिर्नाम प्राचां देश उत्पन्नश्चरकस्य शिष्यः । एवं फलिङ्गकमलावुभौ प्राचामेव त्रय एते प्राच्या उक्ताः । 'कठकलापिनोः' इति । 'कठचरकाल्लुक्' (४.३.१०७) इति कठाल्लुगुक्तः । कलापिशब्दादपि 'कलापिनोऽण्' (४.३.१०८) इत्यणुक्तः ॥

## १०५. पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।

भल्लु, शाट्यायन, ऐतरेय, विङ्ग, अरुण, पराजि—इत्येतेभ्यो णिनिः ।

'भाल्लविनः' इत्यादि । भल्लु, शाट्यायन, ऐतरेय, विङ्ग, अरुण, पराजि—इत्येतेभ्यो णिनिः ।

याज्ञवल्काश्मरथशब्दौ कण्वादी, ताभ्यां यञन्ताभ्यामपि 'आपत्यस्य' (६.४.१५१) इति यलोपः। ननु च याज्ञवल्कादीन्यपि पुराणप्रोक्तान्येव, शाट्यायनकादिभिर्ब्राह्मणान्तरैस्तुल्यकालत्वात्? इत्यत आह—'याज्ञवल्कादयो हि' इति। आख्यानानि भारतादीनि। 'तथा व्यवहरति' इति। अर्थस्तु तथा वा भवत्वन्यथा वेति भावः। 'तद्विषयता कस्मान्न भवति' इति। याज्ञवल्कादिविषयः प्रश्नः, 'छन्दोब्राह्मणानि च' (४.२.६६) इत्यत्र पुराणप्रोक्तत्वविशेषस्यानाश्रयणात्प्राप्नोतीति भावः। 'प्रतिपदम्' इति। एतल्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। एतदर्थमेव च तत्र ब्राह्मणग्रहणम्; छन्दस्त्वादेव सिद्धेः।

कल्पेषु तर्हि कस्मान्न भवति, यथा—काश्यपिनः, कौशिकिन इत्यत्र? इत्यत आह—'न वायम्' इति। युक्तं तत्र छन्दोऽधिकारे तस्य योगस्यानुवृत्तेः, अयं तु न तथेति कल्पेष्वपि तद्विषयता न भवतीत्यर्थः। 'न चात्यन्तबाधैव' इति। 'सिद्धशुष्कपक्वबन्धैश्च' (२.१.४१) इति निपातनादेव सिद्धे, 'शुषः कः' (८.२.५१) 'पचो वः' (८.२.५२) इति लिङ्गम्—'बाधकान्यपि निपातनानि भवन्ति' (नोल.वृ. १०९) इति। यथा तु सर्वादिसूत्रे (१.१.२७) भाष्यम्, तथा 'अन्यतराण्यपि निपातनानि बाधकान्येव' इति स्थितम्॥

## १०६. शौनकादिभ्यश्छन्दसि।

## १०७. कठचरकाल्लुक्।

## १०८. कलापिनोऽण्।

'यथाविहितमेवोच्येत' इति। तत्र वचनसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यतीति भावः। 'एवमादीनि' इति। आदिशब्देन मौदाः, पैप्पलादाः, शाकला इत्येतेषां ग्रहणम्। अत्र सुबिप्पलादशाकल्य—इत्येतेभ्यः 'पुराणप्रोक्तेषु' (४.३.१०५) इति णिनेरपवादोऽण्भवति॥

## १०९. छगलिनो ढिनुक्।

## ११०. पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः।

'तदर्थं छन्दोग्रहणमनुवर्त्यम्' इति। ननु तदनुवृत्तावपि कथं भिक्षुनटसूत्रयोश्छन्दस्त्वम्? तत्राह—'गुणकल्पनया च' इति। उपचारस्य निमित्तभूतो धर्मो गुणो गुरुशुश्रूषणादिः, तन्निमित्ता कल्पना गुणकल्पना। 'पाराशरिणः' इति। पूर्ववद्यलोपः। 'शैलालिनः' इति। शिलामलते इति शिलाली, 'अलं भूषणपर्याप्तिवारणेषु' (कविकल्पद्रुमः) इत्यस्मात् 'सुप्यजातौ' (३.२.७८) इति णिनिः, ततोऽस्मिन् णिनौ टिलोपः।

'पाराशरम्' इति। कण्वाद्यण्। 'शैलालम्' इति। औत्सर्गिकेऽणि 'नान्तस्य टिलोपे सब्रह्मचारि' (वा. ७९८) इत्यादिना टिलोपः॥

## १११. कर्मन्दकृशाश्वादिनिः।

## ११२. तेनैकदिक् ।

'सौदामनी' इति । 'अन्' (६.४.१६७) इति प्रकृतिभावः । सुदामादयः = पर्वतविशेषाः ॥

## ११३. तसिश्च ।

'स्वरादिपाठादव्ययत्वम्' इति । तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वभाविकं वेदितव्यम् ॥

## ११४. उरसो यच्च ।

## ११५. उपज्ञाते ।

'विनोपदेशेन ज्ञातमुपज्ञातम्' इति । उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः । 'अकालकम्' इति । आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः । गुरुलाघवं नामार्थशास्त्रम्, यत्रोपायानां गौरवं लाघवं चिन्त्यते । 'दुषू' इत्ययं सङ्केतशब्दो यत्र क्रियते, यथा पाणिनीये 'वृत्' इति, तद्दुष्करणं व्याकरणम्; कामशास्त्रमित्यन्ये ॥

## ११६. कृते ग्रन्थे ।

'तित्तिरिवरतन्तु' (४.३.१०२) इत्यादीनि सूत्राण्यत्र प्रकरणे न पठितानि । तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्त्तारः; नित्यानि हि छन्दांसि न केनचित्क्रियन्ते ॥

## ११७. संज्ञायाम् ।

अग्रन्थार्थमिदम् ॥

## ११८. कुलालादिभ्यो वुञ् ।

## ११९. क्षुद्राभ्रमरवटरपादपादञ् ।

'अणोऽपवादः' इति । बाहुल्यादेवमुक्तम्, पादपशब्दाद्धि छः प्राप्नोति । अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति ॥

## १२०. तस्येदम् ।

'तस्यापत्यम्' (४.१.९२) इत्यत्रोक्तमेवार्थं स्मारयति–'प्रकृतिप्रत्ययार्थयोः' इत्यादि । प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्, प्रत्ययार्थेऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः । मात्रशब्दव्यवच्छेद्यं

दर्शयति–'यदपरम्' इति। इदंशब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः। आदिशब्देन सामान्याभिधायित्वं गृह्यते। 'तत्सर्वमविवक्षितम्' इति। अत्र कारणं 'तस्यापत्यम्' इत्यत्रैवोक्तम्।

'[1]संवहेस्तुः' इति। तृन्तृचोः सामान्येन ग्रहणम्। 'सांवाहित्रम्' इति। ढत्वादीनामसिद्धत्वात् पूर्वमिड्ढि कृते निमित्ताभावात्तेषामभावः॥

'अग्नीधः' इति। अग्निमिन्ध इति क्विप् अग्नीत् ऋत्विग्विशेषः। 'त्वमग्निदृतीयते' इत्यत्र तु छान्दसं ह्रस्वत्वम्। शरणं गृहम्, स्थानम्, यत्राग्नीध्रीयं धिष्ण्यं तदाग्नीध्रम्, तात्स्थ्यात्तु मञ्चाः क्रोशन्तीतिवदृत्विजि प्रयोगः कल्पसूत्रकाराणाम्––'प्रत्याश्रावयेदाग्नीधः आग्नीधं पोतारं ब्रह्माण' इति। छप्रत्ययं च ततः शरणे कुर्वन्ति, 'आग्नीध्रीयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्य' इति शरणवचनाच्छः।

'समिधामाधाने' इति। यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे क्विप्। सा समिदाधीयते यया सा सामिधेनी ऋक्, षित्वान्ङीष्, 'हलस्तद्धितस्य' (६.४.१५०) इति यलोपः॥

## १२१. रथाद्यत्।

'रथाङ्ग एवेष्यते' इति। यस्तु रथस्य वोढा रथ्य इति वोढरि प्रयोगः, सः, 'तद्वहति रथयुगप्रासङ्गम्' (४.४.७६) इति द्रष्टव्यः। स्यादेतत्––अयमेव तद्वोढर्यपीष्यताम्, 'तद्वहति' (४.४.७६) इत्यत्र रथग्रहणं मा कारीति? नैवं शक्यम्, इह द्वौ रथौ वहति द्विरथ्य इति 'द्विगोर्लुगनपत्ये' (४.१.८८) इति प्राग्दीव्यतीयो लुक् प्राप्नोति। यत्तु द्वयो रथयोरङ्गं तत्र द्विरथमित्येव भवति॥

## १२२. पत्त्रपूर्वादञ्।

'पतन्त्यनेनेति पत्त्रम्' इति। 'दाम्नीशस' (३.२.१८२) इत्यादिना ष्ट्रन्। अश्वयुक्तो रथोऽश्वरथः, षष्ठीसमासे वृत्तिस्वभावाद्युक्तार्थावगतिः। तस्याङ्गमाश्वरथम्॥

## १२३. पत्त्राध्वर्युपरिषदश्च।

पत्त्रेऽर्थग्रहणमितरयोः स्वरूपग्रहणम्। व्याख्यानं चात्र शरणम्॥

## १२४. हलसीराट्ठक्।

## १२५. द्वन्द्वाद्वुन्वैरमैथुनिकयोः।

वैरम् = विरोधः, वीराणामिदमिति कृत्वा, मिथुनकर्म मैथुनिका, मनोज्ञादित्वद्वुञ्। मिथुनम् = दम्पती, कर्म = क्रियानिष्पादनम्। 'बाभ्रवशालङ्कायनिका' इति। वुञन्तं स्वभावतः स्त्रियां वर्त्तते॥

1. 'वहेस्तुः' इति मुद्रितः पाठः।

## १२६. गोत्रचरणाद्वुञ् ।

वुनि प्रकृते वुञा विधानमवृद्धेषु वृद्ध्यर्थम् । वृद्धेषु वुनि वुञि च विशेषो नास्ति—तदेव रूपं स एव स्वरः, पुंवद्भावप्रतिषेधोऽपि 'न कोपधायाः' (६.३.३७) इत्युभयोरस्ति ॥

## १२७. सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।

'पूर्वस्य वुञोऽपवादः' इति । गोत्रग्रहणानुवृत्तेरञादीनां गोत्रप्रत्ययानामत्र ग्रहणमिति भावः ।

'घोषग्रहणमत्र कर्त्तव्यम्' इति । घोषः आभीरस्थानम्, तत्रापि प्रत्ययो यथा स्यादित्येवमर्थम् । घोषग्रहणस्यानुषङ्गिकं प्रयोजनान्तरमाह—'तेन वैषम्यात्' इति ।

'[1]अथाङ्कलक्षणयोः को विशेषः' इति । निघण्टुषु पर्यायतया पाठाच्छास्त्रस्येव विशेष इत्यर्थः । पृथगुपादानसामर्थ्याद्विशेषोऽत्राश्रीयताम् ? इत्याह—'लक्षणं लक्ष्यस्यैव' इति । स्वमात्मीयं सम्बन्धीत्यर्थः । 'वैदी विद्या अस्य' इति । विदानामसाधारणी या विद्या सा यस्यास्ति स वैदीविद्यः ॥

## १२८. शाकलाद्वा ।

'वुञोऽपवादः' इति । शाकलशब्दस्य चरणशब्दत्वात्, तद्दर्शयति—'शाकलेन प्रोक्तम्' इति ॥

## १२९. छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।

'वुञणोरपवादः' इति । चरणशब्देभ्यो वुञोऽपवादः, नटादौत्सर्गिकस्याणः ॥

## १३०. न दण्डमाणवान्तेवासिषु ।

'दण्डप्रधाना माणवाः' इति । अर्थकथनमेतत्; समासस्तु कर्मधारयः । सदा दण्डधारणाद्दण्डशब्दो माणवेषु वर्तते ॥

## १३१. रैवतिकादिभ्यश्छः ।

'पूर्वेण' इति । 'गोत्रचरणाद्वुञ्' (४.३.१२६) इत्यनेन । 'रैवतिकीयः' इति । रेवत्या अपत्यम् 'रेवत्यादिभ्यष्ठक्' (४.१.१४६) रैवतिकः, ततश्छः । अन्ये इञन्ताः, तत्रानन्तरसूत्रात् प्रतिषेधोऽनुवर्त्तिष्यते, रैवतिकादिभ्यो वुञः प्रतिषेधे विज्ञायमाने यत्रापवादो नास्ति—रैवतिकीय इति, तत्र 'वृद्धाच्छः' (४.२.११४) इत्येव सिद्धः; क्षेमवृद्धिशब्दादपि गहादित्वाच्छः; अन्येषु 'इञश्च' (४.२.११२) इत्यण् स्यात्, तस्माच्छग्रहणम् ॥

---

1. 'अथ' नास्ति—काशिका ।

## १३२. कौपिञ्जलहास्तिपादादण् ।

'गोत्रवुञोऽपवादः' इति । कुत इत्याह—'गोत्राधिकारात्' इति । 'कौपिञ्जलः' इति । कुपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । 'हास्तिपादः' इति । हस्तिन इव पादावस्य हस्तिपादः, पादस्य लोपो न भवति; 'अहस्त्यादिभ्यः' (५.३.१३८) इति वचनात् । हस्तिपादस्यापत्यम् 'तस्यापत्यम्' (४.१.९२) इति अस्मादेव निपातनादण्, पद्भावश्च, हास्तिपदस्येदम्, पुनरण् । अथाण्ग्रहणं किमर्थम्; असत्यण्ग्रहणेऽनन्तरश्छः प्राप्नोति । सिद्धोऽत्र छः 'वृद्धाच्छः' (४.२.११४) इति ? न सिद्ध्यति; 'गोत्रचरणाद्वुञ्' (४.३.१२६) इति वुञ् प्राप्नोति । एवं तर्हि यद्येताभ्यां छ इष्टः स्यात्, रैवतिकादिष्वेवेमौ पठेत्, एवं हि विभक्त्यनुच्चारणाल्लाघवं भवति । तस्मात्पृथगारंभादेव छो न भविष्यति । अन्यस्तु यो विहितो न च प्राप्नोति स एव भविष्यति, स चाणेव । एवं तर्ह्यसत्यण्ग्रहणे यत्र वुञ् प्राप्तः प्रतिषिध्यते, न दण्डमाणवान्तेवासिषु, तत्र वुञो विधानार्थमेतत्स्यात्तस्मादण्ग्रहणं कर्त्तव्यम् । णित्करणं ङीबर्थम्; पुंवद्भावप्रतिषेधार्थं च—कौपिञ्जली क्रिया अस्य कौपिञ्जलीक्रिय इति ॥

## १३३. आथर्वणिकस्येकलोपश्च ।

'चरणवुञोऽपवादः' इति । अथर्वणा प्रोक्तो वेदोऽभेदोपचारादथर्वा, तमधीते वसन्तादित्वाट्ठक्,—आथर्वणिकः, दाण्डिनायनादिसूत्रे (६.४.१७४) निपातनाट्टिलोपाभावः । अथ वा—अथर्वणा प्रोक्तो वेदः 'तेन प्रोक्तम्' (४ ३ १०१) इत्यण्, ततः 'छन्दोब्राह्मणानि' (४.२.६६) इति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात् 'प्रोक्ताल्लुक्' (४.२.६४) इति लुग्न भवति—आथर्वणिकः ।

पूर्वसूत्रमिदञ्च वार्तिके दर्शनात्सूत्रेषु प्रक्षिप्तम् ॥

## १३४. तस्य विकारः ।

'प्रकृतेः' इति । उपादानकारणस्य । 'अवस्थान्तरम्' इति । अन्यथात्वम् । अपवादेनानाक्रान्तस्य विषयस्य दुर्लभत्वात्प्रश्नः । 'किमिहोदाहरणम्' इति । 'अप्राणी' इति । प्राणिभ्योऽञं वक्ष्यति । 'आद्युदात्तम्' इति । अनुदात्तादेरप्ययं वक्ष्यति । 'अवृद्धम्' इति । वृद्धान्मयटं वक्ष्यति । 'यस्य च नान्यत्' इति । यथा 'गोपयसोर्यत्' (४ ३.१६०) इति । 'नित्स्वरेण' इति । अश्मभस्मशब्दौ मनिन्प्रत्ययान्तौ । 'मृदस्तिकन्' (५.४.३९), मृत्तिका ।

'तस्य प्रकरणे' इति । 'तस्येदम्' (४.३.१२०) इत्यस्मिन् । 'पुनर्वचनं शैषिकनिवृत्त्यर्थम्' इति । प्रकृतं हि तस्यग्रहणं शैषिकैर्घादिभिः सम्बद्धम्, अतस्तदनुवृत्तौ तेऽप्यनुवर्त्तेरन्, इदं त्वपूर्वं तस्यग्रहणं क्रियमाणं घादिसम्बद्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति । ननु च विधेयतया प्रधानभूता घादयः, न ते गुणभूते तस्यग्रहणे निवर्त्तमानेऽपि निवर्तितुमर्हन्ति, न हि गुणानुवर्त्ति प्रधानम्, किं तर्हि ? प्रधानानुवर्ती गुणः ? सत्यम्; तस्यग्रहणसामर्थ्यात्प्रधानभूतानामपि घादीनां निवृत्तिः, अणादयस्तु न निवर्त्तन्ते, 'प्राग्दीव्यतः' (४.१.८३) 'प्राग्भवनात्' इति च विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । 'विकारावयवयोः' इति । परस्तात्तु प्राग्वहतेः

प्राग्घिताद्' (४.४.७५) इति चाधिकारान्तरेणावष्टब्धत्वादेव घादीनां निवृत्तिः सिद्धेति भावः। स्यादेतत्—मा भूवन्ननेन घादयः, तस्यग्रहणेन निर्वर्तितत्वात्; 'तस्येदम्' (४.३.१२०) इत्यनेन तु प्राप्नुवन्ति, तस्येदंविशेषत्वाद्विकारावयवयोरिति ? तन्न, 'तस्येदम्' इत्येव विकारावयवयोरणादिषु सिद्धेषु पुनस्तेषां विधानं शैषिकाणां बाधनार्थमेव। किं तर्ह्युच्यते—तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थमिति, यावता सूत्रप्रवृत्तिरेव शैषिकनिवृत्त्यर्था ? सत्यम्; तस्यग्रहणे त्वसति सूत्रप्रवृत्तिः शैषिकानपि विषयीकुर्यादिति तस्यग्रहणस्यैवायं भारः यदुत वं शैषिका निवर्तन्ते। 'हालः, सैरः' इति। हलशब्दः 'नब्विषयस्यानिसन्तस्य' (फि.सू. २.२६) इत्याद्युदात्तः। सीरशब्दः क्रन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः, नात्र वक्ष्यमाणस्यापवादस्य कस्यचित्प्रसङ्ग इत्यणभवति।

इदं च योगविभागेनाणादिविधानस्य प्रयोजनं दर्शितम्। यदि हि 'तस्य विकारः' (४.३.१३४), 'बिल्वादिभ्योऽण्' (४.३.१३६) इत्येवापवादविधानार्थमुच्येत, ततो हलस्य विकार इत्यत्र 'तस्येदम्' (४.३.१२०) इत्यनेन प्रत्ययो विधातव्यः, ततश्चाणं बाधित्वा 'हलसीराट्ठक्' (४.३.१२४) इति ठक् प्राप्नोति, तथान्यस्मिंस्तस्येदंविषये; योगविभागेन त्वणादीनां विधानादणेव भवति, तस्यग्रहणे तु घादीनां निवृत्तिः प्रयोजनम्। वृजीनां विकारो वार्ज इति, वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात् पक्षे आद्युदात्तत्वादण्। यदि त्वत्र 'तस्येदम्' इत्यण्प्रत्ययः स्यात्; यदि वानेन घादयो विधीयेरन् ततो 'मद्रवृज्योः कन्' (४.२.१३१) इति कन् स्यात्। तथा त्रिगर्तानां विकारः त्रैगर्त इति, त्रिगर्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अत्र प्रथमः 'प्राग्दीव्यतोऽण्' (४.१.८३) प्राप्तः, जनपदलक्षणो वुञ् द्वितीयः, गर्तोत्तरपदलक्षणश्छस्तृतीयः, तदवधिग्रहणेन विहितो वुञ् चतुर्थः; अनेन त्वणेव भवति। तथा रङ्कूणां विकारो राङ्कव इति—अत्र 'प्राग्दीव्यतोऽण्' प्रथमः, तदपवादयोः 'अवृद्धादपि' (४.२.१२५) इति 'ओर्देशे ठञ्' (४.२.११९) इति वुञ्ठञोस्तुल्यकक्षयोरन्यतरो द्वितीयः, 'कोपधादण्' (४.२.१३२) इति वा कच्छादिपाठाद्वाऽण् तृतीयः, 'मनुष्यतत्स्थयोर्वुञ्' (४.२.१३४) चतुर्थः; अनेन त्वाण् प्राप्तः ओरञा बाधितः 'कोपधाच्च' (४.३.१३७) इति प्रतिप्रसूयते। यदि तर्हि विकारावयवयोर्घादयो न भवन्ति पाटलिपुत्रस्यावयवाः पाटलिपुत्रकाः प्रासादा इति, 'तस्येदम्' इत्यत्रार्थे 'रोपधेतोः प्राचाम्' (४.२.१२३) इति वुञ् न प्राप्नोति ? नैष दोषः; प्राण्योषधिवृक्षेभ्यो हि घादीनामवयवे निवृत्तिः, तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्योऽवयवे निवृत्तिः स्यात्! ॥

## १३५. अवयवे च प्राण्योषधिवृक्षेभ्यः।

'मौर्वम्' इति। मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' (फि.सू. २.२७) इत्याद्युदात्तः। 'खादिरम्' इति। खादेः खदिरशब्दः किरच्प्रत्ययान्तो निपातितः, तेनानुदात्तादिलक्षणो वुञ् प्राप्नोति। यदि त्वणिष्यते, बिल्वादिषु पठितव्यः।

'कृतनिर्देशौ हि तौ' इति। 'तस्येदम्' (४.३.१२०) इत्यनेन। यद्यपि शैषिकनिवृत्त्यर्थत्वं पूर्वयोगस्य प्रयोजनमुक्तम्, तथापि तदनपेक्ष्य भाष्यमतम्, मार्त्तिकमित्यादौ तावदणादयः सिद्धा इत्यभिसन्धायेदमुक्तम् ॥

## १३६. बिल्वादिभ्योऽण्।

'अञ्मयटोरपवादः' इति। तत्र काण्डपाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, बिल्वशब्दस्य 'बिल्वतिष्योरन्तःस्वरितः' (फि.सू. १.२३) इत्यन्तःस्वरितः, उदात्तो वा।

व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ। मसूरगोधूमगवीधुकशब्दाः 'लघावन्ते द्वयोश्च' (फि सू. २.४२) इति मध्योदात्ताः। इषेः क्सः, इक्षुः, प्रत्ययस्वरेणान्तोदात्तः। वेणुशब्दः 'विभाषा वेण्विन्धानयोः' (६ १.२१५) इति पक्षेऽन्तोदात्तः। कर्पासीशब्दो जातिलक्षणङीषन्तः। कर्कन्धूशब्दः 'अलाबूकर्कन्धूदिधिषूः' (द.उ.- १.१७६ ?) इति निपातनान्मध्योदात्तः, 'कुटीशमीशुण्डाभ्यो रः' (५ ३.८८) इति कुटीरशब्दः प्रत्ययस्वरेणान्तोदात्तः। 'मयड्बाधनार्थम्' इति। 'मयड्वैतयोः' (४.३.१४३) इत्यादिना प्राप्तस्य मयटो बाधनार्थम्, शेषेभ्यस्त्ववृद्धेभ्यः शब्देभ्यः पक्षे मयड् भवत्येव। अण्ग्रहणं बाधकबाधनार्थम्। बिल्वादिभ्यो यथाविहितमित्युच्यमानेऽपि हि पाटलीशब्दाङ्ङीषन्तादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनादञेव स्यात्; अण्ग्रहणत्त्वणेव भवति॥

## १३७. कोपधाच्च।

'अणोऽपवादः' इति। 'ओरञ्' (४.३.१३९), 'अनुदात्तादेश्च' (४.३.१४०) इति प्राप्तस्य, तित्तिडीकादयः 'लघावन्ते' (फि.सू. २.४२) इत्यादिना मध्योदात्ताः॥

## १३८. त्रपुजतुनोः षुक्।

'अप्राण्यादित्वात्' इति। प्राण्योषधिवृक्षेभ्योऽन्यतमत्वस्याभावादित्यर्थः॥

## १३९. ओरञ्।

देवदारुभद्रदारुशब्दौ 'पीतद्र्वर्थानाम्' (फि.सू. २.३७) इत्यादिनाद्युदात्तौ। पीतद्रुः सरलो वनस्पतिः, पीतद्रुरर्थो येषां तेषामादिरुदात्तो भवतीत्यर्थः॥

## १४०. अनुदात्तादेश्च।

'दाधित्थम्, कापित्थम्' इति। दधनि तिष्ठतीति 'सुपि स्थः' (३.२.४) उपपदसमासः, पृषोदरादित्वात्सकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्॥

## १४१. पलाशादिभ्यो वा।

'उभयत्रविभाषेयम्' इति। कथमित्याह—'पलाशखदिर' इत्यादि। पलाशशब्दो घृतादित्वादन्तोदात्तः। खदिरशब्दः 'अजिरशिशिर' (द.उ. ८.२७) इत्यादौ किरच्प्रत्ययान्तो निपातितः। शिंशपाशब्दो 'द्वितीयं प्रागीषात्' (फि.सू. ३.५०) इति वर्तमाने 'पान्तादीनां गुर्वादीनाम्' (फि.सू. ३.५५) इति मध्योदात्तः। 'स्पदि किञ्चिच्चलने' (धा.पा. १४), 'अनुदात्तेतश्च हलादेः' (३.२.१४९) इति युच्; किरतेरीरन्, करीरम्, 'कॄशॄभ्यामीषन्' (द.उ. ९.९), 'शॄपॄभ्यां किच्च' (द.उ. ९.१०), शिरीषम्, शेषे नित्स्वरेणाद्युदात्तावेतौ। विकङ्कतमूलासयवासशब्दाः 'ग्रामादीनां च' (फि.सू. २.३८) इत्याद्युदात्ताः॥

## १४२. शम्याष्ट्लञ् ।

'अञोऽपवादः' इति । शमीशब्दो गौरादिङीषन्तः । 'शामीली स्रुक्' इति । चातुर्मास्ये वरुणप्रघासेषु शमीमय्यः स्रुचो भवन्तीति श्रुतम् ॥

## १४३. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।

'मौद्गः सूपः, कार्पासमाच्छादनम्' इति । उभयत्र बिल्वाद्यण्, विकारावयवयोरभक्ष्याच्छादनयोश्च यथासंख्यं न भवति; विकारावयवयोरसमासनिर्देशेन प्रत्येकमभिसम्बन्धात् ।

'तद्विषये यथा स्यात्' इति । यद्येतयोरिति नोच्येत, उत्तरैर्विशेषप्रत्ययैरञादिभिः सम्प्रधारणायां परत्वात्त एव स्युः, पूर्वेषां विशेषप्रत्ययानां मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यत इति प्राणिरजतादिभ्योऽञादय इत्युक्तम् । 'एतयोः' इति वचनं पुनर्विधानार्थं सम्पद्यत इति परेषामपि विषये मयड् भवति ॥

## १४४. नित्यं वृद्धशरादिभ्यः ।

'नित्यं मयट्प्रत्ययो भवति' इति । प्राग्दीव्यतीयानामपवादः । अणं तु कोपधलक्षणमसेव परत्वात् बाधते । 'शाकमयम् आम्रमयम्' इति । आम्रशब्दः 'अमितम्योर्दीर्घश्च' (द.उ. ८.३६) इति रन्प्रत्ययान्तः ।

'तदनेन क्रियते' इति । नित्यंशब्दोऽतिरिच्यमानः पूर्वाचार्यपठितस्य वाक्यस्य स्मारक इति । एवं च मृच्छब्दस्य शरादिषु पाठोऽस्यैव प्रपञ्चार्थो द्रष्टव्यः ॥

## १४५. गोश्च पुरीषे ।

'गव्यं पयः' इति । कथं पुनरत्र प्रसङ्गः, यावता विकारावयवयोरिति वर्तते, पयश्च न विकारो नावयवः ? तत्राह—'पुरीषं न विकारः' इत्यादि । अक्रियमाणे पुरीषग्रहणे इष्टसिध्यर्थमेव 'तस्येदम्' (४.३.१२०) इत्यधिकारे 'गोर्मयट्' इति सूत्रं कर्त्तव्यम्' ततश्चात्रापि प्रसङ्ग इत्यर्थः ॥

## १४६. पिष्टाच्च ।

'पिष्टमयं भस्म' इति । पैष्टी सुरेति तु सामान्यविवक्षायाम् 'तस्येदम्' (४.३.१२०) इत्यण्; 'प्रदीयतां दाशरथाय मैथिली' इतिवत् ॥

## १४७. संज्ञायां कन् ।

## १४८. व्रीहेः पुरोडाशे ।

## १४९. असंज्ञायां तिलयवाभ्यम् ।

'यावकः' इति । यवशब्दाद्विकारेऽण्, तदन्तात् 'यावादिभ्यः' (५.४.२९) इति स्वार्थे कन् ॥

## १५०. द्व्यचश्छन्दसि ।

## १५१. नोत्वद्वर्ध्रबिल्वात् ।

'मौञ्जम्' इति । मुञ्जशब्दात् 'तृणधान्यानां च द्व्यषाम्' (फि.सू. २.२७) इत्याद्युदात्तत्वादौत्सर्गिकोऽण् । 'गार्मुतम्' इति । गर्मुच्छब्दः 'मृग्रोरुतिः' (द.उ. ६.१) 'ग्रोर्मुट् च' (द०उ. ६.२ ?) इत्युतिप्रत्ययान्तत्वादन्तोदात्त इति 'अनुदात्तादेश्च' (४.३.१४०) इत्यञ् । कथं तर्हि 'तस्मा एतं गार्मुतं चरुं निर्वपेत्' इत्यन्तोदात्तत्वम् ? सर्वविधीनां छन्दसि विकल्पितत्वादण् भविष्यति । 'वार्ध्री' इति । वर्ध्रशब्दः 'लघावन्ते' (फि.सू. २.४२) इत्याद्युदात्तः, तस्मादण् 'टिड्ढाणञ्' (४.१.१५) इति ङीप् ।

'मतुब्निर्देशे' इत्यादि । असति तस्मिन् वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिः स्यात् । 'बैल्वी' इति । बिल्वाद्यण् (४.३.१३६) ॥

## १५२. तालादिभ्योऽण् ।

'मयडादीनामपवादः' इति । आदिशब्देनाञो ग्रहणम्, बहुवचनं तु तयोरेव प्रकृतिभेदेन बहुत्वात् । तत्र तालश्यामकाभ्यां वृद्धत्वान्मयट् प्राप्तः, बर्हिणस्य विकारो बार्हिणम्––'प्राणिरजतादिभ्योऽञ्' (४.३.१५४) तस्मात् 'ञितश्च तत्प्रत्ययात्' (४.३.१५५) इत्यञ् प्राप्तः, शेषेभ्योऽनुदात्तादिलक्षणस्य । लिशिदृशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात् कः, 'अन्येषामपि दृश्यते' (६.३.१३७) इति दीर्घत्वम् । 'चप् सान्त्वने' (धा.पा. ३९९) पचाद्यच् । पीयूक्षाशब्दः 'लघावन्ते' (फि.सू. २.४२) इति मध्योदात्तः, तत्र हि 'फिष' इत्यधिकारात् प्रागेव टापः स्वरप्रवृत्तिः, इन्द्रायुधशब्द समासस्वरेणान्तोदात्तः ।

'तालाद्धनुषि' इति । अन्यत्र तालमयमित्येव भवति । अण्ग्रहणं बाधकबाधनार्थम्, अन्यथा यथाविहितमित्युच्यमाने बार्हिणशब्दादवृद्धलक्षणो मयट् स्यात्, वचनं तु 'ञितश्च तत्प्रत्ययात्' (४.३.१५५) इत्यञो बाधनार्थं स्यात् ॥

## १५३. जातरूपेभ्यः परिमाणे ।

'मयडादीनामपवादः' इति । आदिशब्देनाञो ग्रहणम्, बहुवचनं तु पूर्ववत् । तत्र वृद्धेभ्यो हाटकादिभ्यो मयटोऽपवादः, तपनीयादिभ्योऽनुदात्तादिभ्योऽञः ॥

## १५४. प्राणिरजतादिभ्योऽञ् ।

'अणादीनाम्' इति । आदिशब्देन मयड् गृह्यते, बहुवचनं तु पूर्ववत् । तत्राद्युदात्तेभ्यः प्राणिशब्देभ्योऽणोऽपवादः, वृद्धेभ्यो मयटः, रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः, अनुदात्तादेस्तु मयटः । 'कापोतम्, मायूरम् तैत्तिरम्' इति । तित्तिरिशब्दस्तरतेः 'सन्वच्चाभ्यासस्य' इति किप्रत्ययान्तोऽन्तोदात्तः, शेषौ 'लघावन्ते' (फि सू. २.४२) इति । मध्योदात्तौ । 'परिशिष्टमिहोदाहरणम्' इति चोक्तम्, तस्माच्छुकबकगृध्रादय इहोदाहार्याः । शुकबकशब्दौ 'प्राणिनां कुपूर्वाणाम्' (फि.सू. २.३०) इत्याद्युदात्तौ । गृध्रशब्दो रन्प्रत्ययान्त आद्युदात्तः । कथं तर्हि कपोतमित्याद्युदाहृतम्, सत्युदात्तार्थे प्राणिग्रहणेऽनुदात्तादेरपि प्राणिनः परत्वादनेनैवाञ्भवितुमर्हतीति मन्यते, आह च 'अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन' इति ? कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? सापवादकः स विधिर्मयटा परेण बाध्यते, अयं पुनर्निरपवादः, अनेनैव हि परत्वान्मयड् बाध्यते । किं तर्हि सिद्धं भवति ? श्वाविधो विकारः शौवाविध इति सिद्धं भवति । कथं सिद्धं भवति ? श्वानं विध्यतीति क्विप्, 'नहिवृति' (६.३.११६) इति दीर्घः, ग्रहिज्यादिसम्प्रसारणम्, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वादनुदात्तादिः । तत्रानुदात्तलक्षणस्याञो बाधकं मयटं परत्वादयमञ् बाधते, द्वारादित्वाद्वृद्धिप्रतिषेधः, ऐजागमश्च ॥

## १५५. ञितश्च तत्प्रत्ययात् ।

तयोर्वाचकत्वेन यः सम्बन्धी प्रत्ययः स तत्प्रत्ययः, षष्ठीसमासः । 'विकारावयवयोरेव' इति । यदि तु ञित्प्रत्ययान्तः प्राण्योषधिवृक्षवाची सम्भवति ततोऽवयवेऽपि भवति; द्वयोः प्रकृतत्वात् । लक्ष्यमनपेक्ष्यैवमुक्तम् । ननु च पूर्वं पञ्चालाः, पटो दग्ध इत्यवयवे समुदायशब्दो दृष्टः, विकारे च प्रकृतिशब्दः–शालीन्भुङ्क्ते मुद्गैरिति शालिविकारान् मुद्गविकारैरित्यर्थः; ततश्च देवदार्वाद्यवयवविकारवृत्तेर्देवदार्वादिशब्दात्तद्विकारावयवयोस्तेन तेनाञादयो भविष्यन्ति, नार्थोऽनेनेत्याशङ्क्याह–'मयटोऽपवादः' इति । सत्यमस्ति यथाकथञ्चिदिष्टसिद्धिः, तथापि वृद्धलक्षणो मयण्मा भूदित्येवमर्थमेवाञ्विधेयः । अन्यथा येनैव हेतुनैतद्वाक्यं भवति–देवदारवस्य विकारः, शामलस्य विकारः, तेनैव मयडपि स्यात्, विकारार्थत्तेनैव हेतुना मयडपि प्राप्नोति ? अनभिधानान्न भविष्यति, तदेव तर्ह्यनभिधानं विधानेन प्रतिपाद्यते । यद्येवम्, 'तस्य विकारः' (४.३.१३४), 'उष्ट्राद्वुञ्' (४.३ १५७), औष्ट्रकं चर्म, तस्य विकार औष्ट्रिकोपानदिति, 'टिड्ढाणञ्' (४.१.१५) इति ङीप्प्राप्नोति, न चेष्यते, एवं हि सौनागाः पठन्ति–'वुञश्चाञ ईतः प्रसङ्गः' इति । तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्द इति तेन तेन लक्षणेनाञादयो भविष्यन्ति । अनभिधानात्तु विकारावयवप्रत्ययान्तान्न मयड् भविष्यतीत्येतदेव साम्प्रतम् । 'बैल्वमयम्' इति । 'ञितो यत्नेन मयटं सूत्रकारो निवर्त्तयन् अन्यतो वष्टि मयटम्' इति वृत्तिकृतो मतम् । भाष्यवार्तिककारौ पुनराहतुः–'तच्चानभिधानमाश्रयितव्यम्, अभिधाने ह्यन्यतोऽपि मयटः प्रसङ्गः–बैल्वस्य विकारः' इति ॥

## १५६. क्रीतवत्परिमाणात् ।

'चरणेभ्यो धर्मवत्' (४.२.४६) इत्यनेन तुल्यमेतत् । 'संख्या च परिमाणग्रहणेन गृह्यते' इति । तदाह–'न रूढिपरिमाणमेव' चकारादुन्मानं च, परिमीयतेऽनेनेति परिमाणमिति यौगिकः परिमाणशब्द इत्यर्थः । 'शत्यः, शतिकः' इति । 'शताच्च ठन्यतावशते' (५.१.२१) । 'साहस्रम्' इति । 'नैष्किकः' इति । 'असमासे निष्कादिभ्यः' (५.१.२०) इति ठक् । 'शतमानविंशतिकसहस्रवसनादण्' (५.१ २७) ।

'वतिः सर्वसादृश्यार्थः' इति । किमेवं सति सिद्धं भवति ? तदाह–'अध्यर्धपूर्वात्' इत्यादि । आदिशब्देन प्रकृतिप्रत्यययोः प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि इति तदन्तविधेश्च परिग्रहः । एतदुक्तं भवति–याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया विकारे भवन्ति । 'द्विसाहस्रम्' इति । पक्षे लुक्, 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः । 'द्विनैष्किकम्' इति । प्राग्वतीयस्य ठञः 'द्वित्रिपूर्वान्निष्कात्' (५.१.३०) इति पक्षे लुक्, 'परिमाणान्तस्य' (७.३.१७) इत्युत्तरपदवृद्धिः ॥

## १५७. उष्ट्राद्वुञ् ।

## १५८. उमोर्णयोर्वा ।

उमाशब्दस्तृणधान्यानां चेत्याद्युदात्तः, ऊर्णाशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां वुञभावे यथाक्रममणञौ ॥

## १५९. एण्या ढञ् ।

स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह–'पुंसस्त्वञेव भवति' इति ॥

## १६०. गोपयसोर्यत् ।

'मयडविषये तु' इति । 'मयड्वैतयोः' (४.३.१४३) इति विहितस्य मयटो विषये ॥

## १६१. द्रोश्च ।

'अञोऽपवादः' इति । 'ओरञ्' (४.३.१३९) इत्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । 'द्रव्यम्' इति । गुणैः संद्रूयते प्राप्यत इति गुणसंद्रावः ॥

## १६२. माने वयः ।

मीयते येन तन्मानं प्रस्थादि ॥

## १६३. फले लुक् ।

[1]'तद्विशेषे' इति । विकारावयवविशेषे । उदाहरणेषु आमलकीशब्दाद् वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र 'लुक्तद्धितलुकि' (१.२.४९) इति स्त्रीप्रत्ययस्य लुक् । ननु च

1. तद्विषये—काशिका.

न फलं वृक्षस्य विकारः, स हि द्विविधो भवति–यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति; फलं तु नैवंविधमिति वृक्षे स्थितमपि काकादिवन्न तस्य विकारः नाप्यवयवः, अनारम्भकत्वात्; उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयते ? इत्याह––'फलितस्य' इति । फलशब्दस्तारकादिः, 'प्रकृतेरवस्थान्तरं विकारः' इत्युक्तम्, अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव । तत्र वृक्षत्वं तूभयत्रानुवर्तते, सर्वत्र चोत्तरावस्था विकारः, सर्वश्चावयवः स्वोत्पत्तेः प्रागनोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरथ च गवादेरवयवो भवति, तदेतत्फलेऽपि समानम् । पल्लवशब्दोऽर्द्धर्चादिः । फले लुग्विधानमनर्थकम्; प्रकृत्यन्तरत्वात् । आमलकादिशब्दः फले वर्त्तते, न यौगिकः––आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादिशब्दः क्षत्रिये जनपदे च । प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति––आमलक्या विकारः कुवल्या विकार इति, तथा प्रत्ययोऽपि स्यात् ॥

## १६४. प्लक्षादिभ्योऽण् ।

'अञोऽपवादः' इति । शिग्रुकाक्षतुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य । तत्र प्लक्षशब्दः 'फिषः' (फि.सू. १.१) इत्यन्तोदात्तः; फिषिति प्रातिपदिकस्य नाम । न्यग्रोधशब्दः 'लघावन्ते' (फि.सू. २-४२) इति मध्योदात्तः । अश्वत्थशब्दो घृतादित्वादन्तोदात्तः । इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'विधानसामर्थ्यात्' इति । यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात् । न ह्यणोऽञो वा लुकि कृते कश्चिद्विशेषः । 'नैयग्रोधम्' इति । 'न्यग्रोधस्य च केवलस्य' (७.३ ५) इत्यैजागमः ॥

## १६५. जम्ब्वा वा ।

अञस्तु भवत्येव । न ह्यञो विधानसामर्थ्यम्; फलादन्यत्र श्रवणात् । 'जम्बूनि' इति । फलस्याभिधेयत्वान्नपुंसकह्रस्वे 'जश्शसोः शिः' (७.१.२०), नुम्, 'सर्वनामस्थाने च' (६.४.८) इति दीर्घः ॥

## १६६. लुप् च ।

'युक्तवद्भावे विशेषः' इति । लुपि हि सति 'लुपि युक्तवद्व्यक्तिवचने' (१.२.५१) इति प्रकृत्यर्थगते लिङ्गवचने भवतः, लुकि त्वभिधेयवल्लिङ्गवचने स्याताम् ।

'फलपाकशुषाम्' इति । फलपाकेन शुष्यन्तीति फलपाकशुषः । 'व्रीहयो, मुद्गाः' इति । बिल्वाद्यणो (४.३.१३६) लुक्, यवमाषतिलशब्दाः 'तृणधान्यानां च द्व्यषाम' (फि.सू. २.२७) इत्याद्युदात्ताः, तेभ्य औत्सर्गिकस्याणो लुक् । मल्लिकाशब्दो 'मादीनाम्' (फि.सू. ३ ५३) इति मध्योदात्तः । अस्यार्थः–अत्र 'द्वितीयः प्रागीषात्' (फ सू. ३.५०) इति त्र्यषामिति वर्तते, मकारादीनां त्र्यचां द्वितीयमक्षरमुदात्तं भवति । विदारीबृहतीशब्दौ गौरादिङीषन्तौ । नवमल्लिकाशब्दः 'लघावन्ते' (फि.सू. २.४२) इति मध्योदात्तो जातिशब्दः । अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततो मतुप् 'ह्रस्वनुड्भ्यां मतुप्' (६ १ १७६) इति मतुबाद्युदात्तः, ङीबनुदात्तः । तदेवमंशुमतीशब्दे मतुबकार उदात्तः । 'पाटलानि' इति । बिल्वादित्वादण् (४.३.१३६), सालशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'क्वचिदन्यदपि भवति' इति । लुपोऽन्यदपि क्वचित्कार्यं भवति,

तत्पुनर्लुग्लुपोरभावश्च । कदम्बमित्यादावनुदात्तादिलक्षणस्याञो लुक् । कदम्बादयः शब्दाः 'लघावन्ते' (फि.सू. २.४२) इति मध्योदात्ताः । 'बैल्वानि' इति । अत्रोभयाभावः, बिल्वाद्यण् ॥

## १६७. हरीतक्यादिभ्यश्च ।

हरीतक्यादिषु द्राक्षाप्रभृतिभ्यो मयटो लुप्, उदात्तादिभ्योऽणः, अनुदात्तादिभ्योऽञः ॥

## १६८. कंसीयपरशव्ययोर्यञञौ लुक् च ।

'[1]प्राक् क्रीताच्छेन कंसीयः' इति । 'प्राक् क्रीताच्छः' (५.१.१) इत्यधिकारे 'तस्मै हितम्' (५.१.५) इति छप्रत्ययेन कंसीयशब्दो व्युत्पाद्यत इत्यर्थः । एतेनोगवादिभ्यो यता परशव्यशब्द इति व्याख्यातम् । 'तत्सन्नियोगेन च कंसीयपरशव्ययोर्लुग्भवति' इति । प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्तयोः प्रत्यययोर्लुग्भवतीत्यर्थः ।

अथ 'वृतृवदिहनिकमिकषिभ्यः सः' (द.उ. ९.२१) इति सः, कंसशब्दे सप्रत्ययः । यश्च परान् शृणोतीति परशुः, 'आङि परयोः खनिशृभ्यां [2]डिच्च' (द.उ. १.११८) इति कुप्रत्ययस्तयोर्लुक्कस्मान्न भवति ? तत्राह—'प्रातिपदिकाधिकारात्' इति । प्रातिपदिकाधिकारे हि ततः परयोश्छयतोर्लुग्भवति, न धातुप्रत्ययस्य, आह-'ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थम्' इति; ननु च 'अतः कृकमि' (८.३.४६) इत्यत्र कंसग्रहणं लिङ्गम्–नावयवभूताविषु व्यपदेशिवत्त्वाद्यर्थं भवतीति, तेनोकारसकारयोर्लुग्न भविष्यति ? सत्यम्; वृद्धावृद्धावर्णस्वरद्व्यच्लक्षणप्रत्ययविधौ तत्सम्प्रत्ययार्थमवश्यकर्तव्यस्य ङ्याप्प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम् । अत एव च 'ङ्याप्प्रातिपदिकात्' (४.१.१) इत्यत्र नेदं वृत्तिकृता दर्शितम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थाध्यायस्य तृतीयः पादः ॥

—०—

1. 'प्राक्क्रीताच्छः–कंसीयः'–काशिका. 2. णिच्च-मुद्रितप्रतिः ।

# अथ चतुर्थाध्यायस्य

## चतुर्थः पादः

### १. प्राग्वहतेष्ठक् ।

'तदाह' इति । 'वाक्यादेतत्प्रत्ययविधानम्' (काशिका. ४.४.१) इति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवति; अप्रातिपदिकत्वात् । तेन तदिति कर्ममात्रं निर्दिश्यते, न तु द्वितीयासमर्थविभक्तिः ।

'माशब्द इत्याह' इति । शब्दो मा कारीत्याहेत्यर्थः । संसर्गरूपस्य वाक्यार्थस्येतिकरणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं सम्भवति, नान्यथेति मत्वैष विग्रहः । 'वाक्यादेतत्प्रत्ययविधानम्' इति । एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु, किं पृथग्वचनेन ।

'आहौ' इति । आहेति पदे प्रकृतिभागस्यागन्तुकेनेकारेणेदमोऽनुकरणम् । तत्र शब्दे कार्यस्यासम्भवादर्थप्रत्ययविधिः । क्रियाविशेषणात्' इति । तदन्ताभिधायिन इत्यर्थः ।

'पृच्छतौ' इति । तिङन्तानुकरणमेतत् । एवं 'गच्छतौ' इति । तिङन्तार्थे तु प्रत्ययः । 'सुस्नातं पृच्छति' इति । सुस्नातं भवता, सुस्नातो भवानित्येवं वा पृच्छतीत्यर्थः । 'सौखरात्रिकः' इति । सुखरात्रिं पृच्छति । एवं यः पृच्छति, स एवमुच्यते । एतेन सौखशायनिको व्याख्यातः । अनुशतिकादित्वादुभयपदवृद्धिः । 'गौरुतल्पिकः' इति । तल्पशब्देन भार्या लक्ष्यते ।।

### २. तेन दीव्यति खनति जयति जितम् ।

'सर्वत्र करणे तृतीया' इति । दीव्यत्यादावभिहितत्वात्कर्त्तरि तृतीया नोपपद्यत इति तत्साहचर्याज्जितमित्यनेनापि योगे करण एव तृतीयेति सर्वशब्दार्थः । तेन देवदत्तेन जितमित्यत्र न भवति । हेतुतृतीया तु नाशङ्किता; अनभिधानात् । न हि हेतुतृतीयान्तादुत्पद्यमानेन ठका विग्रहवाक्यार्थस्याभिधानमस्ति ।

'प्रत्ययार्थे' इति । निर्द्धारण एषा सप्तमी, सामान्यपेक्षमेकवचनम् । इह दीव्यतीत्यादौ तिपो बहवोऽर्थाः—एकत्वसंख्या, वर्त्तमानकाले, युष्मदस्मद्व्यतिरेक इति, तेषु मध्य इत्यर्थः । तदेव दर्शितम् । 'संख्याकालयोरविवक्षा' इति । नान्तरीयकत्वात् । अवश्यं हि यया कयाचित्संख्यया येन केनचित्कालेन निर्देश इति तयोरुपादानम्, न तु तयोर्विवक्षा । तत आक्षिकौ आक्षिका इति द्विबह्वोरपि भवति, अक्षैरदीव्यदित्यादौ कालान्तरे चाक्षिक इति भवति, न्यायस्य तुल्यत्वात् पुरुषस्याप्यविवक्षा, तेनाक्षिकस्त्वम्, आक्षिकोऽहमित्यत्रापि भवति । यद्येव तर्हि संख्याकालपुरुषाणामविवक्षा तथा कर्तुरपि प्राप्नोति, एकप्रत्ययवाच्यत्वात् ? नैषः दोषः, कर्तुरविवक्षायामाख्यातोपादानमकिञ्चित्करं स्यात् । विपर्ययस्तु न भवति—कर्तुरविवक्षा कालादीनां विवक्षेति,

कर्तुः प्रधानत्वात् । संख्यादिविशिष्टो हि कर्त्ताऽऽख्यातानां प्रधानभूतोऽर्थः, तेन स तावद्विवक्ष्यते, इतरेषां नान्तरीयकत्वादविवक्षा । किञ्च, साधनस्याप्यविवक्षायां जितमित्यस्योपादानर्थं स्यात् ।

इहाख्यातेषु क्रिया प्रधानभूता, गुणभूतः कर्त्ता, अत एव किं करोति देवदत्त इति क्रियाप्रश्ने पचतीत्याख्यातेनोत्तरं दीयते, न तु कृदन्तेन पाचक इति; तस्य सत्त्वप्रधानत्वात् । किं च यदि कृदन्तेष्विवाख्यातेष्वपि कर्त्ता प्रधानभूतः स्यात्, यथा--पाचकस्यापत्यमित्यपत्यादिभिर्योगो भवति, तथाऽऽख्यातवाच्यस्यापि स्यात् पचत्यपत्यमिति, क्रियावेशः स्यात्, यथा--पाचकस्तिष्ठतीति । तस्मात्क्रियाप्रधानमाख्यातम् । ततश्च तदर्थे विधीयमानः प्रत्ययोऽपि क्रियाप्रधानः स्यादिति तदन्तस्यापत्यादिभिर्योगः क्रियावेशश्च न स्यात्--आक्षिकस्यापत्यमाक्षिकं पश्येति । तत्राह--'क्रियाप्रधानत्वेऽपि चाख्यातस्य' इति । आख्यायतेऽनेन क्रिया प्रधानभूतेत्याख्यातस्तिङन्तः, 'कृत्यल्युटो बहुलम्' (३.३.११३) इति करणे क्तः, स्वनिकायप्रसिद्धिरेषा । 'स्वभावात्' इति । यथा 'तेनैकदिक्' (४.३.११२), 'तसिश्च' (४.३.११३) इत्येकस्मिन्नर्थे विधीयमानयोरणतसोस्सत्त्वभूतार्थाभिधायित्वम्, विपर्ययश्च--सौदामनी विद्युत्सुदामतो विद्युदिति, तथात्रापि । न हि स्वभावः पर्यनुयोगमर्हति ॥

## ३. संस्कृतम् ।

'योगविभाग उत्तरार्थः' इति । उत्तरोऽपवादः संस्कृत एव यथा स्यात् ॥

## ४. कुलत्थकोपधादण् ।

कुले तिष्ठति कुलस्थः, अस्मादेव निपातनात् सकारस्य तकारः । केचित् पुनः सकारमेवाधीयते ॥

## ५. तरति ।

## ६. गोपुच्छाट्ठञ् ।

## ७. नौद्व्यचष्ठन् ।

इह ठगधिकारे सूत्रे क्वचित्प्रत्ययस्यानुबन्धो ङीबर्थः । स हि किं सांहितिकः, किं वानुबन्धः ? इति तत्र सन्देहे विषयपरिगणनं करिष्यन् श्लोकवार्तिककारः सर्वानेव षितः परिगणयति--'आकर्षात्' इति--यदि तु यत्र सन्देहस्तत्रैवोपादीयेत तावन्तष्ठगधिकारे षित इत्युच्येत, तदा आकर्षादिषु प्रत्ययस्याषित्त्वमनार्षमाशङ्क्येत । 'कुसीदसूत्रात्' इति । कुसीदादिकं सूत्रं यस्य तत्कुसीदसूत्रं कुसीदशब्दश्च, दशैकादशशब्दश्च ।

ननु सप्तैते भवन्ति, कुसीदादिसूत्रेण द्वयोः षितोर्विधानात् ? इत्यत आह--'विधिवाक्यापेक्षं च षट्त्वम्' इति । सप्तानां प्रत्ययानां विधिवाक्यापेक्षमौपचारिकं षट्त्वमाश्रित्य 'षितः षडेते' इत्युक्तम् ॥

## ८. चरति ।

## ९. आकर्षात्ष्ठल् ।

'आकर्ष' इति । 'पुंसि संज्ञायां घः प्रायेण' (३.३.११८) इति अधिकरणे घः ॥

## १०. पर्पादिभ्यः ष्ठन् ।

पर्पादिषु 'पादः पत्' इति पठ्यते, पादाभ्यां चरति पदिकः, 'पद्यत्यतदर्थे' (६.३.५३) इत्यत्र वक्ष्यति–'पद्भाव इके चरतावुपसंख्यानम्' (वा. ७४०) इति, सोऽस्यैव प्रपञ्चार्थः ॥

## ११. श्वगणाट्ठञ्च ।

'श्वागणिकः' इति । ननु च श्वशब्दो द्वारादिषु पठ्यते, तदादिविधिश्च तत्रेष्यते, तत्कथं श्वागणिक इति ? तत्राह–'श्वादेरिञीत्यत्र' इति ॥

## १२. वेतनादिभ्यो जीवति ।

'धनुर्दण्डग्रहणं सङ्घातविगृहीतार्थम्' इति । तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् ॥

## १३. वस्नक्रयविक्रयाट्ठन् ।

वसेर्वस्नम् = मूल्यम् । 'क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्' इति । उक्तोऽत्र हेतुः । क्रयविक्रयेणेति समाहारद्वन्द्वः ॥

## १४. आयुधाच्छ च ।

आयुध्यतेऽनेनेति आयुधम्, 'घञर्थे कविधानम्' (वा. ३०६) इति कप्रत्ययः ॥

## १५. हरत्युत्सङ्गादिभ्यः ।

हरति = नयति, उपादत्ते वा ॥

## १६. भस्त्रादिभ्यः ष्ठन् ।

भस्त्रम् = चर्मविकारः, येन लोहादि ध्मायते, येन वा धान्यादिकं नीयते, 'हुयामाश्रुभसिभ्यस्त्रन्' (द.उ. ८.८४) इति करणे त्रन् । 'शीर्षभारः, शीर्षभारः' इति पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृते बहुलम्' (६.३.१४) इति सप्तम्या अलुक् ॥

## १७. विभाषा विवधवीवधात् ।

'पर्याहारे च' इति । परित आह्रियतेऽनेन तण्डुलादिकोऽर्थ इति पर्याहारः = उभयतो बद्धशिक्योऽसवाह्यः काष्ठविशेष उच्यते ।

वीवधशब्दो वार्तिके दर्शनात् सूत्रे प्रक्षिप्तः ॥

## १८. अण् कुटिलिकायाः ।

कुटिलव्याधानामुपरमणम् = कुटिलिका, 'संज्ञायां कन्' (५.३.८७) ॥

## १९. निर्वृत्तेऽक्षद्यूतादिभ्यः ।

## २०. त्रेर्मम्नित्यम् ।

'ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यते' इति । संख्यावचनस्त्वनभिधानान्न गृह्यते । 'उप्त्रिमम्' इति । वच्यादिसूत्रेण (६.१.१५) सम्प्रसारणम् ।

'नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्' इति । प्रत्ययरहितस्य त्र्यन्तस्य प्रयोगः स्वातन्त्र्यम्, स्वातन्त्र्यनिवृत्तौ सत्यां यो गुणस्तं दर्शयति–'त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति' इति । एवकारव्यवच्छेद्यं दर्शयति–'विषयान्तरे न प्रयोक्तव्यम्' इति । ननु विभाषया वाक्ये प्रसक्ते नित्यग्रहणं क्रियमाणं निर्वृत्ताधिकारे तद्विषयमेव वाक्यं निवर्त्तयितुमर्हति–पवित्रेणा निर्वृत्तमिति, यथा–'अन उपधालोपिनोऽन्यतरस्याम्' (४.१.२८) 'नित्यं संज्ञाछन्दसोः' (४.१.२९) इति, ततश्च विषयान्तरगतत्र्यन्तस्य स्वातन्त्र्यं स्यादेव कृत्रिमर्हत्सुविहितमिति ? एवं मन्यते–योगविभागोऽत्र कर्त्तव्यः, 'त्रेर्मब्भवति निवृत्ते' इत्येको योगः, ततः 'नित्यम्' । अत्र त्रेर्मबित्येवापेक्ष्यते न निर्वृत्त इति; योगविभागसामर्थ्यात् । तेन सर्वविषयस्वातन्त्र्यस्य नित्यग्रहणेन निवृत्तिः क्रियत इति । नन्वेवमपि 'नित्यम्' इत्यत्र निर्वृत्तमित्यस्यानपेक्षणात्स्वातन्त्र्यान्तरे नित्यमुपाधिः प्राप्नोति ? सत्यम्; अनभिधानात्तु तथा नाश्रीयते ।

'भावप्रत्ययान्तादिमब्वक्तव्यः' इति । 'तेन निर्वृत्तम्' (४.२.६८) इत्येतस्मिन्नर्थे । 'पाकेन निवृत्तं पाकिमम्' इति । एवं च त्र्यन्तावपि भावाभिधायिन इमपि कृते यस्येति लोपे च (६.४.१४८) 'कृत्रिमम्' इत्यादि सिद्धं भवति; स्वरेऽपि नास्ति विशेषः, उदात्तनिवृत्तिस्वरेणैवोदात्तत्वम् । सूत्रारम्भस्तु नित्यग्रहणेन स्वातन्त्र्यं निवर्तयिष्यामीत्येवमर्थं वेदितव्यः ॥

## २१. अपमित्ययाचिताभ्यां कक्कनौ ।

'अपमित्य' इति । 'उदीचां माङो व्यतिहारे' (३.४.१९) इति क्त्वाप्रत्ययेऽपशब्देन समासे क्त्वो ल्यप् (७.१.३७) 'मयतेरिदन्यतरस्याम्' (६.४.७०) इतीत्वम्, 'क्त्वातोसुन्कसुनः' (१.१.४०) इत्यव्ययसंज्ञा । तेन नात्र तृतीयासमर्थात्प्रत्ययः ॥

## २२. संसृष्टे।

ननु यद्येन संसृष्टं तत्तेन संस्कृतं भवति; ततश्च संस्कृतमित्येव संसृष्टेऽपि प्रत्ययः सिद्धः ? न सिध्यति; सत उत्कर्षाधानम् = संस्कारः, एकीभावस्तु – संसर्गः, न च यत्रासौ तत्रावश्यमुत्कर्षोऽस्ति, अशुचिद्रव्यसंसर्गे हि प्रत्युतापकर्ष एव भवति। तस्मात् संसृष्ट इति वक्तव्यम्। यद्यस्य निबन्धनमस्त्येतदेवास्तु, मा भूत्संस्कृतमित्येतत् ? तदवश्यं कर्त्तव्यम्, इहापि यथा स्यात्—विद्यया संस्कृतो वैद्यक इति, न ह्यत्र संसर्गोऽस्ति; मूर्त्तिधर्मत्वात्। किञ्च 'कुलत्थकोपधादण्' (४.४.४) संस्कृत एव यथा स्यात्संसृष्टे मा भूदित्येवमर्थं संस्कृतमित्येतन्न्नूवतीति वक्तव्यम् ॥

## २३. चूर्णादिनिः।

चूर्णेन ये संसृष्टास्तेषां चूर्णमस्तीति मत्वर्थीयेनैवेनिना सिद्धम् ? सत्यम्; तद्रूपविवक्षायां सिद्धम्। संसर्गविवक्षायां तु ठक् प्राप्नोति। अनभिधानं तु दुर्ज्ञानम् ॥

## २४. लवणाल्लुक्।

[1]'लवणद्रव्यवाची' इत्यादि। लवणशब्दोऽयमस्त्येव गुण वचनः—षण्णां रसानामन्यतमस्य वाचकः, अस्ति च द्रव्यवचनो यः सैन्धवादिषु वर्त्तते; तत्र यो गुणवचनः स न लुकं प्रयोजयति, मधुरादिशब्दवदभेदोपचारादेव द्रव्ये वृत्तिसिद्धेः। द्रव्यशब्दस्तु सोऽयमत्यभिसम्बन्धाद् द्रव्ये वर्त्तमानः। यद्यपि प्रष्ठी प्रचरी यष्टीः प्रवेशयेत्यादौ द्रव्यशब्दस्यापि क्वचिदभेदोपचारो दृष्टः, तथापि भेदविवक्षायां तत्स्थोऽपि दृश्यते—प्रष्ठस्येयं प्राष्ठी यष्टिमतः पुरुषानिति। तस्माद् द्रव्यवाचयेव लवणशब्दो लुकं प्रयोजयति, स च प्रयोजयत्येव ॥

## २५. मुद्गादण्।

## २६. व्यञ्जनैरुपसिक्ते।

ओदनादिषु रसो येन व्यज्यते तद्व्यञ्जनम्। बहुवचननिर्देशः स्वरूपविधिनिरासार्थः। उपसिक्तः = सेचनेन मृदूकृतः। इह यद्येनोपसिक्तं तत्तेन संसृष्टं भवति, तत्र संसृष्ट इत्येव सिद्धे नियमार्थं वचनम्—व्यञ्जनेभ्य उपसिक्त एव संसृष्टे यथा स्यात्, संसृष्टमात्रे मा भूत्, दध्ना संसृष्टा स्थालीति ॥

## २७. ओजःसहोम्भसा वर्त्तते।

## २८. तत्प्रत्यनुपूर्वमीपलोमकूलम्।

'क्रियाविशेषणम्' इत्यादि। आख्यातं हि धात्वर्थस्य कर्तव्यतामाचष्टे—वर्त्तते = वर्त्तनं करोति,

---

1. 'द्रव्यवाची लवणशब्दः'—काशिका.

सुप्यते = स्वापः क्रियते, शोभनमोदनं पच्यते = ओदनकर्मकः पाकः शोभनः क्रियते इति। पचिधात्वर्थः कर्त्तव्य एव सम्बध्यमानः कर्म सम्पद्यते, तस्य यत्समानाधिकरणं विशेषणं तदपि कर्मैव भवति।

'प्रातीपिकः, आन्वीपिकः' इति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः 'ऋक्पूरब्धूः' (५.४.७४) इत्यकारः समासान्तः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६.३.९७) इतीत्वम्। व्युत्पत्तिमात्रं चैतत्, प्रतिकूलानुकूलपर्यायौ ह्येतौ। 'ऊदनोर्देशे' (६.३.९८) इत्यूत्वमत्र न भवति; अदेशत्वात्, देशत्वे क्रियाविशेषणत्वासम्भवात्। सूत्रे ईप्शब्दस्य निर्देशात्। 'प्रातिलोमिकः आनुलोमिकः' इति। पूर्ववद्बहुव्रीहिः, 'अच् प्रत्यन्ववपूर्वात्' (५.४.७५) इत्यच् समासान्तः। अत्रापि व्युत्पत्तिमात्रम्, अर्थस्तु पूर्वोक्त एव। 'प्रातिकूलिकः' इति। पूर्ववद्बहुव्रीहिः। अत्रापि कूलार्थो नास्ति। प्रतिसरणं चैतयोरर्थः॥

## २९. परिमुखं च।

'पारिमुखिकः' इति। परिरिह वर्त्तते, तस्य च 'अपपरी वर्जने' (१.४.८८) इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' (२.३.१०) इति पञ्चमी, 'अपपरिबहिरञ्चवः' (२.१.१२) इत्यव्ययीभावः, अनेन ठक्। स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः। सर्वतो भावे वा परिशब्दः, परितो मुखम्, प्रादिसमासः, यतो यतः स्वामिनो मुखं ततस्ततो वर्तत इत्यर्थः। एवं पारिपार्श्विकः॥

## ३०. प्रयच्छति गर्ह्यम्।

'द्विगुणार्थं द्विगुणम्' इति। द्वैगुणिक उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति, किं तर्ह्येकगुणं दत्त्वा द्विगुणं गृह्णाति, अत एव तद्गर्ह्यं भवतीति। तस्माद् द्विगुणार्थे द्विगुणशब्दो वर्तयितव्यः।

'वार्धुषिकः' इति। वृद्ध्यर्थे धने वृद्धिशब्दः। 'प्रकृत्यन्तरमेव' इति। एतच्च वार्धुषिक इत्येतद्वृत्तिविषयमेव। नियतविषया अपि शब्दा भवन्ति, वृद्धिशब्दादनभिधानान्नैव भविष्यति, तेन वार्धिक इत्यनिष्टप्रसङ्गो नोद्भावनीयः। अथ कथम् 'वार्धुदासमकम्पत ददान्यस्य च वार्द्धुषेः' इति? स्वच्छन्दवाच ऋषयः॥

## ३१. कुसीददशैकादशात् ष्ठन्ष्ठचौ।

'तदर्थं द्रव्यं कुसीदम्' इति। अत्रापि कुसीदिक इत्युत्तमर्णस्याभिधानमिष्यते, न चोत्तमर्णः कुसीदं प्रयच्छति, किं तर्हि? अधमर्णः, न च तस्य वृद्धिप्रदानं गर्ह्यम्, तस्मात्तादर्थ्यात्ताच्छब्द्यमिति भावः। एकादशार्थं दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, 'संख्याया अल्पीयस्याः' (वा. ११२) इति दशशब्दस्य पूर्वनिपातः। दशैकादशादिति निर्देशादकारः समासान्तः। एवं वाक्यमप्यकारान्तेनैव भवति—दशैकादशान् प्रयच्छतीति॥

## ३२. उञ्छति।

## ३३. रक्षति ।

'सामाजिकः' इति । समाजः = समूहः, समजन्त्यस्मिन्निति कृत्वा, एवं सन्निवेशः ॥

## ३४. शब्ददर्दुरं करोति ।

'शब्दं करोति' इति । करोतिरिह ज्ञने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः । एतच्चाभिधान-स्वाभाव्याल्लभ्यते, इह न भवति–शब्दं करोति खर इति । पात्रविशेषवाची दर्दुरशब्दः । अनुकरणशब्द इत्यन्ये ॥

## ३५. पक्षिमत्स्यमृगान्हन्ति ।

'स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यते' इति । अत्र हेतुः 'स्वं रूपम्' (१.१.६८) इत्यत्रै-वोक्तः । 'मात्स्यिकः' इति । 'सूर्यतिष्य' (६.४.१४९) इति लोपो न भवति; मत्स्यस्य ङ्यामिति परिगणनात् । 'हारिणिकः, सौकरिकः' इति । अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितम्, यथा पूर्वयोः द्वावपि ह्येतस्मा-द्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यन्ते, हरिणपर्यायोऽपि मृगशब्दोऽस्ति, तदपेक्षया 'हारिणिकः' इति पर्यायोदाहरणम् ॥

## ३६. परिपन्थं च तिष्ठति ।

'तदिति द्वितीयासमर्थात्' इति । परिपन्थशब्दः परिमुखशब्दवदव्ययीभावः, तत्पुरुषो वा । तत्राव्ययी-भावपक्ष क्रियाविशेषणात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वम्; तत्पुरुषे तु परितः पन्थाः परिपन्थ इति 'कालभावध्वगन्तव्याः' इति वचनात् कर्म, तदित्यधिकारसामर्थ्यादित्यन्ये । 'पारिपन्थिकश्चोरः' इति । यः पन्थानं वर्जयित्वा तिष्ठति यो वा पन्थानं व्याप्य तिष्ठति स एवमुच्यते ।

'लौकिकवाक्यप्रदर्शनार्थम्' इति । परिपन्थं तिष्ठतीत्येतल्लौकिकवाक्यं तस्य प्रदर्शनार्थं द्वितीयोच्चारणम् । अथैवमर्थे द्वितीयोच्चारणे किं सिद्धं भवति ? इत्याह—'[1]परिपथपर्यायः' इत्यादि । किमेतस्य ज्ञापने प्रयोजनम् ? इत्याह—'स विषयान्तरेऽपि' इति । असति तु ज्ञापने प्रत्ययसन्नियोगेन परिपन्थशब्दस्य निपातनं विज्ञायेत, ततश्च ततोऽन्यत्र प्रयोगो न स्यात् ॥

## ३७. माथोत्तरपदपदव्यनुपदं धावति ।

'माथशब्दः [2]पथिन्पर्यायः' इति । मथ्यते प्रज्ञाद्यते गन्तुभिरिति कृत्वा । दण्डाकारो मथो दण्डमाथः ॥

---

1. परिपथशब्दपर्यायः–काशिका । 2. पथिपर्यायः–मुद्रितः पाठः.

## ३८. आक्रन्दाट्ठञ्च ।

'आक्रन्दो देशः' इति । दुःखितानां रोदनस्यायनमार्त्तायनमुच्यते, आर्त्तैरीयते प्राप्यत इति कृत्वा । आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते आर्त्तैराहूयत इति कृत्वा ॥

## ३९. पदोत्तरपदं गृह्णाति ।

पदग्रहणेन स्वरूपं गृह्यते, न सुप्तिङन्तमुत्तरपदस्य पदत्वाव्यभिचारात्, अत एवाह—'पदशब्द उत्तरपदं यस्य' इति ॥

## ४०. प्रतिकण्ठार्थललामं च ।

कण्ठं कण्ठं प्रति प्रतिकण्ठम्, 'यथार्थे यदव्ययम्' (२.१.६) इति वीप्सायामव्ययीभावः । आभिमुख्ये वा, 'लक्षणेनाभिप्रती आभिमुख्ये' (२.१.१४) इति । यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः तस्य ग्रहणं न भवति; अनभिधानात् ॥

## ४१. धर्मं चरति ।

'अधर्माच्चेति वक्तव्यम्' इति । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् (व्या.पा. ८९) वचनम् । 'आधार्मिकः' इति । नञत्र विरोधिवचनः, पापाचर इत्यर्थः ॥

## ४२. प्रतिपथमेति ठँश्च ।

'प्रतिपथम्' इति । पूर्ववद्वीप्सायामव्ययीभावः, 'ऋक्पूरब्धूः' (५.४.७४) इत्यकारः समासान्तः ॥

## ४३. समवायान् समवैति ।

'समवायः समूह उच्यते' इति । समवयन्ति तस्मिन्निति कृत्वा । 'न सम्प्रधारणा' इति । समयपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोऽस्तीति मन्यते । 'समागत्य तदेकदेशीभवतीत्यर्थः' इति । तत्र गुणभूतसमागमापेक्षया समवायमिति द्वितीयानिर्देशः । लोके तु प्रायेण सप्तमीं प्रयुज्यते—द्रव्ये गुणाः समवयन्तीति ॥

## ४४. परिषदो ण्यः ।

परितः सीदन्त्यस्यामिति परिषत्, सम्पदादित्वादधिकरणे क्विप्, 'सदिरप्रतेः' (८.३.६६) इति षत्वम् ॥

## ४५. सेनाया वा ।

## ४६. संज्ञायां ललाटकुक्कुट्यौ पश्यति ।

संज्ञानं संज्ञा = प्रतीतिः, प्रसिद्धिरित्यर्थः । 'अभिधेयनियमार्थम्' इति । अभिधेये सेवकविशेषे भिक्षुविशेषे च नियमः, तत्रैव वृत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । 'न रूढ्यर्थम्' इति । लालिटिककौक्कुटिकशब्दयोर्डित्थादिवद्रूढत्वात् तन्नियोगेन वर्त्तते, यावद्योगे च वर्त्तते । योगेऽपि ललाटकुक्कुटीदर्शनमात्रेण ठञ् न भवतीत्येतावत्संज्ञाग्रहणेन प्रसिद्ध्युपसंग्रहार्थं न क्रियते ।

यादृशस्तु योगोऽत्र विवक्षितस्तं दर्शयति–'सर्वावयवेभ्यः' इत्यादि । अनुपश्लेषस्य विवरणं 'कार्येष्वनुपस्थायित्वम्' इति । दूरे स्थितो ललाटमेव पश्यति, न पुनः कार्येषूपतिष्ठत इत्यर्थः ।

'कुक्कुटीपातो लक्ष्यते' इति । यावति देशे कुक्कुटी पतति यावन्तं देशं समतीत्य निपतितुं समर्था स देशो लक्ष्यत इत्यर्थः । अनेनापि प्रकारेण देशस्याल्पत्वं लक्ष्यते, कुक्कुटी पततु मा वाऽपतदित्याह—'देशस्याल्पतया' इति । एतदेव स्पष्टयति—'[1]यो हि भिक्षुः' इति । भिक्षुः संन्यासी ।

## ४७. तस्य धर्म्यम् ।

धर्मः = अनुवृत्त आचारः, ततोऽनपेतं धर्म्यम्, 'धर्मपथ्यर्थन्यायादनपेते' (४.४.९२) इति वचनात् । 'दौवारिकम्' इति । 'द्वारादीनां च' (७.३.४) इति वृद्धिप्रतिषेधः, ऐजागमश्च ॥

## ४८. अण् महिष्यादिभ्यः ।

## ४९. ऋतोऽञ् ।

'होतुर्धर्म्यं हौत्रम्' इति । होतृशब्दस्य महिष्यादिषु पाठादपपाठोऽयम्, पोतुर्धर्म्यमिति तु पाठः । अपर आह—यजमानसाहचर्यादृत्विग्वचनस्य होतृशब्दस्य महिष्यादिषु पाठः, अयं तु क्रियाशब्द उदाहृत इति ।

'नराच्चेति वक्तव्यम्' इति । नृशब्दात् सूत्रेणैवाञि नारमिति सिद्धे नरशब्दाट्ठको निवृत्त्यर्थं वचनम्, अनभिधानं तु दुर्ज्ञानम् ॥

## ५०. अवक्रयः ।

अवक्रीयतेऽनेनेत्यवक्रयः' इति । क्रयो नाम स्वद्रव्यत्यागेन परद्रव्यस्वीकरणम्, तस्यावमत्वमवशब्दो द्योतयति । वाणिज्यार्थं तैलधान्यादिकं देशान्तरं नयताऽस्मिन् शुल्कस्थाने प्रतिभारमेतावद्देयमिति तद्देशाधिपतिना

1. 'यः' नास्ति. काशिका.

यत्कल्पितं सोऽवक्रयः, पिण्डक इति चोच्यते। तत्र स्वद्रव्यमेव दत्वा स्वद्रव्यमेव स्वीक्रियते इत्ययमवक्रयो भवति, न तु मुख्यः।

'ननु' इत्यादि। अवक्रयस्याप्यनादिप्रवृत्तत्वादिति भावः। 'लोकपीडया' इति। अर्थलोभेन धर्मातिक्रमेण धर्मपितत्वं दर्शयति॥

## ५१. तदस्य पण्यम्।

'पण्यमिति विशेषणम्' इत्यादि। इह यो विशेषणमुपाधिर्वोपादीयते प्रत्यये तस्मिंस्तेन भवितव्यम्, तद्यथा—'साऽस्य देवता' (४.२.२४), इन्द्रो देवता अस्य ऐन्द्रः स्थालीपाक इति देवतात्वं वृत्तावन्तर्भवति, तद्वदत्रापि पण्यत्वमन्तर्भवतीति नात्रापूर्वं किञ्चित्॥

## ५२. लवणाट्ठञ्।

## ५३. किशरादिभ्यः ष्ठन्।

किशरादयो गन्धविशेषवचनास्तद्वति वर्तन्ते, गन्धान् पिनष्टीति यथा॥

## ५४. शलालुनोऽन्यतरस्याम्।

'शलालुकः' इति। 'इसुसुक्तान्तात्कः' (७.३.५१)॥

## ५५. शिल्पम्।

'कौशलम्' इति। क्रियाभ्यासपूर्वको ज्ञानविशेषः। 'मृदङ्गवादनं शिल्पमस्य' इति। मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पम् भावसाधनस्य गौणं सामानाधिकरण्यम्। मृदङ्गवादनविषयं शिल्पमस्येत्यर्थः। 'मार्दङ्गिकः' इति।

ननु मृदङ्गवादनं शिल्पमस्येति विग्रहः कृतः, ततश्च मार्दङ्गवादनिक इति भवितव्यम्? तत्राह—'मृदङ्ग' इत्यादि। मृदङ्गवादनशब्दात्तु प्रत्ययो न भवत्यनभिधानात्, किं तूपचरितवृत्तेरपि मृदङ्गशब्दादेव भवति। अत एवानभिधानात् मृदङ्गनिष्पादनं शिल्पमस्य मार्दङ्गिकः कुम्भकार इत्यत्र न भवति॥

## ५६. मड्डुकझर्झरादणन्यतरस्याम्।

अयमेव निर्देशो ज्ञापयति—'तद्वादनवृत्तिभ्यो मृदङ्गादिभ्यः प्रत्ययः' इति। न हि मुख्यमड्डुकझर्झरयोः शिल्पेन सामानाधिकरण्यमुपपद्यते॥

## ५७. प्रहरणम् ।

प्रहरणमायुधम् प्रह्रियतेऽनेनेति कृत्वा। 'धानुष्कः' इति। पूर्ववत् कादेशः, 'इणः षः' (८.३.३९) इति विसर्जनीयस्य षत्वम् ॥

## ५८. परश्वधाट्ठञ् च ।

परश्वधः = परशुः ॥

## ५९. शक्तियष्ट्योरीकक् ।

शक्यतेऽनया प्रहर्तुमिति शक्तिः, यष्टिशब्दोऽव्युत्पन्नं प्रातिपदिकम्। किमर्थमीकगुच्यते न कगेवोच्यते, का रूपसिद्धिः ? शक्तियष्टिशब्दाभ्यां बह्वादिङीषन्ताभ्यां लिङ्गविशिष्टपरिभाषया (व्या.प. २९) कनि कृते शाक्तीको याष्टीक इति सिद्धम्; न सिध्यति ? 'केऽणः' (७.४.१३) इति ह्रस्वत्वं प्राप्नोति। विभाषा ङीषुक्तः, तदभावपक्षे दीर्घस्य शङ्कैव नास्ति ? एवं तर्हि इकगेवोच्येत इकारेऽपि हि सवर्णदीर्घत्वे सिध्यति, यस्येति लोपः (६.४.१४८) इकारोच्चारणसामर्थ्यान्न भविष्यति। पदस्यावग्रहनिवृत्तिरिकारस्य प्रयोजनम्। एवं तर्हि सूत्रारम्भो निष्फलः स्यात्, पूर्वसूत्रविहितेन ठकैवावग्रहनिवृत्तेः सिद्धत्वात् ? नानर्थकम्; वाक्यनिवृत्त्यर्थत्वात्। एवमपि प्रत्ययान्तरमनर्थकं शक्तियष्ट्योरित्येतावद्वक्तव्यम्, ठक् प्रकृतः, तस्य पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति, क्रिमीकको विधानेन, तद्विधानात्तु यस्येति लोपो न भविष्यति। यथैव तर्हि यस्येति लोपो न भवति एवं सवर्णदीर्घत्वमपि न स्यात्; यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, यस्येतिलोपं च प्रति इकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥

## ६०. अस्तिनास्तिदिष्टं मतिः ।

यद्यस्ति मतिर्यस्य स आस्तिकः, चोरेऽपि प्राप्नोति, तस्यापि मतिसद्भावात् ? तत्राह—'न च' इति। 'तद्विपरीतः' इति। परलोको नास्तीति मतिर्यस्य तन्नास्तिकः = लोकायतिकः, न स्वचेतनः पदार्थः; मत्यभावमात्रे प्रत्ययस्यानिष्टत्वात्। दिष्टम् = दैवम्, तद्विषया मतिर्यस्य स दैष्टिकः, वृत्तावपि प्रमाणानुपातिनी मतिर्यस्येति दैववित्, प्रमीयते तेभ्यो दैवमिति। प्रमाणशब्देनेतिहासपुराणादि विवक्षितम्।

'अस्तिनास्तिशब्दौ निपातौ' इति। तेन प्रातिपदिकाधिकारो न बाध्यते इति भावः। वचनसामर्थ्याच्चेत्यभ्युपगम्यवादः ॥

## ६१. शीलम् ।

'शीलं स्वभावः' इति। शील्यते पुनःपुनः क्रियतेऽनेनेति कृत्वा। 'अपूपभक्षणं शीलमस्य' इति। शीलविषये शीलत्वमारोप्य सामानाधिकरण्येन व्यपदेशः। 'भक्षणक्रिया' इत्यादि। शीलं तावदुपात्तत्वादन्तर्भवति, क्रियाविषयत्वाच्च शीलस्य क्रियाप्यन्तर्भवति, स्वभावाच्च भक्षणक्रिया, न निष्पादिका ॥

## ६२. छत्रादिभ्यो णः ।

छत्रशीलता शिष्यस्य दर्शयितुमाह—'छादनादावरणाच्छत्त्रम्' इति । छादयतेः ष्ट्रनि 'इस्मन्त्रन्क्विषु च' (६.४.९७) इति ह्रस्वः । 'छत्त्रशीलः' इति । छत्त्रसहचरिता छादनक्रिया शीलमस्येत्यर्थः । यदि त्वपूपभक्षणं शीलमस्यापूपिक इतिवत् छत्त्रावरणं शीलयस्य छात्त्रिक इति व्युत्पाद्यते, तदा दासेऽपि प्राप्नोति; अभिधानस्वाभाव्यात्तु तथा नाश्रीयते ।

'उपसर्गपूर्वो गृह्यते' इति । ततश्च तस्य 'आतश्चोपसर्गे' (३.१.१३६) इत्यादिना व्युत्पत्तिः; केवलस्य स्थाशब्दस्याभावात् । केवलस्य तु पाठः सर्वोपसर्गग्रहार्थः । 'चुरा' इति पठ्यते, तत्र चोरयतेः 'ण्यासश्रन्थो युच्' (३.३.१०७) इति युचि प्राप्तेऽस्मादेव निपातनादकारः, गुणाभावश्च । न च युचोऽन्यत्र बाधः, चोरणेत्यपि भवति ॥

## ६३. कर्माध्ययने वृत्तम् ।

कर्म क्रिया, तच्च स्खलितमपचाररूपं विवक्षितम्, न तच्छीलं कर्म, तेनेह न भवति—अध्ययने जपो वृत्तोऽस्येति । एतच्चाभिधानस्वाभाव्याल्लभ्यते । तदेतद्वक्ष्यति—'[1]यस्याध्ययने नियुक्तस्य' इत्यादि । 'एकमन्यत्' इति । सम्यक्पाठापेक्षया ॥

## ६४. बह्वच्पूर्वपदाट्ठच् ।

स्वरभेदेऽप्यन्यत्वं भवति, न वर्णभेद एवेत्याह—'उदात्ते कर्त्तव्ये' इति । उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

## ६५. हितं भक्षाः ।

हितम्, भक्षाः इति पदयोः पर्यवसानेन सम्बन्धः । अत्र 'हितम्' सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च । 'भक्षाः' इत्यपूपादिविशेषरूपसंग्रहात्पुंलिङ्गं बहुवचनं च । अत एवाह—'यत्तत्प्रथमासमर्थं हितं चेद्भवति तच्च भक्षाः' इति ।

'एवं तर्हि' इति । एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे । कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति ? एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम् । अपर आह—'हितं भक्षास्तदस्मै' इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्' इति तस्या एवेति ।

'हितार्थः क्रिया च' इति । हितार्थस्तावदुपात्तत्वादन्तर्भवति । भक्षणक्रियाऽप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥

---

1 यस्याध्ययनप्रयुक्तस्य—काशिका ।

## ६६. तदस्मै दीयते नियुक्तम् ।

'अव्यभिचारो नियोगः' इति । अस्मिन् पक्षे नियुक्तमिति क्रियाविशेषणत्वात् कर्मणि द्वितीया । 'अग्रभोजनमस्मै नियुक्तं दीयते' इति । यदग्रभोजनं दीयते तदास्मै एवेत्येष नियोगार्थः । तेन कदाचिल्लोपेऽपि न नियुक्ततताया हानिः ।

'केचित्तु' इति । अत्र पक्षे नियुक्तमित्यन्तसंयोगे द्वितीया ॥

## ६७. श्राणामांसौदनाट्टिठन् ।

'श्रा पाके' (धा.पा. १०५३) क्तः, क्षीरहविषोरेव निपातनाच्छ्रभावाभावे 'संयोगादेरातो धातोः' (८.२.४३) इति निष्ठातकारस्य नकारः । श्राणा यवागूः । मांसमिश्र ओदनो मांसौदनः ।

'ठन्नेव कस्मानोक्तः' इति । लाघवात्स एव युक्तो वक्तुमिति भावः । 'न ह्यत्र' इति । द्वे अप्येते प्रकृती पूर्वमेव वृद्धे, योऽपि 'वृद्धिनिमित्तस्य' (६.३.३९) इति पुंवद्भावप्रतिषेधः, स ठिठन्यपि 'न कोपधायाः' (६.३.३७) इति भवति । 'मांसौदनग्रहणम्' इत्यादि । ठन्येव वक्तव्ये ठिठनो वचनमेवात्र प्रमाणमिति तेषां भावः ॥

## ६८. भक्तादणन्यतरस्याम् ।

भजेर्भक्तम् = अन्नम् ॥

## ६९. तत्र नियुक्तः ।

नियुक्तमिति प्रकृते पुनर्नियुक्तग्रहणमर्थभेदार्थमेव, तमेवार्थभेदं दर्शयति–'नियुक्तोऽधिकृतः' इत्यादि । किञ्च प्रकृतं नियुक्तग्रहणं प्रकृत्यर्थविशेषणस्य दीयत इत्यस्योपाधिः, न तस्येह प्रत्ययार्थत्वं शक्यं विज्ञातुम् ॥

## ७०. आगारान्ताट्ठन् ।

## ७१. अध्यायिन्यदेशकालात् ।

अधीते इत्यध्यायी, आवश्यके णिनिः, ग्रह्यादिलक्षणो वा । 'अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते' इति । अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्याप्रतिषिद्धौ तावदेशकालशब्देनोच्येते' इति । अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्यास्पर्शनीयवत् । तद्यथा—शूद्रादिप्राणिभिर्भक्ष्यमाणमपि लशुनमभक्ष्यमित्युच्यते, स्पृश्योऽपि चण्डालोऽस्पृश्य इत्युच्यते, अप्रतिषिद्धाभ्यां भक्ष्यस्पृश्याभ्यामन्यत्वात्; तद्वदिहापि श्मशानचतुर्दश्यौ स्वरूपेण देशकालावेव सन्ताव-प्रतिषिद्धाभ्यां देशकालाभ्यामन्यत्वाददेशकालशब्देनोच्येते । 'अध्ययनस्य' इत्येतदध्यायिना प्रत्ययार्थेन सन्निधापितत्वाल्लभ्यते ॥

## ७२. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।

व्यवहरतिः सम्भवति पणिना समानार्थः, आह हि—'व्यवहृपणोः समर्थयोः' (२.३.५७) इति; अस्ति विवादे—व्यवहारे पराजित इति, अस्ति विक्षेपे—शलाकां व्यवहरतीति, अस्ति क्रियातत्त्वे; तदिह चरमस्य ग्रहणं तद्धितस्वभावादित्याह—'व्यवहारः क्रियातत्त्वम्' इति । यत्र देशे या क्रिया यथाऽनुष्ठेया तत्र तस्यास्तथाऽनुष्ठानमित्यर्थः । वंशाः = वेणवः कठिना यस्मिन् वंशकठिनो देशः । वर्ध्री = चर्मविकारः कठिना अस्मिन् वर्ध्रकठिनः, आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः । चक्रयुक्तेन शकटेन चरतीति चक्रचरः स देशाननुक्रमेण चरन् तत्रानुष्ठेयक्रियविपरीतं चरन्नेवमुच्यते । संस्थानप्रस्तारौ सन्निवेशौ ॥

## ७३. निकटे वसति ।

अरण्यं निवासो यस्य स आरण्यकः, 'अरण्यान्मनुष्ये' (४.२.१२९) इति वुञ् । भिक्षुः = संन्यासी । 'ग्रामात् क्रोशे' इति । 'यतश्च निर्धारणम्' (२.३.४१) इति पञ्चमी । अयं च विशेषोऽभिधानस्वभावाल्लभ्यते ॥

## ७४. आवसथात् ष्ठल् ।

आवासस्येतमिति आवसथः, 'उपसर्गे वसेः' (द.उ. ६.३९) इत्यथप्रत्ययः । 'ठकः [1]पूर्णो विधिः' इति । प्राग्वहतीयस्य ठको विधानं पूर्णमित्यर्थः, 'अवधिः' इति पाठे पूर्णः प्राप्तः इत्यर्थः ॥

## ७५. प्राग्घिताद्यत् ।

## ७६. तद्वहति रथयुगप्रासङ्गम् ।

ननु य एवार्थो रथं वहतीति स एव रथस्य वोढेति, तत्र तस्येदं रथाद्यदित्येव सिद्धं नार्थो रथग्रहणेन ? ननु तत्रोक्तं रथाङ्ग एवेष्यत इति, वोढर्यपि प्रयोगदर्शनादिष्यताम् ? इदं तर्हि प्रयोजनम्—द्वौ रथौ वहति द्विरथ्यः, 'द्विगोर्लुगनपत्ये' (४.१.८८) इति प्राग्दीव्यतीयो लुग्मा भूत्, 'रथसीताहलेभ्यो यद्विधौ' (वा. ४७३) इति तदन्तविधिः । 'युग्यं च पत्रे' (३.१.१२१) इत्येव सिद्धम् । इह युगग्रहणमयुग्यमित्यत्र 'ययतोश्चातदर्थे' (६.२.१५६) इति स्वरार्थम्, निपातनस्य तु क्यबन्तत्वादेव स्वरो न स्यात् । रथाङ्गवचनोऽयं युगशब्दः, इह न भवति—युगं वहति राजा कलिं द्वापरं वेति । प्रासङ्गशब्दो वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते तद्वाची गृह्यते, प्रासज्यते इति प्रासङ्गः, इह न भवति—प्रसङ्गादागतः प्रासङ्गस्तं वहतीति । एतच्चाभिधानस्वभावाल्लभ्यते ॥

## ७७. धुरो यड्ढकौ ।

धूर्धूर्वतेः, 'भ्राजभास' (३.२.१७७) इति क्विप्, 'राल्लोपः' (६.४.२१) । 'धुरं वहतीति धुर्यः' इति ।

1. पूर्णोऽवधिः—काशिका ।

'न भकुर्छुराम्' (८.२.७९) इति प्रतिषेधात् 'हलि च' (८.२.७७) इति दीर्घाभावः। ढञत्र विधीयते, न तु ढकञ्। धौरेयो भविता पितुरिति च दृश्यते, धौरेयक इति स्वार्थिके कनि भवति।

इह 'धुरो ढक् च' इति वक्तव्यम्, चकारात् प्राग्घितीयो यद्भविष्यति॥

## ७८. खः सर्वधुरात्॥

'[1]स्त्रीलिङ्गनिर्देशो न्याय्यः' इति। सर्वा चासौ धूश्चेति 'पूर्वकाल' (२.१.४९) इत्यादिना समासः, 'ऋक्पूरब्धूः' (५.४.७४) इत्यकारः समासान्तः, तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२.४.२६) इति वचनात् स्त्रीलिङ्गनिर्देशस्य न्याय्यत्वम्, यथा—'बन्धुनि बहुव्रीहौ' (६.१.१४) इत्यत्र। 'दक्षिणधुरीणः'। दक्षिणां धुरं वहति, उत्तरां धुरं वहतीति तद्धितार्थे समासः, ततोऽकारः समासान्तः॥

## ७९. एकधराल्लुक् च।

'एकधुरात्' इति निर्देशः सर्वधुरादित्यनेन व्याख्यातः। चकारेण खोऽनुकृष्यते, तेन स तावद्विधेयः, प्रत्ययादर्शनस्य च लुक्संज्ञा। न चान्योऽत्र प्रत्ययः, तेन खस्यैव लुग्विधीयते, तस्य यदि लुक् स्याच्चकारेणानुकृष्य विधानमनर्थकं स्यात्। एकधुराल्लुगिति वक्तव्यम्, लुक् स्वभावादनन्तरस्य खस्य प्राकरणिकस्य यतो वा विधिरनुमास्यते, तदाह—'तस्य च लुग्भवतीति, एकधुरीणः' इति। एकां धुरं वहतीति तद्धितार्थे समासः, तत्रोक्तोऽकारः समासान्तः, ततः खः॥

## ८०. शकटादण्।

शकटादण्विधानमनर्थकम्। कथं शाकट इति? 'तस्येदम्' (४.३.१२०) इत्यण् भविष्यति, यो हि शकटं वहति शकटस्यादौ वोढा भवति? तत्राहुः—आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वे शकटे वहति द्विशकट इति प्राग्दीव्यतीयो लुग्न भवति॥

## ८१. हलसीराट्ठक्।

इह यो हलं वहति सीरं च तस्यासौ वोढा भवति, तत्र तस्येदं हलसीराट्ठगित्येव हालिकः सैरिक इति सिद्धम्, नार्थोऽनेन? अत्राहुः—आरम्भसामर्थ्यादत्रापि तदन्तविधिः, द्विहालिकः, त्रिसैरिक इति लुङ्न भवतीति॥

## ८२. संज्ञायां जन्याः।

'जामातुर्वयस्या' इति। सा हि प्रणयकलहादौ जनीं जामातुः समीपं प्रापयति। 'जनी वधूरुच्यते' इति। जायतेऽस्यां गर्भ इति कृत्वा। 'जनिवध्योश्च' (७.३.३५) इति वृद्धिप्रतिषेधे 'कृदिकारादक्तिनः' (ग सू. ५०) इति ङीष्॥

---

1. स्त्रीलिङ्गे न्याय्ये-काशिका।

## ८३. विध्यत्यधनुषा।

'पादौ विध्यन्ति पद्याः' इति।

[1]तुदन्तीत्यर्थः। 'पद्यत्यतदर्थे' (६.३.५३) इति पद्भावः। 'ऊरव्याः' इति। 'ओर्गुणः' (६.४.१४६), 'वान्तो यि प्रत्यये' (६.१.७९)।

'नन्वसमर्थत्वात्' इति। सापेक्षमसमर्थं भवतीत्यसामर्थ्यम्। प्रत्ययार्थो ह्यत्र बाह्यम् करणं धनुरपेक्षते। ननु व्यधनमत्र सापेक्षम्, करणक्रिययोः सम्बन्धात्, व्यधनं च प्रधानम्, क्रियाप्रधानत्वादाख्यातस्य, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, यथा—राजपुरुषः शोभन इति? भवतु क्रियाप्रधानमाख्यातम्, तद्धितस्तु स्वभावात्साधनप्रधानः। क्रिया तु गुणभूतेत्युक्तम्, सा च धनुरपेक्षत इत्यसामर्थ्यम्। 'अनभिधानाच्च इति। अत्रैवोपपत्त्यन्तरमनभिधानमेव दर्शयति 'न हि' इति। 'धनुषा पद्याः' इत्युक्ते इत्थम्भूतलक्षणा सहयोगलक्षणा वा तृतीया गम्यते, न तु पादौ धनुषा विध्यतीत्ययं विवक्षितोऽर्थः। अवश्यं चैतदेवं विज्ञेयम्—असमर्थत्वादनभिधानाच्चात्र प्रत्ययो न भवतीति। यो हि मन्यते—'अधनुषेति प्रतिषेधात्प्रत्ययो न भवति' इति, तस्य शर्कराभिः पादौ विद्धचति कण्टकैरूरू विद्धचतीत्यत्र प्रत्ययः स्यादेव? एवं तर्हि विशेषोपलक्षणपरोऽत्र धनुषेति निर्देशः, न तु धनुषः करणत्वप्रतिषेधपरः इत्यर्थः। 'धनुष्प्रतिषेधेन' इति। 'नित्यं समासेऽनुत्तरपदस्थस्य' (८.३.४५) इति षत्वमुपलक्षणत्वमेव प्रतिपादयति। 'यस्याम्' इति। तेनेह न भवति—चौरं विद्धचतीति। सम्भाव्यते हि प्रत्यवच्छेदनादिकायां चोरस्य व्यधनक्रियायां धनुषः करणत्वम्॥

## ८४ 'धनगणं लब्धा।

लब्धेति तृनन्तमेतत, तृजन्ते तु 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठ्या भवितव्यम्। तृनन्ते तु 'न लोकाव्ययनिष्ठा' (२ ३.६९) इति प्रतिषेधात् द्वितीयैव भवति॥

## ८५. अन्नाण्णः।

## ८६. वशङ्गतः।

'वश कान्तौ' (धा.पा. १०८०) वशनं वशः 'वशिरण्योरुपसंख्यानम्' (वा. ३०५) इत्यच्। कामः = इच्छा, तां प्राप्त इति। परेच्छानुगामीत्यर्थः॥

## ८७. पदमस्मिन् दृश्यम्।

'निर्देशादेव प्रथमा समर्थविभक्तिः' इति। द्वितीया तु न भवति; दृश्यमिति यपा कर्मणोऽभिहितत्वात्। 'शक्यार्थे कृत्यप्रत्ययः' इति। तेन योग्यत्वे सति पदस्पर्शनाभावेऽपि पद्यः कर्दम इति प्रयोग उपपद्यत इति भावः।

---

1. तदन्तीत्यर्थः—मुद्रितः पाठः

मुद्रा = सन्निवेशः, प्रतिरूपा मुद्रा 'प्रतिमुद्रा'। 'नातिद्रवो नातिशुष्कः' इति। पांसवोऽपि नात्यल्पा नातिबहुलाः पद्याः ॥

## ८८. मूलमस्यावर्हि ।

'प्रथमासमर्थात्' इति। द्वितीयाया निमित्ताभावान्निर्देशादेव प्रथमैव भवतीति भावः। 'वृहू उद्यमने' (धा.पा. १३४७), वाविरयं न बाविः। दृश्यते हि 'उद्वृह रक्षः सहमूलमिन्द्र ह्यस्सुष्मिक् प्रवृहाण' (ऋ.-३.३०.१७) 'तद्ववर्हात्मनोदेवा' इति च। आवर्हणमावर्हः = उत्पाटनम्, आवर्होऽस्यास्तीत्यावर्हि, सुष्ठु पक्वा न शक्यन्ते संग्रहीतुम्। मध्यतो लूयमाने कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ता इत्यर्थः ॥

## ८९. संज्ञायां धेनुष्या ।

'यश्च प्रत्ययो निपात्यते' इति। कुत्र ? अनिर्दिष्टार्थत्वात् स्वार्थे, तदाह—'या.धेनुरुत्तमर्णाय' इति। कथं पुनर्यति प्रकृते यप्रत्ययो निपात्यते ? तत्राह—'अन्तोदात्तोऽपि ह्ययमिष्यते' इति। यति हि 'तित्स्वरितम्' (६.१.१८५) इति स्वरितः स्यात्, अन्तोदात्तश्चेष्यते, न केवलं संज्ञायाम्, अपि त्वन्तोदात्तोऽपीत्यपिशब्दस्यार्थः ॥

## ९०. गृहपतिना संयुक्ते ञ्यः ।

'अन्यस्यापि' इत्यादि। गृहपतिर्हि यजमानः, स यथा गार्हपत्ये कार्याणि करोति तथा दक्षिणाग्नावाहवनीये च, भूयो वाऽऽहवनीये; तस्मादन्यस्यापि गृहपतिना योगोऽस्ति। यद्येवम्, तत्राप्यतिप्रसङ्गः ? इत्यत आह—'तत्र' इति। अपर आह—गृहपतिरग्निविशेषः, तेन संयोगो गार्हपत्यस्यैवाग्निहोत्रेऽपि गार्हपत्ये अग्नये गृहपतये प्रजापतये, पत्नीसंयाजेषु च तत्रैवेज्यते इति, तत्रापि गृहपतिरग्निर्गृह्यते न यजमान इत्यत्र संज्ञाधिकार एव शरणम् ॥

## ९१. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ।

तत्र नावादीनां प्रथममूलान्तानां पञ्चानां द्वितीयमूलादीनां च त्रयाणां पूर्वं पृथक्पृथक् द्वन्द्वं कृत्वा ततो द्वयोरपरो द्वन्द्वः कृतः, न त्वष्टानां युगपत्सहविवक्षा; किं सिद्धं भवति ? न मूलयोः सारूप्यादेकशेषो भवति। का पुनरत्र समर्थविभक्तिः ? इत्यत आह—'प्रत्ययार्थद्वारेण' इति। द्वारम् = मुखम्, उपायः। इह तार्यादयः प्रत्ययार्थाः, तत्सम्बन्धे करणे कर्तरि हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। 'नाव्यम्' इति। अत्र तावत्तरणक्रियायां करणत्वम्।

'वयसा तुल्यः' इति। तत्र हेतुमाह—यो येन वयस्तुल्यः स तं प्रति वयस्यः। 'शत्रौ न भवति' इति। किन्तु मित्र एव भवति।

'ननु च' इति। धर्मेण प्राप्यं सुखादि, फलमपि धर्मादनपेतमेव; कार्यस्य कारणाविनाभावादिति प्रश्नः। 'धर्मं यदनुवर्त्तते' इति। अनादिः शिष्टसमाचारस्तज्जन्यो वाऽऽत्मगुणो धर्मः, यदनुष्ठानमनुवर्त्तते तद्धर्मादनपेतम्,

फलं तु धर्मादपैत्येवेति कुतः ? इत्याह—'कार्यविरोधित्वात्' इति। धर्मस्य कार्यं सुखानुभवः, कार्यं विरोधि-नाशकं यस्य स कार्यविरोधी, तस्य भावः कार्यविरोधित्वं तस्मादित्यर्थः। उत्पन्ने हि फले धर्मो नश्यति, अन्यथा सकृद्धर्मे कृते स्वर्गमनुभवतः प्रभवो न स्यात्।

'वधमर्हतीत्यर्थः' इति। वध्यशब्दस्य 'दण्डादिभ्यो यः' (५.१.६६) इत्यत्रार्थे व्युत्पादितत्वात्।

'आनाम्यमभिभवनीयम्' इति। अनेकार्थत्वाद्धातूनामापूर्वो नमिरभिभवे वर्तते।

'पटादीनामुत्पत्तिकारणम्' इति। पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं यद्वस्तु तन्मूलशब्दवाच्यमित्यर्थः। 'तेन' इति। मूलेन। 'तत्' इति। मूल्यम्। 'शेषीक्रियते' इति। शेषीकरणमेवात्राभिभव इत्यर्थः। गुणभाव-मापद्यते, कथमित्याह—'मूलं हि सगुणं मूल्यं करोति' इति। मूल्यमिह कर्तृ, मूलं कर्म, पटादिषु विक्रीयमाणेषु यन्मूलातिरिक्तं वस्तु लाभो नाम तन्मूल्यम्, गुणो भागः, स पुनरिह मूल्यमेव, तेन सह वर्तत सगुणः, हिशब्दो हेतौ। एतदुक्तं भवति—यस्मान्मूल्यमात्मनैव भागभूतेन सभागं मूलं करोति तस्मान्मूले मूल्यमभिभूयते शेषीक्रियते, मूल्ये सति तेन गुणेन सगुणं मूलं भवति; इयमेव चावनतिः, अयमेवाभिभवः, इदमेव शेषीकरणम्। लोके तु यावता द्रव्येण पटादिको विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धः, न मूलातिरिक्ते भागे, स च मूल्य-सम्भवादौपचारिकः। एवं च यत्रापि मूल्यं नास्ति दायप्रतिग्रहादिलब्धे क्षेत्रे क्रीयमाणे तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगः सिद्धो भवति।

सीता = हलाग्रम्, सम्पूर्वादिणः क्तः, समितम् = सङ्गतम्, निम्नोन्नतादिरहितं कृतमित्यर्थः। समीकृत-मिति यावत्। 'द्विसीत्यम्' इति। द्वाभ्यां सीताभ्यां समीकृतमिति तद्धितार्थे समासः, ततः प्रत्ययः।

'तुलया सम्मितं तुल्यम्' इति। अत्र तुल्यार्थयोगे तृतीया। यद्यपि तद्योगे षष्ठ्यपि भवति, तथापि नावादिभिस्साहचर्यात्तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययः। अत एव पूर्वमुक्तम्—'तृतीया समर्थविभक्ति-र्लभ्यते' इति। षष्ठ्यन्तादपि न कश्चिद्दोषः, न्यायस्तु कथितः। कथं पुनस्तुल्यस्य तुलया सदृशत्वमत आह—'यथा' इति। 'एवं तदपि' इति। तदपि तुल्यं प्रतियोगिनं सादृश्येन परिच्छिनत्ति, एतद्व्युत्पाद्यत्वेन प्रदर्शितम्। सदृशपर्यायस्तुल्यशब्दः, नावयवार्थः कश्चित्, अत एव 'तुल्यास्यप्रयत्नं सवर्णम्' (१.१.९) इत्यत्रोक्तम्—'तुल्यशब्दः सदृशपर्यायः' इति॥

## ९२. धर्मपथ्यर्थन्यायादनपेते।

'निर्देशादेव' इति। सत्यर्थसम्भवेऽर्थान्तरस्य वा सम्भवे सति निर्देशादिति द्रष्टव्यम्, 'धुरो यड्ढकौ' (४.४.७७) इत्यत्रातिप्रसङ्गो नोद्भावनीयः। '[1]संज्ञाधिकारादभिधेयस्य नियतः' इति। शास्त्रीयात् पथो यदनपेतं तत् पथ्यम्, न तु तस्मादनपेतश्चोरः॥

1. संज्ञाधिकारादभिधेयनियमः—काशिका।

## ९३. छन्दसो निर्मिते ।

'[1]प्रत्ययार्थसामर्थ्यं लभ्यते' इति । निर्माणे छन्दसः करणत्वात् । इष्टपर्यायश्छन्दःशब्दो गृह्यते इति न वेदवचनः, नापि त्रिष्टुबादिवचनः । एतच्च संज्ञाधिकाराल्लभ्यते । यद्यपि स्वच्छन्दतो हि वचसां प्रवृत्तिः, 'छन्दानुवृत्तिर्दुस्साध्या' इत्यादावकारान्तश्छन्दशब्द इच्छापर्यायः, तथापि तस्यैव धातोरसुन्नन्तस्येच्छावाचित्वमविरुद्धं चेति मन्यते ॥

## ९४. उरसोऽण् च ।

'औरसः पुत्रः' इति । आत्मनोत्पादित इत्यर्थः । 'संज्ञाधिकारादभिधेयनियमः' इति । उरसा निर्मितं सुखमित्यादौ न भवति ॥

## ९५. हृदयस्य प्रियः ।

हृदयम् = अन्तःकरणम्, प्रियम् = प्रीतिकरम् । 'हृद्यम्' इति । 'हृदयस्य हृल्लेखयदण्लासेषु' (६.३.५०) इति हृदादेशः ॥

## ९६. बन्धने चर्षौ ।

'षष्ठीसमर्थात्' इति । बन्धनयोगे कृद्योगलक्षणा कर्मणि षष्ठी । 'ऋषिर्वेदो गृह्यते' इति । 'तदुक्तमृषिणा' इत्यादौ दर्शनात् । यस्त्वाख्यानसम्पन्ने वसिष्ठादावृषिशब्दः, तस्य ग्रहणं न भवति; संज्ञाधिकारात् ॥

## ९७. मतजनहलात् करणजल्पकर्षेषु ।

'प्रत्ययार्थ[2]सामर्थ्यलब्धा' इति । करणादयः प्रत्ययार्थाः, तद्वचनाः करणादयः शब्दाः कृदन्ताः, तद्योगे यथायथम् 'कर्तृकर्मणोः कृति' (२.३.६५) इति षष्ठी भवति । संज्ञाधिकाराद्धलसम्बन्धाच्च कर्षशब्दोऽपि क्रियावचनो गृह्यते, न परिमाणशब्दः । 'मतस्य करणम्' इति कर्मणि षष्ठी । 'जनस्य जल्पः' इति कर्त्तरि । जल्पशब्दो भावसाधनः, अत एवात्र भावः साधनं वेति नोक्तम् । 'हलस्य कर्षः' इति कर्मणि षष्ठी, करणस्य वा कर्तृत्वविवक्षायां कर्त्तरि । 'द्विहल्यः' इति । 'रथसीताहलेभ्यो यद्विधौ' (वा. ४७३) इति तदन्तविधिः ॥

## ९८. तत्र साधुः ।

'सामन्यः' इति । 'ये चाभावकर्मणोः' (६.४ १६८) इति प्रकृतिभावः । प्रवीणः = निपुणः, योग्यः = समर्थः । 'तत्र हि परत्वात्' इति । 'तस्मै हितम्' (५.१.५) इत्यनेन चतुर्थीसमर्थात्प्रत्ययो विधीयते, अनेन तु सप्तमीसमर्थात्तेन नात्र 'विप्रतिषेधे परम्' (१.४.२) इत्येतत्परत्वापरत्वं विवक्षितम्, किं तर्हि ? इष्टवाची परशब्दः, उपकारलक्षणे साधौ प्रक्रीतोयानामेवेष्टत्वात् 'तस्मै हितम्' इत्यनेन विधिना भवितव्यमित्यर्थः । एतच्च संज्ञाधिकाराल्लभ्यते ॥

---

1. प्रत्ययार्थसामर्थ्यलभ्या–काशिका । 2. सामर्थ्याल्लब्धा–काशिका ।

## ९९. प्रतिजनादिभ्यः खञ् ।

जनं जनं प्रति प्रतिजनमिति 'यथार्थे यदव्ययम्' (२.१.६) इति वीप्सायामव्ययीभावः । 'प्रतिजने साधुः' इति । 'तृतीयासप्तम्योर्बहुलम्' (२.४.८४) । 'परस्यकुलम् अमुष्यकुलम्' इति । षष्ठीसमासेऽस्मादेव निपातनात् षष्ठ्या अलुक् । पूर्वसूत्र उक्तम्—'साधुः प्रवीणो योग्यो वा गृह्यते, नोपकारकः', तत्र प्राक्क्रीतीयानामेवेष्टत्वादिति, इह तु न तथेत्याह—'यत्र' इति । 'प्राक्क्रीतीया बाध्यन्ते' इति । अप्राप्तिरत्र बाधः; न हि चतुर्थ्यन्ताद्विधीयमानानां सप्तम्यन्तेभ्यः प्राप्तिरस्ति । तत्र प्राक्क्रीतीया न भवन्तीति वक्तव्यो बाध्यत इत्युक्तम्—'चतुर्थ्यन्तेभ्योऽप्यनभिधानात्प्राक्क्रीतीया न भवन्ति' इति दर्शयितुम् ॥

## १००. भक्ताण्णः ।

'भक्तास्तण्डुलाः' इति । भक्तयोग्याः, त्रिफलीकृतत्वात् ॥

## १०१. परिषदो ण्यः ।

'णप्रत्ययोऽप्यत्रेष्यते' इति । 'परिषदा कृतिरेषा तत्रभवताम्', 'सर्ववेदपारिषदं हीदं शास्त्रम्' इति च भाष्यकारप्रयोगात् ॥

## १०२. कथादिभ्यष्ठक् ।

## १०३. गुडादिभ्यष्ठञ् ।

## १०४. पथ्यतिथिवसतिस्वपतेर्ढञ् ।

पतन्त्यनेनेति पन्थाः, 'गमेरिनिः' (द.उ. ६–५७) 'पतेस्थ च' (द.उ. ६–६३); अतति सततं गच्छतीत्यतिथिः, न विद्यते तिथिर्यस्य सोऽयतिथिः, एकमपि दिनमत्रास्थित इत्यर्थः । वसनं वसतिः, [1]'वसेश्च' (द.उ. ८–५१) इत्यतिप्रत्ययः, तत्र योग्या वासतेयी रात्रिः । स्वपतिराढ्यः, स्वपतेर्योग्यंस्वापतेयं धनम् ॥

## १०५. सभाया यः ।

## १०६. ढश्छन्दसि ।

---

1. इदं चिन्त्यम्—'वसेश्च' इति दशपाद्युणाद्यन्तर्गताष्टमपादस्थ सूत्रेण वसेः 'सरन्' प्रत्ययो विधीयते, तेन 'वत्सरः' इति रूपं सिध्यति । प्रथमपादगतेन 'वहिवस्यर्तिभ्यश्चित्' (द.उ. १–२९) इत्यनेन सूत्रेण 'अति' प्रत्ययो विहितः ।

## १०७. समानतीर्थे वासी ।

वसतीति वासी, निपातनाण्णिनिः, ग्रह्यादेराकृतिगणत्वाद्वा साधुरिति । 'निवृत्तम्' इति । तेन किं सिद्धं भवति ? इत्याह–'वासीति प्रत्ययार्थः' इति । साधुरित्यस्यानुवृत्तौ तु तस्यैव विशेषणं वासिग्रहणंस्यात् । 'तीर्थशब्देनेह गुरुरुच्यते' इति । प्रयागादितीर्थसाधर्म्यात् । तरन्त्यनेनेति तीर्थम्, तरतेः थक् । मुख्यस्य तीर्थस्य ग्रहणं न भवति; संज्ञाधिकारात् ॥

## १०८. समानोदरे शयित ओ चोदात्तः ।

'ओकारश्चोदात्तः' इति । तित्स्वरितस्यापवादः । 'शयितः स्थितः' इति । शेतेः स्थितावपि वृत्तेः, आमाशयः जलाशय इति यथा । 'समानोदर्यः' इति । उद्दीर्यत इत्युदरम्, उदि दृणातेरलचौ पूर्वपदान्तलोपश्चेत्य-लचोरन्यतरः । समानं च तदुदरं च समानोदरम्, 'पूर्वापरप्रथम' (२.१.५८) इत्यादिना समासः, ततः प्रत्ययः ॥

## १०९. सोदराद्यः ।

'यकारादौ प्रत्यये विवक्षिते' इति । 'विभाषोदरे' (६.३.८८) इत्यत्र '[1]तीर्थे ये' (६.३.८७) इत्यतो य इत्यनुवर्त्तते, तत्र य इत्येषा विषयसप्तमीति दर्शयति । 'ओ चोदात्त इति तु[2] नानुवर्त्तते' इति । यविधानसामर्थ्यात् ॥

## ११०. भवे च्छन्दसि ।

'अणादीनां घादीनां चापवादः' इति । 'तत्र भवः' (४.३.५३) इति प्राप्तानाम् । 'सति दर्शने तेऽपि भवन्ति' इति । तद्यथा–मुञ्जवान्नाम पर्वतस्तत्र भवो मौञ्जवतस्तस्येति भक्षः । 'मेघ्याय' इति । अत्र 'यतोऽनावः' (६.१.२१३) इत्याद्युदात्तत्वं प्राप्नोति; अन्तस्वरितं चाधीयत इति ॥

## १११. पाथोनदीभ्यां ड्यण् ।

'पाथोऽन्तरिक्षम्' इति । पाति भूतान्यवकाशदानेनेति कृत्वा । यद्यपि 'पातेर्बले जुट्' (द.उ. ९.६३), 'उदके थुट्' (द.उ. ९.६४), 'अन्ने च' (द.उ. ९.६५) इति अन्नोदकयोः पाथःशब्दोऽसुनि व्युत्पाद्यते, तथापि बाहुलकादन्तरिक्षेऽपि भवति ॥

## ११२. वेशन्तहिमवद्भ्यामण् ।

वेशन्तः = पल्वलम्, 'विशेर्झं च' (द.उ. ६.१७), तत्र भवा आपः वैशान्त्यः ॥

---

1. तीर्थे यः–मुद्रितः पाठः. 2. तु नास्ति–काशिका, न्यासश्च.

## ११३. स्रोतसो विभाषा ड्यड्ड्यौ ।

'स्रुरीभ्यां तुट् च' (द.उ. ९.६२) इत्यसुन् । स्रोतः = नदीप्रवाहः ॥

## ११४. सगर्भसयूथसनुताद्यन् ।

'अर्त्तिगृभ्यां भन्' (द.उ. ७.२४), गिरति गीर्यते वा गर्भः । युता भवन्त्यस्मिन् यूथम् । 'तिथपृष्ठ-गूथयूथप्रोथाः' (द.उ. ६.३७) इति थक्प्रत्ययान्तो निपातितः । नुतिर्नुतम्, 'नपुंसके भावे क्तः' (३.३.११४) । सगर्भादिषु त्रयोऽपि कर्मधारयाः ॥

## ११५. तुग्राद् घन् ।

'तुरुस्तुशम्यमः सार्वधातुके' (७.३.९५) इत्यत औणादिको रन् गुडागमः ॥

## ११६. अग्राद्यत् ।

'ऋज्रेन्द्राग्र' (द.उ. ८.४६) इत्यग्रशब्दो निपातितः । 'सामान्येन' इति । 'भवे छन्दसि' (४.४.११०) इति । 'ताभ्यां बाधा मा भूदिति पुनर्विधीयते' इति । एवमपि यद्ग्रहणमनर्थकम्, 'अग्रात्' इत्येवास्तु, प्राकरणिको यद्भविष्यति; अथ वा 'अग्राद् घच्छौ च' इति चकाराद्भविष्यति, 'अग्रपश्चाड्डिमच्' (वा. ४४८) इत्यस्य समुच्चयो न शक्यः, विदेशस्थत्वात् ? एवमप्यनन्तरस्य घनः समुच्चयो विज्ञायेत । योगविभागे पुनरनन्तरो घनेव स्यात्, योगविभागसामर्थ्यान्न भविष्यति । अथ कथम् 'ताश्च एव चाग्रचजननः', 'एतच्छिवे विजानीहि ब्राह्मणाग्रयस्य लक्षणम्' इति भाषायां प्रयोगः ? छन्दोवदृषयः कुर्वन्ति ॥

## ११७. घच्छौ च ।

'चकारस्तुग्राद्घनित्यस्यानुकर्षणार्थः' इति । पूर्वमेव विहितस्य यतोऽनुकर्षणे प्रयोजनाभावात् ॥

## ११८. समुद्राभ्राद्घः ।

समुनत्तीति समुद्रः, उन्देः 'स्फायितञ्चि' (द.उ. ८.३१) इति रक्प्रत्ययः । अदो बिभर्तीत्यभ्रम्, मूलविभुजादित्वात् कः । 'तस्य लक्षणस्य' इति । तस्य पूर्वनिपातस्य यल्लक्षणं तस्येत्यर्थः । 'व्यभिचारित्वात्' इति । व्यभिचारस्य वाचमेव निर्देशो लिङ्गम् ॥

## ११९. बर्हिषि दत्तम् ।

'बृंहेर्नलोपश्च' (द.उ. ९.३१) इतीसिप्रत्ययः; बर्हिः ॥

## १२०. दूतस्य भागकर्मणी ।

दूताद्भागे 'तस्येदम्' (४.३.१२०) इत्यणि प्राप्ते वचनम्, कर्मणि तु दूतवणिग्भ्यां चेत्युपसंख्यानिके ये ॥

## १२१. रक्षोयातूनां हननी ।

रक्षेरसुनि रक्षः 'कमिमनिजनि' (द.उ. १.१२५) इत्यादिना, यातेस्तौ यातुः । यातुशब्दो रक्षःपर्यायः । 'विरूपाणामपि समानार्थानाम्' (वा. २१;१.२.६४) इत्येकशेषस्तु न भवति; बह्वर्थाभिधायिस्वरूपपरत्वेन सूत्रे भिन्नार्थयोर्निर्देशात् । 'निर्देशादेव समर्थविभक्तिः' इति । सा पुनः 'कर्तृकर्मणोः कृति' (२.३.६५) इति कर्मणि षष्ठी । 'बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम्' इति । तद्धि बहुवचनात्प्रत्ययविपर्ययम्, अन्यथा द्वित्वाद् द्विवचनमेव न्याय्यं स्यात् । कथं पुनर्बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते ? तत्राह-'बहूनाम्' इति । बहुवचनान्तात् प्रत्यये बहूनां रक्षसां हनने सामर्थ्यमुद्भाव्यते मन्त्रे । तथा च स्तुतिविशिष्टा सम्पूर्णा भवति । योगद्वयं शैषिकयोरण्छयोरपवादः ॥

## १२२. रेवतीजगतीहविष्याभ्यः प्रशस्ये ।

रयिरस्यास्तीति रेवती, 'रयेर्मतौ बहुलम्' (वा. ६६५) इति बहुलवचनात् सम्प्रसारणम् । उगित्वा-न्ङीप्, नक्षत्रे तु गौरादित्वान्ङीप् । जगच्छब्दाच्छन्दवद्भावान्ङीप् । 'षष्ठीसमर्थेभ्यः' इति । शंसु स्तुतौ' (धा.पा.-७२८) इत्यस्मात् 'कृत्यल्युटो बहुलम्' (३.३.११३) इति भावे क्यप्, तद्योगे कर्मणि षष्ठी भवति, हविषे हिता हविष्या, 'उगवादिभ्यो यत्' (५.१.२) ॥

## १२३. असुरस्य स्वम् ।

न सुरोऽसुर = सुरप्रतिपक्षः । अथ वा 'असेरुरन्' (द.उ. ८.२४), अस्यत्यस्यते वेत्यसुरः ॥

## १२४. मायायामण् ।

मीयतेऽनयेति माया = असदर्थप्रकाशनशक्तिः । माङ औणादिको यः । नेति वक्तव्येऽण्ग्रहणं लाघवे विशेषाभावात् ॥

## १२५. तद्वानासामुपधानो मन्त्र इतिष्टकासु लुक् च मतोः ।

मतुनिर्ह्रासः = मतोरपचयः । 'तद्वानित्यवयवेन समुदायो निर्दिश्यते' इति । स विवक्षितो वर्चःशब्दा-विरवयवोऽस्मिन् मन्त्रलक्षणे समुदायेऽस्तीत्येवमेकदेशार्थाभिधायिनः सर्वनाम्नः समुदाये मतुवयं विहित इत्यर्थः । 'वर्चःशब्दो यस्मिन् मन्त्रेऽस्ति' इति । स पुनः कुम्भेष्टकोपधानमन्त्रः—'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवः' (का.सं. ३९-१) इत्यादिकः । 'वर्चस्या उपदधाति' इति । यया वर्चस्या भवन्ति तयोपदधातीत्यर्थः ।

तेजस्वान्मन्त्रः—'वसु च स्थ वाम च स्थ देवस्य वः सवितुः' (का.सं. ३१-१) इत्यादिकः। वयस्वन्तो मन्त्राः-'त्र्यविर्वयस्त्रिष्टुब्' (का.सं. १७-२) इत्यादिकाः, ऋतुमन्तो मन्त्राः—'मधुश्च माधवश्च' (तै.सं.-९४ १४.१) इत्यादिकाः। 'मन्त्रसमुदायादेव मा भूत्' इति। ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वा' (४ १ ८२) इति वचनादासामिति प्रथमं निर्दिष्टत्वात् षष्ठ्यन्तादिष्टकावाचिन उपधाने मन्त्रे प्रत्ययविधिः प्रसञ्जनीयः? सत्यम्; आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने, ततश्च तद्वानित्यस्याभावे 'त्र्यविर्वयस्त्रिष्टुप्छन्दः' इत्ययमुपधानमन्त्र आसामिष्टकानामिति वाक्यं स्यात्, ततश्चेतिना परामृष्टान्मन्त्रसमुदादेव प्रत्ययः प्राप्नोति। वर्चस्वानुपस्थानमन्त्र' इत्यादि। उपस्थानं मन्त्रेणाभिमन्त्रणं विवक्षितम्, 'शिवेन मा चक्षुषा' (अथ.वे. १.३३ ४) इत्यादिकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। 'अङ्गुलिमान्' इत्यादि। यद्यपि सर्वासामिष्टकानामङ्गुलिमान् हस्त उपधानः, तथापि यास्तूष्णीमुपधेया इष्टकास्तासु मन्त्रव्यावृत्त्यर्थंतथा विशेषणमर्थवत्—एषां कपालानामित्यत्र मा भूदिति। स्त्रीलिङ्गनिर्देशादत्राप्रसङ्ग इति चेत्? एवमपि शर्करासु प्रसङ्गः।

'अनेकपदसम्भवेऽपि' इति। असति ह्यितिकरणे मन्त्रे बहूनां सम्भवाद्येन केनचित्पदेन तद्वान्मन्त्रो गृह्येत, तथा पदैकदेशेन वर्णसमुदायेन, इतिकरणात्त्वयमतिप्रसङ्गो न भवति।

मतुब्ग्रहणमुत्तरार्थम्—अश्विमानित्यत्र मतुप एव लुग्यथा स्यात्, इनेर्मा भूदिति। इह तु मत्वन्तात्प्रत्ययविधानात् तस्यैव लुग्भविष्यति। वर्चःशब्दादवसुप्रभृतेरप्रसङ्गः, उणादीनामव्युत्पन्नत्वात्। इह 'प्राणभृत उपदधाति' इत्यध्यावभेदोपचारात् प्रत्ययाभावः॥

## १२६. अश्विमानण्।

'सोऽश्विमान्' इति। यद्यपि बहवोऽश्विमन्तो मन्त्राः 'ध्रुवक्षितिः' (मै.सं. १.२.८) इत्यादिकाः, तथापि सामान्यापेक्षमेकवचनम्॥

## १२७. वयस्यासु मूर्ध्नो मतुप्।

'वयस्यासु' इति। छन्दसि या वयस्या इष्टका उच्यन्ते तास्वित्यर्थः। ताश्च बह्व्यः, तास्वन्त्याश्चतस्रो मूर्धन्वत्यः, 'विष्टम्भो वयः' (वा.सं. १.४.९) इत्यादिवयस्वद्भिर्मन्त्रैरुपधेयाः, तत्र च यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्तिम एकस्मिन्नेव मन्त्रे मूर्द्धशब्दोऽस्ति, तथापि साहचर्यात् 'विष्टम्भो वयः' इत्याद्याश्चत्वारो मूर्धन्वन्त उच्यन्ते, यथा—छत्रिणो यान्तीति, तेन मूर्द्धन्वतीरुपदधातीति बहुवचनम्। 'मूर्द्धन्वानपि भवति' इति। ननु 'अनो नुट्' (८.२.१६) इति छन्दसि नड् विधीयते? सत्यम्; यथा सूत्रकारेण छान्दसमेव पदं प्रयुक्तम्—'वयस्यासु' इति, तथैवमपि वृत्तिकारेण, मूर्धन्वानपि भवति छन्दसीत्यर्थः। 'वयस्याश्च ताः मूर्धन्वत्याश्च' इति। 'उभयथापि छन्दस्यभिधीयते' इत्युक्तं भवति।

'यत्र मूर्द्धन्शब्द एव केवलः' इति। यथा—'अग्ने यशस्विन्यशसे समर्पय' (तै.सं. ५.७.४.३) इत्यादिके मन्त्रे। 'ततो मा भूत्' इति। तदभिधायिनो मूर्द्धन्शब्दादित्यर्थः। 'मूर्द्धन्वत इति वक्तव्यम्' इति। 'तद्वान्' इति च 'लुक् च मतोः' (४ ४.१२५) इति चानुवर्तते, ततश्च मूर्द्धन्वत इति युक्तं वक्तुमिति भावः। इह तु गायत्रीः पुरस्तादुपदधाति, 'तेजो वै गायत्री तेज एव मुखतो धत्ते मूर्द्धन्वती भवति' इति मुख्यो गायत्रीषु

मूर्द्धन्वतीशब्दः प्रथमं मतुबन्तः प्रयुक्तः, किं कारणम्? तदुपधानमन्त्रेषु 'अग्निर्मूर्धा भुवः' (ऋ.वे. ८.४४.१६) इत्यादिषु वयःशब्दस्याभावात् ॥



## १२८. मत्वर्थे मासतन्वोः ।

मत्वर्थग्रहणाल्लब्धमर्थं दर्शयति—'प्रथमासमर्थात्' इत्यादि। मासतन्वोरिति 'कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्य ऊः' (द.उ. १.१६४) इत्यूकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः, न तु 'भृमृशीङ्तृचरित्सरितनिमिमस्जिभ्य उः' (द.उ. १.९२) इत्युकारान्तः, 'द्वन्द्वे घि' (२.२.३२) इति पूर्वनिपातप्रसङ्गात्। 'अनन्तरार्थे च' इति। न केवलं मत्वर्थमात्र इति चशब्दस्यार्थः।

'लुगकारेकाररेफाश्च' इत्यादि। 'रादिफः' (वा. ३२१) इत्यत्र वर्णादिति न सम्बध्यते, तेन समुदायनिर्देशेऽपि इफः कृतः। अन्ये तु रशब्दा इति पठन्ति, प्रत्यय इत्यधिकारोऽकारादिभिः सम्बध्यते, न तु लुका। तपनं तपः, सहनं सहः, भावेऽसुन्, 'तदस्मिन्नस्ति' (४.२.६७) इति सूत्रेण विहितस्य यतो लुक्। कथं पुनरत्र नपुंसकत्वम्, यावता तद्धितलुकि सत्यभिधेयवल्लिङ्गेन भवितव्यम्? अत आह—'नपुंसकलिङ्गं छन्दसत्वात्' इति। इट् = अन्नम्, इष्यमाणत्वात्। ऊर्क् = बलम्, 'ऊर्ज बलप्राणनयोः' (धा.पा. १५४९), ताभ्यामकारः प्रत्ययः—इषः, ऊर्जः। शोचनं शुक्, पूर्ववत् क्विप्, आतपातिरेकेण शरीरादेः शोषः, तद्वान् मासः शुचिः। एवं शुक्रः।

अत्र छान्दसत्वादेवायस्मयादित्वाद्भत्वाज्जश्त्वाभावः, तदेव छन्दोऽधिकारे लुगादीनां विधानाद्भाषायां शुचिशुक्रादीनामान्याय्यः प्रयोगः स्यात्, व्युत्पत्त्यन्तरेण वा, अव्युत्पन्ना वा नभस्यादयः शब्दा मासेषु वर्त्तन्ते। इषोर्जशब्दावर्शआद्यच्प्रत्ययान्तौ, मत्वर्थीये रप्रत्यये पृषोदरादित्वाज्जश्त्वाभावे शुक्र इति भवति; शोचतेरन्तर्भावितण्यर्थादौणादिके किप्रत्यये कृते शुचिरिति भवति, शोचयति सन्तापयति प्राणिन इति कृत्वा। अभेदोपचारा-
नभःप्रभृतीनां मासेषु वृत्तिः, नभस्यप्रभृतयस्तु 'तत्र साधुः' (४.४.९८) इति यदन्ताः, 'मतौ छः सूक्तसाम्नोः' (५.२.५९) इत्यत्र यथान्तरेणाप्यर्थग्रहणं मत्वर्थे प्रत्ययो लभ्यते, तथेहापि लप्स्यते; नार्थोऽर्थग्रहणेन ॥

## १२९. मधोर्ञ च ।

अत्रापि भाषायां मधुयोगान्मासो मधुः, तस्य प्रज्ञादिषु पाठादाद्युदात्तत्वम् ॥

## १३०. ओजसोऽहनि यत्खौ ।

यद्ग्रहणमनर्थकम्, 'खश्च' इत्येव वक्तव्यम्, चकारात् प्राकरणिको यद्भविष्यति? नैवं शक्यम्; 'खश्च' इत्युच्यमानेऽनन्तरसूत्रविहितस्य अस्य समुच्चयो विज्ञायेत, तस्माद्यद्ग्रहणम् ॥

## १३१. वेशोयशआदेर्भगाद्यल् ।

## १३२. ख च।

'योग विभागः' इत्यादि। केचित्पुनरेकमेव योगमधीयते। तथा च–'यथासंख्यमनुदेशः समानाम्' (१.३.१०) प्रत्ययविध्यर्थो बहुवचननिर्देशः, बहुवचनान्तात् प्रत्ययोत्पत्तौ यथासंख्यमिष्यत इति। 'उत्तरार्थश्च' इति। उत्तरत्र खस्यैवानुवृत्तिर्यथा स्यात्, यतो मा भूदिति॥

## १३३. पूर्वैः कृतमिनयौ च।

'बहुवचनान्तेन' इत्यादि। बहुवचनान्तात् प्रत्ययविध्यर्थो बहुवचननिर्देशः। बहुवचनान्तात्प्रत्ययोत्पत्तौ यथा प्रशंसा गम्यते–पूर्वैर्बहुभिः क्रियत इति प्रतीतेः, तेन पूर्वशब्दश्च वृद्धेषु पुरुषेषु प्रवर्त्तत इत्यर्थः॥

## १३४. अद्भिः संस्कृतम्।

## १३५. सहस्रेण संमितौ घः।

'निर्देशादेव समर्थविभक्तिः' इति। सा पुनस्तुल्यार्थयोगे तृतीया। 'सम्मित एव लक्षयितव्यः' इति। किं कारणम्? इत्याह–'तत्र' इति। छन्दसि हि तत्र सम्मिते प्रयोगो दृश्यते॥

## १३६. मतौ च।

## १३७. सोममर्हति यः।

'छन्दसि' (४.४.११०) इत्यधिकाराद्भाषायां सोम्यशब्दस्य साधुत्वं चिन्त्यम्–'आयुष्मान् भव [1]सोम्येति वाच्यो विप्रोऽभिवादने' (मनु. २.१२५) इति। केचित् 'सोम्य' इति वृद्धिं पठन्ति। सोम्यशब्दो दर्शनीयवचनः सुखादिवत्॥

## १३८. मये च।

'मय इति मयडर्थो लक्ष्यते' इति। शब्दे कार्यस्यासम्भवात्। 'तत्र यथायोगं समर्थविभक्तिः' इति। आगते पञ्चमी, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा॥

## १३९. मधोः।

1. 'सौम्य' इत्येव मुद्रितमनुस्मृतौ तद्व्याख्यायां च पाठो दृश्यते।

## १४०. वसोः समूहे च ।

ओश्रावयेत्यादिकस्याक्षराणि गण्यन्ते, सप्तदशात्मकश्छन्दस्योऽक्षरसमूहः । प्रजापतिः प्रजापतिना दृष्टः । हस्तौ पृणस्वेति पृणातिः पूरणकर्मा ॥

## १४१. नक्षत्राद्‌ घः ।

'समूह इति नानुवर्तते' इति । तेनानिर्दिष्टार्थत्वात् स्वार्थे प्रत्यय उत्पद्यत इति भावः ॥



## १४२. सर्वदेवात्तातिल् ।

## १४३. शिवशमरिष्टस्य करे ।

'करोतीति करः' इति । पचाद्यच् । 'सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः' इति । सा पुनः कृद्योगलक्षणा कर्मणि । भाषायां शिवतातिप्रभृतीनां साधुत्वं चिन्त्यम् ॥

## १४४. भावे च ।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थाध्यायस्य चतुर्थः पादः ॥

—o—

समाप्तोऽयं चतुर्थोऽध्यायः ॥

—:o:—

# Our Publications

| | | P |
|---|---|---|
| 1. | Jnanachaturvimsi | Rs. |
| 2. | Panditarajakavyasangraha (Out of Print) | Rs. |
| 3. | Stories from the Kathasaritsagara Part I | Rs. |
| 4. | Rigarthasara Part I | Rs. |
| 5. | Gems from Sanskrit Literature (2nd Edition) | Rs. 2·00 |
| 6. | Samskrita Kavijivitam Part I (Out of Print) | Rs. 6-00 |
| 7. | Minor Works of Kshemendra (Out of Print) | Rs. 21-35 |
| 8. | Narakasuravijayavyayoga | Rs. 4-00 |
| 9 | Sitaramavihara Kavya | Rs. 5-35 |
| 10. | Danoddyota Part I | Rs. 8-65 |
| 11. | A Catalogue of Sanskrit Manuscripts in O. U. Library | Rs. 40-00 |
| 12. | Stories from the Kathasaritsagara Part II | Rs. 6-70 |
| 13. | Aryasaptasati | Rs. 11-35 |
| 14. | Vikramorvasiyam | Rs. 10-70 |
| 15. | Danoddyota Part II | Rs. 11-35 |
| 16. | ,, Part III | Rs. 16-65 |
| 17. | Kasika Part I | Rs. 25-00 |
| 18. | Vrittaratnakara | Rs. 16-00 |
| 19. | Gitagovinda (Out of Print) | Rs. 18-70 |
| 20 | Kasika Part II | Rs. 30-00 |
| 21. | Sahityaratnakara Part I | Rs. 17-35 |
| 22. | Do Part II | Rs. 17-35 |
| 23. | Do Part III | Rs. 28-00 |
| 24. | Kasika Part III (Indiees) Vol. I | Rs. 25-00 |
| 25. | Journal of Sanskrit Academy Vol I 1979 | Rs. 15-00 |
| 26 | Do Vol. II 1980 | Rs. 15-00 |

Copies can be had from :

The Director, Sanskrit Academy,
Osmania University,
Hyderabad-500 007 ( India )